वायवे॑ नि॒यु॒त्वत॒ आ ल॑भेत प्र॒जाका॑मः प्रा॒णो वै वा॒युर॑पा॒नो नि॒युत्॑ प्राणापा॒नौ खलु॒ वा ए॒तस्य॑ प्र॒जाया॒ (२) अप॑ क्रामतो॒ योऽलं॑ प्र॒जायै॒ सन् प्र॒जां न वि॒न्दते॑ वा॒युमे॒व नि॒युत्व॑न्त॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मै॑ प्राणापा॒नाभ्यां॑ प्र॒जां प्र ज॑नयति वि॒न्दते॑ प्र॒जाम्

---

५ वा॒यवे॑। नि॒यु॒त्वत॒ इति॑ नि-यु॒त्वते॑। एति॑। ल॒भेत॒। प्र॒जाका॑म॒ इति॑ प्र॒जा-का॒मः। प्रा॒ण इति॑ प्र-अ॒नः। वै। वा॒युः। अ॒पा॒न इत्य॑प-अ॒नः। नि॒युदिति॑ नि-युत्। प्रा॒णा॒पा॒नावि॒ति॑ प्राण-अ॒पा॒नौ। खलु॑। वै। ए॒तस्य॑। प्र॒जाया॒ इति॑ प्र-जाया॑ (२)। अपेति॑। क्रा॒म॒तः। यः। अल॑म्। प्र॒जाया॒ इति॑ प्र-जायै॑। सन्। प्र॒जामिति॑ प्र-जाम्। न। वि॒न्दते॑। वा॒युम्। ए॒व। नि॒यु॒त्व॑न्त॒मिति॑ नि-यु॒त्व॑न्तम्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भाग-धेये॑न। उपेति॑। धा॒व॒ति॒। सः। ए॒व। अ॒स्मै॒। प्रा॒णा॒पा॒नाभ्या॒मिति॑
१० प्राण-अ॒पा॒नाभ्या॑म्। प्र॒जामिति॑ प्र-जाम्। प्रेति॑। ज॒न॒य॒ति॒। वि॒न्दते॑। प्र॒जामिति॑ प्र-जाम्।

---

प्रजाकाम इति ॥ प्रजा पुत्रादिका कामयमानः। प्राण इति। उपर्यधोभागाभ्यां प्राणापानगमनयोः। प्राणापानौ खल्विति। अनयोरपक्रमणात् प्रजा नोपपद्यते। [27]योऽलमिति। [28]सत्यामेव प्रजननशक्तौ प्रजां न लभते, प्राणापानाननुग्रहात्। स एवेति। नियुत्वान् वायुः प्राणापानरूपत्वेन[29] [४]प्रजां [४]जनयति ॥

---

१५ वायव इति ॥ पुनरपि फलान्तराय विधत्ते– 'वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजाया अप क्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजाम्' इति। प्रकर्षेणानितीति मुखबिलाद्बहिश्चेष्टत इति [29]प्राणवायुश्च तथाविधः। अपकर्षेण मुखादधस्तादुदरस्या[ऽऽ]नितीति[30] चेष्टत इति [३]अपानः। [31]नियुच्छब्दो नितरां यौति मिश्रीभवतीति व्युत्पत्त्या तथाविधमर्थमाचष्टे।
२० [४]यः पुरुषः प्रजार्थम् [५]अलम् [६]भवः[32] अनुकूलस्त्रीयुक्तः सन्[32] युवा च सन् अपत्यं न लभते [७]एतस्य पुरुषस्य [८]प्रजायाः सकाशात् [९]प्राणापानौ अपक्रान्तौ भवतः। अपत्यलाभाभावेन[33] पुरुषेण गर्भाशये निषिक्ते रेतसि नियुत्पत्ता वायोरनुग्रहाभावात् प्राणापानयुक्तो जीवान्तरं न प्रविशति। एतदेवाभिप्रेत्यैतरेयोपनिषदि श्रूयते– 'न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्यते पूयेत् न सम्भवेत्' (ऐआ ३ २ २) इति। नियुत्वान् वायुः [१०]भागधेयेन[34] तुष्टः[35] यजमानार्थं सिक्तेऽपि रेतसि [११]प्राणापानाभ्यां युक्तं जीवं प्रवेश्य प्रजां
२५ [१२]प्र [१३]जनयति। तथा यजमानः पुत्रं लभते ॥

२७ १०–भाट्यमिति। २८ तै१ ऐ२–नस्यामेव। २९ मै८–०रूपद्वयेन।

२९. भा ट क ढ ट१ मा१ा१–प्राण वायुश्च। ३० अ उ पा–१धमादीति। ३१. अ उ पा–'नियुत्–नि' नामि, ट ट१ हा०–नियुच्छब्दोऽति। ३२–३२. ६ हा–वानुकूलस्त्रीयुक्त, अ उ पा–अनुकूलस्त्रीयुक्तः। ३३ ६ क मा–अपत्यलाभाभावेन। ३४ ट ट१ हो०–[illegible]।

वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तं८ स्वेन भागधेयेनोप (३) धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति

वायवे। नियुत्वत इति नि-युत्वते। एति। लभेत। ज्योगामयावीति ज्योक्-आमयावी। प्राण इति प्र-अन। वै। वायुः। अपान इत्यप-अन। नियुदिति नि-युत्। प्राणापानाविति प्राण-अपानौ। खलु। वै। एतस्मात्। अपेति। क्रामतः। यस्य। ज्योक्। आमयति। वायुम्। एव। नियुत्वन्तमिति नि-युत्वन्तम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति (३)। धावति। सः। एव। अस्मिन्। प्राणापानाविति प्राण-अपानौ। दधाति। उत। यदि। इतासुरितीत-असुः। भवति। जीवति। एव। प्रजापतिरिति प्रजा-पतिः। वै। इदम्। एकः। आसीत्। सः। अकामयत। प्रजा इति प्र-जाः। पशून्। सृजेय। इति। ५ १०

ᵛज्योगामयावी दीर्घरोगः। प्राणापानावित्यादि गतम्। यस्येति। "रुजार्थानाम्°" (पा २ ३ ५४) इति षष्ठी। उतेति। ᵛयदि अपि ᵛइतासुः गतासुः ᵛभवति, तथाऽप्यनेन कर्मणा ᵛजीवति ᵛएव [३०] इति स्तुतिः [३०] ॥

प्रजापतिर्वा इत्यादि। ᵛइदं परिदृश्यमानं स्थावरजङ्गमात्मकं सर्वं जगत् ᵛप्रजापतिः ᵛएक एव प्रयत्नमितसमस्तविकारः ᵛआसीत्। ᵛसः प्रजापतिः ᵛप्रजाः ᵛपशून् च ᵛसृजेय ᵛइति ᵛअकामयत। १५

वायवे नियुत्वत इति ॥ पुनरपि फलान्तराय विधत्ते–'वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तं८ स्वेन भागधेयेनोप धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव' इति। ᵛज्योगामयावी दीर्घरोगयुक्तः। ᵛयस्य ᵛज्योक् ᵛआमयति यं पुरुषं चिरमामयो बाधत एतस्मात् [३६] ᵛप्राणापानौ क्षिति क्रान्तुमुद्यतौ [३६]। ᵛअस्मिन् ᵛप्राणापानौ ᵛदधाति [३७]चिरं स्थापयति। अपि च ᵛयदि कथंचिदयं [३८]शयान [३९]रुग्णा [४०] मुहूर्तमात्रं याममात्रं वा परेतो [४०] भवेत्तथाऽपि वायोरनुग्रहादागतप्राण [४१] ᵛजीवति ᵛएव [४२] ॥ २०

प्रजापतिर्वेति ॥ कर्मान्तरं विधातुं प्रस्तौति–'प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभवत्तं स्वायै देवताया आऽलभत

३०–३० मै४–'इति स्तुतिः' नास्ति। २५

३६–३६. ड१–प्राणापक्रान्तु°, हो१–प्राणापतिक्रान्तु°। ३७ ड ड१ हो१–स्थिरम्। ३८. अ उ पा–शयानात्। ३९ अ उ पा–प्राण। ४०–४० इ मुहूर्तं गतप्राण, ड ड१ हो१–मुहूर्तं याममात्रं गतो। ४१. ड ड१ हो१–°दागतो प्राणे। ४२ इ क हा–स जीवति।

स आत्मनो वपामुदक्खिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत् तꣳ स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत

सः। आत्मनः। वपाम्। उदिति। अक्खिदत्। ताम्। अग्नौ। प्रेति। अगृह्णात्। ततः। अजः। तूपरः। समिति। अभवत्। तम्। स्वायै। देवतायै। एति। अलभत। ततः। वै। सः। ५ प्रजा इति प्र-जाः। पशून्। असृजत।

व्यत्ययेनात्मनेपदम् (पा.३·१·८५)।[V]उत्[V]अक्खिदत् उद्धृतवान्। खिद परिघाते,[31]छान्दसो वर्णोपजनः। व्यञ्जनद्वयादिरित्येके।[V]ता वपामग्नेरुपरि होतु[V]प्र[V]अगृह्णात् अधारयत्।[V]ततः प्रगृहीताया वपायाः[V]अजः[V]तूपरः[32]शृङ्गविहीनः[V]समभवत्।[33]पुच्छविहीन इत्येके। अथ प्रजापतिः[V]तम् अजम्[V]स्वायै[V]देवतायै आत्मानमेव देवता कृत्वा तस्यै[V]आ[V]अलभत। ततो वा इत्यादि। गतम्॥

१० ततो वै स प्रजाः पशूनसृजत' इति। यद्[V]इदम् प्रजापशुरूपं जगदिदानीं दृश्यते तदिदं सृष्टेः[41]पूर्वं[V]प्रजापतिः[V]एकः[V]आसीत् प्रजापतिरेव स्थितो नान्यत् किञ्चिदित्यर्थः।[V]सः च[42]प्रजापशुसृष्टिकामस्तत्साधनत्वेन स्वशरीरादुदरमध्यवर्तिनीं पटसदृशीं[V]वपाम्[V]उत्[V]अक्खिदत्[43]उत्खिद्योद्धृतवान्।[V]तां च वपाम्[V]अग्नौ प्रक्षिप्तवान्।[V]ततः दग्धायाः वपायाः[V]अजः[V]तूपरः शृङ्गरहितः समुत्पन्नः।[V]तं चाजं स्वात्मरूपां देवतामुद्दिश्य[V]आऽलभत[44]। तत्कर्मसामर्थ्यात्[V]प्रजाः[V]पशून्[V]असृजत। ननु स्वयमेव स्ववपामुत्खिद्याजं तत १५ उत्पाद्य तं च स्वार्थमालभ्य जगत्[45]सर्वमप्यसृजतेति[46]महदेवैतदिन्द्रजालम्। बाढमिन्द्रजालमेवैतत्। अत एवान्यत्राऽऽम्नातम्–"इन्द्रो मायाभिः पुरुरूप ईयते" (ऋसं. ६·४७·१८ बृउ. २·५·१९) इति, "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" (श्वेउ ४·१०) इति च[47]। न[48]खल्विन्द्रजालविषये विस्मेतुं च भवानीच्छति[50]। यदा तु लौकिकेऽपीन्द्रजाले न काऽप्यनुपपत्तिः[51]तदानीमचिन्त्यमहिम्नि सर्ववेदसिद्धे परमेश्वरे का[52]नाम तवानुपपत्तिः। अन्यथा क वीर्यं क वा पुरुषः, क बीजं ■ का[53]वृक्ष इत्यादिकं[54]मयानुपपादकं २० मन्य, कथं[55]युक्तिभिरुपपादयति। संकल्पसिद्धे आदीश्वरे को नाम विस्मय इति चेत्[56]तर्ह्येवत् महत्येऽपि[57]■ विस्मयः[57]। संकल्पसिद्धस्य विशेषावता प्रयासेनेति चेत्[58]। नानाविधभोगैः[59]तृप्तस्य[60]राजादेः किं मृगयादिप्रयासेनेति त्वया[61]वक्तव्यम्। लीलेति चेत्।[62]तद्वदत्राप्यनुसंधेहि। तथा च स्मृतिः[63]–

३१. मै१–लौटादित्वच्छान्दसः। ३२. तै२–शृङ्गहीनः। ३३. तै२,तै–पुच्छहीनः।

४२. इ–आदौ। ४३. इ. द. दा. हो१–'प्रजापशु°' नास्ति। ४५. दा१–उत्खिद्योद्धृत°। ४६. इ– २५ दग्धया। ४७. द. दा. हो१–नमर्जीग। ४८. दा१–महदेतदि°। ४९. आ–'च' नास्ति। ५०–५०. म.उ.पा–न खल्विन्द्रजालविषये विस्मितुं च भवानीच्छति, इ–च लौकिक इन्द्रजाले विस्मातुं च भवानीच्छति, दा–न खल्विन्द्रजालविषये विस्मातुं च भवानीच्छति, हो१–न खल्विन्द्रजाले विस्मितुं भवानिच्छेत्, दा१–न खल्विन्द्रजाले विस्मितुं च भवानीच्छति। ५१. इ–तदाचिन्त्य°; हो१–°चिन्त्यमहिम्ना। ५२. इ–'नाम' नास्ति। ५३. इ पादपः। ५४. हो१–तदनुपपादकमन्यः। ५५. इ–युक्तिमनुपपादयन्ते। ५६. दा१–चेत्। ५७–५७. इ हो१–का विस्मयः। ५८. इ. दा–चेत् सत्यम्। ५९. द.दा१–°विधभोगैः। ६०. हो–तृप्तस्य। ६१. म उ.पा–'त्वया' नास्ति। ६२. द.हो१–तावता°। ६३. आ.क–श्रुति।

काम्या पशव ]

य॒ः प्र॒जाका॑मः ( ४ ) प॒शुका॑मः स्या॒त् स ए॒तं प्रा॑जाप॒त्यम॒जं तू॑प॒रमा ल॑भेत प्र॒जाप॑तिमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मै॑ प्र॒जां प॒शून् प्र ज॑नयति॒ यच्छ्म॑श्रु॒णस्तत् पुरु॑षाणाꣳ रू॒पं यत् तू॑प॒रस्तदश्वा॑नां॒ यद॒न्यतो॑द॒न् तद्ग॒वां॒ यदव्या॑ इव श॒फास्तदवी॑नां॒ यद॒जस्तद॒जाना॑मे॒ताव॑न्तो॒ वै ग्रा॒म्याः प॒शव॒स्तान् ( ५ ) रू॒पेणै॒वाव॑ रुन्द्धे

य । प्र॒जाका॑म॒ इति॑ प्र॒जा-का॒म॒ः ( ४ )। प॒शुका॑म॒ इति॑ प॒शु-का॒म॒ । स्यात्। स । ए॒तम्। ५
प्रा॒जा॒प॒त्यमिति॑ प्रा॒जा-प॒त्यम्। अ॒जम्। तू॒प॒रम्। एति॑। ल॒भेत॒। प्र॒जाप॑ति॒मिति॑ प्र॒जा प॒तिम्। ए॒व।
स्वेन॑। भा॒ग॒धेये॒नेति॑ भा॒ग धेये॑न। उपेति॑। धा॒व॒ति॒। स । ए॒व। अ॒स्मै। प्र॒जामिति॑ प्र-जाम्।
प॒शून्। प्रेति॑। ज॒न॒य॒ति॒। यत्। श्म॒श्रु॒ण । तत्। पुरु॑षाणाम्। रू॒पम्। यत्। तू॒प॒र । तत्।
अश्वा॑नाम्। यत्। अ॒न्यतो॑द॒न्नित्य॒न्यत॑-द॒न्। तत्। गवा॑म्। यत्। अव्या॑ । इ॒व । श॒फा ।
तत्। अवी॑नाम्। यत्। अ॒ज । तत्। अ॒जाना॑म्। ए॒ताव॑न्त । वै। ग्रा॒म्या । प॒शव॑ । १०
तान् ( ५ )। रू॒पेण॑। ए॒व। अवेति॑। रु॒न्द्धे॒।

यदित्यादि ॥ [˘]पशुगणा स्तूयन्ते[˘]। श्मश्रुणत्व [V]श्मश्रुमत्त्व [V]पुरुषाणा [V]रूपम्। पामादित्वान्नप्रत्यय ( पा ५ २·१०० )। तूपरत्वम् [V]अश्वाना रूपम्। अन्यतोदत्त्वम् अन्यतरपार्श्वस्थितदन्तवत्त्व [V]गवा रूपम्। “ छन्दसि च ” (पा ५ ४ १४२) इति दतृभाव । यत [V]अव्या [V]इव अस्य [V]शफा [˘]सन्ति [V]तत् [V]अवीना रूपम्। अजत्वमेव [V]अजाना रूपम्। [V]एतावन्त [V]वै १५
[V]ग्राम्या [V]पशव प्रधाना, उष्ट्रगर्दभयोरसम्प्रायणात्। तानिति। [V]तान् सर्वान् पशून् यथोक्तगुणलक्षण[˘] पशुमालभमान रूपद्वारेण [V]अव [V]रुन्द्धे ॥

“ भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ” ( द्र मांड १–गौका ९ )। विष्णुपुराणमपि[˘]—“ क्रीडतो बालकस्येव चेष्टा तस्य निशामय ” इति। व्याससूत्रमपि–“ लोकवत्तु लीलाकैवल्यम् ” ( ब्रसू २ । ३३ ) इति अलमतिप्रसङ्गेन ॥ २०

य प्रजाकाम इति ॥ विधत्ते–‘ य प्रजाकाम पशुकाम स्यात् स एतं प्राजापत्यमज तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजा पशून् प्र जनयति ’ इति ॥

यदिति ॥ पशु प्रशसति–‘ यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूप यत्तूपरस्तदश्वाना यदन्यतोदन् तद्गवा यदव्या इव शफास्तदवीना यदजस्तदजानामेतावन्तो वै ग्राम्या पशवस्तान् रूपेणैवाव रुन्द्धे ’ इति ॥ [‘‘]पुरुषस्याजे श्मश्रूणि विद्यन्ते। तूपरत्व सर्वेष्वजेष्वभावेऽपि प्रकृते विद्यते। [‘‘]अन्यतोऽध एव दन्ता इति २५

३४–३४ मै४–पशुगण स्तूयते। ३५ मै४–‘ श्मश्रुमत्व ’ नास्ति। ३६ ल–भवन्ति। ३७ तं१,मै–यस्योक्तगुणम्, पर–यथोक्तगुणम्।

६४. अ उ क पा हा–°पुराणेऽपि। ६५ इ–पुरुषवदजे। ६६ हो१–अधस्तात्, ड१–अधस्या, क हा–अन्यतोऽधस्ते।

**सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभि जायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः**

सोमापौष्णमिति सोमा-पौष्णम्। त्रैतम्। एति। लभेत। पशुकाम इति पशु-कामः। द्वौ। वै। अजायै। स्तनौ। नाना। एव। द्वौ। अभीति। जायेते इति। ऊर्जम्। पुष्टिम्। तृतीय.। ५ सोमापूषणाविति सोमा-पूषणौ। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तौ। एव। अस्मै। पशून्। प्रेति। जनयतः।

त्रैतमिति। त्रयाणा वत्साना युगपज्जाताना [38]समुदायस्त्रितम्[38], तत्र भवस्त्रैत.। [39]मध्यम एवेति केचित्। त्रयोऽप्यालभ्या इत्यपरे। यस्त्रिस. पिबति स त्रैत इति केचित्। इदानीं [40]त्रैतस्य [41]सोमापूसबन्ध प्रतिपादयति–द्वौ वा इति। [42]अजायै द्वौ स्तनौ [43]क्षीरप्रस्राविणौ। तयो १० [44]द्वयो. ऊर्जं रस [45]क्षीरलक्षणम् अभि अभिलक्ष्य द्वौ वत्सौ जायेते नाना [46]एव पृथक्स्वभावावेव[46] [47]अनियतस्तनपायिनौ जायेते। तृतीय तु वत्स पुष्टिम् अभि जायते पुष्ट्यतिशयनिर्दिष्टत्वात्[48] तस्य। एव रसपुष्टिप्रसनत्वात् सोमापूष्णो. [49]स्वो भागः[49] त्रैतः। गतमन्यत्॥

[67]अन्यतोदन् अन्यतोदायम्[67]। अविक्षुरसदृशा. शफा.[68] दृश्यन्त एव। [69]अजत्वजातिश्चास्ति। [70]तस्मात् पुरुषादिरूपरयम् अजत्वम्[71]। यद्यपि ग्राम्येषु पशुषु गर्दभोष्ट्रावपि सप्तसंख्यासिद्ध्यै[72] तत्र तत्र (द्र. श्रौ १५ २४.५) गृह्येते तथाऽपि पुरुषादयः पञ्चैव प्रशस्ता विप्रराजादिभिरत्यन्तमादृतत्वात्। अत एव तदीयेन [73]रूपेण[73] सर्वरूपसदृशेन [74]तान् पुरुषादीन् सर्वानधीनान् करोति॥

सोमापौष्णमिति॥ पश्वन्तरं विधत्ते–'सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभिजायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधा. पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनयति' इति। २० त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितं तत्र भवस्त्रैतस्तेषामन्यतम इत्यर्थः। त्रयाणामुत्पत्तौ प्रयोजनमेवमुन्नेयम्, अजायास्तावत् [75]द्वौ स्तनौ प्रसिद्धौ, तौ नाना एव पृथगेव पातुं द्वौ वत्सौ जायेते। मातृरूपायामजायां [76]यच्छरीरमार [76]या च तच्छरीरगता[76] पुष्टिस्तदुभयं [77]व्यापयितुं तृतीयः वत्सः

३८–३८. तैं–त्रित., तै.मै२–त्र. स त्रितः। ३९. मै४–तेषामन्यतम. मध्यमः। ४०. मै४–तस्य। ४१. तैं–सोमपूरूकर्मरूपम्। ४२. अ१ तै.२ मै.तैं–अजायाः। ४३. तैं२ मै.तैं–क्षीरस्रवणौ। ४४. मै४–'द्वयोः' २५ नास्ति। ४५. तैं२–क्षीररसगम्। ४६. तैं२ मै–'एव' नास्ति। ४७. अ१.मै४–नियत°। ४८. मै४–°निर्दिष्टत्वात्। ४९–४९. तैं२–'स्वो भाग.' नास्ति।

६७–६७. ह क.द.ट१.हो१–अन्यतोदत्वम्। ६८. द.ट१. हो१–खुराः। ६९. ह–आमजा°। ७०. क–ता। ७१. अ.ड.उ.क.द.ट१.पा.हा.हो–'अजत्वम्' नास्ति। ७२. द. ट१. हो१–गार्गभरयाः सिद्ध्ये। ७३. ह–सारूप्येण। ७४. हो१–यो। ७५. आ–येयमूर्धनः स्तारम्; ट१–यच्च ३० स्तनम्। ७६–७६. अ. उ. पा–यावच्छरीर°; आ.क.हा– या च शरीर°। ७७. अ.उ.पा.हा–व्यापयितुम्।

**सोमो॒ वै रेतो॒धाः पू॒षा प॑शू॒नां प्र॑जनयि॒ता सोम॑ ए॒वास्मै॒ रेतो॒ दधा॑ति पू॒षा प॒शून् प्र ज॑नयत्यौदु॑म्बरो॒ यूपो॑ ( ६ ) भव॒त्यूर्ग्वा उ॑दु॒म्बर॒ ऊर्क् प॒शव॑ ऊ॒र्जैवास्मा॒ ऊर्जं॑ प॒शूनव॑ रुन्द्धे ॥**

[ ए॒व प्र॒जाया॑ उ॒पं प्र॒जाका॑मस्ता॒न् यू॒पस्त्रयो॑दश च ]

---

सोम॑ । वै । रे॒तो॒धा इति॑ रेत–धा । पू॒षा । प॒शू॒नाम् । प्र॒ज॒न॒यि॒तेति॑ प्र–ज॒न॒यि॒ता । सोम॑ । ए॒व । अ॒स्मै॒ । रेत॑ । दधा॑ति । पू॒षा । प॒शून् । प्रेति॑ । ज॒न॒य॒ति॒ । औदु॑म्बर । यूप॑ ( ६ ) । भ॒व॒ति॒ । ऊर्क् । वै । उ॒दु॒म्बर॑ । ऊर्क् । प॒शव॑ । ऊ॒र्जा । ए॒व । अ॒स्मै॒ । ऊर्ज॑म् । प॒शून् । अवेति॑ । रु॒न्द्धे॒ ॥ १ ॥ ५

[ मैस २ ५ १, काठ १२ १३, १३ १ ]

---

किञ्चेत्याह– सोमो वा इति ॥ सिक्तस्य रेतसो धाता [७८]रेतोधा । "आतो मनिन्" ( पा ३ २ ७४ ) इति विच् । [७९]पूषा तु सिक्तस्य रेतस पशुत्वेन परिणमयिता ॥ १०

औदुम्बर इति "अनुदात्तादेश्च" ( पा४ ३ १४० ) इयन् । ऊर्गा इति । अन्नस्य क्षीरादित्वात् ताच्छब्द्यमुभयत्र । गतमन्यत् ॥

इति द्वितीयकाण्डे प्रथमप्रश्ने प्रथमोऽनुवाक ॥

---

उत्पन्न [७८]। द्वावेव हि[७९] सर्वत्र जायेते, तृतीयस्तु क्वचिदेव । तथा सति यस्या तृतीयो जातस्तस्या शरीरे वीर्याधिक्य [८०]पुष्ट्याधिक्य चास्तीति लक्षयितु शक्यते । किं बहुना त्रैत प्रशस्त इति द्रष्टव्यम् । गर्भाशये [८१]रेतो यथा न स्रवति तथा [८२]सोम धारयति । [८१]पूषा[८३] भूमिरूपत्वात् स्वकीयौषधिरसेन पोषयित्वा [८२]च [८१]जनयति ॥ १५

औदुम्बर इति ॥ चोदकप्राप्त खादिर बाधितु विधत्ते–'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्ज पशूनव रुन्द्धे' इति ॥ फलाना [८४]यथा [८५]बहुत्वादुदुम्बरस्योर्गूपत्व क्षीरद्वारेण पशुरपि तथाविध । अत [८६]ऊर्जा [८७]एव उदुम्बररूपया यजमानार्थम् ऊर्गूपान् [८८]पशून् संपादयति ॥ २०

अत्र मीमासा ॥ [८६]यत् पूर्वमग्निहोत्रादीना मूलप्रकृतित्वमुक्त[८७] [८८]तदष्टमाध्यायस्य प्रथमपादे चिन्तितम्––

"इष्टयग्निहोत्रसोमाना मूलप्रकृतिता न हि ।
अस्ति वा नालौकिकत्वादियत्ताऽनवधारणात् ॥
लोकवत् सन्निपत्यारादुपकारिद्वयश्रुते[८८] । २५
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥" ( जैन्या ८ १ ५ ६ ) ॥

---

७८. इ हो१–समुत्पन्न । ७९ इ१–'हि' नास्ति । ८०. इ–'पुष्ट्याधिक्य' नास्ति । ८१ इ इ इ१ हो१–पूषा च । ८२. अ उ पा–च । ८३ अ उ पा–सत्वादु°, इ इ१–भक्ष्यत्वादु° । ८४ इ इ१–'पशून्' नास्ति । ८५. आ–यदन, अ उ पा हा–यन । ८६ इ इ१ हो१–'उक्तम्' नास्ति । ८७ इ हो१–'तत्' नास्ति । ८८ अ उ क इ१ पा हो१–°द्वय श्रुते , इ–°द्वय श्रुति । ३०

अलौकिकत्वेन एतावद्भिरङ्गैः संपूर्ण उपकारः इति निश्चेतुमशक्यत्वादिष्ट्यादीनां नास्ति मूल-प्रकृतित्वम् इति चेत्। नैवम्। लौकिकसदृशत्वात्। यथा लोके भुजिक्रियायामोदनः करणं तस्य संनिपत्योप-कारिणः शाकसूपादय आरादुपकारिणः पीठप्रदीपादयस्तथा भावनायां यागः करणमवघातादयः संनिपातिन प्रयाजादय आरादुपकारिणोऽतो नात्यन्तमलौकिकत्वम्। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते [89]तथा ५ श्रौते[89] श्रुत्या निश्चीयताम्। तस्मादिष्टयग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति ॥

[90]मासाग्निहोत्रस्य नित्याग्निहोत्राद्भेदो द्वितीयाध्यायस्य तृतीयपादे चिन्तितः —

" मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः।
अनूद्य [91]प्राप्तं कर्मात्र मासोऽप्राप्तो[91] विधीयते ॥
उपसद्भिश्चरित्वेति नित्ये तासामसंभवात्।
१० धनेवत्याविधेश्चान्यत् कर्म प्रकरणान्तरात् ॥ " (जैन्या २.३.२६-२७) ॥

कुण्डपायिनामयने श्रूयते— " मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेत " (द्र. तांब्रा २५.४.१) इति। अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेत्। नैवम्। किं मास एव विधीयते [92]उत 'उपसद्भिश्चरित्वा' इत्युक्तत्वात्[92] उपसदोऽपि? नाऽऽद्यः। उपसदा-मपि नित्याग्निहोत्रे [93]प्राप्तिरहितानां स्वन्मते[93] विधातव्यत्वात्। न द्वितीयः। प्राप्ते कर्मण्यनेकगुणविधौ[94] १५ वाक्यभेदापत्तेः। ननु मा भूत् तर्हि गुणविधिः कर्मान्तरत्वे किं प्रमाणम् इति चेत्। प्रकरणान्तरमिति ब्रूमः[95]। न ह्येतन्नित्याग्निहोत्रस्य प्रकरणम्, असंनिहितत्वात्। अयनस्य त्वेतत्प्रकरणम्, अयनमारभ्याधीत-त्वात्। [96]का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत्। प्रकरणस्यासमर्पकत्वेऽपि[98] अग्निहोत्रशब्देन [99]तत्सम-र्पणादेषा शङ्का भवति। सा च वाक्यभेदापत्त्या निराकृता। तथा सति स्वतःसिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन[100] गुणं विधापयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य[101] शक्तौ निरुद्धायां तदवस्थः प्रकरण-२० भेदो [102]नित्याग्निहोत्रादिदं कर्म[102] भिनत्ति। अग्निहोत्रशब्दो धर्मातिदेशार्थ इति सप्तमे (जैन्या ७.३.१-२) वक्ष्यते। ननूपसन्मासाभ्यां गुणाभ्यां विशिष्टं कर्म विधीयते, [103]ततो वाजिनन्यायेन गुणभेदात् कर्मभेदो न प्रकरणभेदादिति चेत्, न। वैषम्यात्। [104]उपादेयतया विधेयो गुणो वाजिनं, मासस्त्व-नुपादेय इत्येकं वैषम्यम्; द्रव्यत्वेन [105]गुणान्तर्गतं वाजिनं, मासो न तथेत्यपरं वैषम्यम्। परमार्थतस्त्वत्र प्रथमतरप्रवर्तिनि प्रकरणभेदेन सिद्धे कर्मभेदे गुणभेद उपोद्बलयति[106]। ततः[107] प्रकरणान्तरमेवात्र २५ भेदहेतुरिति[108] ॥

---

८९.-८९. द.ह१.हो१-तथात्रो। ९०. अ.उ.हा-मासाग्नि°। ९१-९१. अ.पा-प्राप्तकर्मत्वमनाप्रात., हो१-नित्यं कर्मात्र मासो प्राप्त, द-नित्यं कर्मात्र मासो प्राप्ति°, ह१-कर्माग्निहोत्रे मासाप्राप्तः। ९२. अ.उ. क.पा-उत वा। ९३. द.ह१-त्वयुक्ताः। ९४-९४. द.ह१.हो.१-°रहितत्वात् न तेषाम्। ९५. अ.उ.पा-°नेन गुणं स्यात्। ९६. आ.द.ह१-वदाम.। ९७. ह१-न। ९८. द-°समर्थकत्वेऽपि, ९९. हा-एतत्सम°; ३० अ.उ.पा-°णादेषा। १००. अ.उ.पा-°पादने। १०१. अ.उ.पा-°होत्रस्य शब्दस्य। १०२-१०२. अ. उ. प-नित्यकर्म। १०३. अ. उ.पा-तथा। १०४. अ.उ.पा-उपपादयति। १०५. द.ह१-रूपान्तर्गतम्। १०६. अ-उपोद्बलयति, उ-उपोद्बलयितुम्। १०७. द.हो१-अतः। १०८. ह१-'इति' नास्ति।

इदानीमस्य कर्मणो धर्मापेक्षत्व [109]सप्तमाध्यायस्य चतुर्थपादे चिन्तितम्—

" सौर्ये चरौ[110] न धर्मा स्यु स्युर्वा मानवर्जनात् ।
न स्यु, स्यु करण यागोऽपेक्षते ह्युपकारिण ॥ " ( जैन्या ७ ४ १ ) ॥

" सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकाम " (द्र तैस २ ३ २) इत्यत्रावघातादयो धर्मा न प्राप्यन्त । [111]कुत ? प्रापकप्रमाणाना श्रुतिलिङ्गादीनामभावादिति चेत् । मैवम् । [112] त्रिमतो याग [112] उपकरणापेक्ष　५ करणत्वात् । लौकिकवैदिकभोजनदर्शपूर्णमासादिवत् [113] इत्यनुमानेन तत्प्रापणात् [113] ॥

तत्रैवान्यच्चिन्तितम्—

" विध्यन्तोऽपेक्षितस्तत्र लौकिको वाऽथ वैदिक ।
आद्यो निबन्धराहित्यादन्त्यो धीसन्निकर्षत [114] ॥ ( जैन्या ७ ४ २ ) ॥

तत्र सौर्यचरावपेक्षित [115]प्रधानविधे शेषाङ्गकलाप [115] स्थालीपाकादिगतो लौकिको ग्रहीतव्य ।　१० कुत ? अनिबद्धत्वात् । वैदिकस्तु प्रकरणेन [116]कर्मविशेषे नियद्ध सन्न ततो वियोजयितु [117]शक्यत इति चेत् । मैवम् । वैदिके करणे वैदिकविध्यन्तस्य[118] बुद्धिसन्निकर्षात् । यथा प्रकरणेन कश्चिन्निबद्धस्तथा चोदकनान्यत्रापि निनीयताम् । किं च " प्रयाजे प्रयाजे कृष्णल जुहोति " (तैस २ ३ २) इति सौर्ययागविधिशेषे[119] कृष्णलहोमविधानाय लिङ्गयाज्याप्रयाजोऽनूद्यते । तच्च वैदिकेतिकर्तव्यताया लिङ्गम् । तस्मात् वैदिको ग्राह्य ॥

स च [120] विध्यन्त इतरेषु [120] कर्मसूपदेशतो[121] न प्राप्नोतीति सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—　१५

" [122]सर्वार्थं प्रकृतार्थं [122] वा प्रयाजाद्युपदेशनम् ।
" यज्यन्वयेन सर्वार्थं [123] नातिदेशो विचार्यताम्[124] ॥
[125]अङ्गप्रधानयोर्मुख्यापूर्वभेदे[126] समन्वयात् ।
[127]प्रकृतार्थमत कार्यमतिदेशविचारणम् ॥ " ( जैन्या ७ १ २ ३ ) इति ॥

दर्शपूर्णमासप्रकरणे प्रयाजादय (द्र तैस २ ६ १) उपदिष्टा, ज्योतिष्टोमप्रकरणे दीक्षणीयादय　२० (द्र तैस ५ ५ १, ६ १ २) । [128]तत्रैते सर्वे धर्मा [128] सर्वयागार्थत्वेनोपदिश्यन्ते । कुत ? यज्यन्वयात् । याग करण, प्रयाजादय [129]इतिकर्तव्यतेत्येतावदविवादम् । तत्र यदि प्रयाजादयो यागवदपूर्वेणान्विता स्यु तदानीमपूर्वनिष्पादकत्वमुभयत्र समानमिति कृत्वा करणोपकरणत्वलक्षण सर्वसमतमङ्गान्तरवैषम्ये बाध्येत । किं " [130]अवघातपेषणादीना यागनिष्पादकत्वेन यज्यन्वयो दृष्टसद्भावत्वसामान्यात्[131] प्रयाजादीनामपि

१०९ अ उ पा हा–सप्तमस्य ।　११० अ उ पा–चरौ ।　१११ आ–'कुत ' नास्ति ।　२५
११२–११२. हो१–विध्यन्तो युगपत् ।　११३–११३ ड ड१ हो१–'इत्यनु णात्' नास्ति ।　११४ अ उ पा–°ऽपि सन्निकर्षात हो–°ऽक्षिसन्निकर्षत ।　११५–११५ आ क ड प्रधानविधिशेषा°, हा–विधान विशेषाङ्ग°, ।　११६ ड–दत्तविशेषे ।　११७ ड–शक्य ।　११८ अ उ पा–°विध्यन्तस्य ।　११९ अ उ क पा–°निधिविशेषे, हा–°विधिशेषेषु ।　१२०–१२० ड विध्यन्तरकृतेषु, हो१–विध्यन्तरधृतेषु । १२१ ड१–°सूपदेशेन ।　१२२–१२२ अ उ पा–सर्वार्थप्रकरणार्थम् ।　१२३–१२३. उ पा यज्युत्पन्न　३० सर्वार्थो, हा–यच्चन्वयेन सर्वार्थो ड–यज्यन्वयेन सर्वासाम् ड–यजे (?) न्वयेन सर्वार्थम् ।　१२४ उ पा–विचार्यते ।　१२५ ड ड१–स च प्रधा° ।　१२६ अ उ ड पा–°मुख्यात्पूर्वभेदे, ड१–°मुख्यात् पूर्व भेदे । १२७ ड ड१–प्रकृतार्थं तत, हा प्रकृतार्थे तत ।　१२८–१२८ अ उ–तत्र ते पर्वधर्मा पा–तत्र ते सर्वधर्मा, क–तत्र ते सर्वे धर्मा ड१ हो१–त एते सर्वे धर्मा, ड–तत एते सर्वे धर्मा ।　१२९. पा–इत्यपकरोत्येतत्तावत ।　१३० ड हो१–चावघातापेषणादीनाम ।　१३१ ड ड१ हो१–°साम्यात ।　३५

यज्यन्वयो युक्तः। यजिधातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते। तथा सति सौर्यश्येनादिष्वनुपदेशेनैव कृत्स्नधर्मप्राप्तेरतिदेशविचारो न कर्तव्य इति प्राप्ते ब्रूमः–अपूर्वं हि[132] मुख्यं फलवत्त्वात्। यजिनं मुख्यः, फलरहितत्वात्। फलवति मुख्ये प्रयाजादिविधानं[133] युक्तम्। अतः करणेतिकर्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः। पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः। तथा सत्यपूर्वभेदस्य ५ द्वितीयाध्याये (जैन्या ७.२.८-१०) निरूपितत्वादपूर्वविशेषेण तत्करणभूतयजिविशेषेण [134]चाऽन्विताः प्रयाजादिधर्मा ये यस्मिन् प्रकरण आम्नातास्ते तत्रैव व्यवतिष्ठन्ते। सत्येवं प्रकरणमर्थवद्भवति। सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात्। तस्मात् सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षां[135] पूरयितुमतिदेशविचारः कर्तव्यः॥

प्रत्यक्षवचनेन धर्मातिदेशस्तत्रैव चिन्तितः —

१० "इषौ[136] समानमितरच्छ्येनेनेत्यनुवादकम्।
श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकम्[137]॥
ज्योतिष्टोमविकारत्वात् [138]तद्धर्मांश्चोदकात् समाः[139]।
[139]श्येनेष्वोरितरत्वोक्तिरिषुवैशेषिकं प्रति॥
इषुवैशेषिकादुक्तादितरच्छ्येनगं स्फुरेत्।
१५ वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते॥" (जैन्या ७.१.४-६) इति॥

इषुनामकः श्येननामकश्च [140]द्वावप्येकाहौ ज्योतिष्टोमविकारौ[141], [142]तयोरुभयोर्ज्योतिष्टोमधर्माः चोदकेन प्राप्ताः। ते चोभयत्र समानाः। तच्च समानत्वम्[143] इषुप्रकरणेऽनेन[144] वाक्येनानूद्यते– "समानमितरच्छ्येनेन" (पञ्चब्रा ४.३.७) इति। नन्वत्र इतरशब्दोक्तिरनुपपन्ना, तत्प्रतियोगिनः कस्यचिदनिर्दिष्टत्वादिति चेत्। न। पूर्ववाक्यविहितस्य विशेषधर्मस्य[145] प्रतियोगित्वात्। इषौ यो वैशेषिकधर्मो[146] २० विहितस्तं परित्यज्य इतरच्चोदकप्राप्तं [147]सर्वं श्येनेन समानमित्यर्थः। तस्मादनुवादकमिदं वाक्यमिति प्राप्ते ब्रूमः–इतरशब्दः प्रतियोगिसजातीयं ब्रूते। [148]तद्यथा–[149]एष देवदत्त एव एवाधीते नेतरः कश्चिदित्युक्ते अध्ययनप्रवृत्तिमान्[150] यज्ञदत्तादिमाणवकः[151] प्रतीयते न तु गवाश्वघटपटादिः। एवमत्राऽपि इषुवैशेषिकस्य[152] पूर्ववाक्योक्तस्य [153]प्रतियोगित्वात् तत्समानजातीयं[153] श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकं धर्मजातम् इतरशब्देन प्रतिभाति। तच्च अपूर्वत्वभावाच्च चोदकेन प्राप्तम्। तस्मात् [154]इषावनुष्ठेयत्वेन २५ अतिदिश्यते[155]॥

---

१३२. आ–'हि' नास्ति। १३३. ड१.हो–प्रयाजाद्यानम्; अ.उ.पा–प्रयाजवि°। १३४. ड.ड–चान्विताः। १३५. अ.उ.पा.हा–धर्म्याकाङ्क्षाम्। १३६. अ.उ.ड.ड१.पा–इषौ। १३७. अ.उ.पा–°नुवादनम्। १३८–१३८. अ.उ.पा–°श्चोदकात्मनः। १३९. अ.उ.ड.पा–श्येनेष्टेरि°। १४०. ड१–द्वावेकाही। १४१. ड१.हो१–°विकारयोः। १४२. ड१–'तयोः' नास्ति। १४३. अ.उ.पा–प्रकरणसमानत्वम्। १४४. ३० अ.उ.क.पा–°प्रकरणे°। १४५. अ.उ.पा–विशेषस्य धर्मस्य; हो१–विशेषादिधर्मत्व°। १४६. वैशेषिको धर्मः। १४७. अ.उ.पा–सर्वं प्रति। १४८. अ.उ.पा.हा–अयत्र। १४९. अ.आ.उ.क.पा.हा–'एषः' नास्ति। १५०. ड–°यने प्रवर्तिमान्। १५१. ड.ड१–°दत्तादिमाणवकः। १५२. अ.उ.ड१.पा–वैशेषिकस्य। १५३–१५३. अ.उ.पा–प्रतियोगित्वमान°; क.ड.ड१–प्रतियोगित्वात् तत्सजातीयम्। १५४. अ.उ.पा–अथानु°; ड.हो१–इषावनु°। १५५. ड–अनुदिश्यते।

नाम्ना धर्मातिदेशस्तत्रैव तृतीयपादे चिन्तितः —

" मासं जुहोत्यग्निहोत्रमिति नामाऽग्निहोत्रतः ।
नित्यान्मासाग्निहोत्रेऽस्मिन् धर्माणां नातिदेशकम् ॥
उतातिदेशकं नैव द्वयोर्नाम्न समत्वतः ।
अग्नये होत्रमित्यस्य नित्ये सयौक्तिकत्वतः ॥
तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये ।
नित्याग्निहोत्रगान् धर्मान्नामातिदिशेदिह ॥" (जैन्या ७ ३ १-३) इति ॥

कुण्डपायिनामयने श्रूयते—"मासमग्निहोत्रं जुहोति" (ताण्ड्य २५ ४ ३) इति। तत्र अग्निहोत्रम् इत्येतन्नाम नित्याग्निहोत्रादन्यस्मिन् मासाग्निहोत्रे धर्मानतिदेष्टुं नार्हति। कुतः ? तस्य नाम्न उभयोरग्निहोत्रयोर्मुख्यवृत्त्या समानत्वादिति प्राप्ते ब्रूमः—अग्नये होत्रं यस्मिन् कर्मणि तत् अग्निहोत्रम् इत्येतम् अवयवार्थं नित्याग्निहोत्रे सद्भावात् तन्नामधेयत्वं प्रथमाध्याये (जैन्या १ ४ ८ १२) निर्णीतम्। अतस्तत्रैवायं शब्दो मुख्यः। न चोभयत्र मुख्यत्वं संभवति अनेकार्थत्वस्य अन्याय्यत्वात्। मुख्यत्वाभावेन मासाग्निहोत्रे गुणयोगाद्वर्तितु नित्याग्निहोत्रगुणानतिदिशति ॥

"प्रत्यक्षवचने नाम्नोरभावेऽपि" नियतादेव कर्मणोऽतिदेशोऽष्टमाध्यायस्य प्रथमपादे चिन्तितः —

"कस्माच्चिदतिदिश्यन्ते नियतात् कर्मणोऽथ वा ।
अविशेषादादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः ॥" (जैन्या ८ १ २) इति ॥

विहितेतिकर्तव्यतारहिते सौर्यादौ कर्मणि तद्युक्तात् यतः कुतश्चित् कर्मणो धर्मा अतिदिश्यन्ते। कुतः ? नियामकस्य विशेषस्याभावात्। अतो विशेषचिन्ता न कार्येति चेत्। मैवम्। शास्त्रार्थव्यवस्थाया नियामकत्वात्। तस्मान्नियतादेकस्मात् कर्मणो धर्मातिदेशः। तेन विशेषचिन्ता कर्तव्या ॥

तत्रैव विशेषनियामकं चिन्तितम्— २०

"तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकम्।
भवेद्वा न हवन्द्रव्याद्रेच्छब्दे प्रवेशतः ॥" (जैन्या ८ १ ३) इति ॥

दर्शपूर्णमासयोः "आग्नेयमष्टाकपालं निर्वपति" (तैसं १ ८ २) इत्यत्र तद्धितोक्त्या दैवता निर्देशः एकदेवतायोगित्वम् औषधद्रव्यकत्वं निर्वाप इत्येतान्याग्नेययागसम्बन्धितया श्रूयमाणत्वात् तदीयलिङ्गानि। "सौर्यं चरुं निर्वपेत्" (तैसं २ ३ २) इत्यत्रापि तान्युपलभ्यन्ते। ॥ २५

१५६ ड-नैवम्। १५७ हो१-°नाम्नो। १५८ अ उ पा-°मित्यत्र। १५९ क-°तन्नाम्नाति दिशेदिह। १६० अ उ पा मासाग्नि°। १६१ अ उ ड पा हा-°दस्मिन्। १६२ अ उ पा हा- समानत्वमिति। १६३-१६३ अ उ पा 'यस्मिन्कर्मणि तदग्निहोत्रम्' नास्ति। १६४ ड-°त्येतदेवम्। १६५ पा-°ग्निहोत्रम्। १६६ अ उ पा-अनेकार्थस्य हा अनेकार्थतेऽस्य। १६७-१६७ हो१-मासाग्नि होत्रगुणानति°। १६८ आ क ड प्रत्यक्षवचन°। १६९ ड ड१-'अपि' नास्ति। १७० ड-कि कस्माच्चाति°। १७१ अ उ पा-अवशेषा° ड न विशेषा°, ड१-सविशेषा°। १७२ अ उ पा 'तद्युक्तात्' नास्ति। १७३-१७३ अ उ पा-अविशेषचिन्ता केन ड-अतो विशेषेण चिन्ता न। १७४ क हो१ शास्त्रार्थस्य व्यव°। १७५ अ उ क पा-°आग्नेयलिङ्गानियता°। १७६ ड ड१- च शब्दे°। १७७ अ उ पा हा प्रवेशात्। १७८ क ड-ओषधिद्रव्य° अ उ पा-°द्रव्यकम्। १७९ अ उ पा- इत्येताभ्यामेव यथासन्नधि°। १८० अ उ पा-°त्वादग्नेर्लिङ्गानि। ३५

तेषामाग्नेयधर्मातिदेशे नियन्तु सामर्थ्यमस्ति। कुत ? तेषामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्या योगादिति प्राप्ते ब्रूम —लिङ्गसारितोपकारसहितमेव सौर्ययाग तच्छब्दो विदधाति। [181] तथा सति [181] प्रणाड्या लिङ्गस्य शब्दे प्रवेशादाग्नेयवत् सौर्योऽनुष्ठेय इत्येतादृश चोदकवाक्यमनुमापयता लिङ्गेन [182] धर्मविशेषा नियम्यन्ते [182] ॥

५ इष्टिषु सौमिकधर्मनिवारण तत्रैव चिन्तितम्—

"ऐन्द्राग्नादौ [183] सौमिक स्यादैष्टिको [183] वा द्वयोरिह।
[184]सभवादैष्टिकोऽन्त्योऽत्र स्यात् कपालादिलिङ्गत ॥" (जैन्या ८·१ ७)॥

"ऐन्द्राग्नमेकादशकपाल निर्वपेत् प्रजाकाम " (तैस २ २·१) इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया ग्राह्य। कुत ? उभयत्र विध्यन्तसभवेनातिदेष्टुमर्हत्वादिति चेत्। न। कपालनिर्वापा
१० दिभिर्लिङ्गविशेषैरैष्टिकस्यैवात्रोचितत्वात्[185] ॥

अग्नीषोमीयपशोरिष्टिविकृतित्व तत्रैव चिन्तितम्—

"न पशावैष्टिक स्याद्वा न कपालाद्यभावत ।
स्यान्[186] व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यत ॥" (जैन्या ८ १ ८)॥

[187]अग्नीषोमीयपशावैष्टिकविध्यन्तो नास्ति। कुत ? पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति
१५ चेत्। नैवम्। "आग्नेयमष्टाकपालम्" (द्र तैस १ ८ २) इत्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथा "अग्नीषोमीय पशुम्" (गैभ्रा २ ३) इत्यत्रापि। न तु "सोमेन यजेत" [188]इत्यत्रेव देवताया अव्यक्तत्वम्। [189]तदेतत् व्यक्तद्रव्यदेवतात्वमेक[189] लिङ्गम्। "एकादश प्रयाजान् यजति" (तैस ६ ३ ७) इति [190]प्रयाजबहुत्व द्वितीयम्। "स्रुच्यमाघार्य जुह्वा पशु समनक्ति" (द्र आपश्रौ ७ १४ १) इत्याघाराञ्जने लिङ्गान्तरे[191]। आरम्भो लिङ्गान्तरम्, इष्टावपि "ईषामालभेत" (द्र आपश्रौ १ १७ ६) इति
२० दर्शनात्। तस्मादस्ति पशावैष्टिक ॥

तस्यैव पशो पश्वन्तरप्रकृतित्वेनान्तरप्रकृतित्व तत्रैव चिन्तितम्—

"सवनीयादिके दार्शो दैक्षो वा प्रकृतिर्भवेत् ।
आद्योऽन्त्यो लिङ्गमोऽन्यत्र विकृति प्रकृतिर्भवेत् ॥" (जैन्या ८ १ ९)॥

---

१८१–१८१. ट ह्रो१–'तथा सति' नास्ति।
१८२–१८२. अ उ पा–°विशेषो नियम्यते।
१८३–१८३ ट–सौमिकं स्यादैष्टिकम्।
१८४ आ क ह्रा–सभवादैष्टिको°।
२५ १८५. अ उ पा स्यैवात्रोचितत्वात्।
१८६. अ उ पा ह्रा–°देवत्वात् प्रयाज°।
१८७. अ उ क पा ह्रा–अग्नीषोमीये पशा°।
१८८ अ उ पा–इतिवत्, ट, ट१–ह्रा–इत्यत्रेव।
१८९. अ उ पा तदेव।
१९०. आ क ट ट१–°देवत्व°।
१९१. ह्रा१–अप्रयाजान्तरम्।
१९२. अ उ क पा ह्रा–लिङ्गान्तरम्।

वायव्याः पशवः ]

[193]सवनीयानुबन्ध्यनिरूढादिपशुषु [194]दर्शपूर्णमासमंबन्धिविध्यन्तः कार्यः। [195]कुतः? दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमीयपशुविध्यन्तः दीक्षितेनानुष्ठेयेषु [196]पशुविध्यन्तेषु प्रथमभावित्वात्। तस्य [197]चाग्नीषोमीयेष्टिविकृतित्वात् प्रकृतित्वमस्ति। अतो न तस्य विध्यन्तोऽतिदेशार्हः[198] इति प्राप्ते ब्रूमः— आलम्भोऽग्नीषोमीयपशौ[199] लिङ्गम्। [200]तच्च सवनीयादिष्वप्यस्ति[201]। तथा प्रातःसवनीयादिषु[202] वपाप्रचारोऽपरं लिङ्गम्। इष्टिं प्रति विकृतेरप्यस्य सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादग्नीषोमीयपशोः विध्यन्तं सवनीयादिपशूनां प्रदिशेत्। [203]तदेवम् पूर्वोत्तरविचारेणानुबन्ध्यादिपशुष्वग्नीषोमीयविध्यन्तातिदेश इति सुस्थितम्[204]॥

"वायव्यं श्वेतमा लभेत" (तैसं २-१-१) इत्यत्र यागविधित्वं द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

> "वायव्यः श्वेत आलम्भो भूत्यै सौर्यं चरुं तथा।
> निर्वपेद् ब्रह्मतेजोऽर्थम् ईषामुष्टिनिरूपयोः॥　　　१०
> [205]गुणौ श्वेतचरू[205] किं वा [206]वायव्यश्चित्रकर्मणी।
> [207]फलार्थमथ वा यागौ[207] विधिरौ विहिताविह॥
> श्वेतं वायुस्पृगीषायामाग्नेये च रविप्रभे।
> [208]चरुर्गुणः चरुः स्थाली निर्वापस्तु तदाश्रितः॥　　　१५
> फलहानेर्न तत्किं तु वाक्योदितकर्मं तत्।
> द्रव्यादिरूपसंपत्तेर्यागौ यागताऽऽधिकृौ॥" (जैन्या २-३-१२-१५)॥

अनारभ्येदमाम्नायते—"वायव्यं श्वेतमा लभेत भूतिकामः" (तैसं २-१-१) इति। "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" (तैसं २-३-२) इति च। तथा च दर्शपूर्णमासयोरिदमाम्नातम्[209]—"ईषामालभेत" (द्र. आपश्रौ १-१७-१) इति, "चतुरो [210]मुष्टीन्निर्वपति" (द्र. आपश्रौ १-१८-२) इति च। ईषा २० शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषस्तस्या आलम्भः स्पर्शः। तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य[211] तस्यामालभ्यायामीषायां श्वेतगुणो विधीयते। [212]तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वात् वायव्यत्वं[213] संभवति। तथा चतुर्मुष्टिनिर्वापमनूद्य [214]चरुर्गुणत्वेन विधीयते। चरुः स्थाली। सा च निर्वापस्याऽऽश्रयः। निरुप्तस्य हविष आश्रयतया सूर्यवत् प्रभासम्बन्धात् सौर्यत्वम्। भूतिब्रह्मवर्चसफले [215]सार्वकालिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते। तस्मात् गुणविधिरित्येकः पूर्वपक्षः। न हि फलप्रदयोर्नित्यवत्क्रतुयोः २५

---

१९३. अ.उ.पा–तत्राद्यो निरूढपशुबन्ध्यादिषु; हा–°ढादिपशुबन्ध्यादिषु। १९४. ड१–°मासादिसंब°। १९५. अ.उ.पा–'कुतः' नास्ति। १९६. अ.उ.पा–विध्यन्तेषु। १९७. अ.उ.ड.पा.हो१–°षोमीयस्य विकृ°; ड१–°षोमीयस्येष्टी°। १९८. आ–°अतिदेशार्थः। १९९. अ.ड.पा.हो१–°पशोः। २००. क.हा–'तच' नास्ति। २०१. ड–°दिष्वस्ति। २०२. क.ड.हा.हो१–°सवनादिषु। २०३. क.ड.ड१.हो१–तथैव। २०४. आ.क.–संस्थितम्। २०५–२०५. अ.उ.पा–गुणैः श्वेतचरुः। २०६. अ.उ.पा–या चतुर्थी ३० न कर्मणा। २०७–२०७. हो१–फलार्थे अथवा योगो (?); ड१–फलार्थे ह्यथवा यागः। २०८. अ.उ.पा–चतुर्गुणः चतुःस्थाली; ड१–चतुर्गुणाः चरुस्थाली। २०९. ड–°योरेवमाम्नातम्। २१०. ड१–मुष्टीर्नि°। २११. ड१–°लम्भनमनूद्य। २१२. अ.उ.पा.हा–कस्यचित्। २१३. ड–वायव्यता। २१४. आ.ड१–चतुर्गुणत्वेन। २१५. ड.हो१–°कालीनयोर्दर्श°; अ.उ.पा–°कालिकविशिष्टकर्मान्तरयोः; हा–सार्वकालिकफलविशिष्टकर्मान्तरयोः। ३५

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमालभत स कृष्ण एकशितिपादभवद्-

प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र जा । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन् । ताः । वरुणम् । अगच्छन् । ताः । अनु इति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । वरम् । वृणीष्व । अथ । मे । पुनः । देहि । इति । तासाम् । वरम् । एति । अलभत । सः । कृष्णः । एकशितिपादित्येक शितिपात् । अभवत् ।

प्रजापतिरित्यादि ॥ प्रजापतिना सृष्टा प्रजा पराचीः पराच्य अपरक्तचित्ता सत्य [1]अस्मात् प्रजापते आयन् आगच्छन् । ता वरुणम् अगच्छन् अभजन्त । अथ प्रजापति ता प्रजा पराचीर्याता अनु ऐत् अन्वगच्छत् । ता च वरुणम् अयाचत । वरुणश्च ता पुन पुनर्याचितोऽपि न अददात् न दत्तवान् । अथ अब्रवीत् प्रजापति । [2]वरम् अभिमत मत्तो वृणीष्व । अथ अनन्तरमिमा प्रजा वरलाभतुष्ट मे देहि इति । अथ एव मुक्त्वा तासा प्रजाना मध्ये वर वरिष्ठ पशु वरणाय आ अलभत [3]स्वयमेव वरदानमालम्भनेना करोत् । स च तत [4]प्रभृति कृष्ण एकशितिपात् अभवत् । एक शिति [5]श्वेत पादो यस्येति त्रिपदो बहुव्रीहि । यद्वा शिति पादो यस्येति शितिपात् । " पादस्य लोप॰ " (पा ५ ४ १३८) इति समासान्त । एकेन पादेन शितिपात् । तृतीयापूर्वपदप्रकृतिस्वरत्वम (पा ६ २ २) ॥

भक्तिकामो ग्रामकाम प्रजार्थी दीर्घरोगवान् ।
प्रजापश्वीर्नां चैषा [1]श्वताद्या पशव श्रुता [2] ॥

तानेतान् पशून प्रथमानुवाके विधाय द्वितीये वरुणगृहीतादीना पशव उच्यन्ते ।

प्रजापतिरिति ॥ तत्र वरुणगृहीतस्य पशु विधातु प्रस्तौति–'प्रजापति प्रजा असृजत ता अस्मात् सृष्टा पराचीरायन् ता वरुणमगच्छन् ता अन्वैत् ता पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वर वृणीष्वाथ मे पुनर्देहीति तासा वरमाऽलभत स कृष्ण एकशितिपादभवत् इति । प्रजापतिना सृष्टा प्रजा पराच्य [3]पराङ्मुख्य अपरक्ता [4] सत्योऽस्मात् प्रजापते आयन् अगच्छन् । गत्वा च वरुण प्राप्ता । स च

1. अ–'अस्मात्' नास्ति। 2. तर–परम्। 3. ल–वया। 4. तै१ मै–प्रमापित 'प्रभृति' नास्ति। 5. तर–'श्वेत' नास्ति।

1. ङ–'श्वेताद्या' नास्ति। 2. अ उ बा ना पा हा–स्मृता ग–समदीरिता। 3. ङ१ हो१–पराङ्मुख्या। 4. ना–अनुपरक्ता।

यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमा लभेत वरुण(१)मेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै

यः । वरुणगृहीत इति वरुण-गृहीतः । स्यात् । सः । एतम् । वारुणम् । कृष्णम् । एकशितिपाद-
५ मित्येक शितिपादम् । एति । लभेत । वरुणम् ( १ ) । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति । कृष्णः । एक-शितिपादित्येक शितिपात् । भवति । वारुणः । हि । एषः । देवतया । समृद्ध्या इति सम् ऋद्ध्यै ।

[5]वरुणगृहीत इति ॥ वरुणो महोदर इति व्याधिरित्येके । अज्ञातरोग इत्यन्ये । " तृतीया कर्मणि " ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । गतमन्यत् ॥

१० प्रजापतिः [6]ताः प्रजा अनुगम्य [7]मे[8] मदीया प्रजा [8] [9]पुनः अपि मह्यमेव [9] देहीति वरुणम् [7]अयाचत । वरुणस्तु [8]न ददौ[8] । ततः [9]स प्रजापतिर्वरुणमिदम् [9]अब्रवीत्, एतासां प्रजानां [9]मध्ये [10]वरं श्रेष्ठं गृहीत्वाऽवशिष्टास्त्वं मह्यं [10]देहि [10]इति । स च वरुणः [10]तासां प्रजानां मध्ये [10]परीक्ष्य [10]वरं श्रेष्ठं [10] कश्चित् पशुः मदीयोऽयमिति हस्तेनास्पृशत्[11] । [12]स च [12]परीक्ष्यमाणः कृष्णवर्णः सन्नेकेन [13]श्वेतेन पादेन युक्तोऽभूत् ॥

य इति ॥ [14]विधत्ते– 'यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमा लभेत
१५ वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति' इति । [15]वरुणगृहीत जलजन्येन महोदरव्याधिना गृहीत ॥

कृष्ण इति ॥ पशुविशेषणं प्रशंसति – ' कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै ' इति ॥ ईदृशं पशुं वरुणः [15]स्वीयत्वेन गृहीतवानिति [15]तस्य वरुणदेवतात्वम्[16] । स च यजमानस्य आरोग्यसमृद्ध्यै सम्पद्यते ॥

२० ६–६ मे–°गृहीत स्यात् ।

५. [illegible] होर–'मे' नास्ति । ६–६. [illegible] होर–मह्यमेव पुनः ।
७ [illegible]– ददात् । ८ [illegible]–°मिमम्, [illegible]–'इदम्' नास्ति । ९. अ उ पा–'मध्ये' नास्ति ।
१०–१० [illegible] पा–परीक्ष्य [illegible]–वरं श्रेष्ठम्, [illegible] हो–श्रेष्ठ [illegible]–परीक्ष्य वरं श्रेष्ठम् । ११. अ उ पा–
°[illegible] । १२. [illegible]–परीक्ष्यमाण । १३ [illegible]–[illegible]तिना । १४ होर–'विधत्ते' इत्यस्यानन्तरम्–
२५ '[illegible] कोऽपि भाग एव [illegible] कोऽपि भाग एव अस्त्यसाधनात् । [illegible] [illegible] अतिनिर्देश[illegible]भावात् यं कश्चिदपि [illegible]' इति । १५–१५. अ [illegible]–प्रत्याहृतवानिति । १६. अ उ –°देवतात्वम् ।

काम्या पशवः ]

सुर्वर्भानुरासुरः सूर्यं तमसाऽविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत् तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽविर्वशा (२) समभवत्

सुर्भानुरिति सुर्व — भानुः । आसुरः । सूर्यम् । तमसा । अविध्यत् । तस्मै । देवाः । प्राय-श्चित्तिम् । ऐच्छन् । तस्य । यत् । प्रथमम् । तमः । अपाघ्नन्निति॑ ऽप अघ्नन् । सा । कृष्णा । अविः । अभवत् । यत् । द्वितीयम् । सा । फल्गुनी । यत् । तृतीयम् । सा । बलक्षी । यत् । अध्यस्था दित्यधि-अस्थात् । अपाकृन्तन्नित्यप-अकृन्तन् । सा । अविः । वशा (२) । समिति । अभवत् ।

सुवर्भानुरिति ॥ [1]सुवर्भानुः नाम [2]आसुरः [3]असुरस्यापत्यम् । [4]शिवादित्वादण् (पा ४ १ ११२) । [5]तमसा [6]अविध्यत् अबाधत । प्रायश्चित्तिः दोषनिर्घातार्थो यत्नः । अथ [7]'[8]तस्य [9]प्रथमं [10]यत् [11]तमः [12]अप [13]अघ्नन् [14]सा कृष्णवर्णा [15]अविः अजायत । [16]द्वितीयं [17]यत् अपाघ्नन् [18]सा [19]फल्गुनी नीलवर्णा । [20]यत् [21]तृतीयम् अपाघ्नन् [22]सा [23]बलक्षी शुक्लवर्णा । "अन्यतो ङीष्" (पा ४ १ ४०) । [9]वर्णयोरेकत्वमिच्छन्ति । अथ [24]अध्यस्थात् अस्थिभ्यो यत् तमोऽपाघ्नन्[11] अपाच्छिदन् [25]सा [26]वशा वन्ध्या [27]अविः अजायत । अध्यस्थादिति विभक्त्यर्थेऽव्ययीभावः (पा २ १ ६) । "छन्दस्यपि

सुवर्भानुरिति ॥ पशुप्रतिपादिकामाख्यायिका[17] वशा[18] विधातुं प्रस्तौति – 'सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद् द्वितीयꣳ सा फल्गुनी यत्तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽविर्वशा समभवत् ते देवा अब्रुवन् देवपशवो वा[19] समभूत् कस्मा इममा लप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयः ' इति ॥ [1]सुवर्भानुः इत्यासुरस्य कस्यचिन्नामधेयं, [20]स्वर्गलोकगता प्रभा नुदतीति सुवर्भानुः । स च पृथिव्या रूपं धृत्वा [21]कृष्णवर्णः । [21]तमःपुञ्जरूपत्वं "[22] यत्त्वा सूर्य[22] स्वर्भानुस्तमसाऽविध्यदासुरः[23]" (ऋसं ५ ४० ५) [24] इत्येतस्यामृचि स्पष्टमाम्नातम्[25] । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते । छन्दोगाश्च "यत्कृष्णं तदन्नस्य" (छाउ ६ ४ १) इत्यन्नकारणभूताया पृथिव्याः[25] कृष्णरूपत्वमामनन्ति । अतः तमःपुञ्जरूपः[26] स [3]आसुरः स्वकीयेन [5]तमसा [4]सूर्यम् आच्छाद्य जगदान्ध्यं कृतवान् । [6]तस्मै तस्य सूर्यप्रभाच्छादकस्य[27] तमसः [7]प्रायश्चित्तिं परिहारं विचार्य नानाविधैः प्रकाशरूपैर्मैण्यादिद्रव्यैस्तमः [8]अपाघ्नन् चतुर्भिः पर्यायै रपसारितवन्तः । प्रथमपर्याये अपसृतं[28] तमः कृष्णवर्णा काचित् [9]अविः अभूत् । द्वितीयपर्याये [10]फल्गुनी २५

७ मै४ ल–शिवादणन्त । ८ मै–'तस्य' नास्ति । ९ मै४–स्वर्णवर्णा । १० मै मै४–वर्णयो° । ११ मै४–°पाकृन्तन् ।

१७ ङ ङ१ हो१–पशुप्रजादिकामिनः ङ–पशुप्रजनादिकामिनः । १८ ङ हो१–पशुम् । १९ हो१–स्वर्लोक° । २० ङ–कृष्णरूप । २१ ङ१–तमःस्वरूपत्वम् क–तमःपुरुषरूपत्वम् २२–२२ अ इ उ ना पा–इय वै सूर्यं ङ१–इय वै सूर्यं हा–इय सूर्यं । २३ ङ१–°ध्यद् तथाऽसुरः । २४–२४ अ उ ना पा हा–इत्येतस्यामविस्पष्टमनातम । २५ अ उ पा–'पृथिव्याः' नास्ति । २६ ङ ङ१–तमःस्वरूपः । २७ ङ१–°प्रच्छादकस्य । २८ ङ१ हो१–प्रसृतम् ।

ते देवा अब्रुवन् देवपशुर्वा अयꣳ समभूत् कस्मा इममा लप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयो यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामाया( ३ )ऽऽ लभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप

५ धावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया

ते । देवा । अब्रुवन् । देवपशुरिति देव-पशुः । वै । अयम् । समिति । अभूत् । कस्मै । इमम् । एति । लप्स्यामहे । इति । अथ । वै । तर्हि । अल्पा । पृथिवी । आसीत् । अजाता । ओषधयः । ताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय । एति । अलभन्त । ततः । वै । अप्रथत । पृथिवी । अजायन्त । ओषधयः । यः । कामयेत । प्रथेय । पशुभिरिति पशु-भिः ।
१० प्रेति । प्रजयेति प्र-जया । जायेय । इति । सः । एताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय ( ३ ) । एति । लभेत । आदित्यान् । एव । कामम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । एनम् । प्रथयन्ति । पशुभिरिति पशु-भिः । प्रेति । प्रजयेति प्र-जया ।

दृश्यते" (पा ७·१·७६) इत्यनङादेशः । "नपुंसकादन्यतरस्याम्" ( पा ५·४·१०९ ) इति टच् समासान्तः । अथ [12]ते [v]देवाः [v]अब्रुवन् । [13]देवानां पशुः [v]देवपशुः[13], देवास्थिसंभूतत्वात् । [14]एवं
१५ महानुभावः [v]अयं पशुः वशात्मा तम्[14] [v]इमम् [v]कस्मै कामाय [v]आ [v]लप्स्यामहे[15] [v]इति । [15]अथ [v]तर्हि तस्मिन् काले । "अनद्यतने र्हिलन्यतरस्याम्" ( पा ५·३·२१ ) इति । [v]पृथिवी [v]अल्पा

[29]लोहितवर्णा काचिदविरभूत्[29] । तृतीयपर्याये [v]वलक्षी श्वेता काचिदविरभूत् । अस्थ्नोऽप्युपरि वर्तमान-प्रकाशोऽप्यन्यः । यस्यविस्मृतदेहस्य दीप्यमानमस्थि [30]समादाय तदीयात् प्रकाशाच्चतुर्थपर्याये तमः [v]अपाघ्नन् अपनीतवन्तः । तच्च तमः [v]वशा वन्ध्या काचित् [v]अविः अभूत् । ततः [v]देवाः विचार्य परस्पर-
२० मिदम् [v]अब्रुवन्—अस्थ्यादस्त्वो जातत्वादयमुत्तमः [v]देवपशुः । तमेतं [v]कस्मै कामायोत्तमप्रयोजनायाऽऽलब्धं करिष्यामः [v]इति । [v]अथ विचारादूर्ध्वं [v]तर्हि तदानीमेव पृथिव्या अल्पत्वमोषधीनाम् [31]अनुत्पत्तिः इति[31] दोषद्वयमवेक्ष्य तत्परिहाररूपाय [v]कामाय समर्थेभ्यः [32]आदित्येभ्यः [v]तां [v]वशाम् आलभ्य पृथिवीविस्तारमोषध्युत्पत्तिं च [33]संपादितवन्तः ॥

य इति ॥ विधत्ते—'यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति ॥ एतामविं वशामा-
२५ दित्येभ्य कामायाऽऽलभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावन्ति त एवैनं प्रथयन्ति पशुभिः ॥

१२. मै८-तम् । १३-१३. अ मै८-देवमयः पशुः । १४. मै४-महानुभावं पशुं वशात्मानम् ।
१५. मै८-अथ वै ।

२९-२९. द१.हो१-'लोहित...भूत' नास्ति । ३०. क.द.द१.हो-समानीय । ३१-३१. आ-अनुत्पत्तिं च । ३२. द१ हो१-'आदित्येभ्यः' नास्ति । ३३. क.द१.हो१-उत्पादितवन्तः ।

**जनयन्त्यमावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आऽलभन्ताऽऽग्नेय्यां कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्यां ताभिरेवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आ लभेता(४)–**

जनयन्ति। असौ। आदित्य । न। वीति। अरोचत। तस्मै। देवा। प्रायश्चित्तिम्। ऐच्छन्। तस्मै। एता । मल्हा । एति। अलभन्त। आग्नेयीम्। कृष्णग्रीवीमिति कृष्ण-ग्रीवीम्। सꣳहितामिति सं-हिताम्। ऐन्द्रीम्। श्वेताम्। बार्हस्पत्याम्। ताभि । एव। अस्मिन्। रुचम्। अदधु । य । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-काम । स्यात्। तस्मै। एता । मल्हा । एति। लभेत (४)। ५

समुचिता [34]आसीत्, ओषधयश्च [35]अजाता आसन्। अथ देवा [36]ता [37]वशाम् [38]आदित्येभ्य [39]कामाय च [40]आ [41]अलभन्त आदित्येभ्य कामाय त्वा जुष्टमुपाकरोमीति। कस्य कामाय? 'प्रथता पृथिवी, जायन्तामोषधय ' इत्येवरूपाय कामाय। सपादित्वात्ताच्छन्द्यम्*। ततो या इत्यादि। गतम्॥ १०

असावादित्य इत्यादि॥ [17]मल्हा [18]कण्ठावलम्बितस्तनयुग्मा। [18]कृष्णग्रीवी कृष्णबिन्दुलाञ्छितग्रीवा[19] शुक्ला[20]। "स्वाङ्गाच्चोपसर्जनात्" (पा ४ १ ५४) इति ङीप्। सतिशिष्टसमासान्तस्वर [21] (पा ६ १ २२३)। संहिता कृष्णश्वेतमिश्रदेहा॥

प्रजया जनयन्ति ' इति। [24]पशुभि [25]प्रथेय पशुबाहुल्यलक्षण विस्तार प्राप्नुया [26]प्रजया पुत्रपौत्रादिरूपया प्रकृष्ट [27]जायेय भवेयम्। [28]कामाय कामप्रापकेभ्य इत्यर्थ ॥ १५

असावितिं॥ ब्रह्मवर्चसकामस्य पशुविधानाय प्रशंसति–' असावादित्यो न व्यरोचत तस्मै देवा प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्या ताभिरेवास्मिन् रुचमदधु ' इति॥ पूर्ववत्तमोवेधरहितोऽपि [34]आदित्य कदाचित् [35]प्रकाशमान्द्यात् विशेषेण न दीप्तवान्। [36]तस्मै [37]आदित्यदीप्त्यर्थमेव [38]एता वक्ष्यमाणा [39]मल्हा [40]मणिला गलल्लम्बितस्तनान्विता [41]अजा [42]तिस्र [43]आऽलभन्त। कृष्णा ग्रीवा यस्या सा कृष्णग्रीवा ग्रीवाव्यतिरिक्तप्रदेशेषु वर्णान्तरोपेतेत्यर्थ । कृत्स्नेऽपि शरीरप्रदेशे मेदस्थितैर्लोहितशुक्लकृष्णवर्णैर्युक्ता संहिता॥ २०

य इति॥ विधत्ते–' यो ब्रह्मवर्चसकाम स्यात् तस्मा एता मल्हा आ लभेताऽऽग्नेयीं कृष्णग्रीवी" सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्यामेता एव देवता स्वेन भागधेयेनोप धावति ता एवास्मिन् ब्रह्मवर्चस दधति ब्रह्मवर्चस्येव भवति ' इति। [35]श्रुताध्ययनसंपत्तिरूप तेज [36]ब्रह्मवर्चसम्॥ २५

१६. अ मै४–वशाम् अविम्। *[ 'कामसम्पत्तिहेतुत्वात् कामशब्द आदित्येष्वित्यर्थ.' इति मैं मुद्रित-पुस्तक-टिप्पणी ]। १७. अ मै४–मणिला कर्णाव°। १८. मै४–कृष्णग्रीवा। १९ मै४–°ग्रीवा। २० मै४–शुक्ला। २१ अ मै४–°समासान्त स्वर।

३४. हा–उभयकामाय। ३५ इ हा–प्रकाशमान्द्य°। ३६ आ–तदर्थमेव, इ ड–°दीप्त्यर्थम्। ३७–३७ आ–गलल्लम्बितस्तनान्विता, इ ड ड१ हो–मणिला गल्स्तनोपेता। ३८. आ क–श्वेतातिस्र। ३९. अ जो ना पा हा–वृत्ताध्य°। ३०

-ऽऽग्नेयी कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्यामेता एव देवताः स्वेन भागधेये-नोप धावति ता एवास्मिन् ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यंदिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेता बार्हस्पत्या त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव
५ तेजाꣳसि तान्येवा (५)ऽव रुन्द्धे

आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण ग्रीवाम् । सꣳहितामिति स हिताम् । ऐन्द्रीम् । श्वेताम् । बार्ह स्पत्याम् । एता । एव । देवता । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ता । एन । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । दधति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । वसन्ता । प्रात । आग्नेयाम् । कृष्णग्रीवीमिति कृष्ण ग्रीवीम् । एति । लभेत । ग्रीष्मे ।
१० मध्यदिने । सꣳहितामिति स हिताम् । ऐन्द्राम । शरदि । अपराह्ण इत्यपर-अह्ने । श्वेताम् । बार्ह स्पत्याम् । त्रीणि । वै । आदित्यस्य । तेजाꣳसि । वसन्ता । प्रात । ग्रीष्मे । मध्यदिने । शरदि । अपराह्ण इत्यपर अह्ने । यावन्ति । एव । तेजाꣳसि । तानि । एव (५) । अवेति । रुन्द्धे ।

वसन्तेति । "सुपा सुलुक्" (पा ७ १ ३९) [22]इति वसन्तशब्दात् सप्तम्या आकार । अत्र ब्रह्मचर्यादिक आरम्भप्रभृति यावत्संवत्सर यजमानस्य केचित् इच्छन्ति । उपाकरण वपाहोमो
१५ वा यथा प्रातरादिष्वेन [23] भवति । सर्वत्र मल्हा एव [24]गतिकम् [25] ।

वसन्ता इति ॥ उक्तस्य पशुत्रयस्य प्रयोगार्थं पशुविशेष [40]कालर्तुविशेष च विधत्ते– 'वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यन्दिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेता बार्हस्पत्या त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्द्धे ' इति ॥ प्रातरादिकाल[41]उपाकरण वपायागो वा यथा भवति तथा प्रारभेत । वसन्तर्तौ प्रात काले वर्षास्विव [42]मेघा
२० वरणाभावात् हेम न्तशिशिरयोरिव नीहारावरणाभावाच्च [43] आदित्यस्य तेज [44] स्पष्ट प्रकाशते । ग्रीष्मर्तौ मध्याह्ने प्रतापाधिक्यमानरपेक्षम् । शरदृतौ अपराह्णे सूर्यतेज सेव्य भवति । [45]प्रातर्मध्याह्नयो बालातपस्य तीक्ष्णातपस्य च न(ज्व)रादिहेतु त्वादसेव्यत्वम् । तान्येतानि यथोक्तानि आदित्यस्य त्रीणि तेजांसि प्रशस्तानि । [46]अत [47]तत्कालानुष्ठानेन प्रशस्ततेज संपत्तिर्भवति ॥

२२. मे–'इति' नास्ति । २३ त१ त२ मे–'एव' नास्ति । २४ ल–गतिक्रम (!)
२५ ०[ पाठोऽत्र त्रुटित आभाति । 'त्रीणि वा इति । गतम्' इति मै-मुद्रितपुस्तके संभावित पाठ ]।

४० अ भा क–कालर्तुविशेष हा–काल ऋतुविशेषम् । ४१ भा क–तीपमंधा° । ४२-४२ क–आदित्य । ४३. भा क– °मध्याह्नाया । ४४ द त१ हा१–तेज्यात् । ४५. अ पा–°कालानुमानन ।

संवत्सुरं पर्यालभ्यन्ते संवत्सुरो वै ब्रह्मवर्चुसस्य प्रदाता संवत्सुर एवास्मै ब्रह्मवर्चुसं प्र यच्छति ब्रह्मवर्चुस्येव भवति गर्भिणयो भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवास्मिन् दधाति सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन् (६) वाचं दधाति

सुन्त्सुरमिति स-वुत्सुरम्। पुर्यालेभ्यन्त इति परि-आलभ्यन्ते। सुन्त्सुर इति स-वुत्सुर। वै। ५
ब्रह्मवर्चुसस्येति ब्रह्म-वर्चुसस्य। प्रदातेति प्र-दाता। सुन्त्सुर इति स-वृत्सुरः। एव। अस्मै।
ब्रह्मवर्चुसमिति ब्रह्म-वर्चुसम्। प्रेति। यच्छति। ब्रह्मवर्चुसीति ब्रह्म-वर्चुसी। एव। भवति।
गर्भिणयः। भवन्ति। इन्द्रियम्। वै। गर्भः। इन्द्रियम्। एव। अस्मिन्। दधाति। सारस्वतीम्।
मेषीम्। एति। लभेत। यः। ईश्वरः। वाचः। वदितोः। सन्। वाचम्। न। वदेत्। वाक्।
वै। सरस्वती। सरस्वतीम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सा। एव। १०
अस्मिन् (६)। वाचम्। दधाति।

पर्यालभ्यन्त इति। परितः सर्वत्र सवत्सरे। यद्वा—सवत्सरसमाप्तेः प्राक्। गर्भिणय इति। वर्णव्यत्ययेन जसि ह्रस्वत्वम्॥

मेषीमिति॥ "जातेरस्त्रीविषयात्", (पा. ४.१.६३) इति ङीष्। य ईश्वर इत्यादि॥ वाचः वदितो. ता वाच वदितुमीश्वरः सपन्नसामग्रीकोऽपि वाच न विन्देत् वाग्मित्वम् न १५ लभेत। "ईश्वरे तोसुन्कसुनौ" (पा. ३.४.१३) इति तोसुन्। प्रतिदिते प्रवेक्ता। यद्वा—

संवत्सरमिति॥ व्रतोपक्रममारभ्य संवत्सरपर्यन्तं ब्रह्मचर्यादिनियमं विधत्ते—संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति' इति॥ एकस्मिन् संवत्सरे निरन्तरं नियमं परिगृह्य साहसेन पुरुषेण एतौ स्वस्वकाले आल- भ्येते। उपनीतस्य माणवकस्य संध्यावन्दनाद्याचारशिक्षा संवत्सरेण सम्यक् संपद्यत इति संवत्सरस्य २० ब्रह्मवर्चसप्रदातृत्वम्॥

गर्भिणय इति॥

मेवास्मिन् दधाति' इति।

सारस्वतीमिति॥ विद्वत्सभादौ वाग्मित्वकामिनः पशुत्वर विधत्ते—'सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति २५ सैवास्मिन् वाचं दधाति' [illegible] वाचो [illegible] इति। [illegible] वाचः वदितुं समर्थोऽपि सभाकंपादिना [illegible] वदेत् तदर्थं पशुः॥

२५. मै–'इति' नास्ति। २६. [illegible] नास्ति। २७. ओ [illegible] नास्ति।
२८. मै–वदेत्; ल–लभेत। २९. तं१ तं२–मै–वादित्वम्। ३०. पं२–लभते।

प्रवदिता वाचो भवत्यपन्नदती भवति तस्मान्मनुष्याः सर्वां वाचं वदन्त्याग्नेयं कृष्ण-ग्रीवमा लभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमं रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव

प्रवदितेति प्र-वदिता । वाच । भवति । अपन्नदती यपन्न-दती । भवति । तस्मात् । मनुष्या ।
५ सर्वाम् । वाचम् । वदन्ति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । ज्योगामयाविनमिति ज्योक-आमयाविनम् । अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । यस्य । ज्योक् । आमयति । अग्ने । एव । अस्य । शरीरम् । निष्क्रीणातीति नि –क्रीणाति । सोमात् । रसम् । उत । यदि । इतासुरितीत-असु । भवति । जीवति । एव ।

"वाक्प्रसारणसमर्थोऽपि निरोधाद्वाच वदितु निमेति स यजेत । "अपन्नदती "अनिपन्नदन्ता ।
१० " छन्दसि च " ( पा ५ ४ १४२ ) इति दद्भाव । तस्मादिति । "तस्मात् दन्तनिपत्तौ सर्वेषा वाचोऽप्रवृत्ते , दन्ताना वाक्प्रवृत्तिहेतुत्वाच्च ॥

आग्नेयमित्यादि ॥ बभ्रु "कपिलश्याम । "ज्योगामयावी दीर्घरोग । यस्येति । " रुजार्थानाम्° " (पा २ ३ ५४) इति षष्ठी । अग्नेरेवेत्यादि । अग्निना गृहीतमस्य "शरीरम् "अग्ने "निष्क्रीणाति । "सोमगृहीतरस "सोमात् निष्क्रीणातीत्येव । एव च कृते "यदि अपि गतासु "जीवति "एव ।

१५ अपन्नदतीति ॥ तस्मिन् पशौ कश्चिद्गुण विधत्ते— अपन्नदती भवति तस्मान्मनुष्या सर्वां वाच वदन्ति' इति । "अपन्नदती "दन्तपातरहिता । लोकेऽपि सदन्ता पुरुषा वर्णलोपमन्तरेण सम्पूर्णां "वाच "वदन्ति ॥

आग्नेयमिति ॥ ज्योगामयाविनस्य" पशुद्वयोपेत कर्म विधत्ते–' आग्नेय कृष्णग्रीवमा लभेत सौम्य बभ्रु ज्योगामयाव्यग्निं वा एतस्य शरीर गच्छति सोमं रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीर निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव' इति । बभ्रु पिङ्गल । शरीर प्राणस्य "स्थूलक सूक्ष्मो
२० "योऽयमस्य रस स "सोम प्राप्नोति । "सोऽयमस्यै व्याधिनाऽभिभूतायां" भुक्ताऽन्नरस शरीर न प्रविशति, किं तु सोमाधिष्ठितौषधिकार्ये व्याप्तेऽवतिष्ठते । अत "रसस्य सोमप्राप्ति " । "ततोऽग्नि सोमादिभ्यः मोचयति । "अत शरीरस्याग्निप्राप्ति ॥

३१ मै–°प्रमाण । ३२ मै८–भ्रष्या । ३३ मै८–कपि॰ । ३४ ई–सोमगृहीत रस', ए–°रस ।

२५ ४९ ई१–°नाशकणिता । ५० आ–°रोगग्रहितस्य । ५१ ई–अपेक्ष । ५२ ई१–म॰ऽप्र° । ५३–५३ भपा–भवतो नु शरीरमिति भिभात । ५४–५५ भ उ पा–तस्य सोमाति । ५६ ई१–स॰ऽप्रमन् त्वर्णादिके । ५८ इ आ ता द्रा–श्वयु ।

**सौम्यं बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः सोमो (७) वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजामाग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो**

सौम्यम् । बभ्रुम् । एति । लभेत । आग्नेयम् । कृष्णग्रीवमिति कृष्ण ग्रीवम् । प्रजाकाम इति प्रजा ५
काम । सोम (७) । वै । रेतोधा इति रेत -धा । अग्नि । प्रजानामिति प्र जानाम् ।
प्रजनयितेति प्र-जनयिता । सोम । एव । अस्मै । रेत । दधाति । अग्नि । प्रजामिति प्र-जाम् ।
प्रेति । जनयति । विन्दते । प्रजामिति प्र-जाम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति ।
लभेत । सौम्यम् । बभ्रुम् । य । ब्राह्मण । विद्याम् । अनूच्येत्यनु-उच्य । न । विरोचेतेति वि-रोचेत ।
यत् । आग्नेय । भवति । तेज । एव । अस्मिन् । तेन । दधाति । यत् । सौम्य । १०

सौम्यमित्यादि । गतम् ॥ विद्यामनूच्येति ॥ विद्यामर्जयित्वाऽपि तदनुरूप न [35]विरोचते । यद्वा–अनुवचनम् [36]अध्ययन, तत्कृत्वाऽपि यो न विरोचेत विद्याऽनुरूपा कीर्ति [37]न लभते [37]। ब्रह्मवर्चस तेनेति । अस्मिन् दधातीत्येव[38] । आग्नेयत्वात् तमोपघातहेतुभूत [39] । श्वेत इति । [40]ग्रीवाकाष्ण्यं मुक्त्वा[40] । ब्रह्मवर्चस ब्राह्मण्यम् । त्विषिर्दीप्ति ॥

सौम्यमिति ॥ प्रजाकामस्य द्विपशुक कर्म विधत्ते–' सौम्य बभ्रुमा लभेताऽऽग्नेय कृष्णग्रीव प्रजा- १५
काम सोमो वै रेतोधा अग्नि प्रजाना प्रजनयिता सोम एवास्मै रेतो दधात्यग्नि प्रजा प्र जनयति विन्दते प्रजाम् ' इति ॥

आग्नेयमिति ॥ विद्युपो [57]जनानुरागाय द्विपशुक कर्म विधत्ते–' आग्नेय कृष्णग्रीवमा लभेत सौम्य बभ्रु यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेन एवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चस तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति रुचमेवास्मिन् दधाति बभ्रु २०
सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधाति ' इति ॥ पूर्व सभाया मूकीभूतस्य कर्मोक्तम् । इदानी प्रवक्तृतोऽपि पारुष्यवचनेनाप्रस्तुतप्रसङ्गेन वा [58]सभास्थितेभ्यो रुच्यभावे सति रुचि कामयमानस्येदं कर्मेति विशेष । तेन आग्नेयत्वेन तेज प्रतिवादिभिरप्रधृष्यत्वम्[59] अस्मिन् यजमाने स्थापयति । तेन [60]सौम्यत्वेन ब्रह्मवर्चस [61]असङ्गोचितवेदशास्त्रवचनस्फूर्तिरूपमस्मिन् दधाति । [62]कृष्णग्रीवत्वगुणकस्य आग्नेयत्वेन बुद्धिमान्द्यरूप तम अस्मात् अप हन्ति । [63]ग्रीवाव्यतिरिक्तप्रदेशे श्वैत्येन रुचम् एव २५

३५ मै४–विरोचेत । ३६. मै४–प्रवचन, मैल–' अध्ययन ' नास्ति । ३७–३७ तर मै ल–आरभेत । ३८ ले–°त्येवम् । ३९. पर ल–°हेतु, मै४–तेजोपघातहेतु । ४०–४० मै–°र्ण्यमुक्त्वा, ले–ग्रीवाकार्ष्ण्यं इति मुक्त्वा ।

५७ हा–अनुरागाय । ५८ उ–सभास्तेभ्य । ५९ ङ–°प्रतिधृष्यत्वम् । ६० अ र त–सौम्येन । ६१ अ–प्रसङ्गेन च दित° उ पा–प्रसङ्गेन वादितेदं° । ६२ आ ड क जो र हा गो–कृष्णग्रीवगुणकस्य । ६३ आ–ग्रीवातिरिक्त° । ३०

ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति (८) रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधात्याग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि

५　गृह्णात्येकधा समावृङ्क्ते पुर एनं दधते ॥ २ ॥

[ लभेत यदुग वशैतामपि वशामादित्येभ्यः कामाय मल्हा आ लभेत तान्येव सैवास्मिन् सोमः श्वेतो भवति त्रिचत्वारिꣳशच्च । ]

ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । तेन । कृष्णग्रीव इति कृष्ण-ग्रीवः । आग्नेयः । भवति । तमः । एव । अस्मात् । अपेति । हन्ति । श्वेतः । भवति (८) । रुचम् । एव । अस्मिन् । दधाति । बभ्रुः । सौम्यः । भवति । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । एव । अस्मिन् । त्विषिम् । दधाति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । पुरोधायामिति पुरः-धायाम् । स्पर्धमानः । आग्नेयः । वै । ब्राह्मणः । सौम्यः । राजन्यः । अभितः । सौम्यम् । आग्नेयौ । भवतः । तेजसा । एव । ब्रह्मणा । उभयतः । राष्ट्रम् । परीति । गृह्णाति । एकधेत्येक-धा । समावृङ्क्त इति सम्-आवृङ्क्ते । पुरः । एनम् । दधते ॥ २ ॥

[illegible]

आग्नेयमित्यादि ॥ आग्नेययोर्मध्ये सौम्यम् । पुरोधायामिति । पुरोधानं प्राधान्यं पौरोहित्यम् [illegible] स्पर्धमानः अहमिव [illegible] भूयासमन्यो [illegible] इति ॥ अभितः सौम्यमिति । [illegible] ('अभित परितःसमया' [illegible]) इति द्वितीया [illegible]

[illegible] प्रमाणेवास्मिन् [illegible] दधाति [illegible] भवति [illegible]

२०　[illegible] भवति [illegible]

आग्नेयमिति ॥ पौरोहित्यस्य [illegible] विधत्ते [illegible] आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतः [illegible] राष्ट्रं परि गृह्णात्येकधा समावृङ्क्ते पुर एनं दधते इति ॥ ब्राह्मणस्याग्निना [illegible] [illegible] ॥ 'सोम राजन्' (तैसं १.८.१३) इत्यादिषु मन्त्रेषु सोमस्य

२५　राजन्यत्वेन [illegible] राजन्यः सौम्यः । सौम्यस्य अभितः पुरस्तादुपरिष्टाच्चाऽऽग्नेयानुष्ठाने [illegible] राष्ट्रम् उभयतः ब्रह्मणा तेजसैव परि गृह्णाति, येनकामयुक्तेन पौरोहित्यलक्षणेन [illegible]

[illegible] ४२-४४ [illegible] भूयात् [illegible]

[illegible] इत्यादिमन्त्रे [illegible] भाष्येण [illegible]

काम्याः पशवः]

तेजसेत्यादि। अग्निब्राह्मणाभ्यामुभयतोऽवस्थिताभ्या[43] मध्यस्थ [44-]राष्ट्रं विषय[-44] परि गृह्णाति सर्वतो गृह्णाति। [45]ततश्चैकधा अद्वितीय सम् आवृङ्क्ते समावर्जयति। ततश्च एनम् एव पुरः दधते [46]प्राधान्ये स्थापयन्ति प्रजाः ॥

इति द्वितीये प्रथमे द्वितीयोऽनुवाकः ॥

---

तेजसैव सर्वतो राष्ट्रं वशीकरोतीत्यर्थः। तदानीं प्रतिस्पर्धिनम् एकधा क्षणमात्रेण समावृङ्क्ते [67-]सम्यक् वर्जयति[-67]। ततो राजामात्यादयः एनं पुरः दधते [68-]पुरः अग्रे[-68] पौरोहित्यपदे[69] स्थापयन्ति ॥ ५

अत्र मीमांसा ॥ एकादशाध्यायस्य प्रथमपादे चिन्तितम्—

"कृष्णग्रीवद्वये तन्त्रं पृथग्वा, देवतैक्यतः।

तन्त्रं, सौम्यव्यवायेन कालभेदान् पृथग् भवेत्" ॥ (जैन्या ११·१·१४) इति ॥

काम्यपशुकाण्डे श्रूयते– "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः" (तैसं २·१·२) इति। अयमर्थः– ममैव पौरोहित्यमस्तु [70-]नान्यस्यैवेत्येवं स्पर्धोपेतो[-70] यथोक्तवर्णोपेतं पशुत्रयमालभेतेति। तत्राऽऽद्यन्तयोः कृष्णग्रीवयोः पश्वोर्देवतैक्यात्[71] तन्त्रेणानुष्ठानमिति चेत्। नैवम्। सौम्यपशुना व्यवधाने सति कालैक्याभावेन तन्त्रासंभवात्। [72]तस्मादावापः। १०

प्रथमाध्यायस्य चतुर्थे पादे चिन्तितम्—

"आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः। १५

द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे[73]" ॥ (जैन्या १·४·२९) इति ॥

इदमाम्नायते–"आग्नेयो वै ब्राह्मणः" (तैसं ५·६·४) इति। [74]अत्राप्यत्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न [75]ब्राह्मणस्य नामधेयं, नाप्यग्निदेवतारूपो गुणो विधीयते। 'आग्नेयं सूक्तम्, आग्नेयं हविः' इत्येवं [76]देवतातद्धितस्य सूक्तहविर्विषयत्वात्। न हि ब्राह्मणः सूक्तं नापि हविः। [77]अतः संबन्धवाचितद्धितान्तेनाऽऽग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि [78]ब्राह्मणे [79]नाग्निसंबन्धः [80]तथाऽप्यग्निसंबन्धो[81] मुखजन्यत्वगुणो ब्राह्मणे विद्यते। तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं कस्मिंश्चिदर्थवादे समाम्नायते– "प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त" (तैसं ७·१·१) इति। तस्मादाग्नेयशब्दः स्तावकः। एवमैन्द्रो राजन्यो वैश्यो वैश्वदेव इत्यादिषु द्रष्टव्यम् ॥ २०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥ २५

---

४३. तं२,मै,लं–°वसिताभ्याम् ४४–४४. मै४–स राजविषयं। ४५. मै,लं–'ततश्च' नास्ति। ४६. मै४–प्राधान्येन

---

६७–६७. अ,उ,क,जो,ना,पा,हा–सम्यग्जयति, इ–अभिभवति। ६८–६८. अ,आ,उ,क,ढ,ड१,पा,हो१–'पुरः अग्रे' नास्ति। ६९. उ,पा–पौरोहित्यत्वेन, अ–'पौरोहित्यपदे' नास्ति। ७०–७०. अ,उ,पा–राज्यस्येत्येवं प्रार्थयतः; उ–नान्यस्यैवेत्येवं स्पर्धोपेतः। ७१. अ–°दैवतैक्यत्वात्। ७२. जो,ना,हा–तस्मादप्यवादः। ७३. क–संस्तवः। ७४. अ,उ,जो,ना,पा,हा–°प्रसिद्धार्थशब्दभेदा°। ७५. ढ,हो१–ब्राह्मणशब्दस्य। ७६. अ,पा–देवताद्वयस्य, उ–देवताद्वय°। ७७. आ,हा–ततः। ७८. अ,उ,जो,ढ,ना,पा,हा,हो१–ब्राह्मण.। ७९. ड–°संबद्धः। ८०. ड१–तदाऽप्य° ८१. आ,ड१–°संबन्धो। ३०

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवतांया आऽलभत ततो वै स इमाꣳल्लोकानभ्यजयद्वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाꣳल्लोकानभि जयति विषम आ लभेत विषमा इव हीमे लोकाः समृद्ध्यै

देवासुरा इति देव-असुराः । एषु । लोकेषु । अस्पर्धन्त । सः । एतम् । विष्णुः । वामनम् ।
५ अपश्यत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । इमान् । लोकान् ।
अभीति । अजयत् । वैष्णवम् । वामनम् । एति । लभेत । स्पर्धमानः । विष्णुः । एव । भूत्वा ।
इमान् । लोकान् । अभीति । जयति । विषम इति वि-समे । एति । लभेत ।
विषमा इति वि-समाः । इव । हि । इमे । लोकाः । समृद्ध्या इति सम्-ऋद्ध्यै ।

देवासुरा इत्यादि ॥ स्पर्धा लोकविषय [1]परस्परमैश्वर्यासहनम् । वामनो ह्रस्वाङ्गः । [2]स्वायै
१० [3]देवतायै आत्मानमेव देवता कृत्वा । तस्यै वामनम् [4]आऽलभत । ततो वा इत्यादि । गतम् ।
स्पर्धमान इति । स्पर्धाविषयसिद्ध्यै । विषम इति । [5]निम्नोन्नतस्थले [6]देवयजनभूते । विषमा इवेति ।
भोक्तृभोग्यादिविलक्षण्याद्वैषम्य लोकानाम् ॥

[1]जलोदरगृहीतो यो वै [2] वाञ्छन्ति पशुप्रयाम्[2] ।
ब्रह्मवर्चसकामो यो यो विद्वान् यष्टुमक्षम ॥
१५ दीर्घरोगी मनाकाम सभारम्जनवर्जित ।
पौरोहित्ये स्पर्धमानश्चैतेषा पशव [1]श्रुता ॥

देवासुरा इति ॥ तानेतान् पशून् द्वितीयानुवाके विधाय तृतीयानुवाके जयादिहेतून् पशून् विधित्सन्नादौ लोकत्रयजयहेतु पशु विधातु प्रस्तौति– 'देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवतायै आऽलभत ततो वै स इमाँल्लोकानभ्यजयत्' इति ॥ [1]लोकेषु [2]विषमभूतेषु
२० [3] [4]वामन ह्रस्व पशु[5] [6]स्वायै विष्णुरूपायै [7]देवतायै[8] ॥

[1]वैष्णवमिति ॥ अथ विधत्ते–' [2]वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभि जयति' इति ॥ स्पर्धमान [3]गृहक्षेत्रादिविषये विवादवान् । विष्णुप्रियहविर्दानादस्योपचरित[4] विष्णुत्वम् ॥

विषम इति ॥ योऽनुक्रमपरम्पराया समदेशमपवदन्निघु विधत्ते– 'विषम आ लभेत विषमा इव हीमे लोका समृद्ध्यै' इति । पृथिव्यादिलोकानामुत्तरोत्तर विस्तृतत्वात् [1]भोगाधिक्याद्वा विषमत्वम् । सोऽयं
२५ विषमदेश [1]समृद्धौ कारणम् ॥

इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत संग्रामे ( १ ) संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ संग्राममिन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति ५

इन्द्राय । मन्युमत इति मन्यु मते । मनस्वते । ललामम् । प्राशृङ्गम् । एति । लभेत । संग्राम इति स-ग्रामे ( १ ) । संयत्त इति सं-यत्ते । । इन्द्रियेण । वै । मन्युना । मनसा । संग्राममिति सं ग्रामम् । जयति । इन्द्रम् । एव । मन्युमन्तमिति मन्यु-मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मिन् । इन्द्रियम् । मन्युम् । मनः । दधाति । जयति । तम् । संग्राममिति सं ग्रामम् । इन्द्राय । मरुत्वते । पृश्निसक्थमिति पृश्नि सक्थम् । एति । १०
लभेत । ग्रामकाम इति ग्राम कामः । इन्द्रम् । एव । मरुत्वन्तम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव । अस्मै । सजातानिति स-जातान् । प्रेति । यच्छति । ग्रामी । एव । भवति ।

इन्द्रायेत्यादि ॥ ललाम श्वेतपुण्ड्रलाञ्छितललाट । मत्वर्थीयो लुप्यते । प्राशृङ्गो [४]लम्बितशृङ्ग पुंगव [४] । 'प्राशृङ्गो गौ ' इति भरद्वाजवचनात् । इन्द्रियेणेत्यादि । [५]इन्द्रिय वीर्यम् । इन्द्रियादित्रय [५]संग्रामजयश्रीहेतु ॥ १५

मरुत्वत इति ॥ "तसौ मत्वर्थे " ( पा १ ४ १९ ) इति भत्वम् । पृश्निसक्थ श्वेतजानु, [६]श्वेतोरुरित्येके, '[६]श्वेतकटिप्रदेश इत्यपरे' । "बहुव्रीहौ सक्थ्यक्ष्णो " ( पा ५ ४ ११३ ) इति षच् ॥

इन्द्रायेति ॥ संग्रामार्थिन पशु विधत्ते–'इन्द्राय मन्युमते मनस्वते ललाम प्राशृङ्गमा लभेत संग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा संग्राम जयतीन्द्रमेव मन्युमन्त मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रिय मन्यु मनो दधाति जयति तꣳ संग्रामम्' इति ॥ [१०]मनस्वते धैर्यवते । २०
ललामशब्द [१०]श्वेतपुण्ड्रवाराङ्कितललाटोपेत वृते । प्राशृङ्गो मुख्य प्रत्यासन्नशृङ्ग पुंगव, 'प्राशृङ्ग [११]गौ ' इति भरद्वाजवचनात् । "प्राशृङ्गोऽवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान् पुरुषसृष्टो गोमृग इति गव्या " ( आपश्रौ १९ १६ १६ ) इत्यापस्तम्ववचनात् । [१]संयत्ते प्राप्ते सति । इन्द्रिय शारीर बलम् । मन्यु शत्रुविषय कोप । मन धैर्यम् ॥

इन्द्रायेति ॥ ग्रामार्थिन पशु विधत्ते– 'इन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति ' इति ॥ मरुद्भिर्युक्तो मरुत्वान् । पृश्निसक्थ श्वेतोरु । [१]सजातान् सहोत्पन्नान् भ्रात्रादीन् सहवासिनो भृत्यादींश्च ॥ २५

४–४ तर,मै ल–लम्बितशृङ्ग पिङ्गल मै४–लम्बि(?)शृङ्ग पुंगव । ५ मै४–°जयहेतु ।
६–६. ल–'इत्यपरे ' नास्ति तर,मै–'अपरे ' नास्ति, अ मै४–'श्वेत° ' नास्ति ।

१० पुण्ड्रलाञ्छित° । ११. इ–अनुप्रत्यासन्नशृङ्गो गौ । ३०

यदृ॑ष॒भस्तेनै॒(२)न्द्रो यत् पृश्नि॒स्तेन॑ मारु॒तः समृ॑द्ध्यै प॒श्चात् पृ॑श्निस॒क्थो भ॑वति प॒श्चाद॑न्ववसा॒यिनी॑मे॒वास्मै॒ विशं॑ करोति सौ॒म्यं ब॒भ्रुमा ल॑भे॒तान्न॑कामः सौ॒म्यं वा अन्न॒ꣳ सोम॑मे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॒ अन्नं॒ प्र य॑च्छत्यन्ना॒द ए॒व भ॑वति ब॒भ्रुर्भ॑वत्ये॒तद्वा अन्न॑स्य रू॒पꣳ समृ॑द्ध्यै

५ यत् । ऋ॒ष॒भः । तेन॑ (२) । ऐ॒न्द्रः । यत् । पृश्निः॑ । तेन॑ । मा॒रु॒तः । समृ॑द्ध्या॒ इति॒ सम् ऋ॒द्ध्यै॒ । प॒श्चात् । पृ॒श्नि॒स॒क्थ इति॑ पृश्नि स॒क्थः । भ॒व॒ति॒ । प॒श्चा॒द॒न्व॒व॒सा॒यिनी॒मिति॑ प॒श्चात् अ॒न्व॒व॒सा॒यिनी॑म् । ए॒व । अ॒स्मै॒ । विश॑म् । क॒रो॒ति॒ । सौ॒म्यम् । ब॒भ्रुम् । एति॑ । ल॒भे॒त॒ । अन्न॑काम॒ इत्यन्न॑-का॒मः । सौ॒म्यम् । वै । अन्न॑म् । सोम॑म् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । अ॒स्मै॒ । अन्न॑म् । प्रेति॑ । य॒च्छ॒ति॒ । अ॒न्ना॒द इ॑त्य॑न्न-अ॒दः । ए॒व । भ॒व॒ति॒ । ब॒भ्रुः ।
१० भ॒व॒ति॒ । ए॒तत् । वै । अन्न॑स्य । रू॒पम् । समृ॑द्ध्या॒ इति॒ सम् ऋ॒द्ध्यै॒ ।

यदृषभ इत्यादि । ऋषभस्य सेक्तृत्वादैन्द्रत्वम् । श्वेतस्य वायव्यत्वात् पृश्नेर्मारुतत्वम् । समृद्ध्या इति । सदृश सबन्ध समृद्धि । पश्चादिति । सक्थ्न पश्चाद्भागे पृश्नित्व यस्य स तथोक्त । [७]पश्चादन्ववसायिनी पश्चादनुसृत्यावस्थानशीला [७]विश [८]प्रजा [९]करोति ॥

सौम्यमित्यादि ॥ बभ्रु [१०]कपिलश्याम । [११]सौम्यम् अन्नम्, [१२]तस्यौषधीशत्वात् ॥

१५ यदिति ॥ युगवत्य सक्थिश्वैत्य च प्रशसति– 'यदृषभस्तेनैन्द्रो यत्पृश्निस्तेन मारुत समृद्ध्यै' इति ॥ [१३]सेक्तृत्वसामान्येनेन्द्रसबन्धित्व, "वायव्य श्वेतम्" (तैस २ १·१) इत्युक्तत्वात् पृश्निवर्णस्य मारुतत्वं तदुभय समृद्ध्यै भवति ॥

पश्चादिति ॥ पुरोवर्तिनोरस्या [१४]पृश्निसक्थित्व वारयितु विधत्ते– 'पश्चात् पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विश करोति' इति ॥ यजमानो ग्रामस्वामी प्रथम यत्कार्यं यथाऽध्यवस्यति
२० तद्ग्रामनिवासिनी प्रजा पश्चात् यजमानानुसारेणैव तत्कार्यमध्यवस्यति, न [illegible] प्रातिकूल्य चिन्तयतीति पश्चादन्ववसायिनी ॥

सौम्यमिति ॥ अन्नार्थिन पशु विधत्ते– 'सौम्य बभ्रुमा लभेतान्नकाम सौम्य वा अन्न सोममेव स्वेन भागधेयेनोप धावति स एवास्मा अन्न [illegible] यच्छत्यन्नाद एव भवति' इति । "सोमो वा ओषधीनां राजा" (तैब्रा ३ ९ १७) इति श्रुतत्वादन्नस्य सौम्यत्वम् । [१४]अन्नाद [१५]व्याधिराहित्येन
२५ दीप्ताग्नि ॥

बभ्रुरिति ॥ पशुवर्णं प्रशसति– 'बभ्रुर्भवत्येतद्वा अन्नस्य रूप समृद्ध्यै' इति । विदलित पक्वान्नस्य प्रियङ्ग्वादेर्वा [१६]रूप पिङ्गलम् ॥

७. [पुर्दीशन पाठ ।], पै-सरय (?), पै-गत्ये (?) । ८. ल–प्रजा बभ्रुम् । ९. अभै–र्षित रसात । १०. पै–तस्योदयधीत्त्वात्, प र ल तस्योभयधीत्त्वात् ।
३० १२. ड–°साम्यीद्र° । १३ ड–पृश्निसक्थकाम् । १४. ट१–°राहित्ये ।

सौम्यं बभ्रुमा लभेत यमलꣳ (३) राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्यं प्र यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छतीन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा (४) लभेत यः पाप्मना गृहीतः स्यात् पाप्मा वा ५

सौम्यम् । बभ्रुम् । एति । लभेत । यम् । अलम् (३)। राज्याय । सन्तम् । राज्यम् । न । उपनमेदित्युप नमेत् । सौम्यम् । वै । राज्यम् । सोमम् । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । [illegible] । एव । अस्मै । राज्यम् । प्रेति । यच्छति । उपेति । एनम् । राज्यम् । नमति । बभ्रुः । भवति । एतत् । वै । सोमस्य । रूपम् । समृद्ध्या इति सम् ऋद्ध्यै । इन्द्राय । वृत्रतुर इति वृत्र तुरे । ललामम् । प्राशृङ्गम् । एति । लभेत । गतश्रीरिति गत - श्रीः । प्रतिष्ठाकाम इति प्रतिष्ठा-काम । पाप्मानम् । एव । वृत्रम् । तीर्त्वा । प्रतिष्ठामिति प्रति स्थाम् । गच्छति । इन्द्राय । अभिमातिघ्न इत्यभिमाति घ्ने । ललामम् । प्राशृङ्गम् । एति (४)। लभेत । यः । पाप्मना । १०
गृहीत । स्यात् । पाप्मा । वै ।

यमिति ॥ राज्य प्राप्तु योग्यमपि [११] [४]राज्य राजन्य वा [४]य [४]न [४]उप नमेत् [११] नोपगच्छेत् । राज्ञः कर्म राज्यम् । [१२]पुरोहितादित्वात् (पा ५ १ १२८) यक्[१२] ॥ १५

वृत्रतुर इति ॥ [१३]वृत्रस्य वा पापादेर्वा[१३] हिंसिता वृत्रतुर् । तुर्वी हिंसायाम्, क्विप् । ललाम प्राशृङ्गमिति व्याख्यातम् । [४]गतश्री । केचिदाहुः शुश्रुवान् ग्रामणी राजन्यो वेति (द्र. बौश्रौ १७ ४९ )। पाप्मानमिति । येन प्रतिष्ठा निरुध्यते । [४]वृत्र वारकम् ॥

सौम्यमिति ॥ राज्यप्राप्तिकामिन पशु विधत्ते– 'सौम्य बभ्रुमा लभेत यमलꣳ राज्याय सन्तꣳ राज्य नोपनमेत् सौम्य वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्य प्र यच्छत्युपैनꣳ राज्य नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्यै ' इति । राज्ञो ज्येष्ठपुत्रत्वाच्छौर्यादिगुणसपन्नत्वाच्च[१५] [१]राज्याय [१]अल [१]सन्त सम्यग्योग्य[१६] सन्त[१७] [१]य पुरुष प्रति [१]राज्य [१]न प्राप्नुयात् तदर्थाय पशु । "सोमोऽस्माक ब्राह्मणानाꣳ राजा" (तैस १ ८ १०, १२ ) इति श्रुतत्वाद्राज्य सौम्यम् । चन्द्रमण्डलस्य सुवर्णवर्णत्वात् बभ्रुत्व सोमस्य रूपम् ॥ २०

इन्द्रायेति ॥ बभ्रुभावेन भ्रष्टश्रिय प्रतिष्ठार्थ पशु विधत्ते– 'इन्द्राय वृत्रतुरे ललाम प्राशृङ्गमा लभेत गतश्री प्रतिष्ठाकाम पाप्मानमेव वृत्र तीर्त्वा प्रतिष्ठा गच्छति' इति ॥ वृत्रतुर्वैरिहिंसक । [१]पाप्मानम् [१]एव नरकप्रदपापवद्बाधकमेव [१]वृत्र वैरिणम् ॥ २५

११-११ मै४–राष्ट्राधिपत्य वा य नोपनमेत् । १२-१२ अ ल–पुरोहितत्वादित्यादिकम् ।
१३-१३ अ तंर मै४–वृत्रस्य पापादे ।

१५ आ–'च' नास्ति । १६ ड ड१ होर–सम्यक् स्यात । १७. ड ड१–'सन्त' नास्ति । ३०

अभिमा॑तिरिन्द्र॑मे॒वाभि॑माति॒हन॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॑त् पा॒प्मान॑-
म॒भिमा॑तिं॒ प्र णु॑दत॒ इन्द्रा॑य व॒ज्रिणे॑ ल॒लाम॑ प्राशृ॒ङ्गमा ल॑भेत॒ यमल॒ꣳ रा॒ज्याय॒ सन्त॒ꣳ
रा॒ज्यं नोप॒नमे॒दिन्द्र॑मे॒व व॒ज्रिण॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धाव॒ति स ए॒वास्मै॒ वज्रं॒ प्र
य॑च्छ॒ति स ए॑नं॒ (५) वज्रो॒ भूत्या॑ इन्द्ध॒ उपै॑न॒ꣳ रा॒ज्यं न॑मति ल॒लामः॑ प्राशृ॒ङ्गो
५ भ॑वत्ये॒तद्वै वज्र॑स्य रू॒पꣳ समृ॑द्ध्यै ॥ ३ ॥

[ सु॒ग्रामे तेनाल॑मभिमाति॒घ्ने ल॒लामं॑ प्राशृ॒ङ्गमे॒नं॑ पञ्च॑दश च । ]

अ॒भिमा॑ति॒रित्य॒भि मा॒ति । इन्द्र॑म् । ए॒व । अ॒भि॒मा॒ति॒हन॒मित्य॑भिमाति ह॒न॑म् । स्वेन॑ । भा॒ग॒धेये॒नेति॑
भाग-धेये॑न । उपेति॑ । धा॒व॒ति । स । ए॒व । अ॒स्मा॒त् । पा॒प्मान॑म् । अ॒भिमा॑ति॒मित्य॒भि मा॒ति॒म् ।
प्रेति॑ । नु॒द॒ते॒ । इन्द्रा॑य । व॒ज्रिणे॑ । ल॒लाम॑म् । प्रा॒शृ॒ङ्गम् । एति॑ । ल॒भे॒त॒ । यम् । अल॑म् ।
१० रा॒ज्याय॑ । सन्त॑म् । रा॒ज्यम् । न । उ॒प॒नमे॒दित्यु॑प न॒मे॑त् । इन्द्र॑म् । ए॒व । व॒ज्रिण॑म् । स्वेन॑ ।
भा॒ग॒धेये॒नेति॑ भाग धेये॑न । उपेति॑ । धा॒व॒ति । स । ए॒व । अ॒स्मै॒ । वज्र॑म् । प्रेति॑ । य॒च्छ॒ति॒ ।
स । एनम् (५) । वज्रः॑ । भूत्यै॑ । इ॒न्द्धे॒ । उपेति॑ । ए॒न॒म् । रा॒ज्यम् । न॒म॒ति॒ । ल॒लाम॑ । प्रा॒शृ॒ङ्ग ।
भ॒व॒ति॒ । ए॒तत् । वै । वज्र॑स्य । रू॒पम् । समृ॑द्ध्या॒ इति॒ सम् ऋ॑द्ध्यै ॥ ३ ॥

[ मैस २ ७ ३, ४, ८, ९ कास १३ ३-४ ]

१५ अभिमातिघ्न इति ॥ अभिमाति पाप्मा, [१४]तस्य हन्त्रे । क्विप् (पा ३ २ ७६) ।
उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम । गतमन्यत् ॥ इन्द्धे इति । राज्यप्राप्तियोग्यां दीप्तिं करोति
इति । त्रि इन्धी दीप्तौ । "श्नान्नलोप" (पा ६ ४ २३) ॥

इति द्वितीये प्रथमे तृतीयोऽनुवाकः ॥

इन्द्रायेति ॥ पापक्षयार्थिनः पशुं विधत्ते– 'इन्द्रायाभिमातिघ्ने ललाम प्राशृङ्गमा लभेत य
२० पाप्मना गृहीतः स्यात् पाप्मा वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति स एवास्मात्
पाप्मानमभिमातिं प्र णुदते' इति ॥ [१]पाप्मना शोकधातुपपातकादिना ॥

इन्द्रायेति ॥ राज्यार्थिनः पश्वन्तरं विधत्ते– 'इन्द्राय वज्रिणे ललाम प्राशृङ्गमा लभेत यमलꣳ
राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति
स एनं वज्रो भूत्या इन्द्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै' इति ॥
२५ [१]यमं वज्रवच्छरस्यमर्धमायुधम् । [१]स चाऽऽयुधविशेषो वज्रस्य [१८-१]भूत्यै [१]इन्द्धे-[१८] यजमानं वैरिसंतापाय
प्रदीप्तं करोति । आयुधस्य वज्रस्य तीक्ष्णाग्रत्वात् तीक्ष्णधारायुक्तवज्ररूपत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१४ मैसं२ ७–मन्त्रा ।

काम्या पशवः ]

असावा॑दि॒त्यो न व्य॑रोचत॒ तस्मै॑ दे॒वाः प्राय॑श्चित्तिमैच्छ॒न् तस्मा॑ ए॒तां द॑शर्ष॒भामाऽल॑भन्त॒ तयै॒वास्मि॒न् रुच॑मदधु॒र्यो ब्र॑ह्मवर्च॒सका॑मः स्या॒त् तस्मा॑ ए॒तां द॑शर्ष॒भामा ल॑भेता॒मुमे॒वाऽऽदि॒त्यꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मि॑न् ब्रह्मवर्च॒सं द॑धाति ब्रह्मवर्च॒स्ये॑व भ॑वति

अ॒सौ। आ॒दि॒त्यः। न। वीति॑। अ॒रो॒च॒त॒। तस्मै॑। दे॒वाः। प्राय॑श्चित्तिम्। ऐ॒च्छ॒न्। तस्मै॑। ५
ए॒ताम्। द॒श॒र्ष॒भामिति॑ द॒श-ऋ॒ष॒भाम्। एति॑। अ॒ल॒भ॒न्त॒। तया॑। ए॒व। अ॒स्मि॒न्। रुच॑म्।
अ॒द॒धुः। यः। ब्र॒ह्म॒व॒र्च॒सका॑म॒ इति॑ ब्रह्मवर्च॒स-का॒मः। स्या॒त्। तस्मै॑। ए॒ताम्। द॒श॒र्ष॒भामिति॑
द॒श-ऋ॒ष॒भाम्। एति॑। ल॒भे॒त॒। अ॒मुम्। ए॒व। आ॒दि॒त्यम्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भाग-धेये॑न। उपेति॑।
धा॒व॒ति॒। सः। ए॒व। अ॒स्मि॒न्। ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम्। द॒धा॒ति॒।
ब्र॒ह्म॒व॒र्च॒सीति॑ ब्रह्म व॒र्च॒सी। ए॒व। भ॒व॒ति॒। १०

असावादित्य इत्यादि॥ दशानामृषभाणां समाहारो दशर्षभा। "[1]अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते" (द्र पाभा २ ४ ३० वा २) इति [2]त्रिफलादिवत् (द्र पा ४ १ ६४ वा ३) अजादित्वात्[2] (पा ४ १ ४) "द्विगोः" (पा ४ १ २१) इति ङीब्भावः। "इगन्तकाल" (पा ६ २ २९) इति पूर्वपदप्रकृतिस्वरत्वम् अनिगन्तेऽपि व्यत्ययेन प्रवर्तते। बहुव्रीहिर्वा। समष्टिर्वाच्या। दशर्षभेति कर्मनाम, जातिरिति केचित्॥ १५

[1]स्पर्धाकामो युद्धकामो ग्रामकामोऽन्नकामवान्।
राज्यकाम प्रतिष्ठार्थी च पापक्षयमिच्छति॥
राज्यार्थी च पुमांसो ये तेषां पशव ईरिताः॥

असाविति॥ [2]तृतीयेऽनुवाके जयकामादीनां पशून् विधाय चतुर्थे [3]ब्रह्मवर्चसकामादीनां [4]पशून् विधित्सुरादौ ब्रह्मवर्चसकामाय विधातुं प्रस्तौति— 'असावादित्यो न व्यरोचत तस्मै देवाः २० प्रायश्चित्तिमैच्छन् तस्मा एतां दशर्षभामाऽलभन्त तयैवास्मिन् रुचमदधुः' इति। [5]पूर्वमेवोक्तोऽप्यादित्यस्य दीप्त्यभावः कालविशेषणात्रापि प्रतीकारान्तरं [6]दर्शयितुं पुनरुच्यते। दशानामृषभाणां [7]समाहारो दशर्षभा। [8]कर्मनामधेयमिति केचित्, तत्तु [9]नात्यन्तयुक्तिसहम्। 'आऽलभन्त' [10]इत्यस्यानन्वयप्रसङ्गात्॥

य इति॥ विधत्ते— 'यो ब्रह्मवर्चसकामः स्यात् तस्मा एतां दशर्षभामा लभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति' इति। 'अमुमेवाऽऽ २५ दित्यम्' इत्यर्थवादे श्रुतत्वादादित्योऽस्मिन् कर्मणि देवता॥

१ मै-आकारा°।[2] २-२ मै४-त्रिफलादित्वात्। ३ ल-'इति' नास्ति।

१ क ड१ स्पर्धमान। २ आ-तृतीयानु°। ३ ड हो१-°कामार्थिना। ४ ड१-'पशून्' नास्ति। ५ हो१-पूर्वमुक्तरीत्याप्या° ड१-पूर्वमुक्तो°। ६ अ उ पा-'दर्शयितुम्' नास्ति। ७ इ क जो ना हा-समाहारोऽस्यामिति। ८ ड ड१-कर्मनामेति। ९ ड ड१-नात्यन्त युक्ति°। १० इ क-त्यस्यानन्वयात्। ३०

वसन्ता प्रातस्त्रीन् ललामाना लभेत ग्रीष्मे मध्यंदिने (१) त्रीञ्छितिपृष्ठाञ्छरद्य-
पराह्णे त्रीञ्छितिवारान् त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने
शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्द्धे त्र्यस्त्रय
आ लभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति

५ वसन्ता। प्रात। त्रीन्। ललामान्। एति। लभेत। ग्रीष्मे। मध्यंदिने (१)। त्रीन्। शितिपृष्ठानिति शिति-पृष्ठान्। शरदि। अपराह्ण इत्यपर अह्ने। त्रीन्। शितिवारानिति शिति-वारान्। त्रीणि। वै। आदित्यस्य। तेजाꣳसि। वसन्ता। प्रात। ग्रीष्मे। मध्यंदिने। शरदि। अपराह्ण इत्यपर-अह्ने। यावन्ति। एव। तेजाꣳसि। तानि। एव। अवेति। रुन्द्धे। त्र्यस्त्रय इति त्र्य -त्रय। एति। लभ्यन्ते। अभिपूर्वमित्यभि-पूर्वम्। एव। अस्मिन्। तेज। दधाति।

१० वसन्तेति ॥ पूर्ववत् सप्तम्या डादेश (पा ७ १ ३९)। वसन्ते चतुर्दश्या प्रक्रम। प्रात काले उपाकरण जपाहोम इत्युभय यथा स्यात्तथोपक्रम। ग्रीष्मशरदोर्मध्याह्नापराह्णयोरेवोपक्रम। सर्वत्र सवत्सरे ब्रह्मचर्यादि यजमानस्य केचिदिच्छन्ति[४]। ललामा उक्ता (द्र तैस २ १ ३)। [५]शितिपृष्ठा श्वेतपृष्ठा [५]शितिवारा श्वेतवाला। उभयत्रापि "शितेर्नित्याबह्वच्" (पा ६ २ १३८) इत्युत्तरपदप्रकृतिस्वरत्वम्। अभिपूर्वमिति। अनुक्रमेण त्रिभि पशुभि त्रीणि तेजासि [५]अस्मिन्
१५ [५]दधाति।

वसन्तेति ॥ तत्रैव [११]कालविशेषसहित पशुगुणविशेषं[११] विधत्ते–' वसन्ता प्रातस्त्रीन् ललामाना लभेत ग्रीष्मे मध्यंदिने त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान्' इति। शितिपृष्ठा श्वेतपृष्ठा। [११]शितिवारा श्वेतवाला[११] ॥

त्रीणीति ॥ पूर्ववत् कालविशेष प्रशसति– ' त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे
२० मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्द्धे इति ॥

त्र्यस्त्रय इति ॥ विहितानेव त्रित्वोपेतान् सर्वान् प्रशसति–' त्र्यस्त्रय आ लभ्यन्तेऽभिपूर्वमेवाऽस्मिन् तेजो दधाति' इति। पूर्वं वसन्ते यथा त्रित्वोपेतास्तथा ग्रीष्मशरदोरपि त्रित्वोपेतत्वे सति पूर्वस्मादस्य सपद्यते। [११]तद्वदस्मिन् यजमानेऽपि [१]अभिपूर्वं पूर्वपूर्वस्मादस्येनैव[११] [११]उत्तरोत्तरकालेऽपि [१]तेज त्रिपद्यते, न तु कदाचिदपि तेजो हीयत इत्यर्थ ॥

२५ ४. ठ–'इच्छन्ति' नास्ति। ५–५. मै–'श्वेतपृष्ठा' नास्ति, ल–'शितिपृष्ठा' नास्ति।

संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति संवत्सरस्य परस्तात् प्राजापत्यं कद्रु(२)मा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति यदि बिभीयाद्दुश्चर्मा भविष्यामीति

संवत्सरमिति सम्-वत्सरम् । पर्यालभ्यन्त इति परि आलभ्यन्ते । संवत्सर इति सम्-वत्सर । वै । ब्रह्मवर्चसस्येति ब्रह्म वर्चसस्य । प्रदातेति प्र-दाता । संवत्सर इति सम्-वत्सर । एव । अस्मै । ५
ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । प्रेति । यच्छति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । संवत्सरस्येति सम्-वत्सरस्य । परस्तात् । प्राजापत्यमिति प्राजा-पत्यम् । कद्रुम् ( २ ) । एति । लभेत । प्रजापतिरिति प्रजा-पतिः । सर्वाः । देवताः । देवतासु । एव । प्रतीति । तिष्ठति । यदि । बिभीयात् । दुश्चर्मेति दुः-चर्मा । भविष्यामि । इति ।

संवत्सरमित्यादि । गतम् ( द्र० तस २ १ २ ) ॥ १०

संवत्सरस्येति ॥ यस्मिन्नारभ्यते पर्वणि दर्शपूर्णमासे ततः प्रभृति [6]द्वादशसु द्वादशसु[6] पौर्णमासीषु द्वादशस्वमावास्यासु [7]चातीतासु त्रयोदशे पर्वणि सकल्प । [8]कद्रु पक्वबदरवर्णम्[8] ॥

यदीत्यादि ॥ दुश्चर्मा कुष्ठी । "परादिश्छन्दसि" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम् । कुष्ठादित्वग्दोषो मे भविष्यतीति यदि [9]कुतश्चित् लिङ्गात् बिभीयादिति । त्वयेति । त्वया[10] देवतया पशुभिः च सहकारिभिः त्वचं शोभनां करोति ॥ १५

संवत्सरमिति ॥ श्यामकृष्णग्रीवादिद्वित्व [15]ब्रह्मचर्यादिनियमकाले विधत्ते – 'संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति' इति ॥

संवत्सरस्येति ॥ दशमस्य पशोः [16]देवताकालवर्णविशेषान् विधत्ते – 'संवत्सरस्य परस्तात् प्राजापत्यं कद्रुमा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति' इति । कद्रु पिङ्गलः । प्रजापतेः उत्पादकत्वेन [17]सर्वदेवता[त्म]कत्वम् ॥ २०

यदीति ॥ त्वग्दोषनिवारणाय पशुं विधत्ते – 'यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं श्याममा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति' ॥

६–६ मै४–दशसु तर–द्वादशसु । ७ अ मै४–च व्यतीतासु । ८–८ अ पर ल–कद्रु पक्वबदरवर्णं, मै४–कद्रु बदरवर्णं, तर–कद्रु पक्वबदरवर्णम् । ९ मै–ल–कयचित् । १० मै–'त्वया' नास्ति । २५

१५ इ–ब्रह्मचर्यादिकाल । १६ इ हो१–देवताकर्मनिर्णयवर्ण° । १७ इ ङ१ हो१–सर्वदेवतात्वम् ।

सोमापौष्णꣳ श्यामेमा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य (३) यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन
५ उक्षवशौ निरमिमीत

सोमापौष्णमिति सोमा पौष्णम्। श्यामम्। एति। लभेत। सौम्य। व। देवतया। पुरुष। पौष्णा। पशव। स्वया। एव। अस्म। देवतया। पशुभिरिति पशु भि। त्वचम्। करोति। न। दुश्चर्मेति दु चर्मा। भवति। देवा। च। व। यम। च। अस्मिन्। लोके। अस्पर्धन्त। स। यम। देवानाम्। इन्द्रियम्। वीर्यम्। अयुवत। तत्। यमस्य (३)। यमत्वमिति यम त्वम्।
१० ते। देवा। अमन्यन्त। यम। व। इदम्। अभूत्। यत्। वयम्। स्म। इति। ते। प्रजापतिमिति प्रजा पतिम्। उपेति। अधावन्। स। एतौ। प्रजापतिरिति प्रजा पति। आत्मन। उक्षवशावित्युक्ष वशौ। निरिति। अमिमीत।

देवाश्चेत्यादि ॥ [v]अस्मिन् [v]लोके [11]एतल्लोकनिमित्तम [v]अस्पर्धन्त अस्माकमेवाय लोक इति [v]देवा, ममैवायमिति [v]यम। [11]स इत्यादि। देवानाम् [13v]इन्द्रिय [v]वीर्यं च [v]अयुवत देवेभ्य
१५ पृथक्कृतवान् अपहृतवान्। व्यत्ययेन शप् [पा ३ १ ८५], आत्मनेपद च। तदिति। यवनाद्यम। यौते पचाद्यचि (पा ३ १ १३४) अन्त्यनिकारश्छान्दस। यमो वा इति। [v]यम [v]वा [v]इद विश्वम् [v]अभूत् यमेश्वरमभूत [v]यत [v]वय [v]स्म यदस्मदधीन पूर्वमासीत्। त इति। तथा मन्यमाना देवा [v]प्रजापतिम उपसप्राप्ता, इय स्म अत्र प्रतिकर्तुमर्हसीति [v]स च [v]आत्मन शरीरात् [v]उक्षवशौ [v]नि [v]अमिमीत निर्माय दत्तवान्। उक्षा च वशा चोक्षवशा, व्यत्ययेन पूर्वनिपातिता।
२० उक्षा सेक्ता, वशा वन्ध्या।

दुश्चर्मा भवति' इति। कण्डूत्यादिविशिष्टत्वेन "भाविकुष्ठादिरोगमनुमाय भीतस्याय" पश। पुरुषस्य सामदेवतात्वस्य पशूना पौष्णत्व च" सोमापूषविषयाज्याभ्याग्याभ्यामप्यद्धन दर्शितम्" ॥

देवा इति ॥ भ्रातृव्यवतो द्विपशुक कर्म विधातु प्रस्तौति– ' देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रिय वीर्यमयुवत तद्यमस्य यमत्व ते देवा अमन्यन्त यमो वा इदमभूद्यद्वय स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणी वशामालभन्तैन्द्रमुक्षाण

२५ [11] मै०–लोक°। [12] मै०–यम। [13] क–इन्द्रिय च।
[18-18] अ आ उ क को ह ट१ मा पा हा हो१–भाविकुष्ठरोग°, अ ड पा–भाविकुष्ठरोगमनुमापयति त्यायं। *[ 'सम्भाण्ड्रता ज्ञाता स्त्रीणा' (तैसं १ ८ २२) इत्यत्र सायणीय भाष्य द्रष्टव्यम्।]
[19] अ इ उ जा गा पा हा– 'च' नास्ति।

ते देवा वैष्णावरुणीं वशामालभन्तेन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं (४) वशामा लभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन् त वृत्रो हतः षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्योऽभवन् ५

ते। देवाः। वैष्णावरुणीमिति वैष्णा वरुणाम्। वशाम्। एति। अलभन्त। ऐन्द्रम्। उक्षाणम्। तम्। वरुणेन। एव। ग्राहयित्वा। विष्णुना। यज्ञेन। प्रेति। अनुदन्त। ऐन्द्रेण। एव। अस्य। इन्द्रियम्। अवृञ्जत। यः। भ्रातृव्यवानिति भ्रातृव्य वान्। स्यात्। सः। स्पर्धमानः। वैष्णावरुणीमिति वैष्णा वरुणाम् (४)। वशाम्। एति। लभेत। ऐन्द्रम्। उक्षाणम्। वरुणेन। एव। भ्रातृव्यम्। ग्राहयित्वा। विष्णुना। यज्ञेन। प्रेति। नुदते। ऐन्द्रेण। एव। अस्य। इन्द्रियम्। १० वृङ्क्ते। भवति। आत्मना। परेति। अस्य। भ्रातृव्यः। भवति। इन्द्रः। वृत्रम्। अहन्। तम्। वृत्रः। हतः। षोडशभिरिति षोडश भिः। भोगैः। असिनात्। तस्य। वृत्रस्य। शीर्षतः। गावः। उदिति। आयन्। ताः। वैदेह्यः। अभवन्।

ते इत्यादि। गतम्॥

इन्द्रो वृत्रमहन्नित्यादि॥ [१]षोडशभिः [२]भोगैः [३]शरीरदेशैः इन्द्रम् [४]असिनात् अबध्नात्। १५ षिञ् बन्धने। [५]वैदेह्यः गोविशेषाः। केचिदाहुः–विदेहाः [६]एव वैदेहाः अशरीरा गावः [७]अभवन्।

तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत' इति। [१]असुरात् देवेभ्यः पृथक् कृतवान्। अतो यजमानोऽप्यत्र वर्णयतव्येन यम सपत्न। [२०]इन्द्रियगते वीर्येऽपगते सति [२०] [३]देवाः परस्परमिदमब्रुवन्–पूर्वं [४]यत् सूर्यादधिपत्य प्राप्य [५]यम [६]स्म तत् [७]इद प्राप्य [८]यम एव [९]अभूत्। उक्षा सचनसमथः पुंसो पादक, वशा वन्ध्या, लिङ्गसत्ययोः दृष्टत्वा। [१]तं यम वरुणपाशेन [२]एव [३]ग्राहयित्वा २० यज्ञरूपेण [४]विष्णुना निष्कासितवन्त। इन्द्रप्रसादेन [५]अस्य यमस्य वीर्यं नाशितवन्त।

य इति॥ विधत्ते– 'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं वशामा लभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति। [१]आत्मना [२२]स्वेन रूपेण यजमानो विजयी [३]भवति। [४]अस्य [५]भ्रातृव्य [६]परा [७]भवति॥ २५

इन्द्र इति॥ [२२]पापविमुक्तिसाधनस्य द्विपात्कर्म विधातुं प्रस्तौति– 'इन्द्रो वृत्रमहन् स वृत्रो हतः षोडशभिर्भोगैरसिनात् तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्योऽभवन् तासामृषभो

१४ भैर–शरीरे। १५ तर–गाव।

२०–२० ना–न्द्रियवीर्ये एव हृत सति। २१ अ उ जा ना पा हा–आत्मत्वेन।

२२ अ पा–रतिविमुक्ति°, उ–टति विमुक्ति°।

तासामृपभो जघनेऽनूदैत् तमिन्द्रो(५)ऽचायत् सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेयं कृष्णग्रीवमाऽलभतैन्द्रमृपभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त

तासाम्। ऋषभ । जघने। अनु। उदिति। ऐत्। तम्। इन्द्र (५)। अचायत्। स।
५ अमन्यत। य । वै। इमम्। आलभेतेत्या लभेत। मुच्येत। अस्मात्। पाप्मन । इति। स आग्नेयम्। कृष्णग्रीवमिति कृष्ण-ग्रीवम्। एति। अलभत। ऐन्द्रम्। ऋषभम्। तस्य। अग्नि एव। स्वेन। भागधेयेनेति भाग धेयेन। उपसृत इत्युप-सृत । षोडशधेति षोडश धा। वृत्रस्य भोगान्। अपीति। अदहत्। ऐन्द्रेण। इन्द्रियम्। आमन्। अधत्त।

“उदात्तस्वरितयो°” (पा ८ २ ४) इति निभक्ति स्वर्यते। अथ तासा गवा जघने पश्चात्
१० ऋषभ अनु उत् ऐत् अनूद्गत, तम् इन्द्र श्रुतवान्। अस्मादिति। सर्वलोकाप्रसिद्धात्, न तु प्राकृतात्, अत एवान्वादेशाभावान्निघाताभाव । “ऊडिदम्°” (पा ६ १ १७१) इति निभक्तेरुदात्तत्वम्। अथैव जानन्निन्द्र स्वय तानत् आग्नेय कृष्णग्रीवम् आ अलभत ऐन्द्रम् ऋषभम्। पृथक् स्वेन भागधेयेन उपसृत अग्नि अस्य इन्द्रस्य बाधकान् वृत्रभोगान् षोडशधा स्थितान् अपि अदहत् यथाकाममदहत्। यद्वा—षोडशधा स्थितान् सर्वानप्यदहत्
१५ ऐन्द्रेण आत्मनि इन्द्रियम् अधत्त इन्द्र ।

जघनेऽनूदैत् तमिन्द्रोऽचायत् सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेय कृष्णग्रीवमाऽलभतैन्द्रमृपभ तस्याग्निरेव स्वेन भागधेयेनोपसृत षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त' इति। तम् इन्द्र भोगै शरीरै असितात् अवरुद्धात्, वृत्रादुत्पन्नानि क्रोधाविष्टानि षोडश शरीराणि परितो वेष्टयित्वा स्थितानि, स च वृत्र सर्पाकारै तै शरीरै तमिन्द्र रज्जुभिरिव
२० बबन्ध। तत तस्य वृत्रस्य शीर्षत काश्चित् गाव उत्पन्ना। ता च गावो विशिष्टदेहसबन्धिन्य अभवन्। तासा गवा जघने पृष्ठभागे कश्चित् ऋषभ अनुगम्य उदगच्छत्। तम् ऋषभमुद्दिश्य इन्द्र अचायत् स्वाभिमान पूजितवान्। अहो मदीय कार्यं सफलमिति। तत स इन्द्रो मनसा व्यचारयत्। किमिति ? य कोऽपि इमम् ऋषभम् आलभेत देवतोद्देशेन हिंस्यात् स ईदृशाद्बन्धनादिरूपात् पाप्मन मुच्येत इति। एव विचार्य द्विपशुक कर्म कृतवान्। तस्य इन्द्रस्य सबन्धिना स्वभागेन पुष्ट अग्नि
२५ सर्पाकाराणि षोडश शरीराणि न वृत्रम् अपि अदहत्। तत ऐन्द्रयागेन सामर्थ्यमिन्द्र स्वात्मनि अधत्त॥

१६ अ मै४–अघोन। १७. त१ त२ मै–°लोकप्रसिद्धात्। १८ अ त१ त२ मै मै४ ए–प्रकृतात्। ०(द्र पा २ ४ ३२)। १९. ल–यथा।

२३ अ इ खो ना हा अवावध्नात्, इ ट१ हो१–अविध्यत्। २४ अ उ पा– ‘षोडश’ नास्ति। २५. ट१– ‘तै’ नास्ति। २६ इ खो ना हा–स्वशरीरै। २७. इ हो१–आरभत।
३० २८. इ आगच्छत्। २९. इ ट१ न चाप्नोत्। ३०. खो ना हा–सोऽमन्यत अहो, इ–सोऽमन्यत।

यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः ( ६ ) पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन् धत्ते मुच्यते पाप्मनो भवत्येव द्यावापृथिव्यां धेनुमा लभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै ५

यः । पाप्मना । गृहीतः । स्यात् । सः । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । ऐन्द्रम् । ऋषभम् । अग्निः । एव । अस्य । स्वेन । भागधेयेनेति भाग-धेयेन । उपसृत इत्युप-सृतः ( ६ )। पाप्मानम् । अपीति । दहति । ऐन्द्रेण । इन्द्रियम् । आत्मन् । धत्ते । मुच्यते । पाप्मनः । भवति । एव । द्यावापृथिव्यामिति द्यावा-पृथिव्याम् । धेनुम् । एति । लभेत । ज्योगपरुद्ध इति ज्योक्-अपरुद्धः । अनयोः । हि । वै । एषः । अप्रतिष्ठित इत्यप्रति-स्थितः । अथ । १० एषः । ज्योक् । अपरुद्ध इत्यप-रुद्धः । द्यावापृथिवी इति द्यावा-पृथिवी । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते इति । एव । एनम् । प्रतिष्ठामिति प्रति-स्थाम् । गमयतः । प्रतीति । एव । तिष्ठति । पर्यारिणी । भवति । पर्यारि । इव । हि । एतस्य । राष्ट्रम् । यः । ज्योगपरुद्ध इति ज्योक्-अपरुद्धः । समृद्ध्या इति सम्-ऋद्ध्यै ।

द्यावापृथिव्यामित्यादि[20] । " द्यावापृथिवीशुनासीर " (पा ४·२·३२) इति यत् । १५ [V]ज्योगपरुद्धः दीर्घकालं दुर्गतः । [21]चिरं राष्ट्रात् निर्वासित इत्येके । द्यावापृथिव्योरप्रतिष्ठितत्वात् [V]एषः [V]ज्योक् [V]अपरुद्धः भवति । [V]पर्यारिणी प्रसवकालमतीत्य कृतप्रसवा । केचिदाहुः प्रजननकालमतीत्य

य इति ॥ अथ विधत्से– 'यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन् धत्ते मुच्यते पाप्मनो भवत्येव ' इति ॥ २०

द्यावापृथिव्यामिति ॥ चिरं राज्यभ्रष्टस्य पशुं विधत्ते– 'द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति ' इति । [V]ज्योगपरुद्धः चिरं राज्यभ्रष्टः । यस्तु प्रजापालनस्याभावादस्मिँल्लोके न प्रतितिष्ठति, वैदिककर्मानुष्ठानाभावात् स्वर्गेऽपि न प्रतितिष्ठति, तदानीम् [31][V]एषः [V]ज्योक् [V]अपरुद्धः इत्युच्यते । तस्य द्यावापृथिव्योः परितोषादुभयत्र प्रतिष्ठा सपद्यते ॥ २५

पर्यारिणीति ॥ धेनोः कंचिद्गुणं विधत्ते– ' पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै ' इति । या गौर्गर्भिणी सती [32]प्राप्तं प्रसवकालं परित्यज्य चिरं गर्भं धृत्वा पश्चात्

२०. तं१.तं२.मै.लं–°व्यामिति । २१. अ.तं१.तं२.लं–' चिरं ' नास्ति।

३१. अ.आ.उ.क.बो.ना पा–सोऽत्र; ड.हो१–एव । ३२. क.जो.ना.हा–प्रात° ।

वायव्यं ( ७ ) वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँ-ल्लोकान् विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप तिष्ठते ॥४॥

[ मध्यंदिने कद्रु यमस्य स्पर्धमानो वैष्णावरुणीं तमिन्द्रोऽस्य स्वेन भागधेयेनोपसतो

५ वायव्यं द्विचत्वारिंशच्च ] ॥

वायव्यम् ( ७ )। वत्सम्। एति। लभेत। वायुः। वै। अनयोः। वत्सः। इमे। वै। एतस्मै। लोकाः। अपशुष्का इत्यप-शुष्का। विट्। अपशुष्केत्यप-शुष्का। अथ। एषः। ज्योक्। अपरुद्ध इत्यप-रुद्धः। वायुम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। अस्मै। इमान्। लोकान्। विशम्। प्रेति। दापयति। प्रेति। अस्मै। इमे। लोकाः। स्नुवन्ति।

१० भुञ्जती। एनम्। विट्। उपेति। तिष्ठते ॥ ४ ॥

[ मैस २.५ ८, कास १३ ७, ८, ९ ]

प्रजायते। ज्योगपरुद्धस्य हि राष्ट्रं पर्यायि भवति दीर्घकालातिक्रमेण प्राप्तत्वात्। तस्मात् सद्योग समृद्धं भवति ॥

अथ वायव्यो वत्सोऽपरुद्धस्यार्थं विधीयते तस्या एव धेनोर्द्यावापृथिव्योः हि वत्स वायुः। इमे च पूर्वप्रकृतय लोकाः एतस्मै पुरुषाय अपशुष्काः अपरक्ता अस्मिन् भवन्ति। विट् च प्रजा च अपशुष्का भवति। अथ एषः ज्योक् अपरुद्धः भवति। [illegible] दापयतीति। अपराग हित्वा यथार्थम् वसूनि ददति लोकाः विट् च तथा करोति वायुः। ततश्च अस्मै इमे लोकाः प्र स्नुवन्ति मन्येत दुहन्ति वसूनि, विट् च एनम् उप तिष्ठते सगच्छते इति। समवतिरग्णे ( पा १.३.२५ वा १ ) आत्मनेपदम् कीर्त्ती भूत्वा भुञ्जती सर्वदा एव

२० परिपालयन्ती। "भुजोऽनवने" ( पा १.३.६६ ) इत्यात्मनेपदाभावात् "शतुरनुम" ( पा ६.१.१७३ ) इति नद्या उदात्तत्वम् ॥

द्वितीये प्रथमे चतुर्थः ॥

स्मृते सा "पर्यायि"। तथा च सूत्रकार —"पर्यायिणानि परिहारमृच्छति" ( आपश्रौ १२ १६.११ ) इति।
[illegible] ज्योगपरुद्धः भवस्य राष्ट्रं पर्यायि इव भवति, योगक्षेमं चिरकालीन प्रभाव आत्मलाभात्।

२५ अतः सद्योऽपि समृद्धं भवति ॥

काम्याः पशवः ]

वायव्यमिति ॥ ज्योगपरुद्धस्यैव धेनुप्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते – 'वायव्यं वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँल्लोकान् विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप तिष्ठते ' इति । यथा वत्सो धेनोः समीप एव संचरति तथा वायुरपि द्यावापृथिव्योः प्रचरतीति तद्वत्सत्वम् । अत एव द्यावापृथिव्यधेनुप्रयोगसमीपे [35]एव तदीयवत्सप्रयोगो युज्यते । यदा 'लोकाः प्रजा च 'एतस्मै राज्ञे 'अपशुष्का अपरक्ता भवन्ति तदानीमेव 'एषः 'ज्योगपरुद्धः भवति । लोकशब्देन तत्र तत्र प्रभुत्वेन स्थिता [36]ग्रामण्यादयः मुख्यपुरुषा उच्यन्ते, अवशिष्टा सर्वा प्रजा विट्शब्देन । वत्सेन तुष्टो वायुः 'लोकान् 'प्रजां च 'प्र 'दापयति अनुरक्तान् करोति । ते च 'लोकाः 'अस्मै 'स्नुवन्ति मणिमुक्तादिधनं प्रस्रावयन्ति बाहुल्येन प्रयच्छन्तीत्यर्थः । प्रजा च 'एनं 'भुञ्जती पालयन्ती सेवते ॥

अत्र मीमांसा ॥ अष्टमाध्यायस्य प्रथमपादे चिन्तितम् –

" ललामादिगणे दैक्षादैन्द्राग्नादिशिनतोऽथ वा ।

[38]आद्यो विशेषराहित्यान्न गणत्वविशेषतः " ॥ ( जैन्या ८·१·११ ) इति ॥

काम्यपशुकाण्डे पशुगणः श्रूयते– "वसन्ते ललामांस्त्रीन् वृषभानालभेत" ( द्र. काम १·३·७ ) इति । तत्र रशनाद्व्यादिविशेषलिङ्गाभावात् दैक्षाग्नीषोमीयाद्धर्मातिदेश इति चेत् । न । गणत्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात् । ऐकादशिनानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते । तथा हि सौत्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते– "यत् त्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप आलभते" ( तैब्रा १·८·६ )) इति । यद्यत्राग्नीषोमीयः प्रकृतिः स्यात्तदा[39] चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रयप्रसक्त्यभावात् तदुपन्यासेन दोषाभिधानं [40]पुनरेकयूपविधानं च व्यर्थं स्यात् । ऐकादशिनानां प्रकृतित्वे तु प्रतिपशु पृथग्यूपातिदेशेन प्रसक्तिसद्भावात् तदुपपद्यते । तस्मात् पशुगणेष्वैकादशिनेभ्योऽतिदेशः ॥

दशमाध्यायस्य द्वितीयपादे चिन्तितम् –

" धेनुवत्सर्षभादत्वाने गवि वा गुणकीर्तनात् ।

अजेऽतिदिष्टे स्युर्नैव गोत्वान्येकगुणोक्तितः " ॥ ( जैन्या १०·२·३५ ) ॥

पशुविकृतिषु श्रूयते– 'द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रमृषभम्' ( द्र. काम १३·५) इति । तत्र धेनुशब्दो नवसूतिकामाचष्टे । वत्सशब्दो बालम् । ऋषभशब्दः पुमांसम् । तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यम्[41] अबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति । गौस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्यते प्रकृतावनुपदिष्टत्वात् । अतो न गां विशिंषन्तीति [42]पूर्वपक्षः । "न तत्रैते[43] यथोक्तगुणसामान्यवाचिनः, किं तर्हि, [44]तान् गोगतानेव गुणानाहुः । अतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि[45] गां मुख्यवृत्त्या विशिंषन्तश्छागं बाधन्त इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

३५. द–°पृथिव्यप्रयोग° । ३६. अ.आ.उ.जो.ड१.ना.हा – 'एव' नास्ति । ३७. द–मन्वादयः । ३८. अ.उ.पा–अथो । ३९. अ.उ.पा– 'तदा' नास्ति । ४०. अ.उ.पा–°यूपप्रतिविधानम् । ४१. द–°मजम् । ४२. ड१–पूर्वः प१. । ४३–४३. अ.द.जो.ना.पा.हा–अमदेतो. । ४४. द.ड१– 'तान्' नास्ति । ४५. द–°ऽनुपदिष्टमपि ।

इन्द्रो॑ व॒लस्य॑ बि॒लमपो॑र्णो॒त् स य उ॑त्त॒मः प॒शुरासी॒त् तं पृ॒ष्ठं प्रति॑ सं॒गृह्योद॑क्खिदत्
त॒९ स॒हस्रं॑ प॒शवोऽनू॒दायन्त्स उ॒न्नतो॑ऽभव॒द्यः प॒शुका॑मः स्यात् स ए॒तमैन्द्र॒मुन्न॒तमा

इन्द्रः॑ । व॒लस्य॑ । बि॒लम् । अपेति॑ । औ॒र्णो॒त् । सः । यः । उ॒त्त॒म इत्यु॑त्–त॒मः । प॒शुः ।
आसी॑त् । तम् । पृ॒ष्ठम् । प्रतीति॑ । स॒गृह्येति॑ स॒म्–गृह्य॑ । उदिति॑ । अ॒क्खि॒द॒त् । तम् ।
५ स॒हस्र॑म् । प॒शवः॑ । अनु॑ । उदिति॑ । आ॒य॒न् । सः । उ॒न्नत इत्यु॑त्–न॒तः । अ॒भ॒व॒त् । यः ।
प॒शुका॑म॒ इति॑ प॒शु–का॒मः । स्यात् । सः । ए॒तम् । ऐ॒न्द्रम् । उ॒न्न॒तमित्यु॑त्–न॒तम् । एति॑ ।

इन्द्रो वलस्येत्यादि ॥ [४]अप [४]और्णोत् [४]अपावृतद्वारमकरोत् । स इति[१] । "सुपां सुलुक्[२]" (पा ७ १ ३९) इति सप्तम्याः स्वादेशः । तत्र बिले वसतां पशूनां मध्ये [४]य [४]उत्तमः [४]पशुः [४]आसीत्, [४]तं [४]पृष्ठं [४]प्रति [४]संगृह्य पृष्ठे गृहीत्वा [४]उत् [४]अक्खिदत् उत्क्षिप्तवान् ।
१० छान्दसो वर्णोपजनः । [३]उत्तमशब्द उञ्छादिषु (पा ६ १ १६०) [४]पठ्यते, तेनान्तोदात्तः । लक्षणे प्रते कर्मप्रवचनीयत्वम् (पा १ ४ ८३, ८४) । [४]तम् [४]अनु [४]सहस्रं [४]पशवः [४]उत् [४]आयन् उदगच्छन् । [४]स उत्तमः पशुः [४]उन्नतः [४]अभवत् । उन्नतं पृष्ठभागेऽस्यास्तीति[५] लक्षणया तद्वानुच्यते । मत्वर्थीयो लुप्यते । यत्र [६]गृहीतस्य उपयतः ककुदाप्य[६] उन्नतोऽभवत् ॥

ब्रह्मवर्चसकामो यश्चर्मदोषादिभिर्भीत य ।
१५ भ्रातृव्यवान् पापभीरुर्ग्रहग्रस्तश्च यो भवेत् ॥
अनुवाके चतुर्थेऽस्मिन्नेतेषां पशवः श्रुताः[१] ॥

अथ पञ्चमे पशुकामादीनां पशवो वक्तव्याः ।

इन्द्र इति ॥ [१]तत्रैक विभागं प्रस्तौति– ' इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत् तं पृष्ठं प्रति संगृह्योदक्खिदत् तं सहस्रं पशवोऽनूदायन्त्स उन्नतोऽभवत् ' इति । वलनामकः कश्चिदसुरस्तस्करो
२० भूत्वा सतस्ततो बहून् पशूनपहृत्य कस्मिंश्चित् भूबिले स्थापयामास । स च [१]वृत्तान्तमवगत्य [१]इन्द्रः [१]बिलम् [१]अपौर्णोत्, द्वारपिधानार्थं प्रक्षिप्तं पाषाणमपनीतवान् । तत्र [१]यः [१]उत्तमः [१]पशुः [१]तं [१]पृष्ठं [१]प्रति पृष्ठदेशे [१]गृहीत्वा [१]उदक्खिदत् [१]उत्क्षिप्तवान् । तस्य पशोर्यूथपतित्वात् [१]तम् [१]अनु [१]सहस्रं [१]पशवः उदगच्छन् । [१]स च मुख्यः पशुर्यूथपतित्वेन पूर्वमेवोन्नतोऽपि [१]पश्चादिन्द्रोत्क्षेपणेनात्यन्तम् [१]उन्नतः [१]अभवत् ॥

२५ १. पर ल–अप्रहृत[२] । २. मै८–इति स इन्द्र । ३. ल–उत्तमशब्द । ४. तै१,तर ल–
चिह्नो । ५. मै८–[०]स्तीत्युक्त, तै१ तर–[०]स्तीत्युक्तं । ६–६ अ तै१ तर मै ल–गृहीतपेयत (?) ककुदाप्य, प२–हि तोम र (?) तत्दाप्य ।

लभेतेन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवत्युन्नतो ( १ ) भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्द्धे यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमा लभेतैतस्मिन् वै तत् सहस्रमध्यतिष्ठत्

लभेत । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति । पशुमानिति पशु-मान् । एव । भवति । उन्नत इत्युत् नत (१) । ५
भवति । साहस्री । वै । एषा । लक्ष्मी । यत् । उन्नत इत्युत-नत । लक्ष्मिया । एव । पशून् । अवेति । रुन्द्धे । यदा । सहस्रम् । पशून् । प्राप्नुयादिति प्र आप्नुयात् । अथ । वैष्णवम् । वामनम् ।
एति । लभेत । एतस्मिन् । वै । तत् । सहस्रम् । अधीति । अतिष्ठत् ।

साहस्रीति ॥ सहस्रस्य निमित्तभूता । "शतमानविंशतिक°" (पा ५ १ २७) इत्यण् । लक्ष्मी लक्षणम् । "सुपां सुलुक्°" (पा ७ १ ३९) इति सोर्लुक् । यदेत्यादि । गतम् । १०
समीपित सम्यगीप्सित । अहोरात्राण्येवेति । अहोरात्राणां पशूनां च सहस्रत्वात् प्रजाता पशवः प्रतिष्ठिता भवन्ति । "हेमन्तशिशिरावहोरात्रे च°" (पा २ ४ २८) इति पूर्ववल्लिङ्गता । ग्रन्थान्तरमिदम् । पशूनां सहस्रं प्राप्याहोरात्राणां सहस्रं स्थित्वा अथ वैष्णवं वामनम् आ लभेत ॥

य इति ॥ विधत्ते–'यः पशुकामः स्यात् स एतमैन्द्रमुन्नतमा लभेतेन्द्रमेव स्वेन भागधेयेनोप १५ धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवति' इति ॥

उन्नत इति ॥ पशोरौन्नत्यं प्रशंसति–'उन्नतो भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्द्धे' इति । उन्नत इति यत्, एषा साहस्री लक्ष्मी सहस्रस्य निमित्तभूता तत एव लक्ष्मी सपद्रूपा । तथा सत्युन्नतालम्भेन पशुसमृद्धिरूपया लक्ष्म्या युक्तस्तान् पशून् अव रुन्द्धे ॥

यदेति ॥ पूर्वत्र यथा धेन्वालम्भवतः पश्चादुक्षालम्भो विहितः, एवमत्राप्युन्नतमालब्धवतो २० *वामनालम्भं विधत्ते– 'यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमा लभेतैतस्मिन् वै तत् सहस्रमध्य*तिष्ठत् तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति' इति । पशुकाम उन्नतमालभ्य तत्फलभूतान् पशून् प्राप्नुवन् सहस्रप्राप्तेरूर्ध्वं वामनम् आ लभेत । यस्मात् एतस्मिन् वामने तत् उन्नत पशुसहस्रम् अध्यतिष्ठत् आरोहति, तस्मात् सहस्रपशुप्रियत्वात् एष वामनः अपि विष्णोः सम्यगपेक्षितः । एतस्याऽऽलम्भेन पूर्वमुत्पन्नेभ्यः सहस्रपशुभ्यः पश्वर्थं प्रतिष्ठां तृणोदकसपूर्णं २५ निवासस्थानं कृतवान् भवति ॥

७–७ ल–शतमानविंशतिप्रकृत्यवम् (?)। ८–८. म४–समीपित सम्यगीप्सित, अ ल– समीक्षित । ९–९ अ तर ल– च पशूना । १०. ल–'स्थित्वा' नास्ति ।

८. ड१–एवमत्रोन्नत° । ९. ड जो ना–प्राप्नुयात् । १०. ड–प्राप्त्यूर्ध्वम् । ११ आ क ड१– लोलार्थम् । १२ अ आ उ क जो ना पा हा–एव । १३ आ क ड ड१ हो१–'अपि' नास्ति । ३० १४. ड१–अत एतस्या° । १५ अ उ पा–पशु° ।

तस्मा॑देष वा॑म॒नः सर्मीषितः प॒शुभ्य॑ ए॒व प्र॒जाते॑भ्यः प्रति॒ष्ठां द॑धाति॒ कोऽर्हति स॒हस्रं॑ प॒शून् प्राप्तु॒मित्या॑हुरहोरा॒त्राण्ये॒व स॒हस्र॑ꣳ सं॒पाद्याऽऽ ल॑भेत प॒शवो॒ ( २ ) वा अ॑होरा॒त्राणि॑ प॒शूने॒व प्र॒जाता॒न् प्रति॒ष्ठां ग॑मय॒त्योष॑धीभ्यो वे॒हत॒मा ल॑भेत प्र॒जाका॑म॒ ओष॑धयो॒ वा ए॒तं प्र॒जायै॒ परि॑ बाधन्ते॒ योऽलं॑ प्र॒जायै॒ सन् प्र॒जां न वि॒न्दत॒ ओष॑धयः॒

५ खलु॒ वा ए॒तस्यै॒ सूतु॒मपि॑ घ्नन्ति॒

तस्मा॑त्। ए॒षः। वा॒म॒नः। सर्मीषित॒ इति॒ सम्-ई॒षि॒तः। प॒शुभ्य॒ इति॑ प॒शु-भ्यः॒। ए॒व। प्र॒जाते॒भ्य॒ इति॒ प्र-जा॒ते॒भ्यः॒। प्र॒ति॒ष्ठामिति॑ प्रति स्थाम्। द॒धा॒ति॒। कः। अ॒र्ह॒ति॒। स॒हस्र॑म्। प॒शून्। प्राप्तु॒मिति॑ प्र आप्तु॒म्। इति॑। आ॒ह॒। अ॒हो॒रा॒त्राणीत्य॑ह-रा॒त्राणि॑। ए॒व। स॒हस्र॑म्। सं॒पाद्येति॑ सम्-पाद्य॑। एति॑। ल॒भे॒त॒। प॒शवः॑ (२)। वै। अ॒हो॒रा॒त्राणीत्य॑ह-रा॒त्राणि॑। प॒शून्। ए॒व। प्र॒जाता॒निति॑ प्र-जा॒तान्।

१० प्र॒ति॒ष्ठामिति॑ प्रति स्थाम्। ग॒म॒य॒ति॒। ओष॑धीभ्य॒ इत्योष॑धि-भ्यः॒। वे॒हत॑म्। एति॑। ल॒भे॒त॒। प्र॒जाका॑म॒ इति॑ प्र॒जा-का॒मः॒। ओष॑धयः। वै। ए॒तम्। प्र॒जाया॒ इति॑ प्र-जायै॑। परीति॑। बा॒ध॒न्ते॒। यः। अल॑म्। प्र॒जाया॒ इति॑ प्र-जायै॑। सन्। प्र॒जामिति॑ प्र-जाम्। न। वि॒न्दते॑। ओष॑धयः। खलु॑। वै। ए॒तस्यै॑। सूतु॑म्। अपीति॑। घ्न॒न्ति॒।

ओषधीभ्य इत्यादि॥ "ओषधेश्च" (पा ६ ३ १३२) इति दीर्घत्वम्। वेहद्गर्भनाशिनी।

१५ ओषधयः खलु इति। एतस्या वेहतः सूतुं सोतव्यं गर्भम्। औणादिकस्तुन् प्रत्ययः।

क इति॥ एतस्यैव[16] वामनस्य सहस्रप्राप्तिकालादन्यं कालं विधत्ते– 'कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ संपाद्याऽऽ लभेत पशवो वा अहोरात्राणि पशूनेव प्रजातान् प्रतिष्ठां गमयति' इति। सहस्रप्राप्तिः प्रायेण दुर्लभा, विघ्नानां चोरव्याघ्रादिकृतानां बहुत्वात्। अतः पशुप्राप्तेरर्वाक् [17]सहस्रदिनान्यतिवाह्य [18]आलभेत। पशवो हि क्षीरादिभोगार्थं [19]संपाद्यन्ते। तत्रैकैकस्मिन् दिने तद्भोग

२० प्रसादेकैकः पशुरिति गणनाया सहस्रसंख्याकान्यहोरात्राण्येव सहस्रं पशवः संपद्यन्ते। ततः सहस्रदिनेभ्य ऊर्ध्वं वामनालम्भेन [20]तावता [21]वा विद्यमानानां [22]पशूनां प्रतिष्ठा [23]संपादिता भवति॥

ओषधीभ्य इति॥ प्रजाकामस्य पशुं विधत्ते– 'ओषधीभ्यो वेहतमा लभेत प्रजाकाम ओषधयो वा एतं प्रजायै परि बाधन्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहतमथ ओषधीरेव स्वेन भागधेयेनोप धावति ता एवास्मै स्वाद्योनेः प्रजां प्र जनयन्ति विन्दते प्रजामापो वा

२५ ओषधयोऽसत्पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽपस्त्वावासतः सद्ददतीति' इति। [24]वेहतं गर्भविनाशिनीम्। [25]यः प्रजोत्पादने समर्थोऽपि [26]प्रजां [27]न लभते [28]तत्र प्रजार्थमोषधिदेवता पापं [29]बाधन्ते। तस्मात् [30]तद्बाधस्य आलम्भो युक्तः। [31]या गौर्गर्भनाशिनी [32]भवति एतस्याः [33]सूतुं गर्भम् [34]ओषधयः [35]अपि [36]घ्नन्ति[37]। तस्मात् विधाया वहत आलम्भात् तुष्टा ओषधयो यजमानार्थं [38]स्वात्

१६. ख क ग घ ङ– 'एव' नास्ति। १७ क °र्वाक्सहस्रा। १८ ख ग घ–°लभेत।

२० १९–१९. ख ग घ ङ– 'पशवो' नास्ति। २०. ग घ–'तावता' नास्ति। २१ ख ग घ ङ–होरा– [illegible]। २२. ख ग घ ङ– [illegible]। २३ ख ग घ– 'संपादिता' नास्ति। २४–२४ ङ– [illegible]।

काम्याः पशवः ]

या वेहद्भवत्योषधीरेव स्वेन भागधेयेनोप धावति ता एवास्मै स्वाद्योनेः प्रजां प्र जनयन्ति विन्दते (३) प्रजामापो वा ओषधयोऽसत् पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽपस्त्वावासतः सद्ददती-

या। वेहत्। भवति। ओषधीः। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। ताः। एव। अस्मै। स्वात्। योनेः। प्रजामिति प्र-जाम्। प्रेति। जनयन्ति। विन्दते (३)। प्रजामिति प्र-जाम्। आपः। वै। ओषधयः। असत्। पुरुषः। आपः। एव। अस्मै। असतः। सत्। ददति। तस्मात्। आहुः। यः। च। एवम्। वेद। यः। च। न। आपः। तु। वाव। असतः। सत्। ददति। इति।

अपि घ्नन्ति यथेष्ट घ्नन्ति। आपो वा इति। तद्धेतुत्वात्ताच्छब्द्यम्, [11]व्यापित्वाद्वा। असदिति। [12]अव्यक्तावस्थकारणरूप[13]पुरुषः। तस्मादोषधीनामपि हेतुभूताः आपः एव असतः अव्यक्तात् सत् व्यक्तं प्रजालक्षणं ददति अस्मै यजमानाय ओषधीभ्यो वेहतमालभमानाय। तस्मादाहुरिति। यः च एवम् अपां हेतुत्वं वेद, [14]लौकिकः यः च न वेद, ते सर्वेऽपि[14] आपः खलु असतः सत् ददति इति आहुः अप्ससर्गादिव सर्वबीजाङ्कुरोत्पत्तिं पश्यन्तः। "तुतुपूर्वं उदात्तयोर्वकारः" (तैप्रा ५.१३) इति वकारो लुप्यते॥

योनेः यजमानसंबन्धिवीर्यात् प्रजाम् उत्पादयन्ति [25]औरसीमेव [26]प्रयच्छन्ति, न तु क्षेत्रजपुत्रिकासुतादिवत्। ततोऽसावौरसीमेव प्रजां लभते। [27]ता ओषधयो [28]लोकप्रसिद्धया स्तूयन्ते। तत्र तावत् आपः एव ओषधयः अपामोषधिकारणत्वात्। पुरुषः यजमानस्य [29]उत्पत्स्यमानः पुत्रः। स चोत्पत्तेः प्राक् असत् इत्युच्यते, स्वकारणभूतरेतोऽवस्थायामनभिव्यक्तत्वात्। तथा सत्यप्रूपेण [30]स्थिता ओषधय एव यजमानार्थमनभिव्यक्तशरीरात्सारात्रेतसः सत् अभिव्यक्तशरीरं प्रयच्छन्ति। यस्मादेवं तस्मात् [31]कारणादीदृशवृत्तान्ताभिज्ञास्तदनभिज्ञाश्च लौकिका एवम् आहुः- आपः [32]एवास्मा असतः सत् ददति इति। तत्राभिज्ञा ओषधिदेवताकृतं यथोक्तं पुत्रप्रदानमभिलक्ष्यैवं वदन्ति। अनभिज्ञास्तु क्षेत्रेषु अप्संपत्त्या सस्यनिष्पत्तिमभिलक्ष्य आपः एव असतः सस्यरहितात् क्षेत्रात् [33]सत् विद्यमान-येन[33] भासमानं सस्यं ददति इत्याहुः। यद्यभिज्ञा ओषधीनां पुत्रप्रदत्वमाहुः, यदि वाऽनभिज्ञा अपां सस्यप्रदत्वमाहुः, सर्वथाऽपि प्रशस्तमेतदोषधिविषयं कर्म॥

११. अ.तं.१.पंर.मै लं-व्यापिन्यो वा। १२. मै लं-अव्यक्त ावस्थं करणरूपं। १३. अ मै४- प्रजायाः। १४.अ तं२.मै लं-यश्च न वेद लौकिकः ते सर्वे।　२१

२५. अ.आ.उ क.जो.ना.पा.हा-स्वोरसमेव। २६. ड-प्रयच्छन्तु। २७. ड ड१-ताश्च। २८. अ.उ पा-लोकप्रसिद्धाः। २९. अ.आ.उ.क.जो.पा.हा-उत्पत्स्यमानः, ना-उत्पाद्यमान.। ३०. क ने हो१-स्थित्वा। ३१. ने-'कारणात्' नास्ति। ३२. अ उ.ड ड१.ना ने पा हो१ - 'अस्मै' नास्ति। ३३-३३. ड.ड१.ने.हो१ संदिह्यमानत्वेन।　३०

स्यैन्द्रीᳪ᳭ सूतवशामा लभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन् भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाऽभव(४)दिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव यᳪ᳭ सूत्वा वशा स्यात् तमैन्द्रमेवाऽऽ लभेतैतद्वाव तदिन्द्रियᳪ᳭ साक्षादेवेन्द्रियमव रुन्द्धे

५ ऐन्द्रीम् । सूतवशामिति सूत-वशाम् । एति । लभेत । भूतिकाम इति भूति-कामः । अजातः । वै । एषः । यः । अलम् । भूत्यै । सन् । भूतिम् । न । प्राप्नोतीति प्र-आप्नोति । इन्द्रम् । खलु । वै । एषा । सूत्वा । वशा । अभवत् (४) । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । यम् । सूत्वा । वशा । स्यात् । तम् । ऐन्द्रम् । एव । एति । लभेत । एतत् । वाव । तत् । इन्द्रियम् ।
१० साक्षादिति स-अक्षात् । एव । इन्द्रियम् । अवेति । रुन्द्धे ।

ऐन्द्रीमित्यादि ॥ सूतवशा सकृत्प्रसूता वन्ध्या । अजातो वा इति । अजातकल्पत्वात् । इन्द्र खल्विति । "प्रथमं सूतवशा [v]इन्द्र [v]सूत्वा जनयित्वा ततः [v]वशा [v]अभवत् तस्मात् [v]ऐन्द्रीम् [v]आ [v]लभेत इति । यमित्यादि । इन्द्रियकामस्य [v]य [v]सूत्वा [v]वशा स्यात् [१८v]त प्रथमवत्सम इन्द्राय [१८-v]आ [v]लभेत इति[१९] । एतदिति प्रजारूपम् ॥

१५ 　ऐन्द्रीमिति ॥ भूतिकामस्य पशुं विधत्ते– 'ऐन्द्रीᳪ᳭ सूतवशामा लभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन् भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाऽभवदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव' इति । सकृद्वत्समुत्पाद्य पश्चाद्वन्ध्या गौः सूतवशा । 'यः 'भूत्यै योग्योऽपि 'भूतिं 'न 'प्राप्नोति सोऽयमुत्पन्नोऽप्यनुत्पन्नसम एव । तस्मादयम् 'आ 'लभेत । 'एषा अपि सूतवशा प्रथममिन्द्रसमानं वत्समुत्पाद्य वन्ध्या 'अभवत् ॥

२० 　यमिति ॥ तस्मात् "इन्द्रस्य प्रियायाः सूतवशायाः प्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते– 'यᳪ᳭ सूत्वा वशा स्यात् तमैन्द्रमेवाऽऽ लभेतैतद्वाव तदिन्द्रियᳪ᳭ साक्षादेवेन्द्रियमव रुन्द्धे' इति । सूतवशाया वत्स इन्द्रसमानः । अत एवैन्द्रमाहुः "सूतवशात्वेन निष्पत्तिरेवमाम्नायते– "सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाऽच्छिनत् सा सूतवशाऽभवत् तत्सूतवशायै जन्म" (तैत्तं १.१.२) इति । तथा सति स्वसमानत्वेनेन्द्रप्रियं "[v]तम् एवं वत्सम् 'ऐन्द्रम् 'एव 'आ 'लभेत ।
२५ "तत्प्रयोगेन्द्रियकार्यत्वादिन्द्रत्वानुगुण्यम् 'एव 'इन्द्रियम् 'अव 'रुन्द्धे ॥

१५. पं०-प्रथमा । १६. तं० मे०-तत् । १७-१७. मे-आरभेतेति ।

३४. आ.क-'इन्द्रम' नास्ति । ३५. अ.उ.पा-सूतवशाया रूपेण । ३६. क.ट.ने.ऐर- 'तत्' नास्ति । ३७. ट.जो-"कार्यत्वान्मुख्य"; मे-"कार्यादिन्द्रान्मुख्य" ।

ऐन्द्राग्नं पुनरुत्सृष्टमा लभेत य आ तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना (५) तृतीयात् पुरुषात् सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्द्धे

ऐन्द्राग्नमित्यैन्द्र-अग्नम्। पुनरुत्सृष्टमिति पुनः-उत्सृष्टम्। एति। लभेत। यः। एति। तृतीयात्। पुरुषात्। सोमम्। न। पिबेत्। विच्छिन्न इति वि-छिन्नः। वै। एतस्य। सोमपीथ इति सोम-पीथः। यः। ब्राह्मणः। सन्। एति (५)। तृतीयात्। पुरुषात्। सोमम्। न। पिबति। इन्द्राग्नी इतीन्द्र-अग्नी। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तौ। एव। अस्मै। सोमपीथमिति सोम-पीथम्। प्रेति। यच्छतः। उपेति। एनम्। सोमपीथ इति सोम-पीथः। नमति। यत्। ऐन्द्रः। भवति। इन्द्रियम्। वै। सोमपीथ इति सोम-पीथः। इन्द्रियम्। एव। सोमपीथमिति सोम-पीथम्। अवेति। रुन्द्धे।

[18]ऐन्द्राग्नमिति॥ पुनरुत्सृष्ट[18] [19]जीर्णो गलितवृषण[19] [20]पुंगव। महर्षभार्थं[20] गोषु मुक्त इत्येके। 'पुनरुत्सृष्टं छाग' इति भरद्वाजमतम्। आ तृतीयादिति। [21]अभिविध्याकार इत्येके। तृतीयमपि गृहीत्वा इत्यन्ये। [22]सोमपीथः सोमपानम्। औणादिकस्थक् प्रत्ययः (उ १६४)। इन्द्रियं [23]वा इति। तद्धेतुत्वात्ताच्छब्द्यम्। आग्नेयो वा इति। अग्निर्देवता अस्येति सर्वत्र "°अग्निकलिभ्याम्°" (द्र पामा ४ २ ७ वा १, पा ४ २ ३३, ४ २ ८) इति ढक्[23]॥

ऐन्द्राग्नमिति॥ विच्छिन्नसोमपीथस्य पशुं विधत्ते—'ऐन्द्राग्नं पुनरुत्सृष्टमा लभेत य आ तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना तृतीयात् पुरुषात् सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति' इति। गलितवृषणो बलीवर्द उत्सृष्ट इत्युच्यते। स एव [38]ततो जीर्णे [39]लाङ्गलवहनादेः[39] मुक्तः पुनरुत्सृष्टः। स्वात्मानमारभ्य तृतीयः पुरुषः पितामहः पिता स्वयं च यदा सोमं न पिबेयुस्तदानीमेतस्य [40]त्रयस्य[40] [41]सोमपानं विच्छिन्नं[41], स एतं[42] पशुम् आ लभेत॥

यदिति॥ इन्द्रमग्निं च क्रमेण प्रशंसति—'यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्द्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनु स तनोति' इति। सोमपानस्येन्द्रियवृद्धिहेतुत्वादिन्द्रियरूपत्वम्॥

१८–१८ अ मै४–ऐन्द्राग्न पुनरुत्सृष्टमिति। १९–१९ त१–जीर्णो गमित°, त२–जीर्णोद्गालित°। २०–२० मै४–ऋषभार्थं। २१ मै४–मर्यादायामाकार। २२ मै४–वै सोमपीथ। २३ अ–स्थक् मै४–ठक्।

३८–३८ ने–जीर्णाङ्ग, अ आ उ क ड ड१ जो ना पा हा हो–'ततो' नास्ति। ३९ ने हो१–°वहनादिना, ड–°वाहनादिना ड१–°वहनादि°। ४० ट१–'त्रयस्य' नास्ति। ४१–४१ हो१–सोमपानविच्छिन्नस्य। ४२ ड१–एवम्।

यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनु सं तनोति पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य (६) सोमपीथः समृद्धयै ब्राह्मणस्पत्यं तूपरमा लभेताभिचरन् ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्छति

यत्। आग्नेय। भवति। आग्नेय। वै। ब्राह्मण। स्वाम्। एव। देवताम्। अनु। समिति।
५ तनोति। पुनरुत्सृष्ट इति पुनः-उत्सृष्ट। भवति। पुनरुत्सृष्ट इति पुनः-उत्सृष्ट। इव। हि। एतस्य (६)। सोमपीथ इति सोम-पीथ। समृद्धया इति सम्-ऋद्धयै। ब्राह्मणस्पत्यमिति ब्राह्मण-पत्यम्। तूपरम्। एति। लभेत। अभिचरन्नित्यभि-चरन्। ब्रह्मण। पतिम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तस्मै। एव। एनम्। एति। वृश्चति। ताजक्। आर्तिम्। एति। ऋच्छति।

१० ब्राह्मणस्पत्यमिति॥ ब्रह्म परिवृढं यज्ञाख्यं कर्म तस्य पालकोऽग्निः ब्रह्मणस्पतिः। तूपरः शृङ्गहीनः। पुच्छहीन इत्येके। अभिचरन् मारयन् शत्रून्। ब्रह्मण पष्ठ्या छान्दसोऽलुक्। "पष्ठ्याः पतिपुत्र" (पा ८ ३ ५३) इति सत्वम्। एनमिति। अभिचर्यमाणं तस्मै ब्रह्मणस्पतये आभिमुख्येन वृश्चति। ताजक् तदानीमेव आर्तिं प्राप्नोति। "उपसर्गादृति धातौ" (पा ६ १ ९१) इति वृद्धि॥

१५ पुनरुत्सृष्ट इति॥ पशुविशेषं प्रशंसति—'पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य सोमपीथ समृद्ध्यै' इति। प्रथमं पितामहेन सोमपीथ उत्सृष्टः पुनः पित्रा पुनरपि स्वेन, तत उत्सृष्टपशुप्रदानात्
समृद्धिं सम्पद्यते॥

ब्राह्मणस्पत्यमिति॥ अभिचरतः पशुं विधत्ते—'ब्राह्मणस्पत्यं तूपरमा लभेताभिचरन् ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्छति' इति। स ब्रह्मणस्पति
२० तस्मै तमभिचर्यमाणमेव 'एनं वैरिणम्' आ वृश्चति समन्तात् छिनत्ति तदानीमेव वैरी मरणं प्राप्नोति॥

७४ प०—समासे। ७५ नेति०—'पष्ठ्या' नास्ति।

तूपरो भवति क्षुरपविर्वा एषा लक्ष्मी यत्तूपरः समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै
स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं

तूपर । भवति । क्षुरपविरिति क्षुर-पविः । वै । एषा । लक्ष्मी । यत् । तूपर ।
समृद्ध्या इति सम्-ऋद्ध्यै । स्फ्य । यूप । भवति । वज्र । व । स्फ्य । वज्रम् । एव । अस्मै ।
प्रेति । हरति । शरमयमिति शर-मयम् । बर्हि । शृणाति । एव । एनम । 　　५

क्षुरपविरिति ॥ क्षुरत्वे छेदनसामर्थ्ये स्थित पविर्व वज्रत्व यस्या सा तथोक्ता [26]शीघ्र छेदिनी, [27]लक्ष्मी लक्षणम् ॥

[28]स्फ्य इति [28] ॥ स्फ्याकृति [29]यूप कार्य, स्फ्य एव वा[29] यूप कार्य । तदानीमन्येन स्फ्यकार्यं कुर्यात् । शरमयमिति । " नित्य वृद्धशरादिभ्य " (पा ४ ३ १४४) इति विकारे मयट् । [30]शरोऽपि पञ्चतृणविशेष [30] *तत्पर्णमय भवति । शृ हिंसायाम् । " पुंसि सज्ञाया घ ° " १०
(पा ३ ३ ११८) ॥

तूपर इति ॥ पशुविशेषण प्रशसति—' तूपरो भवति क्षुरपविर्वा एषा लक्ष्मी यत्तूपर समृद्ध्यै ' इति ॥ [42]तूपर इति [43]यत् [44]एषा [45]क्षुरपवि [46]वै, [47]क्षुर इव तीक्ष्णा धारा वज्रे [43]यस्या सा क्षुरपविस्तादृशी [48]लक्ष्मी वैरिमारणार्था [44]सपद्यते । शृङ्गाभावेऽपि [45]युध्यन् मेष इव सहसा घात करोतीति पशुमाहात्म्यम् ॥

स्फ्य इति ॥ यूपस्य षाडक्रमाष्टाश्रि-वादिरूपमपवदितु स्फ्यसमानमाकार विधत्ते— ' स्फ्यो १५
यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति ' इति । अत्र सूत्रम्— " स्फ्यो यूप इति स्फ्याकृतिर्यूप "
( आपश्रौ १९ १६ १२ ) इति ॥

शरमयमिति ॥ कुशमयमपवदितु विधत्ते— ' शरमय बर्हि शृणात्येवैनम् ' इति । शृणन्ति हिंसन्तीति शरास्तृणविशेषा, येषु तृणपूलकेषु बाणा [46]बाणा क्रियन्ते । तेषां च [47]तृणानां शीर्षे [48]
[49]वज्रावयवै [50]उत्पन्नत्वात् हिंसकत्वम् । वज्रावयवैरुत्पत्तिरन्यत्राऽऽम्नायते— " इन्द्रो वृत्राय वज्र प्राहरत् २०
स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीय येऽन्त शरा अशीर्यन्त ते शरा अभवन् तच्छराणा
शरत्वम् " (तैस ६ १ ३) इति । तस्माच्छरमयेन बर्हिषा वैरिण हिंसत्येव ॥

२६ अ-°च्छेदने । 　२७-२७ ल-' स्फ्य इति ' नास्ति । 　२८ अ-' वा ' नास्ति
२९-२९. अ मै ८-शरो वशविशेष । *[' तमयम् ' इति मै-तट्टिप्पण्या निर्दिष्ट पाठ ।]।

४३-४३ ड१-क्षुरवत्तीक्ष्णधारो वज्रो । ४४ ने-' सपद्यते ' इत्यस्यानन्तर ' शृङ्गाभावस्तूपर ' । २५
४५. आ क जा ना हा-युद्ध । ४६ अ आ उ क जो ड पा हा-ब्राह्मणा ड१-तृणी° । ४७ क नो हा तृणादी नाम् । ४८ आ-शार्षे° । ४९. अ उ पा-ब्रह्मावयवै ड१-प्रजावयवै । ५० ड ने हो१-' उत्पन्नत्वात ' इत्यस्यानन्तर ' पक्षत्वाच्च ' ।

वैभीदक इध्मो ( ७ ) भिनत्त्येवैनम् ॥ ५ ॥

[ भवत्युन्नत पशवो निदतेऽभवत् सन्नैतस्येत्यसीणि च । ]

वैभीदक । इध्म ( ७ ) । भिनत्ति । एव । एनम् ॥ ५ ॥

[ मैस २ ५ ३, ४, ८, ९ कास १३ ३ ४ ]

५ वभीदक इति। "पलाशादिभ्यो वा" ( पा ४ ३ १४१ ) इत्यञ् । विभीदक अक्षद्रुम । [53]"विभिनत्तीति विभीद । इगुपधात्क" (पा ३ १ १३५), तत सज्ञाया कन् (पा ५ ३ ८७)। पृषोदरादित्वात् दीर्घत्वम् ( पा ६ ३ १०९ )॥

इति द्वितीये प्रथमे पञ्चमोऽनुवाक ॥

वैभीदक इति ॥ पालाशमिध्म [51]"बाधितु विधत्ते"[51]–'वैभीदक इध्मो भिनत्त्येवैनम्' इति ॥
१० [52]"अक्षशब्दवाच्याद्वृक्षादुत्पन्न 'वैभीदक । स च विशेषेण [53]"भेत्तु शक्त इति कृत्वा वैरिण 'भिनत्ति 'एव ॥

अत्र मीमासा ॥ दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" मनुष्येष शरमय [54]"कौशेनोतास्य बाधकम् ।
प्राचुर्यस्य विधेराद्यो मैव प्रतिपदोक्तित " ॥ ( जैन्या १० ४ २ ) ॥

"सोमारौद्र चरु निर्वपेत् कृष्णाना व्रीहीणामभिचरन्" ( मैसं २ १ ६ , कास ११ ५ ) इत्यत्र
१५ "शरमय बर्हिर्भवति" (मैस २ १६ कास ११ ५) इति श्रुतम्, तदिद प्राकृतेन कुशबर्हिषा सह समुच्चीयते। यत ? मयट्शब्देन [55]"प्राचुर्यस्याभिधानात् ( द्र काशिका पा ५ ४ २१ ) [56]"अबाधेनापि तदुपपत्तेरिति पूर्व पक्ष । "नित्य वृद्धशरादिभ्य " (पा ४ ३ १४४) इति सूत्रेण शरशब्दात् विकारार्थो मयट्प्रत्यय प्रतिपदोक्त । अतस्त परित्यज्य प्राचुर्यार्थो न ग्रहीतु शक्य । किं च प्राचुर्यार्थत्वे कार्यान्तर [57]"कल्पनीय स्यात्। तस्मात् कुशबर्हिषो बाधकमिति राद्धान्त ॥

२० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाक ॥ ५ ॥

३०-३०. मे ७–विभिनत्तीति विभीद , अ मे८–भिनत्तीति विविध भिनत्तीति विभीदक इगुपधात् क ।

५१-५१ ने–अपवदितुम् । ५२ द ना जो हा–अत्र विभीतकशब्द° । ५३ ड१–छेत्तुम् ।
५४ १ ७ ण–कौश नास्य ने–कुशेनोतास्य । ५५ द शरप्राचुर्यविधानात् ड१–शरप्राचुर्यस्य
२५ विधानात् । ५६ क हा–अबाधेऽपि हो१–अबाधेऽपि ५७ हा–कल्प्यम् ।

बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै पौष्णꣳ श्याममा लभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मा (१) अन्नं प्र यच्छत्यन्नाद एव भवति ५

बार्हस्पत्यम्। शितिपृष्ठमिति शिति-पृष्ठम्। एति। लभेत। ग्रामकाम इति ग्राम-काम। य। कामयेत। पृष्ठम्। समानानाम्। स्याम्। इति। बृहस्पतिम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। एनम्। पृष्ठम्। समानानाम्। करोति। ग्रामी। एष। भवति। शितिपृष्ठ इति शिति-पृष्ठ। भवति। बार्हस्पत्य। हि। एष। देवतया। समृद्ध्या इति सम्-ऋद्ध्यै। पौष्णम्। श्यामम्। एति। लभेत। अन्नकाम इत्यन्न-काम। अन्नम्। वै। पूषा। १० पूषणम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मै (१)। अन्नम्। प्रेति। यच्छति। अन्नाद इत्यन्न-अद। एव। भवति।

बार्हस्पत्यमित्यादि॥ उक्त शितिपृष्ठ, [१]स्वरश्च (पा ६ २ १३८)। [२]पृष्ठ प्रधान एकोऽधिकार इति। राज्ञान्तकर्मण्यधिकार इति केचित्॥

पौष्णमित्यादि। गतम्॥ अन्न वा इत्यादि। तद्धेतुत्वात्ताच्छब्द्यम्॥ १५

पशुकाम प्रजाकामो [१]भूत्यर्थी [२]छिन्नसोमक।
अभिचारी च ये तेषा पञ्चमे पशव श्रुता॥ १॥

अथ षष्ठे ग्रामकामादीना पश्वन्तराणि वक्तव्यानि।

बार्हस्पत्यमिति॥ तत्रैक पशु विधत्ते– ‘बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो य कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैन पृष्ठꣳ समानाना २० करोति ग्राम्येव भवति’ इति। ग्रामो मे भूयादित्येषा [३]च ग्रामस्वामिना [४]मध्ये [५]पृष्ठवदुपरिवर्ती स्याम् इति य कामयेत तस्यायं पशु॥

शितिपृष्ठ इति॥ पशुविशेषण प्रशसति–‘शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै’ इति। राजसूये “बार्हस्पत्य चरु शितिपृष्ठो दक्षिणा” (तैस १ ८ ९) इत्युक्तत्वात् तद्देवतात्वम्॥

पौष्णमिति॥ अन्नकामस्य पशु विधत्ते–‘पौष्णꣳ श्याममा लभेतान्नकामोऽन्न वै पूषा पूषणमेव २५ स्वेन भागधेयेनोप धावति स एवास्मा अन्न प्र यच्छत्यन्नाद एव भवति’ इति। अन्नस्य पोषकत्वात् पूषत्वम्॥

१ अ मै४–‘स्वरश्च’ नास्ति। २ ल–इति।

१ अ–भूत्यर्थ। २ अ उ बो ना पा हा–छिन्नसोमप। ३ अ आ उ क पा–‘च’ नास्ति। ४ नै–‘मध्ये’ नास्ति। ५ अ उ बो ना पा हा–पृष्ठादु॰ हो१–पृष्ठवत् नतु नै–पृष्ठवत् उन्नतस्थान(न)। ३०

श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै मारुतं पृश्निमा लभेतान्नकामोऽन्नं वै मरुतो मरुत एव स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्या ऐन्द्रमरुणमा लभेतेन्द्रियकाम इन्द्रमेव (२) स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधातीन्द्रियाव्येव भवत्यरुणो भ्रूमान् भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै

श्याम । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्या इति सम्-ऋद्ध्यै । मारुतम् । पृश्निम् । एति । लभेत । अन्नकाम इत्यन्न-काम । अन्नम् । वै । मरुतः । मरुतः । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न-अद । एव । भवति । पृश्निः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्या इति सम्-ऋद्ध्यै । ऐन्द्रम् । अरुणम् । एति । लभेत । इन्द्रियकाम इतीन्द्रिय-काम । इन्द्रम् । एव (२) । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । इन्द्रियम् । दधाति । इन्द्रियावी । एव । भवति । अरुणः । भ्रूमानिति भ्रू-मान् । भवति । एतत् । वै । इन्द्रस्य । रूपम् । समृद्ध्या इति सम्-ऋद्ध्यै ।

अरुण इत्यादि । [६]भ्रूमान् महाभ्रूः ॥

श्याम इति ॥ पशुविशेषणं प्रशंसति— 'श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै' इति । पक्वशाल्यन्नस्य रूपं श्यामम् ॥

मारुतमिति ॥ अन्नकामस्य पश्वन्तरं विधत्ते— 'मारुतं पृश्निमा लभेतान्नकामोऽन्नं वै मरुतो मरुत एव स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति' इति । मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नदातृत्वम् ॥

पृश्निरिति ॥ पशुविशेषणं प्रशंसति— 'पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै' इति । पृश्नि श्वेतं, शाल्यन्नस्य रूपं श्वेतम् ॥

ऐन्द्रमिति ॥ इन्द्रियकामस्य पशुं विधत्ते— 'ऐन्द्रमरुणमा लभेतेन्द्रियकाम इन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधातीन्द्रियाव्येव भवति' इति ॥

अरुण इति ॥ अरुणस्य पशोर्गुणान्तरं विधत्ते— 'अरुणो भ्रूमान् भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै' इति । महती भ्रूरस्यास्तीति भ्रूमान् । इन्द्रस्य महत्त्वाश्रयेन भ्रूबाहुल्यं स्वरूपम् ॥

६. ते हो१—भेष्णा।

सावित्रमुपध्वस्तमा लभेत सनिकामः सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोप धावति स एवास्मै सनिं प्र सुवति दानकामा अस्मै प्रजा भवन्त्युप-ध्वस्तो भवति सावित्रो ह्येष (३) देवतया समृद्ध्यै वैश्वदेवं बहुरूपमा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति ५

---

सावित्रम् । उपध्वस्तमित्युप-ध्वस्तम् । एति । लभेत । सनिकाम इति सनि-कामः । सविता । वै । प्रसवानामिति प्र-सवानाम् । ईशे । सवितारम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । सनिम् । प्रेति । सुवति । दानकामा इति दान-कामाः । अस्मै । प्रजा इति प्र-जाः । भवन्ति । उपध्वस्त इत्युप-ध्वस्तः । भवति । सावित्रः । हि । एषः (३) । देवतया । समृद्ध्या इति सम्-ऋद्ध्यै । वैश्वदेवमिति वैश्व-देवम् । बहुरूपमिति बहु-रूपम् । १० एति । लभेत । अन्नकाम इत्यन्न-कामः । वैश्वदेवमिति वैश्व-देवम् । वै । अन्नम् । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न-अदः । एव । भवति ।

---

उपध्वस्तः विभिन्नवर्णः बहुबिन्दुचितशरीरः । सनिकाम इति । याच्ञया लब्धं धनं सनिः । प्र सुवति अनुजानाति ॥ १५

---

सावित्रमिति ॥ स्वप्रतिग्रहीतृकदानकामस्य पशुं विधत्ते– 'सावित्रमुपध्वस्तमा लभेत सनिकामः सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोप धावति स एवास्मै सनिं प्र सुवति दानकामा अस्मै प्रजा भवन्ति' इति । उपध्वस्तः संकीर्णवर्णः । सनिकामः परकर्तृकदानकामः । प्रसवानां प्रेरणानाम् । अस्मै यजमानार्थं परकर्तृकं दानं प्र सुवति प्रेरयति ॥

उपध्वस्त इति ॥ संकीर्णवर्णं प्रशंसति– 'उपध्वस्तो भवति सावित्रो ह्येष देवतया समृद्ध्यै' २० इति । राजसूये "सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तो दक्षिणा" (तैस १.८.९) इत्युक्तत्वात् सवितृदेवताकत्वम् ॥

वैश्वदेवमिति ॥ अन्नकामस्य पश्वन्तरं विधत्ते– 'वैश्वदेवं बहुरूपमा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति' इति । साकल्यमन्त्रेण विस्पष्टा बहवो वर्णा यस्यासौ बहुरूपः ॥ २५

---

३ ल–याचता अ मै–याच्ञा ।

---

७ इ–यजमानाय । ८–८ ह र–प्रशंसति ।

बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै वैश्वदेवं बहुरूपमा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै ( ४ ) सजातान् प्र यच्छन्ति ग्राम्येव भवति बहुरूपो भवति बहुदेवत्यो३ ह्येष समृद्ध्यै प्राजापत्यं तूपरमा लभेत यस्यानाज्ञातमिव ज्योगामयेत्

५ बहुरूप इति बहु-रूप । भवति । बहुरूपमिति बहु-रूपम् । हि । अन्नम् । समृद्ध्या इति सम्-ऋद्ध्यै । वैश्वदेवमिति वैश्व-देवम् । बहुरूपमिति बहु-रूपम् । एति । लभेत । ग्रामकाम इति ग्राम-काम । वैश्वदेवा इति वैश्व-देवा । वै । सजाता इति स-जाता । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । अस्मै ( ४ ) । सजातानिति स-जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । बहुरूप इति बहु-रूपः । भवति । १० बहुदेवत्य इति बहु-देवत्य । हि । एष । समृद्ध्या इति सम्-ऋद्ध्यै । प्राजापत्यमिति प्राजा-पत्यम् । तूपरम् । एति । लभेत । यस्य । अनाज्ञातमित्यना-ज्ञातम् । इव । ज्योक् । आमयेत् ।

बहुरूप. [5]नानारूप· । "बहोर्नञ्वत्°" (पा ६·२·१७५) इति [6]नञ्वद्भावः, "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् ॥

यस्यानाज्ञातमिति । [6]ज्योगामयेदिति । अज्ञातविशेष य ना (वः यमा) मय आमयेत्[6] १५ दीर्घकालम् । "रुजार्थाना°" (पा २ ३-५४) इति षष्ठी । तस्य वेदेति । कर्मणः सम्प्रदानत्वात्*

बहुरूप इति ॥ पशुविशेषणं प्रशंसति– 'बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै' इति । भक्ष्यभोज्यलेह्यचोष्यभेदेनान्नस्य बहुरूपत्वम् ॥

वैश्वदेवमिति ॥ ग्रामकामस्य [9]पश्वन्तरं विधत्ते– 'वैश्वदेवं बहुरूपमा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै, सजातान् प्र यच्छन्ति ग्राम्येव २० भवति' इति । [10]सजाताः भ्रातरो[10] भृत्यादयश्च[10] । ते [11]च बहुत्वसाम्येन[11] विश्वेषां देवानां संबन्धिनः ॥

बहुरूप इति ॥ पशुविशेषणं प्रशंसति– 'बहुरूपो भवति बहुदेवत्यो ह्येष समृद्ध्यै' इति । विश्वेषां देवानाम् [12]एव स्वामित्वात् पशोर्बहुदेवत्यत्वम्[12] ॥

प्राजापत्यमिति ॥ अज्ञातचिररोगग्रस्तस्य पशुं विधत्ते– 'प्राजापत्यं तूपरमा लभेत यस्यानाज्ञातमिव ज्योगामयेत् प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति

२५ ४. अ मै८–नानावर्णः । ५. ह–नञ्वत् । ६–६. ह–ज्योगामयतीति अज्ञातविशेषं यं नाम य आमयः; मै८–अमुक आमयतीति अज्ञातरोगविशेषं यस्यामयो, तैर–ज्योगामयतीति अज्ञातरोगविशेषः यं नामयत्सोऽर्(?) । *[द्र पाभा १·४·३२, 'तस्य विद्या,' (तैसं १·३·६) इत्यत्र भट्टभास्करभाष्यं द्रष्टव्यम् । ] ।

९. क–पशून् । १०–१०. ट१–भ्रातृव्यादयश्च । ११. अ ज.पा–तद्बहुत्व°; ट.ट१.ने.हो१– ३० च्छ्लो° । १२–१२. अ ज.पा–पशुस्वामित्वं पशो°; ट१–स्वामित्वात्पशोर्बहुदेवत्यत्वम् ।

प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवैनं तस्मात् स्रामान्मुञ्चति तूपरो भवति प्राजापत्यो ह्ये(५)ष देवतया समृद्ध्यै ॥ ६ ॥

[ असा इन्द्रमेव संजाता त्रिधातेव देवान्त्स्वेन भागधेयेनोप धावति स एवास्मै प्राजापत्यो हि त्रीणि च । ] ५

प्राजापत्य इति प्राजा-पत्य । वै । पुरुष । प्रजापतिरिति प्रजा-पतिः । खलु । वै । तस्य । वेद । यस्य । अनाज्ञातमित्यना-ज्ञातम् । इव । ज्योक् । आमयति । प्रजापतिमिति प्रजा-पतिम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । एनम् । तस्मात् । स्रामात् । मुञ्चति । तूपर । भवति । प्राजापत्य इति प्राजा पत्य । हि ( ५ ) । एष । देवतया । समृद्ध्या इति सम्-ऋद्ध्यै ॥ ६ ॥ १०

[ मैल काल ]

चतुर्थ्यर्थे षष्ठी ( पा २ ३ ६२ ) ॥ स्रामादिति । "स्राम इति" रोगनाम । यद्वा – 'स्राम आमन्त्रणे', परलोक आह्वान मरणमेव ॥

इति द्वितीये प्रथमे षष्ठोऽनुवाक ॥

प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवैन तस्मात् स्रामान्मुञ्चति' इति। [13] विस्पष्टानि रोगविशेष १५ लक्षणानि न दृश्यन्ते [13] "बलक्षयकार्श्यादिक च दृश्यते, [14] "तदिदमज्ञातमिव भवति। 'प्रजापति पुरुषमसृजत' इति श्रुतत्वात् [15] पुरुष [16] प्राजापत्य । चिकित्सकैरज्ञातोऽपि रोगविशेष प्रजापतिना ज्ञायते। अत प्रजापति [16] एव एन [17] तस्मात् [17] स्रामात् अज्ञातदीर्घरोगात् [17] मोचयति ॥

तूपर इति ॥ प्रजापतिवपाजन्यत्वेन पशुविशेषण प्रशसति– 'तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै' इति ॥ २०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाक ॥

७ तर मै ल–'स्राम इति' नास्ति। ८–८ तर मै ल–स्राम मन्त्रेण।

१३–१३ अ उ पा–°लक्षणानीव दृश्यन्ते जो मा हा–°लक्षणानि न दृश्यन्ते, ने–स्पष्टैर् रोगविशेषण प्रेक्षणे न दृश्यते। १४–१४ अ–न क्षयकार्श्यादिक च तद्दृश्यते उ ना पा–न क्षयकार्श्या २५ दिकं च दृश्यते, जो हा–विलक्षणकार्श्यादिक च दृश्यते इ–विलक्षणाकारादिकवद्दृश्यते। १५ इ१–तदिदम विज्ञा°। १६ ने–'एव' नास्ति। १७–१७ अ उ पा–स्रामात् अज्ञातादिव रोगात्, हो१–प्रमादजात् दीर्घरोगात् ।

वृषट्कारो वै गायत्रियै शिरोऽच्छिनत् तस्यै रसः पराऽपतत् तं बृहस्पतिरुपागृह्णात् सा शितिपृष्ठा वशाऽभवद्यो द्वितीयः परापतत् तं मित्रावरुणावुपागृह्णीतां॰ सा द्विरूपा वशाऽभवद्यस्तृतीयः परापतत् तं विश्वे देवा उपागृह्णन्त्सा

---

वृषट्कार इति वषट् कारः। वै। गायत्रियै। शिरः। अच्छिनत्। तस्यै। रसः। परेति। अपतत्।
५ तम्। बृहस्पतिः। उपेति। अगृह्णात्। सा। शितिपृष्ठेति शिति-पृष्ठा। वशा। अभवत्। यः। द्वितीयः। परापतदिति परा अपतत्। तम्। मित्रावरुणाविति मित्रा-वरुणौ। उपेति। अगृह्णीताम्। सा। द्विरूपेति द्वि-रूपा। वशा। अभवत्। यः। तृतीयः। परापतदिति परा-अपतत्। तम्। विश्वे। देवाः। उपेति। अगृह्णन्। सा।

---

वषट्कार इत्यादि। [v]रस शरीरस्य जलम्। [1]शितिपृष्ठादिवशान्तानामुत्पत्तिरुच्यते।
१० [v]शितिपृष्ठा। उक्तमुत्तरपदप्रकृतिस्वरत्वम्[v] (पा ६.२.१३८)। [v]य. [1]द्वितीय [v]परापतत् इति। "[3]यद्वृत्तान्नित्यम्" (पा ८.१.६६) इति निघाते प्रतिषिद्धे 'उदात्तवता तिङा' (द्र. पाभा २.२.१८ वा ४) इति समास[3]। [v]द्विरूपा [5]शुक्लकृष्णा वेति[5] केचित्। निरुदकादित्वादुत्तरपदान्तोदात्तत्वम् (पा ६.२.१८४)॥

---

बृहत्कामोऽन्नकामो द्वाविन्द्रियार्थी सनि तथा।
१५ अन्नं [1]ग्रामं च [2]वाञ्छन्तः गृदरोगाश्च[2] ये स्थिताः॥
षष्ठेऽनुवाके पशवः क्रमेणैषामुदीरिताः॥

वषट्कार इति॥ अथ सप्तमे ब्रह्मवर्चसकामादीनां यथायोगं [3]पश्वन्तराणि विधातुं प्रस्तौति— 'वषट्कारो वै गायत्रियै शिरोऽच्छिनत् तस्यै रसः पराऽपतत् तं बृहस्पतिरुपागृह्णात् सा शितिपृष्ठा वशाऽभवद्यो द्वितीयः परापतत् तं मित्रावरुणावुपागृह्णीतां सा द्विरूपा वशाऽभवद्यस्तृतीयः परापतत् तं विश्वे
२० देवा उपागृह्णन्त्सा बहुरूपा वशाऽभवद्यश्चतुर्थः परापतत् स पृथिवीं प्राविशत् तं बृहस्पतिरभ्यगृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत् तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाऽभवत्' इति। वौषडित्यस्य [4]मन्त्रस्याभिमानिनी देवता[4] [5]वषट्कारः। तस्य च[5] गायत्र्या सह विरोधो ब्राह्मणान्तरे (काठ १३.८; मैसं २.५.७) प्रसिद्ध इति वैशब्देन सूच्यते। छिन्नाद्गायत्रीशिरसो [6]जलं रक्तं च निर्गतं, ताभ्यामुभाभ्यामेतत्त्रिविधा वशा उत्पन्नाः। ताश्च बृहस्पत्यादीनां परिग्रहेण प्रियाः संपन्नाः। द्वाभ्यां वर्णाभ्यामुपेता [1]द्विरूपा।

---

२५ १. अ,तै१,तै२,पं—शितिपृष्ठादीनां वशान्तानाम्, मै४—शितिपृष्ठादीनां वशानाम्। २-२. अ,मै८—शिरसि जाताः। ३-३. अ,मै८—'यद्वृत्ता ......समास.' नास्ति। ४. तै१,तै२,पं२—द्विरूपे। ५-५. मै८—शुक्लकृष्णे चेति, पं—शुक्लकृष्णो चेति, तै१,तै२—शुक्लकृष्णे इत्येति।

१. हा—ग्रामम्। २-२. आ—वाञ्छन्तोऽमानरोगाश्च, क,ड,ने,हो१—वाञ्छन्तोऽमानरोगाश्च, ग,जो,ना—वाञ्छन्तो गुनरोगाश्च, अ,उ,पा—वाञ्छन्तो गुनरोगाश्च। ३. ड—पशव। ४-४. अ,आ,
३० उ,जो,ना,प,हा—°स्याभिमानिदेवता, क,ड,द१,हो१—°स्याभिमानिदेवता। ५. अ,आ,उ,जो,ना,पा,हा—'च' नास्ति। ६. ड,द१,ने,हो१—अभवन्।

काम्या पशवः ]

बहुरूपा वशाऽभवद्यश्चतुर्थः परापतत् स पृथिवीं प्राविशत् तं बृहस्पतिरभ्य(१)-गृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत् तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाऽभवद्बार्हस्पत्याꣳ शितिपृष्ठामा लभेत ब्रह्मवर्चसकामो बृहस्पति-मेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति छन्दसां वा एष रसो यद्वशा ५

बहुरूपेति बहु-रूपा। वशा। अभवत्। यः। चतुर्थः। परापतदिति परा-अपतत्। सः। पृथिवीम्। प्रेति। अविशत्। तम्। बृहस्पतिः। अभीति (१)। अगृह्णात्। अस्तु। एव। अयम्। भोगाय। इति। सः। उक्षवश इत्युक्ष-वशः। समिति। अभवत्। यत्। लोहितम्। परापतदिति परा-अपतत्। तत्। रुद्रः। उपेति। अगृह्णात्। सा। रौद्री। रोहिणी। वशा। अभवत्। बार्हस्पत्याम्। शितिपृष्ठामिति शिति-पृष्ठाम्। एति। लभेत। ब्रह्मवर्चसकाम इति १० ब्रह्मवर्चस-कामः। बृहस्पतिम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। अस्मिन्। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। दधाति। ब्रह्मवर्चसीति ब्रह्म-वर्चसी। एव। भवति। छन्दसाम्। वै। एषः। रसः। यत्। वशा।

बहुरूपा। "बहोर्नञ्वत्°" (पा ६ २ १७५) इत्युत्तरपदान्तोदात्तत्वम्। अभ्यगृह्णादिति। निर्गमनकाल एव ग्रहणमुपग्रहणम्। निर्गत्य भूमौ प्रविष्टस्य उपरिग्रहणमभिग्रहणम्। अस्त्वेवेति। १५ अयं मम भोगाय एव अस्तु वृथा भूमौ सङ्क्रान्तो मा भूदिति। उक्षवश इति। उक्षा चासौ वशश्चेति उक्षवशः। यथेष्टचारी वशः। मोघरेता इत्येके। प्रजननाशक्त इत्यन्ये। या गर्भं ग्रसयन्ती स्वरं चरति सा वशा। रोहिणी लोहितवर्णा। "वर्णादनुदात्तात्°" (पा ४ १ ३९) इति ङीप्॥

अथ शितिपृष्ठादीनां विधानं बार्हस्पत्यामिति। गायत्र्या सर्वच्छन्दोयोनित्वात् छन्दसाम् इत्युक्तम्॥ २०

बहुभिर्वर्णैरन्वेता बहुरूपा। चतुर्थपर्याये भूम्याः परापतितः रसः वृथा विनष्टो मा भूदिति बृहस्पतिः अभ्यगृह्णात्। तस्यायमभिप्रायः – अयं रसः मम भोगाय भवतु एव। उक्षवशः व्यर्थवीर्यो वृषभः॥

बार्हस्पत्यामिति॥ तत्राऽस्य पशुं विधत्ते – 'बार्हस्पत्याꣳ शितिपृष्ठामा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति' इति॥

छन्दसामिति॥ ब्रह्मवर्चसस्य ऐहिकामुष्मिकपूजाहेतुत्वेन सारत्वात् रससादृश्यम् इत्यभिप्रेत्य २५ तत्साधनभूता वशा प्रशंसति – 'छन्दसां वा एष रसो यद्वशा रस इव खलु वै ब्रह्मवर्चसं छन्दसामेव

६. तर–अस्त्वेति। ७ मै४–मे। ८. तर मै ल–वृथा। ९. त१ तर–'मा' नास्ति। १०. तर मै ल–इत्यन्ये। ११. घर–प्रजननर्द (?), ल–प्रजननागत्य (?)। १२ त१ तर–'विधान' नास्ति।

७. आ ड१–भूमौ, ने–भुव उपरि। ८ आ ने–पतितम्। ९. इ–इहामुत्रपूजाहेतुत्वेन ड ड१ ने हो१–इहामुत्र च पूजाहेतुत्वेन। ३०

रस॑ इ॒व खलु॒ ( २ ) वै ब्र॑ह्मवर्च॒सं छन्द॑सामे॒व रसे॑न॒ रसं॑ ब्रह्मवर्च॒समव॑ रुन्द्धे मैत्राव॒रु॒णीं द्विरू॑पामा ल॑भेत॒ वृष्टि॑कामो मै॒त्रं वा अह॑र्वारु॒णी रात्रि॑रहोरा॒त्राभ्यां॒ खलु॒ वै प॒र्जन्यो॑ वर्षति मि॒त्राव॑रुणावे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ ताविवा॒स्मा अहो॑रा॒त्राभ्यां॑ प॒र्जन्यं॑ वर्षयत॒श्छन्द॑सां॒ वा ए॒ष रसो॒ यद्व॒शा रस॑ इ॒व खलु॒ वै वृ॒ष्टिश्छन्द॑सामे॒व रसे॑न॒
५ ( ३ ) रस॒ं वृ॒ष्टिमव॑ रुन्द्धे मैत्राव॒रु॒णीं द्विरू॑पामा ल॑भेत प्र॒जाका॑मो मै॒त्रं वा अह॑र्वारु॒णी रात्रि॑रहोरा॒त्राभ्यां॒ खलु॒ वै प्र॒जाः प्र जा॑यन्ते मि॒त्राव॑रुणावे॒व स्वेन॑ भाग॒धेये॒नोप॑

रस॑ः । इ॒व । खलु॑ ( २ ) । वै । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । छन्द॑साम् । ए॒व । रसे॑न । रस॑म् । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । अवेति॑ । रु॒न्द्धे॒ । मै॒त्रा॒व॒रु॒णीमिति॑ मैत्रा-व॒रु॒णीम् । द्वि॒रू॒पामिति॑ द्वि-रू॒पाम् । एति॑ । ल॒भे॒त॒ । वृष्टि॑काम॒ इति॒ वृष्टि॑-का॒मः॒ । मै॒त्रम् । वै । अहः॑ ।
१० वा॒रु॒णी । रात्रि॑ः । अ॒हो॒रा॒त्राभ्या॒मित्य॑हः-रा॒त्राभ्या॑म् । खलु॑ । वै । प॒र्जन्य॑ः । व॒र्ष॒ति॒ । मि॒त्राव॑रुणा॒विति॑ मि॒त्रा-वरु॑णौ । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । तौ । ए॒व । अ॒स्मै॒ । अ॒हो॒रा॒त्राभ्या॒मित्य॑हः-रा॒त्राभ्या॑म् । प॒र्जन्य॑म् । व॒र्ष॒य॒तः॒ । छन्द॑साम् । वै । ए॒षः । रस॑ः । यत् । व॒शा । रस॑ः । इ॒व । खलु॑ । वै । वृ॒ष्टिः॑ । छन्द॑साम् । ए॒व । रसे॑न ( ३ ) । रस॑म् । वृ॒ष्टिम् । अवेति॑ । रु॒न्द्धे॒ । मै॒त्रा॒व॒रु॒णीमिति॑ मैत्रा-व॒रु॒णीम् । द्वि॒रू॒पामिति॑ द्वि-रू॒पाम् । एति॑ । ल॒भे॒त॒ ।
१५ प्र॒जाका॑म॒ इति॑ प्र॒जा-का॒मः॒ । मै॒त्रम् । वै । अहः॑ । वा॒रु॒णी । रात्रि॑ः । अ॒हो॒रा॒त्राभ्या॒मित्य॑हः-रा॒त्राभ्या॑म् । खलु॑ । वै । प्र॒जा इति॑ प्र-जाः॑ । प्रेति॑ । जा॒य॒न्ते॒ । मि॒त्राव॑रुणा॒विति॑ मि॒त्रा-वरु॑णौ । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ ।

रस इवेति । आस्वादनहेतुत्वात् । गतमन्यत् ॥

"रसेन रसं ब्रह्मवर्चसमव रुन्द्धे" इति । यद्यपि गायत्रीछन्दोरसत्वं व्याख्यातं, गायत्री [च] [10]सोमाहरणेन
२० छन्दोऽन्तरात् प्रशस्ता । तस्मात् [11]यशा सर्वेषां [12]छन्दसां सारः । तेन छन्दोरसेन यशोरूपेणैहिकामुष्मिक-फलहेतुत्वात् रसत्वं [13]ब्रह्मवर्चसम् [14]अव [15]रुन्द्धे ॥

मैत्रावरुणीमिति ॥ द्वितीयं पशुं विधत्ते– 'मैत्रावरुणीं द्विरूपामा लभेत वृष्टिकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन रसं
२५ वृष्टिमव रुन्द्धे' इति । मित्रस्य सूर्यत्वादहर्देवत्वम् । अन्धकारेणाऽऽवरकत्वाद्वरुणस्य रात्रिदेवत्वम् । [16]द्वैरूप्यात् [17]मित्रावरुणात्मत्वेन [18]गात्रयोश्च रसोपमानम् ॥

मैत्रावरुणीमिति ॥ तमेव द्वितीयं पशुं फलान्तराय विधत्ते– 'मैत्रावरुणीं द्विरूपामा लभेत प्रजाकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै प्रजाः प्र जायन्ते मित्रावरुणावेव स्वेन भागधेयेनोप

१०. ख–सोमाहरणेन; ग–सोमाहरणेन । ११. ख–ऐहिकत्वात्; छो१–ऐहिकत्वा । १२. ख.छो१–
३० [illegible] । १३. ख.ग.छो१ [illegible] ।

धाव॒ति॒ तावे॒वास्मा॑ अहोरा॒त्राभ्यां॑ प्र॒जां प्र ज॑नयतश्छन्द॑सां॒ वा ए॒ष रसो॒ यद्व॒शा रस॑ इ॒व खलु॒ वै प्र॒जा छन्द॑सामे॒व रसे॑न॒ रसं॑ प्र॒जामव॑ ( ४ ) रुन्धे वैश्वदे॒वीं ब॑हुरू॒पामा ल॑भे॒तान्न॑कामो वैश्वदे॒वं वा अन्नं॒ विश्वा॑ने॒व दे॒वान्त्स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ त ए॒वास्मा॒ अन्नं॒ प्र य॑च्छन्त्यन्ना॒द ए॒व भ॑वति॒ छन्द॑सां॒ वा ए॒ष रसो॒ यद्व॒शा रस॑ इ॒व खलु॒ वा अन्नं॒ छन्द॑सामे॒व रसे॑न॒ रस॒मन्न॒मव॑ रुन्धे वैश्वदे॒वीं ब॑हुरू॒पामा ल॑भेत॒ ग्राम॑कामो वैश्वदे॒वा वै ( ५ ) स॑जा॒ता विश्वा॑ने॒व दे॒वान्त्स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ त ए॒वास्मै॑ ५

सजा॒तान् प्र य॑च्छन्ति ग्रा॒म्ये॑व भ॑वति

---

धा॒व॒ति॒। तौ। ए॒व। अ॒स्मै॒। अ॒हो॒रा॒त्राभ्या॒मित्य॑हः–रा॒त्राभ्या॑म्। प्र॒जामिति॑ प्र–जाम्। प्रेति॑। ज॒न॒य॒तः॒। छन्द॑साम्। वै। ए॒षः। रसः॑। यत्। व॒शा। रसः॑। इ॒व। खलु॑। वै। प्र॒जेति॑ प्र–जा। छन्द॑साम्। ए॒व। रसे॑न। रस॑म्। प्र॒जामिति॑ प्र–जाम्। अवेति॑ ( ४ )। रु॒न्धे॒। वै॒श्व॒दे॒वीमिति॑ वैश्व–दे॒वीम्। १०
ब॒हु॒रू॒पामिति॑ ब॒हु–रू॒पाम्। एति॑। ल॒भे॒त॒। अन्न॑काम॒ इत्यन्न॑–का॒मः॒। वै॒श्व॒दे॒वमिति॑ वैश्व–दे॒वम्। वै। अन्न॑म्। विश्वा॑न्। ए॒व। दे॒वान्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भा॒ग–धेये॑न। उपेति॑। धा॒व॒ति॒। ते। ए॒व। अ॒स्मै॒। अन्न॑म्। प्रेति॑। य॒च्छ॒न्ति॒। अ॒न्ना॒द इत्य॑न्न–अ॒दः। ए॒व। भ॒व॒ति॒। छन्द॑साम्। वै। ए॒षः। रसः॑। यत्। व॒शा। रसः॑। इ॒व। खलु॑। वै। अन्न॑म्। छन्द॑साम्। ए॒व। रसे॑न। रस॑म्। अन्न॑म्। अवेति॑। रु॒न्धे॒। वै॒श्व॒दे॒वीमिति॑ वैश्व–दे॒वीम्। ब॒हु॒रू॒पामिति॑ ब॒हु–रू॒पाम्। एति॑। ल॒भे॒त॒। ग्राम॑काम॒ इति॒ ग्राम॑–का॒मः॒। १५
वै॒श्व॒दे॒वा इति॑ वैश्व–दे॒वाः। वै ( ५ )। स॒जा॒ता इति॑ स–जा॒ताः। विश्वा॑न्। ए॒व। दे॒वान्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भा॒ग–धेये॑न। उपेति॑। धा॒व॒ति॒। ते। ए॒व। अ॒स्मै॒। स॒जा॒तानिति॑ स–जा॒तान्। प्रेति॑।

य॒च्छ॒न्ति॒। ग्रा॒मी। ए॒व। भ॒व॒ति॒।

---

धावति तावेवास्मा अहोरात्राभ्यां प्रजां प्र जनयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै प्रजा छन्दसामेव रसेन रसं प्रजामव रुन्धे ' इति। अहोरात्रपरित्यागेन यथा वृद्धिर्न संभवति तथा प्रजोत्पत्तिरपि २०
न संभवति। ततस्तयोर्वृद्धिसाधनत्ववत् प्रजोत्पत्तिसाधनत्वमपि द्रष्टव्यम्॥

वैश्वदेवीमिति॥ तृतीयं पशुं विधत्ते– 'वैश्वदेवीं बहुरूपामा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वा अन्नं छन्दसामेव रसेन रसमन्नमव रुन्धे ' इति। अन्नस्य सर्वदेवभोग्यत्वात् वैश्वदेवत्वं, जीवनहेतुत्वेन सारत्वाद्रससाम्यम्॥ २५

वैश्वदेवीमिति॥ तमेव पशुं फलान्तराय विधत्ते– 'वैश्वदेवीं बहुरूपामा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव

छन्दसां वा एष रसो यद्वशा रस इव खलु वै सजाताश्छन्दसामेव रसेन रसꣳ सजातानव रुन्धे बार्हस्पत्यमुक्षवशमा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं ( ६ ) दधाति ब्रह्मवर्चस्येव भवति वशं वा एष चरति यदुक्षा वशं इव खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्मवर्चसमव रुन्धे

५ छन्दसाम्। वै। एष। रसः। यत्। वशा। रसः। इव। खलु। वै। सजाता इति स-जाताः। छन्दसाम्। एव। रसेन। रसम्। सजातानिति स-जातान्। अवेति। रुन्धे। बार्हस्पत्यम्। उक्षवशामित्युक्ष-वशाम्। एति। लभेत। ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-काम। बृहस्पतिम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। अस्मिन्। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् ( ६ )। दधाति। ब्रह्मवर्चसीति ब्रह्म-वर्चसी। एव। भवति। वशम्। वै। एषः।
१० चरति। यत्। उक्षा। वशः। इव। खलु। वै। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। वशेन। एव। वशम्। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। अवेति। रुन्धे।

[14]वशा इवेति। [15]वशा इन्द्रियसंयम। तद्धेतुत्वात्तच्छन्दयम॥

भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वै सजाताश्छन्दसामेव रसेन रसꣳ सजातानव रुन्धे' इति। सजाताना भ्रात्रादीना [14]भृत्यादीनां च बहुत्वेन देवतासाम्येन वैश्वदेवत्व, स्वाम्युपकारित्वेन च
१५ रसमात्रत्वम्॥

बार्हस्पत्यमिति॥ चतुर्थं पशुं विधत्ते—'बार्हस्पत्यमुक्षवशमा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति' इति॥

वशमिति॥ [15]वशात्वविशेषण प्रशंसति—'वशं वा एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्मवर्चसमव रुन्धे' इति। [1]उक्षा इति [2]यत [3]एष [4]वशं [5]चरति धेनुभिः [16]सह
२० बालत्व गत्वा पुनर्ग्राममेव गृहणो [17]गृहीत्वागच्छतीति तस्य [18]गोवशत्वमित्यम्। ब्रह्मवर्चसमपि [19]इन्द्रियनियमनोपेतत्वात् वशं इव स्वाधीनपदार्थ इव भवति॥

१४ ङ १-'भृत्यादीना' नास्ति। १५ ङ ने हो१-पशुव°। १६ अ आ उ क ङ पा हो१-°ताऽरण्ये, ने-महाऽरण्य। १७ ने हो-गृहीत्वाऽऽग°। १८ ङ१-गोपशुचारित्वम, ङ ने हो१-वशाचारित्वम्। १९ ङ ङ१-°नियमनोपेन°।

रौद्रीᳪ᳭ रोहि॑णी॒मा ल॑भेताभि॒चर॑न् रु॒द्रमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तस्मा॑ ए॒वैन॒मा वृ॑श्चति ता॒जगार्ति॒मार्छ॑ति॒ रोहि॑णी भवति रौ॒द्री ह्ये॑षा दे॒वत॑या॒ समृ॑द्ध्यै॒ स्फ्यो यूपो॑ (७) भवति॒ वज्रो॒ वै स्फ्यो वज्र॑मे॒वास्मै॒ प्र ह॑रति श॒रम॑यं ब॒र्हिः शृ॒णात्ये॒वैनं॒ वैभी॑दक इ॒ध्मो भि॒नत्त्ये॒वैन॑म् ॥ (७) ॥

[ अ॒भि खलु॒ रसे॑नाऽऽ ब्रह्मवर्च॒स यूप॑ एकान्नविंशतिश्च ।] ५

रौद्रीम् । रोहि॑णीम् । एति॑ । लभेत । अ॒भि॒चर॒न्नित्य॑भि-चर॑न् । रु॒द्रम् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । तस्मै॑ । ए॒व । ए॒न॒म् । एति॑ । वृ॒श्च॒ति॒ । ता॒जक् । आर्ति॑म् । एति॑ । ऋ॒च्छ॒ति॒ । रोहि॑णी । भ॒व॒ति॒ । रौ॒द्री । हि । ए॒षा । दे॒वत॑या । समृ॑द्ध्या॒ इति॒ सम्-ऋ॒द्ध्यै॒ । स्फ्यः । यूपः॑(७) । भ॒व॒ति॒ । वज्रः॑ । वै । स्फ्यः । वज्र॑म् । ए॒व । अ॒स्मै॒ । प्रेति॑ । ह॒र॒ति॒ । श॒र॒मय॒मिति॑ शर-मय॑म् । ब॒र्हिः । शृ॒णाति॑ । ए॒व । ए॒न॒म् । वैभी॑दकः । इ॒ध्मः । भि॒नत्ति॑ । ए॒व । ए॒न॒म् ॥ ७ ॥ १०

[ मैसं २.५.७; काठ १३.८ ]

रौद्रीमित्यादि ॥ गतम् ॥

स्फ्य इत्यादि ॥ व्याख्यातम् ( तैस २.१.५ ) ॥

॥ इति द्वितीये प्रथमे सप्तमोऽनुवाकः ॥

रौद्रीमिति ॥ पञ्चमं पशुं विधत्ते– 'रौद्रीᳪ᳭ रोहिणीमा लभेताभिचरन् रुद्रमेव स्वेन १५ भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्छति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै' इति । रुद्राध्याये "नीलग्रीवो विलोहितः" ( तैसं ४.५.१ ) इति रुद्रस्य [20]विशेषेण लोहितत्वं श्रूयतेऽतो रोहिणी रुद्रदेवताका ॥

स्फ्य इति ॥ पूर्ववच्चोदकप्राप्तमपवदितुं विधत्ते– 'स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनम्' इति ॥ २०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

२०. ङ,ङ१,ने, हो–विशेषणम् ।

असावा॑दि॒त्यो न व्य॑रोचत॒ तस्मै॑ दे॒वाः प्राय॑श्चित्तिमैच्छ॒न् तस्मा॑ ए॒ताꣳ सौ॒रीꣳ श्वे॒तां व॒शामाऽल॑भन्त॒ तयै॒वास्मि॒न् रुच॑मदधु॒र्यो ब्र॑ह्मवर्च॒सका॑मः॒ स्यात् तस्मा॑ ए॒ताꣳ सौ॒रीꣳ श्वे॒तां व॒शामा ल॑भेता॒मुमे॒वाऽऽदि॒त्यꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मि॑न् ब्रह्मवर्च॒सं द॑धाति ब्रह्मवर्च॒स्ये॑व भ॑वति बै॒ल्वो यूपो॑ भवत्य॒सौ ( १ ) वा आ॒दि॒त्यो यतोऽजा॑यत॒ ततो॒ बिल्व॑ उ॒दति॑ष्ठत् स॒योन्ये॒व ब्र॑ह्मवर्च॒समव॑ रुन्द्धे

५

अ॒सौ । आ॒दि॒त्यः । न । वीति॑ । अ॒रो॒च॒त॒ । तस्मै॑ । दे॒वाः । प्राय॑श्चित्तिम् । ऐ॒च्छ॒न् । तस्मै॑ । ए॒ताम् । सौ॒रीम् । श्वे॒ताम् । व॒शाम् । एति॑ । अ॒ल॒भ॒न्त॒ । तया॑ । ए॒व । अ॒स्मि॒न् । रुच॑म् । अ॒द॒धुः॒ । यः । ब्र॒ह्म॒व॒र्च॒सका॑म॒ इति॑ ब्रह्मवर्च॒स-का॒मः॒ । स्यात् । तस्मै॑ । ए॒ताम् । सौ॒रीम् । श्वे॒ताम् । व॒शाम् । एति॑ । ल॒भे॒त॒ । अ॒मुम् । ए॒व । आ॒दि॒त्यम् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग-धे॒ये॑न । उपेति॑ । 
१० धा॒व॒ति॒ । सः । ए॒व । अ॒स्मि॒न् । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । द॒धा॒ति॒ । ब्र॒ह्म॒व॒र्च॒सीति॑ ब्रह्म-व॒र्च॒सी । ए॒व । भ॒व॒ति॒ । बै॒ल्वः । यूपः॑ । भ॒व॒ति॒ । अ॒सौ (१) । वै । आ॒दि॒त्यः । यतः॑ । अजा॑यत । ततः॑ । बिल्वः॑ । उ॒दिति॑ । अ॒ति॒ष्ठ॒त् । स॒योनीति॑ स-यो॒नि॒ । ए॒व । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । अ॒वेति॑ । रु॒न्द्धे॒ ।

असावादित्य इत्यादि ॥ सौरीमिति । "सूर्यतिष्यागस्त्य°" (पा ६·४·१४९) इति यलोपः ।

ब्रह्मतेजः प्रजां वृष्टिमन्नं ग्रामं तथा पुनः ।
१५ [1]ब्रह्मतेजोऽभिचारं च वाञ्छतां पशवः श्रुताः ॥

असावितीति ॥ तानेतान् पशून् सप्तमेऽनुवाके विधायाष्टमे पुनर्ब्रह्मवर्चसकामादीनां पश्वन्तराणि विधास्यन्नादौ कस्यचित् पशोर्विधानाय प्रस्तौति– 'असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एताꣳ सौरीꣳ श्वेतां वशामाऽऽलभन्त तयैवास्मिन् रुचमदधुः' इति । आदित्यविषये यद्वयः प्रायश्चित्तयः कल्पयुगादिभेदेन व्यवस्थापनीयाः ॥

२० य इति ॥ विधत्ते–'यो ब्रह्मवर्चसकामः स्यात् तस्मा एताꣳ सौरीꣳ श्वेतां वशामा लभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति' इति ॥

बैल्व इति ॥ यूपादिदं बाधितुं विधत्ते– 'बैल्वो यूपो भवत्यसौ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् सयोन्येव ब्रह्मवर्चसमव रुन्द्धे' इति । [2]श्रीसूक्ते [3]बिल्वोत्पत्तिरेवमाम्नायते– "आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः" (ऋ·खिल २·६·६) इति । तस्यायमर्थः–हे आदित्यवर्णे
२५ लक्ष्मि प्रथममुत्पन्नस्याऽऽदित्यस्य तपसः [4]संतापरूपात् [5]प्रकाशादभ्यूर्ध्वं तव प्रियो बिल्ववृक्षो जात इति । अतः सौर्यां पशावा बैल्वे यूपे सति सूर्यबिल्वयोः सहोदरत्वात् सयोनित्वम् । तेन च ब्रह्मवर्चसम् अपि सयोनि [6]एव संपद्यते । स्वर्णादीनां [6]तु यस्यां वेदशाखायामध्ययनानुष्ठानादिप्रवृत्तिस्तत्रैव स्वस्यापि प्रवृत्तिर्ब्रह्मवर्चसस्य सयोनित्वम् ॥

१. क–°भिचारिणम् । २. भ.आ.उ.ब.बो.ना.पा.हा–श्रीसूक्तेन । ३. गे–बिल्वोत्पत्तिरेव°;
३० हो–°रेवसमाम्ना° । ४. आ–संतापरूपात् । ५. ह१–प्रकाशादूर्ध्वम् । ६. ह१–'तु' नास्ति ।

ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताभिचरन् वारुणं दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्ये(२)-वैनं वैभीदक इध्मो भिनत्त्येवैनं

ब्राह्मणस्पत्यामिति ब्राह्मणः–पत्याम्। बभ्रुकर्णीमिति बभ्रु-कर्णीम्। एति। लभेत। अभिचरन्नित्यभि-चरन्। वारुणम्। दशकपालमिति दश-कपालम्। पुरस्तात्। निरिति। वपेत्। वरुणेन। एव। भ्रातृव्यम्। ग्राहयित्वा। ब्रह्मणा। स्तृणुते। बभ्रुकर्णीति बभ्रु-कर्णी। भवति। एतत्। वै। ब्रह्मणः। रूपम्। समृद्ध्या इति सम्-ऋद्ध्यै। स्फ्यः। यूपः। भवति। वज्रः। वै। स्फ्यः। वज्रम्। एव। अस्मै। प्रेति। हरति। शरमयमिति शर-मयम्। बर्हिः। शृणाति (२)। एव। एनम्। वैभीदकः। इध्मः। भिनत्ति। एव। एनम्। ५ १०

[1]बभ्रुकर्णी कपिलश्यामकर्णी[1]। "नासिकोदर°" (पा ४·१·५५) इत्यादिना ङीष्, सतिशिष्टत्वात् [2]तेन बहुव्रीहिस्वरो बाध्यते[2]। [v]ब्रह्मणा कर्मणा [v]स्तृणुते छादयति हिनस्तीत्यर्थः॥

स्फ्य इत्यादि॥ व्याख्यातम्॥

ब्राह्मणस्पत्यामिति॥ अभिचरतः कंचित् पशुं विधत्ते– 'ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताभिचरन्' इति। पिङ्गलवर्णकर्णयुक्ता बभ्रुकर्णी॥ १५

वारुणमिति॥ तस्य पशोः प्राच्याङ्ग° पुरोडाशं विधत्ते– 'वारुणं दशकपालं पुरस्तान्निर्वपेद्-वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते' इति। एतदनुष्ठानेन भ्रातृव्यस्य प्रथमं रोगमुत्पाद्य [8]पश्चात् [8]ब्रह्मणा ब्रह्मणस्पतिदेवताकेन कर्मणा हिनस्ति॥

बभ्रुकर्णीति॥ ब्रह्मणश्चतुर्मुखस्य [9]हेमवर्णत्वात् बभ्रुकर्ण्यां ब्रह्मरूपत्वमित्यभिप्रेत्य पशुविशेषणं प्रशंसति– 'बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै' इति॥ २०

स्फ्य इति॥ पूर्ववच्चोदकप्राप्तं बाधित्वा विधत्ते–'स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनम्' इति॥

वैष्णवमिति॥ अग्निष्टोमादिमहायज्ञप्राप्तिकामिनः पशुं विधत्ते– 'वैष्णवं वामनमा लभेत यं यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोप धावति स एवास्मै यज्ञं प्र यच्छत्युपैनं यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै' इति। राजसूये "वैष्णवं त्रिकपालं वामनो दक्षिणा" (तैसं १·८·१७) इत्युक्तत्वाद्वामनस्य [10]विष्णुदेवत्यत्वम्॥ २५

१. मै४–बभ्रुवर्णीमिति। २–२. मै४.अन्तोदात्तत्वम्।

७. ने हो१–प्राच्याङ्ग°। ८. ड१–'पश्चात्' नास्ति। ९. ने–पीतवर्णस्य। १०. ड–विष्णुदेवत्वं; ड१–विष्णुदैवत्यत्वम्।

वैष्णवं वामनमा लभेत यं यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोप धावति स एवास्मै यज्ञं प्र यच्छत्युपैनं यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै त्वाष्ट्रं वडबमा लभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां ( ३ ) प्रजनयिता त्वष्टारमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् मिथुनान् प्र जनयति
५ प्रजा हि वा एतस्मिन् पशवः प्रविष्टा अथैष पुमान्त्सन् वडबः साक्षादेव प्रजां

वैष्णवम् । वामनम् । एति । लभेत । यम् । यज्ञः । न । उपनमेदित्युप-नमेत् । विष्णुः । वै । यज्ञः । विष्णुम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । यज्ञम् । प्रेति । यच्छति । उपेति । एनम् । यज्ञः । नमति । वामनः । भवति । वैष्णवः । हि । एषः । देवतया । समृद्ध्या इति सम्-ऋद्ध्यै । त्वाष्ट्रम् । वडबम् । एति । लभेत । पशुकाम
१० इति पशु-कामः । त्वष्टा । वै । पशूनाम् । मिथुनानाम् ( ३ ) । प्रजनयितेति प्र-जनयिता । त्वष्टारम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । मिथुनान् । प्रेति । जनयति । प्रजेति प्र-जा । हि । वै । एतस्मिन् । पशवः । प्रविष्टा इति प्र-विष्टाः । अथ । एषः । पुमान् । सन् । वडबः । साक्षादिति स-अक्षात् । एव । प्रजामिति प्र-जाम् ।

वामनो ह्रस्वाङ्गः । यं यज्ञ इति । अनुष्ठातुं शक्तो न भवतीति । यज्ञो नित्यः
१५ यज्ञफलं वा यत् नोपगच्छति ॥ वडबमिति ॥ यं पुमांसं सन्तम् आरोहति वडबामिव सः अविद्यमानस्त्रीगुणो वडबः । पशूनां तन्मिथुनानां च त्वष्टा प्रजनयिता । प्रजा हीति । प्रजा च पशवः च एतस्मिन् प्रविष्टाः सूक्ष्मरूपेण यद्वयम् । अथ एवं सति एष अश्वः

त्वाष्ट्रमिति ॥ विधत्ते– 'त्वाष्ट्रं वडबमा लभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां प्रजनयिता त्वष्टारमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् मिथुनान् प्र जनयति' इति । यथा मनुष्येषु यत्र
२० क्वापि पुंसः स्तनवृद्ध्या सत्या श्मश्रुनिर्गमनात् प्राक् योषित्त्वभ्रमो भवति तद्वदश्वेष्वपि केनाप्यवयवसंनिवेशविशेषेण यस्मिन् पुंस्येवाश्वे योषित्त्वबुद्धिरितरेषामश्वानां भवति, अत एव ते ते अश्वास्तदा तदा तमश्वमारोहन्ति, सोऽयमीदृशोऽश्वो वडवः । स च त्वष्टुः प्रियः । "रेतः सिक्तस्य त्वष्टा रूपाणि वि करोति" ( तैसं १५१, द्र तैसं ६६६ ) इति श्रुतत्वात् मिथुनप्रजनयितृत्वम् ॥

प्रजा इति ॥ पशुविशेषणं प्रशंसति– 'प्रजा हि वा एतस्मिन् पशवः प्रविष्टा अथैष पुमान्त्सन्
२५ वडबः साक्षादेव प्रजां पशूनव रुन्द्धे' इति । यद्वा स्त्रीलक्षणदर्शनेनास्मिन् पशौ स्त्रीत्वबुद्ध्या प्रजा

३–३. अ मै८–'वामनो ह्रस्वाङ्गः' नास्ति । ४–४. मै४–नित्यो यज्ञः । ५. मै४–'यत्' नास्ति । ६. मै८–अश्वोऽधिरोहति । ७–७ मै८–वडबामिव विद्यमाने स्त्रीगुणे स वडवः । ८–८. मै४–मिथुनानाम् ।

११. ड–पुं पुंस । १२. हो–स्तनवृत्त्याम्, ट१–पुं स्तेनवृत्त्याम्, ने–स्त्रीवृत्त्याम् । १३. ड ट१ ने हो१–°र्णत्व° । १४–१४. ड ट१ ने हो१–इतरे । १५. ड ट१ ने–यथा । १६. ड ने हो१–विलक्षण° ।

पशूनवं रुन्द्धे मैत्रꣳ श्वेतमा लंभेत संग्रामे संयंत्ते समयकामो मित्रमेव स्वेन भागधेयेनोपं धावति स एवैनं मित्रेण सं नयति (४) विशालो भवति व्यवसाययत्येवैनं प्राजापत्यं कृष्णमा लंभेत वृष्टिकामः

पशून्। अवेति। रुन्द्धे। मैत्रम्। श्वेतम्। एति। लभेत। संग्राम इति सम्-ग्रामे। संयत्त इति सम्-यत्ते। समयकाम इति समय-काम। मित्रम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। ५ उपेति। धावति। सः। एव। एनम्। मित्रेण। समिति। नयति (४)। विशाल इति वि-शाल। भवति। व्यवसाययतीति वि-अवसाययति। एव। एनम्। प्राजापत्यमिति प्राजा-पत्यम्। कृष्णम्। एति। लभेत। वृष्टिकाम इति वृष्टि-काम।

[9]पुमान् [9]सन् [9]षण्ढ भवति तस्मात्षण्ढस्यालम्भनेन [9]साक्षात् अव्यवधानेनैव [9]प्रजा [9]पशून् च [9]अव [9]रुन्धे। समयकाम इति। [10]आर्थाये सुहृद्भिरेकमत्य समय। शत्रुभि संधिरित्यन्ये। १० [9]स [9]नयति संश्लेषयति। विशाल इति। [11]विकटशृङ्ग। "वे शालच्छङ्कटचौ" (पा ५ २ २८) इति शालच्। [12]व्यवसाययत्येनेति। मित्रलाभेन [13]कृतोद्योगमेव करोति॥

[9]षण्ढ च [17]प्रविशन्ति, तत्र धनाना प्रवेशो [18]नामापत्योत्पत्तये प्रौढ समीचीनमश्वमानीय तत्राऽऽरोहणदि रूपाय प्रवृत्ति, पशूना प्रवेशो नाम योषित्वभ्रान्त्या [19]तदारोहणे। [9]अथ तदानीं प्रजापतयावृत्ते [20] [9]एष स्वत [9]पुमान् अपि [9]सन् स्त्रीनामधारी [9]षण्ढ भवति। तदालम्भनेन [9]साक्षाद् एव सीक्रमेव [21]प्रजा १५ [9]पशून् प्राप्नोति॥

मैत्रमिति॥ परकीयसेनायामीदृशमेव शूरतम हनिष्यामीति स्वामिनोऽग्रे य प्रतिज्ञा कर्तुमिच्छति तस्य पशु विधत्ते। यद्वा—संधिकामिन पशु विधत्ते—'मैत्रꣳ श्वेतमा लभेत संग्रामे संयत्ते समयकामो मित्रमेव स्वेन भागधेयेनोप धावति स एवैन मित्रेण स नयति' इति। [9]एन [9]प्रतिज्ञावन्त [9]मित्रेण [23]कार्यसाधकेन [24]सहकारिणा [9]स [9]नयति योजयति। यद्वा - वैरिणो मित्रत्वमापाद्य तेन मित्रेण योजयति॥ २०

विशाल इति॥ "यजमानेन यूप संमित" (तैसं ६ ३ ४) इति श्रुतौ [9]यच्छ्रुत तदुपयादितु परिमाणाधिक्य विधत्ते—'विशालो भवति व्यवसाययत्येवैनम्' इति। [25]एन प्रतिज्ञाकारिण [9]व्यवसाययति [9]एव धैर्यमुत्पाद्य स्वकार्यनिश्चयवन्तमेव करोति। [27]अथवैन संधिकामिन [28]संधिवर्धनेन परो राजा [29]मम मित्रमेवेत्येतादृश निश्चयवन्त करोति॥

९ मै४-प्रजा। १० तर मै ल-आर्थाये। ११ ल-विकटशृङ्गा। १२ मै४-°त्येवैनमिति। २५ १३ मै४-कृतो°।

१७ ड-प्रशसीत, ने होर-प्रशसीत। १८ ड-नाम प्रजोत्पत्तये। १९ आ क-तदारोहणम्। २० अ उ पा-प्रजापत्युत्पत्ते। २१ ड ड१ ने हो१-प्रजा। २२ ड१-प्रज्ञातवन्तम्, ने हो१-प्रतिज्ञातवन्तम्। २३ ड१-कार्यसाधनेन। २४ हो१-सहकारिणम्। २५ अ उ पा-यच्छ्रुत। २६ हो१-एकम्। २७ ड१-अथ चैन। २८ आ क-°घटकत्वेन। २९ आ क-'मम' नास्ति। ३०

प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्द्धे शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षयत्यवाशृङ्गो भवति वृष्टिमेवास्मै नि यच्छति (५) ॥ ८ ॥

[ असौ शृणाति मिथुनानां नयति यच्छति । ]

५ प्रजापतिरिति प्रजा-पतिः । वै । वृष्ट्याः । ईशे । प्रजापतिमिति प्रजा-पतिम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पर्जन्यम् । वर्षयति । कृष्णः । भवति । एतत् । वै । वृष्ट्यै । रूपम् । रूपेण । एव । वृष्टिम् । अवेति । रुन्द्धे । शबलः । भवति । विद्युतमिति वि-द्युतम् । एव । अस्मै । जनयित्वा । वर्षयति । अवाशृङ्ग इत्यवा-शृङ्गः । भवति । वृष्टिम् । एव । अस्मै । नीति । यच्छति ( ५ ) ॥ ८ ॥

१० [ मैसं २.५.३-५, ८, ९;　　कासं १३.८ ]

ईशे इति ॥ "लोपस्त आत्मनेपदेषु" (पा ७.१.४१) इति तलोपः ॥ Vशबलः [१४]मिश्रवर्णः। [१५]कृष्णश्वेतवर्ण [१६]इत्येके । Vअवाशृङ्गः अवनतशृङ्गः । छान्दस दीर्घत्वम् । यद्वा—अवाक्छृङ्गः । छान्दसो [१७]वर्णलोपः, निरुदकादिर्द्रष्टव्यः (पा ६.२.१८४) । Vनि Vयच्छति न्यक् पातयति ॥

॥ इति द्वितीये प्रथमे अष्टमोऽनुवाकः ॥

१५ प्राजापत्यमिति ॥ विधत्ते—'प्राजापत्यं कृष्णमा लभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति' इति । सर्वस्रष्टृत्वेन वृष्टेरपि स्रष्टृत्वात्तदीशितृत्वम् ॥

कृष्ण इति ॥ घनच्छन्ने सवितरि [३०]तीव्रवृष्टिवेलायामन्धकाराभाससादृश्यमभिप्रेत्य[३१] पशु-विशेषणं प्रशंसति—'कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्द्धे' इति ॥

२० शबल इति ॥ [३२]कृत्स्नशरीरे [३३]कार्ष्ण्यप्राप्तावुदराद्यधस्तनप्रदेशविशेषेषु श्वैत्यमिश्रणं विधत्ते—'शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षयति' इति । श्वैत्यस्य मालिन्यविरोधित्वाद्विद्युत्साम्यम् ॥

अवाशृङ्ग इति ॥ वर्णमपि एवावनतशृङ्गत्वं विधत्ते—'अवाशृङ्गो भवति वृष्टिमेवास्मै नि यच्छति' इति ॥ अधोमुखत्वेन [३४]वृष्टिधारासमत्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

२५

१४. तैर-हरितवर्णः; ह-हिरण्यवर्णः । १५. मे८-कृष्णश्वेतः । १६. मे८-इत्यन्ये । १७. मे८-वर्णादिलोपः ।

३०. द१-प्रवृष्टि° । ३१. आ.र.क.बो.ना.दा-°दृश्यमिति तदभिप्रेत्य । ३२. ने-; कृत्स्नशरीरे । ३३. अ.उ.पा-कार्ष्ण्यप्राप्तावुदराद्यधस्तन°; दा-कार्ष्ण्यप्राप्तावुदराद्यधस्तन° ३० द१-°विशेषे । ३४. द.ने.दो१-°धारागमनत्वम् ।

वरु॑णꣳ सुषुवा॒णम॒न्नाद्यं॒ नोपा॑नमत् स ए॒तां वा॑रु॒णीं कृ॒ष्णां व॒शाम॑पश्यत् ताꣳ स्वायै॑ दे॒वता॑या॒ आऽल॑भत॒ ततो॒ वै तम॒न्नाद्य॒मुपा॑नम॒द्यम॑लम॒न्नाद्या॑य॒ सन्त॑म॒न्नाद्यं॒ नोप॒नमे॑त् स ए॒तां वा॑रु॒णीं कृ॒ष्णां व॒शामा ल॑भेत॒ वरु॑णमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॒ अन्नं॒ प्र य॑च्छत्यन्ना॒द ( १ ) ए॒व भ॑वति कृ॒ष्णा भ॑वति वारु॒णी ह्ये॑षा दे॒वत॑या॒ समृ॑द्ध्यै

वरु॑णम् । सु॒षु॒वा॒णम् । अ॒न्ना॒द्य॒मित्य॑न्न-अद्य॑म् । न । उपेति॑ । अ॒न॒म॒त् । सः । ए॒ताम् । वा॒रु॒णीम् । कृ॒ष्णाम् । व॒शाम् । अ॒प॒श्य॒त् । ताम् । स्वायै॑ । दे॒वता॑यै । एति॑ । अ॒ल॒भ॒त॒ । तत॑ः । वै । तम् । अ॒न्ना॒द्य॒मित्य॑न्न-अद्य॑म् । उपेति॑ । अ॒न॒म॒त् । यम् । अल॑म् । अ॒न्ना॒द्या॒येत्य॑न्न-अद्या॑य । सन्त॑म् । अ॒न्ना॒द्य॒मित्य॑न्न-अद्य॑म् । न । उ॒प॒न॒मे॒दित्यु॑प-नमे॑त् । सः । ए॒ताम् । वा॒रु॒णीम् । कृ॒ष्णाम् । व॒शाम् । एति॑ । ल॒भे॒त॒ । वरु॑णम् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । अ॒स्मै॒ । अन्न॑म् । प्रेति॑ । य॒च्छ॒ति॒ । अ॒न्ना॒द इत्य॑न्न-अ॒दः ( १ ) । ए॒व । भ॒व॒ति॒ । कृ॒ष्णा । भ॒व॒ति॒ । १०
वा॒रु॒णी । हि । ए॒षा । दे॒वत॑या । समृ॑द्ध्या॒ इति॒ सम्-ऋ॒द्ध्यै॒ ।

वरुणं सुषुवाणमित्यादि ॥ सुषुवाणं सुतवन्तम् । सुनोतेर्लिटः कानजादेशः ( पा ३·२·१०५, १०६ ) । अन्नस्य अदनम् अन्नाद्यम् । बहुलवचनाद्यत् । स्वाया इति । आत्मने देवताया [1]इति ॥

महत्तेजोऽभिचारं च यशांसि तथा पशून् । १५
समयं च तथा वृष्टिं वाञ्छतां पशवः [1]श्रुताः ॥ १ ॥

वरुणमिति ॥ तान् पशूनष्टमेऽनुवाके विधायाथ नवमेऽन्नाद्यकामादीनां पशून् विधित्सुरादौ कंचित् पशुं विधातुं प्रस्तौति– 'वरुणꣳ सुषुवाणमन्नाद्यं नोपानमत् ॥ एतां वारुणीं कृष्णां वशामपश्यत् ताꣳ स्वायै देवताया आऽलभत ततो वै तमन्नाद्यमुपानमत्' इति ॥ सुषुवाणं सोमाभिषवं कृतवन्तम् ॥

यमिति ॥ विधत्ते– 'यमलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत् ॥ एतां वारुणीं कृष्णां वशामा २० लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं ॥ यच्छत्यन्नाद एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै' इति ॥ धनिकः पुमानपि [2]भोग्याय शाल्यन्नपायसादिभोज्याय समर्थोऽपि [3]संविधातृमनुष्याभावादिना तत् [4]न प्राप्नुयात् तस्यायं पशुः । वरुणः पर्जन्यमुखेन प्रकाशमानस्य कार्ष्ण्यं संपादयति, [4]अतोऽस्य पशुवर्णस्य वरुणदेवतात्वम् ॥

१. मै४–'इति' नास्ति । २५

१. ना–स्मृताः । २. ड–योग्यो यः; ने.हो१–योग्यो नः । ३. अ.ड.जो.ना.पा. हा–र्यविधातुं मनु° । ४. आ.इ.क.जो.ना.हा–ततोऽस्य ।

मैत्रं॑ श्वे॒तमा ल॑भेत वारु॒णं कृ॒ष्णम॒पां चौष॑धीनां च सं॒धाव॑न्न॒कामो मै॒त्रीर्वा ओष॑धयो वारु॒णीराप॒ोऽपां च॒ खलु॒ वा ओष॑धीनां च॒ रस॒मुप॑ जीवामो मि॒त्रावरु॑णावे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तावे॒वास्मा॒ अन्नं॒ प्र य॑च्छतोऽन्ना॒द ए॒व भ॑वत्य॒( २ )पां चौष॑धीनां च सं॒धावा ल॑भत उ॒भय॒स्याव॑रुद्ध्यै

५ मैत्रम् । श्वेतम् । एति॑ । ल॒भे॒त॒ । वा॒रु॒णम् । कृ॒ष्णम् । अ॒पाम् । च॒ । ओष॑धीनाम् । च॒ । सं॒धावि॒ति॑ सं-धौ । अन्न॑काम॒ इत्यन्न॑-का॒मः । मै॒त्रीः । वै । ओष॑धयः । वा॒रु॒णीः । आपः॑ । अ॒पाम् । च॒ । खलु॑ । वै । ओष॑धीनाम् । च॒ । रस॑म् । उपेति॑ । जी॒वा॒मः । मि॒त्रावरु॑णा॒विति॑ मि॒त्रा-वरु॑णौ । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । तौ । ए॒व । अ॒स्मै॒ । अन्न॑म् । प्रेति॑ । य॒च्छ॒तः॒ । अ॒न्ना॒द इत्य॑न्न-अ॒दः । ए॒व । भ॒व॒ति॒ ( २ ) । अ॒पाम् । च॒ । ओष॑धीनाम् । च॒ । १० सं॒धावि॒ति॑ सं-धौ । एति॑ । ल॒भ॒ते॒ । उ॒भय॑स्य । अव॑रुध्या॒ इत्यव॑-रु॒ध्यै॒ ।

[1]सन्धाविति ॥ प्रावृट्छरदोर्मध्ये । पर्वणीत्येके । नदीकेदारमध्ये इत्यन्ये । मैत्रीर्वा इति । मित्रावरुणसंबन्धिनीनामपामोषधीनां च सन्धौ मैत्रावरुणयोरालम्भात् [V]अपाम् [V]ओषधीनाम् रसरूपान्नलक्षणस्य लाभात् [V]अन्नादः [V]भवति । "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम् । उभयस्येति । द्विप्रकारस्य [3]रसस्य ॥

१५ मैत्रमिति ॥ द्विपशुकं कर्म विधत्ते– 'मैत्रं श्वेतमा लभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपां च खलु वा ओषधीनां च रसमुप जीवामो मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अन्नं प्र यच्छतोऽन्नाद एव भवति' इति । संधिशब्दं कालपरत्वेन देशपरत्वेन च [5]द्वेधा सूत्रकारो व्याख्यातवान्– "अपां चौषधीनां च संधाविति प्रावृषि शरत्प्रतिपत्तौ [6]वा । अपि [6]वाऽपां चौषधीनां च संधौ" (आपश्रौ १९·१६·१४) इति । ऋत्वोर्मध्ये नदीक्षेत्रयोर्मध्य इति २० तदर्थः । [7]ओषधीनामुपकारकत्वेन मित्रसंबन्धित्वम् । संधौ [8]प्रयोग [9]उभयो रसोपजीवनेन प्रशस्तः ॥

अपामिति ॥ एतदेवाभिप्रेत्य संधिं प्रशंसति– 'अपां चौषधीनां च संधावालभत उभयस्यावरुद्ध्यै' इति ॥

२. पैर-तृतीये सन्धाविति । ३. मै८–'रसस्य' नास्ति ।

५. अ.उ.प.–'द्वेधा' नास्ति । ६–६. क–अपि चापां; ने–अपां; हा–वा पा । ७. अ.उ.ना– २५ °सूत्रकार°, ने हा१–°कुर्वाणत्वेन । ८. ह.बो.हा–प्रयोगात् । ९. अ.आ.इ.उ.क.बो.ट.ना.प.हा–उभय° ।

विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै मैत्रं श्वेतमालभेत वारुणं कृष्णं ज्योगामयावी यन्मैत्रो भवति मित्रेणैवास्मै वरुणं शमयति यद्वारुणः साक्षादेवैनं वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव देवा वै पुष्टिं नाविन्दन् (३) ता मिथुनेऽपश्यन्

विशाख इति वि-शाखः । यूपः । भवति । द्वे इति । हि । एते इति । देवते इति । समृध्या इति सम्-ऋद्ध्यै । मैत्रम् । श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । ज्योगामयावीति ज्योक् आमयावी । यत् । मैत्रः । भवति । मित्रेण । एव । अस्मै । वरुणम् । शमयति । यत् । वारुणः । साक्षादिति स-अक्षात् । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति । उत । यदि । इतासुरितीत-असुः । भवति । जीवति । एव । देवाः । वै । पुष्टिम् । न । अविन्दन् (३) । ताम् । मिथुने । अपश्यन् । १०

विशाखः शाखाद्वयात्मा । उक्तमाचार्येण–" यदूर्ध्वं रशनायास्तद्विशाखम् । यद्वोपरात् उभे शाखे अष्टाश्री सचषाले स्याताम् " (आपश्रौ १९ १६ १५) इति ॥ ज्योगामयावी । उक्त (तस ~ १ १) । मित्रेणैवेति । मित्रेण मित्रद्वारा वरुणस्य शान्ति वारुणेन साक्षात् वरुणस्य शान्ति । ततश्च वरुणपाशात् दीर्घाऽऽमयरूपात् मुक्तः इतासुः अपि गतासुरपि जीवति एव । देवा वा इति । पुष्टिं प्रजाभिसमृद्धिमलभमाना देवा मिथुनाभाव एव ताम् अपश्यन् १५ मिथुनाभाव एव पुष्टिर्भवतीत्यपश्यन् । ततो मिथुनेनापि तस्या न सम् अराधयन्,

विशाख इति ॥ यूपस्य शाखाद्वय विधत्ते– ' विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै ' इति । विविधे शाखे यस्यासौ विशाख । तदिद सूत्रकारो दर्शयति– " विशाखो यूप इति यदूर्ध्वं रशनायास्तद्विशाखम् । यद्वोपरादुभे शाखे अष्टाश्री सचषाले स्याताम् " (आपश्रौ १९ १६ १५) इति ॥

मैत्रमिति ॥ दीर्घरोगिणो " द्विपशुक कर्म " विधत्ते– ' मैत्र' श्वेतमा लभेत वारुण कृष्ण २० ज्योगामयावी यन्मैत्रो भवति मित्रेणैवास्मै वरुण शमयति यद्वारुण साक्षादेवैन वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव ' इति । मित्रो हि क्रूर वरुण शान्त करोति । स च वरुणपाशात् मोचयति । तयो पृथगुपक्रम ॥

देवा इति ॥ पुष्टिकामस्य पशु विधातु प्रस्तौति– ' देवा वै पुष्टि नाविन्दन् ता मिथुनेऽपश्यन् तस्या न समराधयन् तावश्विनावब्रूतामावयोर्वा एषा मैतस्या वदध्वमिति साऽश्विनोरेवाभवत् ' इति । २५ प्रजापशुसमृद्धि पुष्टि । सा च मनुष्यमिथुने पशुमिथुने च सभवतीत्येव देवा उपायम् अपश्यन् । दृष्ट्वा

४ मै४–यद्वा परा । ५ तर–चषाले । ६ तैर ल–मैत्रे° । ७ मै–वरुणेन । ८ तर मै ल–प्रजाति ।

१० आ क–यद्वोपर्युभे । ११–११ मे–द्विपशु हो१–द्विपशु । १२ ड न हा१–वरुण पाशात् । १३ ड१–पृथगुपपाश । १४ ड१–उभयम् ।

तस्यां न समराधयन् तावश्विनावब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साऽश्विनोरेवाभवद्यः पुष्टिकामः स्यात् स एतामाश्विनीं यमीं वशामा लभेताश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् पुष्टिं धत्तः पुष्यति प्रजया पशुभिः ॥ ९ ॥

[ अन्नादोऽन्नाद एव मैनत्सनिन्दन् पञ्चचत्वारिंशच्च । ] ॥

५ तस्याम् । न । समिति । अराधयन् । तौ । अश्विनौ । अब्रूताम् । आवयो । वै । एषा । मा । एतस्याम् । वदध्वम् । इति । सा । अश्विनो । एव । अभवत् । य । पुष्टिकाम इति पुष्टि काम । स्यात् । स । एताम् । आश्विनीम् । यमीम् । वशाम् । एति । लभेत । । अश्विनौ । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । पुष्टिम् । धत्त । पुष्यति । प्रजयेति प्र-जया । पशुभिरिति पशु भि ॥ ९ ॥

१० [ मैस कास ]

[9]पुष्टिससिद्धिर्नाभिजाता, [10]नावर्धन्तेति यावत् । अथ [v]अश्विनौ देवान् [v]अब्रूताम् [v]आवयो एव [v]एषा पुष्टि , आवाभ्यामेव पुष्टिहेतु , तस्मादावाभ्यां विना यूयम् [v]एतस्या [v]मा वदध्व[11] पुष्टिविषय किञ्चिदपि [12]वदितु नार्हथ । "भासन०" ( पा १ ३ ४७ ) इत्यादिना भासने आत्मनेपदम् । तत [v]सा पुष्टि [v]अश्विनो [v]एव [v]अभवत् [13]तद्धेतुकैवाभवत् ॥

१५ यमीमिति ॥ सहजातौ यमौ । तयो स्त्री यमी । गौरादित्वात् ( पा ४·१ ४१ ) ङीष् ॥

इति द्वितीये प्रथमे नवमोऽनुवाक ॥

[15]य [v]तस्या पुष्टौ [16]सम्यक् साधयितु शक्ता [v]न अभूवन् । तदानीम् [v]अश्विनौ ऊचतु – [17]आवयो एव [18]एषा [19]पुष्टि सम्बन्धिनी । तस्मात् [v]एतस्या [20]पुष्टावावाभ्या [21]विना [v]मा [v]वदध्व सभाषणमेव मा कुरुत [v]इति । तस्मात् [v]सा पुष्टि [v]अश्विनो [22]एव अधीना [v]अभवत् ॥

२० य इति ॥ विधत्ते– 'य पुष्टिकाम स्यात् स एतामाश्विनीं यमीं वशामा लभेताश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् पुष्टि धत्त पुष्यति प्रजया पशुभि ' इति ॥ एकस्मिन् [23]गर्भे सह जातौ यमौ, तयोर्मध्ये या स्त्री सा यमी ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाक ॥

२५ ९ ल–पुष्टिससिद्धि नाभिजाता, मै४–पुष्टौ ससिद्धिं नाभजन्त । १०. त२–नावर्धत । ११. त१ त२ मै–विदध्व । १२. त१ त२ मै ल–विदितुम् । १३. त१ त२–'तद्धेतुकैवाभवत्' नास्ति ।

१५ अ–नु । १६. द क खो द१ ने हा हो१–साधयितुम् । १७ द द१ ने हो१–सा आवयो । १८. द१–एषाम् । १९. द–वृद्धि । २०. द–पुष्ट° । २१. ने–'विना' नास्ति । २२ आ–'एव' नास्ति । २३ द द१ ने हो१–'गर्भे' नास्ति ।

**आश्विनं धूम्रललामुमा लभेत यो दुर्ब्राह्मणः सोमं पिपासेदुश्विनौ वै देवानामसोम-पावास्तां तौ पश्चा सोमपीथं प्राऽऽप्नुतामुश्विनाविेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्युश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनं॰**

आश्विनम् । धूम्रललाममिति धूम्र-ललामम् । एति । लभेत । यः । दुर्ब्राह्मण इति दुः ब्राह्मणः । सोमम् । पिपासेत् । अश्विनौ । वै । देवानाम् । असोमपावित्यसोम-पौ । आस्ताम् । तौ । पश्चा । ,५ सोमपीथमिति सोम-पीथम् । प्रेति । आप्नुताम् । अश्विनौ । एतस्य । देवता । यः । दुर्ब्राह्मण इति दुः-ब्राह्मणः । सोमम् । पिपासति । अश्विनौ । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । सोमपीथमिति सोम-पीथम् । प्रेति । यच्छतः । उपेति । एनम् ।

आश्विनमित्यादि ॥ धूम्रललामः धूम्रवर्णललामाङ्कितललाटः । दुर्ब्राह्मण इति । त्रिपुरुष वेदवेदिविच्छेदाद्दुर्ब्राह्मणः । यथा–"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो १० नाम यश्चैव वृषलीपतिः" ( बौगृपरि १.१०.५ ) इति । न नियतोपासनिकस्य दौर्ब्राह्मण्यम्

अन्नाद्यमन्नमार्ग्नं च वाञ्छन्तौ दीर्घरोगवान् ।
पुष्टिकामश्च नवम एतेषां पशवः श्रुताः ॥

आश्विनमिति ॥ अथ दशमेऽनुवाके नैमित्तिकाः पशवो विधातव्याः । तत्र दुर्ब्राह्मणस्य सोमा-पानेच्छां निमित्तीकृत्य पशुं विधत्ते– 'आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै १५ देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राऽऽप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्यश्विना-वेव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनं सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादप हन्ति ललामो भवति मुखत एवास्मिन् तेजो दधाति' इति । मलिनत्वं धूम्रत्वम् । ललाटे शौक्ल्येन लाञ्छितः [1]'अवशिष्टे शरीरे धूम्रवर्णः पशुरश्विनोः प्रियः । दुर्ब्राह्मणलक्षणं बौधायन आह– "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः" (बौगृपरि १.१०.५) २० इति ॥ [2]पूर्वोक्तपुनरुत्सृष्टपशौ–"यो ब्राह्मणः सन्ना तृतीयात् [3]पुरुषात्" (तैसं २.१.५) इत्युक्तत्वादीदृशो दुर्ब्राह्मणो नाधिकारी । अत्र तु [4]सोमपाने [5]श्रद्धालुत्वेनेच्छावत्त्वे सति दुर्ब्राह्मणोऽधिक्रियते । आश्विनग्रह-ब्राह्मणे– "तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजौ" (तैसं ६.४.९) इत्युक्तत्वादपूतयोः [6]तयोरितरदेववत् सोमपातृत्वं नास्ति । पश्चाद्यज्ञस्य [7]"छिन्नं शिरः"[7] [8]प्रतिसंधाय तेन तुष्टेभ्यो [9]देवेभ्यः सोमग्रहं लब्धवन्तौ । तदपि तत्रैवाऽऽम्नातम्– "तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्" २५

१. मै४–शेयः ।

१. ने–अवशिष्ट° । २. क–पूर्वोक्तपुनरुत्सृष्टे पशौ, हा–पूर्वोक्ते पुनरुत्सृष्टे पशौ । ३. आ.क–'पुरुषात्' नास्ति । ४. ड.ड१.ने हो१–सोमपानत्व° । ५. ने–श्रद्धालुत्वे, ड१–श्रद्धालुत्वे सति; ड–श्रुत्याधाधिक्ये । ६. अ. आ.ऊ.क ड ने.पा.हा हो१–'तयोः' नास्ति । ७–७. ड.ड१.ने.हो–छिन्नशिरसः । ८. अ.ऊ.पा–प्रतिसन्धाय । ९. ड ड१.ने.हो१–देवेभ्यः पश्चात् । ३०

**सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादप हन्ति ललामो ( १ ) भवति मुखत एवास्मिन् तेजो दधाति वायव्यं गोमृगमा लभेत यमजघ्निवाꣳसमभि-शꣳसेयुरपूता वा एतं वागृच्छति**

सोमपीथ इति सोम पीथः । नमति । यत् । धूम्रः । भवति । धूम्रिमाणम् । एव । ५ अस्मात् । अपेति । हन्ति । ललामः ( १ ) । भवति । मुखतः । एव । अस्मिन् । तेजः । दधाति । वायव्यम् । गोमृगमिति गो-मृगम् । एति । लभेत । यम् । अजघ्निवाꣳसम् । अभिशꣳसेयुरित्यभि-शꣳसेयुः । अपूता । वै । एतम् । वाक् । ऋच्छति ।

इत्याचार्य । पश्चेति । "पश्च पश्चा च°" ( ५.३.३३ ) इति निपात्यते । पश्चादित्यर्थः । धूम्रिमाणमिति । धूम्रत्व मलिनत्वम् । "वर्णदृढादिभ्यः°" ( पा ५.१.१२३ ) इतीमनिच् । ललाम १० इति मत्वर्थीयो लुप्यते ।

गोमृगमिति ॥ प्राणिनो बाधमानश्चरन् ग्राम्य पशवो गोमृग । यमिति । गवादिवधमकृतवन्त [२]यम् [२]अभिशंसेयुः तथापि "त्वयैव कृतमिति"[२] । मिथ्यापापसयोजनमभिशसनम् । अपूतेत्यादि ।

( तैसं १.४.९ ) इति । अतः समानशीलत्वाद्दुर्ब्राह्मणस्य सोमं पिपासोः [१]अश्विनौ [१]देवता । [१०]पशोर्धूम्रवर्णेन दौर्ब्राह्मण्यलक्षणं [११]धूम्रिमाणं मालिन्यम् [१]अस्मात् [१]अप [१]हन्ति । ललाटे शौक्ल्येन [१]अस्मिन् [१]मुखतः [१]एव १५ मुख्यमेव ब्रह्मवर्चसलक्षणं [१]तेजः धत्ते ॥

वायव्यमिति ॥ मिथ्यापवादं निमित्तीकृत्य कंचित् पशुं विधत्ते– 'वायव्यं गोमृगमा लभेत यमजघ्निवाꣳसमभिशꣳसेयुरपूता वा एतं वागृच्छति यमजघ्निवाꣳसमभिशꣳसन्ति नैष ग्राम्यः पशुर्नाऽऽरण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजघ्निवाꣳसमभिशꣳसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेन भागधेयेनोप धावति स एवैनं पवयति' इति । गोभिः महारण्ये चरितुं गताद्वृषभात् कस्यांचिन्मृग्या-२० मुत्पन्नो गोमृगः । [१२]उभयलक्षणदर्शनात् तथात्वं निश्चेयम् । कश्चित् पुरुषो ब्राह्मणं न हतवांस्तथाऽपि शङ्कया तादृशं [२]यं पुरुषं जना ब्रह्महेत्यपवदेयुस्तस्यायं पशुः । यद्यप्यस्य [१३]पुरुषस्य ब्रह्महत्याप्रयुक्तो [१४]नरको नास्ति तथापि [२]अपूता [२]वाक् [१५]ऋच्छति [२]एतं निन्दारूपा वाक्[१५] वाह्निकैर्जनैः क्रियमाणा प्राप्नोत्येव । तामेव

२–२. मै॰–कृतान्तं वदेयुः ।

१०. अ.आ.उ.क.ओ.ट.ट१.ना.ने.पा.हो१–पशोर्धूम्रत्ववर्णेन । ११. अ.उ.पा–धूम्रभावं । २५ १२. ने–उभय° । १३. अ.उ.पा–पुरुषस्यापि । १४. अ.उ पा–'नरक' नास्ति । १५–१५. ने–ब्रह्महत्यारूपा ।

यमर्जघ्निवाऽसमभिशऽसन्ति नैष ग्राम्यः पशुर्नाऽरण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमर्जघ्निवाऽसमभिशऽसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेन भागधेयेनोप धावति स एवैनं(२)नं पवयति पराची वा एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं प्र विशति

यम्। अर्जघ्निवाऽसम्। अभिशऽसन्तीत्यभि शऽसन्ति। न। एष। ग्राम्य। पशु। न। ५
आरण्य। यत्। गोमृग इति गो मृग। न। इव। एष। ग्रामे। न। अरण्ये। यम्।
अर्जघ्निवाऽसम्। अभिशऽसन्तीत्यभि-शऽसन्ति। वायु। वै। देवानाम्। पवित्रम्। वायुम्।
एव। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। स। एव (२)। एनम्। पवयति।
पराची। वै। एतस्मै। व्युच्छन्तीति वि-उच्छन्ती। वीति। उच्छति। तम। पाप्मानम्। प्रेति। विशति।

गतम्। नैष इति। हिंस्रत्वान्न ग्राम्यत्व युज्यते, ग्रामचरत्वादारण्यत्व न घटते। नेवेष इति। १०
अभिशस्तत्वाद्ग्रामे चरितु नार्हति, मनुष्यत्वान्नारण्ये। पवयतीति। छान्दसो वृद्ध्यभाव।
केचिद्वाक्यान्तर पवयति छान्दसमाहु॥

पराचीत्यादि॥ [3]पराची पराङ्मुखी [4]व्युच्छन्ती उषा [5]अस्मै [6]व्युच्छति [7]भाति अस्याभ्युदये [8]व्युष्टि [9]प्रातिकूल्य प्रतिपद्यते। ततश्च [10]अय [11]तम [12]पाप्मान तमोरूप [13]महत्पाप [14]वा [15]प्र [16]विशति। १५

निन्दा। [16]निमित्तीकृत्य [17]एष [18]विहित [19]गोमृग मुख्य [20]ग्राम्य [21]न भवति, मृग्यामुत्पन्नत्वात्। [22]न अपि मुख्य [23]आरण्य वृषभादुत्पन्नत्वात्। अभिशस्तस्य [24]ग्रामे [25]न अस्ति वासो बन्धुभि सह व्यवहाराभावात्, [26]न अपि ■ वानप्रस्थादिवत् [27]अरण्ये [28]ग्रामवासित्वात्। [29]देवाना मध्ये वायो पवित्रत्व द्रव्यशुद्धिहेतुत्वात् अवगम्यते। [30]तच्च याज्ञवल्क्येन स्मर्यते—"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसै। मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च॥" (याज्ञस्मृ १ १९७) इति॥ अनुष्ठितेऽप्यस्मिन् पशौ निन्दा केचिल्लौकिका न परित्यजन्तीति चेत्तर्हि निन्दन्तु नाम ते[31], तथाऽप्यसावभिशस्त [32]शिष्टैर्व्यवहार्य एव॥ २०

पराचीति॥ सोमयागमध्य आश्विनशस्त्रकाले [33]सूर्योऽनाविर्भाव निमित्तीकृत्य कश्चित् पशु विधत्त—'पराची वा एतस्मै व्युच्छन्ती व्युच्छति तम पाप्मान प्र विशति यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमा लभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मात् तम

३ ल–पश। ४ मै४–'अस्मै' नास्ति। ५ मै४–प्रभाति। ६ मै४ ल–व्युष्टि। ७ ल– २५
अप्रातिकूल्य। ८ मै४–'अय' नास्ति। ९ पर– अल्पपाप महत्पाप मै४–पाप महत्पाप। १० तर–
'वा' नास्ति।

१६ ड१ हो१–प्रवृत्ती°। १७ इ ड ने हो१–विधि। १८–१८ अ उ पा हा–वानप्रस्थादिवत् सहारण्ये ड–वानप्रस्थातिपयारण्य ड१–वानप्रस्थादिवदारण्य। १९ अ उ पा–तत्र। २० ने–'ते' नास्ति। २१ ने 'शिष्टै' नास्ति। २२ ने–सूर्यो नाऽऽविर्भवतीति। ३०

यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमा लभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मात् तमः पाप्मानमप हन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते ॥ १० ॥

[ ललाम स एव षट्चत्वारिꣳशच्च । ]

५ यस्य । आश्विने । शस्यमाने । सूर्यः । न । आविः । भवति । सौर्यम् । बहुरूपमिति बहु-रूपम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । तमः । पाप्मानम् । अपेति । हन्ति । प्रतीची । अस्मै । व्युच्छन्तीति वि-उच्छन्ती । वीति । उच्छति । अपेति । तमः । पाप्मानम् । हते ॥ १० ॥

[ मैसं २.५.४, काठसं १३, ६ ]

१० क इत्याह– यस्येत्यादि ॥ आश्विन नाम परःसहस्र शस्त्रम् ( आश्रौ ६.५.६, ९ ) । सौर्यमित्यादि । गतम् । प्रतीचीति । प्रतीची प्रत्यगञ्चना । एतमेव प्रति एतदभ्युदयाभिमुख्येन व्युच्छन्ती । व्युच्छतीति । ततश्च तमः पाप्मानम् अप हते अपहन्ति । व्यत्ययेनात्मनेपदम् । "उच्छी विवासे" । "छे च" ( पा ६.१.७३ ) इति तुक् ॥

॥ इति द्वितीये प्रथमे दशमोऽनुवाकः ॥

१५ पाप्मानमप हन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते ' इति । "अग्निहोता गृहपतिः राजा" ( आश्रौ ६.५.६ ) इत्यादिकं सहस्रसंख्याकाभिर्ऋग्भिरुपेतं शस्त्रमाश्विनम् । तच्चातिरात्रयागे रात्रिपर्यायनामकेषु शस्त्रेषु पठितेषु "पश्चात् उप.कालवेलायाम्" आरब्धव्यम् । तस्मिञ्छस्त्रे शस्यमाने सति सूर्य. उदित्वा मेघाद्यावरणमन्तरेण यदाऽऽविर्भवेत् तदा नायं पशुरपेक्षितः । यस्य यजमानस्य "तथा सत्" न आविर्भवेत्, एतस्मै यजमानायेयं रात्रिः व्युच्छन्ती प्रभातं प्राप्नुवती सती न सम्यक् प्राप्नोति,
२० किंतु पराची व्युच्छन्ती "पराङ्मुखी तस्मिन्नपरक्ता" सती प्रभातं प्राप्नोति । तदानीमयं यजमानः प्रकाशविरुद्धं तमः स्वर्गविरोधिनं पाप्मानं च प्र विशति, तादृशस्यायं पशुः । स च बहुरूपश्चित्रवर्णः । प्रतीची अभिमुखी मद्विषयमनुरक्तेत्यर्थः । तेन पशुना तमः पाप्मानं च अप हन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥

२५ ११–११. मै८–उच्छ विवासने ।

२३. द.दं१.ने हो१–°भ्याभि° । २४–२४. आ–उप.कालात् प्राग्वेलायाम्; क–पश्चात् उप॰काल॰प्राग्वेलायाम् । २५–२५. आ.क.द.दं१–पदानीं । २६. अ.ड.क.वो.दं१.ना.ने पा–प्राप्नुवन्ती । २७–२७. ने–पराङ्मुखी मत्सरा । २८. अ.ड. दं१.ने.पा.हो१–मेमुखा ।

❀इन्द्रं वो विश्वतस्परीन्द्रं❀ नरो

इन्द्रम्। वः । विश्वतः । परीति॥ इन्द्रम्। नरः ॥

अथ याज्याकाण्डे वैश्वदेवम् एव[1]। तत्र "ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकामः" (तैस २ २ ११) इत्यस्य द्विहविष इष्टेरैन्द्रस्य एकादशकपालस्य पुरोनुवाक्या 'इन्द्रं वः' इति गायत्री॥ व्याख्याता चेयम् "इन्द्रं वो विश्वतस्परि हवामहे" (तैस १ ६ १२) इत्यत्र। इह त्वस्याः प्रतीकग्रहणम्। हे ऋत्विग्यजमानाः, 'वः युष्मदर्थं विश्वेभ्यः 'जनेभ्य उपरि 'इन्द्रं 'हवामहे आह्वयामः। 'अस्माकम् एव 'केवलः स्वामी 'अस्तु इति॥ ५

तत्रैव याज्या॥ 'इन्द्रं नरः' इति त्रिष्टुप्॥ इयमपि तत्रैव व्याख्याता॥ इह तु प्रतीकग्रहणम्। 'नरः मनुष्याः 'इन्द्रं हवन्ते आह्वयन्ति। कीदृशम्? 'नेमधिता अर्धेन धार्यमाणं,

[1]दौर्भिक्ष्याभिचारौ च [2]सूर्योऽभिर्भावनर्जनम्। १०
निमित्तीकृत्य दशमे पशवः समुदीरिताः ॥ १ ॥

तैरेतैर्दशभिरनुवाकैः [3]काम्यपशवः समापिताः। अथैकादशेऽनुवाके काम्येष्टियाज्याः [पुरोनुवाक्याः] उच्यन्ते। तस्मिंश्च काम्येष्टिकाण्डे पूर्वोदाहृतात् सोमारौद्रचरोरूर्ध्वं द्विहविष्का काचिदिष्टिरेवमाम्नायते– 'ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकाम इन्द्रं चैव मरुतश्च स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति' (तैस २ २ ११) इति॥ प्रकृतौ सह प्रयुज्यमानयोरपि द्वयोः पुरोडाशयोरेकस्मिन्नेवाधिश्रयणम्, इह तु तद्बाधितुं विधत्ते– "आहवनीय ऐन्द्रमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै" (तैस २ २ ११) इति॥ [4]पापेन वस्यस वसुमत्तर पापवस्यस पापाधिक्यो पेतमित्यर्थः। मरुताम् [5]उग्रदेवत्वात्तदीयं हविः पापवस्यसम्। [6]तस्य ऐन्द्रात् हविषः [7]विभागेनावधारणार्थं [8]भिन्नाग्नावधिश्रयणम्॥ तत्रत्यकपालसंख्यां प्रशंसति– "सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्द्धे" (तैस २ २ ११) इति। "ईदृङ्च" (तैस १ ८ १३, ४ ६ ५) इत्यादि- २० नोक्ताः सप्तसंख्याका मरुत एको गणः। तथाविधाश्च गणाः सप्तसंख्याकाः। तेषां हविष्प्रदानेन गणशो बहुविधगणरूपान् भ्रातृमित्रभृत्यादीन् अवरुन्द्धे॥ प्रकृतौ सामिधेनीमथानुवचनात् प्रागेव हविरासादनं, तदपवदितुं विधत्ते– "अनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति" (तैस २ २ ११) इति। अत्र [9]सूत्रम्– "काल ऐन्द्रमासादयति। सामिधेनीष्वनूच्यमानासु मारुतम्" (आपश्रौ १९ १९ १४) इति। यजमानस्यानुकूलं वर्त्म वर्तनं यस्या विशः सेयमनुवर्त्मा॥ २५

इन्द्रमिति॥ अनयोरुभयोर्हविषोर्याज्यानुवाक्यानां पूर्वकाण्ड एव समाम्नातानां [10]प्रतीकान्युदाहरति– 'इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्म' इति। [11]प्रथमं [12]युग्मं

1 प– 'एव' नास्ति।

1. अ हा–दौर्भिक्ष्याभि°, ड ड१ ने–°भिचारौ। 2 ड °र्भावनर्जिनं। 3 इ–काम्याः पशवः। 4 ड ने–पापिन। 5 ड–अग्र°। 6–6 इ–तस्यैव हविर्दोषो, आ क–ऐन्द्रस्य तद्धविः। ३० 7 ड ड१ श्री ह्रो१–विभागेन धारणार्थं। 8 इ–भिन्नाधिश्रयणम्। 9 आ क ड२–सूत्रकारः। 10 आ ड२–प्रतीकानुदा°। 11–11 इ–एतदृक्चतुष्टयं प्रथमकाण्डे व्याख्यातम्। 12 ड–युग्मं प्रथमकाण्डे।

*मरुतो यद्ध वो दिवो *या वः शर्म ॥

मरुत । यत् । ह । व । दिव ॥ या । व । शर्म ॥

" यत्सर्वपामर्धमिन्द्र प्रति " (तैस ५ ४ ८) इति। [1]कदा [2]यदा [3]पार्या [4]दु खपरिहारप्राप्ति हेतुभूता [v]धिय कर्माणि प्रज्ञा वा [v]युनजते तदा इन्द्रमाह्वयन्ति। स [v]त्व [5]शूर [6]नपाता नृभि
५ सभजनीय [6]शवस बलाद्धेतो [6]चकान [6]तृप्तिर्शल, इदृशस्त्वमस्मान् [7]गोमति [7]व्रजे गोष्ठ [7]आ [7]भज स्थापयेति ॥

अथ मारुतस्य सप्तकपालस्य पुरोनुवाक्या ' मरुतो यद्ध व ' इति गायत्री ॥ इयमपि " वैश्वानरो न " (तैस १ ५ ११) इत्यत्र व्याख्याता। इह तु प्रतीकग्रहणम्। हे [8]मरुत, [v]व युष्मान् [v]सुम्नायन्त सुखमिच्छन्तो वय [9]यत् यस्मात् [9]दिव द्युलोकात् [v]हवामहे आह्वयाम
१० तस्मादस्मान् शीघ्रम् [v]उप [v]गन्तन उप गच्छतेति ॥

तत्रैव याज्या ' या व शर्म ' इति त्रिष्टुप्॥ इयमपि तत्रैव व्याख्याता ( तैस १ ५ ११ ), प्रतीकग्रहणमिहास्या। हे मरुत, [10]युष्माक यानि सुखानि युष्मान् भजमानाय यजमानाय यानि च त्रिस्थानस्थितानि हवींषि दत्तवते यजमानाय अधिक [v]यच्छत [11]तानि शर्माणि [v]अस्मभ्य विशेषेण यच्छत, हे वर्षितार कामानाम्, अस्माक शोभनपुत्रादिक रयिं दत्त [12]॥

१५ षष्ठप्रपाठकस्यान्त्यानुवाके[13] (तैस १ ६ १२), द्वितीय युग्म तु पञ्चमप्रपाठकस्यान्त्यानुवाके (तैस १ ५ ११) पठितम्। तदर्थस्तु तत्रैव द्रष्टव्य [14]॥

उक्तामेवेष्टिं फलान्तराय विधत्ते " एतामेव निर्वपेद्य कामयेत क्षत्राय च विशे च समद दध्यामित्यैन्द्रस्यावदान मृयादिन्द्रायानु ब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावदान् ब्रूयान्मरुद्भ्योऽनु ब्रूहीत्याश्राव्य ब्रूयादिन्द्र यजेति स्व एवैभ्यो भागधेये समद दधाति वितृंहाणास्तिष्ठन्ति " (तैस
२० २ २ ११ ) इति। मदेन सह वर्तत इति समद कलह। राज्ञ प्रजायाश्च परस्पर कलह कुर्यामिति [15]कामयितुरियमिष्टि। अस्यामिष्टावय प्रकृतेर्विशेष — प्रकृतावाग्नेयस्यावदानकाले पुरोनुवाक्यामेवमुक्त्वा [16]तदाश्रावणात् ऊर्ध्वमाग्नेययाज्याया एव प्रैष वदेत्, न तु [17]देवतान्तरयाज्याया। [18]अत्र त्वन्यविषयोऽनुवाक्याप्रैषोऽन्यविषयश्च याज्याप्रैष इति [18]विशेष। एव च सति एष्य इन्द्रमरुद्द्वय स्वस्वभागे कलह कृतवान् भवति। तदीयकलहानुसारेण राजा विशश्च वितृंहाणा विशेषेण परस्पर हिंसा कुर्वाणास्तिष्ठन्ति ॥ कलह
२५ समाधानकामस्य तामेवेष्टिं विधत्ते– " एतामेव निर्वपेद्य कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवत

२–२. मै४– 'कदा यदा' नास्ति। ३ अ तं तर मै–दु खसारप्राप्ति°, मै८–दु खपरिप्राप्ति°। ४ त–धी। ५. अ तं र तर पर ल तृप्यति मै४–तृप्य। ६–६ अ तं र मै–युष्माक यानि यानि शर्माणि सुखानि शशमानाय युष्मान् भ्रमण वर्षितार कामानामस्मभ्य सुवीर शोभनपुत्रादिक रयिं धन धत्तेति।

[13]. आ–°नुवाके पठितम्। [14]. ने हा–कामी तदेयमिष्टि। [15]. अ उ जो पा हा–
३० तदाश्रवणात्, आ–तदाभयात्। [16]. बो ना मा–देवतान्तरस्य याज्याया। [17] आ क जो द ब र मा हा हो१–१६। [18]. आ–'विशेष' नास्ति।

भरेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमुचꣳ सुकृतं दैव्यं जनम् ।
अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥

भरेषु । इन्द्रम् । सुहवमिति सु हवम् । हवामहे ।
अꣳहोमुचमित्यꣳहः –मुचम् । सुकृतमिति सु कृतम् । दैव्यम् । जनम् ।
अग्निम् । मित्रम् । वरुणम् । सातये । भगम् । द्यावापृथिवी इति द्यावा पृथिवी । मरुतः । स्वस्तये ॥ ५

"ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकामः" (तैस २ २ ११) इत्यस्याः पुरोनुवाक्या– 'भरेष्विन्द्रम्' इति जगती ॥ [1]भरेषु संग्रामेषु [2]इन्द्रं [3]सुहवं स्वाह्वानम् आह्वान प्रयोजनस्य शीघ्रं कर्तारम् । प्रत्ययोत्पत्तेः प्रागेव "बहुलं छन्दसि" (पा ६ १ ३४) इति

यमेत्रागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एव" (तैस २ २ ११) इति । कल्पेरन् परस्परकलहरहिता भवेयुः । एतानिन्द्रमरुतः स्वस्वभागभाजिनः कल्पयति । तथा सति राजा विशश्च कल्पन्त एव कलहरहिता १० स्निग्धा भवन्त्येव । एतयोः [19]कलहतरसमाधानार्थं द्वयोः [20]पूर्वोदाहृता एव याज्यानुवाक्याः [20]॥ इष्ट्यन्तरं विधत्ते–"ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रं चैव विश्वाꣳश्च देवान्स्वेन भाग धेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति" (तैस २ २ ११) इति ॥ प्रकृतौ हविर्द्वयस्य [21]सहावदानं नास्ति । अत्र तु तद्विधत्ते– "ऐन्द्रस्यावदाय वैश्वदेवस्याव द्यदथैन्द्रस्योपरिष्टादिन्द्रियेणैवास्मा उभयतः सजातान् परि गृह्णाति" (तैस २ २ ११) इति । 'द्विर्हविषोऽवद्यति' (आपश्रौ २ ६ १ २१) इति १५ श्रुतत्वात् एकैकस्य हविषो द्विर्द्विरवदान[22] कर्तव्यम् । तथा सत्यत्र [23]सकृदैन्द्रमवदाय ततो वैश्वदेवं द्विरवद्येत् पुनरप्युपरिष्टादैन्द्रमवद्येत् । एवं सति यजमानार्थं सजातान् [24]परिगृह्णातीति ग्रामनिवासिनः सर्वानुभयोः पार्श्वयोरिन्द्रियसामर्थ्ययुक्तान् करोति । [25]अत्र दक्षिणाविशेषं विधत्ते–"उपाधाय्यपूर्वयं वासो दक्षिणा सजातानामुपहित्यै" (तैस २ २ ११) इति । वस्त्रस्योभयपार्श्वान्तयोरुपानीय[26] [27]स्थापनीयं रक्तसूत्रमुपाधाय्यं, तच्च [28]पूर्वमेवोपानयनकाले वस्त्रं याति प्राप्नोतीति पूर्वयम् । उपाधाय्यं पूर्वयं यस्मिन् वाससि तदुपाधाय्य २० पूर्वयं [29]विचित्रमित्यर्थः । अत एव सूत्रकार –"उपाधाय्यपूर्वयं वासो दक्षिणा । चित्रान्तमित्यर्थः" (आपश्रौ १९ २० १२) ॥ तादृशस्य वाससो दानं सजातानामुपहित्यै, यजमानसेवायै संपद्यते ॥

भरेष्विति ॥ अस्यामिष्टौ पुरोनुवाक्यामाह–'भरेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमुचꣳ सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये' इति । [1]इन्द्रम् अग्न्यादिदेवांश्च [2]भरेषु ध्रियमाणेषु संपाद्यमानेषु हविःषु [3]हवामहे आह्वयाम । किमर्थम्? [4]सातये देवेभ्यो हविर्दानाय, २५ [5]स्वस्तये यजमानस्य श्रेयसे च । कीदृशमिन्द्रम्? [6]सुहवं सुखेनाऽऽह्वातुं शक्यम् । [7]अꣳहोमुचं पापात् मोचयितारं [8]सुकृतं शोभनं हितं करोतीति सुकृत् तं सुकृतं, [9]दैव्यं दिवि भवं, [10]जनं जनयितारं [30]वृष्टिद्वारेण सस्योत्पादकम् । [31]अत्र [32]पूर्वार्धस्येन्द्रविषयत्वादुत्तरार्धस्येतरबहुदेवविषयत्वाच्च हविर्द्वयस्यैकैव पुरोनुवाक्या ॥

१९ ने–°समाधानार्थमेतयोरेव्याम् ड ड१ हो१–कलहसमा° । २०–२० ड–पूर्वोदाहृतावेव याज्यानुवाक्ये । २१ ड१–सहावदान । २२ आ क–°दान सह । २३ अ उ जो ना पा हा –°सकृदिन्द्र° । २४ आ क ड ड१–'परिगृह्णातीति' नास्ति । २५ आ क ड अथ । २६ हा–°रुपनीय । २७ ड१–'स्थापनीय' नास्ति । २८ ड–पूर्वमेव वाससः°, जो ना हा–पूर्वमेवाधापन° । २९ आ क– 'विचित्रमित्यर्थः' नास्ति । ३० ने वृष्टिद्वारा । ३१ ने तत्र । ३२ अ उ पा–पूर्वार्धचस्ये° ।

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।
शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥

ममत्तु । नः । परिज्मेति परि-ज्मा । वसर्हा । ममत्तु । वातः । अपाम् । वृषण्वानिति वृषण्-वान् ।
शिशीतम् । इन्द्रापर्वतेतीन्द्रा पर्वता । युवम् । नः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः ॥

५ सम्प्रसारणे आकारान्तलक्षणस्याचोऽप्रसङ्गात्* "ईषद्दु सुष्ठु°" (पा ३·३·१२६) इति खल्, कृदुत्तरपदप्रकृतिस्वरत्वम् , लित्स्वर । हवामहे आह्वयामः । पूर्ववत् सम्प्रसारणम् । यद्वा-- सुहव सुयुद्ध युद्धे जेतृत्वात् । "भावेऽनुपसर्गस्य" (पा ३ ३ ७५) इति ह्वयतेरप्प्रत्यये सम्प्रसारणम्, तेनैव बहुव्रीहौ, "आद्युदात्त द्व्यच् छन्दसि" (पा ६·२·११९) इत्युत्तरपदाद्युदात्तत्वम् । अंहोमुच पापेभ्यो मोचयितार सुकृत सुष्ठु कर्तारम् । "सुकर्मपाप°" (पा ३·२·८९) इति करोते क्विप् ।
१० दैव्य दिवि भवम् । "देवाद्यञञौ" (द्र. पा ४·१ ८५ वा ३) इति अञ् । जनम् अन्यमपि द्युलोके जातम् । एकैकत्वेन तमाचष्टे--अग्निं मित्र वरुण सातये । "ऊतियूति°" (पा ३·३·९७) इत्यादिना सनेः क्तिन्प्रत्ययो निपात्यते । भग द्यावापृथिवी मरुत. च एतानप्याह्वयाम । किमर्थम् ? सातये लाभाय अभिमतानि नो यथा दद्युरिति । किंच-- लब्धस्य चाविनाशार्थम् ॥
अथ तत्रैव याज्या ॥ 'ममत्तु नः' इति त्रिष्टुप् ॥ ममत्तु तृप्यतु नः अस्मदर्थम् अस्मान्
१५ वा अभिमतप्रदानेन तर्पयतु । परिज्मा परितः सर्वतः भक्षयिता । "श्वन्नुक्षन्°" (उ १६५)

ममत्त्विति ॥ तत्रैव याज्यामाह-- 'ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः' इति । परितः सर्वतो जेमनं भक्षणं यस्यासौ सोऽयं परिज्मा । स च नः अस्मान ममत्तु हर्षयतु । वासरस्य हन्ता गमयिता सूर्यः, स च नः ममत्तु वातः नः ममत्तु । अपां वृषण्वान् वर्षकः पर्जन्यदेवो नो ममत्तु । पर्वतशब्देन कैलासादिपर्वतवासी
२० देवविशेषो हिमवान् वाऽभिधीयते । आश्वमेधिकेषु पशुविधिषु "हिमवतो हस्ती" (तैसं ५.५·११) इति देवत्वश्रवणात् । हे इन्द्रापर्वतौ युवां नः अस्मान् शिशीतं तनूकुरुतम् । पापबहुलानामस्माकं पापक्षयस्तनूकरणम् । तत् तेन हविःप्रदानेन विश्वे देवा. नः अस्मान् वरिवस्यन्तु परिचर्यासमये स्वपाऽवगोपयन्तु ॥

* [लिखितपुस्तकेषु यथावत् स्थितोऽयं पाठः, 'आकारान्तलक्षणस्य युच' प्रसङ्गात्' इति संभाव्यते । अत्र
२५ द्रष्टव्यम् 'आतो युच' (पा ३·३·१२८), मै अकारान्त°] । ७. मै४-एकैकत्वेनः । ८-८. मै४-'सातये......निपात्यते' नास्ति । ९. तै१ तै२- अभिमतानि । १०. तै२ मै-'यथा' नास्ति । ११. तै१ तै२ मै लब्धये प्रासन्न ।

१३. ने-अर्हन्तु । १४-१४. ऽ-कैलासादिपर्वतविशेष , ने-कैलासादिपर्वताधिदेवविशेष, अ आ. ऽ.प बे ना.प हा१-कैलासादिपर्वताधिदेवविशेषः । १५. ने-हविर्देवत्वश्रवणात ; हा१-हविर्देवत्वभा... ।
३० १६. ने-तनूकुरुतम्° ।

काम्येष्टियाज्यापुरोनुवाक्या ]

प्रिया वो नाम ( १ ) हुवे तुराणाम्। आ यत् तृपन्मरुतो वावशानाः ॥

प्रिया । व । नाम ( १ )। हुवे। तुराणाम्। आ। यत्। तृपत्। मरुत । वावशाना ॥

[12]इत्यादिना जने कनिन्प्रत्ययो निपात्यते। अनेर्गा जिनातेर्गा अग्निरुच्यते। [13]वसर्हा अग्निहोत्र शरणाभिमुखस्थानार्हा वसनार्हा। नाशब्दो लुप्यते। पृषोदरादि (पा ६ ३ १०९)। "सुपा सुलुक्" (पा ७ १ ३९) इति सोराकार। यद्वा—वसितृणा छादयितृणा काष्ठादीना हन्ता। छान्दसो ५
रेफोपजन। वस्ते पचाद्यचि (पा ३ १ १३४) हन्ते क्विप् (पा ३ २ ७६)। कश्चिदाह—वासरस्य हन्ता गमयिता वसर्हा। वर्णविकारलोपौ छान्दसौ। आदित्य उच्यते। वात वायुश्च ममत्तु। अपा वृषा वर्षिता पर्जन्य तद्वान् [14]तत्सहितो वात। "अनो नुट्" (पा ८ २ १६)। हे इन्द्रापर्वता इन्द्रापर्वतौ। पर्वत सनरार इत्येके। युवामपि न अस्मान् शिशीत तनूकुरुत निर्मलीकुरुतम्। श्यते "बहुल छन्दसि" (पा २ ४ ७६) इति शप श्लु, ईत्व च। तत् तस्मात् विश्वे अपि १०
देवा अन्येऽपि जना न अस्मभ्य वरिवस्यन्तु अन्न दातुमिच्छन्तु, वरिवोऽन्नम्। "छन्दसि परेच्छायाम्" (द्र पाभा ३ १ ८) इति क्यच्॥

"पृश्नियै दुग्धे प्रैयङ्गव चरु निर्वपेन्मरुद्भ्यो ग्रामकाम" (तैस २ २ ११) इत्यस्या पुरोनुवाक्या—'प्रिया वो नाम' इति द्विपदा त्रिष्टुप्॥ हे मरुत, व युष्माक प्रिया प्रियाणि नाम

इष्ट्यन्तर विधत्ते—"पृश्नियै दुग्धे प्रैयङ्गव चरु निर्वपेन्मरुद्भ्यो ग्रामकाम पृश्नियै वै पयसो १५
मरुतो जाता पृश्नियै प्रियङ्गवो मारुता खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति" (तैस २ २ ११) इति। "पृश्नि श्वेता गौस्तादृश्या गोर्मरुता प्रियङ्गूना(णा) [37]चोत्पत्तिप्रसिद्धि शाखान्तरीयार्थवादे द्रष्टव्या। 'पृश्नियै प्रियङ्गव' इत्यत्र 'पयसो [38]जाता' इत्यनुवर्तत। एकोदरत्वात् प्रियङ्गूना (णा) मरुद्देवत्यत्वम्॥ विधत्ते—"प्रियवती याज्यानुवाक्ये भवत प्रियमेवैन" समानाना करोति द्विपदा पुरोऽनुवाक्या भवति द्विपद एवाव रुन्द्धे २०
चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे" (तैस २ २ ११) इति। प्रियशब्दोऽस्ति ययोस्ते ऋचौ प्रियवत्यौ। ते [39]चात्रोदाहरिष्येते। तत्प्रयोगाद्यजमानस्य समानाना मध्ये प्रियत्वम्। तयोर्ऋचोर्विद्यमान पाठप्राप्ते [41]द्विपादत्व चतुष्पादत्व" च मनुष्यप्राप्त्या पशुप्राप्त्या च प्रशस्यते॥

प्रिया इति॥ तत्र पुरोनुवाक्या द्विपदामाह—'प्रिया वो नाम हुवे तुराणाम्। आ यत् तृपन्मरुतो वावशाना' इति। हे मरुत तुराणा हवि स्वीकार प्रति त्वरमाणाना व युष्माक प्रिया २५
नाम प्रियाणि [42]नामानि आ हुवे आह्वयामि। यत् यस्माद्यूय तृपत् तृप्ति वावशाना कामयमाना स्थ तस्मादाह्वयामि॥

१२ ज—इत्यादौ। १३ ज—'वसर्हा' नास्ति १४ तर ज—सहित।

३७ इ—°प्रसिद्धा। ३८ इ—इष्टव्यम्। ३९ हो१—अनुजाता। ४० अ क ड—चोदाह°।
४१-४१ आ क ड ने भृ हो१—द्विपदत्व चतुष्पदत्व च। ४२ हो१—धामानि।　　　३०

श्रियसे॒ कं भा॒नुभि॒ः सं मि॑मिक्षिरे॒ ते र॒श्मिभि॒स्त ऋक्व॑भिः सुखा॒दयः॑ ।
ते वाशी॑मन्त इ॒ष्मिणो॒ अभी॑रवो वि॒द्रे प्रि॒यस्य॒ मारु॑तस्य॒ धाम्नः॑ ॥

श्रि॒यसे॑ । कम् । भा॒नुभि॒रिति॑ भा॒नु-भि॒ः । समिति॑ । मि॒मि॒क्षि॒रे॒ ।
ते । र॒श्मिभि॒रिति॑ र॒श्मि-भि॒ः । ते । ऋक्व॑भि॒रित्यृक्व॑-भिः । सु॒खा॒दय॒ इति॑ सु-खा॒दयः॑ ।
५ ते । वाशी॑मन्त॒ इति॒ वाशि॑-मन्तः । इ॒ष्मिणः॑ । अभी॑रवः । वि॒द्रे । प्रि॒यस्य॑ । मारु॑तस्य । धाम्नः॑ ॥

नामानि। “सुपां सुलुक्°” (पा ७·१·३९) इति लुक्। तुराणा कार्यं प्रति त्वरमाणानां हुवे आह्वयामि। पूर्ववत् सम्प्रसारणम् (पा ६·१·३२)। आ इति [15]उपसर्गश्रवणाद्योग्य [16]क्रियापदमध्याह्रियते। आगच्छतेत्यर्थः। आगमन विशिनष्टि– यत् यस्मिन्नागमने वावशाना: ग्रामादिक कामयमानाः यजमानाः [17]तृपत् [18]तृपेयुरिति। लेटि वचनव्यत्ययः (पा ३·१·८५)। तृपतिस्तौदा-
१० दिक.। यद्वा–[19]तृप्तिस्तृपत् [20]औणादिकोतिप्रत्यय (?द.उ २५१)। यत् यस्माद्यूय तृप्तिं वावशाना कामयमानाः स्थ, तस्मादागच्छतेति, यजमानस्य वा तृप्तिं वावशाना. यस्मात्तस्मादागच्छतेति। वशेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम्। “न वश.” (पा ६·१·२०) इति सम्प्रसारणाभावः॥

तत्रैव याज्या॥ श्रियस इति चतुष्पदा जगती। विद्र इति चतुर्थपादादिः॥ हे मरुतः, श्रियसे सेवितु क जल वृष्ट्यर्थम्। तुमर्थे (पा ३.४.९) असेप्रत्ययः। भानुभिः भानवद्भिः
१५ [21]भानशीलैर्वा रश्मिभिः सूर्यस्य रश्मिभि करै स मिमिक्षिरे सगच्छन्ते। मिक्षतिर्गतिकर्मा छान्दसः। यद्वा-लोके जल श्रयितु रश्मिभि सह मिमिक्षिरे मेढुमिच्छन्ति वृष्ट्या पृथिवीं

श्रियस इति॥ तत्रैव चतुष्पदां याज्यामाह– ‘श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः’ इति। ते मरुतः पुरोवाक्यया. स्तुताः कं सुखं श्रियसे प्राणिभिराश्रयितुं भानुभिः भास्वरैः रश्मिभिः सूर्यरश्मिभिः
२० सहिताः सं मिमिक्षिरे मेढुं वृष्ट्या भूमिं सम्यक् सेक्तुमिच्छन्ति। ते मरुतः ऋक्वभिः याज्यापुरोनुवाक्याभ्यामृग्भिः स्तुता. सन्तः सुखादयः शोभनं हविः खादितवन्तो भक्षितवन्तः। ततः ते मरुतो वाशीमन्त. शब्दवन्तः गर्जनघोषरूपबहुविधशब्दवन्तः इष्मिणः स्वगृहान् प्रति गतिमन्तः अभीरवः स्वसामर्थ्य निश्चयेन विघ्नकारिभ्योऽसुरेभ्यो भयरहिताः प्रियस्य मारुतस्य धाम्नः मरुतां संबन्धि यदिदं स्थानं तत्र विद्रे लब्धवन्तः॥

२५ १५. तै.तै२.मै-आदपदश्र°। १६. मै-°मध्याहार्यम्। १७. तै१.तै२.मै-तृपत्। १८. अ. मै१–तृपेयु°॥ १९. तै१.तै२.मै-°तृपत्। २०. तै२.मै–औणादिको तिप्रत्यय। २१. मै भानशीलैर्वा।

४३. मै–दे। ४४. तै१–भासुरैः; मै तै१–स्वैः। ४५. तै१–‘मेढुं’ नास्ति।

सेक्तुमिच्छन्ति । ते मरुतः सुखादयः सुखादनाः । खादतेरौणादिक [22]इप्रत्ययः । सुष्ठु हविषां भक्षयितारो भूत्वा ऋत्विग्भिः सगच्छन्ते । ऋक्वन्तो मन्त्रवन्तः ऋत्विज इत्यर्थः । "छन्दसीवनिपौ" (पा ५ २·१०९ वा २) इति वनिप् । अयस्मयादित्वेन (पा १ ४ २०) पदत्वात् कुत्वम्, भत्वात् जश्त्वाभावः । ऋत्विग्भिः सयुज्य हवींषि भक्षयन्तीत्यर्थः । ते मरुतः वाशीमन्तः शब्दवन्तः इष्मिणः गमनवन्तः अभीरवः भयरहिताः, प्रियस्य सर्वाभिमतस्य मारुतस्य धाम्नः मरुतां सबन्धिनः स्थानविशेषस्य विद्रे लब्धवन्तः सर्वोपकारकत्वात् हविषः सबन्धितया च विशिष्टं पदं प्राप्ताः । पूर्ववत् कर्मणः सप्रदानत्वात् [23]"चतुर्थ्यर्थे षष्ठी"[23] (द्र पाभा १ ४ ३२) । विन्दतेर्लिटि द्विर्वचनाभावश्छान्दसः । "इरयो रे" (पा ६ ४ ७६) इति रेभावः । यद्वा–लटि वचनव्यत्ययेनैकवचनम्, "बहुलं छन्दसि" (पा २ ४ ७३) इति विकरणस्य लुक् । "लोपस्त आत्मनेपदेषु" (पा ७ १ ४१) इति तलोपः । "बहुलं छन्दसि" (पा ७ १ ८) इति रुट् । पादादित्वात् न निहन्यते (पा ८ १ १६ १८) ॥

इष्ट्यन्तरं विधातुं प्रस्तौति–"देवासुराः सयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत्समेतया सज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरु ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि समजानत" (तैस २ २ ११) इति । देवा असुराश्च यदा युद्धार्थमुद्यतास्तदानीमहमेव ज्येष्ठो भविष्यामि नेतर इत्येव परस्परं ज्यैष्ठ्यमनङ्गीकुर्वाणा देवाः परस्परं प्रियरहिताः सन्तः सेनाः [46]चतुर्धा विभज्य विविधं यथा भवति तथा प्रक्रान्तवन्तः । तत्र वसुभिः सहितोऽग्निरेकः सघः । रुद्रैः सहितः सोमो द्वितीयः सघः । मरुद्भिः सहित इन्द्रस्तृतीयः सघः । आदित्यैः सहितो वरुणश्चतुर्थः सघः । तदानीमिन्द्रः [47]प्रजापतिमुपसेव्य तदुपदेशेन सज्ञानीनामिकामिष्टिं कृतवान् । तत ऊर्ध्वं [48]"तदिष्टिसामर्थ्यादपगतमत्सरा देवा ज्यैष्ठ्यार्थमिन्द्रं सम्यक् अभ्यनुज्ञातवन्तः । सम्यग्ज्ञायतेऽभ्यनुज्ञायते ययेष्ट्या[49] सा सज्ञानी नाम । तानूनप्त्रार्थवादत्वेन[49] सज्ञान्या अननुष्ठितत्वान्नास्ति कस्यचित् प्राधान्य, किंतु स्वकार्यसिद्धिमभिप्रेत्य सर्वे मात्सर्यं जहुः । इह त्विष्टिप्रसादात् इन्द्रस्य प्राधान्यम् । एतच्चोभयं वरपमेवायुगभेदाद्वा द्रष्टव्यम् ॥

[50]अथ विधत्ते–"य समानैर्मिथो विप्रियः स्यात् तमेतया सज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभि स जानते वसिष्ठः समानानां भवति" (तैस २ २ ११) इति । इन्द्रमेव भूतं स्वामिनमेव सन्तमेनं यजमानं ज्यैष्ठ्यार्थं [51]सम्यगभ्यनुजानन्ति । ततोऽयं समानानां वसिष्ठो वासयितृतमः पालको भवति ॥

२२ ल–प्रत्यय २३–२३ ल–'चतुर्थ्यर्थे षष्ठी' नास्ति ।

४६ ने हो१–चतुर्विधम् । ४७ इ–प्रजापतिमुपाधावदुपसेव्य । ४८ आ क जो ना हा–इष्टि° । ४९–४९ आ क ड द१ श्रृ हो१–असौ सजानी । तानू° जा ना हा–असौ सजानी, तानूनप्त्रार्थवादे तेन तेन ने–सा सज्ञानी नाम । अर्थवादत्वेन । ५० ने– 'अथ' नास्ति । ५१ इ–सम्यगनु° ।

अ॒ग्निः प्र॑थ॒मो वसु॑भिर्नो अव्या॒त् सोमो॑ रु॒द्रेभि॑र॒भि र॑क्षतु॒ त्मना॑ ।
इन्द्रो॑ म॒रुद्भि॑र्ऋतु॒धा कृ॑णोत्वादि॒त्यैर्नो॒ वरु॑णः॒ सꣳ शिशातु ॥
सं नो॑ दे॒वो वसु॑भिर॒ग्निः सꣳ (२) सोम॑स्त॒नूभी॑ रु॒द्रिया॑भिः ।
समिन्द्रो॑ म॒रुद्भि॑र्य॒ज्ञियैः॒ समा॑दि॒त्यैर्नो॒ वरु॑णो अजिज्ञिपत् ॥

५ अ॒ग्निः । प्र॒थ॒मः । वसु॑भि॒रिति॒ वसु॑-भि॒ । न॒ । अ॒व्या॒त् । सोम॑ । रु॒द्रेभि॑ः । अ॒भीति॑ । र॒क्ष॒तु॒ । त्मना॑ ।
इन्द्र॑ । म॒रुद्भि॒रिति॑ म॒रुत्-भि॒ । ऋ॒तु॒धेत्यृ॑तु-धा । कृ॒णो॒तु॒ ।
आ॒दि॒त्यैः । न॒ । वरु॑ण । समिति॑ । शि॒शा॒तु॒ ॥
समिति॑ । न॒ । दे॒व । वसु॑भि॒रिति॒ वसु॑-भि॒ । अ॒ग्नि । समिति॑ (२) । सोम॑ । त॒नूभि॑ । रु॒द्रिया॑भिः ।
समिति॑ । इन्द्र॑ । म॒रुद्भि॒रिति॑ म॒रुत्-भि॒ । य॒ज्ञियै॑ । समिति॑ । आ॒दि॒त्यै । न॒ । वरु॑णः । अ॒जि॒ज्ञि॒प॒त् ॥

१० "य समानैर्मिथो विप्रिय स्यात् तमेतया सज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपाल निर्वपेत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपाल वरुणायाऽऽदित्यवते चरुम्" (तैस २ २.११) इत्यस्याः पुरोनुवाक्या– 'अग्निः प्रथम.' इति त्रिष्टुप् ॥ [v]अग्नि. [v]प्रथमः प्रधान. आद्यो वा [v]वसुभि· सह अस्मान् [v]अव्यात् रक्षतु । [v]रुद्रेभिः रुद्रै सह [v]सोमः अस्मान् [v]अभि [v]रक्षतु [v]त्मना आत्मना आत्मनैव अन्यनिरपेक्ष. । "मन्त्रेष्वाङयादेरात्मन." (पा ६.४.
१५ १४१) इत्याकारलोप । [v]इन्द्र [v]मरुद्भि सह [v]ऋतुधा ऋतावृतौ तद्धर्मान् [v]कृणोतु करोतु तया तया विधया प्रवर्तयतु । धाप्रत्ययश्छान्दस । [v]आदित्यै सह [v]वरुण. अस्मान् [v]स [v]शिशातु सशितव्रतान् करोतु निर्मलीकरोतु । श्यतेर्लोटि शप. श्लुः, "बहुल छन्दसि" (पा ७.४.७८) इत्यभ्यासस्येत्वम् ॥

अथ याज्या– 'स न.' इति त्रिष्टुप्, पङ्क्तिप्रकारो वा ॥ [v]न. अस्मान् अग्निः [v]देवः
२० [v]वसुभि सह [v]सम् [v]अजिज्ञिपत् सम्यक् ज्ञापयतु [25]अस्मज्ज्येष्ठ [26]सम्यगभ्युपगच्छतु । ज्ञापयते

अग्निरिति ॥ तत्र पुरोनुवाक्यामाह– 'अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रेभिरभि रक्षतु त्मना । इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैर्नो वरुणः सꣳ शिशातु' इति । [v]वसुभिः सहितः [v]अग्निः [v]प्रथमः संप्राधिर्गतः [v]नः अस्मान् अवतु । रुद्रैः सहितः [v]सोमः [v]त्मना स्वयमेव प्रीतिपुरःसरम् [v]अभि [v]रक्षतु । [v]मरुद्भिः सहितः [v]इन्द्रः [v]ऋतुधा [51]तत्तदृतुचितभोगधारिणोऽस्मान् करोतु । [v]आदित्यैः सहितः [v]वरुण.
२५ [v]न. अस्मान् [v]सं [v]शिशातु संशितव्रतान् सम्यगनुष्ठितव्रतान् [52][53]कृणोतु ॥

समिति ॥ तत्रैव याज्यामाह–'सं नो देवो वसुभिरग्नि· सꣳ सोमस्तनूभी रुद्रियाभिः । समिन्द्रो मरुद्भिर्यज्ञियै समादित्यैर्नो वरुणो अजिज्ञिपत्' इति । [v]वसुभिः सहितः [v]अग्निः [v]देवः [v]नः अस्मान् [v]सम्

२४. अ–श्लस्य । २५. तै.१.तै.२.गै–अस्मज्ज्येष्ठं' नास्ति । २६. अ.ले–सम्यगस्य° ।
५२. ट.गै.हो.१–°शिशाग° । ५३. भा. ट१.गं–करोतु ।

यथाऽऽदित्या वसुभिः संबभूवुर्मरुद्भी रुद्राः समजानताभि ।
एवा त्रिणामन्नहृणीयमाना विश्वे देवाः समनसो भवन्तु ॥

यथा । आदित्याः । वसुभिरिति वसु-भिः । संबभूवुरिति सम्-बभूवुः ।
मरुद्भिरिति मरुत्-भिः । रुद्राः । समजानतेति सम्-अजानत । अभि ।
एवा । त्रिणामन्निति त्रि-नामन् । अहृणीयमानाः । ५
विश्वे । देवाः । समनस इति स-मनसः । भवन्तु ॥

छान्दसो छुट्, छान्दसो वर्णविकार । सोम अपि रुद्रियाभि रुद्रार्हाभि तनूभि शरीरै एकादशधा स्थिताभिरस्मान् समजिज्ञिपत् । इन्द्र च यज्ञिय यज्ञार्हैः मरुद्भि सहास्मान् समजिज्ञिपत् । वरुण च आदित्य सह अस्मान् समजिज्ञिपत् ॥

अथ याज्यानिकल्प — 'यथा' इति त्रिष्टुप् ॥ यथा वसुभि सह आदित्या १० सवभूवु एकीभूवु, यथा वा मरुद्भि सह रुद्रा अभि समजानत आभिमुख्येन सगता । एवा एवम् । "सुपा सुलुक्°" (पा ७ १ ३९) इति अमो डादेश । हे त्रिणामन्, त्रीणि नामानि गुह्यप्रकाशसोमनिमित्तानि यस्य स तथोक्त । "पूर्वपदात् सज्ञायामग" (पा ८ ४ ३) इति णत्वम् । अग्नियजमानयोरभेद उपचर्यते । अहृणीयमाना अहीयमाना निभूतय । हृणि क्रुध्यादि । ईदृशा विश्वे देवा परस्परमभि समनस भवन्तु समानमनसो भवन्तु । १५ "समानस्य छन्दसि°" (पा ६ ३ ८४) इति सभाव ॥

समजिज्ञिपत् सम्यगनुष्ठान ज्ञापयतु । रुद्रसबन्धिनीभि तनूभि सहित सोम समजिज्ञिपत् । यज्ञयोग्यै मरुद्भि सहित इन्द्र समजिज्ञिपत् । आदित्यै सहित वरुण समजिज्ञिपत् ॥

यथेति ॥ तत्रैव विकल्पितामन्या याज्यामाह—'यथाऽऽदित्या वसुभि सवभूवुर्मरुद्भी रुद्रा सम जानताभि । एवा त्रिणामन्नहृणीयमाना विश्वे देवा समनसो भवन्तु' इति । पूर्वोक्तेषु सप्तचतुष्टयमध्यवर्तिषु २० देवेषु यथा वरुणसमीपवर्तिन आदित्या अग्निसमीपवर्तिभि वसुभि सबभूवु सगता प्रीतियुक्ता बभूवु, यथा चेन्द्रसमीपवर्तिभि मरुद्भि सह सोमसमीपवर्तिन रुद्रा अभि समजानत ज्यैष्ठ्य सम्यक् अभ्यनुज्ञातवन्त, त्रीणि नामान्याहवनीयगार्हपत्यदक्षिणाग्निरूपाणि हव्यवाहनकव्यवाहनसहरक्षोरूपाणि वा यस्यासौ सोऽग्निस्त्रिणामा, हे त्रिणामन्, एवा एवमेव यथा रुद्रादय तद्वत् विश्वे देवा अन्येऽपि रुद्रादि

२७–२७. त१ तर–सोमोऽभि । २८ तर–'एकीभूवु' नास्ति । २९–२९. मै४ ऐकमत्यं २५ गता । ३० त तर मै ल 'अमो' नास्ति । ३१ पर–अभिक्रीयमाना, मै४–अहीयमान । ३२ मै४–हृणीङ् । ३३ मै४–परस्परमस्माभिर्वा समनसो ।

५४ ने–प्रापयतु । ५५ इ क बो ना हा–तथा । ५६ ड ढ१ भृ हो१–रुद्रादिपरिसरवर्तिन ।

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने। अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥
सं यदिषो वनामहे सं हव्या मानुषाणाम् ।

कुत्र । चित् । यस्य । समृताविति सम्ऽऋतौ । रण्वा । नरः । नृषदन इति नृऽसदने ।
अर्हन्त । चित् । यम् । इन्धते । संजनयन्तीति सम्ऽजनयन्ति । जन्तवः ॥
५ समिति । यत् । इषः । वनामहे । समिति । हव्या । मानुषाणाम् ।

अथ 'कुत्रा चित्' इत्यनयोरनुष्टुभोः कुत्रचिद्विनियोगो द्रष्टव्यः। केचिदाहु – अत्रैव स्विष्टकृतः पुरोनुवाक्या याज्या चेति। कुत्रा चित् कुत्रचिदपि सर्वत्रापीति यावत्। यस्य समृतौ संप्राप्तौ नरः मनुष्या रण्वा रमणा भवन्ति। रणनवन्तो वा गतिमन्तो वा। रवि गतौ, इदित्वान्नुम् (पा ७ १ ५८), पचाद्यच् (पा ३ १ १३४)। नृषदने नरा सीदन्ति
१० यत्र तत्र सर्वत्र प्रदेशे। किं च यमेवाग्निम् अर्हन्तः महान्तः पूजयन्तो वा मनुष्या इन्धते दीपयन्ति। किं च यम् अग्निं जन्तवः मनुष्याः संजनयन्ति आधानादिना सम्यगुत्पादयन्ति। सोऽस्माकमभिमतं दातेति शेषः।

याज्या 'सम्' इति। यस्मात् वयं इषः गती संप्रार्थयामहे मनुष्याणां संबन्धिनी अस्माकमेव स्यादिति। तथा हव्या हव्यं वहन्ति कर्माणि च स वनामहे वयमेव संपादयितार

१५ समीपवर्तिनो देवाः सर्वे अह्रणीयमाना वैरिभिः अनपह्रियमाणविभूतयः समनसः परस्परं समानमनस्का भवन्तु। यद्यप्यत्र चत्वारि हवींषि तथाऽपि सहप्रदानेन पुरोनुवाक्याया भेदो नास्ति, तथा याज्याया अपि। यथा पूर्वत्र ग्रामकामं प्रति विहितयोरैन्द्रवैश्वदेवहविषोः सहप्रदानात् पुरोनुवाक्यादिभेदो नास्ति॥

कुत्रेति॥ अत्रैव स्विष्टकृतः पुरोनुवाक्यामाह–'कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने। अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः' इति। यस्य स्विष्टकृद्देवस्य समृतौ संगतौ सत्यां नृषदने
२० मनुष्यस्थाने ग्रामगृहादौ कुत्र चित् यत्र कुत्रापि नरः मनुष्याः रण्वाः रममाणास्तिष्ठन्ति, किं च यं स्विष्टकृद्देवम् अर्हन्तः चित् उचितमन्त्रविशेषैः पूजयन्त एव तदीयाहुत्यर्थम् इन्धते वह्निं प्रज्वलयन्ति, प्रज्वाल्य च जन्तवः यजमानाः संजनयन्ति समीचीनं फलमुत्पादयन्ति, तादृशः स्विष्टकृद्देवः धर्मादर्शयति शेषः॥

समिति॥ अत्रैव याज्यामाह–'सं यदिषो वनामहे सं हव्या मानुषाणाम्। उत द्युम्नस्य शवस
२५ ऋतस्य रश्मिमा ददे' इति। यत् यस्मात् कारणात् इषः इष्यमाणान्यन्नानि सं वनामहे स्विष्टकृद्देव

३४. मै८–'केचिदाहु' नास्ति। ३५. मै८–चेति केचित्। ३६–३६. मै८–सगमने। ३७–३७. मै८–मनुष्या रममाणा। ३८. म–रणन्त। ३९–३९. त१ तै२,ल–यत्र यत्र। ४०–४०. तै१ त२,मै८–सोऽस्माकमस्य ऋतस्य सत्यस्य रश्मिमिमम्।

४७. नेहो१ अप्रश्रियमाणा विभूतय, भू–अपह्रियमाणा विभूतय, हा–अनपह्रियमाणा विभुत।
३० ४८. अ क भू–मन्त्रविशेषै। ४९. ने–तदाहुत्यर्थम्।

सार्म्यैष्टियाज्यापुरोनुवाक्याः ]

उत द्युम्नस्य शर्वस (३) ऋतस्य रश्मिमा ददे ॥
यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत् ॥

उत । द्युम्नस्य । शर्वसः (३)। ऋतस्य । रश्मिम् । एति । ददे ॥
यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः । ५
एति । वः । अर्वाची । सुमतिरिति सु-मतिः । ववृत्यात् ।
अꣳहोः । चित् । या । वरिवोवित्तरेति वरिवोवित्-तरा । असत् ॥

स्यामेति । उत अपि चेत्यर्थः । द्युम्नस्य धनस्य धनवतो वा शवसः बलस्य ऋतस्य सत्यस्य रश्मिं यमनम्[41] अग्निम् आ ददे आददीमहि, वचनव्यत्ययः (पा ३.१.८५), आश्रयामह इत्यर्थः ॥

"आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकामः" (तैसं २.३.१) इत्यस्याः पुरोनुवाक्या— १०
'यज्ञो देवानाम्' इति त्रिष्टुप् । महेषु व्याख्याता— "कदा चन" (तैसं १.४.२२) इत्यत्र ।

प्रसादेन सत्यमनामः, मानुषाणां यजमानानां हव्या [60]होमयोग्यानि द्रव्याणि सं वनामहे, उत अपि च द्युम्नस्य धनस्य शवसः बलस्य ऋतस्य यज्ञस्य च रश्मिं रश्मिवत् प्रकाशमुत्कर्षम् आ ददे स्वीकुर्मः । [61]तस्मात् कारणादेवमनुग्रहीतारं स्थिरकृतेयं [62]भजामहे इति शेषः ॥

इत्यन्तरं विधत्ते— "आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रति नुदन्ते १५ योऽलं भूत्यै सन् भूतिं न प्राप्नोत्यादित्यानेव भुवद्वतः स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयन्ति भवत्येव" (तैसं २.३.१) इति । यदीययोर्याज्यापुरोनुवाक्ययोर्भुवच्छब्दः श्रूयते [63]त एत आदित्या भुवद्वन्तः । यद्यपि पुरोनुवाक्यायां 'भवता मृडयन्तः' इति भवतेरर्थं शब्दः पठितः, यद्यपि च याज्यायां 'भवति प्रणीतौ' इति भवतीत्येपशब्दः पठितो न तु भुवच्छब्दः क्वाप्यस्ति, तथाऽपि वर्णविकारमभिप्रेत्य 'भुवद्वन्तः' इत्युच्यते । एवमन्यत्रापि "वायवे नियुत्वत आ लभेत" (तैसं २.१.१), "अग्नये २० [64]पथिकृते" (तैसं २.२.२), इत्यादौ विशेषणैर्याज्यानुवाक्यागताः शब्दाः [65]स्मार्यन्त इति द्रष्टव्यम् । ते च याज्यादिगताः शब्दास्तत्तत्प्रकृतोचितफलस्य[66] [67]सूचकाः । अतोऽत्रापि भूतिसूचकभुवच्छब्दवत्त्व इत्युक्तं भवति । तथा सति भुवद्वन्तः फलत्वेन दातव्यभूतिमन्त इत्यर्थोऽपि लभ्यते ॥

यज्ञ इति ॥ तत्र पुरोनुवाक्यामाह— 'यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत्' इति । अयं यज्ञः देवानां सुम्नं सुखं २५ प्रति एति गच्छति प्रवर्तते । हे आदित्यासः यूयमस्मान् मृडयन्तः सुखयन्तः भवत तिष्ठत । युष्माकं

४१. तै१,तं२,मै,ले–आददीमहे।

६०. द,हो१–हविर्योग्यानि, ने–यानि हवींषि योग्यानि। ६१. ड१–अस्मात्। ६२. अ, आ,उ,ड,ड१,ने,पा,हो१–भजामः। ६३. अ,उ,पा–वतः। ६४. अ–स्थिरकृते। ६५. आ,द,ड१–स्मर्यन्ते। ६६. अ,उ,पा–°प्रकृतोदितफलस्य। ६७. ड,ड१,ने,हो१–वाचकाः। ३०

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्ट घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥

शुचिः । अपः । सूयवसा इति सु-यवसा । अदब्धः ।
उपेति । क्षेति । वृद्धवया इति वृद्ध-वयाः । सुवीर इति सु-वीरः ।
५ नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रणीताविति प्र-नीतौ ॥

अयमस्मदीय यज्ञ देवाना सुम्न सुख प्रति एति गच्छतु । किं च– हे आदित्या, यूयमप्यस्मान् मृडयन्त भवत । किं च–युष्माकं सुमति शोभनाऽनुग्रहात्मिका बुद्धि अर्वाची अस्मदभिमुखी आ ववृत्यात् आवर्तताम् । किं च अंहोश्चित् ज्ञातुरिव ज्ञातृष्विव या मति वरिवोवित्तरा धनस्य लम्भयित्री भवेदिति ॥

१० तत्रैव याज्या– ‘ शुचि ’ इति त्रिष्टुप् ॥ शुचि शुद्ध भूत्वा अप कर्माणि कर्मफलानि वा उप क्षेति उपगच्छति । क्षि निवासगत्यो । “ बहुल छन्दसि ” (पा २ ४ ७३) इति शपो लुक् । सूयवसा शोभनयवसा शोभनाशना वा । “ अन्येषामपि दृश्यते ” (पा ६ ३ १३७) इति दीर्घत्वम् । “ परादिश्छन्दसि ” (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम् । अदब्ध येनचिदप्यहिंसित वृद्धवया प्रभूतान्नतम सुवीर शोभनपुत्रपौत्रादिक । “ वीरवीर्यौ च ” १५ (पा ६ २ १२०) इत्युत्तरपदाद्युदात्तत्वम् । किं च– केचिदपि– त नकि घ्नन्ति हन्तु

सुमति अनुग्रहबुद्धिरर्वाचीनेष्वस्मासु प्रवृत्ता सती आ ववृत्यात् आवर्तताम् । या सुमति, अंहो चित् अस्मदीयपापादपि आवर्तते पाप विनाशयतीत्यर्थं, सा सुमति वरिवोवित्तरा असत् अतिशयेन परिपर्याऽस्मिका भवतु ॥

शुचिरिति ॥ तत्रैव याज्यामाह– ‘ शुचिरप सूयवसा अदब्ध उप क्षेति वृद्धवया सुवीर । २० नकिष्ट घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ’ इति । अथ यजमान शुचि सन् अप अनुष्ठीयमानं कर्म उप क्षेति समीपे प्राप्नोति । कीदृशोऽयम् ? सूयवसा शोभन यवस तृण [illegible] यस सोऽयं सूयवसा, अदब्ध कैरपि शत्रुभिरतिरस्कृत, वृद्ध दीर्घ वय आयुर्यस्यासौ वृद्धवया चिरजीवीत्यर्थं, शोभना वीरा पुत्रा भृत्याश्च यस्यासौ सुवीर । य इत्थं [illegible] आदित्यानां प्रणीतौ प्रणयने कर्मणि भवति प्रवर्तते तं यजमान शत्रव अन्तित समीपे २५ नकि घ्नन्ति न विनाशयन्ति । दूरात् अपि न घ्नन्ति । नकि शब्दो निषेधवाची ॥

४२. गे०–आदित्यास । ४३ [illegible] –अंहो । ४४ गे०–ज्ञातु आत्मज्ञातुरेव वा [illegible] । ४५–४५. गे–शोभनाशना क०–‘ शोभनाशना ’ नास्ति । ४६ अ– प्रभूतान्न ।

६८. [illegible] । ६९. [illegible] –आवर्तता, [illegible] –आवर्ततां । ७० [illegible] । ७१–७१ [illegible] ।

धारयन्त आदित्यासो जगत् स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा ( ४ ) असुर्यमृतावानश्चयमाना ऋणानि ॥

धारयन्त । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपा इति गो पा ।
दीर्घाधिय इति दीर्घ धियः । रक्षमाणा ( ४ ) । असुर्यम् ।
ऋतावान इत्यृत-वानः । चयमाना । ऋणानि ॥

---

समर्था भवन्ति । "युष्मत्तत्ततक्षु षु° " ( पा ८ ३ १०३ ) इति षत्वम् । अन्तिक अन्तिकेऽपि स्थिता न च दूरात् दूरेऽपि स्थिता । "कादिलोपो बहुलम्" ( द्र पा ६ ४ १४९ वा ८ ) इत्यन्तिकस्य लोप । कस्यैतदेव भवतीत्याह— य आदित्यानाम् आदित्यार्थं प्रणीतौ परिचरणे भवति वर्तते ॥

"आदित्येभ्यो धारयद्वद्भ्यश्चरु निर्वपेदपरुद्धो वाऽपरुध्यमानो वा" ( तस २ ३ १ ) इत्यस्या पुरोनुवाक्या— 'धारयन्त' इति त्रिष्टुप् ॥ जगत् धारयन्त स्थापयन्त आदित्यास आदित्या स्था स्थास्नव । "क्विप् च" ( पा ३ २ ७६ ) इति क्विप् । देवा देवनशीला

---

इष्टयन्तर विधत्ते– "आदित्येभ्यो धारयद्वद्भ्यश्चरु निर्वपेदपरुद्धो वाऽपरुध्यमानो वाऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वत स्वेन भागधेयेनोप धावति त एवैन विशि दाधत्यनपरुध्यो भवति" ( तैसं २ ३ १ ) इति । धारयच्छब्दो यद्वियोर्याज्यानुवाक्ययोर्वर्तते त इमे धारयद्वन्त । स्थानभ्रष्ट स्वस्थाने धारयितु क्षमा इति तस्य पदस्य पर्यवसितार्थ । यो राजा पूर्व स्वराष्ट्राद्वैरिणा नि सारित सोऽपरुद्ध, यस्त्विदानीं नि सार्यते सोऽपरुध्यमान, तयोरन्यतरस्येयमिष्टि । अपरोद्धार पूर्व नि सारयितार । अवगमयितार इदानीं नि सारयितुमुद्यता । अथ वा पुन स्वराष्ट्र प्रापयितार । विशि स्वराष्ट्रगतप्रजाया दाधति धारयन्ति स्थापयन्तीत्यर्थ । ततोऽय वैरिभिरपरोद्धुमशक्यो भवति ॥

धारयन्त इति ॥ तत्र पुरोनुवाक्यामाह– 'धारयन्त आदित्यासो जगत् स्था देवा विश्वस्य भुवनस्य गोपा । दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि' इति ॥ [72]एते आदित्या, अस्मदभिमत कुर्वन्त्विति वाक्यशेष । कीदृशा ? धारयन्त अपरुद्ध यजमान स्वराष्ट्रे स्थापयन्त, जगत् स्था कृत्स्न जगदनुग्रहीतु तत्र तत्र विष्ठन्ति, यद्वा जगत् धारयन्त [73]इत्यन्वय । स्था [74]स्थिता देवा दीव्यन्त । विश्वस्य भुवनस्य [75]गोपा पालयितार [75] जगद्धारयितु [76]दीर्घाभूता धीर्येषा ते दीर्घाधिय, असव प्राणास्ते यस्य सन्ति सोऽय यजमानोऽसुरस्तस्मै हितमिद कर्म असुर्य, यद्वा–राक्षसवत् बाधको राजाऽसुर, तन्निवारणायोपयुक्तमिद [77]कर्म असुर्य, तत् रक्षमाणा, ऋत सत्य स्वराष्ट्रे यजमान स्थापयाम इत्येतादृशवचन युक्ता ऋतावान, ऋणानि चयमाना अपरोद्धुर्वैरिणो दारिद्र्यसंपादनेन बहून्यृणानि [78]सपादयन्त ॥

---

७२ आ भू– 'एते' नास्ति, ड१–एत व ने हो१–एव । ७३ आ क– इत्ययमन्वय । ७४ ड१ ने हो१–स्थिरा । ७५ अ इ उ जो ड१ ने पा भू हा हो१–गोपायितार । ७६ आ क ड१– दीर्घभूता, भू दीर्घाभूता । ७७ आ [illegible] ड भू–कर्मासुरवदिति । ७८ ड ड१ ने हो१–स्पादयन्ति ।

**तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम् ।**
**ऋतेनाऽऽदित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु ॥**

तिस्रः । भूमीः । धारयन् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् ।
ऋतेन । आदित्याः । महि । वः । महित्वमिति महि-त्वम् । तत् । अर्यमन् । वरुण । मित्र । चारु ॥

५ विश्वस्य भुवनस्य भूतजातस्य गोपाः पोपका दीर्घाधियः दीर्घाण्यविच्छिन्नानि धियः कर्माणि उदयास्तमयलक्षणा बुद्धयो वा येषां ते दीर्घाधियः । छान्दसं पूर्वपदस्य दीर्घत्वम् । असुर्यम् असुरमर्हतीति इति । "छन्दसि च" (पा ५·१·६७) इति यः । असुस्थानीयमुदकं ददातीत्यसुरो मेघः । तेन धार्यमुदकं रक्षमाणाः रक्षन्तः ऋतावानः सत्यवन्तः यज्ञवन्तो वा । पूर्ववद्वनिप् (पा ५·२ १०९ वा २) दीर्घत्वं च । चयमाना चाययन्तः गमयन्तः । चय गतौ, अनुदात्तेत्, १० भौवादिकः । ऋणानि दिव्यानि मानुषाणि, वृष्ट्या हि सस्योत्पत्तौ यजमानस्य सर्वाणि ऋणानि अपाक्रियन्ते इति । क्रियापदाभावाद्योग्यं क्रियापदमध्याह्रियते । ईदृशा आदित्याः इममस्मदीयं यजमानमनपराद्धं कुर्वन्त्विति ॥

तत्रैव याज्या— 'तिस्र' इति त्रिष्टुप् ॥ तिस्रः भूमीः पृथिवीपातालनाकलोकान् पृथिव्यन्तरिक्षद्युलोकान् वा । ये इत्यध्याह्रियते । ये धारयन् धारयन्ति । धारयतेश्छान्दसो लङ् । १५ "बहुलं छन्दस्यमाङ्योगेऽपि" (पा ६·४ ७५) इत्यडभावः । उत अपि च त्रीन् द्यून् दिवः परान् द्युतिमतो लोकान् । रुत्वानुनासिकौ पूर्ववत् (पा ८·३·१, २, ९) किं च— त्रीणि व्रतानि कर्माणि लोकत्रयगोचराणि त्रीणि व्रतानि । एषां लोकानाम् अन्तः मध्ये सर्वलोकधारणार्थानि रसादानधारणमध्यस्थानायनलक्षणानि च कर्माणि ये धारयन्ति आदित्या विदथे यज्ञे यज्ञार्थं, उपलक्षणत्वात् सर्वव्यापारार्थम् इत्य कुर्वन्त्येते आदित्याः । यद्वा—धारयन्तीति वचन- २० व्यत्ययेनैकवचनम् । हे धारयन्तः आदित्याः, किं तिस्रो भूमीः त्रींश्च द्यून् येषां च मध्ये त्रीणि व्रतानि यज्ञार्थं धारयन्त. हे आदित्या, वः युष्माकं महित्वं महत्त्वं माहात्म्यं महि महत् तत् तादृशं यथोक्तलक्षणं चारु शोभनं चायनीयं वा ऋतेन सत्येन नात्र कार्या विचारणेति । इदानीम् आदित्यानेकत्वेनामन्त्रयते — अर्यमन् वरुण मित्र इति । प्रदर्शनं चैतदन्येषामपि ॥

मित्र इति ॥ तत्रैव याज्यामाह—'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् त्रीणि व्रता विदथे अन्त- २५ रेषाम् । ऋतेनाऽऽदित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु' इति । हे 'अर्यमन्' 'वरुण' 'मित्र', पृथिव्यादिभिस्त्रिभिर्लोकैरुपलक्षिता सर्वेऽपि द्वादश 'आदित्या' 'व' युष्माकं 'तत्' 'महित्वं माहात्म्यं' 'चारु'

४७. तै१,तै२,पै२–गोपाः गोपका. । ४८. तै१,तै२,मै१–°रूपाणि । ४९. तै१,तै२–दीर्घधिय° । ५०. तै१,के–'इति' नास्ति । ५१. तै१,तै२,मै१–पदम° । ५२. तै१,तै२,मै–'अस्मदीयं' नास्ति । ५३. तै१, तै२,मै–°नपराद्धम् । ५४. अ मै१–यज्ञ प्रीणि । ५५. के–'इत्थं' नास्ति । ५६. तै१,तै२–कुर्वन्ति ते ।

रमणीयं महि महदधिकं च। कथं [79]माहात्म्यमधिकं तदुच्यते– तिस्रः भूमीः [80]स्वर्गमर्त्यपातालरूपा धारयन् धारितवन्तः। अपि च [81]त्रीन् द्यून्[81] सूर्यचन्द्रवह्निगतान् प्रकाशान् धारितवन्तः। [82]तत्र सूर्यरश्मिरूपस्य प्रकाशस्य [83]धारयितृत्वं स्पष्टम्। सूर्यरश्मय एव जलमयेन चन्द्रमण्डलेन व्यवहिता [84]शीतलज्योत्स्नारूपेणावभासन्ते इति केषाञ्चिन्मतम्। एतदेवाभिप्रेत्य श्रूयते– "सुषुम्नः सूर्यरश्मि-श्चन्द्रमा गन्धर्वः" (तैसं ३ ४ ७) इति। [85]अग्निदीप्तेरेवादित्यसञ्चारीति विस्पष्टमेवमाम्नायते[85]– "उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति" (तैब्रा २ १ २) इति। तस्मात् [86]प्रकाशत्रयधारकत्वं युक्तम्। किं च एषां यजमानानां विदथे यज्ञे यानि त्रीणि व्रतानि अन्तः स्थितानि मनोवाक्कायकर्म-निष्पाद्यानि वा नित्यनैमित्तिककाम्यरूपाणि वा तानि सर्वाणि ऋतेन पालयिष्याम इत्येतादृशेन सत्यवचनेन धारितवन्तः॥ अत्र पूर्वमपरुद्धस्य नास्ति [87]विशेषप्रयोगोपदेशः। अपरुध्यमानस्य तु [88]प्रयोगोऽस्ति। तत्र कश्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते– "अदितेऽनु मन्यस्वेत्यपरुध्यमानोऽस्य पदमाददीतेयं वा अदितिरिय-मेवास्मै राज्यमनु मन्यते" (तैसं २ ३ १) इति।

हेऽदिते भूमे, [89]स्वराष्ट्रप्रवेशार्थं मामनुमन्यस्वेत्येतं [90]मन्त्रमुच्चारयतस्य राज्ञो पदाङ्कितभूरज आददीत। इयं पृथिव्येवादितिशब्दवाच्या, सैवास्मा अपरुध्यमानार्थं राज्यमङ्गीकरोति॥ मन्त्रान्तरमुत्पाद्य व्याचष्टे– "सत्याशीरित्याह सत्यामेवाऽऽशिषं कुरुते" (तैसं २ ३ १) इति। आशीरस्मदपेक्षितं फलं सत्यमस्त्विति शेषः॥ अन्यं मन्त्रमुत्पाद्य व्याचष्टे– "इह मन इत्याह प्रजा एवास्मै समनसः करोति" (तैसं २ ३ १) इति। इह मदीये [91]राष्ट्रप्रवेशे प्रजानां मनोऽनुकूलं भवत्विति शेषः॥ पुनरपि मन्त्रान्तरमुत्पाद्य व्याचष्टे– "उप प्रेत मरुतः सुदानव एना विश्पतिनाऽभ्यमुं राजानमित्याह मारुती वै विड्ज्येष्ठो विश्पति-र्विशैवैनं राष्ट्रेण समर्धयति" (तैसं २ ३ १) इति। हे सुदानवः सुष्ठु राष्ट्रप्रवेशदातारो मरुतः, यूयमेना विश्पतिनैतेन [92]विरोधिना राष्ट्रपतिना [93]सह योद्धुम्[93] अमुं [94]वीरसिंहवर्माणं [95]सजिहीर्षमाणमपरुध्यमान राजानमभिमुखीकृत्योप प्रेत समीपे गच्छत। अस्मिन् मन्त्रे 'विश्पतिना' इति यदुक्तं तत्र या विट् प्रजा सा मरुतामधीनत्वात् मारुती, तस्या विशः पतिर्ज्येष्ठोऽपरोक्षः, तेन ज्येष्ठेन विश्पतिना सह योद्धुमित्येव [96]ब्राह्मणोक्तस्य व्याख्यानस्य शेषः पूरणीयः। [97]एतस्य ब्राह्मणव्याख्यातमन्त्रस्य पाठे सति प्रजया देशेन चैनं यजमानं समृद्धं करोति। एतेषां[98] मन्त्राणां विनियोगमापस्तम्बो दर्शयति– "हविष्कृता वाचं विसृज्योप प्रेत मरुतः सुदानव इति यजमानमभ्यैति। सत्याशीरिति यजमानस्योत्तरे वासस पर्णकदेशं निवपति। इह मन इत्युपवसि शेषः [99]निवपति" (आपश्रौ १९ २० १० १२) इति॥

अत्र कश्चित्प्रयोगविशेषं क्रमेण विधत्ते– "यः परस्ताद्ग्राम्यवादी स्यात् तस्य गृहाद्व्रीहीना-हरेच्छुक्लांश्च कृष्णांश्च वि चिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवाव गच्छति" (तैसं २ ३ १) इति। [100]ग्रामेभ्यो हितं ग्राम्यं [101]तद्राज्ञोऽग्रे वदतीति[101] ग्राम्यवादी [102]मन्त्री।

७९. इ ने शृ हो१–माहात्म्याधिक्यमिति, ड१–माहात्म्यमधिकमिति। ८० अ उ जो ना पा हा –स्वर्गमृत्युपाताल°। ८१–८१ इ ड१ ने– 'त्रीन् तून' नास्ति। ८२ अ उ पा–तत। ८३. इ–जनयितृत्वम्। ८४. आ क– शीतस्पर्शा अभिभूतोष्णस्पर्शा ज्योत्स्ना°। ८५–८५ आ क– अग्निदीप्तेरादित्यसञ्चश्च स्पष्टमेव श्रूयते, इ उ शृ–अग्निदीप्तेरादित्यसञ्चश्च स्पष्टमेवाम्नायते। ८६ इ हा शृ हो२– °धारयितृत्वम्। ८७ आ क ड१ शृ– विशेषाङ्गोपदेश। ८८ आ क ड१ शृ– प्रयोगे सोऽस्ति। ८९. आ क –स्वमनुमन्यस्व राष्ट्र°। ९०. ने– मन्त्रमुक्त्वा वदतस्य। ९१ अ उ ड ड१ ने पा हो१– राष्ट्रप्रदेशे। ९२. ड ने हो१– रोधविरोधिना। ९३–९३ ने–भयोत्थम्। ९४ ने– सिंहनामानम्। ९५ इ ने शृ हो१– 'सजिहीर्षमाणम्' नास्ति। ९६ आ क– ब्राह्मणेनोक्तस्य। ९७ अ उ पा– तस्य। ९८ ने शृ–तेषाम्। ९९ आ इ क– निवपति। १००. अ इ उ क जो ना ने पा शृ हा हो१– ग्राम्येभ्य। १०१–१०१ इ–तद्राज्ञो प्रवेद(य)तीति, अ उ पा–तद्वदतीति। १०२. अ आ उ क जो ना पा हा– 'मन्त्री' नास्ति।

त्यान्नु क्षत्रियाꣳ अव आदित्यान् याचिषामहे । सुमृडीकाꣳ अभिष्टये ॥

त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे । सुमृडीकानिति सु-मृडीकान् । अभिष्टये ॥

" य. परस्ताद्ग्राम्यवादी स्यात् तस्य गृहाद्व्रीहीना हरेच्छुक्लांश्च कृष्णांश्च वि चिनुयाद्ये शुक्ला. स्युस्तमादित्य चरुं निर्वपेत् " ( तैस २.३.१ ) इत्यस्याः पुरोनुवाक्या– ' त्यान् ' इति

५ गायत्री ॥ [V]त्यान् तान् [V]नु प्राक्तनान् [V]क्षत्रियान् बलवतः [V]आदित्यान् [V]अवः रक्षणं [V]याचिषामहे [V]याचामहे । " सिब्बहुलं लेटि " (पा ३.१.३४), "लेटोऽडाटौ " ( पा ३.४.९४ ) इत्यडागम. । [V]सुमृडीकान् सुष्ठु सुखयितॄन् । " मृडीकादयश्च " (?) इति निपात्यते । शोभनं मृडीकत्व येषामिति बहुव्रीहौ " नञ्सुभ्याम् " (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम्, उञ्छादि· (पा ६.१.१६०) वा द्रष्टव्य. । पूर्ववद्रुत्वानुनासिकौ (पा ८.३.१, २, ९) । [V]अभिष्टये

१० आभिमुख्येन तानेव यष्टुम् । शकन्ध्वादित्वात् पररूपत्वम् ( ६.१.९४ वा ४ ) । यद्वा– अभिष्टयो यागस्तन्निमित्तम् । छान्दसो वर्णविकारः ॥

स द्विविधः–अन्तरङ्गो बहिरङ्गश्च । तत्र बहिरङ्गः सभायामेव [103]वदति । अन्तरङ्गस्तु [104]सभायाः [105]परस्तादन्तःपुरं गत्वा गृहं हितं [106]वदति तस्य गृहाद्व्रीहीना हरेत् । विट्शब्दवाच्यायाः प्रजाया आदित्यदेवताकत्वादादित्यचरुणा विशमेव प्राप्नोति ॥ विभक्तानां द्विविधतण्डुलानां मध्ये शुक्लैरादित्यचरुं विधाय कृष्णैर्वारुणचरुं

१५ विधत्ते–" अपगतोऽस्य विडनपगतꣳ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं वै राष्ट्रमुभे एव विशं च राष्ट्रं चाव गच्छति " (तैसं २.३.१) इति । अस्य यजमानस्याऽऽदित्यचरुणा यद्यपि प्रजा प्राप्ता भवति तथाऽपि राष्ट्रं भूमिविशेषस्तावता न प्राप्यत इत्यभिज्ञा आहुः । [107]अतस्तत्प्राप्तये वारुणं निर्वपेत् । यथा प्रजाया [108]आदित्या देवता तद्वद्राष्ट्रस्य वरुणो देवता, ततस्तयोस्तुष्ट्या तदुभयं प्राप्यते ॥ योऽयमपरुध्यमानस्यावरुन्धनम् यत्कर्म विहितं तस्मिन् कर्मणि पूर्वोक्ते एव याज्यानुवाक्ये ॥

२० त्यानिति ॥ यत्तु ' यः परस्तात् ' इत्यादिना [109]हविर्द्वये प्रयोगरूपं कर्मान्तरं विहितं तत्र शुक्लहविषः पुरोनुवाक्यामाह– ' त्यानु क्षत्रियाꣳ अव आदित्यान् याचिषामहे । सुमृडीकाꣳ अभिष्टये ' इति । वयं यजमानाः [V]अभिष्टये देवताभिमुख्येन कर्मेष्टिसिद्ध्यर्थम् [V]आदित्यान् प्रति [V]अवः [V]याचिषामहे । रक्षणं प्रार्थयामहे । कीदृशानादित्यान् ? येषां [110]पूर्वमन्त्रे माहात्म्यं प्रपञ्चितं [V]त्यान् [V]नु तानेव [V]क्षत्रियान् क्षत्रियवत् प्रबलान् [V]सुमृडीकान् सुष्ठु सुखयितॄन् ॥

२५ ५.७. तै१.तै२.–' याचामहे ' नास्ति ।

१०३. अ.उ.बो.पा.हा–भवति । १०४. इ.क.जो.ड.ट१.ना.शृं.हा– नगाय । विराजितायाम् । १०५. आ.क ट.शृं– °न्त.पुरे । १०६. इ.ट.ट१.ने.शृं हो१–रहसि कथयति; क– रहसि वदति । १०७. अ. पूर्वमन्त्र'; ट१– पूर्वमन्त्र' । १०८. ने.शृं–आदित्यः । १०९. आ.क.ट१.शृं.हो१–हविर्द्वय° । ११०. ने.हो१–

न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा।
पाक्या चिद्वसवो धीर्या चिद्(५)युष्मानीतो अभयं ज्योतिरश्याम्॥

न। दक्षिणा। वीति। चिकिते। न। सव्या। न। प्राचीनम्। आदित्या। न। उत। पश्चा।
पाक्या। चित्। वसुव। धीर्या। चित्(५)। युष्मानीत। अभयम्। ज्योति। अश्याम्॥

तत्र याज्या–'न दक्षिणा' इति त्रिष्टुप्॥ [v]दक्षिणा दक्षिणं [v]सव्या सव्यम्। ५
उभयत्रापि "सुपा सुलुक्°" (७ १ ३९) इत्याडादेश। दक्षिणं सव्यं च [v]न [v]वि [v]चिकिते
न विजानामि विशेषेण न जानामि, दक्षिणसव्यविभागज्ञानमपि मे नास्तीत्यर्थ। कितेश्छान्दसो
लिट् (पा ३ ४ ६)। हे [v]आदित्या, [v]प्राचीन प्राक्। "विभाषाऽञ्चेरदिक्स्त्रियाम्" (पा ५ ४.८)
इति ख। [v]पश्चा पश्चात्। "पश्च पश्चा च°" (पा ५ ३ ३३) इति निपात्यते। प्राक्पश्चाच्च [v]न
विचिकिते इति, प्राक्प्रत्यग्विभागज्ञानमपि मे नास्तीति। यस्मादेव तस्मादह [v]पाक्या [v]चित् १०
[v]पाकयितव्य, अपरिपक्व पाक्य बाल। "ऋहलोर्ण्यत्" (पा ३ १ १२४), "तित्स्वरितम्"
(पा ६.१ १८५) इति स्वरितत्वम्। हे [v]वसव वासहेतव, [v]धीर्या [v]चित् धीरयितव्य
धीर्य कातर इति। "तत्करोति°" (पा ३ १ २६ वा ५, ६) इति णिजन्ताण्ण्यत्,
पूर्ववदाकार। यथा बाला कातराश्च स्वय किंचिद्धिताहितमजानन्त अन्यैर्हिताहितकारिभि
दैवेन वा नीयमाना भवन्ति, एवमहमपि युष्माभिर्नीत युष्माभि समीचीने पथि प्रवर्त्यमान। १५
वर्णविकारश्छान्दस। "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम्।
निष्ठान्तादनवग्रह। [v]अभय [v]ज्योति ज्ञान विड्वगमलक्षणम् [v]अश्या प्राप्नुयाम्। "बहुलं
छन्दसि" (पा २ ४ ७३) इति शपो लुक्। यद्वा–युष्मत्प्रसादेन अभयम् अपुनरावृत्तिभय
पर ज्योति अपि अश्याम्, किं पुन विड्वगमादीति।

नेति। तत्रैव याज्यामाह–'न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा। २०
पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम्' इति। हे [v]वसव वासयितार [v]आदित्या,
वैरिणाऽपरुध्यमानोऽहं तेनापरोधेन व्यामूढचित्त सन् किमपि [v]न [v]वि [v]चिकिते विशेषेण न जानामि, इदं
दक्षिणमिदं सव्यमिदं [v]प्राचीनम् इदं प्रतीचीनमिति कमपि विवेकं नानुभवामि। क इव? [v]पाक्या [v]चित्
पाक्य इव [v]धीर्या [v]चित् धीर्य इव। पूर्वं पक्वो न भवतीति परं पाकं नेतव्य पाक्योऽपरिपक्वधीर्बाल इत्यर्थ।

५८ ए 'न' नास्ति। ५९ त१ त२–पाकयितव्यश्चित्। ६०–६० अ ल–'धीर्या चित्' २५
नास्ति। ६१ ल–बाल°। ६२ अ ल मै–नीयमाना निर्भया, त१–नायमानाभि। ६३–६३ अ मै ठ–
समिदते पथि प्रवर्तमान पर–सदर्शिते पथि वर्तमान। ६४ त–विड्वगम°। ६५ त१ त२ ल–
पुनरावृत्ति°। ६६ मै–'अपि' नास्ति ६७ त१ त२–विड्वगमादानि।

आ॒दि॒त्याना॒मव॑सा॒ नूत॑नेन सक्षी॒महि॒ शर्म॑णा॒ शंत॑मेन ।
अ॒ना॒गा॒स्त्वे अ॑दिति॒त्वे तु॒रास॑ इ॒मं य॒ज्ञं द॑धतु॒ श्रोष॑माणाः ॥
इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृडय । त्वाम॑व॒स्युरा च॑के ॥

आ॒दि॒त्याना॑म् । अव॑सा । नूत॑नेन । स॒क्षी॒महि॑ । शर्म॑णा । शंत॑मे॒नेति॒ शं-त॒मे॒न॒ ।
५ अ॒ना॒गा॒स्त्व इत्य॑नागाः-त्वे । अ॒दि॒ति॒त्व इत्यदि॑ति-त्वे । तु॒रासः॑ । इ॒मम् । य॒ज्ञम् । द॒ध॒तु॒ । श्रोष॑माणाः ॥
इ॒मम् । मे॒ । व॒रु॒ण॒ । श्रु॒धि॒ । हव॑म् । अ॒द्य । च॒ । मृ॒ड॒य॒ । त्वाम् । अ॒व॒स्युः । एति॑ । च॒के॒ ॥

अथ तत्रैव याज्या विकल्प्यते– 'आदित्यानाम्' इति त्रिष्टुप् । आदित्यानाम् अवसा नूतनेन अभिनवेन सक्षीमहि युक्ता भूयास्म । केन? शर्मणा सुखेन शंतमेन सुखतमेन शान्ततमेन वा । किं च– अनागास्त्वे निरपराधित्वे अदितित्वे खण्डनरहितत्वे च इमम् १० अस्मदीयं यज्ञ दधतु स्थापयन्तु तुरासः त्वरमाणाः । "[68]तुर त्वरासंभ्रमयोः[68]" । इगुपधात् कः ( पा ३·१·१३५ ), "आज्जसेरसुक्" ( पा ७.१·५० ) । श्रोषमाणाः अस्माकं स्तुतीः शृण्वन्तः । शृणोतेर्विकरणौ सिप्शपौ, लेटो वा व्यत्ययेन शानच्, श्रोषतिर्वा धात्वन्तरं द्रष्टव्यम् ॥

अथ "[69]ये[69] कृष्णाः स्युस्तं वारुणं चरुं निर्वपेत्" ( तैसं २·३·१ ) इत्यस्याः पुरोनुवाक्या– 'इमं मे' इति गायत्री । श्रुधीति प्रथमपादान्तः ॥ हे वरुण, इमम् अस्मदीयं

१५ पूर्वं धीरो न भवतीतः परं धीरत्वं नेतव्यो धीयैः कातरो बाल इत्यर्थः । युष्मानीतः युष्माभिः स्वकीयां [111]दिशं प्रापितः सन् अभयं ज्योतिः शत्रुभयरहितं विवेकज्ञानम् अश्यां प्राप्नुयाम् ॥

आदित्यानामिति ॥ तत्रैव विकल्पितामन्यां याज्यामाह– 'आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंतमेन । अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः' इति । यजमाना वयम् आदित्यानां संबन्धिना नूतनेन इदानीं संपादितेन अवसा रक्षणेन युक्ताः [112]सन्तः शर्मणा शंतमेन २० सर्वोपद्रवरहितत्वात् अतिशान्तेन सुखेन सक्षीमहि सक्ता भवेम । हे आदित्याः, भवन्तः अनागास्त्वे अस्मदीये निरपराधित्वे अदितित्वे सर्वदैवाखण्डितत्वे निमित्तभूते सति श्रोषमाणाः अस्मदीयां [113]स्तुतिं शृण्वन्तः तुरासः त्वरमाणाः इमं यज्ञं दधतु धारयन्तु ॥

इमामिति ॥ कृष्णव्रीहिचरौ पुरोनुवाक्यामाह– 'इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके' इति । हे वरुण, मे मदीयम् इमं हवम् आह्वानं श्रुधि शृणु । श्रुत्वा च अद्य अस्मान् मृडय [114]सुखय । [115]इमं हवं[115] च अवस्युः पालनेच्छुः त्वाम् आ चके मा २५ समन्तात् काङ्क्षामि [116]प्रार्थये ॥

६८. तै१–तुर त्वरणसंभ्रमयोः; तै२–त्वर त्वरणसंभ्रमयोः । ६९. तै१.तै२.–'ये' नास्ति ।

१११. ने.हो१– दिशम् । ११२. आ.क– 'सन्तः' नास्ति । ११३. अ.आ.उ.पा– स्तुतिम् । ११४. द.द१.ने.हो१– 'सुखय' नास्ति । ११५–११५. आ.द.क.द१.ने.धृ.हो१– अद्य । ११६. ३० आ.द.द१– प्रार्थयामि ।

तत्त्वा यामि ब्रह्मणा वन्दमानस्
तदा शास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस
मा न आयुः प्र मोषीः ॥ ११ ॥

[ नामाग्नि सऽ शर्नसो रक्षमाणा धीयौ चिदेकान्नपञ्चाशच्च ] ॥ ५

[ वायव्यं प्रजापतिस्ता वरुण देवासुरा एष्वसावादित्यो दर्शपूर्णमासाविन्द्रो वलस्य बार्हस्पत्य वषट्कारोऽसौ सौरी वरुणमाश्विनमिन्द्र वो नर एकादश ] ॥

[ वायव्यमाग्नेयी कृष्णग्रीवीमसावादित्यो वा अहोरात्राणि वषट्कार प्रजनयिता हुवे तुराणा पञ्चपष्टि ] ॥

[ वायव्यं प्र मोषी ] ॥ १०

---

तत् । त्वा । यामि । ब्रह्मणा । वन्दमान ।
तत् । एति । शास्ते । यजमान । हविर्भिरिति हवि–भि ।
अहेडमान । वरुण । इह । बोधि ।
उरुशस्सेत्युरु शस । मा । न । आयु । प्रेति । मोषी ॥ ११ ॥

[ मैस कास ] १५

---

[v]हवम् आह्वान [v]श्रुधि शृणु । "बहुल छन्दसि" (पा २ ४ ७३) इति शपो लुक् । "श्रुशृणुपृकृवृभ्य °" (पा ६ ४ १०२) इति धिभाव । श्रुत्वा [v]च [v]अद्य एव मा [v]मृडय सुखय । यस्मादह [v]त्वाम् [v]अवस्यु रक्षणमात्मन इच्छन् । "क्याच्छन्दसि" (पा ३ २ १७०) इत्युप्रत्यय । [v]आ [v]चके आभिमुख्येन शब्दयामि [v]प्रार्थये । कै गै शब्दे ॥

तत्रैव याज्या– 'तत्त्वा' इति त्रिष्टुप् ॥ हे [v]वरुण, [v]ब्रह्मणा मन्त्रेण त्वामेव [v]वन्दमान २० स्तुवन्नह [v]तत् तदर्थम् । चतुर्थ्या लुक् । तदर्थमेव त्वा [v]यामि भजे । यद्वा–तदेव त्वा यामि याचे । छान्दसोऽन्त्यलोप, परस्मैपद च । [v]यजमान अपि सन् [v]तत् एव [v]आ [v]शास्ते [v]हविर्भि

---

७० अ–प्रार्थयामि ।

चरुपुरोडाशादिभि । हे उरुशंस महास्तुतिक, त्वमपि तामस्मदीयां निज्ञापनाम् इह कर्मणि अहेडमान अक्रुध्यन् बोधि बुध्यस्व । पूर्वगद्विकरणस्य लुक् । "हुझल्भ्यो हेर्धि" (पा ६ ४ १०१) । "वा छन्दसि" (पा ३ ४ ८८) इत्यपित्त्वाच्च ङित्त्वाभावाद्गुण, अल्लोपश्छान्दस । किं पुनस्तत्प्रार्थनीयम् इत्याह न अस्माकं आयु दीप्तिमत्त्व वा मा प्र मोषी मा छैत्सी
५ तदर्थं विश च राष्ट्र चावगमयेति भाव ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये द्वितीये काण्डे
प्रथमप्रपाठके एकादशोऽनुवाक ॥
समाप्तश्च प्रपाठक ॥

---

तद्दिनि ॥ तत्रैव याज्यामाह– 'तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भि ।
१० अहेडमानो वरुणेह बोध्युरुशंस मा न आयु प्र मोषी ' इति ॥ तत् तस्मै रक्षणाय ब्रह्मणा मन्त्रेण वन्दमान त्वा यामि त्वा प्राप्नोमि । अथ यजमान हविर्भि आराध्य तत् रक्षणम् आ शास्ते । हे वरुण, अहेडमान क्रोधरहित इह कर्मणि बोधि अस्मद्विज्ञापना बुध्यस्व । हे उरुशंस प्रभूततपोयेत, न अस्माकम् आयु मा प्र मोषी मा विनाशय ॥ अपरुध्यमानस्य विशो राष्ट्रस्य च प्राप्तये द्विहविष्का काचिदिष्टिरुक्ता । कनचित् प्रतिबन्धविशेषेण यदि कृतायामपीष्टौ नरप्राप्ति प्रतिबध्येत तदानीं विशेष
१५ विधत्त– "यदि नावगच्छेदिममहमादित्येभ्यो भाग निर्वपाम्याऽमुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या एवैन भागधेय उपधावन्ति तं एवैन विशमव गमयन्ति" (तैस २ ३ १) इति । 'इमम्' इत्यादिनिर्वापमन्त्रोऽत्रैवोत्पा द्यत । अह यजमानो अमुष्माद् द्विषोऽमुष्यान्नदीयप्रजायाश्चाऽऽशीयेय व्रीहिरूप हविर्भागमादित्येभ्यो निर्वपामि । [illegible] प्रजा राष्ट्र चावगन्तुम् । अनेन मन्त्रेण निर्वापे सत्यादित्या स्वयमेव त भागमपेक्षमाणा यजमान स्वकीया विश प्रापयन्ति ॥ प्रतिबन्धाधिक्ये सति तावताऽप्यप्राप्तौ पुनरन्य

२० ७१ [illegible]–जीवितमन्त्र ।
७२–७३ [illegible]–[illegible] । राष्ट्रगमयेति ।
७३ [illegible]–'[illegible]' [illegible] ।
७४ [illegible]–प्रथमप्रश्ने ।
७५ [illegible]–[illegible] ।

२५ ११७ [illegible]
११८ [illegible]
११९ [illegible]

विशेषं विधत्ते– "यदि नागच्छेदाश्वत्थान् मयूखान् सप्त मध्यमेषायामुप हन्यादिदमहमादित्यान् बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्धवीरा विशमव गमयन्ति" (तैसं २·३·१) इति। 'इदम्' इत्यादिर्बन्धनमन्त्रः। अमुष्माद्वैरिणः सकाशादमुष्या मदीयाया विशोऽवगन्तोः प्राप्तये यजमानोऽहमादित्यानिदं बध्नामि। इदमिति हस्तेन प्रदर्शनम्। अनेन मन्त्रेणाश्वत्थजन्यान् सप्त शङ्कून् हविर्धानिणः शकटस्य मध्यमायामीषायां कीलप्रक्षेपेण बध्नीयात्। तथा सत्यादित्याः स्वयमेव बद्धवीराः सन्तः [120]स्वकीयान् चारान् भृत्यान्[120] मोचयितुमेनं यजमानं विशं प्रापयन्ति॥ ततोऽपि [121]प्रबलतर-प्रतिबन्धके सति पुनरप्यन्यं विशेषं विधत्ते– "यदि नागच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्सं नह्येदनपरुध्यमेवाव गच्छति" (तैसं २·३·१) इति। [122]पूर्वत्र मध्यमायामीषायां शङ्कवः कीलिताः। इदानीमिध्मेऽपि शङ्कुबन्धने विशेषः॥ तेषां शङ्कूनां पूर्ववद्वृक्षविशेषं विधत्ते– "आश्वत्था भवन्ति मरुतां वा एतदोजो यदश्वत्थ ओजसैव विशमव गच्छति" (तैसं २·३·१) इति। अश्वत्थस्य मरुदोजस्त्वम् अर्थवादान्तरे द्रष्टव्यम्। [123]शङ्कुसंख्यां विधत्ते– "सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव गच्छति" (तैसं २·३·१) इति। [124]एतेषु सर्वेष्वपि प्रयोगेषु पूर्वोक्ते एव याज्यानुवाक्ये द्रष्टव्ये॥

अत्र विनियोगसंग्रहः।

"ऐन्द्रयागे त्विन्द्रमिन्द्रं मरुत्या वेत्ति मारुते।
भरेषु वैश्वदेवेन्द्रे प्रिया प्रैयङ्गवे चरौ ॥ १ ॥
अग्निर्वसुमदादीनां चरूणां हि समूहके।
[125]यथा विकल्पिता याज्या कुत्र स्विदस्त्वो द्वयम् ॥ २ ॥
यशो भुवद्गति चरौ धारयन् धारयद्गवि।
स्यात्तु न्वयं शुक्लचराविमं कृष्णचरौ तथा।
एकादशेऽनुवाकेऽस्मिन्मन्त्रा द्वाविंशतिर्मताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

१२०–१२०. आ.क.जो.ना.हा– स्वकीयान् भृत्यान्; अ.इ.उ.पा– स्वकीयनीयान् भृत्यान्; ड.ने.हो१– स्वकीयान्नरान् भृत्यान्; ड१– स्वकीयान् नवीनान् भ्रातृव्यान्। १२१. ड१– °तरपरिबन्धे, ने.शृं.हो१– °प्रतिबन्धे। १२२. हा सर्वत्र। १२३. क.ड.ड१.ने.शृं– शङ्कूनां संख्याम्। १२४. ना–एषु। १२५. हा–तथा।

# ( अथ द्वितीयकाण्डे द्वितीयः प्रपाठकः )

हरिः ॐ ॥

प्रजाप॑तिः प्र॒जा अ॑सृजत॒ ताः सृ॒ष्टा इ॑न्द्रा॒ग्नी अपा॑गूहता॒॑ꣳ
सो॑ऽचायत् प्र॒जाप॑तिरिन्द्रा॒ग्नी वै मे॑ प्र॒जा अपा॑घुक्षता॒मिति॑

५ प्र॒जाप॑तिरि॒ति॑ प्र॒जा॒ऽप॒ति॒ । प्र॒जा इति॑ प्र॒ऽजा । अ॒सृ॒ज॒त॒ । ताः । सृ॒ष्टाः । इ॒न्द्रा॒ग्नी इती॑न्द्र अ॒ग्नी । अपेति॑ । अ॒गू॒ह॒ता॒म् । सः । अ॒चा॒य॒त् । प्र॒जाप॑तिरि॒ति॑ प्र॒जा॒ऽप॒ति॒ । इ॒न्द्रा॒ग्नी इती॑न्द्र अ॒ग्नी । वै । मे॒ । प्र॒जा इति॑ प्र॒ऽजा । अपेति॑ । अ॒घु॒क्ष॒ता॒म् ।

अथ काम्या इष्टयो विधीयन्ते। अत्रापि प्रायिकत्वात् काम्या उच्यन्ते। नैमित्तिकानामपि जातेष्ट्यादीना मध्ये निधानात्। तासु न पर्वादिनियम । "[1] उभा वामिद्राग्नी" (तैस १ १ १० १४ ) इत्यारभ्य यथापूर्वं याज्यानुवाक्या आम्नायन्ते, वैश्वदेवमेव काण्डम्[1] ॥ प्रजापतिरित्यादि। एता [v]ता प्रजापतिना [v]सृष्टा प्रजा [v]इन्द्राग्नी [v]अप [v]अगूहताम्। "ऊदुपधाया गोह" (पा ६ ४ ८९ ) इत्यूकार । इन्द्राग्निशब्दे "नोत्तरपदेऽनुदात्तादौ" (पा ६ २ १४२ ) इति उभयपदप्रकृतिस्वरत्वे प्रतिपिद्धे समासान्तोदात्तत्वमेव। [v]स च प्रजापति तत् [v]अचायत् अशृणोत्। [v]अपाघुक्षतामिति। ऊदित्वादिडभावे "शल इगुपधादनिट क्स" (पा ३ १ ४५)।

१५ यस्य नि श्वसित वेदा यो वेदेभ्योऽखिल जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

[1]आद्ये प्रपाठके काम्या पशव समुदीरिता ।
द्वितीयादित्रये काम्या वक्तव्या इष्टयोऽखिला ॥ २ ॥

अनुवाका द्वादश [2]स्युर्द्वितीयेऽर्थस्तु वर्ण्यते।
२० प्रजाकाम [3]स्पर्धमानो युयुत्सुर्जितशत्रुक ॥ ३ ॥

१–१ तै१ तर–'उभा काण्डम्' नास्ति। २ त१ तर–'इत्यूकार' इत्यस्यानन्तरम् 'उभा वामिन्द्राग्नी' इत्यारभ्य यथापूर्वं याज्यानुवाक्या आम्नायन्ते, वैश्वदेवकाण्डम्। ३ तै१तै२ मे–अगुहतामिति।

१ अ उ पा– प्रथम°, ट–आद्य°। २ अ उ ना पा हा– स्युर्द्वितीये तूपवर्ण्यते। ३. अ आ २५ उ पा ट ना पा हा– स्पर्धकाम ।

स एतमैन्द्राग्नमेकादशकपालमपश्यत् तं निरवपत् तावस्मै प्रजाः प्रासाधयतामिन्द्राग्नी वा एतस्य प्रजामप गूहतो योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इन्द्राग्नी ( १ ) एव स्वेन भागधेयेनोप धावति तावेवास्मै प्रजां प्र साधयतो विन्दते प्रजामैन्द्राग्नमेकादशकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते　५

इति। स। एतम्। ऐन्द्राग्नमित्यैन्द्र अग्नम्। एकादशकपालमित्येकादश कपालम्। अपश्यत्। तम्। निरिति। अवपत्। तौ। अस्मै। प्रजा इति प्र जा। प्रेति। असाधयताम्। इन्द्राग्नी इतीन्द्र अग्नी। वै। एतस्य। प्रजामिति प्र जाम्। अपेति। गूहतः। यः। अलम्। प्रजायै इति प्र जायै। सन्। प्रजामिति प्र जाम्। न। विन्दते। ऐन्द्राग्नमित्यैन्द्र अग्नम्। एकादशकपालमित्येकादश कपालम्। निरिति। वपेत्। प्रजाकाम इति प्रजा काम। इन्द्राग्नी　१०
इतीन्द्र अग्नी (१)। एव। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। तौ। एव। अस्मै। प्रजामिति प्र जाम्। प्रेति। साधयतः। विन्दते। प्रजामिति प्र-जाम्। ऐन्द्राग्नमित्यैन्द्र-अग्नम्। एकादशकपालमित्येकादश कपालम्। निरिति। वपेत्। स्पर्धमानः। क्षेत्रे। वा। सजातेष्विति स-जातेषु। वा। इन्द्राग्नी इतीन्द्र-अग्नी। एव। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति।
ताभ्याम्। एव। इन्द्रियम्। वीर्यम्। भ्रातृव्यस्य। वृङ्क्ते।　१५

स इत्यादि गतम्। एकादशसु कपालेषु संस्कृत पुरोडाश इति तद्धितार्थे "द्विगोर्लुगनपत्ये" (पा ४ १ ८८) इति लुक्। "इगन्तकालकपाल°" (पा ६ २ २९) इति पूर्वपदप्रकृतिस्वरत्वम्। तस्यापि "सप्त्या" (पा ६ २ ३५)। इति पूर्वपदप्रकृतिस्वरत्वम्। एकशब्द [illegible] आद्युदात्त। [4]प्र [4]असाधयताम् असाधितवन्तौ। [4]अजनयतामप्यावाम् [illegible] [4]प्रजा [4]न लभते। तस्य [4]प्रजाम् [4]इन्द्राग्नी [4]अपागूहताम् इति। प्रजाकाम इति। "[5]शीलिकामिभक्षाचरिभ्यो ण°[5]" (पा ३ २ १ वा ७), पूर्ववत् पूर्वपदप्रकृतिस्वरत्व च[6]॥　२०

[1] समामेत्यमिमे कुर्यु [2] एकादशकपालकम्।
[3] ऐन्द्राग्ने पञ्चमे [3] पौष्ण [3]चरुमेषोऽनु निर्वपेत्॥ ४॥
सभा प्राप्य क्षेत्रपत्य चरु कृत्वोर्ध्वमाचरेत्।
ऐन्द्राग्नयागमित्येतेऽनुवाक प्रथमे स्थिता॥ ५॥　२५

४-४. त१ त२ मे२- 'शीलिकामि ण' नास्ति। ६. त१ त२ मे- 'च' नास्ति।

४ ४ आ उ जो ना पा हा-समामेत्यति य कुर्यात्। ५-५. हा१-इन्द्राग्ने पञ्चमे, मै-ऐन्द्राग्ने पञ्चमे, आ इ जो ना ने हा- ऐन्द्राग्न पञ्चमे। ६ इ क जो ना हा-चरुमेषानु, ने-चरुमे त्वनु।

वि पाप्मना भ्रातृव्येण जयतेऽप वा एतस्मादिन्द्रियं वीर्यं क्रामति यः संग्राममुप-
प्रयात्यैन्द्राग्नमेकादशकपालं निर्( २ )वपेत् संग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन
भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येणोप प्र याति जयति
तं९ संग्रामं वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः संग्रामं जयत्यैन्द्राग्नमेकादशकपालं
५ निर्वपेत् संग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं
( ३ ) धत्तो नेन्द्रियेण वीर्येण व्यृध्यतेऽप वा एतस्मादिन्द्रियं वीर्यं क्रामति
य एति जनतामैन्द्राग्नमेकादशकपालं

वीति । पाप्मना । भ्रातृव्येण । जयते । अपेति । वै । एतस्मात् । इन्द्रियम् । वीर्यम् । क्रामति ।
य । संग्राममिति स-ग्रामम् । उपप्रयातीत्युप-प्रयाति । ऐन्द्राग्नमित्यैन्द्र-अग्नम् ।
१० एकादशकपालमित्येकादश कपालम् । निरिति (२) । वपेत् । संग्राममिति स ग्रामम् ।
उपप्रयास्यन्नित्युप-प्रयास्यन् । इन्द्राग्नी इतीन्द्र-अग्नी । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।
धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । धत्त । सह । इन्द्रियेण । वीर्येण । उप । प्रेति ।
याति । जयति । तम् । संग्राममिति स-ग्रामम् । वीति । वै । एषः । इन्द्रियेण । वीर्येण । ऋध्यते । य ।
संग्राममिति स ग्रामम् । जयति । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश-कपालम् ।
१५ निरिति । वपेत् । संग्राममिति स-ग्रामम् । जित्वा । इन्द्राग्नी इतीन्द्र-अग्नी । एव । स्वेन ।
भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् ( ३ ) ।
धत्तः । न । इन्द्रियेण । वीर्येण । वीति । ऋध्यते । अपेति । वै । एतस्मात् । इन्द्रियम् । वीर्यम् ।
क्रामति । य. । एति । जनताम् । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश कपालम् ।

स्पर्धां सघर्षं क्षेत्रे [6]विषये । क्षेत्र सदपत्योत्पत्तिस्थानम् । सजाता. समानजन्मानो
२० वशीकृता पुरुषा । इन्द्रिय वीर्यं च शत्रो वृङ्क्ते वर्जयति । इन्द्रियम् इन्द्रेणात्मना सृष्ट
प्रजाकारण वीर्यं सामर्थ्यं येन सजाता वशीक्रियन्ते । पाप्मलक्षणेन च भ्रातृव्येण वि जयते
व्यावृत्तो भूत्वा जय प्राप्नोतीति । " विपराभ्या जे " ( पा १ ३ १९ ) इत्यात्मनेपदम् ॥

अप वा इत्यादि । संग्रामजयार्थं संग्रामम् उपप्रयास्यत: ॥

वि वा एष इत्यादि । संग्राम जितवन संग्रामश्रान्त्या इन्द्रियवीर्यहानिर्भवतीति ॥

२५ अप वा इत्यादि । [7]जनताम् एष्यतो वादार्थं संग्रामार्थं वा । [7]जनता जनसमूहः ।
" ग्रामजनबन्धुसहायेभ्यस्तल् " (पा ४·२·४३) इति तल्प्रत्ययात् पूर्वस्योदात्तत्वम् (पा ६·१·१९३) ।

६. मै०-शेवधिरये । ७-७. तै१.तै२.मै.ं.- 'जनता जन .. ... ग्रामार्थं वा ' नास्ति ।

निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येण जनतामेति पौष्णं चरुमनु निर्वपेत् पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव (४) स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं वीर्यमनु प्र यच्छति क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रति तिष्ठत्यैन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्यमुपरिष्टादात्मन् धत्ते ॥ १ ॥ ५

[ प्रजाकाम इन्द्राग्नी उपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वीर्यं पूषणमैकान्नचत्वारिंशच्च । ] ।

निरिति । वपेत् । जनताम् । एष्यन् । इन्द्राग्नी इतीन्द्र-अग्नी । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । धत्तः । सह । इन्द्रियेण । वीर्येण । जनताम् । एति । पौष्णम् । चरुम् । अनु । निरिति । वपेत् । पूषा । वै । इन्द्रियस्य । १० वीर्यस्य । अनुप्रदातेत्यनु-प्रदाता । पूषणम् । एव (४) । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । इन्द्रियम् । वीर्यम् । अनु । प्रेति । यच्छति । क्षैत्रपत्यमिति क्षैत्र-पत्यम् । चरुम् । निरिति । वपेत् । जनताम् । आगत्येत्या-गत्य । इयम् । वै । क्षेत्रस्य । पतिः । अस्याम् । एव । प्रतीति । तिष्ठति । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश-कपालम् । उपरिष्टात् । निरिति । वपेत् । अस्याम् । एव । प्रतिष्ठायेति प्रति-स्थाय । इन्द्रियम् । वीर्यम् । १५ उपरिष्टात् । आत्मन् । धत्ते ॥ १ ॥

[ मैसं २.१.१; काठं ९.१७ ]

पौष्णं चरुम् । जनतामेष्यतः जनसमूहं सभादिकं गमिष्यतः इन्द्रियवीर्यहानिः भीया स्यात्, तत्प्रतिष्ठापनार्थेष्टिः; पूर्वाभ्यासायाः अधिकलाभार्थं वा । प्रदानादनन्तरं निर्वपणमनुनिर्वपणम्, अनुक्रमेण प्रदान अनुप्रदानम् ॥ २०

क्षैत्रस्य पत्यं चरुं निः वपेत् जनताम् आगतवतः । इयं पृथिवी क्षेत्रस्य पतिः क्षेत्रभर्तॄणामधिपतित्वात् । तस्माज्जनतां गत्वा अभिमतमंतत्या अनयेष्ट्या पृथिव्यां प्रतिष्ठितो भवति । आयं गादिषी प्रतिष्ठा फल, रात्रिगजन्यापात् ॥

उपरिष्टादिति ॥ क्षैत्रपत्योत्तरकालमस्यां प्रतिष्ठितो भूत्वा इन्द्रियं वीर्यं च उपरिष्टात् सर्वस्मिन्नभ्यागामिनि काले आत्मनि धत्ते स्थापयति । एवं क्षैत्रस्य नैमित्तिकमिति केचित् । २५ प्रतिष्ठार्थमित्यन्ये । उपरिष्टादित्यस्य इन्द्रियवीर्यप्रतिष्ठापनार्थमिति ॥

इति द्वितीये काण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयत्यग्निमेव पथिकृतं स्वेन भागधेयेनोप धावति स एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वही ह्येष समृद्ध्या

५ अग्नये। पथिकृत इति पथि-कृते। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यः। दर्शपूर्णमासयाजीति दर्शपूर्णमास-याजी। सन्। अमावास्यामित्यमा-वास्याम्। वा। पौर्णमासीमिति पौर्ण-मासीम्। वा। अतिपादयेदित्यति-पादयेत्। पथः। वै। एषः। अधीति। अपथेन। एति। यः। दर्शपूर्णमासयाजीति दर्शपूर्णमास-याजी। सन्। अमावास्यामित्यमा-वास्याम्। वा। पौर्णमासीमिति पौर्ण मासीम्। वा। अतिपादयतीत्यति-पादयति। अग्निम्। एव। १० पथिकृतमिति पथि-कृतम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। अपथात्। पन्थाम्। अपीति। नयति। अनड्वान्। दक्षिणा। वही। हि। एषः। समृद्ध्या इति सम्-ऋद्ध्यै।

अग्नये पथिकृत इत्यादि॥ दर्शपूर्णमासाभ्यामिष्टवान् दर्शपूर्णसयाजी। "करणे यजः" (पा ३.२.८५) इति णिनिः। अमावास्यापौर्णमासीशब्दौ [1]कर्मनामधेयकालवचनौ। स्वकाले १५ अननुष्ठानमतिपादनम्। पथो वा इति। पथः प्रच्युतो भूत्वा [2]अपथम् [3]अध्यारूढः तेनैति गच्छतीति। "पथो विभाषा" (पा ५.४.७२) इति समासान्तः। [4]अनड्वान् अनसो वोढा। पृषोदरादिः (पा ६.३.१०९)। अन्वाहार्यमासाद्यानत्वाद्दं दक्षिणां ददाति–वहीति। वहनप्रदेशो वहः। तद्वान् [4]वही। तेन वहता च यागानतिपन्नतां निनीषोः समृद्ध्यै भवत्यनड्वान्॥

दर्शातिक्रमेऽष्टाकपालः पथिकृतेऽग्नये।
२० अमरयाचरणेऽष्टाकपालं व्रातपतं चरेत्॥ ६॥
पुनर्दीयाक्षरार्थस्त्वं यामित्यत्र वर्णितः।
पितापुत्रद्वयाधे तु यजेद्राक्षोघ्नकं हविः॥ ७॥
अक्षरार्थस्त्वेतर्दोयः कृणुष्वेत्यत्र वर्णितः।
ग्रामं योऽभिचरेदेष कुर्यान्नुद्यते हविः॥ ८॥
२५ कुर्यात् सुरभिमयागं नरगोमृतितद्वये।
युयुत्सुरपमृत्युभ्यो भीतश्च गृहदाहयात्॥ ९॥
एते त्रयोऽष्टाकपाले कुर्युः क्षामवतेऽग्नये।
अनुपाके द्विर्माये तु स्थिताः पाथिकृतादयः॥ १०॥

1. तै१.तै२– °वचनौ। 2. ग– अपम्। 3. तै१.तै२.ग– आरूढः।
4. भ.इ.ओ.ना.प.मै.हा– तो; ट–'गु' नास्ति।

अग्नये व्रतपतये (१) पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोप धावति स एवैनं व्रतमा लम्भयति व्रत्यो भवत्यग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳस्यप हन्ति निशितायां निर्वपे(२) न्निशितायाꣳ हि रक्षाꣳसि प्रेरते संप्रेर्णान्येवैनानि हन्ति परिश्रिते ५ याजयेद्रक्षसामनन्ववचाराय रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳ स्तृत्यै

अग्नये। व्रतपतय इति व्रत-पतये (१)। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यः। आहिताग्निरित्याहित-अग्निः। सन्। अव्रत्यम्। इव। चरेत्। अग्निम्। एव। व्रतपतिमिति व्रत-पतिम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। व्रतम्। एति। लम्भयति। व्रत्यः। भवति। अग्नये। रक्षोघ्न इति रक्षः-घ्ने। पुरोडाशम्। १० अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यम्। रक्षाꣳसि। सचेरन्। अग्निम्। एव। रक्षोहणमिति रक्षः-हनम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। अस्मात्। रक्षाꣳसि। अपेति। हन्ति। निशितायामिति नि-शितायाम्। निरिति। वपेत् (२)। निशितायामिति नि-शितायाम्। हि। रक्षाꣳसि। प्रेरत इति प्र-ईरते। संप्रेर्णानीति सं-प्रेर्णानि। एव। एनानि। हन्ति। परिश्रित इति परि-श्रिते। याजयेत्। रक्षसाम्। अनन्ववचारायेत्यनन्‌- १५ अवचाराय। रक्षोघ्नी इति रक्षः-घ्नी। याज्यानुवाक्ये इति याज्या-अनुवाक्ये। भवतः। रक्षसाम्। स्तृत्यै।

अव्रत्यमिति ॥ [4]वृत्तेरंशादनृतवचनादि [v]अव्रत्यम्। "ययतोश्चातदर्थे" (पा ६.२.१५६) इत्युत्तरपदान्तोदात्तत्वम्। आ लम्भयतीति। "लभेश्च" (पा ७.१.६४) इति नुम्। व्रत्य इति। चरितस्याव्रतस्यापनयनात् स्वयमपि [v]व्रत्यः [v]भवति ॥

सचेरन्निति ॥ षच समवाये, [5]बाधेरन् इत्यर्थः। निशितायामिति। निशायां मध्यं निशिता २० रात्रिः, तत्रोयाय [v]अग्नये [v]रक्षोघ्ने [v]निः [v]वपेत्। [6]आहृश्च तस्याः साद्गुण्यसामर्थ्यादमावास्यायाः कालापनयः स्यादिति। [v]प्र [v]ईरते प्रकर्षेण संचरन्ति। तस्मात् [v]संप्रेर्णानि [7]सम्यक् कृतप्रचरणान्येतानि भवन्ति। [v]परिश्रिते [8]परितश्छादिते, [v]रक्षसाम् [v]अनन्ववचाराय अननुप्रवेशाय। रक्षोघ्नीति। "वा छन्दसि" (पा ६.१.१०६) इति पूर्वसवर्णदीर्घत्वम्। रक्षोघ्न्यौ "रक्षोहणं वाजिनम्", "नि ज्योतिषा बृहता" (तैसं १.२.१४) इति द्वे [v]याज्यानुवाक्ये इति। यजन्त्यनयेति याज्या। २५

४. पंर- व्रते अवाप्य अनृतवचनादि; मैर-व्रते अवाप्य अनृतवचनादिः। ५. मै.मैर-बाधेरन्; तै१.तैर-बोधेरन्। ६. तै१.तैर.मै.मैर- आगु च। ७. तै१.तैर.मै.मैर-संपूरत। ८. तै१.तैर.मै-परिच्छादिते।
तैसं...१४

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमा वृश्चति ताजगार्तिमार्छत्यग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा ( ३ ) वा प्रमीयेरन् यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत् सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्या अग्नये
५ क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् संग्रामे संयत्ते भागधेयेनैवैनं९ शमयित्वा परानभि

अग्नये। रुद्रवत इति रुद्र वते। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। निरिति। वपेत्। अभिचरन्नित्यभि-चरन्। एषा। वै। अस्य। घोरा। तनूः। यत्। रुद्रः। तस्मै। एव। एनम्। एति। वृश्चति। ताजक्। आर्तिम्। एति। ऋच्छति। अग्नये। सुरभिमत इति सुरभि-मते। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। निरिति। वपेत्। यस्य। गावः। वा। पुरुषाः ( ३ )।
१० वा। प्रमीयेरन्निति प्र-मीयेरन्। यः। वा। बिभीयात्। एषा। वै। अस्य। भेषज्या। तनूः। यत्। सुरभिमतीति सुरभि मती। तया। एव। अस्मै। भेषजम्। करोति। सुरभिमत इति सुरभि-मते। भवति। पूतीगन्धस्येति पूति गन्धस्य। अपहत्या इत्यप हत्ये। अग्नये। क्षामवत इति क्षाम-वते। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। निरिति। वपेत्। संग्राम इति सं ग्रामे। संयत्त इति सं यत्ते। भागधेयेनेति भाग-धेयेन। एव। एनम्। शमयित्वा। परान्। अभि।

१५ "ऋहलोर्ण्यत्" (पा ३ १ १२४), "यजयाच°" (पा ७ ३ ६६) इति कुत्वाभाव। अनदानेन सहोच्यत इत्यनुवाक्या, सहार्थेऽनुशब्दः। पूर्ववण्ण्यत्॥ ^१०^सूत्ये विनाशाय भवति। सरतिरेव क्तिनन्त (पा ३ ३ ९४), ^११^धात्वन्तरमिति केचित्॥

^१^रुद्रवते घोरत्वमानवते ^२^अभिचरन्। एषा वा इति। रुद्रशब्देन ''तद्धर्मो घोरत्व लक्ष्यते। ^३^एषा खलु ^४^अस्य अग्ने ^५^घोरा ^६^तनूः ^७^यत् रुद्रवद्घोरत्वमानत्व, ^८^तस्मै तादृशघोरमूर्तये ^९^एनम्
२० अभिचर्यमाणम् ^१०^आ ^११^वृश्चति आभिमुख्येन छिनत्ति। तत ^१२^ताजक् तदानीम् एव ^१३^आर्ति गच्छति। "उपसर्गादृति ^१४^धातौ" (पा ६ १ ९१) इति वृद्धि॥

^१^सुरभिमते सुरभिगन्धवते। यस्येति। ^१^यस्य सम्बन्धिन ^१^गावः वा ^१^पुरुषाः ^१^वा सातत्येन ^१^प्र ^१^मीयेरन्। यो वेति। पृथगधिकार केचिदाहु। पूतीगन्धाद्बीति, अर्थवादे दर्शनात्। पूतीगन्ध "शरणो दुर्गन्धो वा"^१३^। रात्रिमत्रयायेन तन्निवृत्ति फलम्। ^१^भेषज्या भेषजे साधु"
२५ (पा ४.४ ९८)॥

^१^क्षामवते शीघ्रेण निमरणेन तद्वते। आमदत्तेन पुरोडाशेन ^१^भागधेयेन आत्मीयेन जनभिये अग्निं ^१^शमयित्वा ^१^परान् शत्रून् अग्नये ^१^अभि ^१^निर्दिशति निमरणत्वेन दर्शयति। तत च

९. मै०-स्यान्मेर धात्वन्तरमिति। १०. तै०- तद्धर्मेषवं। ११. मै० ल- धातो। १२-१२. तै१ मै२ मै३ मै४ ल- नास्ति। १३. त१ १२ मै मै४ ल-'साधु' इत्यस्यानन्तर 'पूतीगन्ध दुर्गन्ध'।

निर्दिशति यमवरेषां विध्यन्ति जीवति स यं परेषां प्र स मीयते जयति तं संग्राम-(४)मभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां पुराऽऽयुषोऽपरः प्र मीयतेऽभि वा एष एतस्य गृहानुच्यति यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति ५
ना(५)स्यापरं गृहान् दहति ॥ २ ॥

[ व्रतपतये निशिताया निर्वपेत् पुरुषा संग्राम न चत्वारि च । ]।

निरिति । दिशति । यम् । अवरेषाम् । विध्यन्ति । जीवति । स । यम् । परेषाम् । प्रेति । स । मीयते । जयति । तम् । सग्राममिति स ग्रामम् (४) । अभीति । वै । एष । एतान् । उच्यति । येषाम् । पूर्वापरा इति पूर्व अपरा । अन्वञ्च । प्रमीयन्त इति प्र मीयन्ते । पुरुषाहुतिरिति १० पुरुष-आहुति । हि । अस्य । प्रियतमेति प्रिय तमा । अग्नये । क्षामवत इति क्षाम वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । भागधेयेनेति भाग धेयेन । एव । एनम् । शमयति । न । एषाम् । पुरा । आयुष । अपर । प्रेति । मीयते । अभीति । वै । एष । एतस्य । गृहान् । उच्यति । यस्य । गृहान् । दहति । अग्नये । क्षामवत इति क्षाम-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । भागधेयेनेति भाग धेयेन । एव । एनम् । शमयति । १५ न (५) । अस्य । अपरम् । गृहान् । दहति ॥ २ ॥

[ मैस २ १ १०, ११, काठ १० ८–७ ]

ᵛअवरेषाम् आत्मीयाना मध्ये ᵛय ᵛविध्यन्ति शत्रव ᵛस ᵛजीवति, ᵛपरेषा शत्रूणा मध्ये ᵛय विध्यन्ति ᵛस ᵛप्र ᵛमीयते म्रियते, तथा च ᵛत ᵛसग्राम [१४]ᵛजयति ॥

अभि वा इति ॥ ᵛएष अग्नि ᵛएतान् ᵛअभि ᵛउच्यति आभिमुख्येन समवैति । उच २० समवाये, दैवादिक । कान् इत्याह—ᵛयेषा सबन्धिन ᵛपूर्वापरा पूर्वे चापरे च ज्ञातय ᵛअन्वञ्च [१५]अन्वगतय अविच्छेदेन क्रमोल्लङ्घनेन पुन पुन म्रियेरन्, [१६]पुरुषाहुते प्रियतमत्वात्[१६]। नैषामिति । ᵛएषाम् आत्मीयाना मध्ये ᵛआयुष शतसवत्सरप्रमाणात् ᵛपुरा पूर्वम् ᵛअपर ᵛन ᵛप्र ᵛमीयते पूर्वं मृतेभ्य कश्चिदन्यो न म्रियते ॥

अभि वा इत्यादि ॥ पूर्ववत् । नास्येति । ᵛअस्य ᵛगृहान् ᵛअपर ᵛन ᵛदहति पुनर्न २५ दहति । क्रियाविशेषणत्वान्नपुसकत्वम् ॥

इति द्वितीये द्वितीये द्वितीयोऽनुवाक[१७] ॥

१४ ल– जनयति । १५ पर.ल– अन्वजातय, मै४– अन्वक्रमतय । १६–१६ तर– पुरुषाहुति प्रियतमा । १७ मै– 'अनुवाक' नास्ति ।

अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदग्निमेव काम[८] स्वेन भागधेयेनोप धावति स एवैनं कामेन समर्धयत्युपैनं कामो नमत्यग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वाऽग्निमेव यविष्ठ[९] स्वेन भागधेयेनोप धावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य (१) युवते वि पाप्मना
५ भ्रातृव्येण जयतेऽग्नये यविष्ठाय पुरोडाशमष्टाकपालं

अग्नये। कामाय। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यम्। कामः। न। उपनमेदित्युप-नमेत्। अग्निम्। एव। कामम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। कामेन। समिति। अर्धयति। उपेति। एनम्। कामः। नमति। अग्नये। यविष्ठाय। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। स्पर्धमानः।
१० क्षेत्रे। वा। सजातेष्विति स-जातेषु। वा। अग्निम्। एव। यविष्ठम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तेन। एव। इन्द्रियम्। वीर्यम्। भ्रातृव्यस्य (१)। युवते। वीति। पाप्मना। भ्रातृव्येण। जयते। अग्नये। यविष्ठाय। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्।

अग्नये कामायेत्यादि ॥ वैदिके कर्मणि फलस्य नियतत्वात् कृष्यादिफलविषय काममाहुः, सर्वकामविषयमन्ये ब्रुवते। स एवेति। [v]स अग्नि कामयमानम् [v]एन [v]कामेन [v]सम् [v]अर्धयति।
१५ स च [v]काम [v]एनम् [v]उप [v]नमति ॥

यविष्ठ युवतम, पृथक्कर्तृतमो वा। [v]युवते पृथक्करोति। व्यत्ययेन [१]आत्मनेपदम्। [v]पाप्मना [v]भ्रातृव्येण व्यावृत्तो जयमाप्नोति ॥

[८]कामोपनतिमाकाङ्क्षन् कामुक(सदा)याग्नये चरेत्।
स्पर्धमानो यविष्ठाय वह्नये हविराचरेत् ॥ ११ ॥
२० तथाऽभिचर्यमाणोऽपि यविष्ठाय हविश्चरेत्।
कृत्स्नायुःप्राप्तये कुर्याद्धविरायुष्मतेऽग्नये ॥ १२ ॥
भूतिकामो हवि कुर्याद्वह्नये जातवेदसे।
कान्तिकामोऽष्टकपालमाचरेद्रुक्मतेऽग्नये ॥ १३ ॥
आशा [९]कर्तुमभीप्सु सन् कुर्यात् तेजस्वतेऽग्नये।
२५ वैरिणोऽभिभव याञ्छन् साहन्त्याय हविश्चरेत् ॥ १४ ॥
अनुवाके तृतीयेऽस्मिन् कामुकष्टयादय [१०]श्रुता ।

१. मै॰- घ।

८. इ- कामोपायमाकाङ्क्षन्। ९. आ ना- °मर्मान्तु, अ उ वा पा- °ममीष्टु। १०. इ-स्मृता।

निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन्स्तृणुतेऽग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामित्यग्निमेवाऽऽयुष्मन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्( २ )-न्नायुर्दधाति सर्वमायुरेत्यग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येवाग्नये रुक्मते पुरोडाशमष्टाकपालं ५

निरिति । वपेत् । अभिचर्यमाण इत्यभि-चर्यमाणः । अग्निम् । एव । यविष्ठम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । रक्षाꣳसि । यवयति । न । एनम् । अभिचरन्नित्यभि चरन् । स्तृणुते । अग्नये । आयुष्मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यः । कामयेत । सर्वम् । आयुः । इयाम् । इति । अग्निम् । एव । आयुष्मन्तम् । १० स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् ( २ ) । आयुः । दधाति । सर्वम् । आयुः । एति । अग्नये । जातवेदस इति जात-वेदसे । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । भूतिकाम इति भूति-कामः । अग्निम् । एव । जातवेदसमिति जात-वेदसम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । अग्नये । रुक्मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । १५

[१] [V]रक्षांसि [V]यवयति [२] अभिचरतः सकाशात् रक्षांसि बाधकानि पृथक्करोति ततः प्रच्यावयति । यौतेर्णिचि व्यत्ययेन वृद्ध्यभावः । ततश्च साधनाभावात् [V]न [V]एनम् [V]अभिचरन् [V]स्तृणुते न हिंसितुं क्षमते ॥

अग्नय आयुष्मत इत्यादि ॥ गतम् । सर्वमायुः [३]श्रौतं शतं वर्षाणि, [४]षोडशाधिकं शतं वा[४] ( द्र. छाउ ३.१६.१-७ ) छान्दोग्योपनिषदि श्रुतत्वात् ॥ २०

अग्नये जातवेदसे इति ॥ जातानां वेदिता जातधनो वा जातवेदाः ( द्र. निरुक्त ■ १९ ) ॥

रुक्मान् दीप्तिमान् ।

२-२ त त २ मै ल– 'रक्षांसि यवयति' नास्ति । ३ मै४– शत । ४-४ त त१ मै ल– षोडश वा शतं ।

निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्त१ स्वेन भागधेयेनोप धावति स एवास्मिन् रुचं दधाति रोचत एवाग्नये तेजस्वते पुरोडाश( ३ )मष्टाकपालं निर्वपेत् तेजस्कामो-ऽग्निमेव तेजस्वन्त१ स्वेन भागधेयेनोप धावति स एवास्मिन् तेजो दधाति तेजस्व्येव भवत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत् सीक्षमाणोऽग्निमेव साहन्त्य१

५　　स्वेन भागधेयेनोप धावति तेनैव सहते य१ सीक्षते ॥ ३ ॥

[ भ्रातृव्यस्यास्मिन् तेजस्वते पुरोडाशमष्टात्रि१शच्च । ] ।

---

निरिति । वपेत् । रुक्काम इति रुक्-काम । अग्निम् । एव । रुक्मन्तम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव । अस्मिन् । रुचम् । दधाति । रोचते । एव । अग्नये । तेजस्वते । पुरोडाशम् ( ३ ) । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । तेजस्काम इति
१० तेज काम । अग्निम् । एव । तेजस्वन्तम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव । अस्मिन् । तेज । दधाति । तेजस्वी । एव । भवति । अग्नये । साहन्त्याय । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । सीक्षमाण । अग्निम् । एव । साहन्त्यम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तेन । एव । सहते । यम् । सीक्षते ॥ ३ ॥

[ मैत्र २ १-११ , काठ १० ७ ]

---

१५　　तेजस्वान् ऐश्वर्यवान् ॥

साहन्त्यायेति ॥ साधु अभिभविता सहन्त । औणादिको झच् (उ ४१३, ४१५[?]) । स एव [5]साहन्त्य । छान्दसो यत् ( पा ५ १ ६७ ) । [6]सीक्षमाण अभिभवितुमिच्छन् शत्रून् । तितिक्षितुमिच्छन् निमाथानिति केचित् । सहते सनि छान्दस [7]दीर्घत्वमभ्यासलोपश्च । धात्वन्तर वा सीक्षतिर्द्रष्टव्य । तेनैवेति । [8]तेन साहन्त्येनाग्निना सहायेन सह यजमान [9]सहते अभिभवति ।
२० यम्[?] [10]य [11]सीक्षते अभिभवितुमिच्छति ॥

इति द्वितीयस्य द्वितीये तृतीयोऽनुवाक ॥

---

५. ता१ ता२ मै ६– औदरयाग् । ६. प२– सहन्त्य , ल– सहित । ७ मै–दैलम्° ।

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्त्स्यामित्यग्निमेवान्नवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नवन्तं करोत्यन्नवानेव भवत्यग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामित्यग्निमेवान्नादꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नादं करोत्यन्नाद (१) एव भवत्यग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामित्यग्निमेवान्नपतिꣳ स्वेन ५ भागधेयेनोप धावति स एवैनमन्नपतिं करोत्यन्नपतिरेव भवत्यग्नये पवमानाय

अग्नये। अन्नवत इत्यन्न-वते। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यः। कामयेत। अन्नवानित्यन्न-वान्। स्याम्। इति। अग्निम्। एव। अन्नवन्तमित्यन्न-वन्तम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। अन्नवन्तमित्यन्न-वन्तम्। करोति। अन्नवानित्यन्न-वान्। एव। भवति। अग्नये। अन्नादायेत्यन्न-अदाय। पुरोडाशम्। १० अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यः। कामयेत। अन्नाद इत्यन्न-अदः। स्याम्। इति। अग्निम्। एव। अन्नादमित्यन्न-अदम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। अन्नादमित्यन्न-अदम्। करोति। अन्नाद इत्यन्न-अदः (१)। एव। भवति। अग्नये। अन्नपतय इत्यन्न-पतये। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। यः। कामयेत। अन्नपतिरित्यन्न-पतिः। स्याम्। इति। अग्निम्। एव। अन्नपतिमित्यन्न-पतिम्। १५ स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। अन्नपतिमित्यन्न-पतिम्। करोति। अन्नपतिरित्यन्न-पतिः। एव। भवति। अग्नये। पवमानाय।

अग्नयेऽन्नवत इत्यादि ॥ ^V^अन्नवान् बह्वन्नः ॥

^V^अन्नादः अन्नादनशक्तियुक्तः।

^V^अन्नपतिः अन्नस्य पालयिता ॥ २०

यो [11]वाञ्छत्यन्नवान् स्यां स कुर्यादन्नवतेऽग्नये ॥ १५ ॥
[12]वाञ्छन्नन्नादने शक्तिमन्नादाय हविश्चरेत्।
[13]प्रभूतान्नस्वामितार्थी ह्यन्नस्य पतये चरेत् ॥ १६ ॥
पवमानः पावकश्च शुचिश्चेति त्रिभिर्गुणैः।
युक्तेभ्यः कुरुते दीर्घरोगयुक्तो हविस्त्रयम् ॥ १७ ॥ २५
पशुप्राप्त्वकामोऽपि पूर्वोक्तं त्रयमाचरेत्।
रुग्वचागमारभ्य ये प्रोक्ता एतदन्तकाः ॥ १८ ॥

११. ड.२१.नै.वृ.हो१– °त्यन्नवत्तम्। १२. अ. आ.उ.क.जो.ड.ना.पा. – वाञ्छयन्नादके।
१३. नै.हो१– °स्वामितार्थे।

पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये (२) पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचय आयुरेवास्मिन् तेन दधात्युत यदीतासुर्भवति जीवत्येवैतामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये

५ पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत्। अग्नये। पावकाय। अग्नये। शुचये। ज्योगामयावीति ज्योक् आमयावी। यत्। अग्नये। पवमानाय। निर्वपतीति निः-वपति। प्राणमिति प्र-अनम्। एव। अस्मिन्। तेन। दधाति। यत्। अग्नये (२)। पावकाय। वाचम्। एव। अस्मिन्। तेन। दधाति। यत्। अग्नये। शुचये। आयुः। एव। अस्मिन्। तेन। दधाति। उत। यदि। इतासुरितीत-असुः। भवति। जीवति। एव। एताम्। एव। निरिति।
१० वपेत्। चक्षुष्काम इति चक्षुः-कामः। यत्। अग्नये। पवमानाय। निर्वपतीति निः-वपति। प्राणमिति प्र-अनम्। एव। अस्मिन्। तेन। दधाति। यत्। अग्नये।

पवमानः पापानां शोधयिता [1]प्राणस्थितिहेतुः। [2]पावकः [3]पापविश्लेषहेतुः वाचः प्रवृत्तिहेतुः। शुचिरौज्ज्वल्यहेतुरायुषोऽभिवृद्धिहेतुः। [v]ज्योगामयावी दीर्घामयः। उतेति। [4]गतासुरपि एतत्कर्मसामर्थ्यात् [v]जीवति [v]एव आयुरन्तरं लभते ॥

१५ [5]एतामेवेत्यादि ॥ [v]चक्षुष्कामः तिमिरादिदोषनिवृत्तिकामः। [v]यदि अपि [v]अन्धः [v]भवति अनेन कर्मणा [v]प्र [v]पश्यति [v]एव प्रकृष्टदर्शनवान् भवति ॥

एवमग्ने रुद्र इत्यत्र तदर्थो वर्णितोऽखिलः।
प्रजाकामः [14]पुत्रवते वह्नये पुत्रिणे तथा [15] ॥१९॥
[15]इन्द्रायेति हविर्भ्यां तु [16]युक्तामिष्टिमिहाचरेत्।
२० क्षीरादिरसकामस्तु कुर्याद्रसवते चरुम् ॥ २० ॥
धनकामो वसुमते वह्नयेऽत्र हविश्चरेत्।
युद्धं जित्वाऽन्नकामस्तु कुर्याद्वाजसृतेऽग्नये ॥ २१ ॥
द्विरग्न्युद्धरणे कुर्यादग्नयेऽग्निवते हविः।
ज्योतिष्मतेऽग्नये कुर्यादुद्धृताग्निविनाशने ॥ २२ ॥
२५ अग्नयपागमारभ्य ज्योतिष्मद्वसानकाः।
अनुवाके चतुर्थेऽत्र [17]क्रमेणैते समीरिताः ॥ २३ ॥

१. ते- प्राण(?)स्थितिहेतुः। २. तं- 'पावकः' नास्ति। ३. पं२ पापसंशोधहेतुः; मै४- पापविश्लेषहेतुः; तं- 'पापविश्लेषहेतुः' नास्ति। ४. मै८- गतायुरपि। ५. ते१.ते२.तं- एतामेवेति।
१४-१५. ह.ओ.गा.हा- पुत्रकामः निर्वपेत् पुत्रिणेऽग्नये। १५. आ.कै.- इन्द्रायेह; ह- इन्द्राय च।
२० १६. आ.क- °ष्टि समाचरेत्; ट१. दो१- °ष्टिमिमां चरेत्; मे- अभियुक्तामिमां चरेत्। १७. ट१- क्रमेण।

पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधा( ३ )-त्युत यद्यन्धो भवति प्रैव पश्यत्यग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छत्यग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामित्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनꣳ रसवन्तं करोति (४) रसवानेव भवत्यजक्षीरे　५
भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमव रुन्द्धेऽग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति

पावकाय । वाचम् । एव । अस्मिन् । तेन । दधाति । यत् । अग्नये । शुचये । चक्षुः । एव । अस्मिन् । तेन । दधाति ( ३ ) । उत । यदि । अन्धः । भवति । प्रेति । एव । पश्यति । अग्नये । पुत्रवत इति पुत्र-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । इन्द्राय ।　१०
पुत्रिणे । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । प्रजाकाम इति प्रजा-कामः । अग्निः । एव । अस्मै । प्रजामिति प्र-जाम् । प्रजनयतीति प्र-जनयति । वृद्धाम् । इन्द्रः । प्रेति । यच्छति । अग्नये । रसवत इति रस-वते । अजक्षीर इत्यज-क्षीरे । चरुम् । निरिति । वपेत् । यः । कामयेत । रसवानिति रस-वान् । स्याम् । इति । अग्निम् । एव । रसवन्तमिति रस-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । रसवन्तमिति रस-वन्तम् । करोति　१५
( ४ ) । रसवानिति रस-वान् । एव । भवति । अजक्षीर इत्यज-क्षीरे । भवति । आग्नेयी । वै । एषा । यत् । अजा । साक्षादिति स-अक्षात् । एव । रसम् । अवेति । रुन्द्धे । अग्नये । वसुमत इति वसु-मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यः । कामयेत । वसुमानिति वसु-मान् । स्याम् । इति । अग्निम् । एव । वसुमन्तमिति वसु-मन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति ।　२०

पुत्रवान् पुत्रजननशक्तिमान् ॥ पुत्री पुत्रवृद्धिहेतुः ॥

[6]रसवान् प्रशस्तरसोत्पत्तिहेतुः, अन्नपानिन्द्रिके ।

अजक्षीरे भर्जीन्यादि । गतम् । अग्नेः स्वभूता [7]आग्नेयी । "सर्वत्राग्निकलिभ्यां ढक्"[8] (पा ४.२.८ वा २) इति ढक् । [9]वसुमान् वासहेतुनिरिष्टैर्जन्तुवान् ॥

वाजसृते इति । वाजोऽन्नं "समायनभूतान् संग्रामान्" धावति "अप्रतिस्पर्धेन प्राप्नोतीति　२५
वाजसृत् । [7]निर्णीतिं सर्वनिष्ठति । वाजादिमाप्यपनिर [8]समाने [9]निर्गच्छति. न ह अन्तरेण

६-६. दे- °भूत ( भेदमन )।　७. तै.तै.- पर्वति।　८. तै.तै.- भस्तुम्° ।

स एवैनं वसुमन्तं करोति वसुमानेव भवत्यग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत्
संग्रामे संयत्ते वाजं (५) वा एष सिसीर्षति यः संग्रामं जिगीषत्यग्निः खलु वै देवानां
वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति धावति वाजꣳ हन्ति वृत्रं
जयति तꣳ संग्राममथो अग्निरिव न प्रतिधृषे भवत्यग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्व-
५ पेद्यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यस्तौ संभवन्तौ
यजमान(६)मभि सं भवतः स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ

स । एव । एनम् । वसुमन्तमिति वसु-मन्तम् । करोति । वसुमानिति वसु मान् । एव । भवति ।
अग्नये । वाजसृत इति वाज सृते । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् । निरिति । वपेत् ।
सग्राम इति स ग्रामे । सयत्त इति स यत्ते । वाजम् (५)। वै । एष । सिसार्षति । य ।
१० सग्राममिति स ग्रामम् । जिगीषति । अग्नि । खलु । वै । देवानाम् । वाजसृदिति वाज सृत् ।
अग्निम् । एव । वाजसृतमिति वाज सृतम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति ।
धावति । वाजम् । हन्ति । वृत्रम् । जयति । तम् । सग्राममिति स ग्रामम् । अथो इति । अग्नि ।
इव । न । प्रतिधृष इति प्रति-धृषे । भवति । अग्नये । अग्निवत इत्यग्नि वते । पुरोडाशम् ।
अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यस्य । अग्नौ । अग्निम् । अभ्युद्धरेयुरित्यभि उद्धरेयु ।
१५ निर्दिष्टभाग इति निर्दिष्ट-भाग । वै । एतयो । अन्य । अनिर्दिष्टभाग इत्यनिर्दिष्ट भाग । अन्य ।
तौ । सभवन्ताविति स भवन्तौ । यजमानम् ( ६ )। अभि । समिति । भवत । स । ईश्वर ।
आर्तिम् । आर्तोरित्या अर्तो । यत् । अग्नये । अग्निवत इत्यग्नि-वते । निर्वपतीति नि –वपति ।
भागधेयेनेति भाग-धेयेन । एव । एनौ ।

अस्यार्थ । धावतीत्यादि । ˇवाज ˇवाजार्थं सग्राम ˇधावति आक्रामति, ˇवृत्र वारक पापादिक
२० च ˇहन्ति, ˇजयति च ˇसग्रामम् । ˇअथो अपि च ˇअग्नि ˇइव अय ˇन ˇप्रतिधृषे ।
[10]प्रतिधर्षयितु शक्यो न [11]भवतीत्यर्थे के प्रत्यय ( पा ३ ४ १४ )। [12]अप्रधृष्य ˇभवति इत्यर्थ ।

अग्निमान् अन्य तरेण [13]तद्वान् । "छन्दसीर" (पा ८ २ १५) इति मतुपो वत्वम् ।
उपरि प्रणयनमुद्धरणम्[14] । तस्योपरि पुन प्रणयनमभ्युद्धरण प्रमादादिना । तत्र तयोरेक
ˇनिर्दिष्टभाग यस्मै हविर्निरुप्त भविष्यति, ˇअन्य ˇअनिर्दिष्टभाग, तादृशौ भिन्नस्वभावौ । ˇतौ
२५ ˇसभवन्तौ सह भवन्तौ ˇयजमानम् ˇअभि [15]एतत्कारिणम् यजमानमेवाभिलक्ष्य ˇस ˇभवत

९. तै१ तै२ मै८ ऽर्योयम । १०. मै८– प्रधर्षयितुम् । ११. मै८– कृत्यर्थे । १२. त२–
प्राप्य । १३ तै१ तै२ मै ८– 'तद्वान्' नास्ति । १४ मै८–°यागत्युद्धरणम् । १५. त१ मै–एतत्कारणम् ।

शमयति नाऽऽर्तिमार्छति यजमानोऽग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्य-
स्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्यानूद्धृत्य इत्याहुस्तत्तथा न कार्यं
यद्भागधेयमभि पूर्व उद्ध्रियते किमपरोऽभ्युद्(७)ह्रियेतेति तान्येवावक्षाणानि
संनिधाय मन्थेदितः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया
त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति

शमयति। न। आर्तिम्। एति। ऋच्छति। यजमान। अग्नये। ज्योतिष्मते। पुरोडाशम्।
अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपेत। यस्य। अग्नि। उद्धृत इत्युत्-हृत। अहुते।
अग्निहोत्र इत्यग्नि-होत्रे। उद्वायेदित्युत्-वायेत्। अपर। आदीप्येत्या-दीप्य। अनूद्धृत्य इत्यनु-उद्धृत्य।
इति। आहु। तत्। तथा। न। कार्यम्। यत्। भागधेयमिति भाग-धेयम्। अभीति। पूर्व।
उद्ध्रियत इत्युत्-ह्रियते। किम्। अपर। अभि। उदिति (७)। ह्रियेत। इति। तानि। एव।
अवक्षाणानीत्यव-क्षाणानि। संनिधायेति सम्-निधाय। मन्थेत्। इत। प्रथमम्। जज्ञे। अग्नि।
स्वात्। योनेः। अधीति। जातवेदा इति जात-वेदा। स। गायत्रिया। त्रिष्टुभा। जगत्या।
देवेभ्य। हव्यम्। वहतु। प्रजानन्निति प्र-जानन्। इति।

[16]अभिव्याप्नुत। तत स यजमान आर्तिं गन्तुम् ईश्वर स्यात्। "ईश्वरे तोसुन्कसुनौ"
(पा ३ ४ १३) इति तोसुन्। यदित्यादि गतम्॥

ज्योतिष्मान् ज्योतिषा युक्त। [17]यस्य यजमानस्य[17] अग्निहोत्रार्थम् उद्धृत अग्नि
अग्निहोत्रहोमात् [18]प्रागेव उद्वायेत्[18] उद्गच्छेत् निरस्येत् तदा अपर अग्नि आदीप्य, न तु
मथित्वा, अनूद्धृत्य उद्वापनानन्तर प्रणेय इति आहु। एतद्दूषयति– तत् तथा न कर्तव्यम्।
हेतुमाह– यत् भागधेयम् अभिलक्ष्य पूर्व अग्नि उद्ध्रियते प्रणीयते किं तदेव [19]भागधेयमभिलक्ष्य
अपर अग्नि उद् ह्रियेत? किमेतदुच्यते? तर्हि कथ कर्तव्यमित्याह– तानि एव अवक्षाणानि
दग्धकाष्ठानि येभ्य पूर्व [20]उदभवत्। क्षै जै पै क्षये, तस्माल्ल्युट् (पा ३·३ ११७)। तानि संनिधाय
मन्थेत्। 'इत प्रथम जज्ञे' इति त्रिष्टुप्। पङ्क्तिप्रकारोऽयमिति केचित्। एव हि स एवाग्निरास्थितो

१६. क–अभिव्याप्नुवत। १७–१७ तै१ मै४ कं– यदि, तै२– 'यस्य यजमानस्य' नास्ति।
१८–१८ ञ– 'प्रागेव उद्वायेत्' नास्ति। १९. तै१ तै२ मै१ कं– भागम्। २०. मै४–उद्वायेत्।

छन्दोभिरेवैनं स्वाद्योनेः प्र जनयत्येष वाव सोऽग्निरित्याहुर्ज्योतिस्त्वा अस्य परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य (८) ज्योतिः परापतितं तदेवाव रुन्द्धे ॥ ४ ॥

[ करोत्यन्नादो दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधाति करोति वाज यजमानमदेवास्य षट् च । ]।

५

छन्दोभिरिति छन्दः-भिः । एव । एनम् । स्वात् । योनेः । प्रेति । जनयति । एषः । वाव । सः । अग्निः । इति । आहुः । ज्योतिः । तु । वै । अस्य । परापतितमिति परा-पतितम् । इति । यत् । अग्नये । ज्योतिष्मते । निर्वपतीति निः-वपति । यत् । एव । अस्य (८) । ज्योतिः । परापतितमिति परा-पतितम् । तत् । एव । अवेति । रुन्द्धे ॥ ४ ॥

१० [ काण्ड १०६ ]

भवति । तदेवाह—छन्दोभिरिति । सम्यङ्निधान सन्निधान, मथनानुगुण "निधाय तेष्वेव मथनेना ग्निमुत्पादयेदिति । तादृशावक्षाणाभावे तद्भस्मनाऽपि संस्पृश्य मथेदिति प्रदर्शनार्थमेवकारग्रहणम् । "छन्दोभि गायत्र्यादिभि "स्वात् "योने "कारणादवक्षाणामकात् "प्र "जनयति "अग्निम् । अग्निर्हि छन्दांसि श्रुत्वा जायते, यथा—" गायत्रं छन्दोऽनु प्र जायस्व " (तैस १ ३ ७) १५ इत्यादि । नन्वेनमपि मन्थनजन्मा अन्य एवायमग्नि, तत्राह—"एष खलु मन्थनजन्मा "स च "अग्नि, योनिगतस्यैकत्वात् । "ज्योति "तु "वै "अस्य अग्ने "परापतितम् उत्सन्न, तावता अग्निरेवोत्सन्न इति लौकिका मन्यन्ते, तस्मात् स एवायमग्निरिति यथोक्तदोषाप्रसङ्ग इत्याहु पुरानिद । एवमुत्पादितेऽग्नौ, 'अग्नये 'ज्योतिष्मते 'पुरोडाशम् 'अष्टाकपाल 'निर्वपेत् इति । यदग्नये इत्यादि । गतम् । मन्त्रार्थस्तु—"प्रथमम् अप्ययम् 'अग्नि 'इत एव जात "स्वात् आमीयात् २० "योने कारणात् "अधि "जज्ञे । 'नासत्वेदा जातानां वेदिता, जातधनो वा । 'स अयमिदानीं स्वाद्योनेर्गायत्र्यादिभि जात 'देवेभ्य "हव्य "वहतु "प्रजानन् प्रकर्षेण वहनोपायज्ञ ॥

इति द्वितीये द्वितीये चतुर्थोऽनुवाक ॥

पुरावधागमारभ्य प्रोक्तानामक्षरार्थक । 
"याज्या इदमत्र गर्यो ' विस्पष्टमुपवर्णित' ॥ २४ ॥

२५ २१ मै४—अभिषाय । २२. मै४— कारणामायात् । २३ तै१ तै२,९—अग्नि ।

*( ह मै १ ४४६ ) । १८. ह—"ह समुन्नीत, ह ह १ ते ४ हो १—"इमनुपर्णित ।

काम्या इष्टय ]

**वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनꣳ स्वदयत्यप पापं वर्णꣳ हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवत्ये-**

---

वैश्वानरम् । द्वादशकपालमिति द्वादश कपालम् । निरिति । वपेत् । वारुणम् । चरुम् । दधिक्राव्णे इति दधि क्राव्णे । चरुम् । अभिशस्यमान इत्यभि शस्यमान । यत् । वैश्वानर । द्वादशकपाल इति द्वादश कपाल । भवति । संवत्सर इति सं वत्सर । वै । अग्नि । वैश्वानर । संवत्सरेणेति सं-वत्सरेण । एव । एनम् । स्वदयति । अपेति । पापम् । वर्णम् । हते । वारुणेन । एव । एनम् । वरुणपाशादिति वरुण पाशात् । मुञ्चति । दधिक्राव्णेति दधि क्राव्णा । पुनाति । हिरण्यम् । दक्षिणा । पवित्रम् । वै । हिरण्यम् । पुनाति । एव । एनम् । आद्यम् । अस्य । अन्नम् । भवति । १०

---

वैश्वानर [1]द्वादशकपालमिति ॥ [V]अभिशस्यमान पातकारोपेण दूष्यमाण । [V]स्वदयति निर्दोषीकरोतीति । ष्वद आस्वादने, चुरादिरदन्त । अपेति । [V]पाप [V]वर्णं रूपम् आरोप्यमाण [V]अप [V]हते । दधिक्राव्णा पुनातीति । दधीनि धारकाणि पृथिव्यादीनि । "आदृगमहन[2]" (पा ३ २ १७१) इति किप्रत्यय । तेषु सर्वेषु क्रमते व्याप्नोतीति व्यापकोऽग्नि दधिक्रावा, तेन [V]पुनाति । क्रमे "अन्येभ्योऽपि दृश्यन्ते" (पा ३ २ ७५) इति वनिप् । "विड्वनोरनु १५ नासिकस्यात्" (पा ६ ४ ४१) इत्यात्वम् । हिरण्यमिति । अन्वाहार्यमासाद्य हिरण्य दक्षिणा ददाति ॥

---

वैश्वानर पुरोडाश चरुं वरुणदेवकम् ।
दधिक्राव्णे चरु कुर्यादभिशस्त परै पुमान् ॥ २५ ॥
ग्रिहविष्कामिमामेव प्रजाप्त्यैपि समाचरेत् । २०
एक वैश्वानर कुर्यात् पुत्रे जातेऽभिवृद्धये ॥ २६ ॥
दर्शादिकमतिक्रम्य [19]तद्वद्वैश्वानर चरेत् [19] ॥
[20]अग्निमुद्वासयिष्यन्नाग्नेयमष्टाकपालकम् ॥ २७ ॥
उक्त वैश्वानर चोभे निर्वपेद्दर्विपी यथ[20] ।
वैश्वानर मारुत च [21]ग्रामकाम समाचरेत्[21] ॥ २८ ॥ २५
अभिशस्तीष्टिमारभ्य पञ्चमेऽस्मिन्नुदाहृता ।

---

१. त१ तैर– द्वादशकपालमित्यादि । २ तर– क्वनिप् ।

---

१९–१९. द द१ ने भ होर तै–वैश्वानरमाचरेत् । २०. ने भ–आग्नेयवैश्वानरावुद्वासन कामिन', द१–अग्नये वैश्वानरौ द्वौ चाग्निद्वासन(?)कामिनम्, द हो१–आग्नेयवैश्वानरौ द्वौ अन्नुद्वासनकामिन । २१–२१. आ क–ग्रामार्थी निर्वपेद्धवि । ३०

-तामेव निर्वपेत् प्रजाकामः संवत्सरो (१) वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन् प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्र जनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं
५ दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं (२) विन्दते प्रजां वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति

एताम्। एव। निरिति। वपेत्। प्रजाकाम इति प्रजा-काम। संवत्सर इति सं-वत्सर (१)।
१० वै। एतस्य। अशान्त। योनिम्। प्रजाया इति प्र-जायै। पशूनाम्। निरिति। दहति। यः।
अलम्। प्रजाया इति प्र-जायै। सन्। प्रजामिति प्र-जाम्। न। विन्दते। यत्। वैश्वानरः।
द्वादशकपाल इति द्वादश-कपालः। भवति। संवत्सर इति सं-वत्सरः। वै। अग्निः। वैश्वानरः।
संवत्सरमिति सं-वत्सरम्। एव। भागधेयेनेति भाग-धेयेन। शमयति। सः। अस्मै। शान्तः।
स्वात्। योनेः। प्रजामिति प्र-जाम्। प्रेति। जनयति। वारुणेन। एव। एनम्। वरुणपाशादिति
१५ वरुण-पाशात्। मुञ्चति। दधिक्राव्णेति दधि-क्राव्णा। पुनाति। हिरण्यम्। दक्षिणा। पवित्रम्।
वै। हिरण्यम्। पुनाति। एव। एनम् (२)। विन्दते। प्रजामिति प्र-जाम्। वैश्वानरम्।
द्वादशकपालमिति द्वादश-कपालम्। निरिति। वपेत्। पुत्रे। जाते। यत्। अष्टाकपाल
इत्यष्टा-कपालः। भवति। गायत्रिया। एव। एनम्। ब्रह्मवर्चसेनेति ब्रह्म-वर्चसेन। पुनाति। यत्।
नवकपाल इति नव-कपालः। त्रिवृतेति त्रि-वृता। एव। अस्मिन्। तेजः। दधाति। यत्।
२० दशकपाल इति दश-कपालः। विराजेति वि-राजा। एव। अस्मिन्। अन्नाद्यमित्यन्न-अद्यम्।
दधाति। यत्। एकादशकपाल इत्येकादश-कपालः। त्रिष्टुभा। एव। अस्मिन्। इन्द्रियम्। दधाति।

एतामिति ॥ त्रिहविष्कामिष्टिम्। एतस्येति। उक्तम। वक्ष्यन्याह—योऽलमिति। गतमन्यत् ॥

पुत्रे जाते इति ॥ 'दशाहानन्तरं' परम्पेत्। 'यदष्टाकपाल' इत्यादिना अस्युक्त द्वादशकपाल स्तूयते 'ब्रह्मवर्चसेन' इति। तदनुसारात् ताच्छब्द्यम्। त्रिवृतेति। नवस्तोत्रीयस्तोम
२५ त्रिवृत्। विराट् दशाक्षरा, विराडन्नं च। त्रिष्टुभेति। तस्येन्द्रियहेतुत्वात् त्रिष्टुबिन्द्रियम्

३–३ मै०– दशाहानन्तरं पर्यवेत, ३१ तै० मै०– दशाहादस्ययमर्यवेत। ४ मै०–इत्यादि।
५. तै१ मै०–'वरा'। ६ तै१ तै० मै० अधम्।

यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत (३) एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवत्यव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा ५
उप दधाति सुवर्गस्य लोकस्य समष्ट्या (४) अथो देवता एवान्वारभ्य सुवर्गं लोकमेति
वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा

यत् । द्वादशकपाल इति द्वादश-कपालः । जगत्या । एव । अस्मिन् । पशून् । दधाति । यस्मिन् । जाते । एताम् । इष्टिम् । निर्वपतीति निः-वपति । पूत (३) । एव । तेजस्वी । अन्नाद इत्यन्न-अदः । इन्द्रियावी । पशुमानिति पशु-मान् । भवति । अवेति । वै । एषः । सुवर्गादिति १०
सुवः-गात् । लोकात् । छिद्यते । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास-याजी । सन् । अमावास्यामित्यमा-वास्याम् । वा । पौर्णमासीमिति पौर्ण-मासीम् । वा । अतिपादयतीत्यति-पादयति । सुवर्गायेति सुवः-गाय । हि । लोकाय । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । इज्येते इति । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । अमावास्यामित्यमा-वास्याम् । वा । पौर्णमासीमिति पौर्ण-मासीम् । वा । अतिपाद्येत्यति-पाद्य । संवत्सर इति सम्-वत्सरः । वै । १५
अग्निः । वैश्वानरः । संवत्सरमिति सम्-वत्सरम् । एव । प्रीणाति । अथो इति । संवत्सरमिति सम्-वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुवः-गस्य । लोकस्य । समष्ट्या इति सम्-अष्ट्यै (४) । अथो इति । देवताः । एव । अन्वारभ्येत्यनु-आरभ्य । सुवर्गमिति सुवः-गम् । लोकम् । एति । वीरहेति वीर-हा । वै । एषः । देवानाम् । यः । अग्निम् ।
उद्वासयत इत्युत्-वासयते । न । वै । एतस्य । ब्राह्मणाः । २०

सहजातत्वात् । जगत्येति । तस्याः पशव्यत्वात् । जातेष्ट्या फलमाह—यस्मिन्निति । पूतत्वादिकं जातस्य पुत्रस्य फलमिति दर्शयति । तेन पूतत्वादिगुणो जाते भवत्विति सङ्कल्पः ॥

अव वा एष इत्यादि ॥ गतम् (तैस २ २ २)। अत्र पथिकृद्वैश्वानरयोः समुदाय इत्येके, विकल्प इत्यन्ये । अथो इति । अपि चास्य संवत्सरम् एव अस्मै उप दधाति उपस्थापयति । तत्र अवयविन उपस्थापने का नामावयवयोः अतिपत्तिरिति । अथो अपि च २५
देवता एव अवष्टभ्य स्वर्गं गच्छति, तत्कुतोऽस्य स्वर्गाद्व्युच्छित्तिरिति ॥

वीरहेत्यादि ॥ "उद्वास्य पुनरादधीत" (तैस १ ५ १) इत्यत्रेदमुच्यते । श्लाघन श्लत सन्य यज्ञ वा आमन इच्छत । अस्य अन्नम् न अश्नन् नादन् । "रुद्रमनोऽस्त्र"

■ मै॰- आत । ८. मै॰—मुञ्चर । ९. तै१ तै२ मै- 'तत्र' नास्ति । १०. प२-अवयवो-परियोरे, मै॰- अवयवोपरात्ति । ११ तै१ तै२ मै॰- अन्वारभ्य । १२. तै१ तै२ मै- अवरुन्द्धनि । ३०

ऋतायवः पुराऽन्नमक्षन्नाग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्
यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो
यथा जनं यतेऽवसं करोति तादृगे(५)व तद्द्वादशकपालो वैश्वानरो भवति द्वादश मासाः
संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति वैश्वा-
५ नरं द्वादशकपालं निर्वपेन्मारुत२ सप्तकपालं ग्रामकाम आहवनीये वैश्वानरमधि श्रयति

ऋतायन् इत्यृत यन । पुरा । अन्नम् । अक्षन् । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति ।
वपेत् । वैश्वानरम् । द्वादशकपालमिति द्वादश कपालम् । अग्निम् । उद्वासयिष्यन्नित्युत् वासयिष्यन् ।
यत् । अष्टाकपाल इत्यष्टा कपाल । भवति । अष्टाक्षरेत्यष्टा अक्षरा । गायत्री । गायत्र । अग्नि ।
यावान् । एव । अग्नि । तस्मै । आतिथ्यम् । करोति । अथो इति । यथा । जनम् । यते । अवसम् ।
१० करोति । तादृक् ( ५ ) । एव । तत् । द्वादशकपाल इति द्वादश कपाल । वैश्वानर । भवति ।
द्वादश । मासा । संवत्सर इति सं-वत्सर । संवत्सर इति सं-वत्सर । खलु । वै । अग्ने । योनि ।
स्वाम् । एव । एनम् । योनिम् । गमयति । आद्यम् । अस्य । अन्नम् । भवति । वैश्वानरम् ।
द्वादशकपालमिति द्वादश कपालम् । निरिति । वपेत । मारुतम् । सप्तकपालमिति सप्त-कपालम् ।
ग्रामकाम इति ग्राम काम । आहवनीय इत्या-हवनीये । वैश्वानरम् । अधीति । श्रयति ।

१५ (पा २ ४ ३७), "मन्त्रे घसह्वर°" (पा २ ४ ८०) इति च्लेर्लुक् । भापानिवृत्त्यर्थत्वान्मन्त्रग्रहणस्य,
"घसिभसोर्हलि च" (पा ६ ४ १००) इत्युपधालोप, "शासिवसिघसीनां च" (पा ८ ३ ६०) इति
षत्वम् । अग्निमुद्वासयिष्यन्नित्यादि । उद्वासनारम्भे अष्टाकपालनिर्वपणेन अष्टत्वान्वयात् गायत्रत्वाच्च
ᵛअग्नि ᵛयावान् कश्चिदग्निर्नाम, तस्य सर्वस्य यत्र क्वापि गतस्य ᵛआतिथ्य ᵛकरोति । तस्मादुद्वास
नेन [13]अग्नेस्कोपो न भवति[13] । ᵛअथो अपि च ᵛयथा ᵛजन जनपदादिक जनमेव वाऽभीष्ट ᵛयते
२० गच्छते ᵛअवस पाथेयादि ᵛकरोति [14]लोक, तादृशमेतदुद्वासनारम्भे अष्टाकपालनिर्वपणम् । अथ
द्वादशकपालनिर्वपणेन द्वादशत्वान्वयात् द्वादशमासात्मकसंवत्सरयोनेरग्ने[15] स्वस्यामेव[16] योनौ
प्रतिष्ठापन कृत भवति । तनश्च न कश्चिदुद्वासने दोष इति ॥

आहवनीय इति ॥ उपसादन च वैश्वानरस्यापरेणाहवनीयम्, एवमपरेण गार्हपत्य [17]मारुत,
सामर्थ्यात् क्षत्रियस्यैवम् । क्षत्रियवृत्तीनामपीच्छन्ति द्रोणादेरिव । पापवस्यमस्येति । वमीय पाप

२५ [13]१३–१३. पर– अग्ने कोपो न भवति, तै१ तं२ मे ६– अग्नेस्तलोप इति । १४ मे– 'लोकः' नास्ति । १५. मे– 'अग्ने' नास्ति । १६ तै१ तं२ मे ७– स्वायाम् । १७ तै१ तं२ मे ७– 'मारुतम्' नास्ति ।

काम्या इष्टयः ]

**गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै सजाताऽश्च्यावयति मारुतो भवति( ६ ) मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमव रुन्द्धे सप्तकपालो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्द्धेऽनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति ॥ ५ ॥** ५

[ प्रजाकामः संवत्सरं पुनात्येवैनं पूत. सर्वदृष्टं तादृक्मारुतो भवत्येकान्नत्रिंशच्च । ] ।

गार्हपत्य इति गार्ह-पत्ये । मारुतम् । पापवस्यसस्येति पाप-वस्यसस्य । विधृत्या इति वि-धृत्यै । द्वादशकपाल इति द्वादश कपालः । वैश्वानरः । भवति । द्वादश । मासाः । संवत्सर इति सं-वत्सर । संवत्सरेणेति सं-वत्सरेण । एव । अस्मै । सजातानिति स जातान् । च्यावयति । मारुत. । भवति ( ६ ) । मरुत. । वै । देवानाम् । विशः । देवविशेनेति देव-विशेन । एव । अस्मै । मनुष्यविशमिति १० मनुष्य विशम् । अवेति । रुन्द्धे । सप्तकपाल इति सप्त कपालः । भवति । सप्तगणा इति सप्त-गणाः । वै । मरुत. । गणश इति गण-श. । एव । अस्मै । सजातानिति स-जातान् । अवेति । रुन्द्धे । अनूच्यमान इत्यनु-उच्यमाने । एति । सादयति । विशम् । एव । अस्मै । अनुवर्त्मानमित्यनु-वर्त्मानम् । करोति ॥ ५ ॥

[ मैत्रं २·१·२ ; काठ १०·४ ] १५

पापवस्यसम् । राजदन्तादित्वात् परनिपातः ( पा २·२·३१ ), ईयस ईकारस्य छान्दसो लोप., "अनसन्तान्नपुंसकाच्छन्दसि" ( पा ५·४·१०३ ) इत्यच् समासान्त । [v]विधृत्यै विश्लेषाय । [v]च्यावयति प्रह्वीभूतान् करोति । देवविशेनेति । "अच्" (पा ५·४·७५) इति योगविभागादच् समासान्तः । गणश इति । "बहुगण°" (पा १·१·२३) इति सख्यात्वात् "संख्यैकवचनाच्च°" ( पा ५·४·४३ ) इति शस् । अनूच्यमान इति । सामिधेनीसमूहे [v]अनूच्यमाने [v]मारुतस्यासादन- २० काले प्रत्यञ्च वैश्वानरम् [v]आ [v]सादयति । अनुवर्त्मानमिति । या वर्त्मन्यागत्यानुवर्त्मा[वर्त]न करोति साऽनुवर्त्मा । देवविशा [v]मरुता सम्बन्धिनो मारुतस्यासादने पाश्चात्त्यतया मनुष्यविशो- ऽप्यनुवर्त्मानो भवन्तीति ॥

इति द्वितीये द्वितीये पञ्चमोऽनुवाकः ॥

१८–१९. मै४– मारुतमासादयति काले। १९. तै१ तै२ मै३– 'मरुता' नास्ति। २५

आदित्यं चरुं निर्वपेत् संग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रति तिष्ठन्ति वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवाऽऽयतने यतते जयति तꣳ संग्राममेतस्मिन् वा एतौ मृजाते ( १ )

५ आदित्यम्। चरुम्। निरिति। वपेत्। सग्राममिति सऽग्रामम्। उपप्रयास्यन्नित्युप प्रयास्यन्। इयम्। वै। अदितिः। अस्याम्। एव। पूर्वे। प्रतीति। तिष्ठन्ति। वैश्वानरम्। द्वादशकपालमिति द्वादश-कपालम्। निरिति। वपेत्। आयतनमित्या यतनम्। गत्वा। सवत्सर इति सऽवत्सर। वै। अग्नि। वैश्वानर। सवत्सर इति सऽवत्सर। खलु। वै। देवानाम्। आयतनमित्या-यतनम्। एतस्मात्। वै। आयतनादित्या-यतनात्। देवा। असुरान्। अजयन्। यत्। वैश्वानरम्। १० द्वादशकपालमिति द्वादश-कपालम्। निर्वपतीति नि –वपति। देवानाम्। एव। आयतन इत्या यतने। यतते। जयति। तम्। सग्राममिति सऽग्रामम्। एतस्मिन्। वै। एतौ। मृजाते इति ( १ )।

आदित्य चरुमित्यादि ॥ गतम्। सग्रामजयेन [v]अस्या प्रतितिष्ठति ॥ आयतनमिति ॥ सग्रामायतन [v]गत्वा सग्रामजयार्थी तत्र यजेत। यद्वा– आ समन्तायतनम् [v]आयतन सनाहगत[1] प्राप्य [v]वैश्वानर [v]निर्वपेत्। [v]देवानाम् [v]एव [1]सनाहे यतमानो वर्तमानो [v]जयति [v]सग्रामम्[1]।
१५ केचिदाहु व्यायामस्थानमायतनमिति ॥

एतस्मिन् वा इत्यादि ॥ [v]मृजाते पापमात्मीय शोधयत । विविध परस्पर विद्विषन्तौ [1]अभिचारादियोरानर्थप्रवृत्तौ [v]विद्विषाणौ, [1]तयोरन्यतरस्य [v]अन्न [v]य [v]अग्नि तस्मिन्नात्मीय पाप

निर्वपेच्चरुमादित्यं य सग्राम यियासति ॥ २९ ॥
युद्धभूमिं गतस्तत्र कुर्याद्वैश्वानर हवि ।
२० मारणोद्यतयोरन्न जग्ध्वा वैश्वानर चरेत् ॥ ३० ॥
कृत्वा [illegible] शपथ पूर्वं द्रुह्येद्योऽपि स चरेत्।
[११] अग्नि तूमपनोदन्त [1] या स्वीकृत्य समाचरेत् ॥ ३१ ॥
[illegible] चरेद्याचितु गच्छन्नागत्य च पुनश्चरेत्।
पञ्चेऽनुवाक आदित्यचर्वाद्या उपवर्णिता ॥ ३२ ॥
२५ *वैश्वानरो न इत्यत्र वर्णितोऽर्थोऽनुवाक्यो ।

१. मै०– सग्राम सम। २–२. मै०–अन्या सामर्थ्यात् क्षत्रियस्यैवं क्षत्रियवृत्तीनामतीन्द्रानि [illegible] [illegible] [illegible] सग्रामम्, [illegible] मै०– सनाहे [illegible] इति सग्रामम्। ३ मै०– अभिचारादि?। ४ मै–पुरुषौ। ५. मै–[illegible]।

२२. [illegible]–अग्नि [illegible] ८–अग्नि सोमपनोदन्त, ग–अभिसोभवनादन्त, ग– ३० अग्नि [illegible]। *( द्र तै० [illegible] )।

यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेवात्ति नास्मिन् मृजाते संवत्सराय वा एतौ समममाते यौ सममाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादशकपालं निर्वपेत् सममानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाऽऽप्त्वा

यः । विद्विषाणयोरिति वि द्विषाणयोः । अन्नम् । अत्ति । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । विद्विषाणयोरिति वि द्विषाणयोः । अन्नम् । जग्ध्वा । संवत्सर इति सम्-वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरस्वदितमिति संवत्सर-स्वदितम् । एव । अत्ति । न । अस्मिन् । मृजाते इति । संवत्सरायेति सम्-वत्सराय । वै । एतौ । समिति । अमाते इति । यौ । सममाते इति सम्-अमाते । तयोः । यः । पूर्वः । अभिद्रुह्यतीत्यभि-द्रुह्यति । तम् । वरुणः । गृह्णाति । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । सममानयोरिति सम्-अमानयोः । पूर्वः । अभिद्रुह्येत्यभि-द्रुह्य । संवत्सर इति सम्-वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरमिति सम्-वत्सरम् । एव । आप्त्वा ।

विद्विषाणौ मृजाते । उभयोः अन्नम् इति केचित् । संवत्सरस्वदितमिति । संवत्सरेण निर्दोषीकृतमन्नम् अत्ति । तस्मात् न अस्मिन् पाप मृजाते । "तृतीया कर्मणि" (पा ६·२·४८) इति पूर्वपदप्रकृतिस्वरत्वम् । मृजेर्व्यत्ययेनाऽऽत्मनेपदम् (पा ३·१·८५) ॥

संवत्सराय वा इत्यादि ॥ यौ सममाते सम्भूय एकस्मिन् कार्ये शपथं कुर्वाते, अस्मिन् विषये अन्योन्यमाभ्यां न द्रोग्धव्यमिति, एतौ खलु संवत्सराय सममाते संवत्सरार्थं संवत्सरमेव साक्षिणं कृत्वा । यद्वा– संवत्सरसमाप्तेः प्रागनभिद्रोहाय सममाते । तस्मात् तयोः मध्ये यः पूर्वः अभिद्रुह्यति, प्रथमं वा संवत्सरादर्वाक् या समयं भिनत्ति तं वरुणः गृह्णाति, तस्मात् सममानयोः पूर्वः अभिद्रुह्य वैश्वानरं द्वादशकपालं निर्वपेत् इति । ततो यागद्वारेण संवत्सरम् एव आप्त्वा आप्तं कृत्वा समाप्य या परस्तात् एव अभि द्रुह्यति, अन्येनाभिद्रुग्धे

६. तै१.तै२.मै–अन्यतम्; लं– अन्यम् । ७. तै१.तै२.मै.लं–°स्वदितमिति केचित् । ८. तै१.तै२.मै.लं–इति । ९. तै१.तै२.मै– 'सम्भूय' नास्ति । १०. तै१.तै२.मै.लं– 'या' नास्ति । ११. तै१.तै२– 'या' नास्ति । १२–१२. मै०– परम् अन्यादेव पूर्वमन्येनाभिद्रुग्ध ।

निर्वरुणं ( २ ) पुरस्तादभि द्रुह्यति नैनं वरुणो गृह्णात्याव्यं वा एष प्रति गृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादशकपालं निर्वपेदविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितामेव प्रति गृह्णाति नाऽऽव्यं प्रति गृह्णात्यात्मनो वा एष मात्रामाप्नोति य उभयादत् प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं

५ निर्वरुणमिति निः-वरुणम् (२)। पुरस्तात्। अभीति। द्रुह्यति। न। एनम्। वरुण। गृह्णाति। आव्यम्। वै। एष। प्रतीति। गृह्णाति। यः। अविम्। प्रतिगृह्णातीति प्रति-गृह्णाति। वैश्वानरम्। द्वादशकपालमिति द्वादश-कपालम्। निरिति। वपेत्। अविम्। प्रतिगृह्येति प्रति गृह्य। संवत्सर इति सं-वत्सर। वै। अग्नि। वैश्वानर। संवत्सरस्वदितामिति संवत्सर स्वदिताम्। एव। प्रतीति। गृह्णाति। न। आव्यम्। प्रतीति। गृह्णाति। आत्मन। वै। एष। मात्राम्।
१० आप्नोति। यः। उभयादत्। प्रतिगृह्णातीति प्रति-गृह्णाति। अश्वम्। वा। पुरुषम्। वा। वैश्वानरम्। द्वादशकपालमिति द्वादश-कपालम्।

पश्चादेव वा संवत्सरस्याभिद्रोह कृतो भवति। [v]निर्वरुण वरुणग्रहणरहित, तदेवाह– [v]न [v]एन [v]वरुण॰ गृह्णाति इति। अभिरित्र सत्यापने वर्तते। यथा– "सोऽब्रवीदृतममीष्व" ( तैस २ ३ ५) इति। अभ गत्यादिषु। "बहुलं छन्दसि" (पा २ ४ ७३ ) इति शपो लुक्॥

१५ आव्यमिति॥ अवत्सरमादिति [v]आव्य पाप रोगविशेषो वा। अवते "ऋहलोर्ण्यत्" (पा ३ १ १२४ )। [13]श्लेष्मरोग केचिदाहु। तदेन खल्वय [v]प्रति [v]गृह्णाति [v]य॰ [v]अविं [v]प्रति गृह्णाति। संवत्सरस्वदितामिति। संवत्सरेण निर्दोषीकृताम् [v]एव अविम् [v]प्रति [v]गृह्णाति। तत [v]न [v]आव्य [v]प्रति [v]गृह्णाति इति।

आत्मन इत्यादि॥ अश्वादिकम् [v]उभयादत् उभयोर्भागयोर्दन्तवत् [14]प्रतिगृह्णन् [v]आत्मन
२० [v]एष॰ [v]मात्रा प्रतिगृह्णाति। मीयतेऽनयेति मात्रा [15]प्रकृति। तस्या हि प्रतिग्रहे प्रतिमाध्यन्ते क्षिप्र

१३. तं१ तै२ मै–श्लेष्मरोग।
१४. मै४–प्रतिगृह्णाति।
१५. तं१ तै२ मै मै–'प्रकृति' नास्ति।

निर्वपेदुभयादत् ( ३ ) प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेव प्रतिं गृह्णाति नाऽऽत्मनो मात्रामाप्नोति वैश्वानरं द्वादशकपालं निर्वपेत् सनिमेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं निर्वपति संवत्सरसातामेव सनिमभि प्र च्यवते दानकामा अस्मै प्रजा भवन्ति ५

निरिति । वपेत् । उभयादत् ( ३ ) । प्रतिगृह्येति प्रति-गृह्य । संवत्सर इति सं-वत्सर । वै । अग्निः । वैश्वानर. । संवत्सरस्वदितमिति संवत्सर-स्वदितम् । एव । प्रतीति । गृह्णाति । न । आत्मनः । मात्राम् । आप्नोति । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । सनिम् । एष्यन् । संवत्सर इति सं-वत्सर । वै । अग्निः । वैश्वानरः । यदा । खलु । वै । संवत्सरमिति सं-वत्सरम् । जनतायाम् । चरति । अथ । स. । धनार्घ इति धन-अर्घ । भवति । १० यत् । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निर्वपतीति निः-वपति । संवत्सरसातामिति संवत्सर-साताम् । एव । सनिम् । अभि । प्रेति । च्यवते । दानकामा इति दान-कामाः । अस्मै । प्रजा इति प्र-जा. । भवन्ति ।

स्यादात्मा । यद्वा— आत्मनो मात्राऽस्यता आयु ममाति , ता प्रतिगृह्णाति म्रियते इत्यर्थ । यद्वा— आत्मनो मात्रामेकदेशं प्रतिगृह्णाति एकदेशस्य प्रतिग्राहत्वेन क्षेरः । "छन्दसि च" १५ ( पा ५·४·१४२ ) इति दन्तस्य दतृभावः, वस्तुत्वेन विवक्षितत्वात्पुंस्त्वम् । "अन्येषामपि दृश्यते" ( पा ६·३·१३७ ) इति दीर्घत्वम् ॥

सनिमेष्यन्निति ॥ याच्ञालब्ध धन सनिः, तदर्थम् 'एष्यन् 'वैश्वानर 'निर्वपेत् इति । यद्वेत्यादि । 'संवत्सर 'जनताया जनसमूहे दातृयार्थे चरन् 'धनार्घः 'भवति धनेन पूजितो महाधनो भवति । अर्घ पूजायाम्, कर्मणि घञ्, थाथादिनोत्तरपदान्तोदात्तत्वम् (पा ६·२·१४४)। २० 'संवत्सरसातां संवत्सरेण "दत्ता 'सनिम् 'अभि 'प्र 'च्यवते प्रगच्छति प्राप्त चेष्टते । ततश्च सर्वाः 'प्रजाः 'अस्मै 'दानकामाः 'भवन्ति ॥

१६. ह–यदताम् ।

यो वै संवत्सरं ( ४ ) प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन वि मुञ्चति प्रतिष्ठित्यै यया रज्ज्वोत्तमां गामाऽजेत् तां भ्रातृव्याय प्र हिणुयान्निर्ऋतिमेवास्मै प्र हिणोति ॥ ६ ॥

[ मुजाते निर्वरुणं वपेद्भयाद्यो वै संवत्सरं षट्त्रिंशच्च । ]

५ यः । वै । संवत्सरमिति सं-वत्सरम् ( ४ ) । प्रयुज्येति प्र-युज्य । न । विमुञ्चतीति वि-मुञ्चति । अप्रतिष्ठान इत्यप्रति-स्थानः । वै । सः । भवति । एतम् । एव । वैश्वानरम् । पुनः । आगत्येत्या-गत्य । निरिति । वपेत् । यम् । एव । प्रयुङ्क्त इति प्र-युङ्क्ते । तम् । भागधेयेनेति भाग-धेयेन । वीति । मुञ्चति । प्रतिष्ठित्या इति प्रति-स्थित्यै । यया । रज्ज्वा । उत्तमामित्युत्-तमाम् । गाम् । आऽजेदित्या-अजेत् । ताम् । भ्रातृव्याय । प्रेति । हिणुयात् । निर्ऋतिमिति निः-ऋतिम् । एव । अस्मै । प्रेति । हिणोति ॥ ६ ॥

१०

[ मैसं २.१.२ , काठसं १०.३ ]

यो वा इत्यादि ॥ सन्ययं सवत्सरयागेन [v]प्रयुज्य [v]न [v]विमुञ्चति [17]न विमुञ्चेत् [v]सः[17] [v]अप्रतिष्ठानः [v]भवति प्रतिष्ठानशक्तिरहित. स्यात् । [18]तस्मात् सनिं लब्ध्वा [v]आगत्य [v]एतं[19] [v]वैश्वानर [v]पुनः [v]निर्वपेत् । अत्र कपालोपदेशाभावात् न कर्मभेदः, अधिकारभेद [20]एवायम् ।

१५ यमग्नर [v]प्रयुङ्क्ते [v]त [v]भागधेयेन [v]वि [v]मुञ्चति, तथास्य [v]प्रतिष्ठित्यै भवति । तत्रागमनकाले यया [v]रज्ज्वा [v]उत्तमां [v]गा [21]सर्वासां काम्यमानाना[21] गवा पृष्ठतो गच्छन्तीं [22]सनिलब्धाम् [v]आऽजेत् गमयेत्, [v]तां [v]भ्रातृव्याय [v]प्र [v]हिणुयात् [23]भ्रातृव्यस्य मध्ये गोष्ठे[23] [24]न्यस्येत् भ्रातृव्यगवां वाऽभिदध्यात्, [v]निर्ऋतिम् [25]अलक्ष्मीम् [v]एव भ्रातृव्याय [v]प्र [v]हिणोति प्रेरयति ॥

इति द्वितीये द्वितीये षष्ठोऽनुवाकः ॥

२० १७-१७. तै१.तै२.मै.ले–'न विमुञ्चेत् सः' नास्ति । १८. तै१.तै२.मै.ले– 'तस्मात्' नास्ति । १९. तै१.तै२.मै.ले–एनम् । २०. मै८–सोऽयम् । २१-२१. मै४–सर्वा काम्यमाना गा या । २२. तै१.तै२. मै८– सनिं लब्ध्वा । २३-२३. तै१.तै२.मै.ले– भ्रातृव्यमध्यमगोष्ठे; मै८– भ्रातृव्यस्य मध्ये गोष्ठे । २४. तै१. तै२.मै.ले– न्यस्येत् । २५. तै१.तै२.मै–अलक्ष्मीमेव ।

काम्या इष्टयः ]

ऐन्द्रं चरुं निर्वपेत् पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवति चरुर्भवति स्वादेवास्मै योनेः पशून् प्र जनयतीन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत् पशुकाम इन्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति स ( १ ) एवास्मा इन्द्रियं पशून् प्र यच्छति पशुमानेव भवतीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ५

ऐन्द्रम् । चरुम् । निरिति । वपेत् । पशुकाम इति पशुकाम । ऐन्द्राः । वै । पशवः । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति । पशुमानिति पशु-मान् । एव । भवति । चरुः । भवति । स्वात् । एव । अस्मै । योनेः । पशून् । प्रेति । जनयति । इन्द्राय । इन्द्रियावत इतीन्द्रिय-वते । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । पशुकाम इति पशु-कामः । इन्द्रियम् । वै । पशवः । इन्द्रम् । एव । इन्द्रियावन्तमितीन्द्रिय-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः ( १ ) । एव । अस्मै । इन्द्रियम् । पशून् । प्रेति । यच्छति । पशुमानिति पशु-मान् । एव । भवति । इन्द्राय । घर्मवत इति घर्म-वते । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-कामः । १०

ऐन्द्र चरुमित्यादि ॥ गतम् । पशुमानिति । "ह्रस्वनुड्भ्यां मतुप्" (पा ६ १·१७६ ) इति मतुप उदात्तत्वम् । स्वादेवेति । [१]स्वस्मात् एव कारणादिन्द्रात् पशून् प्र जनयति ॥ १५

इन्द्रियावत इति ॥ "मन्त्रे सोमाश्व°" ( पा ६ ३ १३१ ) इति दीर्घत्वम् ॥

पश्वर्थी निर्वपेदैन्द्रं चरुं यद्वेन्द्रियावते ॥ २३ ॥
पुरोडाशं ब्रह्मतेजो वाञ्छन् घर्मवते चरेत् ।
अन्नार्थ्यर्कवते कुर्याद्भूत्यर्थी तु हविस्त्रयम् ॥ २४ ॥ २०
घर्मेन्द्रियार्कैर्युक्तेभ्य इन्द्रेभ्यस्त्रयमाक्रमम् ।
अंहोमुचे पापघाती वैमृधायाप्यपीडितः ॥ २५ ॥
बद्धो वा परियत्तो वा त्रात्र इन्द्राय निर्वपेत् ।
मर्काश्वमेधयुक्ताय [२६]महायज्ञेष्वथाचरेत् ॥ २६ ॥
ऐन्द्रपर्वादयः प्रोक्ता अनुवाकेऽत्र सप्तमे । २५
*इन्द्रं व इत्यत्र सर्वेस्तदर्थं उपवर्णितः ॥ २७ ॥

१. मै²– स्वस्मात् ।

२६. इ द१–°यज्ञेष्वथाचरेत् । *( द्र. तै.ब्रा. १ ६ १० )

ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवतीन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेनो( २ )प धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवतीन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदि-
५ न्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति

---

ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। वै। घर्मः। इन्द्रम्। एव। घर्मवन्तमिति घर्म-वन्तम्। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। सः। एवः। अस्मिन्। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्।
१० दधाति। ब्रह्मवर्चसीति ब्रह्म-वर्चसी। एव। भवति। इन्द्राय। अर्कवत इत्यर्क-वते। पुरोडाशम्। एकादशकपालमित्येकादश-कपालम्। निरिति। वपेत्। अन्नकाम इत्यन्न काम। अर्कः। वै। देवानाम्। अन्नम्। इन्द्रम्। एव। अर्कवन्तमित्यर्क-वन्तम्। स्वेन। भागधेयेनेति भाग धेयेन। (२)। उपेति। धावति। सः। एव। अस्मै। अन्नम्। प्रेति। यच्छति। अन्नाद इत्यन्न-अदः। एव। भवति। इन्द्राय। घर्मवत इति घर्म-वते। पुरोडाशम्। एकादशकपालमित्येकादश-कपालम्।
१५ निरिति। वपेत्। इन्द्राय। इन्द्रियावत इतीन्द्रिय-वते। इन्द्राय। अर्कवत इत्यर्क-वते। भूतिकाम इति भूति-काम। यत्। इन्द्राय। घर्मवत इति घर्म-वते। निर्वपतीति निः-वपति। शिरः। एव। अस्य। तेन। करोति। यत्। इन्द्राय। इन्द्रियावत इतीन्द्रिय-वते। आत्मानम्। एव। अस्य। तेन। करोति। यत्। इन्द्राय। अर्कवत इत्यर्क-वते। भूतः। एव। अन्नाद्य इत्यन्न अद्ये। प्रतीति। तिष्ठति।

२० [1]घर्मः प्रताप। [2]अर्कः [4]अन्नम्। अर्चनीयत्वात्। अर्चते कर्मणि घञ्, कुत्वम्। अर्कस्तुतो [5]इत्यस्मात् [ वा ]।
[2]निरविन्द्रा भूतिकामेष्टि[3]। शिर इति। शिरःस्थानीयत्वात् घर्मस्य, "घर्मः शिरः (तैआ १.१.७) इति च दर्शनात्। उच्छ्रितशिरस्को भवतीत्यर्थः। आत्मानमिति। आत्मवत्तां मध्यस्तां [4]अस्य [5]करोति। भूत इति। भूतिं गत्वा [4]अन्नाद्ये प्रतिष्ठितो भवति। भवयेति।
२५ मृत्युना [1]प्रजापतिशाप [2]प्राप्नोति॥

---

२. मैः-घर्मः। २-३. मै१८० - निर्गीतामोष्टि। ४. ११२मैः - भवतीत्यर्थम्।
५. मैः-करोतु।

भर्वत्येवेन्द्रा॑या(३)ऽहोमुचे॑ पुरोडाश॒मेका॑दशकपालं॒ निर्व॑पेद्यः पा॒प्मना॑ गृही॒तः स्यात् पा॒प्मा वा अꣳह॒ इन्द्र॑मे॒वाऽहो॒मुच॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैनं॑ पा॒प्मनोऽꣳह॑सो मुञ्च॒तीन्द्रा॑य वैमृ॒धाय॑ पुरोडाश॒मेका॑दशकपा॒लं निर्व॑पे॒द्यं मृधो॒ऽभि प्र॒वेपे॑रन् रा॒ष्ट्राणि॑ वा॒ऽभि स॒मीयु॒रिन्द्र॑मे॒व वै॑मृ॒धꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॒न्मृधो(४)ऽप॑ ह॒न्तीन्द्रा॑य त्रा॒त्रे

---

भवतीति । ए॒व । इन्द्राय (३) । अꣳहो॒मुच इत्यꣳह – मुचे॑ । पु॒रोडाश॑म् । एकादशकपाल॒मित्येका॑दश-क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । यः । पा॒प्मना॑ । गृ॒ही॒तः । स्यात् । पा॒प्मा । वै । अꣳह॑ । इन्द्र॑म् । ए॒व । अꣳहो॒मुच॒मित्यꣳह – मु॒च॑म् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । पा॒प्मनः॑ । अꣳह॑सः । मु॒ञ्च॒ति॒ । इन्द्रा॑य । वै॒मृ॒धाय॑ । पु॒रो॒डाश॑म् । एका॑दशकपाल॒मित्येका॑दश-क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । यम् । मृधः॑ । अ॒भीति॑ । प्र॒वेपे॑र॒न्निति॑ प्र-वेपे॑रन् । रा॒ष्ट्राणि॑ । वा॒ । अ॒भीति॑ । स॒मी॒यु॒रिति॑ सम्-ई॒युः । इन्द्र॑म् । ए॒व । वै॒मृ॒धम् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । अ॒स्मा॒त् । मृधः॑ (४) । अपेति॑ । ह॒न्ति॒ । इन्द्रा॑य । त्रा॒त्रे ।

---

अꣳहोमुचे इति ॥ अंहसा पापाना मोचयित्रे ॥

वैमृधायेति ॥ निमृधः सङ्ग्रामाणां जेतृत्वेन सम्बन्धी वैमृधः । यमिति । यं सङ्ग्रामाभिमुख्येन प्रकर्षेण वेपेरन् परान् कम्पयेयुः । राष्ट्राणि नानादेशवासिनो वा जना यम् अभि समीयुः आभिमुख्येन सहत्योपद्रवन्ति, ये योद्धारो भूत्वा शत्रवः अभि प्रवेपेरन् ये वा बद्ध्वा नेतुं सर्वजनपदवासिनोऽभिसमीयुः परिगच्छेयुः ॥

---

६. तै१ तै२ मै ल– 'इति' नास्ति ।
७. तै१ तै२ मै लं– विविधानाम् ।
८. तै१ तै२. मे– बनीयनृत्वेन ।
९. मै लं– 'या' नास्ति ।
१०. मै४– परिभवेयुः ।

पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायत इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा (५) अन्ततो महायज्ञं

५　च्यावयत्युपैनं महायज्ञो नमति ॥ ७ ॥

[ इन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति सोऽर्कवन्तꣳ स्वेन भागधेयेनैनेन्द्रायास्मान्मृधोऽस्मै सुत च । ]

पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । बद्धः । वा । परियत्त इति परि-यत्तः । वा । इन्द्रम् । एव । त्रातारम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति ।
१० सः । एव । एनम् । त्रायते । इन्द्राय । अर्काश्वमेधवत इत्यर्काश्वमेध-वते । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । यम् । महायज्ञ इति महा-यज्ञः । न । उपनमेदित्युप-नमेत् । एते इति । वै । महायज्ञस्येति महा-यज्ञस्य । अन्त्ये इति । तनू इति । यत् । अर्काश्वमेधावित्यर्क-अश्वमेधौ । इन्द्रम् । एव । अर्काश्वमेधवन्तमित्यर्काश्वमेध-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै (५) । अन्ततः ।
१५ महायज्ञमिति महा-यज्ञम् । च्यावयति । उपेति । एनम् । महायज्ञ इति महा-यज्ञः । नमति ॥ ७ ॥

[ मैसं २.२.९-१० काठ १०.८, ९ ]

'बद्धः निगडितः, 'परियत्तः परितो निरुद्धः ॥

'अर्काश्वमेधौ महाक्रतू, तद्वते ताभ्यामाराधनीयाय । महायज्ञः सोमयागः । उक्तं भाष्यकारेण "ते देवा एतं महायज्ञमपश्यन्" ( तैब्रा ३.७.२ ) इत्यत्र । अन्त्ये तनू इति । उक्तमे
२० विग्रहौ । अन्तत इति । "अन्य सर्वान् 'महायज्ञम् आगमयति । स च 'महायज्ञः 'एनम् 'उप 'नमति ॥

इति द्वितीये द्वितीये सप्तमोऽनुवाकः ॥

११. [illegible]

इन्द्रा॑यान्वृ॒जवे॑ पुरो॒डाश॑मेका॑दशकपालं॒ निर्व॑पेद्ग्रा॒मका॑म॒ इन्द्र॑मे॒वान्वृ॒जु॑ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मै॑ सजा॒तान॑नु॒कान् करोति ग्रा॒म्ये॑व भ॑वती॒न्द्राण्यै॑ च॒रुं निर्व॑पे॒द्यस्य॒ सेना॒ऽसꣳ॑शितेव॒ स्यादि॒न्द्राणी॒ वै सेना॑यै दे॒वते॒न्द्राणी॑मे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ सैवास्य॒ सेना॒ꣳ सꣳ श्य॑ति॒ बल्व॑जा॒नपी॑(१)ध्मे॒ सं न॑ह्ये॒द्गौर्यत्रा॑धि॒ष्कन्ना॒ न्यमे॑हत्

इन्द्रा॑य। अन्वृ॑जव॒ इत्यनु॑ ऋजवे॑। पुरो॒डाश॑म्। एका॑दशकपाल॒मित्येका॑दश-कपा॒लम्। निरिति॑। व॒पेत्। ग्रा॒मका॑म॒ इति॒ ग्राम॒ का॒म॒। इन्द्र॑म्। ए॒व। अ॒न्वृ॒जु॒मित्यनु॑ ऋ॒जुम्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भा॒ग-धेये॑न। उपेति॑। धा॒व॒ति॒। सः। ए॒व। अ॒स्मै॒। स॒जा॒ताने॒ति॑ स-जा॒तान्। अ॒नु॒का॒नित्य॑नु॒ का॒न्। क॒रो॒ति॒। ग्रा॒मी। ए॒व। भ॒व॒ति॒। इ॒न्द्रा॒ण्यै। च॒रुम्। निरिति॑। व॒पे॒त्। यस्य॑। सेना॑। असꣳ॑शि॒तेत्यस॑-शि॒ता। इ॒व। स्या॒त्। इ॒न्द्रा॒णी। वै। सेना॑यै। दे॒वता॑। इ॒न्द्रा॒णीम्। ए॒व। स्वेन॑। भा॒ग॒धेये॒नेति॑ भा॒ग धेये॑न। उपेति॑। धा॒व॒ति॒। सा। ए॒व। अ॒स्य॒। सेना॑म्। समिति॑। श्य॒ति॒। १०
बल्व॑जान्। अपीति॑ (१)। इ॒ध्मे। समिति॑। न॒ह्ये॒त्। गौः। यत्र॑।
अ॒धि॒ष्क॒न्नेत्य॑धि-स्क॒न्ना। न्यमे॑हदि॒ति॑ नि अमे॑हत्।

इन्द्रायान्वृजव इत्यादि॥ अनुक्रमेणार्जयति प्रापयति निधेयीकरोति[1] इत्यन्वृजु। ऋजु गतौ, औणादिक उप्रत्यय (उ २७), अव्ययेनाव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २·२)। यद्वा अनुगता ऋजवो यस्मिन्नित्यन्वृजु। सर्वेऽप्यस्मिन् ऋजवो भवन्तीति। [24]ग्रामकाम ग्राम वशीकर्तुकाम। १५ अनुकानिति। इममेव कामयमानान् [25]करोति। “अनुकाभिकाभीक कमिता” (पा ५ २ ७४) इति निपात्यते॥

इन्द्राणी इन्द्रपत्नी। “इन्द्रवरुण°” (पा ४ १ ४९) इति ङीप्, आनुगागमश्च, “उदात्तयण°” (पा ६ १ १७४) इति विभक्तेरुदात्तत्वम्। [26]असꣳशिता अधृता [27]स्वमार्गेऽनवस्थिता,

ग्रामार्थमन्वृजवे कुर्यादिन्द्राण्यं सैन्यशासुक। २०
युद्धार्थी [28]नष्टधैर्या वा कुर्यान्मन्युमते हविः॥ ३८॥
दायेऽन्यदीयदानार्थी प्रदाये तूत्सर्गक।
[1]राज्यभ्रष्टो [2]अदृश्यमानो वा सुत्राम्णे चरेद्धविः॥ ३९॥
अपगोध्यस्यल्पभाग्ये [3]सत्येन्द्र संपदं चरेत्।
अष्टमे त्वनुवाकेऽस्मिन्नन्न्द्रमुक्तमुक्ता [4] श्रुता॥ ४०॥ २५
तद्योऽन्त्र ग्राम्या° इत्यत्र सम्यङ्निरूपित।

१. मै०–°वरोक्तिर्थ। २. मै०–स्वार्थे।

२४. इ–इत्यर्थित। २५. इ इ ग ने श हा–रा नृर्ज। २६. इ–सम्यग। २७ अ आ उ जो प हा–सम्ये रे। २८. इ इ ने हो–°ग्रनुर। °(द्र. तै ? ? ?)।

ततो बल्वजा उदतिष्ठन् गवामेवैनं न्यायमपिनीय गा वेदयतीन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् संग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ ( २ ) संग्राममेतामेव निर्वपेद्यो हतमनाः स्वयंपाप

५ इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनाः स्वयंपाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति

---

ततः । बल्वजा । उदिति । अतिष्ठन् । गवाम् । एव । एनम् । न्यायमिति नि-आयम् । अपिनीयेत्यपि-नीय । गाः । वेदयति । इन्द्राय । मन्युमत इति मन्यु मते । मनस्वते । पुरोडाशम् । एकादशकपालमित्येकादश कपालम् । निरिति । वपेत् । सग्राम इति स ग्रामे । सयत्त इति

१० स-यत्ते । इन्द्रियेण । वै । मन्युना । मनसा । सग्राममिति स-ग्रामम् । जयति । इन्द्रम् । एव । मन्युमन्तमिति मन्यु-मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मिन् । इन्द्रियम् । मन्युम् । मनः । दधाति । जयति । तम् ( २ ) । सग्राममिति स-ग्रामम् । एताम् । एव । निरिति । वपेत् । य । हतमना इति हत मना । स्वयपाप इति स्वय-पापः । इव । स्यात् । एतानि । हि । वै । एतस्मात् । अपक्रान्तानीत्यप क्रान्तानि । अथ । एष । हतमना

१५ इति हत मना । स्वयपाप इति स्वय-पाप । इन्द्रम् । एव । मन्युमन्तमिति मन्यु-मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मिन् । इन्द्रियम् । मन्युम् । मनः । दधाति ।

---

अतीक्ष्णा वा अनुच्छ्रया वा । 'बल्वजान् दीर्घतृणानि, य कट क्रियते, तान् 'अपि 'इष्मे सनह्य मह यदृच्छा संहवेष्मेन अग्न्यादधाति सह वा प्रोक्षेत् । अधिष्कन्नेति । अधिक स्कन्नम् अधिव-

२० पुरीषसारिणी 'यत्र 'न्यमेहत् निसरा मेहति तत्र जायन्ते 'बल्वजाः । गवामित्यादि । 'गवाम् अग्रे एषा प्रवेशेन 'गा 'वेदयति लम्भयति सेनास्वामिनम् ॥

इन्द्राय मन्युमते इति ॥ मनस्वान् उद्धतमनस्क. । इन्द्रियादित्रयेण सग्रामजय ॥

एतामित्यादि ॥ गतम् । 'हतमना प्रतिबद्धप्रभान ' 'स्वयपाप. असत्यविचारेण स्वरूपेण पाप । एतानीति । इन्द्रियमन्युमनासि अस्मात् 'अपक्रान्तानि । 'अथ अनन्तरम् 'एष 'हतमना

२५ 'स्वयपाप [illegible] भवति ॥

---

३. मै८-'[illegible] ।

न हतमनाः स्वयंपापो भवतीन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्यु( ३ )रितीन्द्रमेव दातार९ स्वेन भागधेयेनोप धावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्तीन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेन्द्रमेव प्रदातार९ स्वेन भागधेयेनोप धावति स एवास्मै प्र दापयतीन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं ५ निर्वपेदपरुद्धो वा( ४ )ऽपरुध्यमानो वेन्द्रमेव सुत्रामाण९ स्वेन भागधेयेनोप धावति स एवैनं त्रायतेऽनपरुध्यो भवतीन्द्रो वै सदृङ्देवताभिरासीत् स न व्यावृतमगच्छत् स

न। हतमना इति हत-मना। स्वयपाप इति स्वय-पाप। भवति। इन्द्राय। दात्रे। पुरोडाशम्। एकादशकपालमित्येकादश-कपालम्। निरिति। वपेत्। य। कामयेत। दानकामा इति दान-कामा। मे। प्रजा इति प्र-जा। स्यु (३)। इति। इन्द्रम्। एव। दातारम्। १० स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मै। दानकामा इति दान-कामा। प्रजा इति प्र-जा। करोति। दानकामा इति दान-कामा। अस्मै। प्रजा इति प्र-जा। भवन्ति। इन्द्राय। प्रदात्र इति प्र-दात्रे। पुरोडाशम्। एकादशकपालमित्येकादश-कपालम्। निरिति। वपेत्। यस्मै। प्रत्तम्। इव। सत्। न। प्रदीयेतेति प्र-दीयेत। इन्द्रम्। एव। प्रदातारमिति प्र-दातारम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मै। प्रेति। १५ दापयति। इन्द्राय। सुत्राम्ण इति सु-त्राम्णे। पुरोडाशम्। एकादशकपालमित्येकादश-कपालम्। निरिति। वपेत्। अपरुद्ध इत्यप-रुद्ध। वा (४)। अपरुध्यमान इत्यप-रुध्यमान। वा। इन्द्रम्। एव। सुत्रामाणमिति सु-त्रामाणम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। एनम्। त्रायते। अनपरुध्य इत्यनप-रुध्य। भवति। इन्द्र। वै। सदृङिति स-दृङ्। देवताभि। आसीत्। स। न। व्यावृतमिति वि-आवृतम्। अगच्छत्। स। २०

इन्द्राय दात्र इत्यादि। गतम्॥

इन्द्राय प्रदात्र इत्यादि। प्रकर्षेण दाता प्रदाता। [1]प्रत्तम् एव [2]सत् [3]न [4]प्रदीयेत तस्य [5]दात्राऽप्रत्तमदत्त [6]प्र [7]दापयति॥

सुत्रामा सुष्टु त्राता। "आतो मनिन्" (पा ३ २ ७४) इति मनिप्रत्यय [8]अपरुद्ध, अपरोधनमैश्वर्यभङ्ग राज्यभ्रंशो वा॥ २५

[9]सदृङ् सदृश। "समानान्ययोश्च" (पा ३ २ ६० वा १) इति क्विप्रत्यय। अस्मै यजमानाय इद मया दत्तमिति के(न)चित् व्यावृत् व्यावृत्ति। मन्दादिष्वस्य णिच् (पा ३ ३ १०८ वा ९)। [10]शक्रग शक्यां [11]याग्यानुराग्ये [12]है अपि [13]असकेत्।

४ तै१ १२मैत्र- दाता°। ५ मैत्र- एव°।

प्रजापतिमुपाधावत् तस्मा एतमैन्द्रमेकादशकपालं निरवपत् तेनैवास्मिन्निन्द्रियमदधाच्छक्करी याज्यानुवाक्ये अकरोद्वज्रो वै शक्करी स एनं वज्रो भूत्वा ऐन्द्व (५) सोऽभवत् सोऽबिभेद्भूतः प्र मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत् स प्रजापतिः शक्कर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय योऽलं॑ श्रियै सन्त्सदृङ्समानैः स्यात् तस्मा
५ एतमैन्द्रमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधाति रेवती पुरोनुवाक्या भवति (६) शान्त्या अप्रदाहाय शक्करी याज्या वज्रो वै शक्करी स एनं वज्रो भूत्वा इन्द्धे भवत्येव ॥ ८ ॥ [ अपि तत् स्युर्वैन्द्व भवति चतुर्दश च ]

प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । निरिति । अवपत् । तेन । एव । अस्मिन् । इन्द्रियम् ।
१० अदधात् । शक्करी इति । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । अकरोत् । वज्रः । वै । शक्करी । सः । एनम् । वज्रः । भूत्वा । ऐन्द्व (५) । सः । अभवत् । सः । अबिभेत् । भूतः । प्रेति । मा । धक्ष्यति । इति । सः । प्रजापतिमिति प्रजा-पतिम् । पुनः । उपेति । अधावत् । सः । प्रजापतिरिति प्रजा-पतिः । शक्कर्याः । अधीति । रेवतीम् । निरिति । अमिमीत । शान्त्यै । अप्रदाहायेत्यप्र-दाहाय । यः । अलम् । श्रियै । सन् । सदृङ्ङिति स-दृङ् । समानैः । स्यात् ।
१५ तस्मै । एतम् । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । इन्द्रियम् । दधाति । रेवती । पुरोनुवाक्येति पुरः-अनुवाक्या । भवति (६) । शान्त्यै । अप्रदाहायेत्यप्र-दाहाय । शक्करी । याज्या । वज्रः । वै । शक्करी । सः । एनम् । वज्रः । भूत्वा । इन्द्धे । भवति । एव ॥८॥

[ मैसं २.२.१०-१२ काठसं १०.८-१० ]

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभि चरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभि चरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि चरति ( १ ) प्रति वै परस्तादभिचरन्तमभि चरन्ति द्वेद्वे पुरोऽनुवाक्ये कुर्यादति प्रयुक्त्या　　५

---

आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । अभिचरन्नित्यभि-चरन् । सरस्वती । आज्यभागेत्याज्य-भागा । स्यात् । बार्हस्पत्यः । चरुः । यत् । आग्नावैष्णव इत्याग्ना-वैष्णवः । एकादशकपाल इत्येकादश-कपालः । भवति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताभिः । च । एव । एनम् । यज्ञेन । च । अभीति । चरति । सरस्वती । आज्यभागेत्याज्य-भागा । भवति । वाक् । वै । सरस्वती । वाचा । एव । एनम् । अभीति । चरति ।　१० बार्हस्पत्यः । चरुः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । एनम् । अभीति । चरति ( १ ) । प्रतीति । वै । परस्तात् । अभिचरन्तमित्यभि-चरन्तम् । अभीति । चरन्ति । द्वेद्वे इति द्वे-द्वे । पुरोनुवाक्ये इति पुरः-अनुवाक्ये । कुर्यात् । अतीति । प्रयुक्त्या इति प्र-युक्त्या ।

---

आग्नावैष्णवमित्यादि ॥ अनिष्टकारिणि प्रत्यनिष्टाचरणम् अभिचारः । [1]आज्य भागः[1] यस्याः सा [2]आज्यभागा [2]सरस्वती, आज्यहविष्केत्यर्थः । सा द्वितीया देवता द्वितीयस्य हविषः ॥　१५

[3]प्रति वा इत्यादि[3] ॥ प्रथममेव अभिचरन्तम् अभिचारप्रवृत्त शत्रुं परस्तात् अयम् प्रति अभिचरति । तस्मात् प्रत्यभिचारद्योतनाय द्वेद्वे पुरोनुवाक्ये कुर्यात् द्विर्द्विः पुरोनुवाक्याम् अन्वाहेत्यर्थः । अत्र प्रकृतिद्वित्वापेक्षं द्विर्वचनम् । पक्षान्तरम्– " अग्नाविष्णू सजोषसा " ( तैम

---

[29]आग्नावैष्णव आद्यः[29] [30]स्यादाज्यं सारस्वतं ततः[30] ॥ ४१ ॥
बार्हस्पत्यचरुश्चैतत् कुर्यादभिचरंस्त्रयम् ।　२०
यः प्रत्यभिचरेत् सोऽपि कुर्यादेतद्धविस्त्रयम् ॥ ४२ ॥
पीडितोऽन्याभिचारेण शान्त्यै तामिष्टिमाचरेत् ।
[31]यशोपनतिकामः सन्नाग्नावैष्णवमाचरेत्[31] ॥ ४३ ॥
घृते चरुं दृष्टिकामोऽन्यत्कल्पां चरेच्छुचिः ।
अन्यानुकल्पकालेऽयं मैत्रावरुणमाचरेत् ॥ ४४ ॥
अनुयाजे तु नवमेऽभिचारादय ईरिताः ।　२५

---

१–१. तै१.तै२– आज्यभाग । २–२. तै२– इत्येष्य इत्यादि । ३. तै१.तै२–नास्ति ।

२९–२९. दा–अथाग्नावैष्णवाद्यो; भे–आग्नावैष्णवाद्यो । ३०–३०. ने.हो१ आज्यसारस्वतौ ।
३१–३१.– यशोर्थैस्ताद्यवरुण्यामार्वेष्णवं चरेत् ।

एतयैव यजेताभिचर्यमाणो देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञं च मध्यतो व्यवसर्पति तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुत आग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नो( २ )पनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मै यज्ञं प्र यच्छतः

५ एतया । एव । यजेत । अभिचर्यमाण इत्यभि-चर्यमाणः । देवताभिः । एव । देवताः । प्रतिचरतीति प्रति-चरति । यज्ञेन । यज्ञम् । वाचा । वाचम् । ब्रह्मणा । ब्रह्म । सः । देवताः । च । एव । यज्ञम् । च । मध्यतः । व्यवसर्पतीति वि-अवसर्पति । तस्य । न । कुतः । चन । उपाव्याध इत्युप-आव्याधः । भवति । न । एनम् । अभिचरन्नित्यभि-चरन् । स्तृणुते । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । यम् । यज्ञः । न (२) । उपनमेदित्युप-नमेत् ।
१० अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । अग्निम् । च । एव । विष्णुम् । च । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । यज्ञम् । प्रेति । यच्छतः ।

---

४.७ १ ) " अग्नाविष्णू महि तत् " ( तैस १.८.२२ ) इति प्रथमस्य पुरोनुवाक्ये। " अग्नाविष्णू महि धाम " ( तैस १ ८ २२ ) इति याज्या। "प्र णो देवी", "आ नो दिव " ( तैस १.८.२२ ) इति द्वितीयस्य पुरोनुवाक्ये। " पावीरवी " ( तैस ४.१.११ ) इति याज्या। " बृहस्पते १५ जुषस्व न " (तैस १.८.२२) इति " एवा पित्रे " (तैस १.८ २२) इति तृतीयस्य पुरोनुवाक्ये। "बृहस्पते अति यत्" (तैस १.८.२२) इति याज्या इति"॥ "अति "प्रयुक्त्यै अतिशयेन प्रयुक्त्यर्थम्। अभिचरन्त सकृत्प्रयुञ्जान द्विःप्रयोगेणायम्" अतिशेत इति। यदा तु द्विर्द्विः पुरोनुवाक्यानन्वाह तदानीं त्रिस्त्रिर्हविषामवघतीति। का पुनस्ता पुरोनुवाक्या. उच्यन्ते— " अग्नाविष्णू महि तद्वा महित्वम् " ( तैस १.८.२२ ), " प्र णो देवी सरस्वती " ( तैस १.८.२२ ), " बृहस्पते २० जुषस्व नः " ( तैस १.८.२२ ) इत्येता ॥

एतयैवेति ॥ त्रिहविषा प्रकृतया इष्टया। "अभिचर्यमाण इति"। य "अभिचर्यमाण अभिचारकल्मनर्थमभिचारिण्येर सकाममितुमिच्छति सोऽपि "एतया "यजेत। देवताभिरिति। आ सूर्तीयदेवतादिभि पर्वापान् "प्रतिचरति तस्यैव मकाश प्रापयति। ततस्तान् देवतादीन् शत्रोरा त्मनध मध्ये विनिभ्रमर्पयति माधयति। तत. "तस्य कुतश्चिद्-यस्मादपि बाधकात् "उपा २५ व्याध· उपर्याता "न "भवति। अत "एव "एनम् "अभिचरन्" "न "स्तृणुते न हिनस्ति ॥ "यज्ञयोपनमि. विपक्षोः" ।

४-४ ..– 'बृहस्पते जुषस्व .....याज्या इति' नास्ति। ५. तै१ तै२ मै. ..– "यापि। ६-६. तै१ तै२ तै३ ..– बृहस्पते जुषस्व न. एवा पित्र इति तृतीयस्य पुरोनुवाक्ये, बृहस्पते अति यदिति याज्या अभिचरेमत शौ। ७-७ ..– तनमभिचारम्। ८-८. तै१ तै२ मै– यज्ञस्योपनतिरिति केषादर्श (?), पैर- ३० यस्यदेवी "दनादयमा (?)।

काम्या इष्टय. ]

उपैनं यज्ञो नमत्याग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति यज्ञस्य देवा अग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवा( ३ )- स्मिञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्र जनयति घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरव रुन्द्ध इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेद्भ्रातृव्ये यजमाने ५ नास्येन्द्रियं ( ४ ) वीर्यं वृङ्क्ते पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक् तामप्रोदितां

उपेति । एनम् । यज्ञः । नमति । आग्नावैष्णवमित्याग्ना-वैष्णवम् । घृते । चरुम् । निरिति । वपेत् । चक्षुष्काम इति चक्षुः-कामः । अग्नेः । वै । चक्षुषा । मनुष्याः । वीति । पश्यन्ति । यज्ञस्य । देवाः । अग्निम् । च । एव । विष्णुम् । च । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव ( ३ ) । अस्मिन् । चक्षुः । धत्तः । चक्षुष्मान् । एव । भवति । धेन्वै । वै । एतत् । रेतः । १० यत् । आज्यम् । अनडुहः । तण्डुलाः । मिथुनात् । एव । अस्मै । चक्षुः । प्रेति । जनयति । घृते । भवति । तेजः । वै । घृतम् । तेजः । चक्षुः । तेजसा । एव । अस्मै । तेजः । चक्षुः । अवेति । रुन्द्धे । इन्द्रियम् । वै । वीर्यम् । वृङ्क्ते । भ्रातृव्यः । यजमानः । अयजमानस्य । अध्वरकल्यामित्यध्वर-कल्याम् । प्रति । निरिति । वपेत् । भ्रातृव्ये । यजमाने । न । अस्य । इन्द्रियम् ( ४ ) । वीर्यम् । वृङ्क्ते । पुरा । वाचः । प्रवदितोरिति प्र-वदितोः । निरिति । वपेत् । १५ यावती । एव । वाक् । ताम् । अप्रोदितामित्यप्र-उदिताम् ।

अग्नेर्वा इत्यादि । तृतीयार्थे षष्ठी । अग्निना चक्षुषा मनुष्या विविधं पश्यन्ति, यज्ञेन चक्षुषा देवाः । यद्वा—चक्षुर्दर्शनम् अग्नेर्यज्ञस्य दर्शनेनेति । रेत इति । भक्षिततृणादिपरिणामत्वात् कार्यमित्यर्थः । कृष्यादिद्वारेण अनडुहः कार्याः तण्डुलाः । तस्माद्घृते चरुं निर्वपन् मिथुनात् धेन्वनडुहः, चक्षुः प्र जनयति, मिथुनाद्धि सर्वाः प्रजायन्ते इति भावः । घृते भवतीत्यादि । २० गतम् ॥

इन्द्रियं वा इत्यादि । भ्रातृव्यः यजमानः सोमेनेष्टवान् चेत् अयजमानस्य इन्द्रियं यागादिकं वीर्यं च वृङ्क्ते वर्जयति स्वयमाददीत । तस्माद्भ्रातृव्ये यजमाने सोमेनेष्टवत्यपि अयजमानोऽयम् अध्वरकल्याम् अध्वरतुल्याम् इष्टिं प्रति नि वपेत् अध्वरकल्पया यजेत । पुरा वाचः प्रवदितोरिति । प्रातरनुवाककाल इत्यर्थः । विहगादयः यावद्वाचं प्रवदन्ति तावदुत्थाय निर्वपेत् । “भावलक्षणे स्थेण्कृञ्वदि°” ( पा ३.४.१६ ) इति तोसुन्प्रत्ययः । यावती एव २५

१-२ तं– ‘मनुष्या विविधं . . . चक्षुर्दर्शनम्’ नास्ति । १० त१.तै२– यजमानो° ।

भ्रातृ॑व्यस्य वृ॒ङ्क्ते ताम॑स्य॒ वाचं॑ प्र॒वद॑न्तीम॒न्या वाचो॒ऽनु॒ प्र व॑दन्ति॒ ता इ॑न्द्रि॒यं वी॒र्यं॑
यज॑माने दधत्याग्नावैष्ण॒वम॒ष्टाक॑पालं॒ निर्व॑पेत् प्रातःसव॒नस्या॒ऽऽका॒ले सर॑स्वत्याज्य॑भा॒गा
स्याद्बार्हस्प॒त्यश्च॒रुर्यद॒ष्टाक॑पालो॒ भव॑त्य॒ष्टाक्ष॑रा गाय॒त्री गाय॑त्रं प्रातःसव॒नं प्रातःसव॒नमे॒व
तेना॒ऽऽप्नोत्या॒( ५ )ग्नावैष्ण॒वमेका॑दशकपालं॒ निर्व॑पे॒न्माध्य॑दिनस्य॒ सव॑नस्या॒ऽऽका॒ले
५ सर॑स्वत्याज्य॑भा॒गा स्याद्बार्हस्प॒त्यश्च॒रुर्यदेका॑दशकपालो॒ भव॒त्येका॑दशाक्षरा त्रि॒ष्टुप् त्रैष्टु॑भं॒
माध्यं॑दिन॒ꣳ सव॑नं॒ माध्यं॑दिनमे॒व सव॑नं॒ तेना॒ऽऽप्नोत्या॒ग्नावैष्ण॒वं द्वाद॑शकपालं॒ निर्व॑पेत्

भ्रातृ॑व्यस्य । वृ॒ङ्क्ते । ताम् । अ॒स्य॒ । वाच॑म् । प्र॒वद॑न्तीमिति॑ प्र-वद॑न्तीम् । अ॒न्या । वाचः॑ । अनु॑ ।
प्रेति॑ । व॒द॒न्ति॒ । ताः । इ॒न्द्रि॒यम् । वी॒र्य॑म् । यज॑माने । द॒ध॒ति॒ । आ॒ग्ना॒वै॒ष्ण॒वमित्या॑ग्ना-वै॒ष्ण॒वम् ।
अ॒ष्टाक॑पाल॒मित्य॒ष्टा-क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । प्रा॒त॒स्स॒व॒नस्येति॑ प्रातः-स॒व॒नस्य॑ । आ॒का॒ल
१० इत्या॑ का॒ले । सर॑स्वती । आ॒ज्य॒भा॒गेत्या॑ज्य भा॒गा । स्या॒त् । बा॒र्ह॒स्प॒त्यः । च॒रुः । यत् । अ॒ष्टाक॑पाल
इत्य॒ष्टा क॒पा॒लः । भव॑ति । अ॒ष्टाक्ष॒रेत्य॒ष्टा-अ॒क्ष॒रा । गा॒य॒त्री । गाय॑त्रम् । प्रा॒त॒स्स॒व॒नमिति॑
प्रातः-स॒व॒नम् । प्रा॒त॒स्स॒व॒नमिति॑ प्रातः-स॒व॒नम् । ए॒व । तेन॑ । आ॒प्नो॒ति॒ ( ५ ) ।
आ॒ग्ना॒वै॒ष्ण॒वमित्या॑ग्ना-वै॒ष्ण॒वम् । एका॑दशकपाल॒मित्येका॑दश क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् ।
माध्यं॑दिनस्य । सव॑नस्य । आ॒का॒ल इत्या॑ का॒ले । सर॑स्वती । आ॒ज्य॒भा॒गेत्या॑ज्य भा॒गा ।
१५ स्या॒त् । बा॒र्ह॒स्प॒त्यः । च॒रुः । यत् । एका॑दशकपाल इत्येका॑दश क॒पा॒लः । भव॑ति ।
एका॑दशाक्ष॒रेत्येका॑दश अ॒क्ष॒रा । त्रि॒ष्टुप् । त्रैष्टु॑भम् । माध्यं॑दिनम् । सव॑नम् । माध्यं॑दिनम् । ए॒व । सव॑नम् ।

[1]वाक् [2]ता सर्वाम् [3]अप्रोदिताम् एव [4]भ्रातृव्यस्य [5]वृङ्क्ते [11] । तथा च सति [6]ताम् [7]अस्य [8]प्रवदन्तीं प्रकर्षेण सर्वोत्कर्षेण वदन्तीं [9]वाचम् [10]अनु [11]प्र [12]वदन्ति । प्रजाना सर्वा [13]अन्या [14]वाच तस्या गुणभूता वदन्ति । अथ [15]ता च तादृश्यो वाच प्राधान्यम् [12]अस्यानिच्छुर्वाणा अस्मिन्
२० [16]यजमाने अध्वरकल्पामिष्टि कुर्वाणे [17]इन्द्रिय [18]वीर्यं च [19]दधति ॥

इदानीमध्वरकल्पा विदधाति—आग्नावैष्णवमित्यादि ॥ प्रात सवनस्याऽऽकाल इति । आक एनम् आकाल । थाथादिनोत्तरपदान्तोदात्तत्वम (पा ६ २ १४४) । [1]प्रात सवनस्य स्थाने । यद्वा—
प्रात सवनस्य [illegible] काल आ तत आ तत्समाप्ते । आङ् अभिविधौ । अव्ययीभाव । "तृतीया सप्तम्योर्बहुलम्" (पा २ ४ ८४) इत्यम्भावाभाव । अव्ययपूर्वपदप्रकृतिस्वरत्वस्य तत्पुरुष
२५ विषयत्वात् समासान्तोदात्तत्वम् (पा ६ १ २२३) । सरस्वत्याज्यभागेत्यादि । गतम । एव माध्यंदिन-
तृतीयसवनयोर्वेदितव्यम । त्रिष्टुब्जगतीशब्दाभ्याम् उत्सादित्वादञ् (पा ४ १ ८६) । [13]गायत्र्यादि
विकारत्वात सवनानां "गायत्र "त्रैष्टुभ " जागतम् इत्युच्यते । देवताभिरित्यादि । व्याख्यातम् ॥

११ के—वृङ्क्ते । १२ मै॰—अस्यानि विकुर्वाणे । १३ तै१ तै२ मै॰ ह—गायत्र्यादि ।
१४-१५ मै॰—[illegible] ।

तृतीयसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोति देवताभिरेव देवताः (६) प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दांस्याप्नोति पुरोडाशैः सवनानि मैत्रावरुणमेककपालं निर्वपेद्वशायै काले यैवासौ भ्रातृव्यस्य वशाऽनूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुम् ॥ ९ ॥ ५

[ महर्षिणैनमभि चरति यज्ञो न तानेवाऽस्येन्द्रियमाप्नोति देवता सप्तत्रिंशच्च । ]

तेन । आप्नोति । आग्नावैष्णवमित्याग्ना-वैष्णवम् । द्वादशकपालमिति द्वादश कपालम् । निरिति । वपेत् । तृतीयसवनस्येति तृतीय-सवनस्य । आकाल इत्या-काले । सरस्वती । आज्यभागेत्याज्य-भागा । स्यात् । बार्हस्पत्य । चरु । यत् । द्वादशकपाल इति द्वादश-कपाल । भवति । द्वादशाक्षरेति द्वादश-अक्षरा । जगती । जागतम् । तृतीयसवनमिति तृतीय सवनम् । तृतीयसवनमिति १० तृतीय सवनम् । एव । तेन । आप्नोति । देवताभि । एव । देवता (६) । प्रतिचरतीति प्रति चरति । यज्ञेन । यज्ञम् । वाचा । वाचम् । ब्रह्मणा । ब्रह्म । कपालै । एव । छन्दांसि । आप्नोति । पुरोडाशै । सवनानि । मैत्रावरुणमिति मैत्रा-वरुणम् । एककपालमित्येक-कपालम् । निरिति । वपेत् । वशायै । काले । या । एव । असौ । भ्रातृव्यस्य । वशा । अनूबन्ध्येत्यनु-बन्ध्या । सो इति । एव । एषा । एतस्य । एककपाल इत्येक कपाल । भवति । न । हि । कपालै । १५ पशुम् । अर्हति । आप्तुम् ॥ ९ ॥

[ मैत्र २१७, काम १०१ ]

कपालैरिति ॥ अष्टत्वादिविशिष्टै कपालै गायत्र्यादीनि [15]प्रात सवनादिसबन्धीनि छन्दांसि आप्नोति । अष्टाकपालादिभि [16]पुरोडाशविशेषै प्रात सवनादीन्याप्नोति ॥

वशायै काल इति ॥ अनूबन्ध्याया वशाया काले, तत्स्थाने वा । या एव असौ २० पूर्वं भ्रातृव्यस्य यागे अनूबन्ध्या वशा अभूत् सा एव एषा एतस्य यजमानस्याय मैत्रावरुण एककपाल क्रियते तस्या प्रतिक्रियेत्यर्थ । सा इत्यस्यार्थे सो इति निपात । सा उ इति पदद्वय समुदायो वा । तत्रैकादेशस्य पर प्रत्यादिवद्भावात् "ओत्" (पा १ १ १५) इति प्रगृह्यत्वम् । न हीति । [17]कपालबहुत्वमप्रशस्यत्वेन [18]निर्दिश्यते । कश्चिदाह–अय मैत्रावरुण पुरोडाशोऽनूबन्ध्याख्य पशुमात्रु क्रियते । तत्र पुरोडाश एव पश्वासिहेतु । अत [19]कपालगरत्वम् अकिञ्चित्करम् । २५ पुरोडाशनिष्पत्त्यर्थमेक [20]कपालमस्त्विति ॥

इति द्वितीये द्वितीये नवमोऽनुवाक ॥

१५ मै– प्रात सवनस° । १६ त१ तर मै ८–पुरोडाशे । १७ त१ तर– °द्वित्वम° । १८ मै४– निन्द्यते । १९ पर– °त्वकुत्वम्, मै४–कपालम् । २० तर– °लमिति ।

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सोमारौद्रं चरुं निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ सोमारौद्रं चरुं निर्वपेत् सोमं चैव रुद्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति तिष्यापूर्णमासे निर्वपेद्रुद्रो (१) वै तिष्यः सोमः पूर्णमासः

५ असौ। आदित्य । न। वीति। अरोचत। तस्मै। देवा । प्रायश्चित्तिम्। ऐच्छन्। तस्मै। एतम्। सोमारौद्रमिति सोमा रौद्रम्। चरुम्। निरिति। अवपन्। तेन। एव। अस्मिन्। रुचम्। अदधु । य । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस काम । स्यात्। तस्मै। एतम्। सोमारौद्रमिति सोमा रौद्रम्। चरुम्। निरिति। वपेत्। सोमम्। च। एव। रुद्रम्। च। स्वेन। भागधेयेनेति भाग धेयेन उपेति। धावति। तौ। एव। अस्मिन्। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। धत्त । १० ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव। भवति। तिष्यापूर्णमास इति तिष्या-पूर्णमासे। निरिति। वपेत्। रुद्र (१)। वै। तिष्य । सोम । पूर्णमास इति पूर्ण-मास ।

असावादित्य इत्यादि। सोमारौद्रमिति। उत्तरपदवृद्धिश्छान्दसी। तिष्यापौर्णमासे इति। तैष्या पौर्णमास्यामित्यर्थः। तिष्येण सहित पूर्णमासस्तिष्यापूर्णमास। "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम्। तिष्य पुष्य । रुद्रो वा इत्यादि। तयोस्त प्रधानत्वात्ताच्छब्द्यम्। १५ साक्षादिति। अप्यप्रधानेन द्वयोरपि तेजस्वित्वात् ॥

ब्रह्मवर्चसकामस्तु सोमारौद्र चरु चरेत् ॥ ४५ ॥
चर्मदोषाद्विभीतस्तु सोमापौष्ण समाचरेत्।
प्रजाप्रमोऽभिचारी च [१]दीर्घरोगयुतस्तथा ॥ ४६ ॥
परस्य चरित्रनको वा सोमारौद्रमाचरेत्।
२० दशमे त्वनुवाकेऽस्मिन् सोमारौद्रादय [१] श्रुता ॥ ४७ ॥
*अग्नाविष्णू महीत्यत्र याज्योऽर्थोऽनुवाक्यो ।

१ मै१ मै२– 'गाणाद्गि १' नास्ति।

[१] १– दीर्घरोगी तथा, अ–दीर्घरोगयुतस्तथा, उ प– दीर्घरोगस्तथा।
[२] ११२०१– श्रुता । *(तै १ ८ २२)

साक्षादेव ब्रह्मवर्चसमवं रुन्द्धे परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत् सर्वं करोत्यति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत् तद्भेषजं (२) भेषजमेवास्मै करोति यदि बिभीयाद्-दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत् सौम्यो वै देवतया पुरुषः पौष्णाः

साक्षादिति स अक्षात्। एव। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। अवेति। रुन्द्धे। परिश्रित इति परि-श्रिते। याजयति। ब्रह्मवर्चसस्येति ब्रह्म वर्चसस्य। परिगृहीत्या इति परि-गृहीत्यै। श्वेतायै। श्वेतवत्साया इति श्वेत वत्सायै। दुग्धम्। मथितम्। आज्यम्। भवति। आज्यम्। प्रोक्षणमिति प्र-उक्षणम्। आज्येन। मार्जयन्ते। यावत्। एव। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। तत्। सर्वम्। करोति। अतीति। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। क्रियते। इति। आहुः। ईश्वरः। दुश्चर्मेति दु-चर्मा। भवितोः। इति। मानवी इति। ऋचौ। धाय्ये इति। कुर्यात्। यत्। वै। किम्। च। मनुः। अवदत्। तत्। भेषजम् (२)। भेषजम्। एव। अस्मै। करोति। यदि। बिभीयात्। दुश्चर्मेति दु-चर्मा। भविष्यामि। इति। सोमापौष्णमिति सोमा-पौष्णम्। चरुम्। निरिति। वपेत्। सौम्यः। वै। देवतया। पुरुषः। पौष्णाः।

परिश्रिते कटादिभिः परितः छादिते। 'याजयति' इति वचनात् प्रधान तु परिश्रिते, स्विष्टकृदाद्यपरिश्रिते एव ॥

श्वेताया इत्यादि ॥ ईदृशेनाज्येन एतत् कुर्यात्। सर्वब्रह्मवर्चसलाभः। सर्वं प्रोक्षणमार्जनान्याज्येनेति। एवं ब्रह्मवर्चसम् अति त्रियते अ यत्नोत्पाद्यते, तत्राथ दुश्चर्मा श्वित्री भवितुम् ईश्वरः स्यात् इति आहुः ब्रह्मविदः, तत्परिहाराय मानवी मानव्यौ ऋचौ धाय्ये कुर्यात्। "मक्षू देवतः" (तैस १ ८ २२) इत्याद्ये द्वे धाय्ये स्थाने दधाति। आद्ये द्वयेरे। अन्त्ये द्वयन्ते। "देवाना य इन्धनः" इति सर्वत्रानुषज्यते। "समिध्यमानः" इति "समिद्धः" (तैब्रा ३ ५ २) इत्येतयोर्मध्ये ये भवतः ते धाय्ये। यद्वा इत्यादि। मननात् मनुः मनस्वी प्रजापतिः। तेनोक्तं सर्वं भेषजं सर्वोपद्रवशमनं भवति। एवं मनोर्विशिष्टया मानव्योरप्यृचोर्विशिष्टत्वम्। अतस्तयोर्धाय्यात्वात् दुश्चर्मत्वभयाप्रसङ्गः ॥

सोमापौष्णमिति ॥ पूर्ववदुत्तरपदवृद्धिः ॥

२ त१ त२ मै ल– कटादिभिः। ३ तै१ त२–प्रधानत्वे। ४ त१ तै२ मै ल–इत्याद्यम्। ५ त१ तै२– °धाय्यत्वात्। ६–६ मै४– दुश्चर्मत्वमित्यतिप्रसङ्गः।

पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति सोमारौद्रं चरुं निर्वपेत् प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते ( ३ ) प्रजाꣳ सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय
५ रुद्रायापि दधाति ताजगार्तिमार्छति सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निꣳ शरीरं यस्य ज्योगामयति सोमादेवास्य रसं निष्क्रीणात्यग्नेः शरीरमुत यदी( ४ )तासुर्भवति जीवत्येव सोमारुद्रयोर्वा एतं ग्रसितꣳ होता

पशवः । स्वया । एव । अस्मै । देवतया । पशुभिरिति पशु-भिः । त्वचम् । करोति । न । दुश्चर्मेति दुः—चर्मा । भवति । सोमारौद्रमिति सोमा-रौद्रम् । चरुम् । निरिति । वपेत् । प्रजाकाम
१० इति प्रजा-कामः । सोमः । वै । रेतोधा इति रेतः—धाः । अग्निः । प्रजानामिति प्र-जानाम् । प्रजनयितेति प्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । अग्निः । प्रजामिति प्र-जाम् । प्रेति । जनयति । विन्दते ( ३ ) । प्रजामिति प्र-जाम् । सोमारौद्रमिति सोमा रौद्रम् । चरुम् । निरिति । वपेत् । अभिचरन्नित्यभि-चरन् । सौम्यः । वै । देवतया । पुरुषः । एषः । रुद्रः । यत् । अग्निः । स्वायाः । एव । एनम् । देवतायै । निष्क्रीयेति निः—क्रीय । रुद्राय । अपीति । दधाति ।
१५ ताजक् । आर्तिम् । एति । ऋच्छति । सोमारौद्रमिति सोमा रौद्रम् । चरुम् । निरिति । वपेत् । ज्योगामयावीति ज्योक्-आमयावी । सोमम् । वै । एतस्य । रसः । गच्छति । अग्निम् । शरीरम् । यस्य । ज्योक् । आमयति । सोमात् । एव । अस्य । रसम् । निष्क्रीणातीति निः—क्रीणाति । अग्नेः । शरीरम् । उत । यदि ( ४ ) । इतासुरितीत-असुः । भवति । जीवति । एव । सोमारुद्रयोरिति सोमा-रुद्रयोः । वै । एतम् । ग्रसितम् । होता ।

२० अग्निरिति ॥ रोदनाद्रुद्रत्वमग्नेः । स्वाया इति । सौम्य पुरुष सोमात् निष्क्रीय रुद्राय अग्नये अपि दधाति उपहरति, ताजक् तदानीमेव आर्तिम् आ ऋच्छति ॥
ज्योगामयावी व्याख्यातः । गतमन्यत् । ग्रसितमिति । सोमारुद्रयोः आस्यगतं यद् होता याज्यया यजन् निः गिरति निष्क्रमयति । "ग्रसितस्कभित°" ( पा ७.२.३४ ) इति

७. मै१.मै२.मै३-'गतमन्यत्' नास्ति ।

निरि॑खिदति स ई॑श्वर आर्ति॒मार्तो॒रन॒ड्वान् होत्रा॒ दया॒ वह्नि॒र्वा अ॑न॒ड्वान् वह्नि॒र्होता॒ वह्नि॑नैव वह्नि॑मा॒त्मानं॑ स्पृणोति सोमारौ॒द्रं च॒रुं निर्व॑पे॒द्यः का॒मये॑त॒ स्वेऽस्मा आ॒यत॑ने॒ भ्रातृ॑व्यं जनयेय॒मिति॒ वेदिं॑ परि॒गृह्या॒र्धमु॑द्ध॒न्याद॒र्धं नार्धं ब॒र्हिषः॑ स्तृणी॒याद॒र्धं (५) नार्ध॑मि॒ध्मस्या॒भ्याद॒ध्याद॒र्धं न स्व ए॒वास्मा॑ आ॒यत॑ने॒ भ्रातृ॑व्यं जनयति ॥ १० ॥

[ उ॒ग्रो भे॑षज॒ विन्द॑ते॒ यदि॑ स्तृणी॒याद॒र्धं द्वाद॑श च । ]

निरिति॑ । खि॒दति॒ । सः । ई॒श्वरः॑ । आर्ति॑म् । आर्तो॒रित्या-अर्तोः॑ । अ॒न॒ड्वान् । होत्रा॑ । देय॑ । वह्निः॑ । वै । अ॒न॒ड्वान् । वह्निः॑ । होता॑ । वह्नि॑ना । एव । वह्नि॑म् । आ॒त्मान॑म् । स्पृ॒णो॒ति॒ । सो॒मा॒रौ॒द्रमिति॑ सोमा-रौ॒द्रम् । च॒रुम् । निरिति॑ । व॒पे॒त् । यः । का॒मये॑त । स्वे । अ॒स्मै॒ । आ॒यत॑न॒ इत्या॑-यत॑ने । भ्रातृ॑व्यम् । ज॒न॒ये॒य॒म् । इति॑ । वेदि॑म् । प॒रि॒गृह्येति॑ परि॑-गृह्य॑ । अ॒र्धम् । उ॒द्ध॒न्यादित्यु॑त्-ह॒न्यात् । अ॒र्धम् । न । अ॒र्धम् । ब॒र्हिषः॑ । स्तृ॒णी॒यात् । अ॒र्धम् (५) । न । अ॒र्धम् । इ॒ध्मस्य॑ । अ॒भ्या॒द॒ध्यादित्य॑भि-आ॒द॒ध्यात् । अ॒र्धम् । न । स्वे । ए॒व । अ॒स्मै॒ । आ॒यत॑न॒ इत्या॑-यत॑ने ।

भ्रातृ॑व्यम् । ज॒न॒य॒ति॒ ॥ १० ॥

[ मैसं २.१.७; काठं ११.५ ]

निपात्यते । ततश्च सः होता आर्तिं गन्तुम् ईश्वरः स्यात् । तस्मात् तेन होत्रा अन्वाहार्यसादनानन्तरम् अनड्वान् देयः । तथा सति वह्निना वोढ्रा अनडुहा वह्निं यज्ञस्य वोढारम् आत्मानं स्पृणोति प्रीणयति, वर्धयति वा । "स्पृ प्रीत्यादिषु" सौवादिकः ॥

यः कामयेतेति ॥ कृषिभूमौ परस्य क्षेत्रमाश्रिता वेदिं परिगृह्य तस्याः अर्धं चाऽपरसाय दक्षिणम् उद्धन्यात् । अर्धान्तरं न उद्धन्यात् । अर्धं तत्र बर्हिषा स्तृणीयात् छादयेत् । अर्धान्तरं न स्तृणीयात् । बर्हिषोऽर्धमुत्करे त्यजेत् । इध्मस्य अर्धम् अभि आदध्यात् न अर्धान्तरं, उत्करे तु त्यजेत् । एवं कुर्वन् स्वे एव आयतने अस्मै भ्रातृव्यं जनयति गृहजातमेवास्य शत्रुं करोति ॥

इति द्वितीये द्वितीये दशमोऽनुवाकः ॥

८. तैर,तैर,मैर्ड- 'होता' नास्ति । ९-९ मं-स्पृणोति प्रीत्यादिषु (?); तै१,तैर 'स्पृ प्रीत्यादिषु' नास्ति । १०. पैर,मैर्ड-क्षेत्रमाश्रिताम् । ११. मैर्ड- अर्धम् । १२. तै१ तैर- बर्हिषोऽर्धमुत्कं ।

ऐन्द्रमेकादशकपालं निर्वपेन्मारुत९ सप्तकपालं ग्रामकाम इन्द्रं चैव मरुतश्च स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवत्याहवनीय ऐन्द्रमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्द्धेऽनूच्यमान आ सादयति विशमेवा-
५ (१)स्मा अनुवर्त्मानं करोत्येतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन् ब्रूयादिन्द्रायानु ब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति

ऐन्द्रम्। एकादशकपालमित्येकादश-कपालम्। निरिति। वपेत्। मारुतम्। सप्तकपालमिति सप्त-कपालम्। ग्रामकाम इति ग्राम-काम। इन्द्रम्। च। एव। मरुतः। च। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। ते। एव। अस्मै। सजातानिति स-जातान्। प्रेति। यच्छन्ति।
१० ग्रामी। एव। भवति। आहवनीय इत्या-हवनीये। ऐन्द्रम्। अधीति। श्रयति। गार्हपत्य इति गार्ह-पत्ये। मारुतम्। पापवस्यसस्येति पाप-वस्यसस्य। विधृत्या इति वि-धृत्यै। सप्तकपाल इति सप्त-कपालः। मारुतः। भवति। सप्तगणा इति सप्त-गणाः। वै। मरुतः। गणश इति गण-शः। एव। अस्मै। सजातानिति स-जातान्। अवेति। रुन्द्धे। अनूच्यमान इत्यनु-उच्यमाने। एति। सादयति। विशम्। एव (१)। अस्मै। अनुवर्त्मानमित्यनु-वर्त्मानम्। करोति। एताम्। एव।
१५ निरिति। वपेत्। यः। कामयेत। क्षत्राय। च। विशे। च। समदमिति स-मदम्। दध्याम्। इति। ऐन्द्रस्य। अवद्यन्नित्यव-द्यन्। ब्रूयात्। इन्द्राय। अन्विति। ब्रूहि। इति। आश्राव्येत्या-श्राव्य। ब्रूयात्। मरुतः। यज। इति।

ऐन्द्रमेकादशकपालमित्यादि। गतम्॥ आहवनीये ऐन्द्रमित्यादि। व्याख्यातम्॥ समदमिति॥ क्षत्रविशयोः परस्परं संग्रामं जनयेयमिति। 'ऐन्द्रस्य 'अवद्यन् 'ब्रूयात्
२० 'इन्द्राय 'अनु 'ब्रूहि 'इति। होता च तदानीं "इन्द्र वो विश्वतस्परि" (तैसं १.६.१२)

ग्रामार्थैन्द्रं मारुतं च कुर्याद्विनियोगम्॥ ४८॥
[illegible] [illegible] निर्वपेत्।
[illegible] [illegible] [illegible]॥ ४९
[illegible] [illegible] [illegible]।
२५ [illegible] [illegible] [illegible]॥ ५०॥
[illegible] [illegible] [illegible]।
[illegible] [illegible]॥ ५१॥
[illegible] [illegible]।

१८. [illegible] १९. [illegible] २१-२२. [illegible]

मारुतस्यावद्यन् ब्रूयान्मरुद्भ्योऽनु ब्रूहीत्याश्राव्य ब्रूयादिन्द्र यजेति स्व एवैभ्यो भागधेये समदं दधाति वितृꣳहाणास्तिष्ठन्त्येतामेव (२) निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एवैन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रं चैव विश्वाꣳश्च देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवत्यैन्द्रस्यावदाय वैश्वदेवस्याव द्येदथैन्द्रस्यो(३)परिष्टादिन्द्रियेणैवास्मा उभयतः ५

मारुतस्य। अवद्यन्नित्यव द्यन्। ब्रूयात्। मरुद्भ्य इति मरुत्भ्यः। अन्विति। ब्रूहि। इति। आश्राव्येत्या श्राव्य। ब्रूयात्। इन्द्रम्। यज। इति। स्वे। एव। एभ्यः। भागधेय इति भाग धेये। समदमिति स मदम्। दधाति। वितृꣳहाणा इति वि तृꣳहाणाः। तिष्ठन्ति। एताम्। एव (२)। निरिति। वपेत्। यः। कामयेत। कल्पेरन्। इति। यथादेवतमिति यथा-देवतम्। १० अवदायेत्यव-दाय। यथादेवतमिति यथा देवतम्। यजेत्। भागधेयेनेति भाग धेयेन। एव। एनान्। यथायथमिति यथा यथम्। कल्पयति। कल्पन्ते। एव। ऐन्द्रम्। एकादशकपालमित्येकादश कपालम्। निरिति। वपेत्। वैश्वदेवमिति वैश्व देवम्। द्वादशकपालमिति द्वादश-कपालम्। ग्रामकाम इति ग्राम काम। इन्द्रम्। च। एव। विश्वान्। च। देवान्। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। ते। एव। अस्मै। सजातानिति स-जातान्। १५ प्रेति। यच्छन्ति। ग्रामी। एव। भवति। ऐन्द्रस्य। अवदायेत्यव-दाय। वैश्वदेवस्येति वैश्व-देवस्य। अवेति। द्येत्। अथ। ऐन्द्रस्य (३)। उपरिष्टात्। इन्द्रियेण। एव। अस्मै। उभयतः।

इत्यन्वाह। अत्याक्रम्य आश्राव्य ब्रूयात् 'मरुतो यज' इति। होता च "धाव शर्म शशमानाय" (तैस १ ५ ११) इति यजति। अथ मारुतस्य अवद्यन् ब्रूयात् 'मरुद्भ्योऽनु ब्रूहि' इति। होता च "मरुतो यस्य हि क्षये" (तैस १ ५ ११) इत्यन्वाह। अत्याक्रम्य आश्राव्य ब्रूयात् 'इन्द्र यज' २० इति। होता च "इन्द्र नर" (तैस २ १ ११) इति यजति। एवं स्वे भागधेये इन्द्रस्य मरुतां च कलहम् उत्पादयति। ततश्चैते वितृꣳहाणाः परस्परं हिंसन्तः तिष्ठन्ति, क्षत्रिया विशश्च संग्रामरुचयो भवन्ति॥ कल्पेरन् इति। निवृत्तसंग्रामाः स्वरूपेऽवतिष्ठेरन्नित्यर्थः। यथादेवतमिति। या यस्य देवता तदनतिक्रमेण अवदाय यजेत्। ततश्च एतान् यथायथं यो यस्य भागस्तेन तं कल्पयति स्थापयति स्वरूपे स्थापयति। ततश्च ते निवृत्तविरोधाः कल्पन्ते॥ २५

१. ल- स्वेन। २. मै- कल्पम। ३ मै- दयाद्धाति। ४. मै८- यथम्। ५-५. त१- 'संग्रामरुचयो ... कल्पन्ते' नास्ति। ६ मै- 'इति' नास्ति। ७ मैल- विद्वेषे'। ८. मै- 'स्वरूपे स्थापयति' नास्ति। ९. मै८- 'ते' नास्ति। १०. मै- निवर्तन्ते।

सजातान् परि गृह्णात्युपाधाय्यपूर्वयं वासो दक्षिणा सजातानामुपहित्यै पृश्निये दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति प्रियवती याज्यानुवाक्ये ( ४ ) भवतः प्रियमेवैनꣳ समानानां करोति द्विपदा पुरोऽनुवाक्या भवति द्विपदे

५

सजातानिति स-जातान् । परीति । गृह्णाति । उपाधाय्यपूर्वयमित्युपाधाय्य-पूर्वयम् । वासः । दक्षिणा । सजातानामिति स-जातानाम् । उपहित्या इत्युप-हित्यै । पृश्नियै । दुग्धे । प्रैयङ्गवम् । चरुम् । निरिति । वपेत् । मरुद्भ्य इति मरुत्-भ्यः । ग्रामकाम इति ग्राम-कामः । पृश्नियै । वै । पयसः । मरुतः । जाताः । पृश्नियै । प्रियङ्गवः । मारुताः । खलु । वै । देवतया । सजाता इति १० स-जाताः । मरुतः । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स-जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । प्रियवती इति प्रिय-वती । याज्यानुवाक्ये इति याज्या-अनुवाक्ये ( ४ ) । भवतः । प्रियम् । एव । एनम् । समानानाम् । करोति । द्विपदेति द्वि-पदा । पुरोनुवाक्येति पुरः-अनुवाक्या । भवति । द्विपद इति द्वि पदः ।

ऐन्द्रस्येत्यादि ॥ प्रथमम् [11]ऐन्द्रस्य अवदाय द्विः [11]वैश्वदेवस्य [11]अव द्यति । [11]अथ [11]ऐन्द्रस्य १५ [11]उपरिष्टात् पुनरवद्यति । एवम् [11]इन्द्रियेण इन्द्रदत्तेन वीर्येण [11]सजातान् [11]उभयतः आदावन्ते च [11]परि [11]गृह्णाति । अथान्वाहार्यमासाद्य उपाधाय्यपूर्वयं वासः दक्षिणा दद्यात् । [12]वस्त्रान्तयो [12]उपधेयं [13]रक्तं सूत्रम्[13] उपाधाय्यम् । छान्दसो ण्यत् (पा ३·१·१२४), कृदुत्तरपदप्रकृतिस्वरत्वेन " तित्स्वरितम् " (पा ६·१·१८५) इति स्वरितत्वम् । तत्सूत्रम् पूर्वं वानकाल एव यातीति उपाधाय्यपूर्वयम् । निवि (पा ३.२.७४) नपुंसकस्य ह्रस्वत्वम् ( पा १·२·४७ ); दासीभारादित्वात् २० पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·४२ ) । बहुव्रीहिर्वा–उपाधाय्य वस्त्र पूर्वय प्रथम प्राप्य यस्य कारणत्वेन तत्तयोक्तम् । [11]उपहित्यै उपसेवायै भवति [11]सजातानाम् ॥

पृश्नियै दुग्धे इत्यादि ॥ पृश्निः श्वेता गौः । शुक्लबिन्दुचितेत्येके । प्रैयङ्गवमिति । प्रियङ्गुः [14]धान्यविशेषः । विकारे " ओरञ् " (पा ४·३·१३९) इत्यञ् । [11]पृश्नियै प्रियङ्गवः इति । [11]पयसः [11]जाताः इत्येव । मारुताः खलु वा इत्यादि । गतम् ॥

२५ प्रियवती इति ॥ "प्रिया वो नाम हुवे तुराणाम्", "श्रियसे क भानुभि." (तैब्रा २·१·११) इत्येते प्रियशब्दवत्यौ [11]याज्यानुवाक्ये [11]भवतः । द्विपदेति । " प्रिया वो नाम " इति [11]द्विपदा

११. मै–यस्त्रान्तयो । १२. मै४– 'उपधेयम्' नास्ति । १३–१३. तं१,मै,ग– रक्तं विन्यस्य । १४. मै४– धान्यपूर्णविशेषः ।

एवार्व रुन्द्धे चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽ२ऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्नि-र्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत् तमे(५)-तया संज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुं ततो वा इन्द्रं

एव । अवेति । रुन्द्धे । चतुष्पदेति चतुः पदा । याज्या । चतुष्पद इति चतुः–पदः । एव । पशून् । अवेति । रुन्द्धे । देवासुरा इति देव असुराः । संयत्ता इति सम्–यत्ताः । आसन् । ते । देवाः । मिथः । विप्रिया इति वि प्रियाः । आसन् । ते । अन्यः । अन्यस्मै । ज्यैष्ठ्याय । अतिष्ठमानाः । चतुर्धेति चतुः–धा । वीति । अक्रामन् । अग्निः । वसुभिरिति वसु भिः । सोमः । रुद्रैः । इन्द्रः । मरुद्भिरिति मरुत् भिः । वरुणः । आदित्यैः । सः । इन्द्रः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तम् (५) । एतया । संज्ञान्येति सं ज्ञान्या । अयाजयत् । अग्नये । वसुमत इति वसु-मते । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् । निरिति । अवपत् । सोमाय । रुद्रवत इति रुद्र-वते । चरुम् । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपालमित्येकादश कपालम् । वरुणाय । आदित्यवत इत्यादित्य-वते । चरुम् । ततः । वै । इन्द्रम् ।

त्रिष्टुप्, एकद्वित्रिभिश्च पङ्क्त्याऽन्या इति । द्वौ पादावस्या इति द्विपदा । "सङ्ख्यासुपूर्वस्य" (पा ५ ४ १४०) इति लोपः समासान्तः । "टाबृचि" (४ १ ९) इति टापि "पादः पत्" (६ ४ १३०) इति पद्भावः, "द्वित्रिभ्यां पाद्दन्°" (पा ६ २ १९७) इत्युत्तरपदान्तोदात्तत्वम् । एवं चतुष्पदा याज्येति । "श्रियसे कम्" इति पूर्वोक्ता ॥

देवासुरा इत्यादि ॥ संज्ञानेष्टिविधिः । देवा अपि मिथः विप्रिया आसन्, ते देवा अन्योऽन्यस्य ज्यैष्ठ्यं श्रैष्ठ्यमसहमानाः अन्यः अन्यस्मै अतिष्ठमानाः कार्येषु अप्रकाशमानाः चतुर्धा वि अक्रामन् चतुर्धा व्यूह्य स्थिताः । इन्द्रमनादृत्य "अग्निर्वसुभिः" इत्यादि क्रमेण स्थिताः । अन्योऽन्यस्मा इति । "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम् । यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य" (८ १ १२ वा ११) इति समासाभावे पूर्वपदस्य प्रथमैकवचनम् । "अन्यः अन्यस्मै" । अन्यस्मै अन्यस्मै इत्यर्थः । "श्लाघह्नुङ्स्थाशपाम्°" (पा १ ४ ३४)

१५–१५. त१ मै मै४ ल– 'अन्यः अन्यस्मै' नास्ति ।

देवा ज्यैष्ठ्यायाभि समजानत यः समानैर्मिथो विप्रियः स्यात् तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणाया( ६ )ऽऽदित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभि सं जानते वसिष्ठः समानानां भवति ॥ ११ ॥

५ [ विशमेव तिष्ठन्त्येतामेवाथैन्द्रस्य याज्यानुवाक्ये ते वरुणाय चतुर्दश च । ] ।

देवाः । ज्यैष्ठ्याय । अभि । समिति । अजानत । यः । समानैः । मिथः । विप्रिय इति वि प्रियः । स्यात् । तम् । एतया । सञ्ज्ञान्येति स-ज्ञान्या । याजयेत् । अग्नये । वसुमत इति वसु मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । सोमाय । रुद्रवत इति रुद्र-वते । चरुम् । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । वरुणाय । १० ( ६ ) आदित्यवत इत्यादित्य-वते । चरुम् । इन्द्रम् । एव । एनम् । भूतम् । ज्यैष्ठ्याय । समानाः । अभि । समिति । जानते । वसिष्ठः । समानानाम् । भवति ॥ ११ ॥

[ मैसं १२·१५–६; कासं ११·५ ]

इति सम्प्रदानत्वम् । " प्रकाशनस्थेयाख्ययोश्च " ( पा १·३·२३ ) इत्यात्मनेपदम् । ज्यैष्ठ्यायेति । तादर्थ्ये चतुर्थी । अथ इन्द्रः देवाना राजा प्रजापतिम् उप अधावत् इत्यमस्मिन् प्रति-
१५ विधेत्यत्रेति । अथ प्रजापतिरिन्द्र [16]सञ्ज्ञान्या इष्ट्वा[16] अयाजयत् ' अग्नये वसुमते ' [17]इत्येतया [18]सञ्ज्ञायते सम्यक् [18]ज्येष्ठभावेन ज्ञायते[18] अनयेति करणे ल्युट् । ततः देवाः ज्यैष्ठ्याय इन्द्रम् अभि सम् अजानत अभ्युपगतवन्तोऽस्य ज्यैष्ठ्यम् । " सम्प्रतिभ्यामनाध्याने " ( पा १·३·४६ ) इत्यात्मनेपदम् ॥

यः समानैरित्यादि । स यैः सञ्ज्ञिज्ञासीत तेषूपरतेष्वेतामिष्टिं निर्वपेत् । ततः समानाः एनम्
२० यजमानम् इन्द्रम् एव भूत ज्यैष्ठ्याय अभि सं जानते । ततः समानानां वसिष्ठः वसुमत्तमः भवति । " तिन्मतोर्लुक् " (पा ५·३·६५), " टेः " (पा ६·४·१५५) इति टिलोपः ॥

इति द्वितीये द्वितीये एकादशोऽनुवाकः ॥

१६–१६. तै१.मै.ल– संज्ञानेष्ट्या । १७.ल–इति एकया । १८–१८. लं–' संज्ञायते सम्यग्ज्येष्ठभावेन ज्ञायते ' नास्ति । १९. मै४–ज्यैष्ठ्य° ।

## हिरण्यगर्भ *

हिरण्यगर्भ इति हिरण्य गर्भ ॥

अथ या याकाण्ड वैश्वदेवमेव। तत्र[1] " यो मृत्योर्बिभीयात् तस्मा एता प्राजापत्या शतकृष्णला निर्वपेत् " ( तैस २ ३ २ ) इत्यस्या पुरोनुवाक्या– ' हिरण्यगर्भ ' इति त्रिष्टुप ॥ प्रतीकग्रहण

[37]द्वादशेऽन्त्यानुवाकेऽत्र काम्ययाज्या श्रुतौ श्रुता ।
व्याख्यास्यन्ते तदर्थेष्टीरुदाहृत्यात्र पूर्ववत् ॥ ५२ ॥

मृत्युभीतस्येष्टिं विधातु प्रस्तौति– " देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एता प्राजापत्या॰ शतकृष्णला निरवपत् तयैवैष्वमृतमदधात् " ( तैस २ ३·२ ) इति। शत [38]"सुवर्णानि कृष्णलतुलितानि यस्या समष्टे सा कृष्णलसमष्टि शतकृष्णला, ता प्रजापतिदेवताकां [39]निरवपत्, तयैव शतकृष्णलया देवेष्वपमृत्युवारणरूपममृतमदधात् ॥ विधत्ते– " यो मृत्योर्बिभीयात् तस्मा एता प्राजापत्या॰ शतकृष्णला निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति " ( तैस २ ३ २ ) इति। मृत्योरपमृत्यो । [40]सर्वमायुर्जन्मकाले यावदायुरारब्धेन कर्मणा [41]प्राप्ति तत्सर्व विघ्नेन विना प्राप्नोति ॥ शतसंख्या प्रशंसति– " शतकृष्णला भवति शतायु पुरुष शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति " ( तैस २ ३ २ ) इति ॥ पाकाय घृतद्रव्य विधत्ते– " घृते भवत्यायुर्वै घृतममृत॰ हिरण्यमायुश्चैवास्मा अमृत च समीची दधाति " ( तैस २ ३ २ ) इति। " आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीक " ( तैस १ ३ ८ ) इति मन्त्रे [42]घृतप्रियस्याग्नेरायुष्प्रदत्वात् घृतस्यायुष्ट्वम्। यद्वा-घृतजन्येन बलेनेन्द्रियाणा देहे दृढबद्धतया निर्गमनाभावादायुर्भवतीति तद्धेतुत्वम्। समीची स्वस्वकार्यक्षमे मृत्युपरिहारायानुकूले। अवदानपरिमाण विधत्ते– " चत्वारिचत्वारि कृष्णलान्यव द्यति चतुरवत्तस्याऽऽप्त्यै " ( तैस २ ३ २ ) इति। पुरोडाशे प्रकृतिभूते सकृदुपस्तीर्य द्विरवदाय सकृदभिघारणेन चतुरवत्त सपद्यते। [43]अत्र त्वेकैकस्मिन्नवदाने कृष्णलगतया चतु संख्यया चतुरवत्त सपद्यते। तत्र प्रधानस्य हविषश्चतुष्टय [44]द्विरवदातव्यमिडार्थमपि चतुष्टयम्। अनेनाभिप्रायेण [45]वीप्सा। तदेतन्मनसि निधाय सूत्रकार आह– ' तानि पवित्रवत्याज्य आवपति। धर्ममात्र श्रपणम्। प्रचरणकाले अष्टौ[46] देवताया अवद्यति। चत्वारि स्विष्टकृति। द्वे प्राशित्रेऽष्टाविडायाम्। चतुर्धाकरणकाले सर्वाणि प्राशित्रे समोप्यैकधा ब्रह्मण उपहरति। तानि ब्रह्मा भक्षयति। भक्षापनय इतरेषाम् " ( आपश्रौ १९ २१ ३-८ ) इति ॥ सर्वेषामृत्विग्भागाना सहैव ब्रह्मणे प्रदान विधत्ते– " एकधा ब्रह्मण उप हरत्येकधैव यजमान आयुर्दधाति " ( तैस २ ३ २ ) इति। एकधेत्यनेन सर्वभागसाहित्यमुच्यते। उपहरति दद्यादित्यर्थ । अनेन [47]दानेन यजमानेऽपि सर्वमायुरेकी कृत्य स्थापयति ॥

हिरण्यगर्भ इति ॥ अस्यामिष्टौ [48]याज्यानुवाक्ये द्विविधे विकल्प्यते, तासु चतसृष्वृक्षु तिसृणा प्रतीकान्याम्नायन्ते– ' हिरण्यगर्भ आपो ह यत् प्रजापते ' इति। " हिरण्यगर्भ समवर्तताग्रे "

१. त१ मै ल– ' तत्र ' नास्ति।

३७. मे–द्वादशे ह्यनु°, ड१ शृ– द्वादशे त्वनु।°　३८. ह ड१– सुवर्णानि कृष्णलानि।　३९. ड ड१– निर्वपेत्।　४०. इ जो ना हा– ' सर्वमायु ' नास्ति।　४१. ड१– प्राप्ति तत्र।　४२. इ ने हो१– घृतप्रतीकस्या°।　४३ अ इ उ पा– तत्र।　४४ जो ना हा – °मिडार्थानामपि।　४५ क– ' वीप्सा ' नास्ति।　४६. हो१– ' अष्टौ ' नास्ति।　४७ इ– तद्दानेन।　४८. याज्यानुवाक्येऽपि।

आपो॑ ह॒ यत् ॥
प्रजा॑पते ॥

आप॑ । ह॒ । यत् ।
प्रजा॑पत॒ इति॑ प्रजा-प॒ते ॥

५ वेद " हिरण्यगर्भः समवर्तताग्रे " ( तैस ४ १ ८ ) इत्यस्या । इयं चाग्निकाण्डे व्याख्यास्यते, यत्राम्नास्यते, " ऊर्ध्वा अस्य " ( तैस ४ १ ८ ) इत्यत्र। हिरण्मयाण्डगर्भः प्रजापतिः अग्रे प्रथमं समवर्तत ततः जातः सर्वस्य भूतजातस्य एकः पतिः आसीत्। सः पृथिवीं विस्तीर्णां दिवं द्याम् अन्तरिक्षम् इमां भूमिं च दाधार धारयति। तस्मै कस्मै एकस्मै अविज्ञातस्वभावाय वा देवाय हविषा अनेन विधेम परिचरेमेति ॥

१० अथ तत्रैव पुरोनुवाक्याविकल्पः 'आपो ह यत्' इति त्रिष्टुप् ॥ इदं च प्रतीकग्रहणं " आपो ह यन्महतीर्विश्वम् " इत्यस्याः । इयमपि तत्रैव व्याख्यास्यते ( तैस ४ १ ८ )। महत्य आपः यस्मात् गर्भम् आयन्, दक्षं सर्वसृष्टिकुशलं दधानाः तमेव गर्भं स्वयं भुञ्जयन्त्य जनयितुकामाः, तस्मात् कारणात् देवानां सर्वेषाम् एकः असुः प्राणभूतः प्रजापतिः निरवर्तत निष्पन्नोऽभवत्। तस्मै कस्मै एकस्मै, अविज्ञातस्वभावाय वा देवाय हविषा परिचरेमेति ॥

१५ अथ तत्र याज्या– 'प्रजापते' इति त्रिष्टुप् ॥ इदं च प्रतीकग्रहणम्– " प्रजापते न त्वदेतान्यन्य " ( तैस १ ८ १४ ) इत्यस्याः । इयं च " सोमस्य त्विषिरसि " ( तैस १ ८ १४ ) इत्यत्र व्याख्याता। हे प्रजापते, न खलु कश्चित् त्वत्तः अन्यः तानि एतानि विश्वानि जातानि भूतानि परि बभूव परिभवति। तस्मात् यत्कामाः वयं जुहुमः तत् नः अस्माकम् अस्तु। किं च वयं रयीणां पतयः स्वामिनश्च स्याम इति ॥

२० इयं वा। 'आपो ह "यन्महतीर्विश्वमायन" इति द्वितीया। ते उभे अपि चतुर्थकाण्डस्य प्रथमप्रपाठक (तैस ४ १ ८) समाम्नातत्वात् तत्रैव व्याख्यास्येते। " प्रजापते न त्वदेतान्यन्य " "इत्येषा तृतीया। सा तु प्रथमकाण्डस्याष्टमप्रपाठक (तैस १ ८ १४) व्याख्याता ॥

२ क–एकस्य। ३ ग–यस्य। ४ मै०–विश्वमायन्। ५. ग–'एकस्मै' नास्ति।

६०. इयं यन्महतीर्विश्वमायन्। ७० घ–इत्येषा सा।

वामदेवेष्टियाज्यापुरोनुवाक्या ]

स वेद पुत्रः पितरꣳ स मातरꣳ स सूनुर्भुवत् स भुवत् पुनर्मघः ।
स द्यामौर्णोदन्तरिक्षꣳ स सुवः स विश्वा भुवो अभवत् स आऽभवत् ॥

स । वेद । पुत्रः । पितरम् । सः । मातरम् ।
सः । सूनुः । भुवत् । सः । भुवत् । पुनर्मघ इति पुनः–मघः ।
सः । द्याम् । और्णोत् । अन्तरिक्षम् । सः । सुवः ।
सः । विश्वाः । भुवः । अभवत् । सः । एति । अभवत् ॥

अथ तत्रैव याज्याविकल्पः – 'स वेद पुत्रः' इतीयं जगती ॥ स एव प्रजापतिः पुत्रः भूत्वा पितरं मातरं च वेद जानाति, ममायं पिता इयं मातेति जानन् पुत्रात्मना स एव वर्तते । स एव सूनुः भुवत् यो यः सोतव्यः उत्पाद्यः पदार्थः सोऽपि भूधरादिः स एव भवेत् । पुनश्च स एव मघं हिरण्यादि धनं भुवत् भवेत् स एव तथा भवति । भवतेर्लेटि शपो लुक् । "भूसुवोस्तिङि" (पा ७ ३ ८८) इति गुणाभावः । यद्वा– सूनुः सोमयजमानः तदात्मना च भवति । मघं सोतव्यं सोमं तादात्म्येन च वर्तते । किं च– स एव द्यां द्युलोकम् और्णोत् छादयति स्वेन महिम्ना तेजसा वा, स एव अन्तरिक्षम् और्णोत् इत्येव । स एव सुवः पृथिवीं च और्णोत् । सुष्टु आवरणात् सुवः सर्वविकाराणां सुष्टु गन्त्री । तस्याः

स इति ॥ अथ चतुर्थीमृचमाह– 'स वेद पुत्रः पितरꣳ स मातरꣳ स सूनुर्भुवत् स भुवत् पुनर्मघः । स द्यामौर्णोदन्तरिक्षꣳ स सुवः स विश्वा भुवो अभवत् स आऽभवत्' इति । 'द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः' इति मन्त्रवर्णात् ब्रह्माण्डमध्ये सत्यलोके वर्तमानस्य प्रजापतेः अण्डस्योपरितनकपालरूपा द्यौः पिताऽधस्तनकपालरूपा पृथिवी माता । स पुत्रः प्रजापतिः तं पितरं तां च मातरं वेद । अभिज्ञः स प्रजापतिः सूनुः भुवत् तयोर्मातापित्रोः पुत्रो भवति । अत एव तयोर्वेदनं तस्योपपन्नम् । मघशब्दो धनवाची । पुनः पुनर्धनप्रदानाय मघं धनं यस्यासौ पुनर्मघः । तादृशोऽयं प्रजापतिः भुवत् भवति । किं च स प्रजापतिः सर्वव्यापी विराड्रूपः सन् द्याम् उपरितनकपालम् और्णोत् आच्छादितवान् । तथा अन्तरिक्षं स्वर्गं च स और्णोत् । किं च स एव विश्वाः भुवः इमं लोकमारभ्याधस्तनाः सर्वा भूमीः अभवत् प्राप्नोत् आच्छादितवानित्यर्थः । किं च स एव समागत्य चतुर्भुजत्वेन रूपान्तरेण परिमितः अभवत् ॥

उदु त्य [६] चित्रम् [६] ।

उदिति । उ । त्यम् ॥ चित्रम् ॥

दित्यादुग्रड् ( पा ६ ८ ७७ वा १ ) छान्दसमाद्युदात्तत्वम् । यद्वा— सूतेरसुनि गुणाभावश्छान्दस, सवित्री सर्वविकाराणाम् । किं बहुनेत्याह— "स एव "विश्वा "भुव भूतजातानि विश्वा भुव भाव यित्री "योनी कारणानि "अभवत् प्राप्तवान् उपादितवान् । "स एव च "आऽभवत् आवृत्यावृत्य प्राप्नोति उत्पादयति । यद्वा स एव विश्वा भुव अभवत् भवति विश्वभूतजातात्मना कारणात्मना वा स एवावतिष्ठते । स एव "चावृ यावृय "ताद्रूप्येण भवति वर्तते "सोऽस्माक "प्रयूहम् अपनयत्विति ॥

' यो ब्रह्मवर्चसकाम स्यात् तस्मा एत सौर्यं चरु निर्वपेत् " (तैस २ ३ २) इत्यस्या
१० पुरोनुवाक्या ' उदु त्यम् ' इति गायत्री ॥ व्याख्यातेय ग्रहेषु ( तैस १ ४ ४३ )। अस्या इद प्रतीकग्रहणम् । तमिम "जातवेदस "देव सूर्य "केतव रश्मय "उत् "वहन्ति विश्वस्य लोकस्य दर्शनार्थमिति ॥

तत्र याज्या– ' चित्रम् ' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ४ ४३)। प्रतीकग्रहणमेवेदम् । "चित्र चायनीय "देवानाम् "अनीक "चमूस्थानाय मित्रादीनामपि चक्षु
१५ स्थानीयम् "उदगात् उद्गच्छति । "किं च "द्यावापृथिवी "अन्तरिक्ष च "आऽप्रा आऽप्रात् आपूरयति । "जगत जङ्गमस्य "तस्थुष स्थावरस्य च "आत्मा "सूर्य इति ॥

इदानीं विधत्ते– ' असावादित्यो न व्यरोचत तस्मै देवा प्रायश्चित्तिमैच्छन् तस्मा एत सौर्यं चरु निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकाम स्यात् तस्मा एतं सौर्यं चरु निर्वपेदमुमेवाऽऽदित्य स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चस दधाति ब्रह्मवर्चस्येव भवति " (तैस २ ३ २) इति ।
२० तदुक्त सूत्रकारेण– ' सौर्यं चरु रुक्माभ्या परिगृह्य "आसादयति " (आपश्रौ १९ २१ ९) इति, तदुक्तद्विधत्ते– ' उभयतो रुक्मौ भवत उभयत एवास्मिन् रुच दधाति " (तैस २ ३ २) इति । उभयत उपरिष्टादधस्ताच्चेत्यर्थ ॥ प्रयाजार्थ आज्ये कृष्णल प्रक्षिप्य होम विधत्ते– " प्रयाजेप्रयाजे कृष्णल जुहोति दिशश्य एवास्मै ब्रह्मवर्चसमव रुन्द्धे " (तैस २ ३ २) इति । पञ्चसु प्रयाजेषु हूयमानैस्तैर्जनै पञ्चभि कृष्णलै पञ्चस्य दिग्भ्यो "ब्रह्मवर्चसाख्यस्य तेजस प्राप्तिर्भवति ॥
२५ उदिति ॥ अथ याज्यानुवाक्ययो प्रतीक दर्शयति– ' उदु त्य चित्रम् ' इति । ' उदु त्य जात वेदसम् ' इति पुरोनुवाक्या । ' चित्रं देवानामुदगादनीकम् ' इति याज्या । ते उभे अपि प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्याते (तैस १ ४ ४३) ॥

१६ तै१ मै०– व्योति । १७ मै २– ' आपूर्य ' नास्ति । १८ मै– तद्रूपेण । १९ स– माऽस्माकम् । २० मै४– पृथुम । २१ तै१ मै४ ०– सस्मृ० । २२ तै१ मै– उदु त्यं न ।
३० ४८ तै– भव्यानि । ४९ अ २ पा– ब्रह्मवर्चसस्य ।

स प्रत्नवन्नवीयसाऽग्ने द्युम्नेन संयता। बृहत् ततन्थ भानुना ॥

स । प्रत्नवदिति प्रत्न वत्। नवीयसा। अग्ने। द्युम्नेन। संयतेति सम्-यता। बृहत्। ततन्थ। भानुना ॥

"आग्नेयमष्टाकपालं निर्वपेत् सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमेत्" (तैसं २ ३ २) इत्यस्यास्त्रिहविष्काया आग्नेयस्य पुरोनुवाक्या– 'स प्रत्नवत्' इति गायत्री ॥ हे अग्ने, स त्वं प्रत्नवत् पुराणार्हम्। यद्वा– प्रागिव। यद्वा–पुरातननेव नवीयसा नवतरेण द्युम्नेन यशसा [23]धनेन वा संयता त्वमेन संगच्छता। "शतुरनुम°" (पा ६ १ १७३) इति व्यत्ययेन न प्रवर्तते। यद्वा– [24]त्वय्येव [25]संयता धनेन[25]। यमेः क्विपि अनुनासिकलोपे तुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। संयतशब्दादेव तृतीयाया आकारः। "परादिश्छन्दसि°" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। ईदृशेन द्युम्नेन [26]द्योतनशीलेन भानुना भासनशीलेन बृहत् महदिदं विश्वं ततन्थ विस्तारय। छान्दसो लिट्। यद्वा– विश्वं बृहत् भृशं ततन्थ तथा कुर्वंश्चास्माकं हिरण्यलाभहेतुर्भवेति ॥

[60]हिरण्यार्थिन त्रिहविष्कामिष्टिं विधत्ते– "आग्नेयमष्टाकपालं निर्वपेत् सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमेदिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनं हिरण्यं नमति" (तैसं २ ३ २) इति। हिरण्यं विन्देय प्रथमतः प्रयत्नं कृत्वा कियदपि [61]लभेय, [62]तत ऊर्ध्वं वृद्ध्यादिरूपेणाधिकं स्वयमेव मा प्राप्नुयादिति कामयितुरियमिष्टिः। फलान्तराय त्रिहविष्काम् [63]एतामेव विधत्ते– [*]"वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एतामेव निर्वपेद्धिरण्यं विस्त्वा नेन्द्रियेण वीर्येण व्यृध्यते" (तैसं २ ३ २) इति॥ हिरण्यं लब्धवतश्चोरादिभीत्या कालत्वमिन्द्रियव्यृद्धिः॥ पुनरपि फलान्तराय तां विधत्ते[*]– "एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दति" (तैसं २ ३ २) इति॥ [64]मार्गपातनस्थानविस्मृत्यादिना विनष्टस्य हिरण्यस्य पुनर्लाभार्थमियमिष्टिः ॥

स इति॥ एतेषु त्रिषु हविःषु प्रथमस्य पुरोनुवाक्यामाह–'स प्रत्नवन्नवीयसाऽग्ने द्युम्नेन संयता। बृहत् ततन्थ भानुना' इति। हे अग्ने, स त्वं द्युम्नेन हिरण्येन बृहत् ततन्थ महदैश्वर्यं विस्तारय। [65]किंवत्? प्रत्नवत् पुरातना धनिका उदाराः सन्त ऐश्वर्यं यथा विस्तारयन्ति तद्वत्। कीदृशेन द्युम्नेन?

२३ मै४– अन्नेन। २४ मै– स्वयैव। २५–२५ तं१– स्वधनेन। २६ त१ मै ल– 'द्योतनशीलेन' नास्ति।

६०. ड ड१ हो२– हिरण्यार्थिने। ६१. ड– लभे, अ उ ओ पा हा– लभेयं। ६२. ड ने हो१– तत्। ६३. आ ड– ताम्, ड१ भ हो२– तामेव। [*–* भट्टगोपीचर्जं सर्वेषु लिखितपुस्तकेषु अयत्नो भाष्यभाग त्रुटित इव, संचरित इव प्रतिभाति।]। ६४ ड ड१ ने– मार्गे पतन°। ६५. क बो भं हा– किं तत्, ड ड१ ने हो१– किं च।

नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो ( १ ) नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा ॥

नीति । काव्या । वेधस । शश्वत । क । हस्ते । दधान ( १ ) । नर्या । पुरूणि ।
अग्नि । भुवत् । रयिपतिरिति रयि-पति । रयीणाम् । सत्रा । चक्राण । अमृतानि । विश्वा ॥

५ तत्रैव याज्या–' नि काव्या ' इति त्रिष्टुप् ॥ कवेर्भाव काव्य द्रष्टृत्व समीचीनदर्शनत्वम् । गुणवचनत्वात् ष्यञ् ( पा ५ १ १२४ ), " सुपा सुलुक्° " ( पा ७ १ ३९ ) इति तृतीयाया आकार । अयम् ^v^अग्नि ^v^काव्या कवित्वेन आत्मीयेन ^v^वेधस विधातॄन् यजमानान् ^v^शश्वत नित्यान् अविच्छिन्नयागान् ^v^नि ^v^क नियमेन करोति । लुडि " मन्त्रे घस° " इति च्लेर्लुक्, लडि वा शपो लुक्, उभयत्र " बहुल छन्दस्यमाड्योगेऽपि " ( पा ६ ४ ७५ ) इत्यडभाव । लेटि
१० वा शपो लुक् । किं कुर्वन्नित्याह– ^v^हस्ते ^v^दधान ददान प्रयच्छन् प्रयच्छन्नित्यर्थ । किं ? नर्याणि ^v^नरेभ्यो हितानि धनानि हिरण्यादीनि । गवादिभ्रंष्टव्य ( पा ५ १ २ ) । " तत्र साधु " ( पा ४ ४ ९८ ) इति वा यत् । ^v^पुरूणि बहूनि । कि च– अयमित्थ कुर्वन् ^v^रयीणा धा ^v^रयिपति सर्वेषा धनाना नित्य पालक ^v^भुवत् भवेत् । शपो लुकि पूर्ववत् गुणाभाव, " परादि श्छन्दसि° " ( पा ६ २ १९९ ) इत्युत्तरपदाद्युदात्तत्वम्, " नामन्यतरस्याम् " ( पा ६ १ १७७ )
१५ इति नाम । पुनश्च किं कुर्वन्नित्याह– ^v^सत्रा सहभूतानि । पूर्ववदाकार, शेर्वा लोप, छान्दसो वा डाच् । ^v^चक्राण ददान सहैव दातु शक्त । शक्तौ चानश् ( पा ३ २ १२९ ) । " बहुल छन्दसि " ( पा २ ४ ७६ ) इति शप श्लु, यद्वा– छान्दसस्य लिट कानजादेश । किं चक्राण ? विश्वानि ^v^अमृतानि अमरणहेतुभूतानि हिरण्यादीनि ॥

^v^नवीयसा अत्यन्तनूतनेन पितृपितामहाद्युपार्जितव्यतिरिक्तेनेदानीमेवार्ज्यमानेन, ^v^सयता अस्मान् प्राप्नुवता,
२० ^v^भानुना " कार्ष्ण्याभावादत्यन्त भासमानेन " ॥
नीति ॥ तत्रैव याज्यामाह–' नि काव्या वेधस शश्वतस्कर्हस्ते दधानो नर्या पुरूणि । अग्निर्भुवद्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा ' इति ॥ कवि पण्डिततरस्तस्य भाव काव्य पाण्डित्य बुद्ध्यतिशय । अयम् ^v^अग्नि ^v^काव्या "काव्येन स्वकीयबुद्ध्यतिशयेन "यजमानान् ^v^शश्वत "निरन्तरानुष्ठानाधतिकान् ^v^वेधस विधानृमद्दशान् ^v^नि ^v^क नितरा करोतु । कीदृशोऽग्नि ? ^v^नर्या मनुष्येभ्यो हितानि
२५ ^v^पुरूणि बहुधनानि ^v^हस्त ^v^दधान । किं च सोऽग्नि ^v^रयीणा ^v^रयिपति ^v^भुवत् सर्वेषा धनानाम् अधिपतिरासीत् । अत ^v^अमृतानि हिरण्यानि ^v^विश्वा सर्वाणि ^v^सत्रा ^v^चक्राण सहदास्यतानि कर्तु शक्त । मानो.मर्थ्य हिरण्य ददातु ॥

=७ मैट– पृम्या ।

६६–६६ नै– ती ष्याभाषा । अत्यन्तमहता तेजोवता । ६७. अ इ उ ओ पा हा– पाकेन ।
३० ६८. नै– यमानाशान । ६९. क नै– °ष्ठानेन शश्वन शाश्वतिकान् ।

वाम्येष्टियाज्यापुरोनुवाक्या. ]

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥
वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥

हिरण्यपाणिमिति हिरण्य पाणिम् । ऊतये । सवितारम् । उपेति । ह्वये ।
स । चेत्ता । देवता । पदम् ॥
वामम् । अद्य । सवितः । वामम् । उ । श्वः ।
दिवेदिव इति दिवे दिवे । वामम् । अस्मभ्यमित्यस्मभ्यम् । सावीः ।
वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामभाज इति वाम भाजः । स्याम ॥

अथ सावित्रस्य द्वादशकपालस्य पुरोनुवाक्या– 'हिरण्यपाणिम्' इति गायत्री ॥ व्याख्यातेय मेहेषु (तैस १ ४ २५)। हिरण्यपाणिं हिरण्याभरणपाणिं रसहरणरश्मिं हितरमणीयरश्मिं वा सवितारम् उप ह्वये उपेत्याह्वयामि, ऊतये रक्षणाय। स खलु चेत्ता ज्ञाता अस्माकं पदम् आस्पदं देवता अस्माकं स एवेति ॥ १०

तत्रैव याज्या– 'वाममद्य' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ४ २२)। हे सवितः, वामं वननीयं हिरण्यादि धनम् अद्य अस्मिन्नहनि सावीः सुव प्रेरय। श्वः अपि वामम् एव सुव । किं बहुना– दिवेदिवे दिनेदिने अस्मभ्यं वामम् एव सुव "अस्मभ्य वाममेव सुव" । किं च– हे देव भूरेः वामस्य क्षयस्य निवासस्य यद्वाम तद्भाजः स्याम । यद्वा– अथ श्वः क्रमेण सर्वदा वामभाजः वयं वामस्य क्षयस्य निवासस्यापि सन्निधिनो भूयास्म । अया धिया अनया बुद्ध्या वामप्राप्तिविषयया । यद्वा– अनेन कर्मणा यागात्मकेनेति ॥ १५

हिरण्यपाणिमिति ॥ द्वितीयस्य हविषः पुरोनुवाक्यामाह– 'हिरण्यपाणिमूतये सवितारमुप ह्वये। स चेत्ता देवता पदम्' इति। अस्मभ्य वातु हिरण्यं पाणौ यस्य स हिरण्यपाणिस्तादृशं सवितारम् उपगम्य ह्वये आह्वयामि। किमर्थम्? ऊतये रक्षणाय। स सविता देवताऽपि पदम् अस्मद्योग्य स्थानं चेत्ता ज्ञाता ॥ २०

वाममिति ॥ तत्रैव याज्यामाह– 'वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम' इति। हे सवितः, अद्य अस्मभ्यं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः। श्वः अपि वामं सावीस्तदूर्ध्वं दिने दिने वामं सावीः। हे देव, वामस्य वननीयस्य भूरेः विस्तीर्णस्य क्षयस्य स्वर्गनिवासस्य सिद्धये अया अनया धिया श्रद्धायुक्तबुद्ध्या वामभाजः वननीयकर्मानुष्ठायिनः स्याम ॥ २५

२८–२८ प१,मै४ ल– 'अस्मभ्यं वाममेव सुव' नास्ति। २९,३१ मै ल– अद्भासे"।

७०, इ–असौ, ड–'स' नास्ति। ७१, ने हो१– वननीय", ड–वननीय। ७२, ड मै हा१–'धिया' नास्ति।

बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि।
प्र या भूमि प्रवत्वति मह्ना जिनोषि ( २ ) महिनि॥

बट्। इत्था। पर्वतानाम्। खिद्रम्। बिभर्षि। पृथिवि।
प्रेति। या। भूमि। प्रवत्वति। मह्ना। जिनोषि ( २ )। महिनि॥

५ अथ भूम्याश्चरो पुरोनुवाक्या—'बडित्था' इत्यनुष्टुप्॥ [v]बट् [v]इत्था सत्यम्, इत्थमिदं यद्वक्ष्यामः। किं पुनस्तदित्याह—हे [v]पृथिवि विस्तीर्णे हे [v]भूमे। "कृदिकारादक्तिनः" (का-पा ४.१.४५ वा) इति ङीप्। हे [v]प्रवत्वति, प्रवत् प्रगत प्रवणम्। "उपसर्गाच्छन्दसि°" (पा ५.१.११८) इति वतिः। हे तद्वति। "तसौ मत्वर्थे" (पा १.४.१९) इति भत्वम्। हे [v]महिनि महनीये पूज्ये। महेरौणादिक इनिच्, गौरादित्वात् ङीष् (पा ४ १.४१)। यद्वा—मह उत्सवः प्रजानामिति,
१० हे तद्वति। ईदृशी त्व [v]पर्वताना [v]खिद [v]छिद्र विलं हिरण्यादिपूर्णं [v]विभर्षि। [v]या त्व द्रविणवती धारय विस्तीर्णा खलु त्व, या त्व [v]मह्ना माहात्म्येन। महेरौणादिको निप्रत्ययः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। [v]प्र [v]जिनोषि प्रकर्षेण प्रजास्तर्पयसि, यस्मात् प्रवणवती अत एव पूजिता। जिवि प्रीणने, इदित्वान्नुम् (पा ७.१.५८), वकारस्य छान्दस सम्प्रसारणम्। यद्वा— जयतेर्व्यत्ययेन श्नु। केचिदाहु — सत्यमित्थ पर्वताना मेखलाना खिद्र [v]छेदनप्रवहमुदक
१५ विभर्षि। पृथुत्वात् प्रभूत वर्षोदक विभर्षि। या त्व प्र(व)णवती प्रवणगामिनाम् उदकेन मह्ना महता निश्चमिद प्रकर्षेण जिनोषि तर्पयसि, अत एव [v]महनीयाऽसि। अनेनैव क्रमेण सर्वहिरण्यादिलाभहेतुत्वात्॥

बडित्थेति॥ तृतीयहविषः पुरोनुवाक्यामाह— 'बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमि प्रवत्वति मह्ना जिनोषि महिनि' इति। हे [v]पृथिवि, त्वं [v]पर्वतानां संबन्धिनं [v]खिद्रं खेदजनक
२० भारम् [v]इत्था [v]बट् [v]बिभर्षि। इत्थमिति हस्तेनाभिनयः। बट् बाढं दृढमित्यर्थः। हे [v]भूमि, त्वं [v]मह्ना स्वकीयेन महिम्ना [v]या [v]प्र [v]जिनोषि यान् पर्वतान् प्रकर्षेण प्रीणयसि तेषां खिद्रमिति पूर्वेणान्वयः। 'प्रवत्वति महिनि' इति द्वयं संबुद्ध्यन्तस्य भूमिपदस्य विशेषणम्। [v]प्रवत्वति प्रवणवति [v]महिनि महत्त्वयुक्ते पूजायुक्ते वा। अत्र [v]प्रवणवत्त्वेन जलसमृद्धिः सूच्यते। तया च जलसमृद्ध्या यान् प्राणिनः प्रीणयसि तानपि बाढं बिभर्षीत्यपि योजनीयम्॥

२५ ३०. पै.२.ख— भूमि भूमे। ३१. मे— 'छिद्र' नास्ति। ३२. तै१— खेदन°। ३३. तै१— महनीया।

७३. ने—प्रवणयुक्तत्वेन।

स्तोमा॑सस्त्वा विचारिणि॒ प्रति॑ ष्टोभन्त्य॒क्तुभिः॑ ।
प्र या वाजं॒ न हेष॑न्तं पे॒रुमस्य॑स्यर्जुनि ॥

स्तोमा॑स । त्वा॒ । वि॒चा॒रि॒णीति॑ वि चा॒रि॒णि॒ । प्रतीति॑ । स्तो॒भ॒न्ति॒ । अ॒क्तुभि॒रित्य॒क्तु-भि॒ ।
प्रेति॑ । या । वाज॑म् । न । हेष॑न्तम् । पे॒रुम् । अस्य॑सि । अ॒र्जु॒नि॒ ॥

तत्रैव याज्या–'स्तोमासस्त्वा' इत्यनुष्टुप् ॥ हे भूमे विचारिणि, विविध चरण गमन भक्षण वा विचार, हे तद्वति । स्तोमास स्तोमा स्तोत्राणि प्रतिष्टोभन्ति प्रत्येक प्रतिमुखा वा स्तुवन्ति । अक्तुभि त्वदीये कर्मभि अपदाने स्तुतिभि स्तोत्रभक्तिभि वा, या त्व तथा स्तूयमाना हे अर्जुनि निर्मले । "अन्यतो ङीष् (पा ४ १ ४०) इति ङीष् । हेषन्त शब्दवन्त दुष्ट वाज न अश्वमिव, यथा दुष्टो वाजी निरर्थकान् शब्दान् करोति एव निरर्थकशब्दाभिधायिनम् अमन्त्रार्थ इमिति । किं च–वाजमिव बलमिव पेरुम् अश्वमिव पानशीलम्, उपलक्षणत्वात् पानाशनमात्रकृतार्थम् अयज्ञार्हं पुरुष प्र अस्यसि त्व सत्वर्जुनीति । सर्वे स्तोत्रादयस्त्यागेन स्तुवन्ति । तेषा च मध्ये वाजिनमिव हेषन्तमिव पेरु त्व नाद्रियसे तस्मात् तादृशान् अस्मान् त्वामेव स्तुवतो हिर ण्यादिदानेन तृप्तान् कुर्विति । "उपसर्गात् सुनोति°" (पा ८ ३ ६५) इत्यादिना स्तोभते षत्वम् ॥

स्तोमास इति ॥ तत्रैव याज्यामाह–'स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभि । प्र या वाज न हेषन्त पेरुमस्यस्यर्जुनि' इति । विविधश्चारो जनाना सचारो यस्या पृथिव्या सा विचारिणी, तथाविधे हे पृथिवि, स्तोमास प्राणिना मया अक्तुभि अभिव्यक्तै नानाविधसस्यैर्निमित्तभूतै त्वा त्वा प्रति ष्टोभन्ति प्रत्येकमाश्रयन्ते । हे अर्जुनि धवले निर्मले पृथिवि, या त्व पेरु पानादिभोग्यवस्तुकामिन प्रकर्षेण अस्यसि भोगाय प्रेरयसि । कमिव ? हेषन्त वाज न वाजिनमिव । यथा लोके ग्रामादिप्रदेशे दूरान्तर दृष्ट्वा स्त्री स्नेहेन हेषाशब्द कुर्वन्तमुत्सुकमश्व सादिनोऽश्वमाय प्रेरयन्ति तद्वत् ॥ सोमवामिनश्चर विधानु प्रस्तौति–"इन्द्रस्त्वष्टु सोममभीषहाऽपिबत् स विष्वङ्व्यार्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतर सोमेन्द्र श्यामाक चरु निरवपत् तेनैवास्मिन्निन्द्रियर सोमपीथमदधात्" (तैस २ ३ २) इति । इन्द्रो विश्वरूप त्वष्टु पुत्र हत्वा सोमयागे तेन त्वष्ट्रा स्वयमनाहूत सन् कुपितो यज्ञस्य भाग कृत्वा प्रसह्य तदीयसोममपिबदिति पद्यमप्रपाठके (तैस २ ५ २) प्रपञ्चयिष्यते । तदत्र सगृह्योच्यते । अभीषहा बलात्कारेणेत्यर्थ । सोम पीत्वा त्वष्टुर्भीतो नानादिगभिमुखो विशेषेण पलायन कृतवान् । पलायमानश्च तत्पानादिन्द्रियस्यास्य सकेण

३४ मै४–अपादाने । ३५ त१ मै४ ल अक्तुभि । ३६ त१ मैल–'या' नास्ति । ३७ मै८–स्तूयमाना । ३८ ल–'शब्दवन्त' नास्ति । ३९ त१ प२ ल–°शब्दाभिधायिनम् । ४० प२ ल–वाजिनमिव । ४१ मै–अयज्ञानम्, त१ ल–'अयज्ञार्हं' नास्ति । ४२–४२ मै८–प्रकर्षेण त्यजसि । ४३ मै८–स्तोत्रास्त्वा° । ४४ त१–'अस्मान्' नास्ति ।

७४ क ने हो १–°विषमत्वैर्° । ७५ आ क–'त्वा' नास्ति । ७६ अ इ उ बो ना पा हा– २० त्वष्टु य । ७७ क–तदीयं सोम°, आ इ पा–'तदीय°' नास्ति । ७८ अ उ पा–°स्तस्य करण ।

बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि ( २ ) महिनि ॥

बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ।
प्रेति । या । भूमि । प्रवत्वति । मह्ना । जिनोषि ( २ ) । महिनि ॥

५ अथ भूम्याश्चरो. पुरोनुवाक्या--'बडित्या' इत्यनुष्टुप्॥ बट् इत्था सत्यम्, इत्थमिदं यद्वक्ष्यामः। किं पुनस्तदित्याह– हे पृथिवि विस्तीर्णे हे भूमे। " कृदिकारादक्तिनः " (का-पा ४.१.४५ वा) इति ङीप्। हे प्रवत्वति, प्रवत् प्रगत्त प्रवणम्। " उपसर्गाच्छन्दसि° " (पा ५.१.११८) इति वतिः। हे तद्वति। " तसौ मत्वर्थे " (पा १.४.१९) इति भत्वम्। हे महिनि महनीये पूज्ये। महेरौणादिक इनिच्, गौरादित्वात् ङीप् (पा ४.१.४१)। यद्वा– मह उत्सवः प्रजानामिति,
१० हे तद्वति। ईदृशी त्व पर्वताना खिद्र छिद्र बिलं हिरण्यादिपूर्णं बिभर्षि। या त्वं द्रविणवती भारय विस्तीर्णा खलु त्व, या त्व मह्ना माहात्म्येन। महेरौणादिको निप्र पयः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। प्र जिनोपि प्रकर्षेण प्रजास्तर्पयसि, यस्मात् प्रवणवती अत एव पूजिता। जिवि प्रीणने, इदित्वान्नुम् (पा ७.१.५८), वकारस्य छान्दसं सम्प्रसारणम्। यद्वा– जयतेर्व्यत्ययेन श्नु। केचिदाहु.– सत्यमित्थं पर्वतानां मेखलाना खिद्र छेदनप्रवहमुदक
१५ बिभर्षि। पृथुत्वात् प्रभूत वर्षोदक बिभर्षि। या त्वं प्र(व)णवती प्रवणगामिनाम् उदकेन मह्ना महता त्रिवमिद प्रकर्षेण जिनोपि तर्पयसि, अत एव महनीयाऽसि। अनेनैव क्रमेण सर्वहिरण्यादिलाभहेतुत्वात् ॥

---

बडित्थेति॥ तृतीयहविषः पुरोनुवाक्यामाह– ' बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्र या भूमि प्रवत्वति मह्ना जिनोषि महिनि ' इति। हे पृथिवि, त्वं पर्वतानां संबन्धिनं खिद्रं खेदजनकं
२० भारम् इत्था बट् बिभर्षि। इत्थमिति हस्तेनाभिनयः। बट् बाढं दृढमित्यर्थः। हे भूमि, त्वं मह्ना स्वकीयेन महिम्ना या प्र जिनोषि यान् पर्वतान् प्रकर्षेण प्रीणयसि तेषां खिद्रमिति पूर्वेणान्वयः। 'प्रवत्वति महिनि' इति द्वयं संबुद्ध्यन्तस्य भूमिपदस्य विशेषणम्। प्रवत्वति प्रवणवति महिनि महत्त्वयुक्ते पूजायुक्ते वा। अत्र प्रवणवत्वेन जलसमृद्धिः सूच्यते। तथा च जलसमृद्ध्या यान् प्राणिनः प्रीणयसि तानपि बाढं बिभर्षीत्यपि योजनीयम्॥

---

२५ ३०. पैरा.– भूमि भूमे। ३१. मै– 'छिद्रं' नास्ति। ३२. तै१– खेदन°। ३३. तै१– महनीया।

---

७३. नै–प्रगरागुरुवेन।

स्तोमा॑सस्त्वा विचारिणि॒ प्रति॑ ष्टोभन्त्य॒क्तुभिः॑ ।
प्र या वाजं॒ न हेष॑न्तं पे॒रुमस्य॑स्यर्जुनि ॥

स्तोमा॑सः । त्वा॒ । वि॒चा॒रि॒णीति॑ वि चा॒रि॒णि॒ । प्रतीति॑ । स्तो॒भ॒न्ति॒ । अ॒क्तुभि॒रित्य॒क्तु भिः॑ ।
प्रेति॑ । या । वाज॑म् । न । हेष॑न्तम् । पे॒रुम् । अस्य॑सि । अ॒र्जु॒नि॒ ॥

तत्रैव याज्या—'स्तोमासस्त्वा' इत्यनुष्टुप् ॥ हे भूमे विचारिणि, विविध चरण गमन भक्षण वा विचार, हे तद्वति । स्तोमासः स्तोमाः स्तोत्राणि प्रतिष्टोभन्ति प्रत्येक प्रतिमुखा वा स्तुवन्ति । अक्तुभिः त्वदीये कर्मभिः अपदानैः स्तुतिभिः स्तोत्रभक्तिभिः वा, या त्वं तथा स्तूयमाना हे अर्जुनि निर्मले । ■ अन्यतो ङीष् (पा ४ १ ४०) इति ङीष् । हेषन्त शब्दयन्त दुष्ट वाजं न अश्वमिव, यथा दुष्टो वाजी निरर्थकान् शब्दान् करोति एव निरर्थकशब्दाभिधायिनम् अमन्त्रार्थज्ञमिति । किं च—वाजमिव बलमिव पेरुम् अश्वमिव पानशीलम्, उपलक्षणत्वात् पानाशनमात्रकृतार्थम् अयज्ञार्हं पुरुषं प्र अस्यसि त्वं खल्वर्जुनीति । सर्वे स्तोत्रादयस्त्वामेव स्तुवन्ति । तेषां च मध्ये वाजिनमिव हेषन्तमिव पेरुं त्वं नाद्रियसे तस्मात् तादृशान् अस्मान् त्वामेव स्तुवतो हिरण्यादिदानेन तृप्तान् कुर्विति । "उपसर्गात् सुनोति॰" (पा ८ ३ ६५) इत्यादिना स्तोभते षत्वम् ॥ ५ १०

स्तोमास इति ॥ तत्रैव याज्यामाह—'स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः । प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि' इति । विविधश्चारो जनानां सञ्चारो यस्यां पृथिव्यां सा विचारिणी, तथाविधे हे पृथिवि, स्तोमासः प्राणिनां सङ्घाः अक्तुभिः अभिव्यक्तैः नानाविधसत्त्वैर्निमित्तभूतैः त्वा त्वां प्रति ष्टोभन्ति प्रत्येकमाश्रयन्ते । हे अर्जुनि धवले निर्मले पृथिवि, या त्वं पेरुं पानादिभोग्यवस्तुकामिनं प्रकर्षेण अस्यसि भोगाय प्रेरयसि । कमिव ? हेषन्तं वाजं न वाजिनमिव । यथा लोके वाह्यालिप्रदेशे तुरङ्गान्तरं दृष्ट्वा स्वोत्साहेन हेषाशब्दं कुर्वन्तमुत्तमाश्वं सादिनोऽभ्यासाय प्रेरयन्ति तद्वत् ॥ सोमवामिनश्चरु विधातुं प्रस्तौति—"इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ्व्यार्च्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निरवपत् तेनैवास्मिन्निन्द्रियं सोमपीथमदधात्" (तैसं २ ३ २) इति । इन्द्रो विश्वरूपं त्वष्टुः पुत्रं हत्वा सोमपाने तेन त्वष्ट्रा स्वयमनाहूतः सन् कुपितो यज्ञस्य भ्रंशं कृत्वा प्रसह्य तदीयसोममपिबदिति पञ्चमप्रपाठके (तैसं ९ ५ २) प्रपञ्चयिष्यते । तदत्र सङ्गृह्योच्यते । अभीषहा बलात्कारेणेत्यर्थः । सोमं पीत्वा त्वष्टुर्भीतो नानादिगभिमुखो विशेषेण पलायनं कृतवान् । पलायमानश्च तदुपघातादिन्द्रियस्वास्थ्यकरेण १५ २० २५

३४ मै४– अपादानै । ३५ त१ मै४ ल– अक्तुभि । ३६ त१ मै ल– 'वा' नास्ति । ३७ मै४– स्तूयमाना । ३८ ल– 'शब्दवन्त' नास्ति । ३९ त१ पर ल– °कपदाभिधायिनम् । ४० पर ल– वाजिनमिव । ४१ मै– अयज्ञानम्, त१ ल– 'अयज्ञार्हं' नास्ति । ४२–४२ मै४– प्रकर्षेण त्यजसि । ४३ मै४–स्तोतारस्त्वा° । ४४ त१– 'अस्मान्' नास्ति ।

७४ इ ने हो१–°विभक्तैर्° । ७५ आ क– 'त्वा' नास्ति । ७६ अ इ उ चो ना पा हा– त्वष्ट्र य । ७७ इ– तदीय सोम°, आ इ पा– 'तदीय°' नास्ति । ७८ ■ उ पा– °स्वास्थ्यकारेण । ३०

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यच्छ ॥

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हर्यश्वेति हरि अश्व । पीत ।
अयम् । यः । सोमः । न्यधायीति नि-अधायि । अस्मे इति ।
५ तस्मै । इन्द्रम् । प्रतिरमिति प्र तिरम् । एमि । अच्छ ॥

"एतामेव निर्वपेद्धिरण्य विरवा" ( तैस २ ३ २ ) [45]इत्यस्या अपि[45] याज्यानुवाक्या भवन्ति "एतामेव निर्वपेद्यस्य हिरण्य नश्येत्" ( तैस २ ३ २ ) इत्यस्या अप्येता एव ॥

"य सोमवामी स्यात् तस्मा एत[46] सोमेन्द्र[47] श्यामाक चरु निर्वपेत्" ( तैस २ ३ २ ) "इत्ये तस्या पुरोनुवाक्या–'ऋदूदरेण इति त्रिष्टुप् ॥ ऋदूदरेण मृदुदरेण यस्मिन्नन्न प्रविष्टे अपान्ते उदरस्य
१० मृदुत्व भवति तादृशेन । छान्दसो वर्णलोप , उत्तरपदप्रकृतिस्वरत्व च । [47]सख्या समानस्थानेन[47] माममुञ्चता सोमेन रसात्मना सचेय सगसीय । पुनश्च विशेष्यते– हे हर्यश्व इन्द्र, अय सोम पीत[48] न रिष्येत् नोद्यात् नो हिंस्यात् । अपि चास्माक य अय सोम न्यधायि उदरे निधीयते तस्मै [49]तदर्थं तत्प्रदानार्थम्[49] इन्द्र प्रतिर प्रवर्तयितार अच्छ एमि आभिमुख्येन भजेय ॥

१५ सोमपानेन व्यृद्धोऽभूत् तदानीं [79]स इन्द्र यत्[80] सोमरसस्वरूपमूर्ध्वं मुखेन[80] वमन कृतवान्, तन्भूमौ पतितया श्यामाकरूपेण निष्पन्नम् । तत स इन्द्र [81]प्रजापत्युपदेशेन सोमेन्द्रचरु कृत्वा स्वोदर एव [82]जरणेनेन्द्रियप्रद सोमपान प्राप्तवान् ॥ अथ विधत्ते– 'वि वा एष इन्द्रियेण सोमपीथेनर्ध्यते य सोम वमिति ॥ सोमवामी स्यात् तस्मा एत[83] सोमेन्द्र[84] श्यामाक चरु निर्वपेत् सोम चैवेन्द्र च स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं[85] सोमपीथ धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते" ( तैस २ ३ २ ) इति ।
२० प्रात यजनादिप्रयोगे यो यजमान [85]पीत सोम [85]वमिति [85] स एष सोमस्य [86]वमनादिन्द्रियसामर्थ्यप्रदेन[86] सोमपानेन व्यृद्धो भवति । तादृशसोमवामिनो यजमानस्याय चरु ॥ द्वौ देवौ द्रव्य च प्रशसति–" यत् सौम्यो भवति सोमपीथमेवाव रुन्द्धे यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्द्धे श्यामाको भवत्येष वाव स सोम साक्षादेव सोमपीथमव रुन्द्धे" ( तैस २ २ ३ ) इति ॥

ऋदूदरेणेति ॥ अत्र पुरोनुवाक्यामाह– ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीत ।
२५ अयं य सोमो न्यधाय्यस्मे तस्मा इन्द्र प्रतिरमेम्यच्छ ' इति । हे हर्यश्व इन्द्र, य सोम पीत मा न

४५-४५. मै४– इत्येतस्या एव, त१ ए– एतस्या एव । ४६ तै१– अन्या । ४७-४७ ह– गमो समानस्थानेन । ४८ प२– मया पीत । ४९-४९ मै४– तदवस्थानार्थम् ।

७९. आ ग१– '■ ' नास्ति । ८०-८०. इ.क ना हा हो१– °स्वरूपमूर्ध्वमुखेन, इ ने स्वरूपम् ऊर्ध्वमुखम् । ८१ क– प्रजापत्युपदेशेन । ८२. इ ने हो१– पूरणेन° । ८३. ने– भक्षितम् । ८४ इ हो
३० ना ग१ वमति । ८५-८५. ने– स सोमवामी स्यात् जरणादिन्द्रियसामर्थ्यान् प्रसादेन । ८६. इ ग१– हरणादि°, हो१– भक्षणादि° ।

आपान्तमन्युस्तृपलप्रभर्मा
धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि
नार्वागिन्द्रं प्रतिमानानि देभुः ॥

आपान्तमन्युरित्यापान्त-मन्युः । तृपलप्रभर्मेति तृपल-प्रभर्मा । ५
धुनिः । शिमीवान् । शरुमानिति शरु-मान् । ऋजीषी ।
सोमः । विश्वानि । अतसा । वनानि ।
न । अर्वाक् । इन्द्रम् । प्रतिमानानीति प्रति-मानानि । देभुः ॥

तत्रैव याज्या– ' आपान्तमन्यु ' इति त्रिष्टुप् ॥ द्वावपि सोमेन्द्रौ प्राधान्येन स्तूयेते । [४]आपान्तमन्युः सर्वतोऽपगतमन्युः । अम गत्यादिषु, निष्ठायां " रुष्यमत्वर° " ( पा ७ २ २८ ) १० इतीडभावः, " गतिरनन्तरः " ( पा ६ २ ४९ ) इति गते प्रकृतिस्वरत्वम् । यद्वा– मन्युर्दीप्तिः, आपान्तमन्युः आपतितदीप्तिः । पण व्यवहारे स्तुतौ च, पन च, इत्यस्य निष्ठायां छान्दस इड-भावः । [५]तृपलप्रभर्मा, त्रयाणामुपलानां समाहारस्तृपलं, त्र्युपलमिति वक्तव्ये पूर्वपदस्य [५०]सम्प्रसारणे

[१]रिष्येत् यमनेन मा न हिंस्यात् तादृशेन [२]सख्या सन्निवद्धिसकारिणा सोमेन [३]सचेय सक्तो भूयासम् । कीदृशेन सोमेन ? [४]ऋदूदरेण । अत्र मकारो लुप्तः । [८७]वमनाभावान्मृदुरय स्वास्थ्यमापन्नमुदरं यस्य सोमस्य १५ स एव ऋदूदरः [८७] । स [५]अयं [६]सोमः [७]अस्मे [८८]अस्मदीयोदरे [९]न्यधायि निहितः । [१]तस्मै सवयं सोमस्य [८९]जरणार्थं [२]प्रतिर प्रकर्षेण [९०]वमनापदः तारयितारम् [९०] [३]इन्द्रम् [४]अच्छ [५]एमि आभिमुख्येन प्राप्नोमि भजामीत्यर्थः ।

आपान्तमन्युरिति ॥ तत्रैव याज्यामाह– ' आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी । सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ' इति । अत्र पादत्रयेण सोमस्य २० स्तुतिश्चतुर्थपादेनेन्द्रस्य । अन्ततोऽपगत आपान्तः सर्वात्मना विनष्टो मन्युः कोपो यस्य सोऽयम् [१]आपान्तमन्युः । बहुभिर्ग्रावभिरभिपूयमाणः [९१]अपि न क्रुध्यतीत्यर्थः । [२]त्रिषु सवनेष्वभिषवार्थमासादिता

५० त१ ल– संप्रसारणम् ।

८७–८७ ड–वमनाभावान्न मृदुत्वं स्वास्थ्यमापन्नमस्मदुदरं , ने–वमनादिनाभावात् मृदु तर्हि स्वास्थ्यमापन्नमस्मदुदरं यस्य सोमस्य एवम् ऋदूदरः , शृ–°मापन्नम् अस्मदुदरं यस्य सोमस्य स एव ऋदूदरः , २५ हो१–वमनाभावात् न मृदु स्वास्थ्यमापन्नमस्मदुदरं यस्य सोमस्य स एव मृदूदरः । ८८ अ इ उ क ने पा हो१–मदीयोदरे°, श्रो ना ह्रा–अस्मदीये उदरे । ८९ ने– भक्षणार्थं, ड–क्षरणार्थम् । ९०–९० ने– वमनाप नोदनार्थं धारयितारम्, हो१– वमनापराध वारयितारम्, ड– वमनापदार्थं धारयितारम् । ९१ हो१– ' अपि ' नास्ति ।

उत्तरपदस्यादिलोप , " परादिश्छन्दसि° " (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। त्रिभिरुपले प्राग्भि प्रभर्मा प्रहारोऽभिषवो यस्य स तथोक्त । हरतेरौणादिको मनिन्। " हृग्रहोर्भ° " (पा ८ २ ३२ वा १ ) इति भत्वम्। धुनि कम्पनशील । धूञ् कम्पने, औणादिको निप्रत्यय । यद्वा– " °धूञ्प्रीणोर्नुक्° " ( पा ७ ३ ३७ वा १ ) इति नुकि धूनयतेरौणादिक
५ ( उ ५५७ ) इन्प्रत्यय , धातोश्च ह्रस्वत्वम्। धूनयिताऽह्वाना धुनि । शिमीवान् कर्मवान् मानाभिषवपवनग्रहणादिसततबहुकर्मा । शरुमान् , शरण शरु हिंसा अभिषवपीडा, तद्वान्। ऋजीषी नि सारीकृत । एव ग्रावप्रहारादिसद्भावेऽपि य सोम अपगतमन्यु आगतदीप्तिरिव भाति, स एवास्माक विश्वानि अतसा अतसानि अविच्छिन्नानि । अततेरौणादिकोऽसच् (उ ३९७)। वनानि वननीयानि धनानि । यद्वा– अतसानि शुष्काणि, वनानि सरसानि, तानि विश्वा यपि
१० सोम एव, सर्वौषधिराजत्वात् सोमस्य । एव वर्णनीयवस्तुसाम्यादिना सोम स्तुत । इदानीमिन्द्र स्तुतिरूपमे [ निरुपमे ] वेति दर्शयति– अर्वाक अर्वाचीनानि प्रतिमानानि उपमानानि इन्द्र न एव देभु दम्नुवन्ति न बाधन्ते । समत्वेन स्पर्धनमेव वस्तु तैरिन्द्रस्य बाध । एव गुणकानिमौ सोमेन्द्रौ व्यपगतवा तदोष मा कुरुतमिति । " श्रन्थिग्रन्थिदम्भिस्वञ्जीना च " (का पा १ २ ६ वा) इति लिट कित्त्वम्। शरुमानित्यस्य पूर्ववद्रुत्वानुनासिकौ (पा ८ ३ १, ९)॥

१५ उपलास्तृपलास्तेषा प्रभर्म प्रहारो यस्य सोमस्य सोऽय तृपलप्रभर्मा। धुनि कम्पमान प्रहारैरितस्तत कम्पते। शिमीशब्द कर्मवाची। शिम्यो बहुविधानि अभिषवशोधनग्रहणादीनि कर्माण्यस्य सन्तीति शिमीवान्। शरवोऽभिषवकाले शीर्णावयवा , ते च बहवो यस्यासौ शरुमान्, रसनिष्पीडनेन यदवशिष्ट नीरस सदृजीष तदस्यास्तीति ऋजीषी। ईदृश सोम विश्वानि धनानि वर्धयतीति शेष । " सोमो वा ओषधीनाम् राजा " (द्र तैस २ ४ ५, १ ६ १) " सोमो वनस्पतीनाम् " (तैस १ ८ १०), " वनस्पतिगते
२० सोमे " इत्यादि श्रुतिस्मृतिभ्या चान्द्रविमर्शनस्याभिवृद्धिदर्शनाच्च वर्धयितृत्वम्। कीदृशानि धनानि ? अतसा सर्वत्र सततानीत्यर्थ । अर्वाक् अर्वाचीनानि प्रतिमानानि लौकिकोपमानानि इन्द्र न दभु न हिंसन्ति। नीचैस्तमानि स्वसाम्यापादनम् एवोत्तमस्य हिंसा, ता कर्तुमुपमानानि न प्रभवन्त इत्यर्थ ॥

५१ तै१ मै ल– 'स ' नास्ति। ५२ मै४– वर्णनीय°। ५३ तै१ मै ल– 'उपमानानि'
२५ नास्ति। ५४ त१– °वान्तरोषम्, ल– °वान्तरोषम्।

९२ ओ ट ग ने हा हो१– 'सोमस्य ' नास्ति। ९३ ने– प्रहारा१ तत । ९४ ने गृ हो१– °मनर्ग ग्रार्द°, ट– चान्द्रर्श° मभिवर्धनस्पतिवार्द°। ९५ अ उ पा– संतता नीत्यर्थ , ह– संभृतानीत्यर्थ । ९६ ट ने गृ– 'इन्द्र ' नास्ति। ९७ ने गृ– नेव। ९८ अ उ क पा– एवोत्तमास्य, इ– एवोत्तम°।

प्र ( ३ )सुवानः सोमं ऋतुयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन्।
वृषा यन्ताऽसि शवसस्तुरस्यान्तर्यच्छ गृणते धर्त्रं दृंह ॥

प्रेति ( ३ ) । सुवान । सोमं । ऋतयुरित्यृत यु । चिकेत । इन्द्राय । ब्रह्म । जमदग्नि । अर्चन् ।
वृषा । यन्ता । असि । शवस । तुरस्य । अन्त । यच्छ । गृणते । धर्त्रम् । दृंह ॥

अथ सोमवामी ह या अन्यो भवत्यन्य सोमातिपवित स य सोमातिपवित स्यात् ५
"तस्मा एत सोमेन्द्र श्यामाक चरु निर्वपेत्" (तैस २ ३ २) "इत्यस्यैषा पुरोनुवाक्या–'प्र सुवान'
इति त्रिष्टुप् ॥ सुवान अभिषुण्वान । विकरणस्य लुक्, लिटि वा कानचि (पा ३ २ १०६)
द्विर्वचनाभाव, अभ्यासलोपो वा । सोम इति व्यत्ययेन प्रथमा, सोम सुन्वानो यजमान ।
"सुपा सुलुक्" (पा ७ १ ३९) इति वा स्वादेश । सोमायतेर्वा पचाद्यच् (पा ३ १ १३४)।
वृषादित्वादाद्युदात्तत्वम् (पा ६ १ २०३)। ऋतयु ऋत सत्य यज्ञ वा आगन इच्छन्। क्यचि १०
"न च्छन्दस्यपुत्रस्य" (पा ७ ४ ३५) इतीत्वाभाव, "क्याच्छन्दसि" (पा ३ २ १७०)
इत्युप्रत्यय । प्र चिकेत प्रकर्षेण जानाति । कित ज्ञाने । इन्द्राय इन्द्रार्थं ब्रह्म परिवृढम् एतदन्न
हवीरूप प्र चिकेत जमदग्नि । जमु अदने । नित्य जमन् अदन् हवींषि भुञ्जान, एव यस्याग्नि
स जमदग्नि । उपमानपूर्वपद वा, जमदग्नितुल्य । अर्चन् पूजयन् इन्द्रमेव बहु मन्यमान ।
यद्वा– इन्द्रमर्चन् । कर्मणि चतुर्थी । यत् सोम सुनुते, यच्चेयक्षते यश्च हवि प्रकर्षेण जानाति, १५
यच्चास्याग्नि सदा हविर्भुञ्जानो भवति तत् सर्वमिन्द्रमर्चयितु करोति यजमान । हेतौ शतृप्रत्यय
(पा ३ २ १२६)। अर्च पूजायामुदात्तेत् भौवादिक । तेनाण्य तत्वाद्यजमानेऽपि परस्मैपदमेव ।
यस्मादन तस्मात् हे इन्द्र, त्व वृषा वर्षिता कामाना यन्ता यमयिता यथायमतिसारी

प्रेति ॥ तत्रैव विकल्पिता पुरोनुवाक्यामाह–'प्र सुवान सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म २०
जमदग्निरर्चन् । वृषा यन्ताऽसि शवसस्तुरस्यान्तर्यच्छ गृणते धर्त्रं दृंह' इति । 'ऋतयु' यज्ञमिच्छुर्यजमान
जमदग्निरर्चन् । वृषा यन्ताऽसि शवसस्तुरस्यान्तर्यच्छ गृणत धर्त्रं दृंह' इति । प्र चिकेत प्रकर्षेण जानाति ।
सोम सुवान सोममभिषुण्वन् इन्द्राय ब्रह्म इन्द्रार्थं बृहत् सोमपान प्र चिकेत प्रकर्षेण जानाति ।
कीदृशो यजमान ? जमदग्नि एतन्नामकमुनिसदृश । किं कुर्वन् ? अर्चन् स्तुतिभि पूजयन् । हे इन्द्र, त्व
वृषा फलस्य वर्षयिता यन्ता असि सोमस्य नियामकोऽसि । कीदृशस्य ? शवस बलवत, उदर
स्थापयितुमशक्यस्येत्यर्थ । तुरस्य वमनाय त्वरमाणस्य । अन्त यच्छ नियन्तृत्वादुदरमध्ये त सोम
जरयितु नियच्छ । गृणते त्वा स्तुवते यजमानाय धर्त्रं दृंह सोमस्य धारक वायुं दृढीकुरु ॥ २५

५५ तै१– इति तस्या एषा । ५६ प२– सनियतः । ५७ तै१ ल– चिकित । ५८ त१ मै–
जमदग्निसूल्यर्थं (?)। ५९ त१– यथाति° ।

९९ इ ने हो१– 'सोम' नास्ति । १०० ने गृ– 'जरयितुम्' नास्ति ।

सबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृतः सपर्यन् ।
अर्को वा यत् तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम् ॥

सबाध इति स-बाधः । ते । मदम् । च । शुष्मयम् । च ।
ब्रह्म । नरः । ब्रह्मकृत इति ब्रह्म-कृतः । सपर्यन् ।
५ अर्क । वा । यत । तुरते । सोमचक्षा इति सोम चक्षा ।
तत्र । इत् । इन्द्र । दधते । पृत्स्विति पृत् सु । तुर्याम् ॥

न भवति तथाऽवस्थापयिता त्वम् [v]असि । कस्य ? [v]शवस बलवत । मत्वर्थीयो लुप्यते । [v]तुरस्य त्वरमाणस्य अधो नि सरत । तुर त्वरासम्भ्रमयो· इत्यस्मात् इगुपदलक्षण क, (पा ३ १·१३५ )। तस्मात् सोममतिसरन्तम् [v]अन्त [v]यच्छ [60]अन्तरेव उदर एव[60] नियमय
१० यथाऽतो नातिसरेत् । [v]गृणते त्वामेव स्तुवानाय यजमानाय । “ शतुरनुम ° ” (पा ६ १ १७३) इति चतुर्थ्या आद्युदात्तत्वम् । तदर्थं किं कर्तव्यमिति चेत् श्रूयता—[v]धर्त्रम् अपि तस्य [61]सोमस्य धारणसमर्थं वायु [v]दृंह [62]दृढ कुरु[62] ॥

तत्रेव याज्या—‘सबाध ’ इति त्रिष्टुप् ॥ बाधन [63]वाक्कर्मनिमित्त बुद्धेर्व्यसन, तत्सहिता [v]सबाध ऋत्विज उच्यन्ते । छान्दस समासान्तोदात्तत्वम् । यद्वा - सह बाध्यते इति सबाध ।
१५ कृदुत्तरपदप्रकृतिस्वरत्वम् । हे सोम, [v]ते तव [v]मद हर्षं देवाना त्वत्कृत हर्षं [64][v]शुष्मय [v]च [v]ब्रह्म, शुष्म बल तदिच्छतीति सर्वस्यात्मनो वेति । क्यचि, पूर्ववदीत्वाभावे पचाद्यच् (पा ३.१.१३४)। धा[ या धा ]तोर्वा “ आतोऽनुपसर्गे क. ” (पा ३ २.३ )। ईदृश ब्रह्म अन्न च देवाना त्वत्कृत त्वत्परिमाणरूप [v]नर मनुष्या ऋत्विज. [v]ब्रह्मकृत ब्रह्मणे हविष्कर्तारः ब्रह्मण· परिवृढस्य या तव कर्तार अभिषव कुर्वन्त. ते [v]सपर्यन् त्वा पूजयति । छान्दसे लङि अडभाव. । लेटि

२० सबाध इति ॥ तत्रैव विकल्पिता याज्यामाह—‘ सबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृत सपर्यन् । अर्को वा यत् तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम् ’ इति । हे सोम, [v]नर मनुष्या ऋत्विज· [v]ते [101]तुभ्यं [v]ब्रह्म श्यामाकचरुरूप परिवृढं हवि [v]सपर्यन् पूजयन्ति समर्पयन्ति । कीदृशस्य [102]ते ? [v]सबाध । चकारान्तो बाध्-शब्द [103]अभिषवकृतमुपद्रव ब्रूते, तेनोपद्रवेण सह वर्तत इति ‘ सबाध् ’ इति प्रातिपदिकं, तस्य षष्ठी सबाध इति । अभिषवपीडितस्य तवेत्यर्थ । कीदृश ब्रह्म ? [v]मदं [v]च हर्षकरमपि

२५ ६०–६० मै– अन्तरेवम् । ६१. ल–कम° । ६२. पैर–दृढीकुरु । ६३. मै४–वाधाकर्म° । ६४ तै१ म–शुष्मियम् ।

१०१. अ आ उ क ख घ ग ड़ हो१– ‘ तुभ्यं ’ नास्ति । १०२. क ख ने– ‘ ते ’ नास्ति । १०३. हो१– अभिषवकृतमुप° ।

या "इतश्च लोप °" ( पा ३ ४.९७ ) । सम्यक् सपादनमेव पूजा, समनात् । अर्क वा अन्नमिव दृष्टपरिणाम यत् तुरते त्वरते अपाग तुमु सहते किमिद तत्र युज्यते, योऽसि सोमचक्षा सोमनाचक । चष्ट इति चक्ष । कर्तर्यसुन्, "बहुल सञ्ज्ञाच्छन्दसो °" (द्र काशिका २ ४.५४) इति ख्याञादेशाभाव । नाचक पदमुच्यते । सोमशब्दश्चक्षो यस्य स तथोक्त । यद्वा– सोमशब्देन ख्यातव्य सोमचक्षा । "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्व च" ( द्र उ ६७६ ) इत्यसुन् । यद्वा–प्रकाशन चक्ष सोम इति प्रकाशो यस्य तादृश त्वाम् । यद्वा–अर्क सविता, अर्क स्वयमेव त्व सोमचक्षा इदानीं सोमशब्दाभिधेय । वाशब्दोऽवधारणे । यद्वा अर्क एव सोम त्व ईदृशो महानुभावो भवान् । यद्वा त्वन्निमित्त हर्ष देवाना कर्तु सङ्केशात् ऋत्विज परिवृढाना हविषा कर्तार त्वा सपर्यन्ति, एवमर्क अर्चनीय एव सन् सोमस्यापि प्रकाशयिता भवान् त्वरते । तुर त्वरणसम्भ्रमयो । तत्र इन्द्र एव तुरते इन्द्र एव तथा करोति । हेतुमाह– यत् यस्मात् स एव दधते धारयति उत्पादयति । लेटयाडागम ( पा ३ ४ ९४ ) । किम् ? पृत्सु पृतनासु सग्रामेषु तुर्यं त्वरित यानम् । क्विब्निचो । यद्वा– [ तुरतेस्तूर्यतेर्वा ? ] क्विब तात् ण्यचि "अ प्रत्ययात्" ( पा ३ ३ १०२ ) इत्यकारप्रत्यय । यद्वा– पृतनासु कश्चित् पुरुष दुर्बल तूर्णं यातार करोति तस्मात् स एवात्र पीताना सोमाना परस्परसग्रामस्थानीये भवन्त तुर्या त्वर्या त्वरिततरमधोयान्त करोति । यद्वा तूर्णं धावयितार वायु करोति, तस्मात् स एव भवन्तम् इन्द्र नियमयत्विति । "°मासपृतनासानूनाम् ' (द्र पा ६ १ ६३ वा १) इति पृतनाशब्दस्य पृदाव ॥

धन्मय च बलप्रापकमपि । कीदृशा नर ? अलङ्कृत दृष्टिरूप परिवृढ कर्म कुर्वन्तीति यज्ञकृत । सोमचक्षा अर्क वा सोमशब्देनाभिधीयमानस्त्व सूर्य एव । अतस्तेजस्वित्वान्नास्ति तव कश्चिद उपद्रव इत्यभिप्राय । यदि अत्रासदुदर पीतो रस तुरते वमनाय त्वरता करोति, तत्र इत् तत्रैवोद्देश्यम् इन्द्र पृत्सु सग्रामेष्विव तुर्या दधते तूर्णं यावार करोत, वमनाय सभ्रम कुर्वत सोमस्य निवारक वायु शीघ्र तत्र प्रेरयतीत्यर्थ ॥

६५ त१ ल– पुन्नमिव । ६६ ल – दृष्टपरिणाम, पर– दुष्परिणाम, मै४–दुष्परिणामम् । ६७ ल–योगमु° । ६८ त१ मे ल– योऽस्य । ६९–६९ मै४–चक्षा इति चमे । ७० मै४– त्व सोमचक्षाः सोमशब्दवाच्य सोम एव वा त्व । ७१ मै४– वा । ७२ त१ मै–यथा । ७३ त१ ल–पन् । ७४ मै४– सोमयागम्यावि । ७५–७५ मै४–यद्यस्मादेव दधते धारयन्ति उत्पादयन्ति । ७६–७६ पर– कम्बिचो ( ? ), मै–क्षब्दिचो । ७७ मै [ टिप्पणी ]–दातारम् । ७८ मै४–परस्परसघर्षे सग्रामस्थानीये । ७९ त१ पर,ल– योद्धयितारम्, मै४– धापयितारम् । ८०–८० मै४–अन्तर्निगमयत्विति ।

१०४–१०४ क ने हो१–अर्को वा मोमचक्ष अर्क, ड–अथवा सोमचक्षा अर्क । १०५–१०५ अ उ जो ना पा हा–यथाऽसदुदरे, ने–यत्रात्र्यसदुदरे । १०६ ह शृं–त्वरते । १०७–१०७ इ हो१–'तत्रेत्' नास्ति ।

वर्षट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हुव्यम् ( ४ ) ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

वर्षट् । ते । विष्णो । आस । एति । कृणोमि ।
तत् । मे । जुषस्व । शिपिविष्टेति शिपि-विष्ट । हुव्यम् ( ४ ) ।
५ वर्धन्तु । त्वा । सुष्टुतय इति सु-स्तुतयः । गिरः । मे ।
यूयम् । पात । स्वस्तिभिरिति स्वस्ति-भिः । सदा । नः ॥

[ [८१]अभ्युदयेष्टया (तैस२·५·५) तृतीयस्य हविषः पुरोनुवाक्या 'वषट्' इति त्रिष्टुप् । 'प्र तत् ते' इत्युत्तरा याज्या, सा च तदुत्तरया 'किमित् ते' इत्यनया ऋचा विकल्प्यते[८१] ] । हे [८२]विष्णो, व्यापनशील [८२]ते तव । आङ् मर्यादायाम् । [८२]वषट् [८२]कृणोमि करोमि ददामि । किम्? [८२]आसः
१० अस्यते क्षिप्यत इत्यासः, अग्नौ क्षिप्यमाण हविरुच्यते । कर्मणि घञ्, वचनव्यत्यय, "कर्षात्वत°" ( पा ६.१ १५९ ) इत्यन्तोदात्तत्वम् । यद्वा– असुनि, ( द. उ ६३८ ) [८२]सवर्णव्यत्यय । हे [८२]शिपिविष्ट, [८२]तत् [८२]मे [८२]हव्य हवि [८२]जुषस्व सेवस्व । शिपयो रश्मय, तैर्वेष्टितः प्रविष्टो वा । "पृषोदरादित्वात्" (पा ६ ३ १०९) अभीष्ट रूप सिद्धम् । कि च–मम [८२]सुष्टुतयः शोभनस्तुति धारणभूता [८२]गिर त्वा [८२]वर्धन्तु वर्धयन्तु स्तुवन्त्विति यावत् । स्तुत्या हि स्तोतव्यो वर्धते । "बहुल
१५ सज्ञाछन्दसोः" (द.उ १९०) इति णिलुक्, "छन्दस्युभयथा" (पा ३·४·११७) इति या शप आर्धधातुकत्वम् । [८२]यूय च मया स्तुता [८३]न अस्मान् [८२]स्वस्तिभिः अविनाशैः [८२]पात रक्षत [८२]सदा सर्वदा । पूजार्थमेकस्मिन् बहुवचनम् ॥

यद्वदिति ॥ अथ पञ्चमप्रपाठके विहितायामभ्युदयेष्टौ–'विष्णवे शिपिविष्टाय शृते चरुम्' ( तैस २·५·५ ) इत्युक्तं यत् तृतीयं हविस्तत्रानन्तरभावि मन्त्रद्वयमुत्पन्नीयम् । तस्मिन्न् प्रथमे
२० पुरोनुवाक्यां दर्शयति–' वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ' इति । अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया [१०८]विधिना वा वेदेन इति 'आस यजमान. । तादृशोऽहं 'ते तव 'आ समन्तात् 'वषट् 'कृणोमि हविर्दानं करोमि । शिपिषु पशुषु विष्ट प्रविष्टो यज्ञ. शिपिविष्टः पशुप्राप्त्यै यज्ञ इत्यर्थ. । "यज्ञो वै विष्णुः । पशवः शिपि" ( तैस २·५·५ ) इति श्रुते । हे 'शिपिविष्ट यज्ञात्मक 'विष्णो, 'मे मदीयं 'तत् हव्यं 'जुषस्व ।
२५ 'सुष्टुतय शोभनस्तुतिरूपा 'मे 'गिर. त्वां 'वर्धन्तु वृद्धिं प्रापयन्तु । एकस्मिन्नपि विष्णौ यूयमिति पूजार्थं बहुवचनम् । पूज्या 'यूयं 'स्वस्तिभिः श्रेयोभि. 'न अस्मान् 'सदा 'पात रक्षत ॥

८१–८१. ( अयमत्र तैत्तिरीयः पाठः । ), तै– न्यादिरोत्तं पुरोनुवाक्याविकल्पेन उत्तरत्र [ यम... उपाविशन् ] पर्यन्ते, पै.मै.– अभ्युदयेष्ट्यां पुरोनुवाक्या विकल्पेन उत्तरत्र पठति । तै१,२– अन्य, तैत्तं पुरोनुवाक्याविकल्पेन उत्तरत्र पठति । ८२. मै१–नास्ति । ८३. तै१–'नः' नास्ति ।

३० १०८. ने वे१–विधिना ।

प्र तत् ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके॥

प्रेति। तत्। ते। अद्य। शिपिविष्टेति शिपि विष्ट। नाम। अर्यः। शंसामि। वयुनानि। विद्वान्।
तम्। त्वा। गृणामि। तवसम्। अतवीयान्। क्षयन्तम्। अस्य। रजसः। पराके॥

'प्र तत् ते' इति त्रिष्टुप्॥ हे शिपिविष्ट, ते तव तत् नाम शिपिविष्टेत्येव रूपम् अद्य ५
अस्मिन् कर्मणि प्र शंसामि। प्रशस्तगुणाभिधाय्येवेदं नाम न तु निन्दितं मन्तव्यम्। अत्र
त्वमिति न वक्तव्यमित्याह– 'अर्यः' अरणीयोऽहम्। "अर्यः स्वामिवैश्ययोः" (पा ३ १ १०३)
इति। कोऽभिप्रायः? एषोऽभिप्रायः। केचिदाहुः–शेप इव निर्वेष्टित सयतरश्मिः शिपिविष्ट इति।
अन्ये तु ब्रुवते–निर्विष्टशेपः शिपिविष्ट इति। अपरे त्वाचक्षते–निवृत्तरश्मिः शिपिविष्ट इति। नैतेषु
त्रिष्वपि पक्षेषु अनेन पदेन कश्चिद्गुणोऽभिधीयते। अपि तु निन्दैव। तत्रानेन पदेन निर्गोपादि १०
क्रियमाणमुपालम्भमस्यानर्हेत्। अत इमं दोषमपनेतुमिदमुक्तमिति। तत्कथमिति चेत् उच्यते–नात्र
शेपशब्दोऽस्ति, न च केवलोऽपि विशिर्निरुपसृष्टस्यार्थमभिधातुमीष्टे। तस्मात् शिपयो रश्मयः,
श्यते शिपयः लक्ष्यात्, तेषु प्रविष्टः शिपिविष्ट इति प्रशंसापरमेतत्। अतोऽहमप्येतत् प्रशं
सामीति। अतवीयान् तन्नामानं तवसं तपस्विनं महान्तम्। 'तु' इति वृद्धिकर्मा। असुन्नतात्
उत्पन्नो मत्वर्थीयो लुप्यते। अत एव प्रत्ययान्तरसंक्रान्त्या नब्विषयत्वाभावादाद्युदात्तत्वाभावः। १५
ईदृशमहं गृणामि स्तौमि। अतवीयान्, अतिशयेन तपस्वी तवीयान्, ततोऽन्योऽतवीयान्।
यद्यप्यहं निजमहिम्ना तवीयान्, तथाऽपि त्वदपेक्षया अतवीयान्। तादृशोऽपि त्वत्प्रसादेन त्वा
स्तौमीति। "विन्मतोर्लुक्" (पा ५ ३ ६५) तपस्विशब्दादीयसुन्प्रत्ययः। अत एवातिशय्य-

प्रेति॥ तत्रैव याज्यामाह– 'प्र तत् ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्। तं
त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजसः पराके' इति। हे शिपिविष्ट, अद्य अस्मिन् यज्ञे ते २०
त्वदीयं तत् नाम अहं प्र शंसामि। कीदृगहम्? वयुनानि विद्वान्, ज्ञापकानि नामनिर्व
चनानि जानन्। "यज्ञो वै विष्णुः। पशवः शिपिः। यज्ञ एव पशुषु प्रति तिष्ठति" (तैस २ ५ ५) इति
श्रुत्या आम्नातं शिपिविष्टनाम्नो निर्वचनं जानामीत्यर्थः। अत एव अर्यः अहम् शब्दार्थाभिज्ञानात्
स्वामी, हे विष्णो, तं त्वा गृणामि तथाविधं त्वा स्तौमि। किंविधम्? अस्य रजसः पराके
क्षयन्तं दृश्यमानस्य मलिनलोकस्यात्यन्तं दूरे निवसन्तं तवसं तपस्विनम्। कीदृशोऽहम्? २५
अतवीयान् अतपस्वी। यद्यप्यहं तपोरहितस्तथाऽपि तपस्विनस्तव प्रसादात् स्तोतुं शक्त इत्यर्थः॥

८४–८४ त१ ख– नामेति मम मतिरिति। ८५ मै४– तवस्विनम्।

१०९–१०९ ने–नाम प्रशंसावहम्। ११० क ने श्र हो१–कीदृशोऽहम्। १११ ने हो१–ज्ञानानि।
११२ श्रु– व्याख्यातम्। ११३–११३ अ इ उ जो ना पा हा– त्वाम्। ११४ हा– दृश्यमानस्य।

किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ (५) ॥

---

किम् । इत् । ते । विष्णो इति । परिचक्ष्यमिति परि-चक्ष्यम् । भूत् ।
प्रेति । यत् । ववक्षे । शिपिविष्ट इति शिपि विष्टः । अस्मि ।
५ मा । वर्पः । अस्मत् । अपेति । गूहः । एतत् ।
यत् । अन्यरूप इत्यन्य-रूपः । समिथ इति सम्-इथे । बभूथ (५) ।

---

मानोऽपि तपस्वीति गम्यते । द्वयोर्हि तपस्विनोरन्यतरस्तपीयान् भवति । इदानीमुक्त शिपिविष्ट-पदार्थं समर्थयितुमाह— [v]अस्य [v]रजसः अन्तरिक्षस्य [v]पराके परागते दूरे प्रदेशे [v]क्षयन्त निवसन्त तथाऽपि सर्वलोकप्रकाशक त्वा स्तौमि, इद तव शिपिविष्टत्वम् । अतः [89]तत् प्रशंसा-
१० मीति । क्षि निवासगत्योः, व्यत्ययेन शप् ॥

'किमित् ते' इति त्रिष्टुबेव ॥ हे [v]विष्णो, [v]ते तव [v]किं [v]परिचक्ष्य गूहनीय वर्जनीयमेव [v]भूत् भवति ? नैवैतत् वर्जनीयम् । चक्षे छान्दसो यत्, "बहुलः सज्ञाच्छन्दसोः" (म. का. पा २. ४.५४) इति ख्याञादेशाभाव । भवतेर्लेटि शपो लुक् । "भूसुवोस्तिङि" (पा ७.३.८८) इति गुणाभावः । लङि वा छान्दसः शपो लुक् (पा २.४.७३) । लुङि वा "गातिस्था°" (पा २.४.७७) इति
१५ सिचो लुक् । "बहुल छन्दस्यमाङ्योगेऽपि" (पा ६.४.७५) इत्यडभावः । इदानीं तदेव परिसख्ये-यतया सभाव्यमान दर्शयति—हे शिपिविष्ट, [v]शिपिविष्टः [v]अस्मि इति [v]यत् [v]ववक्षे किमिद तदेव

---

निमिति ॥ तत्रैव विनियुक्तां याज्यामाह—'किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ' इति । हे [v]विष्णो, त्वं [v]यत् यस्मात् [115]धारणात् [v]शिपिविष्टः [v]अस्मि इति प्रकर्षेण [v]ववक्षे पुनः पुनः [116]वक्षि तस्मात् [v]ते तव मनसि
२० [v]किम् [v]इत् [v]परिचक्ष्यं [v]भूत् किमिदं गर्हणीयमभूत्, नैतद्गर्हणीयं, धृष्टैव तव लज्जेत्यभिप्रायः । यद्यप्येतन्नाम [117]रोगेऽप्यन्तरोगिण्युद्घाटितगुह्यत्वयि मूर्दः[117] प्रयुज्यते शिपिविष्टोऽयमिति, तथाप्यव-यवार्थस्य माहात्म्येन व्याख्यातत्वाद्यस्त्यत्र तव एव्यावारणम् । तस्मात् [v]एतत् [v]वर्पः वरिष्ठं नाम [v]अस्मत् [v]मा [v]अप [v]गूहः, अस्मास्वमे गूढं मा कुरु । [v]यत् यस्मात् त्वं गूहनायैव [v]समिथे युद्धे [118]वषट्शीर्षंशाभ्यां गूढः [v]अन्यरूपः [v]बभूथ बभूविथ, [119]तदन्यत्र यथा तथा वा भवतु, [120]तथाऽप्यस्मद्युद्धे प्रकाशमिदं मा
२५ गोपायितव्यः ।

---

८९. मै–'तत्' नास्ति ।

११५. ट–कारणात् । ११६. ट.ने.–पठिरवान् । ११७–११७. [ त्रुटीरतोऽयं पाठः ]; आ.डो. १] हा–°रन्तरोगिण्युत्तितगुह्यत्वयि (ति ! ) मूर्दः; पा– °रन्तरद्विगण्युत्पाटितगुह्यत्वयिमूढे, कडोर–°रन्तरोगिण्युद्घाटितगुह्यत्वयि (!) मूढे ! ११८. क.हा–°शीर्षशाभ्याम् । ११९. आ.क– तदन्यथा ।
३० १२०. ट– तथाऽप्यस्मद्युद्धो, ने डोर– तथाऽस्मद्युद्धो ।

परिचक्ष्यं भवति। नैतदेवम्। तस्मात् शिपिविष्टोऽस्मीति ब्रुवन्नेव विश्वव्यापी वर्तस्वेति। वर्तेर्व्यत्ययेन आत्मनेपदम्, "बहुलं छन्दसि" (पा २.४.७६) इति शपः श्लुः। इदानीं प्रशस्तगुणाभिधाय्येतन्नाम न परिसंख्येयम्, अपि तु लोके स्थापयितव्यमिति दर्शयितुमाह– [V]वर्पः वरितव्यमिदमुच्छ्रितं नाम [V]मा [V]अप [V]गूहः नेदं अस्माकं गूहनीयम्, अपि तु लोके श्लाघमानेन त्वया आघोषणीयमेव। वर्पं गतौ, असुन्प्रत्ययः। गूहतेश्छान्दसोऽड्प्रत्ययः। अथ यदि ब्रूयाः नापगूहामीति, मृषैतद्, यस्मात् त्वं ५ [V]समिथे संग्रामे उदयकाले रक्षोभिः सह तत्र यः समामः तत्र [V]अन्यरूपः [V]बभूथ भवसि, न मध्याह्न इव महातेजा भवसि। तन्नूनं लज्जया शत्रुजनसमवाये उदयकाले एतदात्मीयं रूपं छादयसीति संलक्ष्यते। तस्मान्नैवमिदं गूहनीयमिति। "बभूथाततन्थ[०]" (पा ७.२.६४) इतीडभावो निपात्यते। अन्य आहुः– उक्तं शिपिविष्टोऽस्मीति नेदं परिसंख्येयमिति। अथापि यद् त्वं लज्जयेथ समिथे संग्रामे उदयकाले अन्यरूपः भवसि, इदमेव वर्पः प्रशस्ततरं रूपं, [87]तस्मादेतस्माऽपगूहः १० सर्वत्रस्यास्त्वपि इदमेव रूपं तत्र भवतु इदमेव शोभनमिति। अत्र निरुक्तादिषु (निरुक्त ५.८) बहुधा व्याख्यानानि कृतानि, अत्र युक्तरूपमिदमस्माभिरुक्तम् ॥

पशुकामस्य त्रिहविष्कामिष्टिं विधत्ते– "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति वृद्धानिन्द्रः प्र यच्छति" (तैसं २.३.२) इति ॥ पञ्चद्रव्यसमष्टिरूपं तृतीयं हविर्विधत्ते– "दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ १५ रूपेणैव पशूनव रुन्धे" (तैसं २.२.२) इति। तत्र दधिघृतयोः पशुसंबन्धात् तत्साहचर्येण सर्वेषां पशुरूपत्वम् ॥ [121]अस्मिन् हविषि द्रव्यसंख्यां विविधद्रव्यत्वं च प्रशंसति– "पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः समृद्ध्यै" (तैसं २.३.२) इति। एकैकस्य द्रव्यस्य ग्रहणेन पञ्चगृहीतत्वं गोमहिषाश्वादिरूपेण पशूनां बहुरूपत्वम् ॥ हविषो विधाय देवतां विधत्ते– "प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्र जनयति" (तैसं २.३.२) इति ॥ [122]–'घृतं न पूतम्' २० 'उभे सुश्चन्द्र' इत्येते ऋचौ[122] विधत्ते– "आत्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे" (तैसं २.३.२) इति। [123]यस्मिन् कस्मिंश्चिद् द्रुमे समुत्पन्नस्य मधुनो दध्यादिवत् सर्वप्राणिसुलभत्वं नास्ति, आत्मनोऽपि हस्तपादादिवत् सर्वैः सुष्ठु विशेषो न भवति, तत्साम्यात् मधुनः पुरुषत्वं मधुहोमेन वह्नौ प्रक्षिप्तस्याऽऽत्मनः [124]पङ्क्तिच्छन्दसोः पाठेन मृत्योर्निष्क्रयो भवति ॥ २५

८७. तं१.मै.ले– °देतं मा°।

१२१. अ.इ.उ.को.ना.प.हा– तस्मिन्। १२२–१२२. को.ना.हा.– 'घृतं...ऋचौ' नास्ति। १२३. ह.ने–'यस्मिन्' नास्ति। १२४. ने– °च्छन्दसो; ह१– छन्दसाम्।

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम्। शिशीहि नः सूनुमतः ॥
दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाज॒ श्रुत्या अपा वृधि ।

अग्ने । दा । दाशुषे । रयिम् । वीरवन्तमिति वीर-वन्तम् । परीणसमिति परि-नसम् ।
शिशाहि । न । सूनुमत इति सूनु मत ॥
५ दा । न । अग्ने । शतिन । दा । सहस्रिण । दुर । न । वाजम् । श्रुत्यै । अपेति । वृधि ।

अथ "अग्नये दात्रे पुरोडाशमष्टाकपाल निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपाल पशुकाम " ( तैस २ ३ २ ) इत्यस्य प्राजापत्येन सह त्रिहविष आग्नेयस्य पुरोनुवाक्या– 'अग्ने दा ' इति गायत्री ॥ हे [v]अग्ने, [v]दाशुषे हवींषि दत्तवते यजमानाय [v]रयिं धनलक्षण [88] [v]दा देहि। लेटि शपो लुक्। रयिर्विशिष्यते– [v]वीरवन्त [88] पुत्रपौत्रादिमन्त तेषा भोगपर्याप्तम्,
१० [v]परीणस, नासिकया सर्वेऽवयवा लक्ष्यन्ते, परिगतसर्वावयवम्। छान्दसो नसादेश।
"उपसर्गाद्बहुलम्" ( पा ८ ४ २८ ) इति णत्वम्। "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम्। किं च– [v]न अस्माक अस्य यजमानस्य [v]सूनुमत त्वया दीयमानपुत्रपौत्रादिकस्य रयिं [v]शिशीहि तीक्ष्णीकुरु [89]उज्ज्वलीकुरु। यद्वा–नोऽस्मान् शिशीहि उज्ज्वलीकुरु। सूनुमत सुनु सोता सोमस्याभिषोता यजमान तत्सहितानस्मान् पुत्रादिसमृद्धान् कृत्वा अस्मान् ऋत्विग्यज
१५ मानान् सर्वानपि शिशीहि। श्यतेर्लोटि "बहुल छन्दसि" ( पा २ ४ ७६ ) इति शप श्लु। अभ्यासस्य चेत्त्वम्। "ई हल्यघो" ( पा ६ ४ ११३ ) इतीत्वम् ॥

[90]अथ तत्रैव याज्या–'दा न ' इति जगती ॥ हे [v]अग्ने, [v]दा देहि [v]न अस्मभ्यम्। किम्? [v]शतिन [v]सहस्रिण च पशून् [v]दा देहि। [v]दुर [v]न द्वाराणीव पशुप्राप्त्युपायानिव [v]वाजम्

अग्न इति॥ तत्र प्रथमहविष पुरोनुवाक्यामाह– 'अग्ने दा दाशुषे रयिं वीरवन्त परीणसम्।
२० शिशीहि न सूनुमत ' इति। हे [v]अग्ने, [v]दाशुषे हविर्दत्तवते यजमानाय [v]रयिं [v]दा धन देहि। [125]तथा [v]वीरवन्तं वीरं [125] भृत्यादिभिरुपेत पुत्र देहि। कीदृशम्? [v]परीणस परित शोभना नासिकाद्यवयवा यस्य त तथाविधम्। [v]सूनुमत [126]त्वया दीयमाने [126] पुत्रैर्युक्तान् [v]न अस्मान् [v]शिशीहि सर्वेषु कार्येषु तीक्ष्णीकुरु॥

८८–८८ मै४–देहि शपो लुक् पुत्रवत्त्वस्य। ८९ मै–उज्ज्वलितं कुरु। ९०. मै–'अथ' नास्ति।

२५ १२५–१२५. ड ने भृ हो१– तथा वीरं, ड१– तत्तथाविधे। १२६–१२६. अ उ ओ पा हा– त्वया दीप्यमाने, ड ने हो१– त्वदीयमाने ।

प्राची॑ द्यावा॑पृथि॒वी ब्रह्म॑णा कृधि॒ सुव॒र्ण शु॒क्रमु॒षसो॒ वि दि॑द्युतुः ॥

प्राची॒ इति॑। द्यावा॑पृथि॒वी इति॒ द्यावा॑-पृ॒थि॒वी। ब्रह्म॑णा। कृ॒धि॒।
सुवः॑। न। शु॒क्रम्। उ॒षसः॑। वीति॑। दि॒द्यु॒तुः॒ ॥

अन्नम् [v]अपावृधि अपावृणु [v]श्रुत्यै श्रवणार्थं, यथा वयं लोके जेतारः स्याम तदनुरूप [91]पशुप्राप्त्युपायभूतमन्नमाह पुरः [ मन्नमपावृणु ]। "बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक्। [5]
"श्रुशृणुपृकृवृभ्यः" (पा ६ ४ १०२) इति धिभावः। केचिदाहुः– दुरः द्वाराणि पशुप्राप्त्युपायानपावृधि, वाजमन्नं श्रुत्यै नापावृधि, अपि तु अश्रवणार्थम् अपावृधि, यथा अपावृते अन्ने पशुसाध्ये [92]श्रवणं न क्रियते, अविचार्यैवार्थिलमात्रेण पश्वादिकं दीयते तथा अपावृधीति। अथापरे ब्रुवते– वाजमन्नं पशुहेतुकं श्रुत्यै श्रवणायापावृधि श्रवणसामर्थ्यायाविष्कुरु, अन्नेन हि श्रवणसामर्थ्यमुपजायते, असति ह्यन्ने श्रवणसामर्थ्याभावात्। तस्माच्छ्रुत्या अपावृधि दुरो न [10]
श्रोत्रादीनि द्वाराणीव, [93]यथैतानि श्रवणार्थमपावृतानीति [93]। किं च [v]द्यावापृथिवी द्यावापृथिव्यौ [v]प्राची [94]प्राच्यौ अनुकूले [v]ब्रह्मणा परिवृढेन हविषा कर्मणा वा [v]कृधि [95]कुरु। पूर्ववच्छपो लुक्, धिभावश्च। यद्वा–ब्रह्मणा अन्नेन सदाऽस्माकं प्राची अनुगुणे द्यावापृथिव्यौ [96]कुरु। किं च–
[v]सुवः [v]न [97]सुवरिव आदित्य इव। साहितिकं णत्वं छान्दसम्। [v]शुक्रं पुत्रादिकम् [v]उषसः उदयात् [v]वि [v]दिद्युतुः विशेषेण [98]द्योतयन्ति। द्युतेरन्तर्भावितण्यर्थाच्छान्दसो लिट्। व्यत्ययेन [15]
परस्मैपदम्। "द्युतिस्वाप्योः०" (पा ७ ४ ६७) इत्यभ्यासस्य सम्प्रसारणम्॥

दा इति॥ तत्रैव याज्यामाह– 'दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपावृधि। प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतुः' इति। हे [v]अग्ने, [v]नः [127]अस्मभ्यं [v]शतिनः [v]दाः शतसंख्याकान् पशून् देहि तथा सहस्रसंख्याकान् देहि। [v]दुरः [v]न द्वाराणीव। पशुकामेष्टौ हि–"वायव्यं श्वेतमा लभेत" (तैसं २ १ १), "सरस्वत्यात्मभाग्यां स्यात्" (तैसं २ १ ९) [20]
इत्यादीनि बहूनि कर्माणि सुखेनानुष्ठातुं शक्यन्ते। अतोऽनुष्ठानस्य द्वारभूतान् पशून् देहि। तत्र पशुप्राप्त्यर्थं [v]वाजम् अन्नं [v]श्रुत्यै प्रख्यातयो नर्ता[?]दिजनप्रीतये [v]अपावृधि विवृतमपनीय वर्धय। प्रकर्षेणाऽऽनुकूल्यमञ्चतो गच्छत इति प्राच्यौ। [v]ब्रह्मणा मन्त्रपुरःसरेण कर्मणा तुष्टे [128]स्वर्गे द्यावापृथिव्यौ प्राच्यौ कुरु। [v]उषसः उषःकाले [v]सुवः [v]न स्वर्ग इवासद्गृहे [v]शुक्रं प्रकाशं [v]वि [v]दिद्युतुः विशेषेण द्योतितं कुर्वन्तु पशूनत्र कुर्वन्त्वित्यर्थः ॥ [25]

९१ तै१ मै ल–[०]प्राप्तिद्वारभूत[०]। ९२ मै–श्रावणा, ल–श्रावणानि, त१–श्रवणा। ९३–९३ ल–अथैतानि श्रवणार्थानि न अश्रवणार्थमपावृतानीति, त१–अथ तानि श्रवणार्थमपावृतानीति। ९४ त१ ल–प्राची। ९५ मै–'कुरु' नास्ति। ९६ त१ मै ल–'कुरु' नास्ति। ९७ त१ ल–सुवरिति। ९८ मै–द्योतयन्ति।

१२७ इ–अस्मा[.]। १२८ आ क–स्व[.]।

अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥
ॐमा ( ६ ) नो मर्धीराॐ तू भर ॥

अग्निः । दाः । द्रविणम् । वीरपेशा इति वीर पेशा । अग्निः । ऋषिम् । यः । सहस्रा । सनोति ।
५ अग्नि । दिवि । हव्यम् । एति । ततान । अग्नेः । धामानि । विभृतेति वि-भृता । पुरुत्रेति पुरु त्रा ॥
मा ( ६ ) । नः । मर्धीः ॥ एति । तु । भर ॥

"अग्नेर्याज्यानिकल्पः"—'अग्निर्दा' इति त्रिष्टुप् ॥ अयम् अग्निः द्रविण धन दाः दात् ददाति । लेटि शपो लुक् । "पुरुषव्यत्ययः । वीरपेशा विक्रान्तरूपः य अग्निः ऋषिं दर्शयितारं श्रेयसा, य सहस्रा सहस्रेण प्रकारैः सनोति सविभजते । अग्निः खलु दिवि देवेषु आदित्ये
१० वा हव्यम् आ ततान सर्वतस्तनोति । तस्मादेव महानुभावस्य अग्नेः धामानि स्थानानि हवींषि वा विभृता धारयिता येन पशुमन्तः स्यामेति । पुरुत्रा पुरूणि बहूनि । "देवमनुष्य" ( पा ५.४.४६ ) इति त्राप्रत्ययः । आख्यातस्य संहितिक दीर्घत्वम् ॥

अथ "इन्द्राय प्रदात्रे" ( तैस २.३.२ ) इत्यस्याः पुरोनुवाक्या याज्या च– 'मा नो मर्धीरा तू भर' इति ॥ "मा नो मर्धीरा भरा दद्धि तन्नः", "आ तू भर माकिरेतत् परि ष्ठात्"
१५ ( तैस १ ७ १३ ) इत्येतयोरेते प्रतीके गृह्येते । व्याख्याते चैते "अन्वह मासा." ( तैस१. ७.१३ ) इत्यत्र । तत्र प्रथमा-अस्मान् मा मर्धीः सग्रामेण मा बाधिष्ठाः । दध्यादिकम् आ भर आहृत्यास्मभ्य तत प्रदेहि । किं 'दाशुषे हवींषि दत्तवते यजमानाय दातुं 'यत् ते 'भूरि बहु सपादित 'तत तद्धनमिदानीम् अस्मभ्य देहि । वयमपि 'नव्ये नूतने 'देष्णे दानसमर्थे 'अस्मिन् 'दाम्ने प्रदातृ त्वदीये 'उक्थे शस्त्ररथानीये स्तोत्रे "त्वा 'स्तुवन्तः" त्वा 'प्र 'मनाम प्रभूत
२० प्रकर्षेणाभिमतानि याचामहे, हे इन्द्र, इति ॥

अग्निरिति ॥ तत्रैव विशल्यितां याज्यामाह– 'अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं य सहस्रा सनोति । अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा' इति । अयम् अग्निः द्रविणं दा ददातु । वीरपेशा वीराणामस्मत्पुत्रादीनां पाल्यः. य. अग्निः अस्मै ऋषिम् ऋषिमानं पुत्रं सहस्रा सहस्रप्रकारेण सनोति ददातु । स अग्नि दिवि स्वर्गे हव्यम् अस्मदीयम् आ ततान समन्ताद्विस्तारितवान् । तादृशस्य
८८ अग्नेः पुरुत्रा "पुरुषु प्रदेशेषु" धामानि स्थानानि विभृता विशेषेण संपादितानि ॥

मेति ॥ द्वितीयपर्यायस्थे याज्यानुवाक्ययो प्रतीके दर्शयति– 'मा नो मर्धीरा तू भर' इति । "मा नो मर्धीरा भरा दद्धि तन्नः" इति पुरोनुवाक्या, "आ तू भर माकिरेतत् परि ष्ठात्" इति याज्या । तदुभयं पूर्वकाण्डे सप्तमप्रपाठके ( तैसं १.७.१३ ) व्याख्यातम् ॥

घृतं न पूतं तनूरऽरेपाः शुचि हिरण्यम् । तत् ते रुक्मो न रोचत स्वधावः ॥
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर ॥

घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ।
तत् । ते । रुक्मः । न । रोचत । स्वधाव इति स्वधाऽवः ॥
उभे इति । सुश्चन्द्रेति सुऽचन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।
उतो इति । नः । उदिति । पुपूर्याः । उक्थेषु । शवसः । पते ।
इषम् । स्तोतृभ्य इति स्तोतृऽभ्यः । एति । भर ॥

द्वितीया—हे इन्द्र, [१०२]आ भर वसु एतत् [१०३]मा परिग्रात्[१०३] अस्मभ्यमन्यत्र [१०४]माऽस्थात् । त्वा हि वयं सर्वेषां वसूनां सम्बन्धिनं पतिं वसुपतिं विद्म जानीमः । अस्मात् यत् ते माहिन महन्महनीयं दत्रं दातव्यं धनम् अस्ति तत् अस्मभ्यं प्रयन्धि प्रयच्छ, हे हर्यश्व [१०५]हरिवाहनेति । अत्राचार्येण (द्र बौश्रौ १३ २५), "प्रदातारं हवामहे", "प्रदाता वज्री" (तैस १ ७ १३) इत्येते उक्ते । तत्र विकल्पो वेदितव्यः ॥

अथ प्राजापत्यस्य पुरोनुवाक्या—'घृतं न पूतम्' इति । अक्षरपङ्क्तिः पञ्चपदा ॥ घृतं न घृतमिव पूतं शुद्धं तनूः शरीरं तव, अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । हे स्वधावन् अन्नवन् । "मतुवसो" (पा ८ ३ १) इति रुत्वम् । अरेपाः अपापा तनूः तव रोचते हिरण्यमिव शुचि रोचते, रुक्मं न रजतमिव रोचते तव तनूरिति । तदिति लिङ्गव्यत्ययः, सा तव तनूरिति । यद्वा—तत् ते अन्नं रोचते । किमिवेत्याह—पूतं घृतमिव अरेपास्तनूरिव शुचि हिरण्यमिव रोचनशीलं रजतमिवेति ॥

तस्यैव याज्या—'उभे' इति पञ्चपदा पङ्क्तिः । हे सुश्चन्द्र सुकान्त । "सुपूर्वश्च चन्द्रपरः" (तैप्रा ५ ५) इति शकारः साहितिक आगमः । दर्वी हनू सर्पिषः सम्बन्धिन्यौ सर्पिः ससिक्ते ।

घृतमिति ॥ तृतीयहविषः पुरोनुवाक्यामाह—'घृतं न पूतं तनूररेपाः शुचि हिरण्यम् । तत् ते रुक्मो न रोचत स्वधावः' इति । हे स्वधावः अन्नवन् प्रजापते, तनूः अरेपाः त्वदीयं शरीरं पापरहितम् । किमिव ? पूतं घृतं न घृतमिव । नेत्युक्तरत्रानुवर्तते । शुचि हिरण्यं न शुद्धं सुवर्णमिव, रुक्मः न, आभरणमिव ते त्वदीयं तच्छरीरं रोचत सर्वेभ्यो रोचताम् ॥

उभे इति ॥ तस्यैव याज्यामाह—'उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर' इति । हे सुश्चन्द्र, सुष्ठ्वाह्लादनकर, आसनि त्वदीये आस्ये सर्पिषः सम्बन्धिन्यौ उभे दर्वीसदृशौ हनू श्रीणीषे सेवसे हनुपूरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः । उत अपि च, हे शवसः पते बलस्याधिपते उक्थेषु शस्त्रवत्सु यागेषु नः अस्मान् उत्पुपूर्याः उत्कर्षेण पूरय प्रापयेत्यर्थः । स्तोतृभ्यः यजमानेभ्यः इषम् अन्नम् आ भर सम्पादय ॥

१०२. तै— आभर आभर । १०३-१०३ नास्ति— पंक्ति । १०४ क— ष्ठि । १०५ मे— हरितवाहनेति ।

वायो॑ श॒तꣳ हरी॑णां यु॒वस्व॒ पोष्या॑णाम् ।
उ॒त वा॑ ते सह॒स्रिणो॒ रथ॒ आ या॑तु॒ पाज॑सा ॥

वायो॒ इति॑ । श॒तम् । हरी॑णाम् । यु॒वस्व॑ । पोष्या॑णाम् ।
उ॒त । वा॒ । ते॒ । स॒ह॒स्रिण॑ । रथ॑ । एति॑ । या॒तु॒ । पाज॑सा ॥

५ दीर्यते भक्ष्यते अन्नमाभ्यामिति दर्वी । ते [v]श्रीणीषे सदा सेवसे । यद्वा— [\]उभे दर्वी । सर्पिष श्रीणीषे सर्पि प्रापयसि सर्पिषा [१०६]मिश्रीकुरुष्व । [१०७v]आसनि आस्ये । पद्दन्नादिना (पा ६.१.६३) आसन्भाव । [v]उतो अपि च हे [\]शवस. [\]पते बलस्य पात । "षष्ठ्याः पतिपुत्र°" (पा ८.३.५३) इति सत्वम् । [\]न अस्माकम् [v]उक्थेषु स्तोत्रवत्सु यज्ञेषु [\]उत्पूर्या उच्छ्रित पूरय सामर्थ्याद्धन बलमेव वा अविशेषणात् सर्वम् । अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । पूरी
१० आप्यायने । लिङि "बहुलं छन्दसि" इति शप श्लु । किं च— [v]इषम् अन्न [v]स्तोतृभ्य [v]आ [\]भर स्तोतृभ्य ऋत्विग्भ्य [१०८]आहर । "हृग्रहोर्भ°" (पा ८.२.३२ वा १) ॥

अथ वायव्ये कश्चिद्विनियुज्यते लिङ्गात्—'वायो शतम्' इति पुरोनुवाक्या उष्णिक् । हे [v]वायो, [v]हरीणा हरितवर्णानामश्वाना [v]शत [v]युवस्व मिश्रय रथे योजय [१०९]अस्मद्यज्ञमागन्तुम् । यौते व्यत्ययेन श, आत्मनेपद च । पोष्याणामिति । पोषे साधूनामिति "तत्र साधु" (पा
१५ ४.४.९८) इति यत् । [\]उत [v]वा अपि वा [v]ते तव [\]सहस्रिण । किं? हरिसहस्रवत । कि ? सहस्र हरीणा रथे युज्यतामिति सामर्थ्याल्लभ्यते । यद्वा—ते हरय सहस्रिण सहस्रसंख्यावन्तो रथे युज्यन्ताम् । तत एवयुक्तो [v]रथ [v]आ [\]यातु । अस्मत्सकाशमागच्छतु । [\]पाजसा बलेन सहित ॥

वायवीति ॥ अथान्यत्र "वायव्या यवागू निर्वपेत्" (कपिस ४८.१५) इत्यादिना विहिते [११०]कर्मण्युक्तरीत्या पुरोनुवाक्यामाह—'वायो शतꣳ हरीणा युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ
२० आ यातु पाजसा' इति ॥ हे [\]वायो, [\]पोष्याणां पुष्टिमतां [\]हरीणाम् अश्वानां [\]शत [\]युवस्व । अस्मद्यज्ञं समागन्तुं रथे योजय । [\]उत [\]वा [\]ते [\]सहस्रिण अथ वा ते सहस्रसंख्याका अश्वा रथे युज्यन्तामिति शेष । स च [\]रथः [\]पाजसा बलेन शीघ्रम् [\]आ [\]यातु ॥

१०६. मै८मं— मिश्रीकरोषि कुरुष्व वा, मे९— मिश्रं कुरुषे कुरुष्व । १०७. तै१— 'आसनि' नास्ति । १०८. तै१ मै७— आभर । १०९. तै१,मै— अस्मद्युक्तमा°, मै८— यजमानमा° ।

२५ ११०. उ ग— °त्यर्थेन । १११. अ आ उ.क को ना प हा— °कत्पूरदे ।

प्र याभि( ७ )र्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे।
नि नो रयिं सुभोजसं युवेह नि वीरवद्गव्यमश्वियं च राधः ॥

प्रेति । याभिः ( ७ ) । यासि । दाश्वांसम् । अच्छ ।
नियुद्भिरिति नियुत्ऽभिः । वायो । इष्टये । दुरोण इति दुः–ओने ।
नीति । नः । रयिम् । सुभोजसमिति सुऽभोजसम् । युव । इह ।
नीति । वीरवदिति वीरऽवत् । गव्यम् । अश्वियम् । च । राधः ॥　　५

तत्र याज्या–'प्र याभिः' इति त्रिष्टुप् । अच्छ इति प्रथमपादान्तः ॥ हे वायो, याभिः वडवाभिः नियुत्संज्ञाभिः प्र यासि गच्छसि । दाश्वांसं हविर्दत्तवन्तं [११०]यजमानम् अच्छ अभिगन्तुम् इष्टये यागाय पुनरपि यागं प्रवर्तयितुम् । "मन्त्रे वृष°" (पा ३ ३ ९६) इति क्तिन उदात्तत्वम् । "निपातस्य च" (पा ६ ३ १३६) इति संहितायामच्छेत्यस्य दीर्घत्वम् । दुरोणे　१०
[१११]यज्ञगृहे ताभिः आगत्य इह अस्मद्यज्ञगृहे रयिं धनं सुभोजसं शोभनभोजनम् । "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम् । नि युव मिश्रय शोभनभुक्तिकं धनमस्माभिर्मिश्रय । पूर्ववत् व्यत्ययेन शः । नियुव च राधः धनम् । कीदृशम्? वीरवत् पुत्रपौत्रादिमत् गव्यं गोसमृद्धिनिमित्तम् । "गोद्व्यच°" (पा ५ १ ३९) इति यत् । यद्वा–गव्यं क्षीरादिभिस्तद्वत् । अश्वियम् अश्वसमूहवत् । "केशाश्वाभ्याम्°" (पा ४ २ ४८) इति छः, छान्दसं　१५
ह्रस्वत्वम्, आद्युदात्तत्वं च । यद्वा– अश्वयोगस्यापि निमित्तभूतम् । छान्दसो यत् ॥

उत्तरयोः कश्चिदैन्द्रे द्रष्टव्यो विनियोगः –'रेवतीर्नः' इति गायत्री पुरोनुवाक्या ॥ व्याख्याता चेयं "अन्नह मासा" (तैसं १ ७ १३) इत्यत्र । रेवतीः धनवत्यः नः अस्माकं सधमादः सहमाद्यन्त्यः इन्द्रे सन्तु तुविवाजाः चरुपुरोडाशादिबहुलाः । याभिः वयं क्षुमन्तः शब्दयन्तः स्तुवन्तः मदेम माद्येम ताः इन्द्रार्थमस्माकं बह्व्यः सन्तु, सर्वार्थसाधनभूता आप उच्यन्ते ॥　२०

प्रेति ॥ तत्रैव याज्यामाह– 'प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे । नि नो रयिं सुभोजसं युवेह नि वीरवद्गव्यमश्वियं च राधः' इति ॥ हे वायो, दुरोणे [११२]यज्ञगृहे इष्टये क्रियमाणेष्टिसिद्ध्यर्थं नियुत्संज्ञकाभिः याभिः वडवाभिः दाश्वांसम् अच्छ हविर्दत्तवन्तं यजमानं प्राप्तुं प्रकर्षेण यासि ताः समीचीना अस्माकमनुकूला इति शेषः । इह कर्मणि नः अस्माकं सुभोजसं रयिं सुष्ठु भोजनोपयुक्तं धनं नि युव नितरां मिश्रय । किं च राधः अन्नं नि युव । कीदृशं राधः ? वीरवत् गव्यम् अश्वियं पुत्रैर्गोभिरश्वैर्युक्तमित्यर्थः ॥　२५

११० मै–'यजमान' नास्ति । १११ ट–यज्ञहे ।

११२ ट–यजमानगृहे ।

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्य ॥ १२ ॥
[ दधानो जिनोपि देमः प्र हव्यं बभूथ मा यामिश्चत्वारिꣳशच्च ] ।
[ प्रजापतिस्ताः सृष्टा अग्नये पथिकृतेऽग्नये कामायाग्नयेऽन्नवते वैश्वानरमादित्यं चरुमैन्द्रं
५ चरुमिन्द्रायान्वृजव आग्नावैष्णवमसौ सौमारौद्रमैन्द्रमेकादशकपालꣳ हिरण्यगर्भो द्वादश ] ।
[ प्रजापतिरग्नये कामायाभि स भवतो यो विद्विषाणयोरिन्मे स नवस्तेदाग्नावैष्णवमुपरिष्टाद्वासि
दाग्नोसुमेकसप्ततिः ] । [ प्रजापतिः प्रेदु हरिवः श्रुतस्य ] ।

रेवतीः । नः । सधमाद इति सध-मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि-वाजाः ।
क्षुमन्तः । याभिः । मदेम ॥
१० रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वावत इति त्व-वतः । मघोनः ।
प्रेति । इत् । उ । हरिव इति हरि-वः । श्रुतस्य ॥ १२ ॥
[ मैत्रं ... कार्त्तं ... ]

तत्रैव याज्या[131] । 'रेवान्' इति गायत्री ॥ [7]रेवान् धनवान् महाधनः । "रयेर्मतौ°"
(पा ६.१.३७ वा ६) इति सम्प्रसारणम् । "रेशब्दाच्च°" (पा ६.१.१७६ वा १) इति
१५ मतुप उदात्तत्वम् । साहितिकौ रुत्वानुनासिकावुक्तौ । [7]इत् इत्यवधारणे । धनवानेव स्यात् भवि-
तुमर्हति । कः ? [7]रेवतः धनवतः यस्य कस्यचिदपि परिवृढस्य [7]स्तोता [7]स्यात् । अथ [132]यद्देव-
मेतद्भवति तदा [7]त्वावतः त्वत्सदृशस्य । "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्"

रेवतीरिति ॥ अथ वाय्वैन्द्रकर्मणि [133]उरुकृम् उक्तयाज्यानुवाक्ये [134]आम्नायेते । तत्र पुरोनु-
वाक्यामाह– 'रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम' इति । रेवत्यो धनवत्यः
२० [7]सधमादः अस्माभिः सह [135]मादय(न्त्यो) हर्षयुक्ताः [7]तुविवाजः बह्वन्नोपेता आपः [7]नः अस्माकं
स्वामिनि [7]इन्द्रे [7]सन्तु [136]अस्मदनुग्रहाय तिष्ठन्तु ॥ [7]याभिः अद्भिः सह वयं [7]क्षुमन्तः शब्दवन्त इन्द्रं
स्तुवन्तः [7]मदेम [137]हृष्यास्म ॥
रेवानिति ॥ तत्रैव याज्यामाह– 'रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः
श्रुतस्य' इति । हे [7]हरिवः इन्द्र, अयं यजमानः [7]रेवान् [7]इत् धनवानेव सन् [7]रेवतः धनवतो देवस्य
२५ [7]प्रेदु [138]अत्यन्तप्रकर्षेण [7]स्तोता [7]स्यात् । कीदृशस्य देवस्य ? [7]त्वावतः त्वत्सदृशस्य [7]मघोनः [139]धनवतः
[7]श्रुतस्य [139] [140]देवेषु श्रूयमाणस्य । तादृशं देवं स्तुत्वा स्वाभीष्टं प्राप्नोतीत्यभिप्रायः ॥

१३१. ते.भै– याज्या पुरोनुवाक्या वा । १३२. मै८– यद्देव°; ख– यदेव° ।
१३३. 'उरुकृत्' नास्ति । १३४. भै– आम्नाते । १३५. अ– मादयन्त्यः । १३६. क–
अस्मदनुग्रहाय सर्वकामाय । १३७. क.ना– हृष्याम । १३८. क.भो.ना.हा– अत्यन्तं प्रकर्षेण । १३९–१३९.
३० क.ना– अप्रमत्तात्मनः श्रुतस्य; भो.हा– अप्रमत्तात्मनः श्रुतस्य, अ.पा– अप्रमत्त श्रुतस्य; ह.हा.गे.हो.र–
अप्रमत्तः श्रुतस्य, मै– अप्रमत्तः श्रुतस्य । १४०. हा– देवेषु ।

(पा ५ २ ३९ वा१) इति वतुप्। "आ सर्वनाम्न" (पा ६ ३ ९१) इत्यात्वम्। [v]मघोन धनवत। [v]श्रुतस्य सर्वेष्वपि लोकेषु धनवत्तया विख्यातस्य त्वावतो धनवत स्तोता स [v]प्र एव स्यात् प्रकर्षेण रेवान् [११४] भवितुमर्हतीति। [v]उ इति पादपूरण, [११४] विशेषख्यापने वा। त्वावत अस्त्वित्यर्थ। हे [v]हरिव हरिभिरश्वैर्युक्त इन्द्र। "मतुवसो०" (पा ८ ३ १) इति रुत्वम्॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये ५
द्वितीये काण्डे द्वितीयप्रपाठके द्वादशोऽनुवाक ॥
॥ समाप्तश्च [११५]प्रपाठक ॥

अत्र विनियोगसंग्रह ।

"हिरण्याऽऽप प्रजा सेति घृतस्य शतकृष्णले।
उदु चित्र चरौ सौर्ये स मैत्राग्नेययागके ॥ १ ॥ १०
द्विर आग्निककं सद्बृद्धविरिधा [१४१]भूमिगे चरौ [१४१]।
सौमेन्द्र ऋदू चत्वार शिपिविष्टे चपद्त्रयम् ॥ २ ॥
अग्ने तिस्रो दातृयुक्ते वा न आ सु भदातृके।
घृत [१४२]इत्यादिगणके वायो वायव्यके हविम् ॥ ३ ॥
[१४३] काम्यैन्द्रे रेवतीरिङ्गादिति"[१४३] विंशदुदीरिता ॥" इति ॥ १५

अथ मीमांसा ॥ अष्टमाध्यायस्य प्रथमपादे चिन्तितम्–

"कृष्णलेषु घृतस्योत [१४४]व्रीहिभ्नेजोयुतेर्भवेत्।
घृतस्य नैव वैशद्याच्चरुशब्दश्रुतेस्तथा" ॥ (जैम्या ८ १ २१) ॥

"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलम्" (तैस २ २ २) इत्यत्र कृष्णलेषूपादानद्रव्यस्य घृतस्य धर्मा कर्तव्या, कृष्णलान्यसुवर्णस्य घृतस्य च तेनद्रवित्वसाम्यादिति चेत्। न। सुवर्णराज २० व्रीहीणोर्वैशद्यसाम्यात्। न हि घृतस्य [१४५]अवलकाम्ल्यादिरूपत्वादिरूप वैशद्यमस्ति। [१४६]चरुशब्दश्चौषधिद्रव्य विषय कृष्णले [१४७] प्रयुज्यमान ओषधिधर्मान् [१४७] प्रापयति। तस्मात् व्रीहिधर्मा [१४८] कर्तव्या ॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

"अवघात कृष्णलानामस्ति नो वाऽस्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा" ॥ (जैम्या १० १ ४) ॥ २५

११४–११४ त१ ल– भवितुमर्हति। ११५. त१– 'प्रपाठक' इत्यस्यानन्तरं 'शुभमस्तु'।

१४१–१४१ जो ना–भूमिगाचरौ। १४२ अ ड उ क जो ना पा धृ हा–इत्यादिगुणक। १४३–१४३ अ उ पा– काम्येन्द्री रेव° क हा–काम्येन्द्री रेवतीरिद्रा°, ड काम्येन्द्ररेवतीरिन्द्रगा°। १४४ अ उ ते प– °स्वेनोयुतिर्भवेत्। १४५. अ उ प धृ– °त्यविचल°, क जो ड द१ न हा– °ल्यविरल°। १४६ आ ना पा हो१– °शब्दश्चौषधद्रव्य°, ने– °शब्दस्य ओषधिद्रव्यविषय। १४७–१४७ आ ड धृ हो१–प्रयुज्यमानं औषध° ३० धर्मान्, अ उ क जो पा हा – प्रयुज्यमानानोषधधर्मान्। १४८ ने हो१– त्वाद्व्रीहिधर्मा ।

विकृतिरूपाणां काम्येष्टीनां काण्डे [149]पठ्यते—"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम." (मैस २.२.२) इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ 'व्रीहीनवहन्ति' इति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां [150]चोदकवशादस्ति नो वेति संदेहः। अस्तीति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं [151-]प्रकृत उपकारः[-151]। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनम्।
५ लुप्तेऽपि [152]विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः, तद्वदवघातोऽप्यस्तु। 'घृते श्रपयति' इति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति॥

तत्रैव द्वितीयपादे चिन्तितम्—

"[153]नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसंभवी।
अदृष्टार्थतया स स्याद्गौण्ये तु सुतरां भवेत्" ॥ (जैन्या १०.२.१) इति॥

१० 'घृते श्रपयति' इति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्तव्य इति पूर्वः पक्षः। [154]दृष्टार्थस्य विक्लेदनस्यासंभवेऽप्यदृष्टार्थं पाकः कर्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द गौण्यवाची तदा न कोऽपि विवादः॥

तत्रैवान्यच्चिन्तितम्—

"उपस्तराभिघारौ [155]स्तस्तेषु नो वा द्वयं भवेत्।
१५ अदृष्टार्थमसंसक्तिर्दृष्टार्थो[156] नेति लुप्यते" ॥ (जैन्या १०.२.२)॥

तेषु कृष्णलेषूपस्तरणमभिघारणं [157]चेत्येतदुभयं पाकवददृष्टार्थं कर्तव्यमिति पूर्वः पक्षः। न तावत् पाकवदत्र प्रत्यक्षविधिरस्ति। चोदकस्तु दृष्टं द्वारमपेक्षते। [158]सर्वत्रोपस्तरणाभिघारणयोर्दृष्टार्थत्वात्। सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुं तदुभयं क्रियते। कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति। अतस्तन्निवारणलक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लुप्यते॥

२० तत्रैवान्यच्चिन्तितम्—

"भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतिरभावतः।
धुश्रुपाकारनिर्धानवचनात् स्यात् प्रदानवत्" ॥ (जैन्या १०.२.३)॥

यथा पुरोडाशे [159-]प्राशित्रादिभागो भक्ष्यते[-159] न[160] तथा तेषु कृष्णलेषु [161]भक्षोऽस्तीति। प्रीतिरूपस्य दृष्टद्वारस्याभावादिति पूर्वः पक्षः। "धुश्रुपाकारं भक्षयन्ति" (द्र. माश्रौ २.५.४.७; आपश्रौ
२५ १२.१७.६) "[162]निर्धयन्तो भक्षयन्ति" (द्र. आपश्रौ १३.७.५) इति प्रत्यक्षे वचनमाम्नायते। इक्षुदण्डभक्षणे तद्रसरसीकारे च यः शब्दविशेषस्तस्यानुकरणं धुश्रुपेति। [163]घृते निरसेषु कृष्णलेषु [164]वहिरसमार्ग्यं तदन्तर्नेतुमिव [165]यत्नात् धुश्रुपां कृत्वा तदाज्यं [166]निःशेषेण [167]पिबन्तो भक्षयेयुरित्यर्थः। अनदनीयद्रव्याणामपि कृष्णलानां यथा वचनात् प्रदानं तद्वदभक्ष्याणामपि भक्षणं भवेत्॥

---

१४९. आ.हा– उदाहियते। १५०. हा–चापक°। १५१–१५१. अ.उ.ह.द१.ने.पा.हो१– तत्पृत उप°; शे–तत्पृतेप°; आ.गा–प्राकृत उप°। १५२. ह–विविन्ने हेदनोपकारः; ने–विच्छेदेनोपकारः। १५३. ने.हो१– नास्यत्र। १५४. अ.उ.ह.द१.ने.पा.पा.हो१–दृष्टस्य। १५५. अ.उ.जो.ना.पा.हा–द्वौ तेषु। १५६. अ.उ.क.जो.पा.शे.हा– °दृष्टार्थं; आ–°निदृष्टार्थं। १५७. क.हा– चेत्युभयं। १५८. आ.क.ह– प्रकृताधु°। १५९–१५९. ह– °भागा भक्ष्यन्ते। १६०. आ.क.ह– 'न' नास्ति। १६१. आ.क.ह–'भक्षः' नास्ति। १६२ अ.उ.पा– निर्धायं। १६३. द१.ने.हो१– 'घृते' नास्ति। १६४. अ.
३५ उ.जो.ना.पा.हा– वहिर्भि°। १६५. आ.क.पो.हा– यत्नाः; अ.उ.पा–यत्न्। १६६. द१–निःशेषेण। १६७. द१– पिबन्ति।

तत्तत्कालस्याबाधो विलम्बे हेतुः । तस्मात् स्वस्वकाल [185] इत्यपर पक्षोऽभ्युपगन्तव्य ॥

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्–

" फलं च नियम कर्ता सघ सौर्ये न वाऽग्रिम ।
प्रयाजवन्न विध्यादिविध्यन्तत्वविभेदत " ॥ (जैन्या ८ १ १६ ) ॥

५ इष्टौ फलादयश्चत्वार सन्ति। फल स्वर्ग । नियमो यावज्जीवकत्वम्। कर्ता स्वर्गकाम । सघ आग्नेयादीना षण्णा साहित्यम्। त एते चत्वार सौर्ये प्रयाजादिवदतिदेष्टव्या इति चेत्। न। वैषम्यात्। [186] प्रयाजादिराकाङ्क्षितविध्यन्तत्वादतिदिश्यते। विध्यादिस्तु नाऽऽकाङ्क्षित । 'सौर्यं चरु निर्वपेत्' इति मुख्यविधे प्रत्यक्षश्रवणात्। अन्यथा [187] विध्यन्तत्वेऽपि कस्याऽऽकाङ्क्षा वर्ण्येत। तस्मात् प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तेस्तत्सबद्धा फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते ॥

१० तत्रैवान्यच्चिन्तितम्–

" गोदोहनादस्ति नो वा भवेत् प्रणयनाश्रयात्।
' अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते " ॥ (जैन्या ८ १ १७ ) ॥

चमसेनाप प्रणयेद्गोदोहनेन पशुकामस्य" (द्र आपश्रौ १ १६ २) इति [188] दर्शपूर्णमासयो श्रुत [189] गोदोहन सौर्येऽप्यतिदेष्टव्यम्। कुत ? [190] तदाश्रयस्य प्रणयनस्य सद्भावादिति चेत्। नैवम्।

१५ क्रत्वङ्गतया चमस एव [191] प्रणयनसाधनमपेक्षित [192] न त्वनङ्ग [193] पुरुषार्थं गोदोहनम्। अत फलनियमादिवन्नातिदेश ॥

तत्रैवान्यच्चिन्तितम्–

" स्पर्शद्वय व्यवस्थाप्य विकल्प्य वा व्यवस्थिति ।
प्रकृतावित्र नो तत्र [194] तस्या शाब्दत्ववर्जनात्' ॥ (जैन्या ८ १ १८ ) ॥

२० दर्शपूर्णमासयोर्हविषा स्पर्शनद्वय [195] व्यवस्थितमन्त्रद्वयसाध्यमाम्नातम्–" चतुर्होत्रा [196] पौर्णमासीमभिमृशेत् पञ्चहोत्रा [197] अमावास्यायाम्" (आपश्रौ ४ ८ ८) इति। " पृथिवी होता " (तैआ ३ २) इत्यादिमन्त्रश्चतुर्होता। " अग्निर्होता " (तैआ ३ ३ ) इत्यादि मन्त्र पञ्चहोता। [199] तदेतदुभय सौर्येऽतिचोदनप्राप्त सत् कालभेदेनानुष्ठानद्वये व्यवस्थापनीयम्। कुत ? प्रकृतौ पौर्णमास्यमावास्ययो [198] कालयोर्भेदेन व्यवस्थितत्वादिति चेत्। न। प्रकृतौ व्यवस्थाया [199] आर्थिकत्वात्। [200] शाब्दस्यैवाङ्गस्यैवातिदेशार्हत्वात्। तस्मादुभय विकृताविच्छया विकल्प्यते ॥

२५ तत्रैवान्यच्चिन्तितम्–

' षट्सु यस्याप्युताऽऽग्नेयस्यैव सौर्येऽग्रिमो यत ।
अविशेषो न देवैक्यादौषधद्रव्यकत्वत " ॥ (जैन्या ८ १ १९ ) ॥

दर्शपूर्णमासगतेषु [201] षट्सु यागेषु [201] यस्य कस्यापि विध्यन्त सौर्ये कर्तव्य, अस्यैवेति विशेषनियामकस्याभावादिति चेत्। न। देवतैक्यस्य नियामकत्वात्। सौर्यसव्दगततद्धितप्रत्ययविग्रहस्य सूर्याविति

३० द्विवचनेनापि कर्तु शक्यत्वात् [202] देवतैक्यम् [203] अनिश्चितमिति चेत्। न। [204] विधिदोषार्थवादोक्तौ

१८५ आ द१ शृ– इत्यस्त । १८६ अ उ पा– °प्रयाजादिराकाङ्क्षे ■ विध्य° । १८७ आ क शृ –विध्यन्ते। १८८ अ उ– असगत्वा°। १८९–१८९ ड द१– °मासगत। १९० हो१– तदाश्रयणीयस्य ट ने– तदाश्रयस्य। १९१ ड द१ ने हो१– प्रणयनमपेक्षितम्। १९२–१९२ अ उ पा–°न त्वसङ्°

३५ द– त्वनङ्ग, आ क– न त्वङ्गम्। १९३ ने हो१– तस्याम्। १९४ अ उ जो ने पा हा–व्यवस्थितमन्त्रद्वय°, हो१–व्यवस्थितमन्त्रद्वय साध्य°। १९५ क जो ड द१ ना शृ हो हा१– पौर्णमासीमभि°। १९६ क ना शृ–अमावास्याम्। १९७ आ– तदुभयम्। १९८ क–कालभेदेन। १९९ ट ने हो१–आर्थकत्वात्, द१– आर्थकत्वा। २०० अ उ पा– शब्दस्यैवा°। २०१–२०१ अ उ पा– 'षट्सु यागेषु' नास्ति। २०२ ड द१ ने हो१– तदेवैक्यम्। २०३ द१ ने–अनुस्यूतमिति। २०४ द– °वादोक्त्या।

'प्रमुमेवाऽऽदित्यम्' इत्येकवचनेन तद्व्यपदेशात् । आग्नेयार्थवादेऽपि "सोऽग्नयेऽध्रियत' (तैस २ ६ ३) इत्येकवचन व्यपदिष्टम् । अत आग्नेयस्यैव विध्यन्तो न त्वग्नीषोमीयैन्द्राग्नयो । यद्यप्यैन्द्रयोर्दधिपयसो र्मानापरत्व उपांशुयाजेऽपि देवतैक्यमस्ति तथाऽप्यौषधद्रव्यकत्वमाग्नेये विशेष्यते । तस्मात् तस्यैव विध्यन्त ॥

नवमाध्यायस्य द्वितीयपादे चिन्तितम्–

"सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवतौ ।

न सर्वदेवतौ यथाविचारत्वाद्य तत्र तौ" ॥ (जैन्या ९ २ २६ )॥

दर्शपूर्णमासयो श्रूयते– "स्रुवेण [205]पार्वणौ जुहोति" (द्र. बौश्रौ १ १७) इति । तत्र पर्वशब्द कालविशेषवाची । तत कालद्वयकौ तौ होमौ आराद्युपकारकतया प्रयाजादिवत् सौर्यादिविकृतिष्वतिदिश्येते इति चेत् । नैवम् । पर्वशब्दस्याऽऽग्नेयादित्रिकर्मपरत्वात् । दानार्थवाचिन पृणातेर्धातोर्निष्पन्नोऽय पर्वशब्द । [206]इह च [206] [207]प्रीय(दूय)ते [208]दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालमाचष्टे । भावव्युत्पत्त्या तु क्रियापर सन् प्रकरणवशादाग्नेयादिकर्मत्रयसमाह । तथा च [209]मन्त्रवर्णोऽप्यनुगृहीतो भवति । "ऋषभ वाजिन वय पूर्णमास यजामहे" (तैब्रा ३ ७ ५) इत्येको मन्त्र । "अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना" (तैब्रा ३ ७ ५) इत्यपरो मन्त्र । तत्राग्नीषोमवत् कर्मत्रयसमस्य व्यामक्तदेवता त्वम् । न च तत्स्य विकृति सौर्यादि । कि त्वाग्नेयस्यैव । तत समानयोर्होमयोर्नास्ति सौर्यादौ प्राप्ति ॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्–

"सौर्ये चरौ चरु स्थाली कि [210]वाऽथ लौकिकोक्तित ।

[211]स्थाल्यस्या श्रपण [211] योग्य कपालविकृतित्वत ॥

[212]विद्वत्श्रुतिप्रसिद्धाऽत्र [213]देवतातद्धितोक्तित ।

[214]योगत्वेन [215]प्रदेय तत्पुरोडाशहविर्यथा[215]" ॥ (जैन्या १० १ १९ २० )॥

"सौर्यं चरु निर्वपेत्" (तैस २ ३ २) इत्यादिवाक्ये चरुशब्द [216]किं स्थालीं वक्ति, [217]आहोस्वित् ओदनमिति सन्देह । [218]तत्र लौकिका आ हिमवत आ च कुमारीभ्य सर्वेऽपि [219]सर्वदेशीयस्वस्वभाषाप्रसिद्ध्या [220]यत्किंचिद्गकारचकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमल्पे पात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते । निघण्टुकाराश्च 'उखा स्थाली चरु' इत्येतान् शब्दान् पर्यायत्वेन [221]उपदिशन्ति । तस्माच्चरुशब्द स्थालीं वक्ति । यदि [222]तस्या अदनीयत्वाभावेन पुरोडाशवत् प्रदान योग्यता न स्यात् तर्हि मा भूत् पुरोडाशविकृतित्व, पुरोडाशाधिष्ठानकपालविकृतित्व तु भविष्यति, श्रपणयोग्य ताया सद्भावात् । यथा कपालेषु हवि [223]श्रप्यते तथा स्थाल्यामपि श्रपयितु शक्यते । तस्माच्चरु स्थालीति प्राप्ते ब्रूम — अन्नमेव चरुशब्देनोच्यते । कुत ? श्रुतिप्रसिद्धे । "आदित्य प्रायणीयश्चरु" (द्र ऐब्रा १ ७) इति विधाय तद्वाक्यशेषे हि "अदितिमोदनेन" इत्योदनशब्देन चरुरनूद्यते । यदि भोज्यार्थे

२०५ ने होर–पार्वणहोमौ, ह –पार्वणौ होमौ । २०६–२०६ ने–अत । २०७ हर–क्रियते, होर– मीयते । २०८. ने– 'दीयते' नास्ति । २०९. ओ ना हा– °प्यनुसगृहीत । २१० ह– वा स्यात् । २११–२११ ने– स्थाल्या श्रपणस्योग्यम्, हर– स्थाल्या श्रपणयोग्यम् । २१२ मृ–विद्वत्कृति° । २१३ उ जो पा हा – दैवत तद्धि° । २१४ अ उ ड पा होर – यागत्वेन । २१५–२१५ हर– प्रदीयन्ते पुरो° । २१६ मृ– 'किं' नास्ति । २१७ क हा– उत । २१८ क हा– तन च । २१९. अ उ पा – सर्वदेशीयभाषा°, ह ने होर – स्वस्वदेशीयभाषा°, मृ– स्वस्वदेशीयभाषा° । २२० अ उ पा– °वकारमुपरि, क– °गकारचकाराद्यक्षरमुपरि, ने मृ– °वकाराद्युपरि । २२१ ह हर ने मृ होर– पठन्ति । २२२. अ उ पा– स्थाल्या । २२३ ने– प्रियते ।

तत्रैव चतुर्थपादे चिन्तितम्—

"सौर्यादिनिगमे कोऽपि शब्द स्यादूहेष एव वा।
चरौ[243]सूर्यान्वयादाद्य प्रयोगान्वयतोऽन्तिम "॥ (जैन्या १० ४ २३)॥

"सौर्यं चरुं निर्वपेत्" (तैस २ ३ २) इत्यादिविकृतिषु चोदकातिदिष्टा ये निगमा तेष्वग्न्यादिशब्दस्थाने सूर्याद्यर्थप्रत्यायक शब्द [244]ऊहितव्य। स चार्थ आदित्यरव्यादिना पर्यायेणापि प्रत्याययितु शक्यते। वेदस्तु सूर्यशब्द [245]चरयागे एवान्वित, न त्वग्न्यादिशब्दवन्निगमेषु पठित। तस्मात् य कोऽपीति प्राप्ते ब्रूम। अत्र "सौर्यं चरुं निर्वपेत्" (तैस २ ३ २) इति प्रयोगवचनेन सूर्यान्वयो भवति, न तु [246] सौर्यं चरमिति[246] चरुणा। कारकविभक्तिर्हि द्वितीया। सा चाऽऽख्यातेन सबध्यते न नाम्ना। सति च प्रयोगान्वये याज्यापुरोनुवाक्ययोर्निगमेषु वा [247] यत्र यत्र [247] प्रयोगोऽपेक्षितस्तत्र सर्वत्र सूर्यशब्द एव युक्त। प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाऽग्निशब्द प्रयुज्यते, किं तर्हि? [248]वेदशब्द-विवक्षयाऽपि। तथा सत्यतिदेशोऽपि वेदशब्दविषय एव भविष्यति। तस्मात् सूर्यशब्द एव प्रयोक्तव्य॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"आरम्भणीया सौर्यादौ नोत स्यात्र प्रयोगवत्।
क्रत्वर्था न [249]प्रयोगार्था न त्वारम्भे ततो भवेत्"॥ (जैन्या १२ २ ६)॥

दर्शपूर्णमासयो प्रथमप्रयोगस्यैवोपक्रम आरम्भणीया न प्रयोगान्तरस्येति नवमे (जैन्या ९ १ १५) निर्णीतम्। आदौ कृतस्य [250] कर्तृसंस्कारस्य यावज्जीवपर्याप्तत्वाद्यथा न प्रयोगान्तर आरम्भणीयापेक्षा, तथा [251]यावज्जीवप्रकृतिकालमध्यपातिनीना सौर्यादिविकृतीना नास्ति तदपेक्षेति प्राप्ते ब्रूम — "दर्शपूर्णमासा-वारप्स्यमान" (द्र मैस १ ४ १४) इत्युक्तत्वात् क्रत्वर्थैवमारम्भणीया, न तु प्रयोगार्था। क्रत्वन्तराणि हि सौर्यादीनि। तत [252]प्रयोगान्तरवैषम्यात् सौर्यादौ सा कर्तव्या। न च यावज्जीवकाल प्रकृत्यङ्ग, कर्तृधर्मत्वेन द्वितीये (जैन्या २ ४ १ २) [253]वर्णितत्वात्। अतो नोक्तलक्षणोऽन्यायोऽत्र प्रसरति। तस्मादारम्भणीयात्र प्रसङ्ग।

[254]तृतीयाध्याये चतुर्थपादे चिन्तितम्—

"सोमवामिचरुर्लोके वेदे [255]वेन्द्रियसक्षय।
दृष्टदोषो लौकिकेऽतो वमने विहितश्चरु॥
अदोषो वमनायैव लोके [256] पान श्रुतौ [256] पुन।
[257]जरणाय अतो वान्तिदोषशान्त्यै भवेच्चरु "॥ (जैन्या ३ ४ ३१ ३२)॥

---

२४३ अ उ पा – सूर्याश्रयादाद्य। २४४ मे–कर्तव्य। २४५ क उ ह१ ना श्र हो१–चरुयागे। २४६–२४६ क ड–सौर्यश्चरुरिति। २४७–२४७ क ह१–यत्र। २४८ ह१ हो१–वेदशब्द°। २४९ ■ ह१ हो१–प्रयोगार्थम्। २५० ह१–कर्तु सस्का°। २५१ ह१–यावतज्जीवलक्ष-णप्रकृति°। २५२ क हा–प्रयोगान्तरे वैष°। २५३ श्र हो१–निर्णीतत्वात्। २५४ ह१–तृतीयाध्यायस्य। २५५ ह१ ने–°सक्षया। २५६–२५६ ■ उ पा हा–पाठात् श्रुतौ, ह१ ने श्र हो१–पानात् श्रुतौ। २५७ अ उ पा–करणाय हो१–जननाय।

इदमाम्नायते– " सोमेन्द्रं चरुं निर्वपेच्छयामाकं सोमवामिनः " (मैस २ २ १३, द्र तैस २ ३ २) इति। तत्र लौकिके सोमवमने विहितोऽयं चरुः। कुतः ? " वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति " (द्र. मैस २ २ १३, तैस २ ३ २) इति [258]दृष्टदोषमुपन्यस्य तच्छान्तये चरुविधानादिति चेत्। मैवम्। लोके [259]धातुसाम्यार्थिना वमनार्थेव सोमस्य पाने सति वमनस्य [260]दोषहेतुत्वाभावात्।
५ वेदे तु " हिन्व मे गात्रा हरिव " (तैस ३ २ ५) इत्यनेन मन्त्रेण जरयितुं सोमं [261]पीयते। तत्र वमनप्रायश्चित्तार्थोऽयं चरुः॥

तत्रैवान्यच्चिन्तितम् –

" [262]ऋत्विजां वमनेऽप्येष [263]कर्तुरेवोत वर्जनात्।

[264]विशेषस्याग्रिमो मैवं कर्तुरेव [265]निरूपितेः "॥ (जैन्या ३ ४ ३३)॥

१० [266]ईदृशस्य [267]सोमवमने चरुरिति विशेषस्याभावात् [268]ऋत्विजां यजमानस्य [269]च वमने[270] सर्वत्रासौ चरुरिति चेत्। मैवम्। ' [270]यो [271]वमति स निर्वपति ' इति निर्वप्तुर्वमनं [272]चरुनिमित्तं निर्वप्ता च यजमानः। ऋत्विजो निर्वप्तृत्वेऽधिकारान्तरप्रसङ्गात्। तस्माद्यजमानस्यैव वमने चरुविधिः॥

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" क्षीरस्याऽऽज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः।

१५ द्रवत्व न घृतेऽप्यस्य [273]सत्त्वात् वर्णश्च[274] संभवात् "॥ (जैन्या ८ १ ३१)॥

चित्रायागे श्रूयते–" दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम् " (द्र तैस २ ३ ३ मैस २ ३ १) इति। तत्र मधुन्युदके च [275]द्रवत्वसामान्येन सान्नाय्यगतस्य पयसो धर्मा इति चेत्। न। घृतेऽप्यग्निसंपर्केण द्रवत्वसद्भावात् [276]अशुक्लवर्णत्वादाज्यधर्माणामुत्पवनादीनां संभवात् [277]पयोधर्माणां दोहनादीनामसंभवाच्च [278]उपांशुयाजगतस्याऽऽज्यस्य धर्मा कर्तव्या॥

२० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमादिद्वादशान्ता अनुवाकाः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
२५ परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे द्वितीयः प्रपाठकः॥

---

२५८ अ उ पा-°पमापत्य। २५९. आ ड ने श्र हा-साम्यार्थिन°। २६० आ शृ-दोषा हेतुत्वात्। २६१ ड-दीयते। २६२. क ने हा हो१-ऋत्विज। २६३ ने-कर्तुरेव हि। २६४ अ उ ट१ ने पा हो१-विशेषानुक्तितो श्र-विशेषभुक्तितो। २६५ क ड ने शृ हो१-निरुक्तितः। २६६ ३० अ आ उ पा-ईदृशस्य। २६७ क जो ना हा-सोमस्य वमने। २६८ हो१-ऋत्विजा। २६९-२६९ आ ता हा-या यमने, ट१ ने-वमने, ड-चमनेन। २७०-२७० ने-यो वमिष्यन् निर्वपतीति वमन। २७१ अ उ क पा हा-वमिति। २७२ ने हो१-स्वत्वात्। २७३ ट१-वर्णश्च च। २७४ ड ने हो१-°साम्य। २७५. अ उ पा-अशुद्धवर्ण°। २७६. क-पयसो धर्माणाम्। २७७ क जो ना हा-°यागगतस्य, ट१-उपांशुगतस्य।

# ( अथ द्वितीयकाण्डे तृतीयः प्रपाठकः )

हरिः ॐ ॥

आ॒दि॒त्येभ्यो॑ भुव॑द्वद्भ्यश्च॒रुं निर्व॑पे॒द्भूति॑काम आ॒दि॒त्या वा ए॒तं भू॒त्यै प्रति॑ नुदन्ते॒ योऽलं॒ भू॒त्यै॒ सन् भू॒तिं॒ न प्रा॒प्नोत्या॑दि॒त्याने॒व भुव॑द्वतः॒ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ त

आ॒दि॒त्येभ्यः॑ । भुव॑द्वद्भ्य॒ इति॒ भुव॑द्वत्-भ्यः॒ । च॒रुम् । निरिति॑ । व॒पे॒त् । भूति॑काम॒ इति॒ भूति॑-का॒मः॒ । आ॒दि॒त्याः । वै । ए॒तम् । भू॒त्यै । प्रतीति॑ । नु॒द॒न्ते॒ । यः । अल॑म् । भू॒त्यै । सन् । भूति॑म् । न । प्रा॒प्नोतीति॑ प्र-आ॒प्नोति॑ । आ॒दि॒त्यान् । ए॒व । भुव॑द्वत॒ इति॒ भुव॑त्-व॒तः॒ । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग-धेये॑न । उपेति॑ । धा॒व॒ति॒ । ते । ए॒व । ए॒न॒म् । भूति॑म् । ग॒म॒य॒न्ति॒ ।

'आदित्येभ्यो भुवद्वद्भ्यः' इत्यादि ॥ [1]भवता [2]भविना तद्वन्तो भुवद्वन्तः, याज्यानुवाक्ययोः तादृशत्वात् । भवतेर्लटः शत्रादेशः, "बहुलं छन्दसि" ( पा २·४·७३ ) इति शपो लुक् । व्यत्ययेनाद्युदात्तत्वम् । शपि वा व्यत्ययेन गुणाभावः । तत्रादुपदेशाल्लसार्वधातुकानुदात्तत्वे ( पा ६·१·१८६) धातुस्वरः, "तसौ मत्वर्थे" ( पा १·४·१९ ) इति व्यत्ययेन न प्रवर्तते । तत्र "यज्ञो देवानाम्" (तैसं २·१·११ ) इति पुरोनुवाक्या, "शुचिरपः" (तैसं २·१·११) इति याज्या । तत्र "आदित्यासो भवता मृडयन्तः" (तैसं २·१·११ ), "य आदित्यानां भवति प्रणीतौ" ( तैसं २·१·११ ) इति दर्शनात् भुवद्वत्त्वम् । गतमन्यत् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
काम्येष्टयः श्रुताः काश्चिद्द्वितीये तु प्रपाठके ।
तृतीये तु विधास्यन्ते तत्तत्फलमभीप्सिनः[1] ॥ २ ॥
[2]काम्येष्टित्वे समानेऽपि [3]संप्रदायकृता भिदा[3] ।
प्रपाठकद्वयस्यैवं चतुर्थस्यापि गम्यताम् ॥ ३ ॥
चतुर्दशानुवाकाः स्युस्तृतीयेऽस्मिन्[4] प्रपाठके ।
तदर्थास्तु क्रमेणेह वक्ष्यन्तेऽवसरे सति ॥ ४ ॥

१. मै४– भुवता । २. वं१.गै.ठं– भविद्रा (?) ।

१. ड ने हो१– °मभीप्सनः । २. अ.उ.ड.ने.पा.हो२– काम्येष्टित्व° । ३–३. अ.इ.उ.जी. पा.हा.हो१– संप्रदायकृताभिधा । ४. ने– °येऽत्र ।

एवैनं भूतिं गमयन्ति भवत्येवादित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुध्यमानो वाऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वतः ( १ )

भवति । एव । आदित्येभ्यः । धारयद्वद्भ्य इति धारयद्वत्-भ्यः । चरुम् । निरिति । वपेत् । अपरुद्ध इत्यप-रुद्धः । वा । अपरुध्यमान इत्यप रुध्यमानः । वा । आदित्याः । वै ।
५ अपरोद्धार इत्यप रोद्धारः । आदित्याः । अवगमयितार इत्यव गमयितारः । आदित्यान् । एव ।
धारयद्वत इति धारयत्-वतः ( १ ) ।

‘ धारयद्वद्भ्य ’ इति ॥ धारयच्छब्दवत्त्वात् याज्यानुवाक्ययो, यथा– “ धारयन्त आदित्यास ” ( तैस २ १ ११ ), “ तिस्रो भूमीर्धारयन् ” ( तैस २ १ ११ ) इति । अत्रापि पूर्ववद्भत्वाभाव, अयस्मयादित्वाद्वा ( पा १ ४ २० ) उभयत्र पदत्वम् । अपरुद्ध इत्यादि ।
१० अपरुद्ध राजान्तरेणापहृतराष्ट्र । स एत चरु निर्वपेत् पुन राष्ट्र लप्सीयेति । अपरुध्यमान वा राजान्तरेणापजिहीर्षितराष्ट्र । स वा निर्वपेदिम चरु मा मा राष्ट्र हासीदिति । आदित्या वा इत्यादि । आदित्या एव राष्ट्रस्य अपरोद्धार अपहर्तार राष्ट्रापहारेण वाऽस्य दु खयितार । आदित्या एव तस्य अवगमयितार पुन प्रापयितार । तस्मात् तेन अनेन चरुणा एनमपरुद्ध विशि प्रकृतिषु दाधति धारयन्ति धारयद्वत्त्वात् । धारयते “ दाधर्तिदर्धर्ति° ” (पा ७ ४ ६५)
१५ इत्यादिना निपात्यते । ततश्च अयम् अनपरुध्य अपरोद्धुमशक्य भवति । छान्दसो यत्, “ ययतोश्चातदर्थे ” ( पा ६ २ १५६ ) इत्युत्तरपदान्तोदात्तत्वम् ॥ अथात्र प्रयोगविशेषा उच्यन्ते– तत्र अपरुध्यमान अस्य अपरोद्धु पद पदपासून् आ ददीत–‘ अदितेऽनु मन्यस्व ’ इति ॥ हे अदिते अखण्डिते पृथिवि, माम् अनु मन्यस्व अनुजानीहि राज्यप्राप्तिमिति । गतम् यत् ॥

भूतिकामो भुवद्वद्भ्य आदित्येभ्यश्चरु चरेत् ।
२० रुद्धोऽवरुध्यमानो वा धारयद्वद्भ्य आचरेत् ॥ ५ ॥
शुक्लैर्व्रीहिभिरादित्य चरुं कृष्णैस्तु वारुणम् ।
रुध्यमान प्रकुर्वीत मयूखाना च कीलनम् ॥ ६ ॥
तदन्यन तथाऽऽदित्यं चरुमेव समाचरेत् ॥
याज्यानुवाक्ये कथितमेतत्सर्वं विधेयकम् ॥ ७ ॥
२५ ‘ “इन्द्र वो विश ’ इत्यत्राश्वरार्थस्तूपवर्णित ।

३ मै०–तत्रापि । ४–४ तै१ अपगमयितार, पर– अवगमयितार । ५. त१ ख– विशि° ।

५. आ– कीलनम् । ६ अ– चरुमेव । ७ आ क आ ग ह– विधेयत इ– अवेक्षत ।
•( तैस १ ६ १२ ) ।

स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयन्ति ... 

स्वेनं भागुधेयेनोपं धावति त एवैनं त्रिशि दांध्रत्यनपरुध्यो भंवत्यदितेऽनुं मन्यस्वेत्यं-
परुध्यमानोऽस्य पदमा ददातीयं वा अदितिरियमेवास्मै राज्यमनुं मन्यते सत्या-
ऽऽशीरित्याह सत्यामेवाऽऽशिषं कुरुत इह मन इत्याह प्रजा एवास्मै समनसः करोत्युप

स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । ते । एव । एनम् । विशि । दाधति ।
अनपरुध्य इत्यनप रुध्य । भवति । अदिते । अन्विति । मन्यस्व । इति । अपरुध्यमान　५
इत्यप-रुध्यमान. । अस्य । पदम् । एति । ददाति । इयम् । वै । अदिति । इयम् । एव । अस्मै ।
राज्यम् । अन्विति । मन्यते । सत्या । आशीरित्या-शी । इति । आह । सत्याम् । एव ।
आशिषमित्या शिषम् । कुरुते । इह । मन । इति । आह । प्रजा इति प्र-जा । एव । अस्मै ।
समनस इति स-मनस । करोति । उप ।

अथ तान् पासून् यजमानस्याञ्जलौ आवपति— ‘सत्याशी ’ इति । सत्या अमोघफला　१०
[6]आशी प्रार्थना [7]अस्य अयमस्माकमनपरुद्धो भवत्विति यावत् । गतमन्यत् ॥

अथैतान् पासूनुपनिगृह्णाति[8] उपनिपीडयति— ‘इह मन ’ इति ॥ [9]इह अस्मिन् मयि
[9]मन अस्तु प्रजानामिति । तत सर्वा [10]प्रजा [9]अस्मै [9]समनस अस्मिन्नेव सक्तमनस [9]करोति,
ततोऽनपरुद्धो [10]भवतीति ॥

अथ पदपासूनादाय हरति— ‘उप प्रेत ’ इति द्विपदया जगत्या ॥ सामर्थ्याचाय　१५
मन्त्रोऽञ्जल्यावपनमन्त्रात् पूर्वो द्रष्टव्य । हे [9]मरुत [9]सुदानव सुष्ठु दातार, अभिमतानाम् [9]उप
[9]प्रेत उप सप्राप्नुत । [9]एना अनेनावरोधकेन । “सुपा सुलुक्° ” (पा ७ १ ३९) इति तृतीयाया
आजादेश । [9]निस्पतिना राज्ञा सह उप प्रेत । अयस्मयादित्वेन भत्वात् ( पा १ ४ २० ) विशो
जल्यामान , तेनानवग्रह , “परादिश्छन्दसि° ” (पा ६ २ १९९ ) इत्युत्तरपदाद्युदात्तत्वम् ।
[9]अमुम् अपरुध्यमान वीरसिंहवर्माण [9]राजानम् [9]अभि इममभिमुखीकृत्येममनपरुद्ध कर्तुमुप प्रेतेति ।　२०
मारुती पादि । मरुता राज्ञा च विशामधिपतित्वात् [9]विशा [9]राष्ट्रेण समृद्धम् [11]एन करोति,
एत मन्त्रसामर्थ्यात् । अथ तान् पासून् सचरे अपरोद्धुर्मार्गे परावपति । अत्र य यजमानो द्वेष्टि त
मनसा ध्यायति, अथ चरुणा यजेतेति । एवमपरुध्यमान [12]अनपरुद्धो भवति ॥

६ त१ प२ मै४— प्रमाशी । ७ मै४— अस्तु । ८ त१— °निगृह्णीते । ९ त१ मै ल— ‘प्रजा ’
नास्ति । १० त१— भवत्विति । ११ त१ मै ल— एव । १२ प२— अपरुद्ध मै४— अनपरोध्य ।　२५

प्रेतं मरुतः ( २ ) सुदानव एना विश्पतिनाऽभ्यमुं राजानमित्याह मारुती वै विड्ज्येष्ठो विश्पतिर्विशैवैनं राष्ट्रेण समर्धयति यः परस्ताद्ग्राम्यवादी स्यात् तस्य गृहाद्व्रीहीना हरेच्छुक्लाꣳश्च कृष्णाꣳश्च वि चिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवाव गच्छत्य( ३ )वगताऽस्य विडनवगतं
५ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं वै राष्ट्रमुभे एव विशं च राष्ट्रं

प्रेति । इत । मरुतः ( २ ) । सुदानव इति सु-दानवः । एना । विश्पतिना । अभीति । अमुम् । राजानम् । इति । आह । मारुती । वै । विट् । ज्येष्ठः । विश्पतिः । विशा । एव । एनम् । राष्ट्रेण । समिति । अर्धयति । यः । परस्तात् । ग्राम्यवादीति ग्राम्य-वादी । स्यात् । तस्य । गृहात् । व्रीहीन् । एति । हरेत् । शुक्लान् । च । कृष्णान् । च । वीति । चिनुयात् । ये । शुक्लाः ।
१० स्युः । तम् । आदित्यम् । चरुम् । निरिति । वपेत् । आदित्या । वै । देवतया । विट् । विशम् । एव । अवेति । गच्छति ( ३ ) । अवगतेत्यव-गता । अस्य । विट् । अनवगतमित्यनव-गतम् । राष्ट्रम् । इति । आहुः । ये । कृष्णाः । स्युः । तम् । वारुणम् । चरुम् । निरिति । वपेत् । वारुणम् । वै । राष्ट्रम् । उभे इति । एव । विशम् । च । राष्ट्रम् ।

अथ अपरुद्धराष्ट्रावगतये इष्ट्यन्तरं विदधाति– 'यः परस्तात्' इति ॥ [१३]ग्राम्ये पूर्वमुक्ते
१५ पश्चाद्ग्रामप्रधानपुरुषतया ग्रामहितानां वक्ता यः तस्य गृहात् व्रीहीन् आहृत्य शुक्लकृष्ण-विवेकेन[१४] शुक्लान् आदित्यं चरुं निर्वपेत् । "त्यान्नु क्षत्रियान्" ( तैस २·१ ११ ) इति पुरोनुवाक्या, "न दक्षिणा" (तैस २·१ ११) इति याज्या । [१५]तस्या अप्यादित्यत्वात्[१५] आदित्यात्या [१६]विशोऽवगत्यै भवति । अवगतेति । अथ आहुः–एवमनेन चरुणा अस्य अपरुद्धस्य विट् अवगता लब्धा भवति, राष्ट्रं तु अनवगतम् एव इति । तस्मात् कृष्णान् व्रीहीन् वारुणं
२० चरुं निः वपेत् । तत्रास्य [१७]वारुणत्वात् वारुणस्य राष्ट्रस्यावगत्यै भवति । तस्मादेवमुभयोः कृतयोः विशं [१८]राष्ट्रं च कृते अपि अव गच्छति । "इमं मे वरुण", "तत्त्वा यामि" ( तैस २·१·११ ) इत्यस्य याज्यानुवाक्ये ॥

१३. पं२– ग्राम्ये, मे४–ग्रामे । १४. तं१– °विवेके । १५–१५ तं१– तस्या स्यादि°, मे४– तत्रास्यादि° । १६. तं१,८– विशोऽवगत्यै (?) । १७ पं२– वरुणत्वात् । १८. तं१,८–१५ 'राष्ट्रं' नास्ति ।

चावं गच्छति यदि नावगच्छेदिदमहमादित्येभ्यो भागं निर्वपाम्यामुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या एवैनं भागधेयं प्रेप्सन्तो विशमवं (४) गमयन्ति यदि नावगच्छेदाश्वत्थान् मयूखान्त्सप्त मध्यमेषायामुप हन्यादिदमहमादित्यान् बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्धवीरा विशमवं

च । अवेति । गच्छति । यदि । न । अवगच्छेदित्यव-गच्छेत् । इमम् । अहम् । आदित्येभ्यः । ५ भागम् । निरिति । वपामि । एति । अमुष्मात् । अमुष्यै । विशः । अवगन्तोरित्यव - गन्तो । इति । निरिति । वपेत् । आदित्याः । एव । एनम् । भागधेयमिति भाग-धेयम् । प्रेप्सन्त इति प्र-ईप्सन्तः । विशम् । अवेति (४) । गमयन्ति । यदि । न । अवगच्छेदित्यव-गच्छेत् । आश्वत्थान् । मयूखान् । सप्त । मध्यमेषायामिति मध्यम-ईषायाम् । उपेति । हन्यात् । इदम् । अहम् । आदित्यान् । बध्नामि । एति । अमुष्मात् । अमुष्यै । विशः । अवगन्तोरित्यव-गन्तोः । १० इति । आदित्याः । एव । एनम् । बद्धवीरा इति बद्ध-वीराः । विशम् । अवेति ।

यदीत्यादि ॥ अथैव कृतेऽपि यागे ^१यदि राष्ट्रं ^१न ^१अवगच्छेत् न लभेत ततः 'इममहम्' इत्यादिना मन्त्रेण पुनरादित्येभ्यः ^१निर्वपेत् । अथ निरुप्योपनमति[१९] न ससादयति, अथावगते राष्ट्रे ससादयति । अत्र "यज्ञो देवानाम्" (तैस २-१-११), "आदित्यानामवसा" (तैस २ १ ११) इति याज्यानुवाक्ये । अथ निरुप्यानासादनस्य प्रयोजनमाह— ^१आदित्याः ^१एव १५ ^१एनं ^१भागधेयं ^१प्रेप्सन्त ^१विशम् [२०]^१अव ^१गमयन्ति इति[२०] । न ह्ययमनवगते राष्ट्रे निर्विशे वा हविः ससादयति । तस्माद्धवि प्रेप्सया शीघ्रं विशं राष्ट्रं चावगमयति । मन्त्रस्तु व्याख्यायते— ^१इमं भागधेयम् ^१आदित्येभ्यः [२१]हविः ^१निर्वपामि इति । ^१अमुष्मात् अपरोद्धुर्वीरसिंहवर्मणः सकाशात् ^१अमुष्यै अमुष्या [२२]देवकोट्टकाया ^१विशः ^१अवगन्तोः [२३]अवगमात् अलाभात् । 'अमुष्मात्' 'अमुष्यै' इति च सर्वविशेषार्थं सामान्यपदं, नामविशेषं चात्र निर्दिशेत् । "भावलक्षणे २० स्थेण्°" (पा. ३ ४ १६) इति तोसुन्, "तादौ च°" (पा ६.२.५०) इति गतेः प्रकृतिस्वरत्वम् ॥

अथैवं कृतेऽपि ^१यदि ^१न ^१अवगच्छेत् राष्ट्रं विड्वा, ततः ^१आश्वत्थान् अश्वत्थविकारान् ^१मयूखान् शङ्कून् ^१सप्त त्रीषे शकटे ^१मध्यमेषायाम् ^१उप ^१हन्यात् 'इदमहम्' इति मन्त्रेण ।

१९. मै४ र— °पनमति । २०–२०. र—अवगतं यन्ति । २१. तं१—'हवि' नास्ति । २५
२२. मै४— देवकोकाया । २३ तं मै र— अवगमनात् ।

गमयन्ति यदि नावगच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्त्सं नह्येदन-
परुध्यमेवावं गच्छत्याश्वत्था भवन्ति मरुतां वा एत( ५ )दोजो यदश्वत्थ ओजसैव
विशमवं गच्छति सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमवं गच्छति ॥१॥

[ धारयद्वतो मरुतो गच्छति विशामैतदष्टादश च ]।

५ गमयन्ति। यदि। न। अवगच्छेदित्यव गच्छेत्। एतम्। एव। आदित्यम्। चरुम्। निरिति। वपेत्। इध्मे। अपीति। मयूखान्। समिति। नह्येत्। अनपरुध्यमित्यनप-रुध्यम्। एव। अवेति। गच्छति। आश्वत्था। भवन्ति। मरुताम्। वै। एतत्। ओजः। यत्। अश्वत्थ। ओजसा। एव। विशम्। अवेति। गच्छति। सप्त। भवन्ति। सप्तगणा इति सप्त गणा.। वै। मरुत। गणश इति गण श। एव। विशम्। अवेति। गच्छति ॥ १ ॥

१० [ काम ११६ ]

" अनुदात्तादेश्च " ( पा ४.३.१४० ) इत्यश्वत्थशब्दादञ्। [24]अत्राय प्रयोग †– प्रागीपमनो ऽवस्थाप्य तत्र मध्यमेपाया मध्यममुपहत्य त्रीन् प्रतीचश्चीन् प्राचः आयातयति। अथैव कृते [*-v]बद्धवीरा [25]अनेन कर्मणा अत्र प्रतिनिबद्धवीर्या [25] [v]आदित्या आत्मवीर्यमोक्षार्थं [v]विशम् [v]अव [v]गमयन्ति राष्ट्र च। मन्त्रार्थस्तु– 'इदम्' इति क्रियाविशेषणम्। [v]अहम् [v]आदित्यान् [v]इद

१५ [v]बध्नामि। अमुष्मादित्यादि। गतम् ॥

[26]अथैन कृते [v]यदि [v]न [v]अवगच्छेत् राष्ट्र विड्वा, [v]एतम् अनन्तर निहितम् [v]आदित्य [v]चरु [v]नि [v]वपेत्। [v]इध्मे [v]अपि [27] [v]मयूखान् [v]सनह्येत् [27], सप्ताश्वत्थान् सहेध्मेनाभ्यादध्यात्। एव कृतेऽवश्यम्* [v]अनपरुध्य पुन [28]केनचिदपि [29]अवरोद्धुमशक्य राष्ट्र विश च [v]अव [v]गच्छति लभते। पूर्ववदन्तोदात्तत्वम्। आश्वत्था इत्यादि। गतम्। मरुतामोजस्त्वमस्युच्छ्रितत्वेन [30]मरुता

२० बलस्य व्यक्तिस्थानत्वात्[30]। गणश इति। " सङ्ख्यैकवचनाच्च° " ( पा ५.४.४३ ) इति शस्। " बहुगण° " ( पा १ १ २३ ) इति सङ्ख्यासंज्ञा। [31]गणगण विश [32-v]अव [v]गच्छति[32]।

इति द्वितीये तृतीये प्रथमोऽनुवाक ।

[24] मै४–तत्रायम्। † [ द्र बौश्रौ १३ २२ ]। *-* [ 'बद्धवीरा' इत्यारभ्य 'एवकृतेऽवश्यम्' इत्यन्त भाग तै–पुस्तके नास्ति। ]। [25-25] मै– 'अनेन कर्मणा अत्र प्रतिबद्धवीर्या' नास्ति। [26]

२५ मै–एवम्। [27-27] मै–'मयूखान् संनह्येत्' नास्ति। [28] मै४–केश्चिदपि। [29] मै८– उपरोद्धुम्। [30-30] तै१ मै८– मरुतामचञ्च्यक्तिस्थानत्वात्, पं२– मरुतामचञ्चस्य व्यक्तस्थानत्वात्। [31] तै१– गणम्। [32-32] मै८– अवगमयति।

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत् तयैवेष्वमृतमदधाद्यो मृत्योर्बिभीयात् तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये ( १ ) प्रति तिष्ठति घृते भवत्यायुर्वै

देवाः । वै । मृत्योः । अबिभयुः । ते । प्रजापतिमिति प्रजा पतिम् । उपेति । अधावन् । तेभ्यः । ५
एताम् । प्राजापत्यामिति प्राजा - पत्याम् । शतकृष्णलामिति शत - कृष्णलाम् । निरिति । अवपत् ।
तया । एव । एषु । अमृतम् । अदधात् । यः । मृत्योः । बिभीयात् । तस्मै । एताम् । प्राजापत्यामिति
प्राजा-पत्याम् । शतकृष्णलामिति शत - कृष्णलाम् । निरिति । वपेत् । प्रजापतिमिति प्रजा पतिम् ।
एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । आयुः । दधाति । सर्वम् ।
आयुः । एति । शतकृष्णलेति शत - कृष्णला । भवति । शतायुरिति शत - आयुः । पुरुषः । शतेन्द्रिय १०
इति शत इन्द्रियः । आयुषि । एव । इन्द्रिये (१) । प्रतीति । तिष्ठति । घृते । भवति । आयुः । वै ।

देवा वा इत्यादि । शतकृष्णलामिति । शत स्वर्णानि कृष्णलानि कृष्णलतुलितानि [1]परि-माणान्यस्या समष्टे [1] सा तथोक्ता । [2]तया देवेष्वमृतत्वम् [2]अदधात् प्रजापति । गतमन्यत् ॥

शतकृष्णला निर्वपेदिति । अथ क्रम – " देवस्य त्वा सवितु प्रसवे इति प्रतिपद कृत्वा प्रजापतये जुष्ट निर्वपामि इति चतुरो मुष्टीन् कृष्णलानिर्वपति । हविष्कृता वाच विसृज्य गार्हपत्ये १५
[3]ऽग्र पात्रमधिश्रित्य तिर पवित्रमाज्यमानीय तिर पवित्र कृष्णलान्यानयति " ( बौश्रौ १३ २३ ) ।
तदिदमुक्त ' घृते भवति ' इत्यादि ॥ [4]समीची अनुक्रमेण सगते । " अथाज्य निर्वपति, अथाज्यम् अधिश्रयति, उभय पर्यग्निकृत्वा अन्तर्वेद्यासादयति " ( बौश्रौ १३ २३ ) । धर्ममात्र श्रपण, न विक्लेदनाय ॥

[8]मृत्योर्भीतस्यायुरर्थे निर्वपेच्छतकृष्णलाम् ॥ ८ ॥ २०
ब्रह्मवर्चसकामो य ॥ सौर्यं चरुमाचरेत् ।
हिरण्यकाम कुर्वीत द्वासेयादिहविस्त्रयम् ॥ ९ ॥
हिरण्यलाभे तन्नाशेऽप्येतदेव समाचरेत् ।
सोमवामी ॥ सोमेन्द्र चरु [9]श्यामाकमाचरेत् ॥ १० ॥
[10]पयर्यो द्वाग्ने दात्र इत्यादित्रयमाचरेत् । २५
अनुवाके द्वितीयेऽर्थो एतावन्त उदीरिता ॥
*हिरण्यगर्भ इत्यत्राक्षरार्थ स्पष्टमीरित ॥ ११ ॥

१–१ पर मै– परिमाणमस्या समभीष्टम् । [2]. तं१ ल– नव° ।

८. आ हा.– मृत्योर्भीतो आयु°, क ङ भृ हो१– मृत्योर्भीतस्त्वायु° । ९. अ उ क ओ ना पा शृ हा– श्यामाकमाचरेत् । १०. हा– पयर्ये, आ क– पयर्थे । *[ तैस २ २ १२ ] । ३०

घृतममृत॑ᳲ हिर॑ण्यमायु॑श्चै॒वास्मा॑ अ॒मृतं॑ च स॒मीची॑ दधाति च॒त्वारि॑च॒त्वारि॑ कृष्ण॒-
ला॒न्यव॑ द्यति चतुरव॒त्तस्याऽऽप्त्या॑ एक॒धा ब्र॒ह्मण॒ उप॑ हरत्येक॒धैव यज॑मान॒ आयु॒-
र्दधात्य॒सावा॑दि॒त्यो न व्य॑रोचत॒ तस्मै॑ दे॒वाः प्राय॑श्चित्तिमैच्छ॒न् तस्मा॑ ए॒तᳲ सौ॒र्यं च॒रुं
निर॑वप॒न् तेनै॒वास्मि॒न् ( २ ) रुच॑मदधु॒र्यो ब्र॑ह्मवर्च॒सका॑मः॒ स्यात् तस्मा॑ ए॒तᳲ सौ॒र्यं च॒रुं
५ निर्व॑पेद॒मुमे॒वाऽऽदि॒त्यᳲ स्वेन॑ भाग॒धेये॒नोप॑ धाव॒ति स ए॒वास्मि॑न् ब्रह्मवर्च॒सं द॑धाति
ब्रह्मवर्च॒स्ये॑व भ॑वत्यु॒भय॑तो रु॒क्मौ भ॑वत उ॒भय॑त ए॒वास्मि॒न् रुचं॑ दधाति प्र॒या॒जेप्र॑याजे

घृ॒तम्। अ॒मृत॑म्। हिर॑ण्यम्। आयुः॑। च॒। ए॒व। अ॒स्मै॒। अ॒मृत॑म्। च॒। स॒मीची॒ इति॑।
द॒धा॒ति॒। च॒त्वारि॑च॒त्वारीति॑ च॒त्वारि॑-च॒त्वारि॑। कृष्णला॑नि। अवेति॑। द्य॒ति॒। च॒तु॒र॒व॒त्तस्येति॑
चतुः-अ॒व॒त्तस्य॑। आप्त्यै॑। ए॒क॒धेत्ये॑क-धा। ब्र॒ह्मणे॑। उपेति॑। ह॒र॒ति॒। ए॒क॒धेत्ये॑क-धा। ए॒व। यज॑माने।
१० आयुः॑। द॒धा॒ति॒। अ॒सौ। आ॒दि॒त्यः। न। वीति॑। अ॒रो॒च॒त॒। तस्मै॑। दे॒वाः। प्राय॑श्चित्तिम्।
ऐ॒च्छ॒न्। तस्मै॑। ए॒तम्। सौ॒र्यम्। च॒रुम्। निरिति॑। अ॒व॒प॒न्। तेन॑। ए॒व। अ॒स्मि॒न् ( २ )।
रुच॑म्। अ॒द॒धुः॒। यः। ब्र॒ह्म॒व॒र्च॒सका॑म॒ इति॑ ब्रह्मवर्च॒स-का॒मः। स्यात्। तस्मै॑। ए॒तम्।
सौ॒र्यम्। च॒रुम्। निरिति॑। व॒पे॒त्। अ॒मुम्। ए॒व। आ॒दि॒त्यम्। स्वेन॑। भा॒ग॒धेये॒नेति॑ भाग-धेये॑न।
उपेति॑। धा॒व॒ति॒। सः। ए॒व। अ॒स्मि॒न्। ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम्। द॒धा॒ति॒।
१५ ब्र॒ह्म॒व॒र्च॒सीति॑ ब्रह्म-व॒र्च॒सी। ए॒व। भ॒व॒ति॒। उ॒भय॑तः। रु॒क्मौ। भ॒व॒तः॒। उ॒भय॑तः। ए॒व।
अ॒स्मि॒न्। रुच॑म्। द॒धा॒ति॒। प्र॒या॒जेप्र॑याज॒ इति॑ प्र॒या॒जे-प्र॒या॒जे।

चत्वारिचत्वारीत्यादि ॥ सर्वावदानार्थं वाप्सा। एकस्मिन् अवदाने [3]चत्वारिचत्वारि गृह्णीयात्। तद्यथा-"अष्टौ देवताया अवद्यति, चत्वारि स्विष्टकृते, अष्टाविडायै, चत्वारि अवान्तरेडायै, एकं प्राशित्राय, एकं यजमानाय, आज्येन जुह्वतो [3]जुह्वति [4]आज्येन [5]प्राश्नन्त
२० प्राश्नन्ति[5]" (बौश्रौ १३ २३)। अथ चतुर्धाकरणकाले शिष्टान्येकयोद्धृत्य [9]ब्रह्मणे [9]उप [9]हरति, इतरेषां भक्षापनयनम् ॥

असावादित्य इत्यादि ॥ गतम् ॥

[6]उभयत इत्यादि[6] ॥ सुवर्णरजतौ [7]रुक्मौ उपकल्प्य शृत [8]हि हविः ताभ्यां[8] पर्युपास्या तयोर्मध्यमादधाति, अपोह्य रुक्मौ चरुणा प्रचार। [9]उभयत उभयोरपि पूर्वोत्तरयोरापुपो
२५ [9]अस्मिन् यजमाने [9]रुच [9]दधाति[9]। यद्वा- उभयोर्लोकयो इहामुत्र चास्मिन् रुच दधाति ॥

३. तै१- जुह्वति। ४. मै-आज्य च। ५-५. तै१ मै१- प्राश्नन्त. प्राश्नात। ६-६. तै१- 'उभयत इत्यादि' नास्ति। ७ तै१- रुक्मौ। ८-८ मै४- हवि स्तास्याम्। ९-९. तै१- रुचा दधाति, मै१- चरुं दधाति।

कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्मवर्चसमवं रुन्ध आग्नेयमष्टाकपालं निर्वपेत् सावित्रं द्वादशकपालं भूम्यै ( ३ ) चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमेदिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनं॰ हिरण्यं नमति वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एता( ४ )मेव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै　　५

हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्-

---

कृष्णलम् । जुहोति । दिग्भ्य इति दिक्-भ्य । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म वर्चसम् । अवेति । रुन्धे । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । सावित्रम् । द्वादशकपालमिति द्वादश-कपालम् । भूम्यै (३) । चरुम् । यः । कामयेत । हिरण्यम् । विन्देय । १०
हिरण्यम् । मा । उपेति । नमेत् । इति । यत् । आग्नेय । भवति । आग्नेयम् । वै । हिरण्यम् । यस्य । एव । हिरण्यम् । तेन । एव । एनत् । विन्दते । सावित्रः । भवति । सवितृप्रसूत इति सवितृ-प्रसूतः । एव । एनत् । विन्दते । भूम्यै । चरुः । भवति । अस्याम् । एव । एनत् । विन्दते । उपेति । एनम् । हिरण्यम् । नमति । वीति । वै । एष । इन्द्रियेण । वीर्येण । ऋध्यते । यः । हिरण्यम् । विन्दते । एताम् ( ४ ) । एव । निरिति । वपेत् । हिरण्यम् । वित्त्वा । न । १५
इन्द्रियेण । वीर्येण । वीति । ऋध्यते । एताम् । एव । निरिति । वपेत् । यस्य । हिरण्यम् । नश्येत् । यत् । आग्नेयः । भवति । आग्नेयम् । वै । हिरण्यम् । यस्य । एव । हिरण्यम् । तेन । एव । एनत् । विन्दति । सावित्र । भवति । सवितृप्रसूत इति सवितृ-प्रसूत. । एव । एनत् ।

---

प्रयाजेप्रयाजे इति ॥ पञ्च सुवर्णानि कृष्णलान्युपकल्प्य[10] प्रयाजेप्रयाजे [11]एकैकं कृष्णलम् अन्यनधाय जुहोति । दिग्भ्य इति । दिशामपि पञ्चत्वात् ।　　२०

आग्नेयमष्टाकपालमित्यादि ॥ गतम् ॥

वि वा एष इत्यादि ॥ गतम् । हिरण्य वित्त्वा लब्ध्वा एता निः वपेत् ॥

एतामेवेति ॥ यस्य हिरण्य नश्येत् [12]स नष्टस्य हिरण्यस्य[12] लाभाय एता निर्वपेत् । विन्दतिः स्मरितेत् । तत्र नष्टस्य लाभे कर्त्रभिप्रायस्य [13]फलान्तरस्य अपूर्वस्य[13] अभावादात्मनेपदाभावः ।　　२५

---

१०. तै१ मै ल– उपकल्प्य । ११. त१ मै ल– एकम् । १२–१२. मै–प्रसङ्ग नष्टस्य, तै१–नष्टस्य, तै१ ल– 'स नष्टस्य हिरण्यस्य' नास्ति । १३–१३ तै१, मै– पूर्वस्य, ल– 'फलान्तरस्य अपूर्वस्य' नास्ति ।

विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दतीन्द्र(५)स्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ्व्यार्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतꣳ सौमेन्द्रꣳ श्यामाकं चरुं निरवपत् तेनैवास्मिन्निन्द्रियꣳ सोमपीथमदधाद्वि वा एष इन्द्रियेण सोमपीथे-
५ नर्ध्यते यः सोमं वमिति यः सोमवामी स्यात् तस्मा ( ६ ) एतꣳ सौमेन्द्रꣳ श्यामाकं

निन्दति। भूम्यै। चरु। भवति। अस्याम्। वै। एतत्। नश्यति। यत्। नश्यति। अस्याम्। एव। एनत्। निन्दति। इन्द्रं ( ५ )। त्वष्टुः। सोमम्। अभीषहेत्यभि-सहा। अपिबत्। स। विष्वङ्। वीति। आर्छत्। स। इन्द्रियेण। सोमपीथेनेति सोम पीथेन। वीति। आर्ध्यत। स। यत्। ऊर्ध्वम्। उदवमीदित्युत्-अवमीत्। ते। श्यामाकाः। अभवन्। स। प्रजापतिमिति
१० प्रजा-पतिम्। उपेति। अधावत्। तस्मै। एतम्। सोमेन्द्रम्। श्यामाकम्। चरुम्। निरिति। अवपत्। तेन। एव। अस्मिन्। इन्द्रियम्। सोमपीथमिति सोम-पीथम्। अदधात्। वीति। वै। एष। इन्द्रियेण। सोमपीथेनेति सोम-पीथेन। ऋध्यते। यः। सोमम्। वमिति। यः। सोमवामीति सोम-वामी। स्यात्। तस्मै ( ६ )। एतम्। सोमेन्द्रम्। श्यामाकम्।

इन्द्रस्त्वष्टुरित्यादि ॥ अभीषहा प्रसह्य सोमम् अपिबत्। सहते क्विपि “नहिवृति-
१५ वृषि॰” (पा ६ ३ ११६) इत्युपसर्गस्य दीर्घत्वम्। शक्तिमभिभूय अयथाबलं समग्रमपिबत्। तत स सोमस्तेन पीतः विष्वङ् नानागमनः उपरिष्टादधस्ताच्च वि आर्छत् निर्निर्गतोऽभवत्। तत स इन्द्र इन्द्रियेण सोमपीथेन पीतेन सोमेन व्यृद्धोऽभवत्। तत्र स इन्द्रः यत् ऊर्ध्वम् उत् अवमीत्, ते श्यामाका अभवन्। वर्षाप्रभवो धान्यविशेषः श्यामाकः। अथ स इन्द्रः प्रजापतिम् उपेत्य इत्थमस्ति, प्रतिविधातव्यमित्यब्रवीत्। तस्मा इत्यादि। गतम्।
२० सोमेन्द्रमिति। “नेन्द्रस्य परस्य” (पा ७ ३·२२) इति उत्तरपदस्य वृद्ध्यभावः। सोमशब्दस्य तु पूर्वपदस्य नेष्यते वृद्धिः। श्यामाकमिति। “अनुदात्तादेश्च” (पा ४ ३ १४०) इत्यस्य अपवादः, “कोपधाच्च” (पा ४ ३ १३७) इत्यण् ॥

यः सोमवामी स्यादिति ॥ वैदिकस्य वमने चरुर्विधीयते, न विरेकार्थस्य लौकिकस्य। आहुश्च– “पानव्यापच्च तद्वत्” (मीसू ३ ४ ३२) इति। तत्रापि यजमानस्य वमने न
२५ ऋत्विजामिति “सर्वार्थत्वाविशेषात्” (मीसू ३ ४ ३४) इत्यत्र प्रतिपादितम्। गतमन्यत्। एव वाव “न सोम इति। उक्तसमोमपरिणाम गत ॥

१४. तै १ मे– ‘प्रसह्य’ नास्ति। १५. मे–यथाबलम्। १६ म– ‘इन्द्र’ नास्ति। १७ मे– [illegible]। १८ तै १ मै ८– [illegible]। १९. मे सोमस्य। २०. मे ८– वैदिकस्य। २१. मे– [illegible]। २२. मे ८– [illegible]। २३ तै १– ‘न’ नास्ति। २४ तै १ मे ८– ‘परिणाम’।

चरुं निर्वपेत् सोमं चैवेन्द्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियꣳ सोमपीथं धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते यत् सौम्यो भवति सोमपीथमेवाव रुन्द्धे यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्द्धे श्यामाको भवत्येष वाव स सोमः (७) साक्षादेव सोमपीथमव रुन्द्धेऽग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति ५ वृद्धानिन्द्रः प्र यच्छति दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ

चरुम्। निरिति। वपेत्। सोमम्। च। एव। इन्द्रम्। च। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। तौ। एव। अस्मिन्। इन्द्रियम्। सोमपीथमिति सोम पीथम्। धत्त। न। इन्द्रियेण। सोमपीथेनेति सोम-पीथेन। वीति। ऋध्यते। यत्। सौम्य। भवति। सोमपीथमिति सोम-पीथम्। एव। अवेति। रुन्द्धे। यत्। ऐन्द्र। भवति। इन्द्रियम्। वै। सोमपीथ इति १० सोम-पीथ.। इन्द्रियम्। एव। सोमपीथमिति सोम-पीथम्। अवेति। रुन्द्धे। श्यामाक। भवति। एष.। वाव। स.। सोम· (७)। साक्षादिति स अक्षात्। एव। सोमपीथमिति सोम-पीथम्। अवेति। रुन्द्धे। अग्नये। दात्रे। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। निरिति। वपेत्। इन्द्राय। प्रदात्र इति प्र-दात्रे। पुरोडाशम्। एकादशकपालमित्येकादश कपालम्। पशुकाम इति पशु-काम। अग्नि। एव। अस्मै। पशून्। प्रजनयतीति प्र-जनयति। १५ वृद्धान्। इन्द्र। प्रेति। यच्छति। दधि। मधु। घृतम्। आप। धाना। भवन्ति। एतत्। वै। पशूनाम्। रूपम्।

अग्नये दात्र इत्यादि॥ तृतीय ससृष्टहनि प्राजापत्यम्। "उदात्तयण'" (पा ६ १ १७४) इति चतुर्थ्या उदात्तत्वम्॥

दधि मध्वित्यादि॥ अत्राय *प्रयोग — "देवस्य त्वा इति प्रतिपद कृत्वा अग्नये दात्रे २० जुष्टम् इति चतुरो मुष्टीन् व्रीहीणा निर्वपति। अथैवमेव इन्द्राय प्रदात्रे, एव व्रीहीणाम्। अथैवमेव प्रजापतये जुष्टम् इति चतुरो यवाना, तेषा व्रीहिष्वेव [२५]हविष्कृतमुद्वादयति, उपोवच्छन्ते [२६]यवान्, हविष्कृता वाच [२७]विसृजन्ते। समान कर्माऽऽधिश्रयणात्। [२८]अध्युष्य दक्षिणार्धे गार्हपत्यस्य अष्टौ कपालान्युपदधाति, [२९]एकादशोत्तरत अथैनान् यवानुलूखले परिक्षुद्य गार्हपत्ये कपालमधिश्रित्य धाना भर्जयन्ति, यदैते हवींषि अभिपृणक्ति तदेता धानाश्चतुष्टयेन [३०]उपसृजति २५

*(द्र. बौश्रौ १३ २७)। २५. मै४–हविष्कृतमुद्वासयन्ति। २६ ल–यावत्। २७ मै४ ल–विसृजते। २८ मै–अधिवाप्य। २९. मै–एकादेशो°। ३०. मै–उपसृजति।

रूपेणैव पशूनव रुन्द्धे पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः (८) समृद्ध्यै प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्र जनयत्यात्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव
५ मृत्योर्निष्क्रीय पशूनव रुन्द्धे ॥ २ ॥

[ इन्द्रियेऽस्मिन्भूम्या एतामिन्द्र स्यात् तस्मै सोमो बहुरूपा हि पशव एकंचत्वारिंशच्च । ]

रूपेण । एव । पशून् । अवेति । रुन्द्धे । पञ्चगृहीतमिति पञ्च गृहीतम् । भवति । पाङ्क्ता । हि । पशवः । बहुरूपमिति बहु रूपम् । भवति । बहुरूपा इति बहु-रूपा । हि । पशवः (८) । समृद्ध्या इति सम्-ऋद्ध्यै । प्राजापत्यमिति प्राजा-पत्यम् । भवति । प्राजापत्या इति
१० प्राजा-पत्या । वै । पशवः । प्रजापतिरिति प्रजा पतिः । एव । अस्मै । पशून् । प्रेति । जनयति । आत्मा । वै । पुरुषस्य । मधु । यत् । मधु । अग्नौ । जुहोति । आत्मानम् । एव । तत् । यजमान । अग्नौ । प्रेति । दधाति । पङ्क्त्यौ । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवतः । पाङ्क्तः । पुरुषः । पाङ्क्ताः । पशवः । आत्मानम् । एव । मृत्योः । निष्क्रीयेति नि-क्रीय । पशून् । अवेति । रुन्द्धे ॥ २ ॥

१५ [ मैस २ २ १३, कास ११ ४, १, २ ]

दध्ना मधुना घृतेनाद्भि " इति । एव [v]पञ्चगृहीत [v]भवति । पाङ्क्ता इति पङ्क्तिप्रभवा । पङ्क्ति शब्द उत्सादि (पा ४ १ ८६) । बहुरूपमिति । दध्यादीना नानारूपत्वात् । " बहोर्नञ्वत् " (पा ६ २ १७५ ) इति उत्तरपदान्तोदात्तत्वम् । प्राजापत्यमिति । तृतीयस्य प्राजापत्यत्वात् ॥

अथ मधुहोम दूषयति– ' आत्मा ' इति ॥ [v]पुरुषस्य [v]आत्मा [v]मधु [31]मन्तृत्वात् ।
२० [31]मन्यतेर्मधु, उप्रत्यये धकारोऽन्तादेशो विधीयते । तस्मात् [v]मधुना [v]अग्नौ होमेन [v]आत्मानम् [v]एव [v]अग्नौ [v]यजमान प्रक्षिपति, तस्माद्युक्तम् [32]इदम् इति । परिहरति– पङ्क्त्याविति । " घृत न पूतम् ", " उभे सुश्चन्द्र सर्पिष " (तैस २ २ १२) इति प्राजापत्यस्य [33]याज्यानुवाक्ये [v]भवत । आत्मानमेवेति । [34]याज्यानुवाक्यालपङ्क्त्यात्मन पुरुषस्याग्नावनुप्रवेशात् अन्यात्मकात् [v]मृत्यो [v]आत्मान मधुहोमेनाग्नौ प्रविष्ट [v]निष्क्रीय [v]पशून् [v]अव [v]रुन्द्धे ।
२५ इति द्वितीये तृतीये द्वितीयोऽनुवाक ॥

३१. मै८– मन्तृत्वात् । ३२. तै१ मै४ ह– मन्त्रे° । ३३ मै स– मधुना । ३४ तै१ मै ह– 'इदम्' नास्ति । ३५ मै८– पुरोनुवाक्ये । ३६ मै८– याज्यानुवाक्यात्मकं पङ्क्त्या° ।

दे॒वा वै स॒त्रमा॑सत॒र्द्धिप॑रिमितं॒ यश॑स्कामा॒स्तेषा॒ꣳ॒ सोम॒ꣳ॒ राजा॑नं॒ यश॑ आर्च्छ॒त् स गि॒रि-मुदै॑त् तम॒ग्निरनूदै॑त् ताव॒ग्नीषोमौ॒ सम॑भवतां॒ तावि॑न्द्रो य॒ज्ञवि॑भ्रष्टोऽनु॒ परै॑त् ताव॑ब्रवीद्-या॒जय॑तं॒ मेति॒ तस्मा॑ ए॒तामिष्टिं॒ निर॑वपताम॒ग्नेयम॒ष्टाक॑पालमै॒न्द्रमेका॑दशकपालꣳ॒ सौ॒म्यं च॒रुं तयै॒वास्मि॒न् तेज॑ (१) इ॒न्द्रि॒यं ब्र॑ह्मवर्च॒सम॑धत्ता॒म्

दे॒वाः । वै । स॒त्रम् । आ॒स॒त॒ । ऋद्धिप॑रिमित॒मित्यृद्धि॑ - प॑रिमितम् । यश॑स्कामा॒ इति॒ यश॑ - का॒माः । तेषा॑म् । सोम॑म् । राजा॑नम् । यश॑ । आ॒र्च्छ॒त् । सः । गि॒रिम् । उदिति॑ । ऐ॒त् । तम् । अ॒ग्निः । अनु॑ । उदिति॑ । ऐ॒त् । तौ । अ॒ग्नीषोमा॒वित्य॒ग्नी - सोमौ॑ । समिति॑ । अ॒भ॒व॒ता॒म् । तौ । इन्द्रः॑ । य॒ज्ञवि॑भ्रष्ट॒ इति॑ य॒ज्ञ - वि॒भ्र॒ष्टः॒ । अनु॑ । परेति॑ । ऐ॒त् । तौ । अ॒ब्र॒वी॒त् । या॒जय॑तम् । मा॒ । इति॑ । तस्मै॑ । ए॒ताम् । इष्टि॑म् । निरिति॑ । अ॒व॒प॒ता॒म् । आ॒ग्ने॒यम् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा - क॒पा॒ल॒म् । ऐ॒न्द्रम् । एका॑दशकपाल॒मित्येका॑दश - क॒पा॒ल॒म् । सौ॒म्यम् । च॒रुम् । तया॑ । ए॒व । अ॒स्मि॒न् । तेजः॑ (१) । इ॒न्द्रि॒यम् । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म - व॒र्च॒सम् । अ॒ध॒त्ता॒म् । ५ १०

देवा वै सत्रमासतेति ॥ ऋद्ध्या फलेन परिमितमविच्छिन्नं सत्रम् आसत, तादृशक्रतुविशेषमनुष्ठितवन्तः यशस्कामा देवाः । केचिदाहुः – सत्रासनं क्रतुविशेषः सत्रशब्देनोच्यते, तत्र 'गोपोषं पुष्णाति[1]' इतिवत् सामान्यवचनः आसिर्द्रष्टव्य इति । अन्ये त्वाहुः – आस्थानकर्मा आस्तिरिति[2] । तेषामित्यादि । गतम् । तेषाम् इति निर्धारणे षष्ठी । समभवतामिति । एकीभूतावेकमयं गतावित्यर्थः । तस्मा एताम् इति । इन्द्राय[3] इष्टिं नि अवपताम् अग्नीषोमौ त्रिहविष्काम् । गतमन्यत् ॥ १५

देवा इति ॥ अथ तृतीयेऽनुवाके यज्ञविभ्रष्टादीनामिष्टयो विधातव्याः । तत्रादौ [11]यज्ञविभ्रष्टेष्टिविधानाय[11] प्रस्तौति– 'देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामास्तेषाꣳ सोमꣳ राजानं यश आर्छत् स गिरिमुदैत् तमग्निरनूदैत् तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत् तावब्रवीद्याजयतं मेति तस्मा एतामिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं तयैवास्मिन् तेज इन्द्रियं ब्रह्मवर्चसमधत्ताम्' इति ॥ ऋद्ध्या काम्यमानेन यशोलक्षणेन फलेन परिमितं सत्रम् अनुष्ठितवन्तः । सन्ति सहस्रं सत्राणि, तेषु येन यशो लिप्यति तदन्वतिष्ठन् । तेषां देवानां मध्ये [12]फलीभूतं यशः सोमं [13]प्राप्नोत् । स च सोमोऽन्येषां यशो मा भूदिति मन्वानस्तेन यशसा सह गिरिं कञ्चिदुद्गुरुं [14]पर्वतमारोहत् । अग्निं च [15]सहसा तस्य[15] पृष्ठत एवाऽऽरोहत् । तौ द्वौ अग्नीषोमौ परस्परमैकमत्यं गतौ । तत तौ उभौ अनु फलरहित इन्द्रः चिरकालेन गत्वा मां फलाय याजयतम् इति [16]अवोचत् । तौ च तस्मै त्रिहविष्काम् इष्टिं निरवपताम् । तैस्त्रिभिर्हविर्भिस्तेजआदिकं [17]त्रयं लब्धम् ॥ २० २५

१ मै– पुष्णाते । २ मै४– आसिन् विषये आसीरिति । ३ त१ त२ मे– 'एताम्' नास्ति ।

११–११ आ ङ भृ– °विभ्रष्टेष्टिविधानाय । १२ ङ ने भृ हो१– फलभूतं । १३ ओ ना हा– प्रास, ने हो१– प्राप्नोति । १४ ■ ने भृ हो१– 'पर्वतम्' नास्ति । १५–१५ ओ ना– सह तस्य, इ– सहास्य । १६ ङ क ङ ने भृ हो– प्रार्थयामास । १७ ने हो१– त्रयमपि । ३०

यो य॒ज्ञवि॑भ्रष्टः॒ स्यात् तस्मा॑ ए॒तामिष्टिं॒ निर्व॑पेदाग्ने॒यम॒ष्टाक॑पालमै॒न्द्रमेका॑दशकपाल५ सौ॒म्यं च॒रुं यदा॑ग्ने॒यो भव॑ति॒ तेज॑ ए॒वास्मि॒न् तेन॑ दधा॒ति॒ यदै॒न्द्रो भव॑तीन्द्रि॒यमे॒वास्मि॒न् तेन॑ दधा॒ति॒ यत् सौ॒म्यो ब्र॑ह्मवर्च॒सं तेना॑ऽऽग्ने॒यस्य॑ च॒ सौ॒म्यस्य॒ चैन्द्रे॒ स॒मा॒श्ले॒षये॒त् तेज॑श्चै॒वास्मि॒न् ब्र॑ह्मवर्च॒सं च॑ स॒मीची॑ ( २ )

५ य । य॒ज्ञवि॑भ्रष्ट॒ इति॑ य॒ज्ञ वि॒भ्र॒ष्ट॒ । स्यात् । तस्मै॑ । ए॒ताम् । इष्टि॑म् । निरिति॑ । व॒पे॒त् । आ॒ग्ने॒यम् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा क॒पा॒ल॒म् । ऐ॒न्द्रम् । एका॑दशकपाल॒मित्येका॑दश क॒पा॒ल॒म् । सौ॒म्यम् । च॒रुम् । यत् । आ॒ग्ने॒य । भव॑ति । तेज॑ । ए॒व । अ॒स्मि॒न् । तेन॑ । द॒धा॒ति॒ । यत् । ऐ॒न्द्र । भव॑ति । इ॒न्द्रि॒यम् । ए॒व । अ॒स्मि॒न् । तेन । द॒धा॒ति॒ । यत् । सौ॒म्य । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । तेन॑ । आ॒ग्ने॒यस्य॑ । च॒ । सौ॒म्यस्य॑ । च॒ । ऐ॒न्द्रे । स॒मा॒श्ले॒ष॒ये॒दिति॑ सम्-आश्लेषयेत् । तेज॑ । च॒ । १० ए॒व । अ॒स्मि॒न् । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म-व॒र्च॒सम् । च॒ । स॒मीची॒ इति॑ ( २ ) ।

ब्रह्मवर्चस तेनेति ॥ [4]दधाति इत्येव ॥

आग्नेयस्य चेत्यादि ॥ कर्मण सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । आग्नेय सौम्य [5-V]च [V]ऐन्द्रे [V]समाश्लेषयेत्[5] समाश्लिष्टानि सहितानि सर्वाणि हवींषि अधिश्रयेत् । [6-V]तेज [V]च [V]ब्रह्मवर्चस [V]च [V]अस्मिन्[6] यजमाने यज्ञविभ्रष्टे [V]समीची सगते [7-V]दधाति । आग्नेयसौम्ययोर्वा [8]लेपौ । १५ इष्टिपशुसोमाना स्वकालेऽकरण निभ्रेष ॥

य इति ॥ अथ विधत्ते–'यो यज्ञविभ्रष्ट स्यात् तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेका दशकपाल९ सौम्य चरु यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चस तेन' इति ॥ इष्टिपशुसोमाना [18]स्वस्वकालेष्वननुष्ठान भ्रेषस्त भ्रंश मासस्येयमिष्टि ॥

२० आग्नेयस्येति ॥ अत्रैव कश्चिद्विशेष विधत्ते–'आग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत् तेजश्चैवास्मिन् ब्रह्मवर्चस च समीची दधाति' इति ॥ [19]एतच्च सूत्रकारेणैव व्याख्यातम्–"सहितानि हवींष्यधिश्रयेदित्यर्थ । ऐन्द्रौ वाऽस्मिन् समाश्लेषयेत्" ( आपश्रौसू १९ २१ १८-१९ ) इति । साहित्यपक्षे आग्नेय सौम्य चेति द्वितीया द्रष्टव्या । पक्षान्तरे लेपमित्यध्याहार । तेन समाश्लेषणेन [V]अस्मिन् यजमाने आनाश्रित धुनाध्ययनसपत्ति [V]च इत्येते सपूर्णे स्थापयति[19] ॥

२५ ४ मै४–दधामि । ५ मै–चेन्द्रमाश्लेषयेत् । ६ मै४–तेजोब्रह्मवर्चसावस्मिन् ।
७ मै४–निदधाति । ८ तै१ तै२–लेप ।

१८ अ ट ग प स्वस्वकालेऽननुष्ठान उ–स्वकालेऽननुष्ठा, ड–स्वकालेष्वननुष्ठानं, हो१–स्वकाले ननुष्ठानम् । १९ अ ड उ पा–एतच्च पूर्णं स्थापयति, झ–एतस्मिन् पूर्णं स्थापयति, अ क ओ ना–'एतच्च .. लेपमित्यध्याहार ' नास्ति ।

दधात्यग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोप धावति सैवैनं कामेन समर्धयत्युपैनं कामो नमत्यग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव ( ३ ) भवति यदष्टाकपालस्तेना-
ऽऽग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै ५

दधाति । अग्नीषोमीयमित्यग्नी सोमीयम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । यम् । कामम् । न । उपनमेदित्युप नमेत् । आग्नेय । वै । ब्राह्मण । स । सोमम् । पिबति । स्वाम् । एव । देवताम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सा । एव । एनम् । कामेन । समिति । अर्धयति । उपेति । एनम् । काम । नमति । अग्नीषोमीयमित्यग्नी सोमीयम् । अष्टाकपालमित्यष्टा कपालम् । निरिति । वपेत् । ब्रह्मवर्चसकाम १० इति ब्रह्मवर्चस-काम । अग्नीषोमावित्यग्नी सोमौ । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । धत्त । ब्रह्मवर्चसीति ब्रह्म वर्चसी । एव ( ३ ) । भवति । यत् । अष्टाकपाल इत्यष्टा कपाल । तेन ।
आग्नेय । यत् । श्यामाक । तेन । सौम्य । समृद्ध्या इति सम्-ऋद्ध्यै ।

अग्नीषोमीयमित्यादि ॥ "द्यावापृथिवीशुनासीर°" (पा ४ २ ३२) इति छ । १५ ब्राह्मणस्याग्नेयत्वात् सोमपानाच्चास्य अग्नि सोमश्च स्वा देवता ॥

अग्नीषोमीयमष्टाकपालमिति ॥ गतम् ॥ 'यच्छ्यामाक' इति वचनात् श्यामाकाना निर्वपेत् ॥

अग्नीषोमीयमिति ॥ कामितार्थसिद्ध्यर्थमिष्ट्यन्तरं विधत्ते – 'अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मण स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोप धावति २० सैवैनं कामेन समर्धयत्युपैनं कामो नमति' इति ॥ अग्निना सह [20]मुखे [21]जातत्वात् सोमपातृत्वाच्च एतदुभय ब्राह्मणस्य देवता ॥

अग्नीषोमीयमिति ॥ ब्रह्मवर्चसार्थं श्यामाकपुरोडाशं विधत्ते– 'अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति यदष्टाकपालस्तेनाऽऽग्नेयो यच्छ्यामाकस्तेन सौम्य समृद्ध्यै' इति ॥ कपालगतयाऽष्टसंख्यया २५ गायत्रीस्मरणात् तद्द्वारेण हविष आग्नेयत्वम्, "अष्टाक्षरा गायत्री गायत्रोऽग्निः" (तैस २ २ ५) इति श्रुत्यन्तरात् । तथा–"सोमो वा अकृष्टपच्यस्य राजा" (तैब्रा १ ६ १) इत्यादिश्रुते श्यामाकधान्येन [22]हविष सौम्यत्वम् । अनेनैवार्थवादेन विधिवाक्ये पुरोडाशस्य श्यामाकमयत्वमुन्नेयम् ॥

२० ब्रो ना हा–मुखेन, इ–मुखेन सह, उ–'मुखे' नास्ति । २१ उ–'जातत्वात्' नास्ति । २२ अ उ ब्रो पा हा–हविषा । ३०

सोमा॑य वा॒जिने॑ श्यामा॒कं च॒रुं निर्व॑पेद्यः क्लैब्याद्बि॒भीयाद्रेतो॒ हि वा ए॒तस्मा॒द्वाजि॑नमप॒-
क्रामत्यथै॒ष क्लैब्या॑द्बिभा॒य सोम॑मे॒व वा॒जिन॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धाव॒ति स
ए॒वास्मि॒न् रेतो॒ वाजि॑नं दधा॒ति न क्लीबो॑ भ॑वति ब्राह्मणस्प॒त्यमेका॑दशकपाल॒ं
निर्व॑पे॒द्ग्राम॑का॒मो ( ४ ) ब्रह्म॒णस्पति॑मे॒व स्वेन॑ भाग॒धेये॒नोप॑ धाव॒ति स ए॒वास्मै॑
५ सजा॒तान् प्र य॑च्छति ग्रा॒म्ये॑व भ॑वति

सोमा॑य । वा॒जिने॑ । श्या॒मा॒कम् । च॒रुम् । निरिति॑ । व॒पे॒त् । यः । क्लैब्या॑त् । बि॒भी॒या॒त् । रेतः॑ ।
हि । वै । ए॒तस्मा॑त् । वा॒जिन॑म् । अ॒प॒क्रा॒म॒तीत्य॑प - क्राम॑ति । अथ॑ । ए॒षः । क्लैब्या॑त् । बि॒भा॒य ।
सोम॑म् । ए॒व । वा॒जिन॑म् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग - धेये॑न । उ॒पेति॑ । धा॒व॒ति । सः । ए॒व ।
अ॒स्मि॒न् । रेतः॑ । वाजि॑नम् । द॒धा॒ति । न । क्लीबः॑ । भ॒व॒ति । ब्रा॒ह्म॒ण॒स्प॒त्यमिति॑ ब्राह्मणः–प॒त्यम् ।
१० एका॑दशकपाल॒मित्येका॑दश - क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । ग्राम॑का॒म इति॒ ग्राम॑ - का॒मः ( ४ ) ।
ब्रह्म॑णः । पति॑म् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग - धेये॑न । उ॒पेति॑ । धा॒व॒ति । सः । ए॒व ।
अ॒स्मै॒ । स॒जा॒ताना॒निति॑ स - जा॒तान् । प्रेति॑ । य॒च्छ॒ति । ग्रा॒मी । ए॒व । भ॒व॒ति ।

सोमाय वाजिन इत्यादि ॥ Vवाजिन वाजिनस्थानीयं प्रजननशक्तिमत् Vरेतः अस्मात् Vअप Vक्रामति । Vअथ अनन्तरम् Vएषः Vक्लैब्यात् Vबिभाय बिभेति । छान्दसो लिट् । गतमन्यत् ॥
१५ ब्राह्मणस्पत्यमित्यादि ॥ पत्युत्तरपदलक्षणो ण्यः (पा ४·१·८५) । गणवती इति । "गणानां त्वा गणपतिम्", "स इज्जनेन" (तैसं २·३·१४) इति । "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम् । गणवत्यौ ॥

सोमायेति ॥ क्लीबत्वपरिहारायेष्टिं विधत्ते– 'सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोप
२० धावति स एवास्मिन् रेतो वाजिनं दधाति न क्लीबो भवति' इति ॥ प्रजननसमर्थोऽश्वरसो वाजस्तद्वते 'वाजिने । यदा 'वाजिनं प्रजननसमर्थावरसरूपं 'रेतः अस्मात् पुरुषात् 'अपक्रामति [23]रोगेणादृष्टविशेषेण वा तत्सामर्थ्यं [24]प्रतिपद्यते, [25]तदानीम् [26]अस्य क्लीबत्वं संपद्यते तस्मात् क्लीबत्वात् 'बिभाय बिभेति ॥
ब्राह्मणस्पत्यमिति ॥ इष्ट्यन्तरं विधत्ते– 'ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामो ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति' इति ॥

२५ २३. भं– दोषमादृष्ट° ।
२४. अ.पा– प्रतिरिष्यते, उ– प्रविष्यते ।
२५. ६– तदा ।
२६. अ.उ.पा– सम्यक्; जो.ना.हा– अस्य सम्यक् ।

गुणवती याज्यानुवाक्ये भवतः सजातैरेवैनं गुणवन्तं करोत्येतामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं वि नाशयेयमिति मारुती याज्यानुवाक्ये कुर्याद्-ब्रह्मन्नेव विशं वि नाशयति ॥ ३ ॥

[ तेजः सुमीचीं ब्रह्मवर्चस्येत्र ग्रामकाममिश्चत्वारिंशच्च । ]

गुणवंती इति गुण-वती । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवतः । सजातैरिति स-जातैः । एव । एनम् । गुणवन्तमिति गुण-वन्तम् । करोति । एताम् । एव । निरिति । वपेत् । यः । कामयेत । ब्रह्मन् । विशम् । वीति । नाशयेयम् । इति । मारुती इति । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । कुर्यात् । ब्रह्मन् । एव । विशम् । वीति । नाशयति ॥३॥ ५

[ मैसं २·१·४, २·३ कासं १०·२, ११·४ ]

सजातैरिति । सजातैः गणैः तद्वन्तम् एन करोति ॥ ब्रह्मन् विशमिति । [९]नाशिर्गति-कर्मा छान्दसः । [१०]ब्रह्मन् ब्राह्मणे[१०] विशं वैश्यं वि नाशयेयम् विशेषेण गमयेय प्रापयेय-मिति । यद्वा– ब्रह्मणि प्रतियोगिनि विनष्टा भवन्तु वैश्या इति । [११]मारुती मारुत्यौ[११] "मरुतो यद्ध वो दिवः", "या वः शर्म" (तैसं १·५·११) इति । ब्रह्मणि विशं प्रापयत्येव । "आ तू न उप गन्तन" (तैसं १·५·११) इति [१२]च मन्त्रलिङ्गात्[१२], मरुतो हि देवानां विशः ॥ १०

इति द्वितीये तृतीये तृतीयः ॥ १५

गणवती इति ॥ अथ "गणानां त्वा", "स इज्जनेन" (तैसं २·३·१४) इत्येते ऋचौ अन्त्यानुवाके समाम्नास्यमाने विधत्ते– 'गणवती याज्यानुवाक्ये भवतः सजातैरेवैनं गणवन्तं करोति' इति ॥ गणशब्दो ययोर्ऋचोरस्ति ते गणवत्यौ ॥

एतामेवेति ॥ यदा वैश्यजातिः धनिकत्वगर्वेण[२८] ब्राह्मणमतिक्रामति तदा तस्मिन् ब्राह्मणे तां जातिं वश्यां कर्तुं तामेवेष्टिं विधत्ते– 'एतामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं वि नाशयेयमिति' इति ॥ ब्रह्मन् ब्राह्मणे वि नाशयेयं गर्वविनाशनेन [२९]आत्मसात् कुर्याम् । "मरुतो यद्ध वो दिवः", "या वः शर्म" इत्येते ऋचौ "वैश्वानरो न ऊत्या" (तैसं १·५·११) इत्यस्मिन्ननुवाके समाम्नाते अत्रापि प्रतीकेन अधीष्येते ॥ २०

मारुती इति ॥ तदुभयमत्र विधत्ते– 'मारुती याज्यानुवाक्ये कुर्याद्ब्रह्मन्नेव विशं वि नाशयति' इति ॥ मरुतां संबन्धिन्यौ मारुत्यौ । "मरुतो वै देवानां विशः" (तैसं २·२·५) इति [३०]श्रुतेस्तदनुग्रहात् मानुषीं विशमधीनां करोति ॥ २५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके प्रथमादितृतीयान्ता अनुवाकाः ॥

९. तं१.तं२.– नशतिः । १०–१०. तं२.लं.– ब्रह्म बृंहणि ब्राह्मणे, तं१– बृंहणि ब्राह्मणे । ११–११. तं२– मारुत्या । १२–१२. तं१.तं२.मै.लं.– मन्त्रलिङ्गम् । ३०

२७. ने.हो तत्र । २८. इ–धनिकत्वगर्वेण । २९. ने.हो–१–अधीनाम् । ३०. आ.क.जो.ना.हा–°स्तदनुग्रहेण ।

अर्यम्णे चरुं निर्वपेत् सुवर्गकामोऽसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनꣳ सुवर्गं लोकं गमयत्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवा( १ )स्मै दानकामाः प्रजाः करोति

५ अर्यम्णे । चरुम् । निरिति । वपेत् । सुवर्गकाम इति सुवर्ग काम । असौ । वै । आदित्य । अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव । एनम् । सुवर्गमिति सुव –गम् । लोकम् । गमयति । अर्यम्णे । चरुम् । निरिति । वपेत् । य । कामयेत । दानकामा इति दान-कामा । मे । प्रजा इति प्र जा । स्यु । इति । असौ । वै । आदित्य । अर्यमा । य । खलु । वै । ददाति । स । अर्यमा । अर्यमणम् । एव । स्वेन ।
१० भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव ( १ ) । अस्मै । दानकामा इति दान कामा । प्रजा इति प्र-जा । करोति ।

अर्यम्ण इत्यादि । गतम् ॥ अरीन् यमयतीत्यर्यमा, इन्द्र इति केचित् । यम इत्यपरे । [1]सूर्य इत्यन्ये[1] । याज्याया [2]इन्द्रमनूपत्नत्वात् ॥

१५ तृतीये वज्रविभ्रष्टो य '[1]काम प्रासुमिच्छति[1]' ।
ब्रह्मवर्चसकामो य क्लीयत्वाद्यो बिभेति च ॥ १ ॥
ग्रामकामो ब्राह्मणो यो विश स्थापनमिच्छति ।
एतेषामिष्टय प्रोक्तास्तत्फलसमाप्तये ॥ २ ॥

अथ चतुर्थे स्वर्गकामादीनामिष्टयो विधातव्या ।

अर्यम्ण इति ॥ तत्र स्वर्गार्थिन इष्टि विधत्ते– 'अर्यम्णे चरु निर्वपेत् सुवर्गकामोऽसौ वा
२० आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनꣳ सुवर्गं लोक गमयति ' इति ॥

अर्यम्ण इति ॥ प्रतिग्रहार्थिनस्त्वामेवेष्टि विधत्ते– 'अर्यम्णे चरु निर्वपेद्य कामयेत दानकामा मे प्रजा स्युरित्यसौ वा आदित्योऽर्यमा य खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवास्मै दानकामा प्रजा करोति दानकामा अस्मै प्रजा भवन्ति ' इति ॥ लोके 'य कोऽपि द्रव्यं 'ददाति सोऽयं सूर्यवत् कीर्त्या भासमानत्वात् 'अर्यमा इत्युपचर्यते । तं प्रेरयितुं मुख्यायार्यम्णे चरुर्युक्त ॥

२५ १–१. तै१ तै२ ग्र– सूर्य इत्यपरे ।
२. तै१ तै२ पे३ मे– इन्द्रानुप°, मे४–'इन्द्रमनूपत्नत्वात्' नास्ति ।

१–१ इ द्रो१– कामप्राणमिच्छति ।

दानकामा अस्मै प्रजा भवन्त्यर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनं तद्गमयति यत्र जिगमिषतीन्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं नि( २ )रवपत् तेनैवैनमग्रं देवतानां पर्यणयद्-

दानकामा इति दान-कामाः। अस्मै। प्रजा इति प्र जाः। भवन्ति। अर्यम्णे। चरुम्। ५ निरिति। वपेत्। यः। कामयेत। स्वस्ति। जनताम्। इयाम्। इति। असौ। वै। आदित्यः। अर्यमा। अर्यमणम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। एनम्। तत्। गमयति। यत्र। जिगमिषति। इन्द्रः। वै। देवानाम्। आनुजावर इत्यानु-जावरः। आसीत्। सः। प्रजापतिमिति प्रजा-पतिम्। उपेति। अधावत्। तस्मै। एतम्। ऐन्द्रम्। आनुषूकमित्यानु-सूकम्। एकादशकपालमित्येकादश-कपालम्। निरिति (२)। अवपत्। १० तेन। एव। एनम्। अग्रम्। देवतानाम्। परीति। अनयत्।

य' खल्विति॥ दातुरर्यमत्र ताद्धर्म्यात्॥

स्वस्तीति॥ अविघ्नेन। तद्गमयतीति। गन्तव्यं स्वस्ति गमयति। अरणहेतुरर्यमेति॥

इन्द्रो वा इत्यादि॥ [1]आनुजावर इव [1]आसीत्। [3]आनुजावरोपकर्षते [ रोऽपकृष्टतरः ]। आनुषूकमिति। अनुषूयन्त इत्यानुषूकाः व्रीहिविशेषाः, ये लूनेभ्यः स्तम्बेभ्यः स्वयं पुनः प्ररोहन्ति, १५ तत्प्रभवाणां व्रीहीणामियं संज्ञा। "सत्सूद्विष" (पा ३.२.६१) इति क्विप्, अल्पार्थे (पा ५.३.८५) प्रागिवीयः कः[4], सुषामादित्वात् षत्वम् (पा ८.३.९८)। तेषां विकारः पुरोडाशः आनुषूकः। कोपधादण् (पा ४.३.१३७)। [1]अग्रं प्राधान्यं [1]देवतानां [1]पर्यणयत् सर्वतः

अर्यम्ण इति॥ सभां जिगमिषोरिष्टिं विधत्ते- 'अर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनं तद्गमयति यत्र २० जिगमिषति' इति॥ [1]स्वस्ति निर्विघ्नेन [1]जनतां जनसमूहम्॥

इन्द्र इति॥ य. समानानां मध्ये श्रैष्ठ्यमलभमानः [2]तदीयानुजादवरो निकृष्टो वर्तते तस्य श्रैष्ठ्यप्राप्त्यर्थमिष्टिं विधातुं प्रस्तौति- 'इन्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निरवपत् तेनैवैनमग्रं देवतानां पर्यणयद्बुध्नवती अग्रवती याज्यानुवाक्ये अकरोद्बुध्नादेवैनमग्रं पर्यणयत्' इति॥ पश्चात् जातो भ्राताऽनुजः [3]तस्मादप्यवरोऽनुजावरस्तद्वत् २५ वर्तमान [1]आनुजावरः [4]अत्यन्तनिकृष्ट इत्यर्थः। व्रीहिस्तम्बेषु लूनेष्ववशिष्टमूलेभ्योऽनुसूयन्ते पश्चादुत्पद्यन्त

३. मै४- आनुजावरोपकल्प्यते, ल- 'आनुषावरोपऽकर्षते' नास्ति। ४. मै- 'कः' नास्ति।

२. श्र- तदीयानुज इव, होर- तदीयवृक्ष इवावरः; द.ने- तदीयान् वृक्ष इवावरः। ३. हो१ - तस्यापि। ४. आ- निकृष्टः।

बुध्नव॑ती॒ अग्र॑वती याज्यानुवा॒क्ये॑ अकरोद्बु॒ध्नादे॒वैन॒मग्रं॒ पर्य॑णय॒द्यो रा॑ज॒न्य॑ आनुजा॒वरः॑ स्या॒त् तस्मा॑ ए॒तमैन्द्रमा॑नुष्ू॒कमेका॑दशकपालं॒ निर्व॑पे॒दिन्द्र॑मे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैन॒मग्रे॑ समा॒नानां॒ परि॑ णयति॒ बु॒ध्नव॑ती॒ अग्र॑वती याज्यानु॒वाक्ये॑ भवतो बु॒ध्नादे॒वैन॒मग्रं॒ (३) परि॑ णयत्यानुषू॒को भ॑वत्ये॒षा ह्येत॒स्य दे॒वता॒ य आ॑नुजा॒वरः॑ समृ॑द्ध्यै

५ बुध्नव॑ती॒ इति॑ बुध्न - व॒ती॒ । अग्र॑व॒ती इत्यग्र॑ - वती । याज्यानुवाक्ये॑ इति॑ याज्या - अ॒नुवा॒क्ये॑ । अ॒कुरो॒त् । बु॒ध्नात् । ए॒व । ए॒न॒म् । अग्र॑म् । परीति॑ । अ॒नय॒त् । यः । रा॒ज॒न्यः॑ । आ॒नु॒जा॒वर॒ इत्या॑नु - जा॒वरः॑ । स्यात् । तस्मै॑ । ए॒तम् । ऐ॒न्द्रम् । आ॒नु॒षू॒कमित्या॑नु-सू॒कम् । एका॑दशकपा॒लमित्येका॑दश - क॒पा॒लम् । निरिति॑ । व॒पे॒त् । इन्द्र॑म् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग - धेये॑न । उ॒पेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । अग्र॑म् । स॒मा॒नाना॑म् । परीति॑ । न॒य॒ति॒ ।

१० बु॒ध्नव॑ती॒ इति॑ बु॒ध्न - व॒ती॒ । अग्र॑व॒ती॒ इत्यग्र॑ - व॒ती॒ । या॒ज्या॒नु॒वा॒क्ये॑ इति॑ याज्या - अ॒नु॒वा॒क्ये॑ । भ॒व॒तः॒ । बु॒ध्नात् । ए॒व । ए॒न॒म् । अग्र॑म् ( ३ ) । परीति॑ । न॒य॒ति॒ । आ॒नु॒षू॒क इत्या॑नु - सू॒कः । भ॒व॒ति॒ । ए॒षा । हि । ए॒तस्य॑ । दे॒वता॑ । यः । आ॒नु॒जा॒व॒र इत्या॑नु - जा॒वरः॑ । समृ॑द्ध्या॒ इति॒ सम् - ऋ॒द्ध्यै॒ ।

प्रापयत् । बुध्नवती इति । "बुध्नादग्रमङ्गिरोभिः" इति पुरोऽनुवाक्या, "बुध्नादग्रेण वि मिमाय मानैः" (तैसं २.३.१४) इति याज्या । बुध्नादेवेति । मूलात् [v]एव आरभ्य दृढमूलमिति यावत् ।

१५ आनुजावर इति । अनुजः कनिष्ठः । तस्मान्निकृष्टैश्वर्यो यः अनुजस्य गुणभूतो भवति सः अनुजावरः, स एव [v]आनुजावरः । "सांनाय्यानुजावर[c]" (द्र. पाभा पा ५.४.३६) इत्यादिना स्वार्थिकोऽण् । एषा हीति । [v]यः [v]आनुजावरः [v]एतस्य [v]एषा [v]देवता । का ? या आनुषूक्य, आनुषूकभागी [v]इन्द्रः इत्यर्थः ॥

इति द्वितीयफलरूपा व्रीहयोऽनुषूकाः [v]तेभ्यो निष्पन्नम् [v]आनुषूकम् । [v]अनेन हविषा प्रजापतिः [v]देवतानां

२० मध्ये इन्द्रं श्रैष्ठ्यं प्रापितवान् । बुध्नशब्दोऽस्ति ययोर्ऋचोस्ते बुध्नवत्यौ । अग्रशब्दोऽस्ति ययोर्ऋचोस्ते अग्रवत्यौ । "बुध्नादग्रम्", "बुध्नादग्रेण" (तैसं २.३.१४) इत्येते अन्वयानुयाके समाम्नास्यमाने । [v]बुध्नात् मूलादारभ्य [v]अग्रम् अग्रमानं प्रापयत् । कर्मानुष्ठानकालमारभ्य यावज्जीवं श्रैष्ठ्यं प्रापितवानित्यर्थः ॥

य इति ॥ अथ विपक्ते– 'यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनमग्रं समानानां परि णयति बुध्नवती अग्रवती याज्या-

२५ नुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै' इति ॥

५. तै१.मै२– 'इन्द्रः' नास्ति ।

५. इ.ने.शे१– तैः ।

काम्या इष्टयः ]

योब्राह्मण आनुजावरः स्यात् तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रं समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य (४) देवता य आनुजावरः समृद्ध्यै ॥

[ एव निरग्नमेतस्य चत्वारि च । ] ५

---

यः । ब्राह्मणः । आनुजावर इत्यानु-जावरः । स्यात् । तस्मै । एतम् । बार्हस्पत्यम् । आनुषूकमित्यानु-सूकम् । चरुम् । निरिति । वपेत् । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । अग्रम् । समानानाम् । परीति । नयति । बुध्नवती इति बुध्न-वती । अग्रवती इत्यग्र-वती । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवतः । बुध्नात् । एव । एनम् । अग्रम् । परीति । नयति । आनुषूक इत्यानु-सूकः । भवति । एषा । १० हि । एतस्य (४) । देवता । यः । आनुजावर इत्यानु-जावरः । समृद्ध्या इति सम्-ऋद्ध्यै ॥४॥

[ मैसं २.२.४; कासं ११.४ ]

---

यो ब्राह्मण इत्यादि ॥ ब्राह्मणानुजावरविषये बार्हस्पत्यचरुविधि । शेषो गत. ॥

इति द्वितीये तृतीये चतुर्थोऽनुवाक ॥

---

[1]यः आनुषूकः [2]आनुजावरः [3]एतस्य ह्ययमानुषूकधान्यभागित्येव [4]देवता युक्ता, सदृशत्वात् । तस्मादानुषूक- १५ पुरोडाशः [5]समृद्ध्यै संपद्यते ॥

आनुजावरब्राह्मणस्येष्टिं विधत्ते—'यो ब्राह्मण आनुजावरः स्यात् तस्मा एतं बार्हस्पत्य-मानुषूकं चरुं निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रं समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य २० आनुजावरः समृद्ध्यै" इति ॥ अत्र "प्र यो जज्ञे", "महान्मही" इति द्वे याज्यानुवाक्ये (तैसं २.३.१४) । य इति ॥ 'स बुध्नादाष्ट जनुषाऽभ्यग्रम्' इति बुध्नाग्रशब्दयोस्तत्र विद्यमानत्वात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥

प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर आसन् ताः सोमाय राज्ञेऽददात् तासाꣳ रोहिणीमुपैत् ता ईर्ष्यन्तीः पुनरगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत्

प्रजापतेरिति प्रजा पतेः । त्रयस्त्रिꣳशदिति त्रयः–त्रिꣳशत् । दुहितरः । आसन् । ताः । सोमाय । राज्ञे । अददात् । तासाम् । रोहिणीम् । उपेति । ऐत् । ताः । ईर्ष्यन्तीः । पुनः । अगच्छन् । ताः । अन्विति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । ऋतम् । अमीष्व । यथा । समावच्छ इति समावत्–श । उपैष्यामीत्युप एष्यामि । अथ । ते । पुनः । दास्यामि । इति । सः । ऋतम् । आमीत् ।

प्रजापतेस्त्रयस्त्रिꣳशदित्यादि ॥ अश्विन्यादयः सप्तविंशतिः तारकाभिमानिन्यः[1], ऋद्ध्यादयः[2] षडन्या इत्येके । अन्ये तु षट् कृत्तिका अभिजिदेका अश्विन्यादयः षड्विंशतिरिति त्रयस्त्रिंशत्तारका इत्याहुः । ईर्ष्यन्तीरिति । सपत्नीबहुमानमसहमानाः पितरमेव पुनः अगच्छन् । ताः अन्वगच्छत् सोमः । अयाचत प्रजापतिम् । ततः ताः सोमाय न अददात् प्रजापतिः । अथ सः प्रजापतिः अब्रवीत् सोमम् ऋतं सत्यम् अमीष्व प्रतिपद्यस्व शपथं कुरु, सत्येनेति यावत् । शपो लुक् (पा २ ४ ७२), छान्दस इडागमः । शपथप्रयोगं दर्शयति–यथेति । यथा इदमर्थरूप

स्वर्गकामो दानकामः सभां गन्तुं य इच्छति ।
राजन्यो [1]ब्राह्मणश्च द्वौ यौ[1] [2]स्यातामानुजावरौ ॥
[2]तुर्येऽनुवाक एतेषामाम्नाता इष्टयः क्रमात् ॥ १ ॥

प्रजापतेरिति ॥ [3]अथ पञ्चमे राजयक्ष्मगृहीतस्येष्टिं विधातुं प्रस्तौति–'प्रजापतेस्त्रयस्त्रिꣳशद् दुहितर आसन् ताः सोमाय राज्ञेऽददात् तासाꣳ रोहिणीमुपैत् ता ईर्ष्यन्ती पुनरगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत् ता अस्मै पुनरददात् तासां रोहिणीमेवोपैत् तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाग इति तस्मा एतमादित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन्' इति ॥ "अग्ना दुहा नितमिर

१ तै१ तै२– °भिमान्य । २ तै१ तै२ पै२ ल– ऋगादय ।

१–१. इ – ब्राह्मणश्चाय द्वौ । २. क जो मा हा – चतुर्थानुवाके, इ–चतुर्थवाके, अ उ पा– तुर्यावऽनुवाके, नै हा१– द्वितीयानुवाके, भ–तुर्यानुवाके । ३ आ– 'अथ' नास्ति ।

ता अस्मै पुनरददात् तासाᳫं रोहिणीमेवोपै(१)त् तं यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति

ता । अस्मै । पुनः । अददात् । तासाम् । रोहिणीम् । एव । उपेति (१) । ऐत् । तम् । यक्ष्मः । आर्छत् । राजानम् । यक्ष्मः । आरत् । इति । तत् । राजयक्ष्मस्येति राज-यक्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् । तत् । पापयक्ष्मस्येति पाप-यक्ष्मस्य । यत् । जायाभ्यः । अविन्दत् । तत् । जायेन्यस्य । य । एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्माः । विन्दन्ति । ५

समानच्छ उप एष्यामि इति एव शपथ क्रियताम् । अथ एतास्तुभ्य पुन दास्यामि इति । समादानतुप् स्वार्थिक । सममित्यर्थ । तत "सल्येकवचनात्" (पा ५ ४ ४३) इति शस क्रियाविशेषणत्वात् कर्मत्वम् । सर्वेष्वपि अह सु सममेवेता सर्वा उपेष्यामीत्यर्थ । स सोम तथा अकरोत्, प्रजापतिश्च पुन अददात् । अथ सोम पुनरपि तासा मध्ये रोहिणीम् एव उप ऐत् । अथ सत्यातिक्रमात् त सोम यक्ष्म क्षयरोग आर्तमकरोत् । यक्ष पूजायाम्, औणादिको मन्प्रत्यय । रोगोत्तमत्व पूजा । राजानमित्यादि । राज्ञो यक्ष्म राजयक्ष्म इति । १०

भयन्ती मेघयन्ती वर्षयन्ती चुपुणीका" (तैस ४ ४ ५) इत्येवमाम्नाता सप्त कृत्तिका । अवशिष्टा भरिण्यादय पञ्चविंशतिस्तारका । ता एता त्रयस्त्रिंशत् । तत्र रोहिणीव्यतिरिक्ता ईर्ष्यन्ती तदीय सुखमसहमाना पुन प्रजापतिम् अगच्छन् । सोम ता अनुगम्य प्रजापतिं याचितवान् । स प्रजापति एवम् अब्रवीत् शपथ प्रतिपद्यस्व तत् यथा समावच्छ साम्येनैता उपैष्यामि इति, ततस्ता पुन दास्यामि इति । स च सोम शपथ कृत्वा ता स्वीकृत्य शपथम् उल्लङ्घ्य पूर्ववत् रोहिणीम् एव उपैत् । तत स यक्ष्मव्याधिगृहीतोऽभूत् । तत राजान यक्ष्म प्राप्तवान् इति व्युत्पत्त्या राजयक्ष्मनाम्नो व्याधे जन्म सपन्नम् । यस्मादय सोम पापीयान् तस्मादेतन्नाम्ना पापयक्ष्मस्य जन्म सपन्नम् । यस्मात् जायाभ्य निमित्तभूताभ्यो व्याधिमलभत तस्मात् जायेन्यनामकस्य व्याधेर्जन्म सपन्नम् । १५ २०

३ त१ त२ मै– अदात् । ४ त१ त२ ल– 'पुनरपि' नास्ति ।

४ आ क– माम्येन ता । ५ बो ना हा– सोम पुन । ६–६ गृ– उपेत्य क्षयव्याधिग्रस्तोऽभूत्, ख– उपेत्य क्षयव्याधिसहितोऽभूत् ने हो– एत्य च क्षयव्याधिग्रस्तोऽभूत्, ड ओ ना हा– °व्याधिग्रस्तो बभव । ■ ने– व्याधिरभवत् । २५

स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एत(२)मादित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन् यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति

सः । एताः । एव । नमस्यन् । उपेति । अधावत् । ता. । अब्रुवन् । वरम् । वृणामहै । समावच्छ ५ इति समावत्-शः । एव । न । उपेति । अय । इति । तस्मै । एतम् (२) । आदित्यम् । चरुम् । निरिति । अवपन् । तेन । एव । एनम् । पापात् । स्रामात् । अमुञ्चन् । यः । पापयक्ष्मगृहीत इति पापयक्ष्म-गृहीतः । स्यात् । तस्मै । एतम् । आदित्यम् । चरुम् । निरिति । वपेत् । आदित्यान् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति ।

पापीयानिति । पुरुषान्तरयक्ष्मात् पापतरत्वात् पापश्चासो यक्ष्मश्चेति । जायाम्य इति । "तत १० आगत" (पा ४.३.७४) इति छान्दस एन्यः । य एवमिति । एकस्यैव यक्ष्मस्य निमित्तभेदेन त्रित्वमुपचर्यते । निन्दन्तीति । वाधिनु न लभन्ते । अथ सोम प्रजापतिं मुक्त्वा [v]एता जायाः [v]एव [v]नमस्यन् पूजयन् [v]उप [v]अधावत् आर्तोऽस्मि प्रसीदन्तु भवत्य इति । अथ [v]ताः [v]अब्रुवन् [v]वर [v]वृणामहै समम् [v]एव चास्मान् [v]उपाय उपगच्छ [v]इति, तुल्यप्रतिपत्तयो वय स्यामेति । इत्यमिद

[8]ते एते त्रयो [9]क्षयव्याधेरवान्तरविशेषा. । तज्जन्मवेदिनो व्याधेरलाभः फलम् । ततः सोमेन नमस्कृता. १५ [10]सेविताश्चैता. सर्वाः साम्येनोपगमनं [v]वरं वृत्वा व्याधिपरिहाराय [v]चरुं निरुप्य, सोमं तस्मात् [v]पापात् [v]स्रामात् [11]क्षयरोगात् रोगादमोचयन् ॥

य इति ॥ इदानीं विधत्ते– 'यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापात् स्रामान्मुञ्चन्ति' इति ॥ 'आदित्यान्' इत्यर्थवादे [12]श्रवणादस्य चरोरदितिर्देवता न भवति ॥

२० अमावास्यायामिति ॥ पौर्णमासीं वारयितुं विधत्ते– 'अमावास्याया निर्वपेदमुमेवैनमाप्यायमानमन्वा प्यायति' इति ॥ अमावास्यायामतीतायां शुक्लप्रतिपदमारभ्य सोमस्य [13]कलावृद्धयाऽऽप्यायनं भवति ॥

८. ने हो१– 'ते' नास्ति । ९. आ,इ.–यमयाधे° । १०. दृ– सेविताश्च ता ; इ– संहिताश्च ता', हो१–संहिताश्चैता. । ११. प्रभिन्नधान् । १२. इ– शुनत्वादस्य । १३. अ पा– °दनाप्यागमनं ।

काम्या इष्टयः ]

त एवैनं पापात् स्रामान्मुञ्चन्त्यमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वा प्याययति नवोनवो भवति जायमान इति पुरोनुवाक्या भवत्यायुरेवास्मिन् ( ३ ) तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्यायति ॥ ५ ॥

[ एवोपैतमस्मिन् त्रयोदश च । ]

ते । एव । एनम् । पापात् । स्रामात् । मुञ्चन्ति । अमावास्यायामित्यमा - वास्यायाम् । निरिति । वपेत् । असुम् । एव । एनम् । आप्यायमानमित्या - प्यायमानम् । अनु । एति । प्याययति । नवोनव इति नवः–नवः । भवति । जायमानः । इति । पुरोनुवाक्येति पुरः– अनुवाक्या । भवति । आयुः । एव । अस्मिन् ( ३ ) । तया । दधाति । यम् । आदित्याः । अꣳशुम् । आप्याययन्तीत्या - प्याययन्ति । इति । याज्या । एति । एव । एनम् । एतया । प्याययति ॥ ५ ॥　५

[ मैसं २.२.७, कासं ११.३ ]　१०

करिष्यामीति सोमेनाभ्युपगते तस्मै आदित्यं चरुं निः अवपन् जायाः, तेन एव पापात् स्रामात् रोगात् एनम् अमुञ्चन् ॥

य इत्यादि ॥ गतम् । अमावास्यायामिति । शुक्लप्रतिपत्प्रभृति आप्यायते चन्द्रः, तम् अनु यजमानम् आ प्याययति ॥

एवैनमिति ॥ एतया एनम् आ प्याययति एव ।　१५

.इति द्वितीये तृतीये पञ्चमोऽनुवाकः ।

**नवोनव इति ॥** चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमाने ऋचौ विधत्ते–'नवोनवो भवति जायमान इति पुरोनुवाक्या भवत्यायुरेवास्मिन् तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्याययति' इति ॥ ते एते ऋचौ तत्रैव ( तैसं २.४.१४ ) व्याख्यास्येते । [१४]प्रथमायामृच्यन्ते 'दीर्घमायुस्तिरति' इत्युक्तत्वात् तत्पाठेनाऽऽयुष्प्राप्तिः । अमावास्यायामादित्ये प्रविष्टानां चन्द्रकलानां पुनरादित्यादेव चन्द्रेण लब्धत्वाच्चन्द्रोत्कर्षं आदित्यस्यैवोत्कर्ष इति कृत्वा तस्या ऋच आदित्यपरत्वेऽपि विरुध्यम् । द्वितीयस्यामृचि 'आ प्याययन्ति' इति श्रवणात् तयर्चा यजमानस्याऽऽप्यायनं युक्तम् ॥　२०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

५. तै१.तं२.मै.ल– 'एनम्' नास्ति ।　२५

१४. ते.मं–प्रथमाया ऋचोऽन्ते ।

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमाँल्लोकानभ्यतिरिच्याते तन्ममासदिति तदिमाँल्लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिराजमिन्द्रꣳ स्वराजानं ततो वै स इमाँल्लोकाꣳस्त्रेधाऽदुहत् तत् त्रिधातोस्त्रिधातुत्वं

प्रजापतिरिति प्रजा - पतिः । देवेभ्यः । अन्नाद्यमित्यन्न - अद्यम् । व्यादिशदिति वि - आदिशत् ।
५ सः । अब्रवीत् । यत् । इमान् । लोकान् । अभीति । अतिरिच्याता इत्यति - रिच्याते । तत् ।
मम । असत् । इति । तत् । इमान् । लोकान् । अभि । अतीति । अरिच्यत । इन्द्रम् । राजानम् ।
इन्द्रम् । अधिराजमित्यधि - राजम् । इन्द्रम् । स्वराजानमिति स्व - राजानम् । ततः । वै । सः ।
इमान् । लोकान् । त्रेधा । अदुहत् । तत् । त्रिधातोरिति त्रि - धातोः । त्रिधातुत्वमिति त्रिधातु त्वम् ।

प्रजापतिर्देवेभ्य इत्यादि ॥ [४]व्यादिशत् पृथक्त्वेन व्यावृत्तमादिशत्, एकैकलोकविशेषा-
१० वधिकमित्यर्थः । अथ देवाना तथा व्यादिश्य [४]स [४]अब्रवीत् प्रजापतिः, [१-४]यत् अन्नाद्यम् [४]इमान्[१]
सर्वानपि [४]लोकान् अभ्यतिरिच्यते अतिव्याप्य वर्तते [२]नैकैकलोकावधिकं भवति [४]तत् [३]मम
[४]असत् अस्तु । अतिरिच्यतेर्लेटि ( पा ३.४.९४ ) आडागमः, " वैतोऽन्यत्र " ( पा ३.४.९६ )
इत्यैत्वम् । आसेर्लेट्याडागम । तस्मात् [४]इमान् [४]लोकान् [४]अभि [४]अति [४]अरिच्यत प्राजापत्य-
मैश्वर्यम् । किमस्मान् लोकानित्याह—[५]इन्द्र [४]राजानम् इति [५]व्यादिशत् । तिस्र एतास्त्रिधातोर्देवता[१]
१५ लोकत्रयात्मिका । [४]तत खलु त्रिधातुदेवताना त्रित्वात् प्रजापतिः लोकत्रयव्यापी, [५]व्याप्य तान्
[४]इमान्[१] [५]लोकान् [४]त्रेधा [४]अदुहत् त्रिप्रकारमदुहत् । उत्तरोत्तरज्यायस्त्वात् त्रिप्रकारलोकत्रयात्मना
आत्मीयमैश्वर्यं विभक्तवान् । तदित्यादि । त्रयो धातवो धनान्यस्मिन्निति त्रिधातु, त्रेधा
धातव्यत्वात् पुरोडाशस्य । धातव्या वा पुरोडाशा धातवः, त्रिधा भिन्नाः पुरोडाशा अस्मिन्निति ।
यद्वा— सर्वाधारलोकत्रयात्मकत्वात् त्रिधातु. ॥

२०

इष्टिर्यद्गृहीतस्य पञ्चमे समुदीरिता ॥

प्रजापतिरिति ॥ षष्ठे स्वकाद्यकामस्येष्टि विधातुं प्रस्तौति— 'प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमाँल्लोकानभ्यतिरिच्याते तन्ममासदिति तदिमाँल्लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिराजमिन्द्रꣳ स्वराजानं ततो वै स इमाँल्लोकाꣳस्त्रेधाऽदुहत् तत् त्रिधातोस्त्रिधातुत्वम्' इति ॥ 'प्रजापतिः अन्नं भोग्यमन्नं 'देवेभ्यः विभज्य तदेवं 'त्वयेदमित्यादिशत् । 'तदन्नं सर्वाङ्गं प्रवृत्तान् देवान् प्रत्येकम्
२५ 'अब्रवीत् 'यत् अन्नम् 'इमान् 'लोकान् 'अभिव्याप्यातिरिक्तं भवति 'तत् 'मम भवति । ' 'तत्

१-१. तैर- यदन्नाद्यमिदानीम् । २. ए- नैके लोकावधिकम् । ३. तै१.तै२. गै- 'व्यादिशत्' नास्ति । ४. तै१.तै२.मै- 'देवाः' नास्ति । ५-५. मै—व्याप्तानिमान् ।

१. क- लोकाधिपो व्यादिशत् । २. आ.क- तस्मादयं । ३. अ.उ पा- अतिरिच्य° ।
४-४ अ.उ भो.ना.पा हा- तदन्नमन्यम् ; क.च हो१- तदन्नमन्यमागमनम् ।

यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाश( १ )-मेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधि-राजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति

यम् । कामयेत । अन्नाद इत्यन्न - अदः । स्यात् । इति । तस्मै । एतम् । त्रिधातुमिति त्रि - धातुम् । ५
निरिति । वपेत् । इन्द्राय । राज्ञे । पुरोडाशम् ( १ ) । एकादशकपालमित्येकादश-कपालम् ।
इन्द्राय । अधिराजायेत्यधि - राजाय । इन्द्राय । स्वराज्ञ इति स्व - राज्ञे । अयम् । वै । इन्द्रः ।
राजा । अयम् । इन्द्रः । अधिराज इत्यधि - राजः । असौ । इन्द्रः । स्वराडिति स्व - राट् ।
इमान् । एव । लोकान् । स्वेन । भागधेयेनेति भाग - धेयेन । उपेति । धावति । ते । एव । अस्मै ।
अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न - अदः । एव । भवति । १०

यमित्यादि ॥ गतम् । तत्राय प्रयोगः*— चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै निरुप्य हविष्कृता वाच विसृजते । समान कर्माऽऽधिवपनात् । अथाध्युप्य गार्हपत्य एकादशोत्तानानि कपाला-न्युपदधाति । तेष्वेव त्रीन् पुरोडाशानधिश्रयति । प्रथममधिश्रित्य [6]पर्तिपनान्त कृत्वा तस्मि-न्नुत्तरं ततो ज्यायांसमधिश्रयति । पुनस्तदन्त [7]कर्म कृत्वा तस्मिन्नुत्तरं ततो ज्यायांसमधिश्रयतीति ॥

यद्यप्यमागमक्षम्[1] [2]इमान् [3]लोकान् [4]अभिव्याप्यातिरिक्तमासीत् । क इमे लोका इति [5]तदुच्यते इन्द्रराजादि- १५
शब्दाभिधेया एवेमे लोकाः, इन्द्रराजादीनां पृथिव्यादिलोकत्रयपालकत्वात् । एवमुक्त्वा [6]सः प्रजापतिरिन्द्र-राजादीन् [7]लोकान् [8]त्रेधा [9]अदुहत् । तेभ्यो लोकेभ्यस्त्रिविधं सारं गृहीतवानित्यर्थः । तदिदं सारं [*]प्रजापतिः [*]स्वप्रियत्वेन [10]स्वीकृतवान् [11]लोकातिरिक्तमन्नम् । यस्मात् त्रेधा [12]दोहनमकरोत् तस्मात् त्रिधातुनाम्नो यागस्य [*]त्रिधातुत्वं संपन्नम् । लोकेभ्यो दुग्धास्त्रयो धातवो भागा यस्मिन् यागे ॥ [13]यागस्त्रिधातुः ॥

यमिति ॥ अथ विधत्ते— 'य कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे २०
पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वरा-डिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति यथा यत्तेन प्रजा-नां दुह एवमेवेमाँल्लोकान् प्रजान् काममन्नाद्यं दुहे' इति । [*]यं यजमानमुद्दिश्याध्वर्युः [*]कामयेत अयं यजमानः [*]अन्नादः [*]स्यात् [*]इति [*]तस्मै यजमानायेयमिष्टिः । [*]अयं भूलोकाधिपतिः [*]इन्द्रः [*]राजा । [*]अयम् [11]अन्त-

*(द्र. बौश्रौ १३.२८, आपश्रौ १९.२२.१-६) । ६. मै०— पर्तिपनान्तं कर्म । ७. तै.तं.मै.म—'कर्म' नास्ति । २५

यथा वत्सेन प्रत्तां गां दुह एवमेवेमाँल्लोकान् प्रत्तान् काममन्नाद्यं दुह उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै

यथा । वत्सेन । प्रत्ताम् । गाम् । दुहे । एवम् । एव । इमान् । लोकान् । प्रत्तान् । कामम् ।
५ अन्नाद्यमित्यन्न-अद्यम् । दुहे । उत्तानेष्वित्युत्-तानेषु । कपालेषु । अधीति । श्रयति ।
अयातयामत्वायेत्ययातयाम-त्वाय । त्रयः । पुरोडाशाः । भवन्ति । त्रयः । इमे । लोकाः ।
एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तरः-उत्तरः । ज्यायान् । भवति । एवम् । इव ।
हि । इमे । लोकाः । समृद्ध्या इति सम्-ऋद्ध्यै ।

यथेति ॥ [v]प्रत्ता प्रदातुं क्षीरमारब्धाम् । आदिकर्मणि निष्ठा ( पा ३·४·७१ ) ।
१० [v]यथा वत्ससंसर्गेण बृहितोधोभारां [v]दुहे दुग्धे । " लोपस्त आत्मनेपदेषु " ( पा ७·१·४१ ) इति तलोपः । [v]एवम् [v]एव [v]इमान् [v]लोकान् अनेन त्रिधातुना वत्सस्थानीयेन [v]प्रत्तान् [v]काम स्वाभिमतम् [v]अन्नाद्य दुग्धे यजमानः ॥

उत्तानेष्विति ॥ गतम् । यातयामत्व गतरसत्वम् । त्रय इति । पुरोडाशत्रित्वेन लोकत्रयप्राप्ति[c] । उत्तरउत्तर इति । लोकानामुत्तरोत्तरज्यायस्त्वात् पुरोडाशानामपि उत्तरोत्तरज्यायस्त्व
१५ [v]समृद्ध्यै भवति । सदृशयोगात् समृद्धिः ॥

रिक्षलोकाधिपतिः [v]इन्द्रः [v]अधिराजः । [v]असौ स्वर्गलोकाधिपतिः [v]इन्द्रः [14]स्वराट् । [v]इमान् [v]एव [v]लोकान् लोकाधिपतीन इन्द्रराजादीन् [v]स्वेन [v]भागधेयेन सेवते । [v]यथा लोके [v]वत्सेन [15]वत्सचोषणेन [v]प्रत्तां प्रस्नवनं प्रापितां [v]गां [16]जनो दोग्धि, [v]एवम् [v]एव [v]इमान् [v]लोकान् [v]प्रत्तान् [17]देवैरभिवर्धितान् प्राप्य स्वामीष्टम् अन्नाद्यं [18]दोग्धि लभते[19] ॥

२० उत्तानेष्विति ॥ अत्र यदुक्तं सूत्रकारेण– "अथैनं त्रिधातुमेकादशसूत्तानेषु कपालेष्वधिश्रयति । प्रथमं पुरोडाशमधिश्रित्य परितपनान्तं कृत्वा [20]तस्मिन्नुत्तरे द्वितीयं ज्यायांसमधिश्रित्य तावदन्तमेव कृत्वा तस्मिन्नुत्तरे ज्यायांसमधिश्रयति । प्रचरणकाले दक्षिणार्धात् प्रथमां देवतां यजेत् । मध्यात् द्वितीयाम् । उत्तरार्धात् तृतीयाम् । सर्वेषामभिगमयन्नवद्यतीत्युक्तम् । प्राच्यां दिशि 'त्वमिन्द्र' इति तिस्र ऋचो ऽनुवाक्या समन्वाह । प्रथमामनूच्य मध्यमया यजेत् । मध्यमामनूच्य [21]उत्तमया यजेत । उत्तमामनूच्य प्रथमया यजेत् ।
२५ एवं सर्वा याज्याः पुरोनुवाक्याश्च भवन्ति " ( आपश्रौसू १९·२१·२२–१९·२२·६ ) इति ॥ तत्राधिश्रयणं विधत्ते– ' उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय ' इति ॥ प्रवृत्ताधोमुखानां कपालानामुपरि पुरोडाशमधिश्रयन्ति । अत्रापि तथात्वे यातयामत्वं गतसारत्वं [22]स्यात् तत्परिहारायोत्तानत्वम् ॥

त्रय इति ॥ पुरोडाशसंख्यां प्रशंसति– ' त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै ' इति ॥

३० c. गे४– °न्नवाक्याभिः; गं– °यवाक्याभिः; तै१.तै२.मे– °न्नयाभिः ।
१५. अ.उ.ओ.ट.ना.ने.पा.शै हा–स्वराजः । १६. ट– चोषणेन; ने– पीत्वा चोषणेन । १७. ड– नरः ।
१८. ने– °भिवर्धितान् । १९.–१९. अ.आ.ओ.ना.पा.हा–लभते; ने–दोग्धि लभते; हो१–दोग्धीति लभते ।
२०. भा– तस्मिन्नुत्तरे द्वितीयं । २१. गृ– मध्यमया । २२. अ.आ.उ.ओ.ना.पा.हा– ' स्यात् ' नास्ति ।

सर्वेषामभिगमयन्नवं द्यत्यछम्बट्कारं व्यत्यासमन्वाहानिर्दाहाय ॥ ६ ॥

[ पुरोडाश त्रय पड्विंशतिश्च । ]

सर्वेषाम् । अभिगमयन्नित्यभि गमयन् । अवेति । द्यति । अछम्बट्कारमित्यछम्बट् कारम् ।
व्यत्यासमिति वि अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनिः-दाहाय ॥ ६ ॥

[ मैसं २२५ काम १०.१० ]

सर्वेषामिति ॥ सर्वेषां पुरोडाशानाम् अभिगमयन् पार्श्वे गमनं कुर्वन् अव द्यति । यत्र प्रथमस्यावद्यति तत्पार्श्वे द्वितीयस्यापि, तत्पार्श्वे तृतीयस्य । एतदुक्तं भवति— दक्षिणार्धात् प्रथमां देवतां यजेत्, मध्यात् द्वितीयाम्, उत्तरार्धात् तृतीयाम् इति । अछम्बट्कारम् अनार्तिं, एकस्मिन् भागे त्रयाणामवदाने त्रयमप्यार्तं स्यात् ।

व्यत्यासमिति ॥ व्यत्यासो विनिमयः । व्यत्यासं व्यत्यस्य । णमुलि प्रत्ययात् पूर्वस्योदात्तत्वम् (पा ६.१.१९३) । "प्राच्यां दिशि त्वमिन्द्र" (तैस २.४.१४) इत्याद्यास्तिस्र ऋचः । तत्र प्रथमामनूच्य मध्यमया यजेत् प्रथमे, मध्यमामनूच्य उत्तमया यजेत् द्वितीये, उत्तमामनूच्य प्रथमया यजेत् तृतीये इति । एवं सर्वा याज्या पुरोऽनुवाक्याश्च भवन्ति । तथा—'इन्द्राय राज्ञेऽनुब्रूहि' इत्युक्ते प्राच्यां "दिशि त्वमिन्द्र" इति अनु आह पुरोनुवाक्याम्, "इन्द्रो जयाति न परा जयाते" (तैस २.४.१४) इति यजति । 'इन्द्रायाधिराजाय' इत्युक्ते "इन्द्रो जयाति न परा जयाते" इत्यन्वाह पुरोनुवाक्याम्, "अस्येदेव प्र रिरिचे" (तैस २.४.१४) इति यजति । 'इन्द्राय स्वराज्ञेऽनुब्रूहि' इत्युक्ते "अस्येदेव" इति पुरोनुवाक्यामन्वाह, "प्राच्यां दिशि त्वमिन्द्र" इति यजति । एवं क्रियमाणम् अनिर्दाहाय भवति । इतरथा हवींषि निर्दग्धानि विनाशितानि स्युः ॥

॥ इति द्वितीये तृतीये षष्ठोऽनुवाकः ॥

उत्तरउत्तर इति ॥ [23]ज्यायस्त्वं विधत्ते[23]— 'उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै' इति ॥ भूलोकात् [24]अन्तरिक्षं ज्याय[24] तस्मादपि स्वर्गो ज्यायान् ॥

सर्वेषामिति ॥ ऊर्ध्वाधोभावेन [25]स्थितानां सर्वेषां पुरोडाशानाम् अंशमंशमभिलक्ष्य[25] यथा युगपदेव हस्तप्राप्तिर्भवति तथाऽवदानं विधत्ते— 'सर्वेषामभिगमयन्नव द्यत्यछम्बट्कारम्' इति ॥ [26]अछम्बट्कारो वैयर्थ्यम् । एकस्यापि पुरोडाशस्य यथा वैयर्थ्यं न भवति तथेत्यर्थः ॥

व्यत्यासमिति ॥ याज्यानुवाक्यासु [27]विपर्यासं विधत्ते— 'व्यत्यासमन्वाहानिर्दाहाय' इति ॥ [28]अविनाशायेत्यर्थः । व्यत्यासाभावे सूचा त्रित्वाद्वीर्यपि [29]विनश्येरन् एकैकस्य हविषः [30]पृथग्याज्यानुवाक्ययोः संपादयितुमशक्यत्वात् । [31]सूत्रोक्तप्रकारेण तु व्यत्यासेन पडृच संपद्यन्त इति नास्ति हविर्नाशः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥

९. तं१,तं२– 'भवति' नास्ति । १०. तं१.तं२.मै४– अनार्तत्वाय ।

२३–२३. ने–'ज्यायस्त्वं विधत्ते' नास्ति । २४–२४. द–अन्तरिक्षो ज्यायान्; ने–अन्तरिक्षलोको ज्यायान् । २५. द.क जो ना हा– स्थितानां । २६. आ क द ने.ग्र.हो१–भंगमभिलक्ष्य । २७. ना– विपर्यं । २८. द ने–हविरभिनाशा° । २९. द ने हो१– नश्येरन् । ३०. ड– प्रथमयाज्यानु° । ३१. ड– सूत्रकारोक्तप्रकारेण ।

देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽयन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत् तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत् तयैवास्मिन्निन्द्रियं वीर्यमदधाद्-

५ देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ता । आसन् । तान् । देवान् । असुराः । अजयन् । ते । देवाः । पराजिग्याना इति परा-जिग्यानाः । असुराणाम् । वैश्यम् । उपेति । आयन् । तेभ्यः । इन्द्रियम् । वीर्यम् । अपेति । अक्रामत् । तत् । इन्द्रः । अचायत् । तत् । अनु । अपेति । अक्रामत् । तत् । अवरुधमित्यव-रुधम् । न । अशक्नोत् । तत् । अस्मात् । अभ्यर्ध इत्यभि-अर्धः । अचरत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तम् । एतया ।
१० सर्वपृष्ठयेति सर्व-पृष्ठया । अयाजयत् । तया । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । अदधात् ।

देवासुरा इत्यादि ॥ पराजिग्याना पराजयं प्राप्तवन्तः । "लिटः कानच्" (पा ३ २·१०६), "सन्लिटोर्जेः" (पा ७ ३·५७) इति कुत्वम् । वैश्यं विट्त्वं, विशः प्रजाः किंकरादयः । गुणवचनलक्षणः ष्यञ् (पा ५ १·१२४) । तेभ्य इति । वैश्यं प्रतिपद्यमानेभ्यो देवेभ्यस्तेषाम् इन्द्रियं वीर्यं च अपाक्रामत् । इन्द्रः तत् श्रुत्वा तत् अनु देवसकाशात् अपाक्रामत्
१५ तदवररूसया । अथ तत् अवरोद्धु न अशक्नोत् । "शकि णमुल्कमुलौ" (पा ३·४·१२) इति कमुल् । तदस्मादित्यादि[1] । तत् तदा अस्मात् इन्द्रियात् वीर्याच्च अभ्यर्धः अर्धमभिगत न सर्वं, स्ववीर्येण अर्धं लब्ध्वा अचरत् इन्द्रः । अथार्धान्तरं लिप्समानः प्रजापतिम् उप अधावत् । स चैनं सर्वपृष्ठेष्टया अयाजयत् । सर्वाणि पृष्ठानि स्तोत्राणि रथन्तरबृहद्वैरूप-वैराजशाक्वररैवताख्यानि यस्यामिन्द्रविशेषणत्वेन सन्ति सा तथोक्ता । तयेत्यादि । गतम् ॥

---

१० 'पष्ठेऽथान्नकामस्य त्रिधातुर्योग ईरितः ॥

देवासुरा इति ॥ "अथेन्द्रियसामर्थ्यं शरीरसामर्थ्यं च कामयमानस्येष्टि"[2] त्रिधातुं प्रस्तौति- 'देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽयन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत् तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत् तयैवास्मिन्निन्द्रियं वीर्यमदधात्' इति ॥ 'पराजिग्यानाः पराजयं
१५ प्राप्नुवन्तः 'देवाः 'असुराणां संबन्धि 'वैश्यं प्राप्ताः, विशो भावो वैश्यम् ; 'असुरेष्वेव प्रजाः परवशा इत्यर्थः । तदानीं तेभ्यो यदिन्द्रियसामर्थ्यं यच्छरीरसामर्थ्यं तदुभयं 'तेभ्यः देवेभ्यः 'अपाक्रामत् । 'इन्द्रः 'तत् विदित्वा

---

१. ती१.तै२.मै- तस्मादिति ।

---

१. इ- पष्ठ एवमादकामस्य । २-२. इ- अथेन्द्रियकामस्येष्टि । ३. ए.दो१- °इपवार्गीयं ।

य इन्द्रियकामो ( १ ) वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्निन्द्रियं वीर्यं दधति यदिन्द्राय राथंतराय निर्वपति यदेवाग्नेस्तेजस्तदेवावं रुन्द्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवावं रुन्द्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्त( २ )देवावं रुन्द्धे

य । इन्द्रियकाम इतीन्द्रिय-काम (१) । वीर्यकाम इति वीर्य काम । स्यात् । तम् । एतया । ५
सर्वपृष्ठयेति सर्व-पृष्ठया । याजयेत् । एता । एव । देवता । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । ता । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । दधति । यत् । इन्द्राय । राथंतरायेति राथं तराय । निर्वपतीति नि–वपति । यत् । एव । अग्ने । तेज । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । बार्हताय । यत् । एव । इन्द्रस्य । तेज । तत । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । वैरूपाय । यत् । एव । सवितु । तेज । तत् ( २ ) । एव । अवेति । रुन्द्धे । १०

एता इति ॥ राथन्तरादीन्द्रविशेषान् । यदित्यादि । रथन्तरस्य पृष्ठसाम्न सब्वी राथन्तर । उत्सादिभ्यादञ् ( पा ४ १ ८६ ) । एव बार्हताय इत्यत्रापि । वैरूपादयोऽणन्ता ॥

यदेवाग्नेरित्यादि ॥ रथन्तरस्याग्निभक्तत्वात् । यथा–"तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तर साम " ( तैस ७ १ १ ) । एव सर्वत्र द्रष्टव्यम् ॥

[4]तत् सामर्थ्यद्वयम् [5]अनु [6]स्वयमपि अवरोद्धुम् [7]अपाक्रामत् । गत्वा च [8]तत् अवरोद्धुं न [9]अशक्नोत् । १५ तदानीमिन्द्र [10]अस्मात् सामर्थ्यद्वयादभिप्राप्त्यर्थं सन् [11]अचरत् । तत इतरार्धप्राप्त्यर्थं [12]प्रजापतिम् उपसेव्य सर्वपृष्ठयेष्ट्या सपूर्णं प्राप्तवान् । रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यानि सर्वाणि पृष्ठस्तोत्राणि तैर्युक्त इन्द्रोऽत्र देवता । तस्मादियमिष्टि सर्वपृष्ठा । नात्र स्तोत्रपाठ प्रयोक्तव्य, किंतु स्तोत्राभिधत्व देवताया विशेषणम् ॥

य इति ॥ इदानीं विधत्ते–' य इन्द्रियकामो वीर्यकाम स्यात् तमेतया सर्वपृष्ठया याजयेदेता २० एव देवता स्वेन भागधेयेनोप धावति ता एवास्मिन्निन्द्रिय वीर्यं दधति ' इति ॥

यदिति ॥ [1]राथन्तरत्वादिगुणविशिष्टा [2]इन्द्रविशेषा, एता [3]एव देवता इत्युच्यन्ते । [4]तान् देवताविशेषान् विधत्ते–' यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवाव रुन्द्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्द्धे यदिन्द्राय रैवताय यदेव २५ बृहस्पतेस्तेजस्तदेवाव रुन्द्ध एतावन्ति वै तेजांसि तान्येवाव रुन्द्धे ' इति ॥ पृष्ठस्तोत्रनिष्पादक रथंतर साम वेत्तीति राथन्तर । एव बार्हतादिषु योज्यम् । अग्नीन्द्रादीनां रथंतरादिसामाभिमानित्वात् राथन्तरत्वादिविशेषणैस्तद्दायतेज प्राप्तिर्भवति ॥

---

४ क–स्वयमरुध । ५ आ इ – राथतरादि° । ६ मू–यदिन्द्रदेवविशेषा । ७ मू–'एव' नास्ति । ८ इ छो १–एतान् । ९ अ उ पा– रथन्तरादीनामभि° । ३०

यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्द्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवाव रुन्द्ध एतावन्ति वै तेजाꣳसि तान्येवाव रुन्द्ध उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशो (३) भवति वैश्वदेवत्वाय समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति

५ यत् । इन्द्राय । वैराजाय । यत् । एव । धातुः । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । शाक्वराय । यत् । एव । मरुताम् । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । रैवताय । यत् । एव । बृहस्पतेः । तेजः । तत् । एव । अवेति । रुन्द्धे । एतावन्ति । वै । तेजाꣳसि । तानि । एव । अवेति । रुन्द्धे । उत्तानेष्वित्युत् - तानेषु । कपालेषु । अधीति । श्रयति । अयातयामत्वायेत्ययातयाम - त्वाय । द्वादशकपाल इति द्वादश - कपालः । पुरोडाशः (३) ।
१० भवति । वैश्वदेवत्वायेति वैश्वदेव - त्वाय । समन्तमिति सम् - अन्तम् । पर्यवद्यतीति परि-अवद्यति । समन्तमिति सम् - अन्तम् । एव । इन्द्रियम् । वीर्यम् । यजमाने । दधाति ।

उत्तानेष्वित्यादि ॥ व्याख्यातम् । तत्राथ *प्रयोग – इन्द्राय राथन्तराय चतुरो मुष्टीन् व्रीहीणा निरुप्य पुनरपि [९]बार्हताये एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निरुप्य हविष्कृता वाच विसृज्य गार्हपत्ये द्वादशोत्तानानि कपालान्युपधायाधिश्रयतीति ॥

१५ द्वादशकपाल इति ॥ एकः [१०]पुरोडाशः [१०]द्वादशकपालः कार्यः, [१०]वैश्वदेवत्वाय, द्वादशकपालस्य विश्वेदेवसंबन्धित्वात् । समन्तमिति ॥ पूर्वार्धादारभ्य प्रदक्षिणमुत्तरापवर्गं परितोऽवद्यति ॥

उत्तानेष्विति ॥ पूर्वोक्तत्रिधातावेव विशेषं विधत्ते– 'उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय' इति ॥

द्वादशकपाल इति ॥ अत्र निर्वापविधिभेदात् पुरोडाशषट्कप्राप्तेः [१०]तदपवादार्थमन्यं विधत्ते–
२० 'द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय' इति ॥ अन्यत्र–"वैश्वदेवं द्वादशकपालं प्रामकामः" ( तैस २.२.११, द्र. तैसं २.२.५ ) इत्यादिविधानात् कपालगतद्वादशसंख्या विश्वेषां देवानां प्रिया। अतोऽत्रापि यथोक्तगुणविशिष्टानां विश्वेषामिन्द्रादिदेवानां प्रीतिर्भवति ॥

समन्तमिति ॥ यदुक्तं सूत्रकारेण– "सर्वपृष्ठां निर्वपति । यदिन्द्राय राथन्तरायेति यथासमाम्नातं द्वादशसूत्तानेषु कपालेष्वधिश्रयति । अवदानकाले पूर्वार्धात् प्रथमां देवतां यजति । एवमितराः प्रदक्षिण-
२५ मुत्तरापवर्गम् । समन्तं पर्यवदानीत्युक्तम् । अभि त्वा शूर नोनुम इति पञ्चधो व्यत्यासमन्वाह" ( आपश्रौ १९.२२.७-१२ ), "कदा चन [११]स्तरीरसीत्यासां चतुर्थी" दधाति" (आपश्रौ १९.२३.२) इति च । तत्र 'पूर्वार्धात्' इत्यादिनोक्तं सर्वतोऽवदानं विधत्ते– 'समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति' इति ॥

---

*(बौश्रौ १३.२९.)। ९. तौ१.तै२.पे२.ज– बार्हतायै; मै८– बार्हतादिभ्यः ।

१० १०. द–नास्ति वैश्वदेवत्वायैत्यारभ्य, पौ.ना. हा– नैव कपालं, अ.उ.पा– तदा एककपाल। ११–[illegible] आ–स्तरीरसीति चतुर्थं ।

व्यत्यासमन्वाहानिर्दाहायाश्वं ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृषत्वायैतयैव यजेताभिशस्यमान एतायेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः ॥ ७ ॥

[ इन्द्रियकाम सवितुस्तेजस्त्पुरोडाशोऽष्टात्रिंशश्च । ]

व्यत्यासमिति वि अत्यासम् । अन्विति । आह । आनिर्दाहायेत्यानि–दाहाय । अश्वं । ऋषभ । वृष्णि । बस्त । सा । दक्षिणा । वृषत्वायेति वृष त्वाय । एतया । एव । यजेत । ५ अभिशस्यमान इत्यभि शस्यमान । एता । च । इत् । वै । अस्य । देवता । अन्नम् । अदन्तीति । अदन्ति । उ । एव । अस्य । मनुष्या ॥ ७ ॥

[ मैत्र २२१३ काम १०१० ]

व्यत्यासमिति ॥ "त्वामिद्धि हवामहे" (तैस २४१४) इति पङ्क्तो व्यत्यस्य अन्वाह । तद्यथा– 'इन्द्राय राथन्तरायानुब्रूहि' इत्युक्ते "अभि त्वा शूर नोनुम" (तैस १० २४१४) इत्यनूच्य "त्वामिद्धि हवामहे" इति यजति । 'इन्द्राय बार्हतायानुब्रूहि' इत्युक्ते "त्वामिद्धि हवामहे" इत्यनूच्य "यद् द्याव इन्द्र ते" (तैस २४१४) इति यजति । 'इन्द्राय वैरूपायानुब्रूहि' इत्युक्ते "यद् द्याव इन्द्र" इत्यनूच्य "पिबा सोममिन्द्र" (तैस २४१४) इति यजति । 'इन्द्राय वैराजायानुब्रूहि' इत्युक्ते "पिबा सोममिन्द्र" इत्यनूच्य "कदा चन स्तरीरसि" (तैस १४२२) इति यजति । 'इन्द्राय शाक्वरायानुब्रूहि' (तैस २४१४) १५ इत्युक्ते "कदा चन स्तरीरसि" इत्यनूच्य "रेवतीर्नः सधमाद" (तैस २४१४) इति यजति । 'इन्द्राय रैवतायानुब्रूहि' इत्युक्ते "रेवतीर्नः सधमाद" इत्यनूच्य "अभि त्वा शूर नोनुम" (तैस २४१४) इति यजति ॥

अश्व इत्यादि ॥ अन्वाहार्यमासाद्य अश्वादीन् दक्षिणा दद्यात् । वृषत्वायेति । वृषत्व सेक्तृत्व वीर्यवत्त्वम् । एषा दान वृषत्वाय भवति यजमानस्य, सेक्तृत्वादेषाम् ॥ २०

व्यत्यासमिति ॥ चतुर्थप्रपाठकस्यास्यानुवाके समाम्नातस्यमावानाम्–"अभि त्वा शूर नोनुम" (तैस २४१४) इत्यादीना पञ्चानामृचा, चतुर्थीत्वेन [12]प्रक्षेप्यमाणाया "कदा चन स्तरीरसि" (तैस १४२२) इत्यस्याश्च पूर्वोक्तत्रिधातुन्यायेनैकैकस्या पुरोनुवाक्यात्व याज्यात्व च विधत्ते– 'व्यत्या समन्वाहानिर्दाहाय' इति ॥

अश्व इति ॥ चोदकप्राप्तामन्वाहार्यदक्षिणा बाधितु विधत्ते– 'अश्व ऋषभो वृष्णिर्बस्त सा २५ दक्षिणा वृषत्वाय' इति ॥ [13]अविजातो पुमान् 'वृष्णि' । [14]अजजातो पुमान् 'बस्त' । 'वृषत्वाय पुंस्त्वाधिक्याय ॥

१२ कमृ– प्रक्षिप्यमाणाया । १३ क– अविजात । १४ क– अजजात ।

अभिशस्यमान इति ॥ परिवादारोपेण दूषणमभिशस्त । एतामेवेदिति । एता देवता अस्य अन्नम् अदन्ति च इत्, अदन्ति एव अस्य अन्न मनुष्या, अभिशस्तत्वात् मुक्तो भोज्यान्न एव भवतीति यावत्। "उकारोऽपृक्त प्रकृत्या वकारोऽन्तरे" (तेप्रा ९ १६) इति संहिताया वकार आगम, "°तन्वादीना छन्दसि बहुलम्" (पा ६ ४ ७७ वा १) इति
५ संहितायाम् "उवड वा" ।

इति द्वितीये तृतीये सप्तमोऽनुवाक ।

---

एतयेति ॥ मिथ्यापवादपरिहारार्थं तामेवेष्टिं विधत्ते– 'एतयैव यजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्या' इति ॥ एता राथन्तरेन्द्रादयो देवता अस्य अन्न पुरोडाशरूप यदि अदन्ति तदानीं मनुष्या सर्वथाऽपि अदन्ति एव। "वेदमनूच्याऽऽचार्योऽन्तेवा
१० सिनमनुशास्ति" (तैउ १ ११) इत्यादौ शिष्यानुशासने शिष्यस्य मिथ्यापवादयुक्तेषु व्यवहारसंदेहे सति शिष्टाचारेण निर्णय आम्नात –"यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथा" (तैउ १ ११) इति। यदा मनुष्येष्वपि शिष्टानामाचारो नियामक तदा देवतानामाचारो नियामक इति किमु वक्तव्यमित्यभिप्रेत्य 'अदन्त्युवेव' इत्यवधारितम् ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम् –

१५ "रथंतरादिभिर्भिन्ना इन्द्रास्तेषा न भिद्यते।
पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥
भिद्यते कर्मणा भेदाच्चोदके पृथगुक्तित ।
शेषस्य मन्त्रनुल्यत्वात् तत्कार्यं सकृदिष्यताम्" ॥ (जैन्या ३ ५ ६ ७)॥

"य इन्द्रियकामो वीर्यकाम स्यात् तमेतया सर्वपृष्ठया याजयेत्" (तैस २ ३ ७) इति विहिताया
२० मिष्टौ षडिन्द्रा एव श्रूयन्ते–'इन्द्राय राथंतरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवताय' इति। तत्र स्वरूपेणैक अपि इन्द्र पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथंतरादिसाम्नां मध्येन विशेष्यमाण षोढा भिद्यते। तासा सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते– "द्वादशकपाल पुरोडाशो भवति वैश्वदेवत्वाय" (तैस २ ३ ७) इति। तस्मिन् पुरोडाश उपतदेवतास्य सर्वस्य पृथक्प्रदानाय तस्य प्रदेशेभ्योऽवदान श्रूयते– "समन्त पर्यवद्यति" (तैस २ ३ ७)
२५ इति। तत्र देवताभेदात् प्रदानभेदेन च कर्मणा भेदे सति चोदके पृथगतिदेशात् स्विष्टकृदिडादि शेषकार्यं षट्कृत्व पृथगनुष्ठेयमिति चेत्। मैवम्। शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासंभवात्। तस्मात् सकृदेव कार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाक ॥ ७ ॥

३० ३ ११ तेर.श्री– परिवादारोपणम्। ४–८ पं०– टरा न तैर तर–उवड्।

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन्चक्षुरदधाद्यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा

रजन । वै । कौणेय । क्रतुजितमिति क्रतु जितम् । जानकिम् । चक्षुर्वन्यमिति ५ चक्षुः –वन्यम् । अयात् । तस्मै । एताम् । इष्टिम् । निरिति । अवपत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् । तया । एव । अस्मिन् । चक्षुः । अदधात् । यः । चक्षुष्काम इति चक्षुः –कामः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । १०
अष्टाकपालमित्यष्टा - कपालम् । अग्ने । वै । चक्षुषा ।

रजनो वा इत्यादि ॥ ^v^रजन नाम कुणेरपत्यम् । "इतश्चानिञः" (पा ४ १·१२२) इति ढक् । ^१^क्रतुजित नाम जनकस्यापत्यम् ^v^अयात् प्रापयत । कीदृशम् ? ^१^चक्षुर्वन्य चक्षुषो वनितार संभिक्तार चक्षुष प्रदातारम् । छान्दस कर्तरि ^१^वन्यः । यद्वा - कूणिताक्ष कूणिर्निमीलिताक्षः, तस्या पत्य ^v^कौणेय । पितुरक्षिव्यापत्तिकथन पुत्रस्य व्यापन्नाक्षित्व द्योतयितुम् । पित्रा सरूपो हि सन् १५ पुत्रो भवतीति । ^v^जानकिम् अयात् ^१^"चक्षुषो लाभाय"^१^, चक्षुषो वनन सभजन चक्षुर्वन्य, तत् जानकिमयात् । याच्ञाकर्मा वा याति·, चक्षुर्लाभ तमयाचतेति । चक्षुरेव वा वननीय चक्षुर्वन्य, तत् समयाचतेति । भ्राजस्वान् दीप्तिमान् । उभयत आग्नेयावष्टाकपालौ पुरोडाशौ, मध्ये सौर्यश्चरुः ॥

अग्नेर्वै चक्षुषेति ॥ ^१^अग्नेः हेतोर्यश्चक्षु प्रवर्तते तेनेत्यर्थः । विभक्तिव्यत्यये वा अग्निना ^१^चक्षुषा इति । एव ^v^सूर्यस्य इति ॥ २०

सप्तमे सर्वपृष्ठोक्ता यीर्यकामाभिधाम्यया ॥

रजन इति ॥ अथाष्टमे चक्षुष्कामस्य त्रिहविष्कामिष्टिं विधातु प्रस्तौति– 'रजनो वै कौणेय क्रतुजित् जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपाल तयैवास्मिन्चक्षुरदधात्' इति ॥ रजननामक कश्चित् पुरुष क्रतुजिन्नामकं पुरुषम् ^v^अयात् प्राप्नोत् । ^v^रजन कुणेरपत्य, क्रतुजित् जनकस्यापत्यं, स तु चक्षुर्वन्यमभूत् २५ [illegible] चक्षुर्वन्यः, [illegible] इत्यर्थः । अतो रजनस्तमाप ^v^क्रतुजित् प्राप त्रिहविष्कयेष्ट्या तस्मात् प्राप्तवान् ॥

य इति ॥ विधत्ते– 'यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति सूर्यस्य देवा

१. [illegible]– कुन्तयै । २–२ तै [illegible]– चक्षुर्भाग । ३०

मनुष्या वि ( १ ) पश्यन्ति सूर्यस्य देवा अग्निं चैव सूर्यं च स्वेन भागधेयेनोप धावति तावेवास्मिंश्चक्षुर्धत्तश्चक्षुष्मानेव भवति यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत् प्रति दधाति यत् सौर्यो नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते

५ मनुष्याः । वीति ( १ ) । पश्यन्ति । सूर्यस्य । देवाः । अग्निम् । च । एव । सूर्यम् । च । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । चक्षुः । धत्तः । चक्षुष्मान् । एव । भवति । यत् । आग्नेयौ । भवतः । चक्षुषी इति । एव । अस्मिन् । तत् । प्रतीति । दधाति । यत् । सौर्यः । नासिकाम् । तेन । अभितः । सौर्यम् । आग्नेयौ । भवतः । तस्मात् । अभितः । नासिकाम् । चक्षुषी इति । तस्मात् । नासिकया । चक्षुषी इति । विधृते इति वि-धृते ।

१० यदाग्नेयाविति ॥ यस्मादभितः [1]आग्नेयौ पुरोडाशौ [2]भवतः, तस्मादाग्नेये [3]चक्षुषी [4]अस्मिन् यजमाने निपन्नचक्षुषि [5]प्रति [6]दधाति पुनः स्थापयति । [7]यत् [8]सौर्यः मध्ये भवति [9]नासिका [10]तेन अस्मिन् प्रतिदधात्येव, नासिकया विधृते हि चक्षुषी पश्यतः । अभितः सौर्यमिति । [11]अभितः उभयत आदावन्ते च सौर्यस्य । "अभितःपरितः०" (पा-भा २ ३ २ ) इति द्वितीया । यस्मादत्र [12]तस्मात् [13]नासिकाम् [14]अभितः [15]चक्षुषी, [16]तस्मात् एव [17]चक्षुषी [18]नासिकया

१५ [19]विधृते ॥

अग्निं चैव सूर्यं च स्वेन भागधेयेनोप धावति तावेवास्मिंश्चक्षुर्धत्तश्चक्षुष्मानेव भवति' इति ॥ [1]भानवतः [2]दीप्त्याधिक्यद्युक्ताय । उभयोरनिमिषत्वज्ञाधायाम्मनुष्यदृष्टेरनित्या । अभिश्च यदाधिज्यवल्ति यदाधिन् उप शाम्यति' । तस्मात् [3]अनिश्चयमाम्यलक्षणेन मनुष्यदृष्टेरभिश्च सम्बन्ध । देवानां स्वनिमिषत्वात् सूर्यप्रकाश-महिम्ना सर्वदा दृष्टिरियम्ति तस्मात् [4]सूर्यस्य च ॥

२० यदिति ॥ आग्नेयद्वयमध्यवर्ति सौर्यं [5]चक्षुर्द्वयमध्यवर्तिनासिकासाम्येन[6] प्रशंसति-' यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत् प्रति दधाति यत् सौर्यो नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते' इति ॥ [7]आग्नेयद्वयेनास्मिन् यजमाने चक्षुषो प्रतिष्ठा । [8]तत्र सौर्येण नासिकायाः [9]प्रतिष्ठा । [10]नासिकया [11]चक्षुषी [12]विधृते परस्परमिश्रणाभावाय [13]विविच्य स्थापिते । अत्राऽऽग्नेयस्य प्रथमस्य "उभे सुश्चन्द्र सर्पिषः" (तैसं २ ४ १४ ) इति पुरोनुवाक्या

२५ "वि ज्योतिषा बृहता भात्यग्निः" (तैसं २ ४ १४ ) इति याज्या ॥

समानी इति ॥ यस्मात् सम्यगनयोः याज्यानु विपक्षे- 'समानी याज्यानुवाक्ये भवतः समानं हि चक्षुः समृद्ध्यै' इति ॥ [14]समानी तर्हविषे ॥

काम्या इष्टय ]

समानी याज्यानुवाक्ये भवतः समानꣳ हि (२) चक्षुः समृद्ध्या उदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान् प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत् ॥ ८ ॥

[ नि हर्चष्टाविꣳशतिश्च । ]

समानी इति । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवत । समानम् । हि (२) । चक्षु । ५
समृद्ध्या इति सम् ऋद्ध्ये । उदिति । उ । त्यम् । जातवेदसमिति जात वेदसम् । सप्त ।
त्वा । हरित । रथे । चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । इति । पिण्डान् । प्रेति ।
यच्छति । चक्षु । एव । अस्मै । प्रेति । यच्छति । यत् । एव । तस्य । तत् ॥ ८ ॥

[ मैस २ ३ ६, कास ११ १ ]

समानी इति ॥ 'समान हि चक्षु ' इति वचनात् चक्षु स्थानापयोराग्नेययो 'समाना १०
समान्यौ समानरूपे 'याज्यानुवाक्ये 'भवत, " उदग्ने शुचयस्तव ", " वि ज्योतिषा " ( तैस
२ ४ १४) इति । सौर्यस्य तु–"उदु त्य जातवेदसम् ", "चित्र देवानाम्" ( तैस २ ४ १४ )
इति । " केवलमामक° " ( पा ४ १ ३० ) इति समानशब्दात् ङीप्, " वा छन्दसि " ( पा
६ १ १०६ ) इति पूर्वसवर्णदीर्घत्वम् ॥

उदु त्यमित्यादि ॥ चतुर्धाकरणकाले सार्यात् त्रीन् 'पिण्डान् उद्धृत्य 'उदु त्यम्' १५
इत्यादिभिर्मन्त्रै यजमानाय 'प्र 'यच्छति । स च प्राश्नातीति गम्यते । मन्त्रत्रयस्य सौर्यत्वात्
सौर्यादेव 'उद्धृत्य प्रयच्छतीति' । ननु चक्षुष्कामस्य किं पिण्डैरित्याह– 'चक्षु 'एव 'अस्मै
सनासिकमिदानीं दीयते, न पिण्डत्रयमात्रम् । किं यत् किंचित् चक्षुर्देहाननुगुणमेव दीयते'
नेत्याह–'यत् 'एव 'तस्य चक्षु 'तत् एव दीयते, न यत् किंचित् ॥

इति द्वितीये तृतीयेऽष्टमोऽनुवाक ॥ २०

उदिति ॥ यदुक्त सूत्रकारेण– " चतुर्धाकरणकाले सौर्यात्स्थोत् पिण्डानुद्धृत्योदु त्य जातवेदस", सप्त त्वा हरितो रथे, चित्र देवानामुदगादनीकमिति पिण्डान् यजमानाय प्रयच्छति । तान् यजमान प्राश्नाति " ( आपश्रौ १९ २३ ४ ५ ) इति, तत्र त्रिभिर्मन्त्रै पिण्डदान विधत्ते– 'उदु त्य जातवेदसꣳ, सप्त त्वा हरितो रथे, चित्र देवानामुदगादनीकमिति पिण्डान् प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत्' इति ॥ 'उदु त्यम्', 'चित्र देवानाम्' इत्येतदुभय प्रथमकाण्डस्य चतुर्थप्रपाठके ( तैस १ ४ ४३ ) २५ समाम्नातम् । 'सप्त त्वा हरित ' इत्येषा तूपरितनस्य प्रपाठकस्यान्त्यानुवाके ( तैस २ ४ १४ ) समाम्नास्य व्याख्यातम् । 'सप्त त्वा हरित ' इत्येषा तूपरितनस्य शोगोत्पत्ते पुरा 'यत् 'एव चक्षु पाटवोपेतमासीत् 'तत् मातस्वात् तत्रैव व्याख्यास्यते । 'तस्य यजमानस्य रोगोत्पत्ते पुरा 'यत् 'एव चक्षु पाटवोपेतमासीत् ''तत् पिण्डदानेन ''दत्तमेव भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाक ॥ ८ ॥

३ ल– 'समान्यौ' नास्ति । ४-४ तस्य तैर मैल–°स्तृभिरग्ने इति । ३०

९ इ मुं होर– तदेव । १० इ मुं– दत्ताप ।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविदामनमस्यामनस्य देवा ये सजाताः॰ कुमाराः॰ समनसस्तानहं कामये हृदा ते मा

ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स जातेषु । भूयासम् । धीरः । चेत्ता । वसुविदिति
५ वसु - वित् । ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । उग्रः । चेत्ता । वसुविदिति वसु वित् । ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स जातेषु । भूयासम् । अभिभूरित्यभि भूः । चेत्ता । वसुविदिति वसु वित् । आमनमित्या मनम् । असि । आमनस्येत्या-मनस्य । देवाः । ये । सजाता इति स जाताः । कुमाराः । समनस इति स मनसः । तान् । अहम् । कामये । हृदा ।

१० अथ साग्रहिर्णामिष्टिं विधास्यति ॥ तस्याः परिधिपरिधानमन्त्रा एते– 'ध्रुवोऽसि' इत्याद्या, याजमानेषु ( तैस १ ६ २ ) व्याख्यातप्रायाः । [१]ध्रुवः नित्यः [१]असि [१]अहम् अपि [१]सजातेषु [१]ध्रुवः [१]भूयासम् । [१]धीरः धारयिता [१]चेत्ता ज्ञाता [१]वसुवित् धनानां च लब्धा च भूयासम् ॥ अथ द्वितीयः – 'ध्रुवोऽसि' इत्यादि ॥ गतम् । [१]उग्रः [१]उद्गूर्णायुधः च, अथ[२] [१]चेत्ता च [१]वसुवित् च भूयासम् ॥ अथ तृतीयः – 'ध्रुवोऽसि' इत्यादि ॥ गतम् ॥ [१]अभिभूः
१५ अभिभविता शत्रूणां [१]चेत्ता [१]वसुवित् च भूयासम् इति ।

अथ तस्यामेव पुरस्तात् स्विष्टकृत उपहोमाः – आमनमसि' इत्याद्याः त्रयः[३] ॥ एताश्च तिस्रः पञ्चपदाः पङ्क्तयः । 'आमनमस्यामनस्य देवा ये सजाताः समनसः' इति प्रथमा । 'ये कुमाराः

अष्टमे हस्तिकामस्य त्रिहविष्केष्टिरीरिता ॥

ध्रुव इति ॥ अथ नवमे [१]साग्रहणीष्टिं विधास्यन्नादौ चोदकप्राप्तान् "गन्धर्वोऽसि विश्वावसु"
२० ( तैस १ १ ११ ) इत्यादिकान् परिधिमन्त्रानपवदितुं मन्त्रान्तराणि दर्शयति– 'ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवित्' इति ॥ हे मध्यमपरिधे, त्वं [२]स्थिरः [३]असि त्वदीयस्थापनेन [३]अहम् अपि ज्ञातिषु मध्ये स्थिरः [३]भूयासम् । किं च धैर्यवानभिज्ञो [४]धनवांश्च भूयासम् । एवं दक्षिणोत्तरपरिधिमन्त्रयो [५]र्व्याख्या । शत्रूणां प्रतिवादित्वराहित्याय [६]आज्ञाधारित्वमुग्रत्वम् । आज्ञामुल्लङ्घ्य प्रतिवादिनं
२५ [७]निरस्तवतः अभिभूः यम् ॥

१–१ मै–उद्गूर्णः । २. मै– 'अथ' नास्ति ।

१ क ता–शृ–साग्रहणी । २ क– ध्रुव । ३ हो१– धारयिता च ४– धन लब्धा च । ४ क ग१,हो१– व्याख्यम् । ५ अ ऊ पा– अधरत्वमु° । ६ अ आ ऊ पा– तिरस्कृत्यम्, क जो ट ना ञ हो– निरस्कृत्यम् ।

कामयन्ताऽ हृदा तान् म आमनसः कृधि स्वाहाऽऽमनमस्या(१)मनस्य देवा याः
स्त्रियः समनसस्ता अहं कामये हृदा ता मा कामयन्ताऽ हृदा
ता म आमनसः कृधि स्वाहा

---

ते । माम् । कामयन्ताम् । हृदा । तान् । मे । आमनस इत्या मनस । कृधि । स्वाहा । आमनमित्या मनम् ।
असि (१) । आमनस्येत्या मनस्य । देवा । या । स्त्रियं । समनस इति स मनस । ता । अहम् । ५
कामये । हृदा । ता । माम् । कामयन्ताम् । हृदा । ता । मे । आमनस इत्या-मनस । कृधि । स्वाहा ।

---

इति द्वितीया । 'या स्त्रिय' इति तृतीया । तत्र 'आमनमसि' इत्यादिक सर्वं द्वितीयेऽपि मन्त्रे विनियुज्यते । तृतीये तु मन्त्रलिङ्गाद्भेदात् सर्व पुनराम्नायते एते । उपहोमा साग्रहिण्या एयाङ्गभूता । आमनमिति च आमनकर साग्रहिण्याख्य कर्मोच्यते, हूयमान वाऽऽज्यम् । अत्र सामर्थ्यात् सम समासे आकार आगत । सगृहीत मनोऽस्मिन्निति आमनम् । छान्दसोऽन्त्य १० लोप । यद्वा– आभिमुख्येन मनन करोतीत्यामनम् । पचाद्यच् (पा ३ १ १३४), छान्दस पूर्वपद-प्रकृतिस्वरत्वम् । पचाद्यजन्तेन वा प्रादिसमास । ईदृशस्यास्य सबन्धिनो हे देवा, यूयमपीद श्रोतुम् अर्हथ यदामन ब्रूमहे इति । देवेभ्य आवेद्य पुनरप्यामनमाह– ये सनाता मया समानजन्मान । कुमाराणा स्त्रीणा च वक्ष्यमाणत्वात् महान्त पुमास इति गम्यते । ब्राह्मण च भविष्यति– 'एतावन्तो वै सजाता ये महान्तो ये क्षुल्लका या स्त्रिय' इति । तत्र गोबली १५

---

आमनमिति ॥ परिधिमन्त्रानाम्नायोपहोममन्त्रान् पठति– 'आमनमस्यामनस्य देवा ये सनाता कुमारा समनसस्तानह कामये हृदा ते मा कामयन्ताऽ हृदा तान्म आमनस कृधि स्वाहाऽऽमनमस्यामनस्य देवा या स्त्रिय समनसस्ता अह कामये हृदा ता मा कामयन्ताऽ हृदा ता म आमनस कृधि स्वाहा' इति ॥ अत्र 'सनाता कुमारा' इति पदभेदमपहस्यावशिष्टानुषङ्गेण मन्त्रद्वय द्रष्टव्यम् । सनातान् आकामयितु मनुत इति आमनम् । हे हूयमानाज्य, त्व तादृशम् असि । अत आमनस्य सनातान् आकामयितु २० मन्यमानस्य यजमानस्य ये सनाता ज्ञातिप्रभृतय समनस समनस्का अनुकूला सन्ति, हे देवा, तान् सजातान् अह हृदा चित्तेन कामये । ते च मा हृदा कामयन्ताम् । तान् सजातान् मे मदर्थम् आमनस मामाकामयितु मन्यमानान् कुरु । इदमाज्य स्वाहुतम् । एव कुमारमन्त्रस्त्रीमन्त्रौ व्याख्येयौ ॥

---

३ मै४– अनुषज्यते । ४–४ त१ त२,ल– 'तृतीये तु पुनराम्नायते' नास्ति । ५ मै– आमननकारणम् । ६ मै४– '°समास' इत्यस्यानन्तरम् 'ईदृश त्वमसि' । [illegible] त१ त२ मै ल– अर्हसि । २५ ८ त१ त२ मै ले– पुम ।

---

७ अ इ उ ओ पा ग.हा– आकारयितुम् । ८ क ओ ग हा– हे आमन । ९ अ उ ओ पा ग.हा– आकारयितुम्, इ– गो भाययितुम् । १० क हो१– 'यजमानाय' नास्ति । ११ क हो१– समानमनस्का । १२ अ उ– मा तारयितु पा – मामवतारयितु ग.हो१– माम कारयितु ओ हा– मत्कार्यार्थं कारयितु । ३०

वश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति सांग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां ( २ ) गृह्णाति

वैश्वदेवीमिति वैश्व - देवीम्। साग्रहणीमिति सा - ग्रहणीम्। निरिति। वपेत्। ग्रामकाम इति
५ ग्राम - काम । वैश्वदेवा इति वैश्व - देवा । वै । सजाता इति स - जाताः । विश्वान्। एव।
देवान्। स्वेन। भागधेयेनेति भाग - धेयेन। उपेति। धावति। ते। एव। अस्मै। सजातानिति
स - जातान्। प्रेति। यच्छन्ति। ग्रामी। एव। भवति। साग्रहणीति सा - ग्रहणी। भवति।
मनोग्रहणमिति मनः– ग्रहणम्। वै। सग्रहणमिति स - ग्रहणम्। मनः। एव।
सजातानामिति स - जातानाम् ( २ )। गृह्णाति।

१० यदन्यायेन "प्रथमेन महता समानजातानां" ग्रहणम्। "समनसः समानमनसः सगतमनसो वा ये सजाताः महान्तो मम समनस "तान् "अह "कामये "हृदा हृदयेन, समनस एव सदा कामये। "ते अपि "मा तादृशमेव "कामयन्तां "हृदा हृदयेन। अनधानार्थं हृदयग्रहणम्। "त्वमपि "तान् "आमनसः "आगतमनसः सगृहीतमनसः" "कृधि कुरु। शपो लुकि "श्रुशृणुपृकृवृभ्य." (पा ६.४.१०२) इति धिभाव। स्वाहुतमिदं करोमीति ॥ अथ द्वितीय.–आमनमित्यादि ॥
१५ बाल्ययौवनयोर्मध्ये वर्तमाना "कुमारा। समानमन्यत् स्वाहान्तम् ॥ अथ तृतीय– आमनमित्यादि ॥ सर्वं समानम्; स्त्रीलिङ्ग तु विशेषः ॥

इदानीमिष्टिं विधाति– 'वैश्वदेवीम्' इत्यादि। मनसः सग्रहणस्य हेतुत्वेन सवनिर्भा साग्रहणी इष्टिः। चरुरत्र श्रप्यते ॥

वैश्वदेवीमिति ॥ इदानीमिष्टिं विधत्ते– 'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै
१० सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति' इति ॥ मनसा परस्परमैकमत्येन "सम्यक् स्वीकार. संग्रहणम्। तदस्यामिष्टावस्ति सा सांग्रहणी ॥
सांग्रहणीति ॥ नामधेयमिदमित्यभिप्रायेण प्रशंसति– 'सांग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां गृह्णाति' इति ॥ [illegible] "मनोग्रहणं, [illegible] [illegible]। [illegible] "सजातानां "मन. स्वाधीनं करोति ॥

---

१५ ७.–९. [illegible]– प्रथमेन महताम्। १०. [illegible]– '[illegible]' इत्यनन्तरं '[illegible]'। ११–११. [illegible]– [illegible]।

१३. [illegible]–'[illegible]' नास्ति। १४. [illegible]– 'मनोग्रहणम्' नास्ति।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते परिधयः परिधीयन्त

ध्रुवः। असि। ध्रुवः। अहम्। सजातेष्विति स जातेषु। भूयासम्। इति। परिधीनिति परि धीन्। परीति। दधाति। आशिषमित्या शिषम्। एव। एताम्। एति। शास्ते। अथो इति। एतत्। एव। सर्वम्। सजातेष्विति स-जातेषु। अधीति। भवति। ५ यस्य। एवम्। विदुषः। एते। परिधय इति परि-धयः। परिधीयन्त इति परि धीयन्ते।

'ध्रुवोऽसि' इत्यादिना आम्नातानां मन्त्राणां विनियोगं दर्शयति। 'आशिषम्' इति 'ध्रुवो भूयासम्' इत्यादिकाम्। अथो अपि च सजातेषु मध्ये एतत् सर्वं भवति यद् ध्रुवत्व धीरत्व वसुवित्त्वमित्यादि। एतत् सर्वं यथा श्रूयते तथा भवति। [12]यद्वा– एतत् सर्वं प्राप्नोति। भू प्राप्तौ। न प्राप्तप्राप्तिमात्रमेवेति[13] भावः। यस्य एवं विदुष एतैर्मन्त्रैः एते परिधयः परिधीयन्ते॥ १०

ध्रुव इति। आदावाम्नातान् मन्त्रान् विनियुङ्क्ते– 'ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते परिधयः परिधीयन्ते' इति॥ त्रिष्वपि मन्त्रेषु 'भूयासम्' इत्यभिधानादाशासनं गम्यते। किं च एवं विदुषः [15]एतैर्मन्त्रैः परिधाने सति सजातेषु मध्ये मन्त्रैः प्रार्थितं सर्वमधिकं सम्पद्यते॥

आमनमिति॥ मन्त्रान्तराणि विनियुङ्क्ते– आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहो- १५ त्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका या स्त्रियस्तानेवाव रुन्द्धे त एनमवरुद्धा उप तिष्ठन्ते' इति॥ अत्र 'सजाता' [16]इत्यादिके मन्त्रभागे 'समनसः' [17]इत्याद्युत्तरभागोऽनुषञ्जनीयः। 'कुमाराः' इत्यादिके मन्त्रभागे 'आमनमसि' [18]इत्यादिमन्त्रपूर्वभागोऽनुषञ्जनीयः। तथा सति [19]त्रिभिर्मन्त्रैराहुतित्रयं सम्पद्यते। स्वकुले [20]'स्वजातिषु मध्ये' [20]स्वग्रामे च ये महान्तः पुरुषाः प्रौढाः ये च क्षुल्लका बालाः याश्च पत्नीभगिनीमात्रादयः स्त्रियः एतावन्तः ज्ञात्यपेक्षिताः सजाताः तान् अनयेष्ट्या स्वाधीनान् करोति। २० ते च जनाः स्वाधीनाः [22]एनं सन्तः[23] एनं सेवन्ते॥

---

१२ तैर मैल– 'यद्वा' नास्ति। १३ मै४– °प्राप्तिमेवेति।

---

१५ क ग१ हो१– तैर्मन्त्रै।
१६ आ क ढ ग१ हो१– इत्यन्ते।
१७ अ आ उ क जो ना पा हा– इत्याद्युत्तरभागो°।
१८ अ उ पा– °मन्त्रभागो°, क ढ ग१ हो१– इत्यादिपूर्वभागो°।
१९ ड– एभिर्मन्त्रै°, अ उ पा– प्रतिमन्त्रै।
२०–२० ढ ग१ हो१– 'स्वजातिषु मध्ये' नास्ति।
२१ ढ– था।
२२–२३ ग१ हो१ ड– 'एवं सन्तः' नास्ति।

[ काम्या इष्टयः

आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवाव रुन्धे (३) त एनमवरुद्धा उप तिष्ठन्ते ॥ ९ ॥

[ स्वाहाऽऽमनमसि सजातानां रुन्धे पञ्च च । ]

आमनमित्या-मनम् । असि । आमनस्येत्या - मनस्य । देवाः । इति । तिस्रः । आहुतीरित्या - हुतीः । ५ जुहोति । एतावन्तः । वै । सजाता इति स - जाताः । ये । महान्तः । ये । क्षुल्लकाः । याः । स्त्रियः । तान् । एव । अवेति । रुन्धे (३) । ते । एनम् । अवरुद्धा इत्यव-रुद्धाः । उपेति । तिष्ठन्ते ॥९॥

[ मैसं २·३·२; कासं १२·२ ]

'आमनम्' इत्यादि स्विष्टकृतः पुरस्तात् [v]तिस्रः स्रुवाहुतीरुपजुहोति । [v]क्षुल्लकाः क्षुद्राः कुमाराः । [iv]क्षुध क्लान्तीति [*]क्षुल्लकाः । कान्तात् कुत्सायां [v]प्रागिवीयः कः[*] ॥

१० तृतीये नवमोऽनुवाकः ॥

अत्र विनियोगसंग्रहः—

"सांग्रहण्यां तु परिधीन् परिधत्ते ध्रुवस्त्रयात् ।

[v]आमनेति त्रिभिस्तत्र उपहोमास्त्रयो मताः ॥

मन्त्रभेदः सजातेति कुमारेति पदद्वयात् ॥ १ ॥

१५ अत्र मीमांसा ॥ दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आमनाहुतिभिर्बाध्या अनूयाजा न वाऽग्रिमः ।

[v]त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः " ॥ ( जैन्या १०·४·१० ) इति ॥

सांग्रहण्यिष्टौ श्रूयते— ' आमनमस्यामनस्य देवा ये सजाताः इति तिस्र आहुतीर्जुहोति " इति । एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनूयाजाः बाध्याः । कुतः ? त्रित्वलिङ्गात् । पूर्वाधिकरणे ( १०·४·८·९ ) २० समुदायगम्यसंख्यायाः प्राकृतपक्षभावेन मा भूद्बाध्यत्वम् । इह तु त्रित्वविशिष्टत्वादनूयाजा बाध्यन्ताम् । यद्वा- तदनुवादेन मन्त्रगुणविधानात् प्राकृतमन्त्रबाध इति पूर्वः पक्षः । किं त्रित्वमात्रमनूद्य मन्त्रसहिता आहुतयो विधीयन्ते, आहोस्वित् त्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः । आद्ये [v]त्रित्वमन्यादृश्यपि साधेन नानूयाजलिङ्गम् । द्वितीये विशेषणविशेष्ययोर्द्वयोर्भेदेन वाक्यं भिद्येत । तस्मात् धर्मान्तरविधानान्न बाधः, किं तु समुच्चयः । तत्र मध्योक्तिर्लिङ्गम् । तथा चाऽऽम्नायते— " यत् प्रयाजानूयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद् २५ बहिर्धाऽस्य सजातानादधीत यन्मध्यतो जुहोति मध्यत एव सजातानात्मन धत्ते " ( मैसं २·२·२ ) इति । तस्मादामनहोमानामनूयाजैः सह समुच्चयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

काम्या इष्टयः]

यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत् सर्पिरभवद्यदध्रियत तद्घृतमभवदश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि

यत्। नवम्। ऐत्। तत्। नवनीतमिति नव-नीतम्। अभवत्। यत्। असर्पत्। तत्। सर्पिः। अभवत्। यत्। अध्रियत। तत्। घृतम्। अभवत्। अश्विनोः। प्राण इति प्र-अनः। असि। तस्य। ते। दत्ताम्। ययोः। प्राण इति प्र-अनः। असि। ५

अथ "अग्नेि वा एतस्य" (तैसं २.३.११) इत्यादिपञ्चहविरिष्टिर्वक्ष्यते। तस्यामाज्यावेक्षण अनुवर्तयति— 'यन्नवमैत्' इत्यादि॥ [1]यत् यस्मात् [2]नवम् [3]ऐत् नवमेव [4]उपलब्धिं गच्छति उद्धृतमभवत् तस्मात् [5]नवनीतम् [6]अभवत्। नवनीतं गतम्[7]। दासीभारादिर्द्रष्टव्यः (पा ६.२.४२)। यद्वा नव नीतमस्येति बहुव्रीहिः। यस्मात् [8]असर्पत् विसृतमभवत् तस्मात् सर्पणात् विसर्पणात् [9]सर्पि. [10]अभवत्। यस्मादुपरि तत् [11]अध्रियत तस्मादपि सुष्ठु संहतमभवत्, १० तस्मात् [12]घृतम् [13]अभवत्। धृङ् अवस्थाने। छान्दसो वर्णविपर्यासः। तादृशं च त्वमसि[1]। तत्र एत्नेता अवस्थाः परोक्षवन्निर्दिश्यन्ते॥

अथोपहोमाः— 'अश्विनोः' इत्यादयश्चत्वारः॥ [14]अश्विनोः [15]प्राणः त्वम् [16]असि, हे यजमान, [2]त्वदधीनजीवितत्वात्। प्राणितीति प्राणः, पचाद्यच् (पा ३.१.१३४)। प्राणवायुर्वा।

इष्टिः सांग्रहणी प्रोक्ता नवमे ग्रामकामिणः॥ १५

अथ व्यवहितेनैकादशानुवाकेनाऽऽयुष्कामेष्टिं विधित्सुर्दशमे तन्मन्त्रान् पठति।

यदिति॥ कल्पः— "यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्ष्य" (आपश्रौ १९.२१.१२) इति। अनेन प्राकृतः "आज्यमसि (तैसं १.६.१) इत्यवेक्षणमन्त्रो बाधितः। पाठस्तु— "यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत् सर्पिरभवद्यदध्रियत तद्घृतमभवत्' इति॥ 'यत् यस्मात् कारणाद्दध्न उद्ध्रियमाणं 'तत् 'नवम् 'ऐत् नवं[1] नूतनं 'रूपमभवत् तस्मात् '"नवं च तन्नीतं चेत्युद्धृतस्य"[1] सारपिण्डस्य नवनीतनाम १० संपन्नम्। 'यत् यस्मात् कारणादग्निसंपर्के सति पिण्डो विलीयमानः 'असर्पत् 'प्रसृतोऽभूत् तस्मात् 'सर्पिः इति नाम। यस्मात् प्रसृतस्य शीतलपात्रस्थापनेन तत्पुनः 'अध्रियत '"तत् घनीभूतमभवत् तस्मात् 'घृतम् इति नाम। घृ क्षरणदीप्त्योरिति धातोर्नैतद्रूपं, किं तु 'धृतमित्यस्य धकारस्य घकारादेशः॥

अश्विनोरिति॥ कल्पः— "उपहोमकालेऽश्विनोः प्राणोऽसीत्येतैः प्रतिमन्त्रं चतुर उपहोमान् जुहोति" (आपश्रौ १९.२३.१) इति। पाठस्तु— 'अश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि १५

१. मै— त्वमिदम्। २–२. तै१.तै२.मै— 'गतम्' इत्यस्यानन्तरं 'उद्धृतमिति। नवनीतम्'। ३. तै१.तै२.मै.ल— 'जीवनत्वात्।

१. उ.पा.ग्र— तन्नवं। २. ग्र— घृतमभवत्। ३–३. अ— नवनीतं तेन चोद्धृतस्य क.ओ.ना.हा— नवं च तन्नीतं च नवनीतं तेन चोद्धृतस्य, ह.हो१— नवनीतं चेद्धृतस्य। ४. क— 'तेमरत्। ५. ह.ग्र— 'तत्' नास्ति। ६. आ— घृतमित्यस्य। २०

स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि ( १ ) तस्य ते ददतु येषां प्राणोऽसि स्वाहा

घृतस्य धारामृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः ।
५ तत् त्वा विष्णुः पर्यपश्यत् तत् त्वेडा गव्यैरयत् ॥

---

स्वाहा । इन्द्रस्य । प्राण इति प्र अन । असि । तस्य । ते । ददातु । यस्य । प्राण इति प्र अन । असि । स्वाहा । मित्रावरुणयोरिति मित्रा वरुणयो । प्राण इति प्र अन । असि । तस्य । ते । दत्ताम् । ययो । प्राण इति प्र अन । असि । स्वाहा । विश्वेषाम् । देवानाम् । प्राण इति प्र-अन । असि (१) । तस्य । ते । ददतु । येषाम् । प्राण इति प्र अन । असि । स्वाहा ।
१० घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इन्द्रेण । दत्ताम् । प्रयतामिति प्र यताम् । मरुद्भिरिति मरुत्-भि । तत् । त्वा । विष्णु । परीति । अपश्यत् । तत् । त्वा । इडा । गवि । ऐरयत् ।

---

उपचारो वा, अश्विनो प्राणस्थानीयत्वमसि यागद्वारेणोपकारकत्वात् । ᵛतस्य तादृशस्य ᵛते तव ᵛदत्ताम् अश्विनौ । ᵛकम् ? प्राण, सामर्थ्यात् आयुष्कामेष्टित्वात् । कौ ? अश्विनौ ᵛययो ᵛप्राण त्वम् ᵛअसि, अत आत्मार्थमेव तत्र प्राण दत्ताम् इति ॥ इन्द्रस्येत्यादि ॥ समानम् ॥
१५ पुनराज्यमवेक्षयति – ' घृतस्य धाराम् ' इति ॥ त्रिष्टुबियं बृहती वा । हे आज्य, ᵛघृतस्य क्षरितस्य निलीनस्य तत्र ᵛधाराम् । यद्वा– उदकधारा वृष्टिहेतुम् । ᵛअमृतस्य अमृतत्वस्य ᵛपन्था यागद्वारेण प्राप्तिहेतुम् ᵛइन्द्रेण ईश्वरेण ᵛदत्ताम् उत्पादिताम् । यद्वा– इन्द्रेण यजमानेन देवेभ्य दत्ताम् । ᵛप्रयताम् प्रकर्षेणोत्पादिता शोधिता वा ᵛमरुद्भि । ᵛतत् तादृक्स्वभाव त्वा ᵛविष्णु

---

स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयो प्राणोऽसि तस्य ते दत्ता ययो
२० प्राणोऽसि स्वाहा विश्वेषा देवाना प्राणोऽसि तस्य ते ददतु येषा प्राणोऽसि स्वाहा ' इति ॥ हे यजमान, त्वम् ᵛअश्विनो ᵛप्राण ᵛअसि प्राणवत् प्रियोऽसि, तस्मात् ᵛययो ᵛप्राण ᵛअसि तावश्विनौ ᵛतस्य ᵛते प्रियस्य तवाऽऽयुर्हेतुभूत प्राण ᵛदत्ताम् । प्राणमित्येतत सामर्थ्यात ᵛलभ्यते । तयोरश्विनोरिदमाज्य ᵛस्वाहा हुतमस्तु । एवमुत्तरेषु योज्यम् ॥
घृतस्येति ॥ कल्प – " यस्याग्निर आज्य तदग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणस्या ᵛ वेदिश्रोण्या
२५ मादयति ᵛ । तद्यजमानोऽवेक्षते घृतस्य धारामृतस्य पन्थामिति " ( आपश्रौ १९.२४.३-४ ) इति ॥ पाठस्तु – ' घृतस्य धारामृतस्य पन्थामिन्द्रेण दत्ता प्रयता मरुद्भि । तत् त्वा विष्णु पर्यपश्यत् तत् त्वेडा

---

४ तै१ तैर् ल– विम् । ५. मै८– क्षारितस्य ।

६ अ१– आसि । ८ आ– पर्याहृत्य तेन । ९ अ आ ३ क– वेदिश्रोण्यामासादयति, हा–ने १ भेदेन गत्यर्थ ।

पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत् ( २ ) सृजतु जीवातवे जीवनस्यायै ।

पावमानेन । त्वा । स्तोमेन । गायत्रस्य । वर्तन्या । उपांशोरित्युप अंशो । वीर्येण । देव । त्वा । सविता । उदिति । सृजतु । जीवातवे । जीवनस्यायै । बृहद्रथन्तरयोरिति बृहत्-रथन्तरयो । त्वा । स्तोमेन । त्रिष्टुभ । वर्तन्या । शुक्रस्य । वीर्येण । देव । त्वा । सविता । उदिति ( २ ) । सृजतु । जीवातवे । जीवनस्यायै । 5

व्यापक यजमानो वा [6] परि अपश्यत् । तत तादृश [6] त्वाम् इडा पृथिवी गवि ऐरयत् यागादिक्रमेण ऐरयत् उदपादयत् ॥

ऋत्विज पर्याहु — 'पावमानेन' इत्यादि ॥ हे यजमान, त्वा पावमानेन, पवमाना 10 बहिष्पवमानादय, तेषा सम्बन्धिना स्तोमेन स्तवनेन, गायत्रस्य छन्दस वर्तन्या मार्गेण सोमानयनमार्गेण, उपांशो ग्रहस्य वीर्येण त्वामुत्सृजत्विति, देव सविता त्वाम् उत् सृजतु आमयान्निर्गमयतु । प्रत्येकान्वयाय 'त्वा' इत्यभ्यावृत्ति । पावमानेन स्तोमेन त्वामुत्सृजतु, गायत्रस्य वर्तन्या त्वामुत्सृजतु, उपांशोर्वीर्येण त्वामुत्सृजत्विति । जीवातवे जीवनहेतवे औषधाद्य, जीवनस्यायै जीवनप्रदायै । जीवनशब्दात् क्यच्, छन्दस्यसुगागम (पा ७ १ ५०), "अ 15 प्रत्ययात्" (पा ३.३ १०२) इत्यकारप्रत्यय ॥ बृहद्रथन्तरयोस्त्वेत्यादि ॥ समानम् ॥

गव्यैरयत्' इति ॥ घृतस्य धाराम् । 'अवेक्षेत' इत्यध्याहार [10] । कीदृशीं धाराम् ? अमृतस्य पन्थां कर्मफलस्य साधनत्वेन मार्गभूताम्, इन्द्रेण वृष्टिवृष्ट्योत्पत्त्यादिपरम्परया दत्तां संपादिताम्, मरुद्भि [11] वैश्यादिभि प्रयता [12] क्रियार्थाय भाण्डेषु प्रयत्नेन सञ्चिताम् [13] । हे घृत, तत् त्वा [14] तथाविधं त्वा विष्णुसदृशो यजमान पर्यपश्यत् परिपश्यति । इडा पश्वभिमानिनी देवता तादृशं त्वा गवि ऐरयत् 20 प्रेरयति गोषु स्थापयति ॥

पावमानेनेति ॥ कल्प — "अथास्य ब्रह्मा दक्षिणं हस्तं गृह्णाति । ब्रह्मण [15] इतर ऋत्विजो [15] इत्यन्वारभ्य यजमानं पर्याहु पावमानेन त्वा स्तोमेनेति" (आपश्रौ १९. २४ ५-६) इति । पाठस्तु—'पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा

६-६ मै४– परिपश्यति तादृशम् । ७ तै१ तै२ मै ल – उदपादि° । ८ मै४– प्राधान्यात् 15 तस्य वीर्यत्वात् । ९ तै१ तै२ – इत्याकार° ।

१०–१० ओ ना हा–अवेक्षेत इति शेष, ड–अवेक्ष इत्यध्याहार । ११ हो१ – वैश्यपर्यायैः । १२–१२ आ क ओ ना हा – क्रयभाण्डेषु प्रयत्नेन भृताम्, अ – क्रियाभाण्डेषु प्रयत्नेन सेचिताम् । १३ ड हो१ – तादृग्विधम् । १४–१४ अ ड – सवित्र, उ पा – इन्द्रमरुद्भिः, ओ ना हा – तथा मरुद्भि ।

अ॒ग्नेस्त्वा॒ मात्र॑या॒ जग॑त्यै व॒र्त॒न्याऽऽग्र॑य॒णस्य॑ वी॒र्ये॑ण
दे॒वस्त्वा॑ सवि॒तोत्सृ॑जतु जी॒वात॑वे जीव॒नस्या॑यै
इ॒मम॑ग्न आयु॑षे॒ वर्च॑से कृधि प्रि॒यꣳ रेतो॑ वरुण सोम राजन् ।
मा॒तेवा॑स्मा अदिते॒ शर्म॑ यच्छ॒ विश्वे॑ देवा॒ जर॑दष्टि॒र्यथाऽस॑त् ॥

५ अ॒ग्नेः । त्वा॒ । मात्र॑या । जग॑त्यै । व॒र्त॒न्या । आ॒ग्र॒य॒णस्य॑ । वी॒र्ये॑ण ।
दे॒वः । त्वा॒ । स॒वि॒ता । उदिति॑ । सृ॒ज॒तु॒ । जी॒वात॑वे । जी॒व॒नस्या॑यै ।
इ॒मम् । अ॒ग्ने॒ । आयु॑षे । वर्च॑से । कृ॒धि॒ । प्रि॒यम् । रेतः॑ । व॒रु॒ण॒ । सो॒म॒ । रा॒ज॒न् ।
मा॒ता । इ॒व॒ । अ॒स्मै॒ । अ॒दि॒ते॒ । शर्म॑ । य॒च्छ॒ ।
विश्वे॑ । दे॒वाः॒ । जर॑दष्टि॒रिति॒ जर॑त्-अ॒ष्टिः॒ । यथा॑ । अस॑त् ।

१० अग्नेस्त्वेत्यादि ॥ अग्निर्मीयते यया सा अग्नेः मात्रा अग्नेरात्मा अग्नेरात्मस्थानीयम् अग्नि-
ष्टोमसाम यज्ञायज्ञियम् । समानमन्यत् । जगत्यै इति षष्ठ्यर्थे चतुर्थी ॥

हिरण्याद्घृत निष्पिबन्तमनुमन्त्रयते–' इममग्ने ' इति । त्रिष्टुबेषा । हे अग्ने, इम घृतम् ।
उभयलिङ्गो घृतशब्दः । आयुषे वर्चसे "बलाय चास्य" कृधि कुरु । पूर्ववत् शपो लुक्

१५ स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै अग्नेस्त्वा मात्रया जगत्यै
वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै' इति ॥ हे यजमान, त्वां सविता
देवः उत्सृजतु दीर्घरोगात् मोचयतु । केन साधनेन ? बहिष्पवमानादीनां संबन्धिना त्रिवृदादिस्तोमसाध्येन
स्तोत्रेण, गायत्रस्य वर्तन्या गायत्रच्छन्दसो यो मार्गस्तेन सोमाहरणरूपेण यज्ञाङ्गसंपादनेन, उपांशोः
वीर्येण उपांशुग्रहहोमसाध्यसामर्थ्येन । अत्र प्रतिसाधनं वाक्यभेदेनान्वेतुं त्वेतिशब्दस्य पुनरन्वयः । किमर्थम्
२० उत्सृजति ? इति तदुच्यते । जीवातवे जीवनहेत्वौषधादिसंपादनाय । तदपि किमर्थमिति तदुच्यते । जीवनस्यायै
चिरं जीवितुमिच्छा जीवनस्या तदर्थम् । एवं द्वितीयतृतीयमन्त्रौ योजनीयौ । अग्नेः मात्रया "मीयतेऽग्निर्यया
गीत्या सा गीतिर्मात्रा "यज्ञायज्ञियस्य गानमित्यर्थः" ॥

इममिति ॥ कल्पः– "अथ यजमानो हिरण्याद्घृतं निष्पिबति । इममग्न आयुषे वर्चसे कृधीति
प्राश्नन्तमभिमन्त्रयते" (आपश्रौसू १९-२४-७-८) इति ॥ पाठस्तु–'इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण
२५ सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत्' इति ॥ हे अग्ने, इमं यजमानं दीर्घायुषे
बलाय च कृधि समर्थं कुरु । हे वरुण, हे सोम राजन, "अस्य यजमानस्य प्रियं रेतः पुत्रोत्पादकं

१०-१०. मे०– च्चायुश्च ।

१५. ट.ग्रं.हो१– अग्नीयते° । १६–१६. ट.हो१– यज्ञियसामार्थमिति; ग्रं– °यज्ञियसामगान-
मित्यर्थः । १७. ट.हो१– तस्य ।

अ॒ग्निरायु॑ष्मा॒न्त्स वन॒स्पति॑भि॒रायु॑ष्मा॒न् तेन॑ त्वाऽऽयु॒षाऽऽयु॑ष्मन्तं करोमि॒ *सोम॒ आयु॑ष्मा॒(३)न्त्स ओष॑धीभि॒र्य॒ज्ञ* आयु॑ष्मा॒न्त्स दक्षि॑णाभि॒र्ब्रह्माऽऽयु॑ष्म॒त्* तद्ब्रा॑ह्म॒णैरायु॑ष्मद्दे॒वा* आयु॑ष्मन्त॒स्तेऽमृते॑न

अ॒ग्निः । आयु॑ष्मान् । सः । वन॒स्पति॑भि॒रिति॒ वन॒स्पति॑-भि॒ः । आयु॑ष्मान् । तेन॑ । त्वा॒ । आयु॑षा । आयु॑ष्मन्तम् । क॒रो॒मि॒ । सोमः॑ । आयु॑ष्मान् (३) । सः । ओष॑धीभि॒रित्योष॑धि-भि॒ः । य॒ज्ञः । आयु॑ष्मान् । सः । दक्षि॑णाभिः । ब्रह्म॑ । आयु॑ष्मत् । तत् । ब्रा॒ह्म॒णैः । आयु॑ष्मत् । दे॒वाः । आयु॑ष्मन्तः । ते । अ॒मृते॑न । ५

(पा २.४.७३), धिमायश्च (पा ६.४.१०२)। प्रिय रेत, सर्वस्य प्रकृतिभूतत्वात् प्रियत्व रेतस्त्व च। हे वरुण हे सोमलताभिमानिन् हे राजन् चन्द्र। यद्वा– वल्लीनिवृत्त्यर्थं राजशब्देन सोमो विशेष्यते। यूयमप्यस्यायुषे कुरुत। किं च– हे अदिते, त्वमपि अस्मै यजमानाय माता इव शर्म सुख यच्छ देहि। हे विश्वे देवाः, यूयमपि इद कर्तुमर्हथ। किम्? यथा अय यजमानः जरदष्टिः जीर्णत्वेन अष्टिर्व्याप्तिर्यस्य। जरामश्नुते इति वा जरदष्टि। छान्दसी रूपसिद्धि। [11]-असत् भवेत्[11] दीर्घायु. यथा स्यात् तथा कुरुत। यद्वा– अस्य यजमानस्य [12]यथा जरदष्टिः जराव्याप्तिः [11]-असत् भवेत्[11] तथा कुरुत दीर्घायुष कुरुत। जीर्यतेरतृन्प्रत्यय (पा ३.२.१०४) भावे द्रष्टव्यः। अस्ते. [13]लेटि अडागमः (पा ३.४.९४)॥ १० १५

अथा यजमानस्य हस्त गृह्णाति– 'अग्निरायुष्मान्' इति॥ अग्नि आयुष्मान् दीर्घायुः। सः वनस्पतिभिः आयुष्मान् तैर्हेतुभिः तैर्वा सह। तेन आयुषा उभयेनायुषा त्वाम् आयुष्मन्त

संपादय। हे अदिते पृथिवि, मातृवत् अस्मै सुखं प्रयच्छ। हे विश्वे देवाः, अयं यजमानो यथा जरदष्टिः असत् तथा कुर्वन्तु। जराया अष्टिर्व्याप्तिर्यस्यासौ जरदष्टिः। बाल्ये यौवने च मरणरहितो जरामायुःसंपूर्तिपर्यन्तां यथा व्याप्नोति तथा कुर्वन्त्वित्यर्थः॥ २०

अग्निरिति॥ कल्पः– "अग्निरायुष्मानित्यनुवाकशेषेणास्याध्वर्युर्दक्षिणं हस्तं गृह्णाति" (आपश्रौ १९.२४.११) इति॥ पाठस्तु– 'अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि सोम आयुष्मान्त्स ओषधीभिर्यज्ञ आयुष्मान्त्स दक्षिणाभिर्ब्रह्माऽऽयुष्मत् तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि' इति॥ अग्नि. आयुष्मान्

११–११. तै१.तै२– असद्भावे। १२. तै१.तै२.मै.ल– 'यथा' नास्ति। १३. मै४– लेट्.वा। २५

*पितर् आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन् त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥१०॥

[ विश्वेपा देवानां प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्यं वार्येण
देवस्त्वा सवितोत्सोम आयुष्मान् पञ्चविंशतिश्च । ]

पितरं । आयुष्मन्त । ते । स्वधयेति स्व धया । आयुष्मन्त । तेन । त्वा । आयुषा ।
५  आयुष्मन्तम् । करोमि ॥ १० ॥

[ मैत्र २३४  कास ११७ ]

vकरोमि दीर्घायुष करोमि, हे यजमान । सोमादिषु ' आयुष्मान् तेन ' इत्याद्यनुषज्यते । vसोम vओषधीभि , vयज्ञ vदक्षिणाभि , vब्रह्म vब्राह्मणै , vदेवा vअमृतेन, vपितर vस्वधया ॥

इति द्वितीये तृतीये दशमोऽनुवाक ॥

१० भवति । तत्कथमिति तदुच्यते, vस अग्नि vवनस्पतिभि vआयुष्मान् काष्ठेषु प्रक्षिप्यमाणेषु vज्वालापरम्परया वर्धते न तूपशाम्यति । vतेन अग्ने vआयुषा अभिवर्धमानेन त्वाम् vआयुष्मन्त vकरोमि । एवमुत्तरत्र योज्यम् । vसोम सोमरस ओषधीष्वभिपूयमानासु वर्धते । vयज्ञ vदक्षिणाभि वशीकृतेष्वृत्विक्षु वर्धते । वेदश्च ब्राह्मणेष्वध्यापकेषु अविच्छेदेन वर्धते । vदेवा च हवीरूपेण vअमृतेन जीवन्ति । vपितर च स्वधाकारपूर्वकेण पिण्डादिना जीवन्ति । प्रतिवाक्यमनुषङ्गद्योतनाय ' तेन त्वाऽऽयुषा ' इति पुन पठ्यते ॥

१५  अत्र विनियोगसग्रह —

ज्योगामयाविनस्त्वष्टौ यद्येत्याज्यमीक्षते ।
अश्विनोरुपहोमा स्युर्घृत स्वाम्याज्यमीक्षते ॥ १ ॥
"रूपग्र्यर्त्विग्नो ब्रह्मन्नन पायेति स्वामिन जगु ।
इम घृत पिबन्त तु स्वामिन मन्त्रयेत "हि ॥ २ ॥
२० अग्नि सोमश्च यज्ञश्च ब्रह्मदेवा पितेति षट् ।
यथोधिनानुषङ्गैर्गृहीते" स्वामिहस्तकम् ।
दशमे त्वनुवाकेऽस्मिन्मन्त्रा षोडश वर्णिता ॥ ३॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाक ॥ १० ॥

२५  १८ ट दो१ – ज्वालाधिकम्, ग्रे – ज्वालापरम् । १९ उ – ते चर्त्विजे, आ ना हा – ते चर्त्विजा , ट – गर्त्विजो । २० ट–ते । २१ क – °गृहयो ।

अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं (१)

अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । वरुणः । एनम् । वरुणपाशेनेति ५
वरुण-पाशेन । गृह्णाति । सरस्वतीम् । वाक् । अग्नाविष्णू इत्यग्ना विष्णू । आत्मा । यस्य ।
ज्योक् । आमयति । यः । ज्योगामयावीति ज्योक्-आमयावी । स्यात् । यः । वा । कामयेत ।
सर्वम् । आयुः । इयाम् । इति । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । आग्नेयम् ।
अष्टाकपालमित्यष्टा-कपालम् । सौम्यम् । चरुम् । वारुणम् । दशकपालमिति दश-कपालम् ।
सारस्वतम् । चरुम् । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । १०
अग्नेः । एव । अस्य । शरीरम् । निष्क्रीणातीति निः-क्रीणाति । सोमात् । रसम् (१) ।

इदानीं ता पञ्चहविषमिष्टिं विदधाति– 'अग्निं वा' इत्यादि ॥ यस्य ज्योक् नित्यम् आमयति आमयः तस्य शरीरादीनि अग्न्यादीन् देवान् गच्छन्ति स्वकारणानुप्रवेशात् कार्यरूपनाशात् कर्तरि कार्यशक्त्युपसंहारः स्यात् । "रुजार्थानाम्°" (पा २.३.५४) इति यस्येति कर्मणि षष्ठी । यो ज्योगामयावीत्यादि ॥ गतम् ॥ १५

अग्नेरेवेत्यादि ॥ यत्र यत्र शरीरादीनि गतानि तेभ्य तानि निष्क्रीणाति हविःप्रदानेन । ततोऽसौ यजमान. यदि अपि गतासु. भवति जीवति एव, किं पुनरायुःशेषवतामामय-

इष्टेर्विधास्यमानाया दृसमे मन्त्र ईरित. ॥

अग्निमिति ॥ अथैकादशी तामिष्टिं विधातुं प्रस्तौति– 'अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति' इति ॥ यं २०
दीर्घव्याधिः पीडयति एतस्य शरीरम् अग्निं प्रविशति, मांसभक्षणेन कृशत्वात् । सोमेन रसस्वीकारात् बलक्षयः । वरुणपाशेन ग्रहणादुदराविव्यथा । सरस्वतीम् एतदीया वाक् भाषा गच्छति, तेनायं भाषितुं न शक्नोति । जीवात्मा तु अग्नाविष्णू प्राप्नोति, तेन मुमूर्षति ॥

य इति ॥ इदानीं विधत्ते– 'यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपाल- २५
मग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिरेवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव' इति ॥ ज्योगामयाविनो रोगपरिहाराभ्मरोगस्य वाऽपमृत्युपरिहारार्थमियं पञ्चहविष्केष्टिः ॥

१-१. सं१,तर- 'नित्यम्........यो' इत्येतावान् अंशो नास्ति । २. मै४-कत्रार्य° ।

१. ह हो,१-'यं दीर्घव्याधि पीडयति' नास्ति । २. ह-'वाक्' नास्ति । ३. हो१-इष्टिम । ४. आ-वाऽप° । ३०

वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव यन्नवमैत् तन्नवनीत-मभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टेऽश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां ( २ ) भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमे-
५ वास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति

---

वारुणेन । एव । एनम् । वरुणपाशादिति वरुण पाशात् । मुञ्चति । सारस्वतेन । वाचम् । दधाति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताभिः । च । एव । एनम् । यज्ञेन । च । भिषज्यति । उत । यदि । इतासुरितीत असुः । भवति । जीवति । एव । यत् । नवम् । ऐत् । तत् । नवनीतमिति नव नीतम् । अभवत् । इति । आज्यम् । अवेति । ईक्षते । रूपम् ।
१० एव । अस्य । एतत् । महिमानम् । व्याचष्ट इति वि आचष्टे । अश्विनोः । प्राण इति प्र अनः । असि । इति । आह । अश्विनौ । वै । देवानाम् (२) । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । इन्द्रस्य । प्राण इति प्र अनः । असि । इति । आह । इन्द्रियम् । एव । अस्मिन् । एतेन । दधाति । मित्रावरुणयोरिति मित्रा वरुणयोः । प्राण इति प्र अनः । असि । इति । आह । प्राणापानाविति प्राण अपानौ । एव । अस्मिन् । एतेन । दधाति ।

---

१५ निवृत्ति भवतीति । यद्वा यागबलेन आमयश्च नश्यति, सर्वं चाऽऽयु शतसंवत्सरप्रमाण लभते ॥ आज्यमवेक्षत इति ॥ अस्य मन्त्रस्य एतत् रूपम् एव विनेव व्याख्यानम् आज्यस्य महिमानं व्याचष्टे व्याकरोति अवस्थात्रयविवरणात् ।

अश्विनोरित्यादि ॥ पुरस्तात् स्विष्टकृत स्रुगाहुत्युपहोममन्त्रा एते ॥

---

यदिति ॥ मन्त्र विनियुङ्क्ते—'यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं
२० व्याचष्टे' इति ॥ मन्त्रोक्तैर्नवनीतसर्पिर्घृतनिर्वचनैरस्याऽऽज्यस्य 'एतत् विद्यमानमेव' 'रूपं 'महिमानं व्याचनाय मन्त्र 'व्याचष्टे । यद्वा—मन्त्रस्यैतत्स्वरूपमेव घृतस्य महिमानं व्याचष्टे । मन्त्रान्तरैरेव स्पष्टं प्रतीयते नात्र पृथग्वचनस्यमस्तीत्यर्थः ॥

अश्विनोरिति ॥ उपहोममन्त्रान् व्याचष्टे—'अश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह
२५ प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति' इति ॥

---

३ ११ १०—भिषज्यतम् ।

---

५ आ ज ब्रो ना पा दा 'एव' नास्ति ।

विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति घृतस्य धारामृतस्य पन्थामित्याह यथायजुरेवैतत् पावमानेन त्वा स्तोमेनेत्या( ३ )ह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथन्तरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवास्मिन्नेतेन दधात्यृत्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति

---

विश्वेषाम् । देवानाम् । प्राण इति प्र-अन । असि । इति । आह । वीर्यम् । एव । अस्मिन् । ५ एतेन । दधाति । घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इति । आह । यथायजुरिति यथा-यजु । एव । एतत् । पावमानेन । त्वा । स्तोमेन । इति ( ३ )। आह । प्राणमिति प्र-अनम् । एव । अस्मिन् । एतेन । दधाति । बृहद्रथन्तरयोरिति बृहत् रथन्तरयोः । त्वा । स्तोमेन । इति । आह । ओजः । एव । अस्मिन् । एतेन । दधाति । अग्नेः । त्वा । मात्रया । इति । आह । आत्मानम् । एव । अस्मिन् । एतेन । दधाति । ऋत्विजः । परीति । आह । यावन्तः । १० एव । ऋत्विजः । ते । एनम् । भिषज्यन्ति ।

---

घृतस्य धारामित्यादि ॥ अनेन यजमानमाज्यमवेक्षयति । यथायजुरिति । अमृतत्वप्राप्तिहेतुत्वमस्य यथा यजुर्वदति एतत् एव भवति ॥

पावमानेनेत्यादि ॥ ब्रह्मण हस्तम् अन्वारभ्य ऋत्विज पर्याहु इमान् मन्त्रान् । तदेवाह– ' ऋत्विज पर्याहु ' इति । परित आसीना आहु । १५

---

घृतस्येति ॥ यजमानस्याऽऽज्यावेक्षणमन्त्रे[6] स्पष्टार्थतां दर्शयति– ' घृतस्य धारामृतस्य पन्थामित्याह यथायजुरेवैतत् ' इति ॥

पावमानेनेति ॥ ऋत्विग्भिः [7]पठनीयानां मन्त्राणां तात्पर्यं दर्शयति– ' पावमानेन त्वा स्तोमेनेत्याह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथंतरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवास्मिन्नेतेन दधाति ' इति ॥ पवमानस्य वायो प्राणरूपत्वात् तेन प्राणस्थापनं, २० बृहद्रथंतरयो पृष्ठस्तोत्रप्रकृतित्वेन सारत्वात् तेनौजोधारणम् । अग्निरात्मा, मीयतेऽनयेत्युक्तत्वात् तेनाऽऽत्मस्थापनम् ॥

ऋत्विज इति ॥ एतेषां [8]त्रयाणां पाठं विधत्ते– ' ऋत्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति ' इति ॥

ब्रह्मण इति ॥ पाठकाले हस्तग्रहणं विधत्ते– ' ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान २५ आयुर्दधति यदेव तस्य तत् ' इति ॥ एकधा एव सर्वेषामृत्विजामेकमत्यैनैव तस्य यजमानस्य यत् एव आयु संपादनीयमस्ति तत् सर्वं [9]तस्मिन् यजमाने स्थापयन्ति ॥

---

६ ङ– °मन्त्रस्य । ७. आ– पठ्यमानानां । ८ अ इ ङ हो१– त्र्याणां मन्त्राणां । ९ ङ हो१– ' तस्मिन् ' नास्ति ।

ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधति यदेव तस्य तद्धिरण्याद्- (४)घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यथो खलु यावतीः समा

---

ब्रह्मणः । हस्तम् । अन्वारभ्येत्यनु - आरभ्य । परीति । आहुः । एकधेत्येक - धा । एव । यजमाने ।
५ आयुः । दधति । यत् । एव । तस्य । तत् । हिरण्यात् (४) । घृतम् । निरिति । पिबति ।
आयुः । वै । घृतम् । अमृतम् । हिरण्यम् । अमृतात् । एव । आयुः । निरिति । पिबति ।
शतमानमिति शत - मानम् । भवति । शतायुरिति शत - आयुः । पुरुषः । शतेन्द्रिय इति
शत - इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अथो इति । खलु । यावतीः । समाः ।

---

ब्रह्मण इति । 'हस्तमन्वारभ्य' इति वचनात् सर्वमस्य आयुः एकधा कृत्वा
१० अस्मिन् दधति, यत् एव तस्य आयु. तत् एव दधति ।

हिरण्यादिति ॥ अयमत्र प्रयोग – यावतीः समाः एष्यन् मन्येत तावन्मान सौवर्णं प्रवर्तं कुण्डलम् उपकल्प्य खादिरे नवे पात्रे उपस्तीर्णाभिघारित निधाय सह हविर्भिरन्तर्वेद्यासाद्य उपहोमान् हुत्वा संस्रावं. प्रवर्तमभिघार्य अग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निधाय यजमानमवे- क्षयति । "अथायमवेक्ष्यास्माद्धिरण्यान्निष्पतत् घृतं" पिबति । यद्वा - हिरण्यक्षप घृत नि.शेषं
१५ पिबति । आयुर्वा इति । उभयत्रापि तद्धेतुत्वात् ताच्छब्द्यम् । शतमानमिति । शतगुञ्जाप्रमाणं प्रवर्ताकार सुवर्णं भवति । गुञ्जफलाकार कर्णवेष्ट । प्रवर्तस्य शतसंख्यान्वयात् तत्प्रमाणायुर्नीय-

हिरण्यादिति ॥ यदुक्तं सूत्रकारेण– "पात्रसमादनकाले खादिरे पात्रे चतुरवत्त "प्रवृत्तवित । सौवर्णस्य "प्रवर्तं शतमानस्य कृत्वम् । अथो खलु यावतीः समा एष्यन्मन्येत तावन्मानः स्यात्" (आपश्रौ १९·२३·११-१२) इति; "आज्यग्रहणकाले तूष्णीं "खादिरे चतुर्गृहीतं" गृहीत्वा सादनकाल उत्तरेण ध्रुवां खादिरं सादयित्वा तस्मिन् प्रवर्तमवदधाति" (आपश्रौ १९·२३·१३) इति च, "प्रवर्तं कर्णाभरणं
२० कुण्डलम्; [तत्र] घृते अवस्थितात् "प्रवर्ताभिष्पीडितस्य घृतस्य पाने विधत्ते– 'हिरण्याद्घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति' इति ॥

शतमानमिति ॥ तस्य परिमाणं द्वेधा विधत्ते– 'शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानः स्यात् समृद्ध्यै' इति ॥ 'शतमानं

काम्या इष्टय ]

एष्यन् मन्येत तावन्मानꣳ स्यात् समृद्ध्या इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयु-रेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह(५) जरदष्टिमेवैनं करोत्यग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति ॥ (११) ॥

[ रसं देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वाविꣳशतिश्च । ] ५

एष्यन् । मन्येत । तावन्मानमिति तावत्-मानम् । स्यात् । समृद्ध्या इति सम्-ऋद्ध्यै । इमम् । अग्ने । आयुषे । वर्चसे । कृधि । इति । आह । आयुः । एव । अस्मिन् । वर्चः । दधाति । विश्वे । देवाः । जरदष्टिरिति जरत्-अष्टिः । यथा । असत् । इति (५) । आह । जरदष्टिमिति जरत्-अष्टिम् । एव । एनम् । करोति । अग्निः । आयुष्मान् । इति । हस्तम् । गृह्णाति । एते । वै । देवाः । आयुष्मन्तः । ते । एव । अस्मिन् । आयुः । दधति । सर्वम् । आयुः । एति ॥ ११ ॥ १०

[ मैत्र २३५, काठ ११८ ]

भा० । अथो खल्विति पक्षान्तरं दर्शयति । यावतः संवत्सरान् एष्यन् जीवितुं मन्येत तावन्मानं कुर्यात् प्रवर्तकम् । यजमानस्य गतानि वर्षाणि शताच्छोधयित्वा शिष्टसमितकम-निर्मितं कुर्यात् । एवं हि अभिमतसंख्याऽन्वयात् समृद्ध्यै भवति ॥

इममग्न आयुष इति ॥ घृतं निष्पिबन्तमनुमन्त्रयते । जरदष्टिमेवेति । जराप्राप्त्या १५ दीर्घायुष्ट्वं लक्ष्यते ॥

अग्निरायुष्मानिति । ब्रह्मा यजमानस्य हस्तं गृह्णाति ॥

इति द्वितीये तृतीये एकादशोऽनुवाकः

पञ्चपणपरिमितमित्यसकृदुक्तम् । अथवा कृष्णो यजमानो यावतो भाविनः संवत्सरान् प्राप्नोमीत्यस्यर्धं मन्येत तावद्भिर्मानैः परिमितं कर्तव्यम् । मानशब्दो गुञ्जावाची इत्युक्ते । कृष्णस्यातीतमायुः परित्यज्याऽऽगामिनः २० आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जावीनैः परिमितमित्यर्थः ॥

इममिति ॥ प्राभृतो यजमानस्याभिमन्त्रणमन्त्रे प्रथमचरमभागयोरभिप्रायं दर्शयति– 'इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह जरदष्टिमेवैनं करोति' इति ॥ आयुषश्चरमभागस्थाया जराया अष्टिर्व्याप्तिर्यस्य । अथवा जीर्यत्यष्टिरशनं यस्यासौ जरदष्टिः, नीरोग इत्यर्थः ॥ २५

अग्निरिति ॥ अध्वर्योर्यजमानदक्षिणहस्तग्रहणं विधत्ते– 'अग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

१०. मै४– प्रवर्तम् । ११–११ मै४– शिष्टवत्सरं निर्मिमीत निर्मितं कुर्यात् । ३०

१५. ग– पञ्चपण्परि°, ह– पञ्च पञ्चपण° । १६ क ह्रा– °स्यानुमन्त्रण° ।

प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव

प्रजापतिरिति प्रजा - पतिः । वरुणाय । अश्वम् । अनयत् । सः । स्वाम् । देवताम् । आर्छत् । स. । परीति । अदीर्यत । सः । एतम् । वारुणम् । चतुष्कपालमिति चतुः-कपालम् । अपश्यत् । तम् । निरिति । अवपत् । ततः । वै । सः । वरुणपाशादिति वरुण-पाशात् । अमुच्यत । वरुण । वै । एतम् । गृह्णाति । यः । अश्वम् । प्रतिगृह्णातीति प्रति-गृह्णाति । यावत. । अश्वान् । प्रतिगृह्णीयादिति प्रति-गृह्णीयात् । तावत. । वारुणान् । चतुष्कपालानिति चतुः-कपालान् । निरिति । वपेत् । वरुणम् । एव ।

१० *"प्राजापत्यो वा अश्व "* इति ॥ [V]प्रजापतिः आत्मदेवत्यम् [V]अश्वम् [V]वरुणाय [V]अनयत् अददात् । [V]सः अश्वं ददत् [VI]स्वाम् आत्मानम् अश्वस्य [V]देवताम् [V]आर्छत् 'आर्तिमकरोत्, ईशितव्यापगमात् देवतात्वहानिरेवार्तिः । ततश्च [V]सः प्रजापतिः विगलितदेवताभावः परितः सर्वतः [V]अदीर्यत विपन्नोऽभवत् वरुणपाशैर्गृहीत इत्यर्थ. । तदेवाह- 'वरुणो वा एतम्' इत्यादि । ननु प्रतिग्रहीतुरिदमुच्यते, प्रतिगृह्णातीति दर्शनात् । नैवम् । उपक्रमावगतदातृश्रुतिविरोधात्, दातृ-
१५ विषयमेवेदं विपरिणाम्यते । उक्तं चेदं न्यायविद्भिः- "अवैदिकं [ अचोदित ] च कर्मभेदात्" इत्यत्र- "सा लिङ्गादार्त्विजे स्यात्" ( मीसू ३.४.३०-३१ ) इति । तस्मादुपक्रमोपसंहारा-

एकादशे त्विष्टिरुक्ता दीर्घरोग्यायुरर्थिनो. ॥

प्रजापतिरिति ॥ अथ द्वादशेऽश्वदानयत इष्टिं [1]विधास्यन् प्रस्तौति-'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत'
२० इति ॥ 'अनयत् दत्तवान् । देवस्य भावो देवता । 'स. प्रजापतिः स्वकीयं देवत्वम् [2]'आर्छत् आर्तमकरोत् । "प्राजापत्यो वा अश्वः" ( द्र तैस ५.१.२ ) इति श्रुतेः प्रजापतिरेव पूर्वमश्वस्य देवता । तस्मिन्नश्वे वरुणाय दत्ते सति स्वकीयमश्वस्वामित्वमपगतं, तन्निमित्तेन दुःखेन 'सः प्रजापतिः 'पर्यदीर्यत तदीयं शरीरं परितो दीर्णं [3]दीर्घरोगग्रस्तमभूत् । स च रोगो 'वरुणपाशरूपरोगाद्वारुण्येष्ट्या निवृत्तः ॥

वरुण इति ॥ इदानीमिष्टिं विधत्ते- 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्
२५ प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति' इति ॥ 'प्रतिगृह्णाति इत्यस्यान्तर्भावितण्यर्थत्वात् प्रतिग्राहयति ददातीत्ययमर्थः संपद्यते ॥

** [ द्र. तैब्रा ५.१.२ ]। १. मै८- स्वम् । २. मै४.ले-आर्तम° । ३. मै- 'एतम्' नास्ति, मै८.ले- एतमिति ।

१. अ.इ- विधानुं । २. अ.इ.उ.द.पा - 'आर्छत्' नास्ति । ३. ट- 'दीर्घ°' नास्ति ।
३० ४. अ.इ- "वरुणपाश°" ।

स्वेन भागधेयेनोपं धावति स एवैनं वरुणपाशान्मुञ्चति (१) चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः समृद्ध्या

स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति (१) । चतुष्कपाला इति चतुः-कपालाः । भवन्ति । चतुष्पादिति चतुः-पात् । हि । अश्वः । समृद्ध्या इति सम्-ऋद्ध्यै । ५

निरोधात्मकाग्निमन्त्रेण प्रतिग्राहयतीत्ययमों शुध्यते । तस्मात् दाता प्रजापति वरुणेन चतुष्कपालेन वरुणपाशात् अमुच्यत । तस्मादन्योऽपि यावत अश्वान् प्रतिगृह्णीयात् प्रतिग्राहयेत् तावत वारुणान् चतुष्कपालान् निर्वपेत् इति । इद वैदिकेऽश्वप्रतिग्रह इति वेदितव्यम् । उक्त हि "दोषात् नैमित्तिकं स्यात्" इत्यत्र "अर्थवादो वाऽनुपपादात् तस्माद्यज्ञे प्रतीयेत" (मीसू ३ ४ २८ २९) इति । तत्रात्मीनित्ययर्थो गृह्णातिर्निर्दिष्टव्य । यत्र-ण्यन्तादत उकारे "बहुल १० मन्यत्रापि" (उ १९०) इति णिलुक्, तत्र व्यत्ययेन श्नाप्रत्यय । केचिदाहु — "वारुणो वा अश्व" (तैब्रा ३ ९ १६) इति, वरुणदेवत्योऽश्व, स प्रजापतिना वरुणाय दीयमानो वरुण स्वा देवतामपि आत्मीयदेवतात्वेन वर्तमानमपि प्रतिग्रहस्य दुष्टत्वात् आर्तमकरोत् । स वरुण पर्यदीर्यत वरुणपाशैर्गृहीतो व्यापद्यत । अथ स वरुणो वारुण चतुष्कपाल दृष्ट्वा वरुणाय त निरवपत् । ततो वरुणो वरुणपाशादमुच्यत । वारको वा पाप वरुण । यो नाम कश्चित् वरुणाख्यो १५ वा अश्व प्रतिगृह्णाति वरुण एन गृह्णाति । तस्मात् "यावतोऽश्वान् प्रतिगृह्णीयात्" इति प्रतिग्रहीतुरेव विधीयते इति । तदिद न्यायविरुद्धम् इति नाद्रियामहे । ननु कथमेकस्यैव "देवतात्व यजमानत्व च स्यात्" नैप दोष । "इन्द्रो वै सदृङ् देवताभिरासीत्" (तैस २ २ ८) इत्यत्र यथा "इन्द्र आमार्थम्" ऐन्द्रमानुपूर्वमेकादशकपाल निर्वपति, यथा— "वरुण सुपुराणम्" (तैस २ १ ९) इत्यत्र वरुणो वारुणीं वशामा लभते एवमिद भविष्यति ॥ २०

चतुष्कपाला इति ॥ कपालसंख्या प्रशसति — 'चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्व समृद्ध्यै' इति ॥

४ त१ त२-अप्रतिग्रह । ५ त१ त२- 'स' नास्ति । ६ त१ त२ मै स्ल- 'स' नास्ति । ७-७ स्ल- 'वरुण एन गृह्णाति' नास्ति । ८ त१ ह२ मै स्ल- 'प्रतिगृह्णीयात्' नास्ति । ९ त१ त२ स्ल- यदिदम् । १० त१ त२ मै स्ल- इत्यादिना । ११ मै४-दातृत्वम् । १२-१२ मै४-इन्द्रार्थम् ऐन्द्रामग्र । २५ १३-१३ त१ त२- 'वशामालभते अश्वप्रतिग्रही कृत्वापि' इत्येतावान् भाग नास्ति ।

एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपाशान्-
मुच्यते यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चारं कुरुते-

एकम् । अतिरिक्तमित्यति रिक्तम् । निरिति । वपेत् । यम् । एव । प्रतिग्राहीति प्रति ग्राही ।
भवति । यम् । वा । न । अध्येतीत्यधि-एति । तस्मात् । एव । वरुणपाशादिति वरुण पाशात् ।
५ मुच्यते । यदि । अपरम् । प्रतिग्राहीति प्रति ग्राही । स्यात् । सौर्यम् । एककपालमित्येक कपालम् ।
अनु । निरिति । वपेत् । अमुम् । एव । आदित्यम् । उच्चारमित्युत् चारम् । कुरुते ।

एकमतिरिक्तमिति ॥ यावतोऽश्वान्[v] प्रतिगृह्णीयात् तेभ्य [v]अतिरिक्त [v]नि [v]वपेत्, यथा
षट् प्रतिगृह्य सप्तम निर्वपेदिति । यमेवेति । [v]य प्रतिग्रहीष्यन् [v]भवति [v]य [v]वा [v]पूर्वप्रतिगृहीत
[v]न [v]अध्येति नाधिगच्छति न स्मरति वा, [v]तस्मात् सर्वस्मान्निमित्तात् उपजातात् [v]वरुणपाशात्
१० [v]मुच्यते । " अकेनोर्भविष्यदाधमर्ण्ययो " ( पा २ ३ ७० ) इति षष्ठीप्रतिषेध ॥

यद्यपरमिति ॥ अश्वप्रतिग्राही कृत्वाऽपि [v] वारुणीमिष्टिं [v]यदि भूयोऽपि [v]प्रतिग्रहीष्यन्
[v]स्यात् [v]सौर्यम् [v]एककपालम् [v]अनु [v]नि [v]वपेत् । अपरमिति क्रियाविशेषणम् । [v]अमुम्
[v]आदित्यम् [v]उच्चारम् उच्छ्रिताचारम् उपरि चरन्त वा [v]कुरुते, तत स एव वरुणपाशादिदोष
परिहरिष्यतीति ।

१५ एकमिति ॥ अश्वसंख्यातोऽधिक पुरोडाश विधत्ते– 'एकमतिरिक्त निर्वपेद्यमेव प्रतिग्राही
भवति य वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते ' इति ॥ [v]यम् [v]एव अश्वमित ऊर्ध्वं यदा कदाचित्
[v]कालान्तरे प्रतिग्रहीष्यति दास्यति, अथवा [v]य क्वचिदश्व प्रतिगृहीत [v]न [v]अध्येति विस्मरति तदर्थोऽयम्
अतिरिक्त पुरोडाश ॥

यदीति ॥ निमित्तविशेषणाद्गाधिक्य विधत्ते– 'यद्यपर प्रतिग्राही स्यात् सौर्यमेककपालमनु
२० निर्वपेदमुमेवाऽऽदित्यमुच्चार कुरुते ' इति ॥ कश्चिदश्वान् [v]दत्वा तदानीमेवेष्टयनुष्ठाने सत्येवेनातिरिक्तेन
सहिता तावन्त " तत्र पुरोडाशा दत्ताश्वपर्याप्ता " । यत्र तु [v]दानान्तरमेवेष्टिर्नानुष्ठिता कि तु क्वचित्
कालम् अतिक्रम्य पुनरप्यपरोऽश्वो न्यस्तदा [v]सातिरिक्तान् दत्ताश्वसंख्याकान् पुरोडाशानिरुप्य [v]सौर्यम्
[v]अनु [v]निर्वपेत् । तेन [v]आदित्यम् [v]एव उर्ध्वचारिण [v]कुरुते । स चाऽऽदित्यो विलम्बदोष परिहरत्युपरि-
ष्टाद्वर्तन इत्यभिप्राय ॥

२५ १४ मै सं– 'अश्वान्' नास्ति । १५ क– °प्रतिगृहीतारम् । १६ प २ क–प्रतिग्राहयिष्यन् ।

५ अ ड–कालान्तरे । ६ जो ता दा– गृहीत्वा । ७ आ ड ग ह ो १– पुरोडाशा पर्याप्ता,
ड– पुरोडाशा दत्ताश्वपर्याप्ता क–तत्र पुरोडाशा पर्याप्ता । ८ अ ड–दानादूर्ध्वं न तदा तत्रैवेष्टि कृता,
क आ ता दा– दानादनन्तरमेवेष्टिर्नानुष्ठिता । ९ ग– निरुप्य । १०. क दा– गाऽतिरिक्ता ।

ऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजतेऽपोनप्त्रीयं चरुं (२) पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनꣳ शान्त उप तिष्ठते ॥१२॥
[ भुवति चरुꣳ सप्तदश च । ]

अप । अवभृथमित्यव भृथम् । अवेति । एति । अप्स्वित्यप्-सु । वै । वरुण । साक्षादिति स-अक्षात् । एव । वरुणम् । अवेति । यजते । अपोनप्त्रीयमित्यप –नप्त्रीयम् । चरुम् (२) । पुनः । एत्येत्या - इत्य । निरिति । वपेत् । अप्सुयोनिरित्यप्सु योनि । वै । अश्व । स्वाम् । एव । एनम् । योनिम् । गमयति । स । एनम् । शान्त । उपेति । तिष्ठते ॥ १२ ॥
[ मैत्र २३३ काठ १२६ ]

[v]अप अवभृयकर्मार्थम् [v]अवैति । [v]अपोनप्त्रीय [v]चरुम् अवभृयात् [v]एत्य [v]पुन [v]नि [v]र्वपेत् । " अपोनप्त्रपानप्तृभ्या घ " (पा ४ २ २७), " छ च " ( पा ४ २ २८ ) इति छप्रत्यय । अपानप्ता चतुर्थ अपोनप्ता । छान्दस सुगागम । अप्सुयोनिरिति । " अपो योनियन्मतुपु सप्तम्या अलुक् " ( पा ६ ३ १ वा ७ ) इत्यलुक् । शान्त इति । निवृत्तवरुण पाशादिदोष सुखहेतुरेव [v]उपतिष्ठते[v] मित्रवदुपसप्राप्नोति ॥
इति तृतीये द्वादशोऽनुवाक ॥

अप इति ॥ द्रष्टव्यरूपेणावभृथ विधत्ते– 'अपोऽवभृथमवैत्यप्सु वै वरुण साक्षादेव वरुणमव यजते' इति ॥ 'अप प्राप्य तत्र 'अवभृथ कर्म कुर्यात् । तेन वरुणो निराकृतो भवति ॥

अपोनप्त्रीयमिति ॥ अङ्गान्तर विधत्ते– 'अपोनप्त्रीय चरु पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्व स्वामेवैन योनि गमयति स एनꣳ शान्त उप तिष्ठते' इति ॥ अपोनप्ता देवता यस्य सोऽयमपोनप्त्रीयस्त 'चरुम् अवभृथदेशादन्यभूमौ समागत्य 'निर्वपेत् । अप्सु योनिरुत्पत्तिर्यस्याश्वस्य सोऽयम् 'अप्सुयोनि । उच्चै श्रवसोऽश्वस्य समुद्रादुत्पत्ति पुराणेषु प्रसिद्धा । तस्मादपोनप्त्रीयचरुणा तमश्व स्वकीययोनिगामिन करोति । 'स चाश्व 'शान्त सन् रोगमनुत्पाद्य 'एन यजमान सेवते ॥

अत्र मीमासा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्–

" अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥
अविशेषाद्द्वयोर्यद्वा न देय केसरीत्यत ।
निषेधाल्लौकिकात् तत्र प्रायश्चित्तिरिय भवेत् ॥
न जलोदरहेतुत्व प्रमित लौकिके क्वचित् ।
वैदिके तु श्रुत "तस्मात् तत् प्रायश्चित्तयेऽत्र सा " ॥ (जैन्या ३ ४ २६ २८ ) ॥

इदमाम्नायते " यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेत् " इति । तत्र प्रतिग्रहशब्दो दानपर इत्यनन्तरमेव वक्ष्यते । तत्र "विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टि रित्येक पक्ष । 'न केसरिणो ददाति' इति स्मृत्या मित्रदायादादिभ्य प्रीत्या क्रियमाणमश्वदान लौकिक निषिद्ध, तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिरिति द्वितीय पक्ष । " वरुणो वा एत गृह्णाति योऽश्व प्रतिगृह्णाति "

१७ त१ त२– उपतिष्ठति ।

११ ङ–यस्मात् । १२ उ पा– विशेषेणाश्रवणा° ।

इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम्। वैदिकस्य तु[13] जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सेष्टिः प्रायश्चित्तम्। अस्ति हि वैदिकमश्वदानं, "वडवा दक्षिणा" (तैस १·८·२१) इत्यादिश्रवणात् ॥

[14]तत्रैवान्यच्चिन्तितम्–

५ "यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि ॥
असञ्जातविरोध्यर्थवादात् [15]दातुः प्रजापतेः।
इष्टिः श्रुता ततो [16]दातुर्णिजर्थेऽपि विधिं नयेत्" ॥ (जैन्या ३·४·२९·३०)॥

पूर्वोदाहृते वाक्ये 'प्रतिगृह्णीयात्' इति [17]विधिपदश्रवणात् प्रतिग्रहीतुरिष्टिरिति चेत्। न।
१० उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः। उपक्रमश्चैवं श्रूयते– "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत" (तैस २·३·१२) इति। अनयद्दत्तवान्। स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्। तेन च रोगेण ग्रस्तः प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यतेत्यत्र दातुरिष्टिरित्यवगम्यते। असञ्जातविरोध्युपक्रमानुसारेण विधायकशब्दमपि प्रतिग्राहयेदित्येवमन्तर्भावितणिजर्थपरतया
१५ व्याख्येयम् ॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्–

" [18]प्रतिग्रहे तु बह्वश्वे[18] पूर्वन्यायोऽस्ति वा न वा।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य [19]शोषतः" ॥ (जैन्या ५·२·३)॥

"यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान् निर्वपेत्" इति। अत्र [20]शत-
२० सङ्ख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशोपूदाहृतप्रत्ययश्रवणेन साहित्यं प्राप्तम्। तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनुष्ठेय इति चेत्। मैवम्। [21]तप्तेषु कपालेषु क्रमेण पुरोडाशानधिश्रित्य [22]यावता कालेन[22] प्रथमपुरोडाशो द्वितीयसंस्कारं कर्तुमागच्छति तावता [23]कालेनासौ शुष्को [24]भस्मीभवति। तस्मादेकैकस्मिन् पुरोडाशे कृत्स्नधर्मसमापनमित्येवं काण्डानुसमयोऽभ्युपेतव्यः ॥

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

२५ "तन्त्रं चतुष्कपालानां भेदो वा तन्महत्त्वतः।
कुम्भीवत् तन्त्रता मैवं भेदः स्यात् प्रकृताविव" ॥ (जैन्या ११·४·१८)॥

इदं श्रूयते– "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेत्" इति। यथा प्राजापत्येषु कुम्भ्या महत्त्वेन तन्त्रं तथाऽत्रापि कपालमहत्त्वेन तन्त्रमिति चेत्। मैवम्। प्रकृतौ प्रतिपुरोडाशं कपालभेदेन तद्वदत्रैव चोदकप्राप्तेः। किं चात्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्था-
३० पितेष्वेकस्यैव कपालस्योपरिदेशे पुरोडाशस्यैकस्य समासेन कोऽपि पुरोडाशश्चतुष्कपालः सिद्ध्येत्। तस्मात् प्रतिपुरोडाशं [25]कपालचतुष्टयभेदः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

१३. हो१– तत्र°। १४. आ– अत्रैव। १५. ट.हो१–धातुः। १६. ट– धातु स्यात्
३५ णिज°। १७. ट हो१– 'विधि°' नास्ति। १८–१८. उ. क.जा.पा.हा– प्रतिग्रहीतुर्बह्वश्वे। १९. हो१– शोषात्; उ.ओ.जा.प हा– शेषतः। २०. उ.पा– °दिबह्व°। २१. आ.हा– तप्तेषु चतुर्षु। २२–२२. ट– यावता कालेन। २३. ट– 'कालेन' नास्ति। २४. ट– भस्मीभवति। २५. ट.ट.हो१– °चतुष्टभेदः।

**या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतं या वामिन्द्रावरुणा सहस्या॑ रक्षस्या॑ तेजस्या॑ तनूस्तयेममꣳहसो मुञ्चतं**

या। वाम्। इन्द्रावरुणेतीन्द्रा-वरुणा। यतव्या। तनूः। तया। इमम्। अꣳहसः। मुञ्चतम्। या। वाम्। इन्द्रावरुणेतीन्द्रा-वरुणा। सहस्या। रक्षस्या। तेजस्या। तनूः। तया। इमम्। अꣳहस। मुञ्चतम्। ५

"यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेत्" (तैस २·३ १३) इत्यादि कारणं वक्ष्यति। तां पुरोडाशवत् चतुर्धा कृत्वा व्यूहति–'या वामिन्द्रावरुणा' इति चतुर्भिर्मन्त्रैः॥ यतव्या सहस्या रक्षस्या तेजस्येति चतुर्णां विशेषः। शेषस्तुल्यः। हे इन्द्रावरुणा इन्द्रावरुणौ। "सुपां सुलुक्" (पा ७·१ ३९) इत्याकारः। "देवताद्वन्द्वे च" (पा ६·३ २६) इति पूर्वपदस्यानङ्। या युवयोः या यतव्या तनूः शरीरम्। यातूनि यातु- १० धानाः रक्षांसि तेषां हननी रक्षोयातूनां हन्त्रीति यावत्। तया तन्वा इमं यजमानम् अꣳहसः पापात् मुञ्चतं शोधयतम्॥ या वामित्यादि॥ या सहस्या तनूः। सहो बलम् अभिभवितृत्वं तद्वती। "मत्वर्थे मासतन्वोः" (पा ४·४·१२८) इति यत्। समानमन्यत्॥ या वामित्यादि॥ या रक्षस्या तनूः रक्षसां हननी। स एव यत्। ततोऽनुषङ्गः॥ या वामित्यादि॥ या तेजस्या तनूः तेजस्विनी। पूर्ववन्मत्वर्थीयो यत्। स्पष्टमन्यत्॥ १५

चतुष्कपाला विहिता द्वादशी स्वधवानिनः॥

अथ त्रयोदशे पाप्मना गृहीतस्येष्टि विधित्सुरादौ मन्त्रान् पठति। कल्पः–"ऐन्द्रावरुणं पुरोडाशं निरुप्यैन्द्रावरुणीं पयस्यां निर्वपेत्। उद्वास्यालङ्कृत्य पयस्यायां [1]पुरोडाशमवदधाति। एतयैव स्रुच्याऽऽसादयति। अथास्मात् प्रतिदिशं पयस्यां व्यूहति। या वामिन्द्रावरुणा यतव्या तनूरित्येतैरेव पुनः समूहति। [2]अमुञ्चतमिति मन्त्रान्तान्[2] सन्नमति। सहैव [3]पयस्यायां पुरोडाशस्यावद्यति। यो वामिन्द्रावरुणावग्नौ स्नाम २० इत्युपहोमाः" (आपश्रौ १९.२५·१-८) इति।

येति॥ तत्र प्रथमस्य व्यूहनमन्त्रस्य पाठस्तु–'या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतम्' इति॥ हे इन्द्रावरुणौ, वां युवयोः या तनूः यतव्या पापात् पालयितुं प्रयत्नवती तया तन्वा यजमानं पापात् [4]मोचयतम्॥

येति॥ द्वितीयतृतीयचतुर्थमन्त्राणां पाठस्तु–'या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या २५ तनूस्तयेममꣳहसो मुञ्चतम्' इति॥ 'सहस्या' इत्यत्र 'तनूः' इत्यस्यान्त्यभागस्यानुषङ्गः। 'तेजस्या' इत्यत्र 'या वाम्' इत्याद्यभागस्यानुषङ्गः। 'रक्षस्या' इत्यत्रोभयोर्भागयोरनुषङ्गः। सहो बलं तदर्हतीति सहस्या। रक्षो रक्षणं तदर्हतीति रक्षस्या। तेजो रोचनशक्तिस्तदर्हतीति तेजस्या॥

१. ङ- °दधातीति। २-२. आ- मुञ्चतमित्यस्य स्थानेऽमुञ्चतमिति मन्त्रान्तान्, क- मुञ्चतमिति मन्त्रान्। ३. अ इ- पयस्यया। ४ आ- मोचने। ३०

यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे यो वामिन्द्रावरुणा द्विपात्सु पशुषु* चतुष्पात्सु* गोष्ठे* *गृहेष्व*प्स्वोषधीषु* वनस्पतिषु* स्रामस्तं वामेतेनाव यजे

य । वाम् । इन्द्रावरुणाविती॑न्द्रा वरुणौ । अग्नौ । स्रामः । तम् । वाम् । एतेन॑ । अवेति॑ । यजे । य । वाम् । इन्द्रावरुणेती॑न्द्रा-वरुणा । द्विपात्स्विति॑ द्विपात् सु । पशुषु । चतु॑ष्पात्स्विति॑ ५ चतु॑ष्पात् सु । गोष्ठ इति॑ गो स्थे । गृहेषु । अप्स्वित्यप् सु । ओष॑धीषु । वनस्पति॑षु । स्रामः । तम् । वाम् । एतेन॑ । अवेति॑ । यजे ।

अथोपहोमा अष्टौ–'यो वाम्' इत्यादय । अग्न्यादयो वनस्पत्यन्ता विशेषा । शिष्टमंश स्त्वनुषज्यते । स्रावयति नाशयतीति स्राम पाप्मा [1]येनाय गृहीत । [v]य [2] [v]वा युवयो सम्बन्धिनो यजमानस्य [v]अग्नौ [v]स्राम अग्न्याधार पाप्मा तेन कृत [v]त [v]वा युवयो सम्बन्धिनाऽनेन १० कर्मणा [v]अव [v]यजे नाशयामि हे [v]इन्द्रावरुणौ । अवपूर्वो यजिर्विनाशकर्मा । [v]य [v]द्विपात्सु [v]पशुषु स्राम इति द्वितीये । द्विपदो मनुष्या । "संख्यासुपूर्वस्य" (पा ५ ४ १४०) इति लोप समासान्त । "पाद पत्" (पा ६ ४ १३०) इति पद्भाव, "द्वित्रिभ्या पाद्न्°" (पा ६ २ १९७) इत्युत्तरपदान्तोदात्तत्वम् । य [v]चतुष्पात्सु पशुषु स्राम इति तृतीये । स्वरयज्ञे पूर्ववत् । गवादय चतुष्पाद । य [v]गोष्ठे इति चतुर्थे । गावस्तिष्ठन्त्यस्मिन्निति "सुपि १५ स्थ" (पा ३ २ ४) इति क । "अम्बाम्ब°" (पा ८ ३ ९७) इत्यादिना षत्वम् । य [v]गृहेषु इति पञ्चमे । "गेहे क" (पा ३ १ १४४) इति क । य [v]अप्सु इति षष्ठे । "ऊडिदम्°" (पा ६ १ १७१) इति विभक्तेरुदात्तत्वम् । य [v]ओषधीषु इति सप्तमे । यवादय ओषधय । "ओषधेश्च विभक्तौ°" (पा ६ ३ १३२) इति दीर्घत्वम् । य [v]वनस्पतिषु

य इति ॥ [5]उपहोमेषु प्रथममन्त्रस्य पाठस्तु– 'यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे' २० इति ॥ हे [6]इन्द्रावरुणौ [v]अग्नौ [v]वा युवयो [v]य [v]स्राम पापविशेषो युवयोर्होमार्थे [7]वह्नौ यजमानेन य अपराध कृत [v]तम् अपराध [v]वा युवयो [8]सम्बन्धिनम् [v]एतेन होमेन [v]अव [v]यजे विनाशयामि ॥

य इति ॥ द्वितीयादीना सप्ताना मन्त्राणा पाठस्तु– 'यो वामिन्द्रावरुणा द्विपात्सु पशुषु चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वनस्पतिषु स्रामस्तं वामेतेनाव यजे' इति ॥ 'द्विपात्सु पशुषु' इत्यत्र 'स्रामस्त वाम्' इत्याद्युत्तरभागस्यानुषङ्ग । 'वनस्पतिषु स्राम' इत्यत्र 'यो वाम्' इत्यादे प्रथम २५ भागस्यानुषङ्ग । 'चतुष्पात्सु' इत्यादिषु पञ्चसु पूर्वोत्तरभागयोरनुषङ्ग । हे [v]इन्द्रावरुणौ, युवयो मयची ■ यजमानस्य [v]द्विपात्सु पशुषु मनुष्यादिरूपेषु [v]य [v]स्राम पापविशेष [v]तं पापविशेषं युवयो संबन्धिना [v]एतेन कर्मणा विनाशयामि । एव सर्वत्र योज्यम् ॥

१ मै॰– तेनायम् । २ मै४– 'य' इत्यस्यानन्तरम् 'अन्य' । ३ मे– द्विपाद ।

५ आ– उपहोमे । ६ अ इ– अग्नौ, क जो ना हा– अग्नौ यद्वो । ७ आ ठ क जो ना पा ३० ८ हा शो १– 'याम्' नास्ति । ८ आ– संबंधिना ।

इन्द्रो वा एतस्य(१)न्द्रियेणापं क्रामति वरुण एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणी पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत् पयस्या भवति पय एवास्मिन् तया दधाति

इन्द्र । वै । एतस्य ( १ ) । इन्द्रियेण । अपेति । क्रामति । वरुण । एनम् । वरुणपाशेनेति ५
वरुण - पाशेन । गृह्णाति । य । पाप्मना । गृहीत । भवति । य । पाप्मना । गृहीत । स्यात् ।
तस्मै । एताम् । ऐन्द्रावरुणीमित्यैन्द्रा वरुणीम् । पयस्याम् । निरिति । वपेत् । इन्द्र । एव ।
अस्मिन् । इन्द्रियम् । दधाति । वरुण । एनम् । वरुणपाशादिति वरुण पाशात् । मुञ्चति ।
पयस्या । भवति । पय । हि । वै । एतस्मात् । अपक्रामतीत्यप क्रामति । अथ । एष । पाप्मना ।
गृहीत । यत् । पयस्या । भवति । पय । एव । अस्मिन् । तया । दधाति । १०

इत्यष्टमे । पलाशादयो वनस्पतय । वनस्पत्यादित्वात् पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ( पा ६ २ १४० ) । पारस्करप्रभृतित्वात् सुट् (पा ६ १ १५७) ॥

अथात पयस्या विदधाति [४]ब्राह्मणम्– 'इन्द्रो वा एतस्य' इत्यादि ॥ अस्य [v]इन्द्रियेण सह [v]इन्द्र [v]अप [v]क्रामति, [v]वरुण च [v]एन [v]वरुणपाशेन [v]गृह्णाति, [v]य [v]पाप्मना [v]गृहीत [v]भवति । यस्मादेव तस्मात् [v]य [v]पाप्मना [v]गृहीत [v]स्यात् [v]तस्मै तत्पापशमनार्थं [v]ऐन्द्रावरुणीं १५ [v]पयस्या नि [v]वपेत् । पयसि भवा पयस्या आमिक्षा । अत्राय प्रयोग *– इन्द्रावरुणाभ्यां चतुरो मुष्टीन् व्रीहीणां निरुप्य दक्षिणार्धे गार्हपत्यस्यैकादश कपालान्युपदधाति । यदैव(ल) पुरोडाशमधि वृ(पृ)णक्ति तदा एतामामिक्षां गार्हपत्ये अधि [५]श्रपयति । अथैन पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य [६]आमिक्षया सम्प्रच्छाद्य [६]अन्तर्वेद्यासादयतीति ॥ पयस्या भवतीत्यादि ॥ गतम् ॥

इन्द्र इति ॥ अथेष्टिं विधत्ते– 'इन्द्रो वा एतस्येन्द्रियेणाप क्रामति वरुण एन वरुणपाशेन २० गृह्णाति य पाप्मना गृहीतो भवति य पाप्मना गृहीत स्यात् तस्मा एतामैन्द्रावरुणीं पयस्या निर्वपेदिन्द्र एवास्मिन्निन्द्रिय दधाति वरुण एन वरुणपाशान्मुञ्चति' इति ॥ [९]'य' पापगृहीत एतदीयेन 'इन्द्रियेण सह 'इन्द्र अपगच्छति,[९] [१०]'वरुण रोगेण 'एन बाधते [१०] [११]अत [१२]पाप्मना गृहीतस्य तदुभय विपर्येष्टि [१२] । पयसि प्रभवाऽऽमिक्षा पयस्या ॥

पयस्येति ॥ ता प्रशसति– 'पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो २५ यत् पयस्या भवति पय एवास्मिन् तया दधाति' इति ॥ पय शब्देन क्षीरादिसात्त्विकाहारजनितश्रद्धया

४ ल–'ब्राह्मणम्' नास्ति । * (बौश्री १३ ३३) । ५. त१ त२ मै ल– श्रयति । ६–६ तै१ त२ मै ल– आमिक्षाया सम्प्रवेश्य ।

९–९ जो पा– 'य पाप गच्छति' नास्ति । १०–१० जो ना पा–एन वरुणपाशेन गृह्णाति । ११ जो पा–'अत' नास्ति । १२–१२ जो– पाप्मना गृहीतस्य तस्मात् तदुभयविपर्येष्टि, पा– पाप्मना गृहीतस्य ३० तस्य तदुभयविपर्येष्टि, क ड श्रे हो१–पापगृहीतस्य तदुभयविपर्येष्टि, हा–पाप्मना गृहीतस्य तस्मादुभयविपर्येष्टि ।

पयस्यायां ( २ ) पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति

पयस्यायाम् (२)। पुरोडाशम्। अवेति। दधाति। आत्मन्वन्तमित्यात्मन्-वन्तम्। एव। एनम्। करोति। अथो इति। आयतनवन्तमित्यायतन-वन्तम्। एव। चतुर्धेति चतुः-धा। वीति। ५ ऊहति। दिक्षु। एव। प्रतीति। तिष्ठति। पुनः। समिति। ऊहति। दिग्भ्य इति दिक्-भ्य। एव। अस्मै। भेषजम्। करोति।

पयस्यायामिति ॥ आमिक्षाया सप्रच्छाद्य [v]पुरोडाशम् आसादयति। आत्मन्वन्तमिति। आत्मवत्त्व बलवत्त्वम्। "अनो नुट्" (पा ८·२·१६), "ह्रस्वनुड्भ्याम्°" (पा ६·१·१७६) इति मतुप उदात्तत्वम्। [v]अथो अपि च [v]आयतनवन्त गृहवन्तम् [v]एव [v]एन [v]करोति, अनेन १० प्रच्छादनेन पयस्याया पिधानम् ॥

चतुर्धेति ॥ प्रतिदिश पयस्या [v]व्यूहति पुरोडाश [v]चतुर्धा कृत्वा व्यूहति। एतेन [v]दिक्षु प्रतिष्ठितो भवति ॥

पुनः समूहतीति ॥ [v]दिग्भ्य अवकृष्य[v] समूहीकरोति। [v]दिग्भ्य [v]एव आकृष्य [v]अस्मै यजमानाय [v]भेषज पापरोगशमन [v]करोति ॥

१५ इतं [13]पुण्यमुपलक्ष्यते। [14]तत्पुण्यानुष्ठानमेव [v]एतस्मात् यजमानात् [15]यदि [v]अपक्रामति तदानीम् [v]एष [v]पाप्मना [v]गृहीतः भवति। यदि अत्र हवि [v]पयस्या भवेत् तर्हि [v]अस्मिन् यजमाने [v]तया पयस्यया [16]आहारोपलक्षितं पुण्यमाहित[16] भवति ॥

पयस्यायामिति ॥ [17]अथाप्रास [18]कंचिदंशविशेष विधत्ते– 'पयस्यायां पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव' इति ॥ शरीरसदृशस्य कठिनस्य पुरोडाशस्य [19]प्रक्षेपेण [v]एनं २० यजमानम् [v]आत्मन्वन्तं दृढशरीरोपेतं [v]करोति। सति हि पापे तज्जन्यरोगेण शरीरस्यादार्ढ्यम्। किं च [20]पयस्याया आधारत्वेन[20] [21]यजमानोऽप्यायतनवान् गृहग्रामादिरूपाधारवान् भवति[21] ॥

चतुर्धेति ॥ 'या वामिन्द्रावरुणा' इत्यादिमन्त्रैर्हविषो विभागं विधत्ते– 'चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति' इति ॥

पुनरिति ॥ विभक्तस्यैकीभाव विधत्ते– 'पुन. समूहति दिग्भ्य एवास्मै भेषजं करोति' इति ॥

१५ ७-७. तै१ तै२– कर्षम्यमपकृष्य, ल– कर्षय चापकृष्य।

१३. हा–प्रभावम्°। १४. द.हो१– तत्पुण्यमेव। १५. द.गं– यदा। १६–१६. अ इ.गं– धीरोपरक्षितं पुण्यं। १७. द–'अथ' नास्ति। १८. गं– कंचिदंशविशेषं। १९. क हा– प्रक्षेपणेन। २०–२०. अ.आ.इ– पयस्याधारत्वेन। २१–२१. आ.भा.जो–यजमानमप्यायतनवन्तं गृहग्रामादिरूपाधारवन्तं, अ–यजमानो...रूपाधारोपेतो भवति।

सुमूह्यावं द्यति यथाऽऽविंद्धं निष्कृन्तति ताद्दगेव तद्यो वामिन्द्रा-
वरुणावग्नौ स्रामस्तं वामेतेनावं यज इत्याह दुरिष्ट्या एवैनं
पाति (३) यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनावं यज

समूह्येति सम् उह्य। अवेति। द्यति। यथा। आविद्धमित्या विद्धम्। निष्कृन्ततीति
नि–कृन्तति। तादृक्। एव। तत्। य। वाम्। इन्द्रावरुणाविती द्रा वरुणौ। अग्नौ। स्राम। तम्। ५
वाम्। एतेन। अवेति। यजे। इति। आह। दुरिष्ट्या इति दु–इष्ट्या। एव। एनम्। पाति
(३)। य। वाम्। इन्द्रावरुणेतीन्द्रा–वरुणा। द्विपात्स्विति द्विपाद् सु। पशुषु। स्राम। तम्।
वाम्। एतेन। अवेति। यजे।

समूह्येति ॥ पयस्यया सह पुरोडाशस्य [१]अवद्यति। यथेति। [४]आविद्ध दोषेण पीडित [५]निष्कृन्तति कर्तनेन [६]निष्कासितदोष करोति [७–९]तादृक् इद[१०] समूह्यावदानम्। १०

'यो वाम्' इत्यादय उक्ता उपहोमा। दुरिष्ट्या [११]इत्यादि। अग्नौ कृत पाप दुरिष्टिरेवेति।
"सादा च°" (पा ६ २ ५०) इति गते प्रकृतिस्वरत्वम् ॥

'यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्राम' इति द्वितीयमन्त्र दर्शयति। उपलक्षण चैतत्
तृतीयादीनाम्। एतावतीर्वा इत्यादि। प्रजायन्त इति प्रजा। "अन्येष्वपि दृश्यते" (पा ३

समूह्येति ॥ मिश्रितयो पुरोडाशामिक्षयो [२२]सहावदान विधत्ते– 'समूह्याव द्यति यथाऽऽविद्ध १५
निष्कृन्तति तादृगेव तत्' इति॥ [२३]यथा लोके वैरिणा पुरुषम् [२४]आविद्ध[२५] [२६]स्वशरीरे बाणादिकं[२७] शस्त्रादिना
निष्कृष्य [२८]छिनत्ति [२९]तादृक् [३०]एव [३१]तत् [३२]समूह्य अवदान मपद्यते ॥

य इति ॥ [३३]उपहोमेषु प्रथममन्त्र व्याचष्टे– 'यो वामिन्द्रावरुणावग्नौ स्रामस्त वामेतेनाव यज
इत्याह दुरिष्ट्या एवैन पाति' इति॥ होमाधारे अग्नौ [३४]इतेन स्रामेणापराधेन दुरिष्टिर्भवति [३५]तम्
अपराधम् [३६]अव [३७]यज [३८]इति उक्त्या तस्या दुरिष्टे सकाशात् [३९]एन यजमान रक्षति ॥ २०

य इति ॥ अवशिष्टाना मन्त्राणा तात्पर्य दर्शयति– 'यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्त
वामेतेनाव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतय प्रजा पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मु-
ञ्चति' इति॥ 'पशुषु स्रामस्तं वाम्' इत्येवमनुपन्नो योनमिन्त्रा प्रदर्शिता। [४०]प्राणिभिरुपजीवनयोग्या

८. तै१ तै२ प१ ल– निष्कासितदोषम्। ९–९. तै१ त२ मै ल– तादृशीदम्। १०. त१ तै२
मै ल– इति। २५

२२ अ इ– सहावदान। २३ उ पा हा– स्वशरीरादिकं। २४ क हा हो१–आच्छिनत्ति।
२५ आ–उपहोमे। २६ क ड बो ना पा हा–कृतेन। २७ आ उ क बो ना पा हा हो१–प्राप्नुव°, अ इ–
प्राणिनामुप°।

इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता
एवास्मै वरुणपाशान्मुञ्चति ॥ १३ ॥
[ एतस्य पयस्याया पाति षड्विंशतिश्च । ]

इति । आह । एतावती । वै । आप । ओषधय । वनस्पतय । प्रजा इति प्र जा । पशव ।
५ उपजीवनीया इत्युप-जीवनीया । ता । एव । अस्मै ।
वरुणपाशादिति वरुण पाशात् । मुञ्चति ॥ १३ ॥
[ मैस २ ३ १, कास ११ ११ ]

२ १० १ ) इति ड । [v]आप [v]ओषधय [v]वनस्पतय [v]पशव च द्विप्रकारा इत्येतान्य [v]प्रजा प्राणिनाम् [v]उपजीवनीया । [11]तस्मादुपजीव्यत्वात् एषामेव म त्रेषूपादान, न [12]सर्पा
१० दीनामिति भाव । [13]एताश्च एतैरुपहोमै [v]वरुणपाशात् [v]मुञ्चति [v]अस्मै यजमानाय । यथास्यापहत पाप्मान [14]उपजीव्या स्युरिति ।

इति द्वितीये तृतीये त्रयोदशोऽनुवाक ॥

अथादय पञ्च पदार्था । तत्र पशुशब्देन द्विपादश्चतुष्पादश्च गृह्यन्ते । [28]गृहा अप्यत्रोपलक्ष्यन्ते[28] । या एतावत्य [v]उपजीवनीया [v]ता सर्वा अपि यजमानार्थं [v]वरुणपाशात् उपद्रवान्मोचयन्ति ॥

१५ अत्र [29]विनियोगसंग्रह

या यामिति चतुर्भिर्मन्त्रैश्चतुर्धा व्यूहते हवि ।
यो [1] वामित्यष्टभिर्मन्त्रैरुपहोमा [31]उदीरिता ॥ १ ॥
द्विपादित्यत्यादिना मन्त्रभेद सहविधो भवेत् ।
त्रयोदशेऽनुवाकेऽस्मिन् मन्त्रा द्वादश [32]वर्णिता ॥ २ ॥ इति ॥

२० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाक ॥ १३ ॥

११ त१ त२ मै न – °पजीवनत्वात् । १२ त१ त२ मै ल – सर्पादीनाम् । १३ मै४– 'एताश्च' नास्ति । १४ त१ त२ मै ल– उपजीवा ।

२८–२८ अ इ– 'गृहा लक्ष्यन्ते' नास्ति । २९ ग– संग्रहश्लोका । ३० अ इ ड गे
२५ हो१– यामित्यादिभिर्मन्त्रैरुपहोमा । ३१ अ आ इ उ जो ना पा– उदीरिता । ३२ उ क जो ना पा हा– कीर्तिता ।

स प्रत्नवन्॑नि काव्ये॑न्द्रं वो विश्वतस्परी॑न्द्रं नरः॑ ॥

स॑ । प्रत्नवदिति॑ प्रत्न वत् । नीति॑ । काव्या॑ । इन्द्र॑म् । व॒ । विश्वत॑ । परीति॑ । इन्द्र॑म् । नर॑ ॥

अथेष्टिकाण्डे याज्याकाण्डम् । तत्र– " यो यज्ञविभ्रष्ट स्यात् तस्मा एतामिष्टि निर्व पेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपाल सौम्य चरुम् " (तैस २ ३ ३ ) इत्येतस्या त्रिहविष आग्नेयस्य पुरोऽनुवाक्या– ' स प्रत्नवत् ' इति गायत्री ॥ व्याख्यातेय–" हिरण्यगर्भ " (तैस ५ २ २ १२ ) इत्यत्र । इह तु प्रतीकग्रहणम् । हे ᵛअग्ने, ᵛस त्व ᵛप्रत्नवत् प्रागिव । यद्वा पुराणो हि । ᵛनवीयसा नवतरेण ᵛद्युम्नेन यशसा ᵛसयता त्वामेव सगच्छता [ ᵛभानुना भासनशीलेन ] ᵛबृहत् ᵛततन्थ पृथ विश्व विस्तारयेति ॥

तत्रैव याज्या– ' नि काव्या ' इति त्रिष्टुप् ॥ इयमपि तत्रैव (तैस २ २ १२ ) व्याख्याता । इद च प्रतीकग्रहणम् । ᵛकाव्या कवित्वेन द्रष्टृत्वेन आलीयेन ᵛवेधस यजमानान् १० ᵛशश्वत अविच्छिन्नयागान् ᵛनि ᵛक नियमेन करोतु । ᵛनर्या नर्याणि नरेभ्यो हितानि ᵛपुरूणि बहूनि धनानि ᵛहस्ते ᵛदधान ददान । एव कुर्वन्नयम् ᵛअग्नि ᵛरयीणा सर्वेषा सबन्धी ᵛरयिपति भवतु । विश्वान्यपि ᵛअमृतानि अमरणहेतुभूतानि ᵛसत्रा सहभूतानि हिरण्यादीनि ᵛचक्राण सोऽस्माक यज्ञविभ्रेषदोषम् अपनयत्विति ।

अथैन्द्रस्य पुरोऽनुवाक्या– ' इन्द्र व ' इति गायत्री ॥ इयमपि ᵛपञ्चान्ते (तैस १ ६ १५ १२ ) व्याख्याता । प्रतीकमत्र गृह्यते । हे ऋत्विग्यजमाना , ᵛव युष्माक ᵛजनेभ्य पुत्रादिभ्य युष्मभ्यमस्मभ्य च सर्वार्थं ²ᵛविश्वत उपरि स्थितम् ᵛइन्द्र ᵛहवामहे आह्वयाम । यद्वा–ᵛविश्वस्मात् उपरि आह्वयाम । ᵛअस्माकम् एव ᵛकेवल साधक यज्ञविभ्रेषादिदोषापनयनेन स्वामी भवत्विति ॥

तत्रैव याज्या– ' इन्द्र नर ' इति त्रिष्टुप् ॥ इयमपि तत्रैव (तैस १ ६ १२ ) व्याख्याता । प्रतीकग्रहणमिदम् । ᵛनर मनुष्या ᵛइन्द्रम् एव ᵛनेमधिता सर्वेषा हविषामर्धेन २०

---

विहिता याजिनस्त्विष्टिरनुवाके त्रयोदशे ॥

स इति ॥ अथास्मिन्नन्तिमे चतुर्दशेऽनुवाके काम्ययाज्या[ पुरोनुवाक्या ] उच्यन्ते ॥ तत्र त्रिहविष्का ' येय यज्ञविभ्रष्टेष्टि ' तृतीयानुवाके समाम्नाता, तस्या प्रथमद्वितीययोर्हविषो क्रमेण 'याज्यानुवाक्ययो' प्रतीक दर्शयति–' स प्रत्नवन्नि काव्येन्द्र वो विश्वतस्परीन्द्र नर ' इति ॥ 'स प्रत्नवन्नवीयसा' ¹इत्यनुवाक्या, ' नि काव्या वेधस ' इति याज्या । एतदुभयमाग्नेये हविषि द्रष्टव्यम् । तच्च " ' हिरण्यगर्भ २५

---

१. मै४– इष्टयन्तो ।　२ मै४– विश्वस्य ।　३ मै४– विश्वस्या ।

---

१–१ उ क जो ना पा हा– विभ्रष्टेष्टि , गं.हो–यज्ञविभ्रष्टेष्टि । २ अ इ– याज्यानुवाक्याम्, जो हा–याज्यानुवाक्याया । ३ ङ गं.हो१– इति पुरोनुवाक्या । ४ इ–पूर्वेण, अ– उभयमपि द्वितीयप्रपाठके ।

त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत् त्वावतः सखा ॥

त्वम्। नः। सोम। विश्वतः। रक्ष। राजन्। अघायत इत्यघ यत।
न। रिष्येत्। त्वावत इति त्व वतः। सखा ॥

धार्यं भजते आह्वयामि [ आह्वयन्ति ]। "कदा" यदा "पार्याः परलोकाय हिता "परप्राप्तेर्या साध्वीर्या"
५ "धियः कर्माणि "ता इन्द्रमेवापेक्षमाणा "युनजते युञ्जते। तस्मात् स "त्वं "शूर "नृषाता नृभि
सभक्ता "शवसः बलस्य नृभ्यो दाता "तेन वा", इत्थंभूत "चकानः तृप्तिशील "गोमति "व्रजे
अस्मान् "आ "भज यज्ञविघ्नदोषापनयनेन गोमतोऽस्मान् कुर्विति ॥

अथ सौम्यस्य पुरोऽनुवाक्या– 'त्वं नः' इति गायत्री। हे "सोम "राजन्, "नः"
अस्मान् "विश्वतः विश्वस्मात् "अघायतः अघं पापम् अस्माकमिच्छतः जनात् "रक्ष। "छन्दसि
१० परेच्छायामपि" (द्र पाभा ३ १ ८) इति क्यच्, "अश्वाघस्यात्" (पा ७ ४ ३७)
इत्यात्वम्, "शतुरनुम°" (पा ६ १ १७३) इति विभक्तेरुदात्तत्वम्। "त्वावतः त्वत्सदृशस्य।
"युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्" (पा ५ २ ३९ वा १) इति वतिः,
"आ सर्वनाम्नः" (पा ६ ३ ९१) इत्यात्वम्। त्वावतः हि "सखा कश्चिदपि "न "रिष्येत्
यज्ञविघ्नादिभिः हिंस्यो भवितुं नार्हति। तस्मात् तदनुरूपमस्मान् रक्ष। "द्व्यचोऽतस्तिङः"
१५ (पा ६ ३ १३५) इति संहितायां रक्षेत्यस्य दीर्घत्वम् ॥

आपो ह" (तैस २ २ १२) इत्यस्मिन्ननुवाके' व्याख्यातम्। 'इन्द्रं वो विश्वतस्परि' इत्यनुवाक्या,
'इन्द्र नरो नेमधिता' इति याज्या। एतदुभयमैन्द्रे हविषि द्रष्टव्यम्। तच्च प्रथमकाण्डस्य षष्ठप्रपाठके,
व्याख्यातम् (तैस १ ६ १२) ॥

त्वमिति ॥ अथ सौम्यस्य हविषः पुरोनुवाक्यामाह–'त्वं नः सोम विश्वतो रक्षा राजन्नघायतः।
२० न रिष्येत् त्वावतः सखा' इति ॥ अघं पापम् अस्मदुपद्रवमिच्छन्नघायस्तस्मात् पापसमात् "विश्वतः सर्वस्मात्
"नः अस्मान् हे सोमराजन्, "त्वं "रक्ष। "त्वावतः त्वादृशस्य प्रभोः "सखा कश्चित् समर्थोऽपि त्वदनुग्रहात्
न "रिष्येत् कस्मात्र हिंस्यते ॥

४ तै१ तै२– तदा। ५–५. मै४– तु परप्राप्तौ साधनो वा। ६–६ त१ तै२– वा।
७ तै१ तै२– 'न' नास्ति।

२५ ५ गै– तदुभय'।

काम्येष्टियाज्यापुरोनुवाक्या ]

या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय ॥
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥

या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्स्वित्यप् सु ।
तेभिः । नः । विश्वैः । सुमना इति सु-मनाः । अहेडन् । राजन् । सोम । प्रतीति । हव्या । गृभाय ॥ ५
अग्नीषोमेत्यग्नी सोमा । सवेदसेति स वेदसा । सहूती इति स हूती । वनतम् । गिरः ।
समिति । देवत्रेति देव त्रा । बभूवथुः ॥

तत्रैव याज्या– 'या ते' इति त्रिष्टुप् ॥ हे [ˇ]सोम [ˇ]राजन्, [ˇ]या यानि [ˇ]ते तव [ˇ]धामानि स्थानानि नामानि [ˇ]वा, जन्मानि वा तेजांसि वा [ˇ]दिवि सन्ति, यानि च [ˇ]पृथिव्या[8] यानि च [ˇ]पर्वतेषु, यानि [ˇ]ओषधीषु, यानि वा [ˇ]अप्सु, [ˇ]तेभिः तैः [ˇ]विश्वैः धामभिः [10]नामभिः १०
सर्वैर्नमनाऽस्मभ्यम् उपकुर्वद्भिः, स्थानैर्वा सर्वत्र संनिधानहेतुभिः, जन्मभिर्वा नानोपकारहेतुभिः, तैर्नोभिर्वा [11]सर्वदोषोपशमने [ˇ]अहेडन् अक्रुध्यन् [12]आह्वानादिकं सहमानः अपि तु [ˇ]सुमनाः सानुग्रहमना एव भूत्वा। "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम्। हेडृ अनादरे। अस्माकं हव्यानि [ˇ]प्रति [ˇ]गृभाय प्रतिगृहाण। "छन्दसि शायजपि" (पा ३ १ ८४), "हृग्रहोर्भ°" (पा ८ २ ३२ वा १) इति भत्वम्। प्रतिगृह्य चास्माकं श्रेयदोषम् [13]अपनयेति॥ १५

"अग्नीषोमीयमेकादशकपालं निर्वपेद् कामो नोपनमेत्" (तैस २ ३ ३) [14]इत्यस्या पुरोनुवाक्या– 'अग्नीषोमा' इति गायत्री ॥ हे [ˇ]अग्नीषोमा अग्नीषोमौ। पूर्ववदाकारः, "ईदग्नेः सोमवरुणयोः" (पा ६ ३ २७) इति ईकारः, "अग्नेः स्तुत्स्तोमसोमाः" (पा ८ ३ ८२)

येति॥ तत्रैव याज्यामाह– 'या ते धामानि दिवि या पृथिव्या या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय' इति॥ हे [ˇ]सोम [ˇ]राजन्, [ˇ]ते तव [ˇ]दिवि पृथि- २० व्यादिषु च प्रदेशेषु यानि [ˇ]धामानि स्थानानि सन्ति, प्रतिप्रदेशं पृथगनुवादार्थां यच्छब्दावृत्तिः। [ˇ]तेभिः [ˇ]विश्वैः तैः सर्वैः स्थानैर्युक्तः शोभनमनस्कः क्रोधरहितः सन् [ˇ]नः अस्माकं [ˇ]हव्या हवींषि [ˇ]प्रति [ˇ]गृभाय प्रतिगृहाण। यस्मिन् स्थाने त्वं स्थितस्ततः आगत्य हविः स्वीकुर्वित्यर्थः॥

अग्नीषोमा इति॥ "अग्नीषोमीयमेकादशकपालं निर्वपेद् कामो नोपनमेत्" (तैस २ ३ ३) इत्यत्र पुरोनुवाक्यामाह– 'अग्नीषोमा सवेदसा सहूती वनतं गिरः। सं देवत्रा बभूवथुः' इति॥ हे २५

८ मै४ 'वा' नास्ति। ९ मै८– 'पृथिव्याम्' इत्यस्यानन्तरं 'सन्ति'। १० ल– 'नामभिः' नास्ति। ११ त१ त२ मै ल– सर्वदोषशान्ते। १२ त१ त२ मै– अस्थानादिकं (?), प२– आस्थानादीकं (?) १३ मै४– अपनयेत्यपि। १४ त१ त२ मै ल– इत्यस्य।

युवमे(१)तानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥

युवम् (१) । एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति स क्रतू । अधत्तम् ।
युवम् । सिन्धून् । अभिशस्तेरित्यभि शस्तेः । अवद्यात् ।
५ अग्नीषोमावित्यग्नी-सोमौ । अमुञ्चतम् । गृभीतान् ॥

इति पदम् । युवा सवेदसा सवेदसौ समानधनौ सहूती समानहूतौ समानाह्वानौ । " समानस्य छन्दसि° " ( पा ६ ३ ८४ ) इति सभाव । ईदृशौ युवा वनत भजतम् अस्माक गिर स्तुतिवचनानि । देवत्रा देवाश्च स बभूवथु सगतौ भवत । प्रमाणानतिरेक सभव । देवानाम् अप्याराध्यत्वेन वर्तेथाम् । यद्वा—युवा सवेदसा सहूती देवत्रा देवेष्वपि देवोपकारेष्वपि सबभूवथु
१० सगतौ भवत. । " देवमनुष्य° " ( पा ५ ४ ५६ ) इति त्राप्रत्यय । तौ युवाम् अस्माकमपि काममुपनयतमिति ॥

तत्रैव याज्या—' युवमेतानि ' इति त्रिष्टुप् ॥ हे सोम, त्व च अग्नि च युव युवाम् एतानि प्रसिद्धानि दिवि स्थितानि रोचनानि दीपनशीलानि ग्रहनक्षत्रादीनि अधत्तम् अधारयताम् । छान्दसो लङ् । यद्वा—युवामेव रोचनानि दिवि अधत्त स्थापितवन्तौ । सक्रतू
१५ समानकर्माणौ । किं च युवामेव सिन्धून् नदी । स्यन्दनात् सिन्धव । रुत्वानुनासिकौ उक्तौ । अभिशस्ते पातकाद्यारोपात् पापात् अवद्यात् परिवादपापाच्च तत्स्थानीयात् कालुष्यादिदोषात् अमुञ्चतम् । गृभीतान् तेन दोषेण गृहीतानपि तान् सिन्धूनपि अमुञ्चतम् । तस्मादेव महानुभावौ युवामस्माक काममुपनयतम् इति ॥

अग्नीषोमौ गिर अस्मदीया स्तुती वनत भजतम् । कीदृशौ ? सवेदसा समानज्ञानयुक्तौ सहूती
२० समानाह्वानयुक्तौ । देवत्रा देवेषु मध्ये स बभूवथु युवा । सम्भूयैव भवतो । न कदाचिदप्यन्योऽन्यं वियुक्तावित्यर्थः ॥

युवमिति ॥ तत्रैव याज्यामाह—' युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् । युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ' इति ॥ हे सोम, त्वम् अग्नि च इत्येतौ युवां सक्रतू समानकर्माणौ सन्तौ दिवि एतानि रोचनानि नक्षत्रादीनि अधत्तम् अस्थापयतम् । हे अग्नीषोमौ,
२५ युवां गृभीतान् सिन्धून् अपोदकादिनिमित्तेनापूर्णत्वापवादेन पश्चात्तिरूपेण अवद्येन दोषेण च गृहीता नदीः अभिशस्तेः अपवादाद् अवद्यात् पश्चाद्दृष्टदोषाच्च अमुञ्चतं मोचितवन्तौ । एतादृशेन सर्वमाहात्म्ये तथापि तदुपकर्त्तारौ स्तुवेने ॥

१५. तै१ तै२ मै३— धारयत ।

६-६ गु१ गा१—गीर्भूताविमतौ । ७ क ख—अपोदकादि°, [ इ कक्षसमुद्रितपुस्तके सानुदितान्तं
३० —' सम्पादकादि ' ] । ८ आ क— दृष्टे । ९ आ पा— दोषिणश्च ३ ठ— दूषितश्च ।

अग्नींषोमाविमꣳ सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥
आऽन्यं दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः ।
अग्नींषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥

---

अग्नींषोमावित्यग्नी - सोमौ । इमम् । स्विति । मे । शृणुतम् । वृषणा । हवम् ।
प्रतीति । सूक्तानीति सु उक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ॥
एति । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परीति । श्येनः । अद्रेः ।
अग्नींषोमेत्यग्नी सोमा । ब्रह्मणा । वावृधाना । उरुम् । यज्ञाय । चक्रथुः । उ । लोकम् ॥

---

" अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकाम " (तैस २ ३ ३) [16]इत्यस्य पुरोऽनुवाक्या– ' अग्नीषोमौ ' इत्यनुष्टुप् ॥ हे अग्नीषोमौ वृषणा कामाना वर्षितारौ । " सुपा सुलुक्° " (पा ७ १ ३९) इत्याकार । इमं मे हवम् आह्वानं सु शृणुत सुष्टु शृणुतम् आह्वानप्रयोजनं यथावत् कुरुतम् इति यावत् । " भावेऽनुपसर्गस्य " (पा ३ ३ ७५) इति ह्वयते अप्, सम्प्रसारणं च । किं च–श्रुत्वाऽऽह्वानम् अस्माकं सूक्तानि प्रति हर्यत मनसा प्रतिगृह्णीतम् । हर्य गतौ । तथा कृत्वा दाशुषे हविर्दत्तवते [17]तस्मै यजमानाय मय [18]सुखं तद्धेतू[18] भवतम् ॥

[19]अत्रैव याज्या–' आऽन्यं दिव ' इति त्रिष्टुप् ॥ उपरिष्टाल्लक्षणात्[20] (द्र तैस २ ६ २) त्रिष्टुप्त्वाच्च केचिदिमां याज्यामाहु । आचार्यस्तु इमां विहाय " अग्नीषोमा हविष " इत्युत्तरां याज्यां दर्शितवान् (बौश्रौ १३ २६) । तत्र विकल्प । अन्यम् एकं युवयोर्मध्ये अग्निं

---

अग्नीषोमाविति ॥ " अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकाम " (तैस २ ३ ३) इत्यत्र पुरोनुवाक्यामाह– ' अग्नीषोमाविमꣳ सु मे शृणुत वृषणा हवम् । प्रति सूक्तानि हर्यत भवत दाशुषे मय ' इति ॥ हे अग्नीषोमौ वृषणा कामाना वर्षयितारौ, युवा मे मदीयम् इमं हवम् आह्वानं सुष्टु शृणुत सूक्तानि अस्मदीयानि प्रति हर्यत मनसा प्रतिगृह्णीत, दाशुषे हविर्दत्तवते यजमानाय मय सुखं भवतं सपादयतम् ॥

एति ॥ तत्रैव याज्यामाह– ' आऽन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रे । अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ' इति ॥ मातरिश्वा वायु अन्यं युवयोरेकमग्निं दिवः द्युलोकस्थादादित्यात् आ जभार आहृतवान् । तथा चान्यत्र मन्त्र आम्नायते– " आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावत " (ऋस ६ ८ ४) इति । श्येन गायत्र्या पक्षिरूपावनारो

---

[16] मै४–इत्यस्या । [17] मै४– असै । [18]–[18] तं१ तर मै ल– सुखहेतू । [19] मै४– तत्रैव ।
[20] तं१ तर मै ल– °लक्षणा ।

---

[10] इ उ जो पा– सूक्तसदृशानि ।

अग्नीषोमा हविषः प्रस्थितस्य वीतं॒ (२) हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥

अग्नीषोमेत्यग्नी सोमा । हविषः । प्रस्थितस्येति प्र-स्थितस्य ।
वीतम् (२) । हर्यतम् । वृषणा । जुषेथाम् ।
५ सुशर्माणेति सु-शर्माणा । स्ववसेति सु-अवसा । हि । भूतम् ।
अथ । धत्तम् । यजमानाय । शम् । योः ॥

दिवः आदित्यात् मातरिश्वा वायुः प्राणप्रवृत्तिरूपः आ जभार आजहार आनीतवान्, यथा—"आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः" (ऋसं ६ ८ ४) इति । अन्यम् एकं सोमं श्येनः, गायत्री श्येनो भूत्वा अद्रेः उच्छ्रितात् स्थानात् तृतीयस्या दिवः परि
१० अमथ्नात् आहरत् । तस्मात् हे अग्नीषोमौ एवं महानुभावौ ब्रह्मणा ऋगादिना मन्त्रेण परिवृद्धेन वा अनेन हविषा वावृधाना वावृधानौ वर्धमानौ । ताच्छीलिकश्चानश् (पा ३ २ १२९), "तुजादीनाम्°" (पा ६ १ ७) इत्यभ्यासस्य दीर्घत्वं, पूर्ववदात्वम् । उरु विस्तीर्णं लोकं स्थानं यत्र यजमानो गच्छति तादृशं यज्ञाय यजते यजमानाय । यद्वा— यज्ञाय यज्ञफलभोगार्थं यजमानाय लोकं चक्रथुः उरु कुरुतम् । उ इति पादपूरणः अवधारणार्थो वा । तदर्थमस्मै
१५ ब्रह्मवर्चसं दत्तमिति ॥

अथ याज्यानिकल्पः— 'अग्नीषोमा हविषः' इति त्रिष्टुप् ॥ हे अग्नीषोमौ, हविषः प्रस्थितस्य उपस्थितस्य प्रारब्धस्य वा वीतं खादतम् । वी गत्यादिषु, आदादिकः । हर्यतं मनसा

अन्यं सुपर्णोरेकं सोमम् अद्रेः परि पर्वतस्य उन्नततमस्य शुरोस्स्योपरि अमथ्नात् सोमरक्षकाणां तत्रत्यानां मन्थनं विलोडनं पराजयरूपं क्षोभं कृत्वा समानीतवानित्यर्थः ॥ एतच्च— "कद्रूश्च वै सुपर्णी
२० च" (तैसं ६ १ ६) इत्यस्मिन्ननुवाके समाम्नातम् । हे अग्नीषोमौ, युवां ब्रह्मणा वावृधाना मन्त्रेण वर्धमानौ यज्ञार्थम् उरुं लोकं विस्तीर्णं स्थानं चक्रथुः उ कृतवन्तावेव यजमानस्य फलभूतं लोकं संपादितवन्तावित्यर्थः ॥

अग्नीषोमा इति ॥ तत्र विकल्पितां याज्यामाह— 'अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् । सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः' इति ॥ हे अग्नीषोमौ
२५ वृषणा कामानां वर्षयितारौ युवां प्रस्थितस्य समर्पितस्य हविषः सारं वीतं प्राप्नुतं हर्यतं प्रतिगृह्णीतं जुषेथां सेवेथां, सुशर्माणा शोभनसुखयुक्तौ स्ववसा शोभनरक्षणोपेतौ भूतं भवतम् । हि यस्मादेवं तस्मात् अथ अनन्तरं यजमानाय यजमानार्थं शं सुखं योः पुत्रादिमिश्रणं च धत्तं कुरुतम् ॥

२१ तै१ तै२ मै स— माणशीर्° । २०. मै—चे । २३ तै१ तै२ मै स— 'उरु' नास्ति ।

११ दा— पर्वतस्य तदुन्नत° । १०-१० द दो१— चक्रथु, गं— चक्रथु उरु ।

आ प्यायस्व* सं ते*॥

एति । प्यायस्व । समिति । ते ॥

प्रतिगृह्णीत स्पृहयतम् । "°अदुपदेशात्° " (पा ६ १ १८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वर । 'जुषेथा नित्य सेवेथाम् । पूर्ववल्लसार्वधातुकानुदात्तत्वे शस्योदात्तत्वम् । हे $^V$वृषणा वर्षितारौ कामाना युवा $^V$सुशर्माणा सुशर्माणा सुमहौ सुसुखा वा $^V$स्ववसा स्ववसौ शोभनरक्षणा । उभयत्र पूर्ववदात्वम् । " सोर्मनसी° " (पा ६ २ ११७ ) इत्युत्तरपदाद्युदात्तत्वम् । ईदृशौ युवा यजमानौ $^V$भूत भवतम् । " बहुल छन्दसि " (पा २ ४ ७३ ) इति शपो लुक्, " हि च " (पा ८ १ ३४) इति निघाताभाव । $^V$अथ अनन्तर $^V$यजमानाय $^V$धत्त दत्त $^V$श शमन रोगाणा $^V$यो यावत्थ आगामिना भयानाम् । शाम्यतियौतिभ्या व्यत्ययेन भावे विचि वचनव्यत्यय । यौतेर्वा असुनि अडादशाभाव । अपदान्तेऽपि पूर्वसहुत्व, णिद्धावाभावश्च । ब्रह्मवर्चसिन च कुरुतमिति ॥ १०

" सोमाय वाजिने श्यामाक चरु निर्वपेद्य क्लैब्यात् बिभीयात् " ( तैस २ ३ ३ ) इत्यस्य पुरोऽनुवाक्या–' आ प्यायस्व ' इति गायत्री ॥ इयमग्निकाण्डे व्याख्यास्यते यत्राऽऽम्नायते प्रकृतौ "**मा नो हिंसीत्**" (तैस ४ २ ७) इत्यत्र । इह तु प्रतीकग्रहणम् । हे $^V$सोम, तव प्रसादात् $^V$वृष्णिय वीर्यं $^V$विश्वत $^V$समेतु $^V$समागच्छतु । तदर्थं च माम् $^V$आ $^V$प्यायस्व । किं च $^V$वाजस्य अन्नस्य $^V$सगथे सगमनार्थं $^V$भव इति ॥　१५

तत्रैव याज्या– ' स ते ' इति त्रिष्टुप् ॥ इमामपि तत्रैव (तैस ४ २ ७) व्याख्यास्याम । इह तु प्रतीकग्रहणमस्या । हे $^V$सोम तव प्रसादात् $^V$पयासि $^V$वाजा $^V$वृष्ण्यानि च मा समागच्छन्तु[26] । $^V$अभिमातिषाह, अभिमाति पाप्मा क्लैब्यहेतु, तस्याभिभवितु तव । किं च $^V$अमृताय अमृतत्वार्थम् $^V$आप्यायमान $^V$दिवि $^V$श्रवासि अन्नानि $^V$उत्तमानि $^V$धिष्व स्थापयेति ॥

" ब्राह्मणस्पत्यमेकादशकपाल निर्वपेद्ग्रामकाम " ( तैस २ ३ ३ ) इत्यस्य[27] पुरोऽनुवाक्या–'गणाना त्वा' इति जगती ॥ हे $^V$ब्रह्मण परिवृढस्य कर्मणो वा $^V$पते पालयित । " षष्ठ्या पतिपुत्र° " (पा ८ ३ ५३ ) इति सत्वम्, " सुबामन्त्रिते° " (पा २ १ २ ) इति　२०

एति ॥ "सोमाय वाजिने श्यामाक चरु निर्वपेत्" (तैस २ ३ ३ ) इत्यत्र याज्यानुवाक्ययो प्रतीके दर्शयति–' आ प्यायस्व स ते ' इति ॥ ' आ प्यायस्व समेतु ते ' इत्येषा पुरोनुवाक्या, ' स ते पयासि ' इत्येषा याज्या । एते उभे चतुर्थकाण्डस्य द्वितीयप्रपाठके "मा नो हिंसीज्जनिता" (तैस ४ २ ७ ) इत्यस्मिन्ननुवाके समाम्नास्येते अतस्तत्रैव व्याख्यास्येते ॥　२५

२४–२४ ल– हि दीयु ।　२५ त१ त२ मै – समागच्छताम् ।　२६ वे१ त२ मै ल–सगच्छन्तु ।
२७ मै४ – इत्यस्या ।

गुणानां त्वा गुणपतिं हवामहे कुविं कुवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत् आ नः शृण्वन्नूतिभिः सीद् सादनम् ॥

गुणानाम् । त्वा । गुणपतिमिति गुण-पृतिम् । हवामहे ।
कविम् । कवीनाम् । उपमश्रवस्तममित्युपमश्रवः-तमम् ।
ज्येष्ठराजमिति ज्येष्ठ-राजम् । ब्रह्मणाम् । ब्रह्मणः । पते ।
एति । नः । शृण्वन् । ऊतिभिरित्यूति-भिः । सीद । सादनम् ॥

पराङ्गवद्भावात् पष्ठ्यामन्त्रितसमुदायो निहन्यते । त्वां गणानां सर्वेषां संबन्धिनं गणपतिं ग्रामादिसंघातस्वामिनं हवामहे आह्वयामः । पूर्ववत् सम्प्रसारणम् । कवीनां क्रान्तदर्शनानामपि कविं क्रान्तदर्शिनम् । उपमश्रवस्तमम् उपमीयते अनेन इत्युपमः, सर्वेषां श्रवसामन्नानाम् उपमानं यस्य श्रवः, न तु केनचिदुपमीयते प्रसिद्धमुपमानमिति, स उपमश्रवाः । "आतश्चोपसर्गे" (पा ३·३·१०६) इत्यङ्, "ङ्याप्पोः संज्ञाच्छन्दसोः" (पा ६·३·६३) इति ह्रस्वत्वम् । [28]यद्वा—करणस्य[28] कर्मविवक्षायाम् "आतश्चोपसर्गे" (पा ३·१·१३६) इति कः । यद्वा—श्रूयते इति श्रवः [29]यस्य [*]सर्वदा श्रूयते, अत एवोपमश्रवाः न कदाचिद्दृश्यते[29] स उपमश्रवाः, श्रूयमाणोपम इति यावत् । [30]आहिताग्न्यादिः (पा २·२·३७) द्रष्टव्यः[30] । अनुभवाभावार्थत्र श्रूयमाणत्वोक्तिः[*], 'विषं भुङ्क्ष्व' [31]इतिवदन्यपरत्वात् । सर्वानुपमश्रवसः अतिशेते इति [32]उपमश्रवस्तमः तम्[32] । ज्येष्ठराज ज्येष्ठ [33]प्रशस्ततम राजतीति ज्येष्ठराट् । स त्वम् एवं महानुभावः अस्माकं स्तुतीः शृण्वन् ऊतिभिः रक्षणैः तर्पणैर्वा हेतुभूतैः ताभिर्व्याप्रियमाणाभिरुपलक्षितः सादनम् आत्मीयमासनम् आ सीद अधितिष्ठ । सीदन्त्यस्मिन्निति सादनं, छान्दसं दीर्घत्वम् । तथा ग्रामाधिपतिरिवासीदन् अस्मभ्यं ग्रामं देहीति ॥

गणानामिति ॥ "ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामः" (तैसं २·३·२) इत्यत्र पुरोनुवाक्यामाह—'गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्' इति । ब्रह्मणां ब्रह्मणस्पते हे कृत्स्नमन्त्रपते, गणानां गणपतिं कृत्स्नदेवगणस्वामिनं त्वां हवामहे आह्वयामः । कीदृशं त्वाम् ? कविं कवीनां विदुषां मध्ये प्रधानं विद्वांसम्, उपमश्रवस्तमम् उपमानत्वेन श्रवः कीर्तिर्यस्यासावुपमश्रवाः, सर्वगुणसंपन्नत्वेनायमेव सर्वेषां पदार्थानामुपमानमित्येवमादृशी कीर्तिः, अतिशयेनोपमश्रवा उपमश्रवस्तमः तादृशं, राज्ञां मध्ये ज्येष्ठो ज्येष्ठराजः तादृशम् । यथोक्तगुणोपेतस्त्वं नः अस्माकम् ऊतिभिः पालनैर्निमित्तभूतैर्युक्तः सन् सादनम् अस्मिन् कर्मण्युपवेशनम् आ सीद प्राप्नुहि ॥

[28]. तै१.तै२.— यद्विकरणस्य, मै— यद्वि [ दा-स्थान् ] विकरणस्य । [29]-[29]. मै१—यस्य सर्वाः श्रूयन्ते नोपमा न कानिद् दृश्यते । *-* [ तै— 'यस्य सर्वदा ...... श्रूयमाणत्वोक्तिः' इत्येतावान् भागः नास्ति । ]। [30]. तै१. तै२.मै- आहिताग्निर्द्रष्टव्यः । [31]. तै१.तै२.— इति यदन्य° । [32]-[32]. तै१ तै२.मै.मे- °श्रवस्तमम् । [33]. तै१.तै२.मै.मे.— प्रशस्तम् ।

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति (३) श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥
स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥

स । इत् । जनेन । स । विशा । स । जन्मना ।
स । पुत्रैः । वाजम् । भरते । धना । नृभिरिति नृ-भिः ।
देवानाम् । यः । पितरम् । आविवासतीत्या विवासति (३) ।
श्रद्धामनेति श्रद्धा मना । हविषा । ब्रह्मणः । पतिम् ॥
स । सुष्टुभेति सु स्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिगम् । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यसूद इति हव्य सूदः । कनिक्रदत् । वावशतीः । उदिति । आजत् ॥ १०

तत्र याज्या– 'स इज्जनेन' इति जगती ॥ [v]स एव [v]जनेन परिजनेन किंकरादिना, [v]स एव [v]विशा विड्भिरुपजीवनीभिः [३४]प्रजाभिः, [v]स एव [v]जन्मना [३५]जनो जन्मप्रभृतिः[३५], [v]स एव [v]पुत्रैः पुत्रपौत्रादिभिः एतैः सर्वैः सह [v]वाजम् [३६]अन्न [v]भरते दधाति । [v]धना धनानि च [v]नृभिः अन्यैश्च बन्धुसुहृदादिभिः सह स एव दधाति । " नृ चान्यतरस्याम् " (पा ६ १ १८४) इति विभक्तेरुदात्तत्वाभावः, " सावेकाचः°" (पा ६ १ १६८) इति हि [३७]प्राप्नोति । स १५ एव दधातीति । क इत्याह? [v]यः [v]श्रद्धामना श्रद्धायुक्तमना [v]देवानां [v]पितरं पातारं [v]ब्रह्मणस्पतिं [v]हविषा [v]आविवासति परिचरति । आविवासतिः परिचरणकर्मा ॥

अथ बार्हस्पत्य उपहोमः – 'स सुष्टुभा' इति ॥ त्रिष्टुबेषा ॥ [v]स बृहस्पतिः [v]सुष्टुभा [३८]शोभनं स्तुवता[३८] । स्तोभतिः स्तुतिकर्मा । स्तौतेर्वा क्विपि वर्णव्यत्यये सुको भलम्, "उप

स इति ॥ तत्रैव याज्यामाह–'स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । २० देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्' इति ॥ [r]सः [r]इत् सः एव यजमानः [r]जनेन किंकरादिना युक्तः [r]वाजम् अन्नम् [r]भरते दधाति । [r]स एव [r]विशा करप्रदया प्रजया, सहितः वाजं भरते । [r]स एव ब्राह्मणादिजन्मना सहितः [१३]वाजं भरते । [r]स एव [r]पुत्रैः सहितः [१३]वाजं भरते । ॥ एव [r]नृभिः बन्धुभिः सहितानि [r]धना द्रव्याणि भरते । [r]यः यजमानः [१४]श्रद्धामना श्रद्धायुक्तमनस्कः [r]देवानां [r]पितरं पालयितारं [r]ब्रह्मणस्पतिं [r]हविषा स्वकीयेन [r]आ विवासति आ समन्ताद्विशेषेण परिचरति, २५ स इज्जनेनेति पूर्वत्रान्वयः ॥

स इति ॥ अत्रैव विकल्पितां याज्यामाह । यद्वा–[१५]तत्रैवोपहोमार्थं मन्त्रमाह[१५]– 'स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्' इति ॥

३४ त१ त२– 'प्रजाभिः' नास्ति । ३५ मै४–जननेन । ३६ त१ त२ मै ल– 'अन्न' नास्ति ।
३७ मै४– 'प्राप्नोति' इत्यस्यानन्तरम् 'उच्चम्' । ३८ त१ त२ मै– शोभनस्तुवता । ३०

१३. हो१– अन्नम् । १४ क हा– 'श्रद्धामना' नास्ति । १५–१५ क थ हो१– °होममन्त्रमाह ।

## मरु॑तो॒ यद्ध॑ वो दि॒वः॥

मरु॑तः । यत् । ह॒ । वः॒ । दि॒वः ।

सर्गात् सुनोति° " ( पा ८ ३ ६५ ) इत्यादिना षत्वम्। ऋक्वता स्तुतिमता मन्त्रवता वा। " छय " ( पा ८ २ १० ) इति मतुपो वत्वम्, अयस्मयादित्वेन ( पा १ ४ २० ) पदत्वात्
५ कुत्वम्, भत्वाज्जश्त्वाभाव । ईदृशेन गणेन सहित वल मेघम्। वृणोते पचाद्यच् (पा ३ १ १३४)। कपिलकादित्वात् लत्वम् ( द्र पाभा ८ २ १८ )। रुरोज भिनत्ति फलिग स्वच्छोदकपूर्णं, फलम् उदक वा रवेण शब्देन उपलक्षितम्। रवेण वा फलिग गिरिगुहादिषु प्रतिफलन्तम्। किं च अय बृहस्पति हव्यसूद हविषा भोक्ता। कर्मणि " कूलसूद स्थलकर्षा ° " (पा ६ २ १२९) इत्युत्तरपदाद्युदात्तत्वम्। कनिक्रदत् अत्यर्थं नन्दन् हविरशनेन
१० शब्द कुर्वाण । यद्वा-हविष आस्वादनेन अहो स्वादिष्ठमिति प्रशसाशब्द कुर्वाण । दाधर्त्यादौ ( पा ७ ४ ६५ ) निपात्यते। अभ्यस्तानामादि ( पा ६ १ १८९ ) इत्याद्युदात्तत्वम्। उस्रिया गा वावशती अत्यर्थं कामयमाना । वशेर्यङि " न वश " ( पा ६ १ २० ) इति सम्प्रसारणाभाव । पूर्ववदाद्युदात्तत्वम्। उत् आजत् भञ्जनानन्तर बलात् उद्गमयति। अज गतिक्षेपणयो , छान्दसो लुङ् ॥

१५ " एतामेव निर्वपेद्य कामयेत भ्रातृव्य विशं विनाशयेयमिति मारुती याज्यानुवाक्ये कुर्यात् " ( तैस २ ३ ३ ) इत्यस्या पुरोनुवाक्या- ' मरुतो यद्ध व ' इति गायत्री ॥

स देव सुष्टुभा शोभना स्तुभ स्तोभा यया शोभा यस्य मन्त्रगणस्य सोऽय सुष्टुप् तेन सुष्टुभा, ऋक्वता, ऋचो यद्युक्ता यस्मिन् मन्त्रगणे स ऋक्वान् तेन ऋक्वता, रवेण ध्वनियुक्तेन गणेन मन्त्रसमूहेन युक्त सन् रुरोज बभञ्ज । कं बभञ्ज ? फलिग, फलमस्यास्तीति फली यजमान, त गच्छति प्राप्नोतीति
२० फलिग तादृश वल प्रबल प्रतिबन्धं रुरोज। हव्यसूद हविर्भोक्ता कनिक्रदत् अहो स्वादुतम हविरिति क्रन्दनं कुर्वाण बृहस्पति वावशती प्रस्तुतस्तनत्वेन वत्सान् प्रति हम्भारव कुर्वती उस्रिया गा उदवैर्गतीदृशीयजमान प्रति प्रेरयति। स इत्यभ्यास आदरार्थ ॥

मरुत इति॥ " एतामेव निर्वपेद्य कामयेत भ्रातृव्य विशं वि नाशयेयमिति मारुती याज्यानुवाक्ये कुर्यात् " ( तैस २ ३ ३ ) इति विहितयो प्रतीकं दर्शयति- ' मरुतो यद्ध वो दिवो या व शर्म ' इति ॥
२५ ' मरुतो यद्ध व ' इत्यनुवाक्या, ' या व शर्म ' इति याज्या। एतदुभयम् प्रथमकाण्डस्य पञ्चमप्रपाठके ( तैसं १-५ ११ ) व्याख्यातम् ॥

३९ तै१ तै२ मै- ' मन्त्रवता ' नास्ति। ४०. त१ तै२ मै ग- बध्नन्। ४१ तै१ तै२ मै ग- ' दाधर्तीत्यम् ' इत्यस्थाने ' कन्द्' ४२. तै१ तै२ मै ग - हविषा। ४३-४३ तै१ तै२ मै ग- ' कनिक्रद् मादिरित्याद्युदात्तत्वम् ' नास्ति। ४४ तै१ तै२ मै- अप ।

३० १६ आ- दर्श। १७ द- राम। १८ द- पुरोनुवाक्या।

या वः शर्मे[a]।
अर्यमाऽऽ याति वृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन्।
सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु ॥

या । वः । शर्म ॥
अर्यमा । एति । याति । वृषभः । तुविष्मान् । दाता । वसूनाम् । पुरुहूत इति पुरु हूतः । अर्हन् । ५
सहस्राक्ष इति सहस्र–अक्षः । गोत्रभिदिति गोत्र भित् । वज्रबाहुरिति वज्र बाहुः ।
अस्मासु । देवः । द्रविणम् । दधातु ॥

व्याख्याता चेयं "वैश्वानरो न" (तैस १ ५ ११) इत्यत्र। इह त्वस्याः प्रतीकग्रहणम्। हे मरुतः, वः युष्मान् यस्मात् वयं सुम्नायन्तः सुखमिच्छन्तः हवामहे आह्वयाम तस्मात् नः अस्मान् क्षिप्रं दिन आ उपगन्तन अस्मत्सकाशमागच्छत[45] ब्रह्मणि निशं स्थापयितुमिति ॥ १०

तत्रैव याज्या–'या वः शर्म' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ५ ११)। प्रतीकग्रहणमिह[46]। हे मरुतः, युष्माकं यानि शर्माणि सुखानि त्रिधातूनि त्रिलोकस्थानानि शशमानाय युष्मान् भजमानाय दातुं सन्ति भवन्ति, यानि च दाशुषे हविर्दत्तवते यजमानाय अधिकं यच्छत प्रयच्छत, तानि अस्मभ्यं वि यन्त विशेषेण दत्त। किं च हे वृषणः कामानां वर्षितारः, [47]अस्मभ्यं सुवीरं शोभनपुत्रादिकं रयिं [48]धत्त इति ॥ १५

"अर्यम्णे चरुं निर्वपेत् सुवर्गकामः" (तैस २ ३ ४) इत्यस्याः पुरोऽनुवाक्या–'अर्यमाऽऽ याति' इति त्रिष्टुप् ॥ अरीन् [49]यमयतीति अर्यमा[49] इन्द्र उच्यते, वक्ष्यमाणेभ्यो लिङ्गेभ्यः।

अर्यमेति ॥ "अर्यम्णे चरुं निर्वपेत् सुवर्गकामः" (तैस २ ३ ४) इति चतुर्थेऽनुवाके यद्विहितं तत्र पुरोनुवाक्यामाह–'अर्यमाऽऽ याति वृषभस्तुविष्मान् दाता वसूना पुरुहूतो अर्हन्। सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु' इति॥ 'असौ वा आदित्योऽर्यमा" (तैस २ ३ ४) २० इतिश्रुतेरर्यमशब्द आदित्यं ब्रूते। ॥ चेन्द्रामेदोपचारेणन्द्रधर्मं स्तूयते। वृषभः कामानां वर्षयिता। तुविष्मान् महाबलः, वसूनां धनानां दाता, पुरुषु बहुषु यज्ञेषु हूतः आहूतः। अर्हन् स्वर्गं दातुं योग्यः। सहस्राक्षत्वादिकं स्पष्टम् ॥

४५ तर तर मै ल–°गच्छतेति। ४६ तर तर मै ल–°मिदम्। ४७ मै–अस्मभ्यं सुवर्यम्'। ४८ मै– दत्त। ४९–४९ तर तर मै ल– यमयति उपयतीत्यर्यमा। २५

१९. गृ– हूयते।

ये ते॑ऽर्यमन् ब॒हवो॑ देव॒याना॑: पन्था॑नो(४)राजन् दि॒व आ॒चर॑न्ति ।
तेभि॑र्नो देव म॒हि शर्म॑ यच्छ॒ शं न॑ एधि द्वि॒पदे॒ शं चतु॑ष्पदे ॥

ये । ते॒ । अ॒र्य॒म॒न् । ब॒हव॑ । दे॒व॒याना॒ इति॑ देव याना ।
पन्था॑न (४)। रा॒ज॒न् । दि॒व । आ॒चर॒न्तीत्या॑-चर॑न्ति ।
५ तेभि॑ । न॒ । दे॒व॒ । म॒हि । शर्म॑ । य॒च्छ॒ ।
शम् । न॒ । ए॒धि॒ । द्वि॒पद॒ इति॑ द्वि पदे॑ । शम् । चतु॑ष्पद॒ इति॑ चतु॑ पदे॒ ॥

स ᵛआ ᵛयाति आगच्छति आगच्छतु वा । ᵛवृषभ वर्षिता कामाना ᵛतुविष्मान् महाबल ᵛदाता ᵛवसूना धनाना ᵛपुरुहूत बहुभिर्यजमानैराहूत , बहुषु वा स्थानेषु आहूत । तेन " तृतीया कर्मणि" (पा ६ २ ४८) इत्यस्याप्रसङ्ग । ᵛअर्हन् दानादिक कर्तुमर्हन् । अर्हच्छब्द पूज्यवाची, हे १० पूजनीय । ᵛसहस्राक्ष बहिरिन्द्रिय बहुकार्यकरणसमर्थेन्द्रियो वा ⁵¹सहस्रनेत्र एव वा ⁵¹, ᵛगोत्रभित्⁵² मेघाना पर्वताना वा भेत्ता विदारयिता ᵛवज्रबाहु वज्रपाणि । " प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ भवत " (पाभा २ २ ३६ वा १) इति परनिपात । ईदृश ᵛदेव ᵛअस्मासु ᵛद्रविण स्वर्गाख्य धन ᵛदधातु ॥

तत्रैव याज्या—' ये तेऽर्यमन् ' इति त्रिष्टुप् ॥ हे ᵛअर्यमन् राजन् दीप्यमान, ᵛते तव ᵛये १५ ᵛबहव ᵛदेवयाना देवा ⁵³यादृशैर्गच्छन्ति, देवान् वा यैर्गच्छन्ति तादृशा , ᵛदिव द्युलोकात् ᵛआचरन्ति आभिमुख्येन यात्कर्मस्थानम् आतन्यन्ते ᵛतेभि तै पथिभि ᵛन अस्मभ्य, हे ᵛदेव देवनादिमत्⁵³, ᵛमहि महत् ᵛशर्म सुख ᵛयच्छ देहि । किं च ᵛन अस्माक ᵛद्विपदे ᵛचतुष्पदे च ⁵⁴ᵛशम् ᵛएधि सुखहेतुर्भव, तादृशमार्गगम्यस्वर्गहेतुर्भवेति यावत् । स्वरसमासा तावुक्तौ ।

२० य इति ॥ तत्रैव याज्यामाह– ' ये तेऽर्यमन् बहवो देवयाना पन्थानो राजन् दिव आचरन्ति । तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे ' इति ॥ हे ᵛअर्यमन् ᵛराजन्, ᵛते त्वदीया ᵛदेवयाना देवैर्गन्तुमर्हा ᵛये ᵛबहव ᵛपन्थान आ ᵛदिव स्वर्गपर्यन्त चरन्ति गच्छन्ति, हे ᵛदेव, ᵛतेभि ते पथिभि ᵛन अस्माक ᵛमहि ᵛशर्म महत् सुख ᵛयच्छ, ᵛद्विपदे मनुष्याय ᵛन अस्माक संबन्धिने ᵛशम् ᵛएधि सुखकरो भव । ᵛचतुष्पदे गवादिरूपाय शम् एधि । " अर्यम्णे चरुं निर्वपेत् कामयेत २५ दानकामा मे प्रजा स्यु " (तैस २ ३ ४), " अर्यम्णे चरु निर्वपेत् कामयेत स्वस्ति जनतामियाम् " (तैस २ ३ ४) इत्यनयोरपि एत एव याज्यानुवाक्ये ॥

५०-५० तं१ तं२ मै८– 'सहस्रनेत्र एव वा' नास्ति । ५१ मै– गोत्रभृत् । ५२ तं१ तं२ मै७– मै । ५३ मै८– दानादिमत् । ५४ तं१ तं७– शर्म ।

बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् ।
रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार ॥

बुध्नात् । अग्रम् । अङ्गिरोभिरित्यङ्गिरः–भिः । गृणानः । वीति । पर्वतस्य । दृꣳहितानि । ऐरत् ।
रुजत् । रोधाꣳसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥

"यो राजन्य आतुजानरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत् ५
बुध्नवती अग्रवती याज्यानुवाक्ये भवतः" (तैस २.३.४) इत्यस्याः पुरोऽनुवाक्या– 'बुध्ना-
दग्रमङ्गिरोभिः' इति त्रिष्टुप् ॥ बुध्नात् मूलादारभ्य यावत् अग्रम् उपक्रमादारभ्य यावत्समाप्ति
[५५]उग्रानदानानि गृणानः गृणानैः स्तुवद्भिः अङ्गिरोभिः इत्थंभूतः । "सुपां सुलुक्॰"
(पा ७.१.३९) इति तृतीयाया [५६]बहुवचनस्य स्वादेशः । यद्वा– व्यत्ययेन कर्मणि कर्तृप्रत्ययः ।
अङ्गिरोभिः स्तूयमानः । पर्वतस्य मेघस्य दृꣳहितानि स्तम्भितानि[५७] रोधांसि उदकस्य रोधनानि १०
द्वारपिधानानि रुजत् भिनत् प्रथमं ततः वि ऐरत् विविधं प्रेरयति विश्लेषयति यथोदकं
पतति । यद्वा–उदकमेन व्यैरत् विकिरति । "बहुलं संज्ञाछन्दसोः" (द्र. उ १९०) इति णिलुक् ।
कीदृशानि रोधांसि ? कृत्रिमाणि कृत्रिमाण्येव [५८]आत्मकृतानीव अयत्नेन[५८] भिनत्ति एषां मेघानां
सम्बन्धीनि । पर्वतस्येति [५९]वचनव्यत्ययेनैकवचनम् । इत्येवंविधानि यानि कर्माणि तानि
सर्वाण्यपि सोमस्य मदे सोमपाननिमित्ते मदे सति इन्द्रः चकार करोति । एवं महानुभाव १५
इन्द्र इमं राजन्यं समानानामग्रं परिणयत्विति ॥

बुध्नादिति ॥ "यो राजन्य आतुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत्"
(तैसं २.३.४) इत्यत्र पुरोनुवाक्यामाह– "बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् ।
रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार' इति ॥ बुध्नात् अग्रं [२०]कर्मोपक्रममारभ्य
[२१]कर्मसमाप्तिपर्यन्तम् अङ्गिरोभिः गृणानः अङ्गिरोनाम्ना मुनिना सदस्यैर्ऋत्विग्भिः स्तूयमान इन्द्रः २०
पर्वतस्य पर्वतवत् सर्वाधारस्य [२२]राजन्यस्य दृꣳहितानि समानैरन्यैः क्रियमाणात् द्रोहविशेषात् व्यैरत्
[२३]विफलानकरोत् । किं कुर्वन् ? एषां समानानां कृत्रिमाणि बलात् संपादितानि रोधांसि ऐश्वर्यप्रति-
बन्धकान्यवरोधनानि रुजत् [२४]भञ्जयन् । कदैतत्सर्वमकरोदित्युच्यते । सोमस्य मदे सोमपानसंबन्धिनि
मदे सति इन्द्रः ता चकार तानि द्रोहनिवारणादीनि कृतवान् ॥

५५. मै४– इन्द्रापवदानानि । ५६. तं१.तं२– एकवचनस्य । ५७–५७. ल– 'स्तंभितानि' २५
नास्ति । ५८. पं२– आत्मकृतानि घटयत्नेन । ५९. तं१.तं२.मै.ल– वचनस्य तृतीयैकवचनम् ।

२०. मं– कर्मोपक्रमादारभ्य । २१. आ– समाप्ति॰ । २२. आ– राज्ञः । २३. क.द.मं.हो१–
विगतान्॰ । २४. आ,उ.पा– भञ्जयन् ।

बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्।
वृथाऽसृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार (५)॥

बुध्नात्। अग्रेण। वीति। मिमाय। मानैः। वज्रेण। खानि। अतृणत्। नदीनाम्।
वृथा। असृजत्। पथिभिरिति पथि भिः। दीर्घयाथैरिति दीर्घ याथैः।
५ सोमस्य। ता। मदे। इन्द्रः। चकार (५)॥

तत्रैव याज्या–'बुध्नादग्रेण वि मिमाय' इति त्रिष्टुप्॥ मूलादारभ्य अग्रेण सह यावदग्रं मानैः मानरज्जुभिरिव वि मिमाय विविध परिच्छिनत्ति मेघान्। अथ तथा निर्मितेषु मेघेषु नदीनाम् अपां, नदनान्नद्यः, खानि द्वाराणि वज्रेण अतृणत् भिनत्ति पिहितानि निदारयति। उतृदिर् हिंसायां रौधादिक। यद्वा–नदीनामिति चतुर्थ्यर्थे षष्ठी, नदीभ्य। नद्यो
१० यथा प्रवहेयु इत्येतमर्थमभिनत् भिनत्ति द्वाराणि, सामर्थ्यादुदकस्येति गम्यते। तत वृथा भित्त्वा तथा क्रीडन्निव असृजत् नदी प्रवर्तयति पथिभि दीर्घयाथै चिरप्रवृत्तै। तान्यभिधानि कर्माणि सोमस्य मदे सति इन्द्र चकार इति। गतम्॥

अथोपहोमादिष्वन्यत्र विनियोगा द्रष्टव्या – 'प्र यो जज्ञे' इति त्रिष्टुप्॥ वक्ष्यमाण एव बार्हस्पत्य। आचार्येण (बौश्रौ १३ २७) तु त्यक्त्वेमामुत्तरेण बार्हस्पत्ये विनियुक्ते।
१५ य देव * विद्वान् आत्माधिकारज्ञ सर्वज्ञो वा अस्य मेधस्य वधु बन्धन, यत्राय

बुध्नादिति॥ तत्रैव याज्यामाह– 'बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्। वृथाऽसृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार' इति॥ इन्द्र नदीनां बुध्नात् अग्रेण मूलादग्रपर्यन्त मानैः मानदण्डै वि मिमाय विशेषेण निश्चितवान्। निश्चित्य च नदीनां खानि जलप्रवाहाधीनं अवकाशान् प्रति वज्रेण अतृणत् जलप्रवाहनिरोधकान् पर्वतादीन् वज्रेण
२० हिंसितवान्। दीर्घयाथैः दीर्घाणां प्रवाहाणां गमनोपयुक्तैः पथिभिः मार्गैर्युक्तान् नदीविशेषान् असृजत्। न चात्रास्य भूयान् प्रयास किं तु वृथा। यथा लोके नरैस्तृणच्छेदादिव्यर्थचेष्टाम् आयास मन्तरेण जना कुर्वन्ति तद्वदित्यर्थ। 'सोमस्य' इत्यादि पूर्ववत्। तदारम्भनमात्रेण महतीर्नदी सृजत इन्द्रस्य श्रेष्ठप्रापणे च प्रयास इत्यभिप्राय॥

६० मै–मानयित्रीभि। ६१ त१ त२ मै ल– विहितानि, मै४ पिहितानीव। ६२ त१ त२
२५ मै ल–लभ्यते। ६३ मै४–प्रथमामुत्तरे था। ६४ त१ त२ मै ल– 'य' नास्ति। *–* [त१ त२– 'विद्वान् अथ हि' नास्ति।]। ६५ मै४–अधिकारज्ञ। ६६ मै ल– याज्यायाम्।

२५. ग ग१ होर–मूलादारभ्याग्र°। २६–२६ ड–मानैर्दण्डै, अ आ उ क चो ना पा हा–मानदण्डै। २७–२७ हा– निश्चित्य। २८ आ– °निरोधक°। २९ आ हा– पर्वता। ३० हा– 'दीर्घयाथै' नास्ति। ३१ ड क चो ना हा– तयास। ३२ ग ग१– लीलया°।

प्र यो जज्ञे विद्वाऽ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ ॥

प्रेति । य । जज्ञे । विद्वान् । अस्य । बन्धुम् । विश्वानि । देव । जनिमा । विवक्ति ।
ब्रह्म । ब्रह्मण । उदिति । जभार । मध्यात् ।
नीचा । उच्चा । स्वधयेति स्व - धया । अभि । प्रेति । तस्थौ ॥ ५

बध्यते [67]मेधेन याऽय बध्यते[67], तद्विद्वान्, यो [68]निब धनमस्य जज्ञे जानाति । कथ ज्ञायते निबन्धनमस्याय जानातीति? तत्राह—विश्वानि जनिमा ज मानि अय हि [69]देव [69]अस्य निवक्ति ब्रूते [70]परेभ्य कथयति, [71]त जनमय[71] जानातीति[72] जानाम । ब्रूते "बहुल छन्दसि" (पा २ ४ ७६) इति शप श्लु, अभ्यासस्य [73]चेत्वम् । एवमुत्पादित भूयिष्ठमुदकम् एतद्ब्रह्मेत्युच्यते, एतत्[74] एवमुत्पादित ब्रह्म परिवृढम् उदक ब्रह्मण [74]उपरि परिवृढाया पृथिव्या [75]उत् जभार[75] १० उद्धरति । मध्यात् मध्यप्रदेशात् नाचा [76]नीचप्रदेशात् । पञ्चम्येकवचनस्य "सुपा सुलुक्" (पा ७ १ ३९) [77]इत्याजादेश । साहितिको दकारोपजन छान्दस । उक्त च प्रातिशाख्ये— " नीचापूर्वो दकार उच्चापर " (तैप्रा ५ ८) इति । उच्चा उच्चात् प्रदेशात् । पूर्ववदाजादेश । एष [78]सर्वस्मात् उद्धृतम् उदक स्वधया अन्नेन सह अभि प्र तस्थौ आदित्ये अभिप्रतितिष्ठतु

प्रेति ॥ "यो ब्राह्मण आनुजावर स्यात् तस्मा एत बार्हस्पत्यमानुषूक चरु निर्वपेत्' (तैस २ ३ ४) १५ इत्यत्र पुरोनुवाक्यामाह 'प्र यो जज्ञे विद्वा" अस्य बन्धु विश्वानि देवो जनिमा विवक्ति । ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ' इति ॥ विद्वान् सर्वज्ञ [33]य बृहस्पति [34]अस्य ब्राह्मणस्य[34] यजमानस्य बन्धु समानाना मध्येऽनुकूल प्र जज्ञे प्रकर्षेण जानाति । तदीयमभिज्ञत्व कथ निश्चीयत इति चेदुच्यत । यतोऽय देव विश्वानि जनिमा सर्वेषा प्राणिना सर्वाणि जन्मानि [35]विविनक्ति पुन पुन [36]ब्रूते [37]तस्मादभिज्ञत्व निश्चीयते । अभिज्ञो बृहस्पति ब्रह्मण वेदस्य मध्यात् नीचात् २० उच्चा मध्यमभागात् प्रथमभागात् उत्तमभागाच्च ब्रह्म परिवृढ कर्म उज्जभार उद्धृतवान् । स्वधया अमृतेन श्रेष्ठ्यप्रापणलक्षणेन अभि प्र तस्थौ, एन यजमानमभिलक्ष्य प्रस्थान कृतवान् । समानाना मध्ये श्रैष्ठ्य दातु यजमानसमीपे समागतवानित्यर्थ ॥

६७-६७ मै४ 'मेधेन याऽय बध्यते' नास्ति, ल- मेधे । ६८ मै- बधन° । ६९ मै- 'अस्य' नास्ति । ७० मै- परे । ७१-७१ मै- न नूलमयम् । ७२ मै- जानाति किं वयम् । २५ ७३ ७३ त१ त२ मै ऊ-दीर्घत्वम् । ७४ त१ त२ मै- 'उपरि' नास्ति । ७५-७५ त१ त२ मै-उज्जहार । ७६ मै४- निम्नात् । ७७ मै४- इत्याकार । ७८ त१ त२ मै ल- सर्वस्य ।

३३ अ इ उ ना जो पा हा- 'य ' नास्ति । ३४-३४ हा१- ब्रह्मण , ड-यस्य ब्रह्मण । ३५ अ इ उ जो ना पा हा- विविनक्ति । ३६ आ- कथयति । ३७ हा- एतस्माद° ।

म॒हान् म॒ही अ॑स्तभाय॒द्वि जा॒तो द्यां॑ सद्म॒ पार्थि॑वं च॒ रजः॑ ।
स बु॒ध्नादा॑ष्ट ज॒नुषा॒ऽभ्यग्रं॑ बृ॒हस्पति॑र्दे॒वता॒ यस्य॑ स॒म्राट् ॥

म॒हान् । म॒ही इति॑ । अ॒स्त॒भा॒य॒त् । वीति॑ । जा॒तः । द्याम् । सद्म॑ । पार्थि॑वम् । च॒ । रजः॑ ।
स । बु॒ध्नात् । आ॒ष्ट॒ । ज॒नुषा॑ । अ॒भीति॑ । अग्र॑म् ।
५ बृ॒हस्पतिः॑ । दे॒वता॑ । यस्य॑ । स॒म्राडिति॑ सम्-राट् ॥

आभिमुख्येन प्रकृष्ट तिष्ठतु । स्वधया धा हेतुभूतया । यद्वा– स्वधया हविषा सह तिष्ठतु स्थितिहेतुना आदित्ये उदक तिष्ठत्विति यावत् । पक्वमिति ततो वर्षति ततोऽन्नमुत्पद्यते, सोऽस्माकमभिमत सपादयतु बृहस्पतिरिति ॥

" यो ब्राह्मण आनुजावर स्यात् तस्मा एत बार्हस्पत्यमानुषूक चरु निर्वपेत् ...बुध्नवती
१० अग्रवती याज्यानुवाक्ये भवतः" (तैस २ ३ ४) इत्यस्याः पुरोऽनुवाक्या– 'महान्मही' इति त्रिष्टुप् ॥ महान् बृहस्पति मही महत्यौ पृथिवीमन्तरिक्ष च वि अस्तभायत् विविधमस्तम्भयत् । जात जातमात्र एव द्या द्युलोक व्यस्तम्भयत् इत्येव । सद्म सदन स्थानमुदकस्य मध्यमाख्य तत्र स्थित पार्थिव च रजः उदक व्यस्तम्भयत् । स महानुभाव बृहस्पति बुध्नात् मूलादारभ्य अभ्यग्र यावदग्रम् आष्ट व्याप्नोतु । जनुषा जन्मनैव अयत्नेनैव तेजस्विन करोतु । कम् ?
१५ यस्य असौ देवता ईश्वर. सम्राट् सगतदीप्तिः त यजमान तेजसा व्याप्नोतु । यद्वा– यस्याय देवता तस्याय देवता बृहस्पतिः । यसर्वमेनमय व्याप्तवान् तस्मात् महानुभावोऽयम्

महानिति ॥ तत्रैव याज्यामाह– 'महान् मही अस्तभायद्वि जातो द्यां सद्म पार्थिवं च रजः । स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्' इति ॥ महान् सामर्थ्येनाधिको बृहस्पतिः मही प्रौढे पृथिव्यन्तरिक्षे द्या द्युलोकं सद्म मनुष्याणा गृहं पार्थिवं रज. च जातः उत्पत्तिमात्रेण वि
२० अस्तभायत् विविधं स्तम्भितवान् । यद्यप्येतत् सर्वमीश्वरस्यैव कर्म तथापि तदभेदेन बृहस्पति. स्तूयते । यद्वा– परमेश्वरानुग्रहादयमेव ऐश्वर्यादिकं स्वस्वव्यापारक्षममकरोत् । यस्य यजमानस्य सम्राट् यथोक्तरीत्या साम्राज्यं प्राप्तः बृहस्पतिः देवता स. यजमान. जनुषा जन्ममात्रेणैव बुध्नात् अग्रमभि आपुपोऽनुष्ठीयमानकर्मणो वा मूलादारभ्य समाप्तिपर्यन्तम् आष्ट सर्वं व्याप्तवान् । इंद्दशेन बृहस्पत्यनुग्रहेण युक्तो यजमान. सर्वथा श्रेष्ठं प्राप्नोत्येवेत्यभिप्रायः ॥

२५ ७९. मे४– स्वधा° । ८०. मे.ह– 'तिष्ठतु' नास्ति । ८१. मे४–तिष्ठतीति । ८०–८२. मे– पक्वमिति ( ? ) । ८३. तै१.तं२.मे.ह– 'द्युलोकम्' इत्यस्यानन्तरं 'च' । ८४. तै१.तं२.मे.ह– मध्ये मुख्यम् । ८५. तै१.तं२.मे४– अयम् । ८६ तै१.तं२.मे.ह– 'यद्वा' नास्ति । ८७–८७. मे– यस्याय देवता बृहस्पति° । ८८. मे४–तत्सर्वमेव मयम् । ८९. तै१.तं.२– महानुभावो यत् ।

३८. आ– 'सर्वं' नास्ति । ३९. हो१– प्राप्तवान् ।

बुष्नाद्यो अग्रमभ्यत्योजसा बृहस्पतिमा विवासन्ति देवाः (६)।
भिनद्वलं वि पुरो दर्दरीति कनिक्रदत् सुवरपो जिगाय ॥ १४ ॥

[ युर बीतमाग्निर्गसति पर्यानो दीर्घयाधे सोमस्य ता मदु इन्द्रश्चकार देवा नरं च । ]
आदित्येभ्यो देश वै सुयोर्देगा वे सुग्मर्यणे प्रजापतिस्त्रयंविश्वात्प्रजापतिर्देवेभ्योऽन्नार्थ देयासुरास्तान् रजनो भुवोऽसि यन्नमैतृग्नि नै प्रजापतिर्विरणाय् या यमि दास्रणा स प्रनुनबर्तुदश ]
[ आदित्येभ्यस्त्वर्युरसै दानंकामा एजाय स्नेहेऽग्नि वै स प्रन्नुमत् पट्पंञ्चाशत् ]
[ आदित्येभ्य सुर्वरपो जिगाय ]

बुध्नात्। य । अग्रम्। अभ्यर्तीत्यभि अर्ति। ओजसा। बृहस्पतिम्। एति। विवासन्ति। देवाः (६)। भिनत्। वलम्। वीति। पुरः। दर्दरीति। कनिक्रदत्। सुवः। अपः। जिगाय ॥१४॥
[ मैत्र काठ ]

अस्माकम् आनुजावरत्व निरस्तं समानानामग्र परिणयत्विति। अश्नोतेर्लेडि "बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक्।

तत्रैव याज्या—'बुध्नाद्यो अग्रम्' इति त्रिष्टुप्॥ [v]बुध्नात् आरभ्य यावत् [v]अग्रं [v]यः अयम् [v]ओजसा बलेन [v]अभ्यर्ति आभिमुख्येन प्राप्नोति इदं विश्वमात्मीयेन तेजसा व्याप्नोति। [90]यद्वा—यजमान [90] वा आत्मीयम्। [91]तं तादृशं देवं [v]बृहस्पतिं [v]देवाः [92]अपि [v]आ [v]विवासन्ति[93], परिचरन्ति, ऋत्विजो वा। स च एव देवैः परिचर्यमाणः [v]वलं मेघं [v]भिनत् भिनत्ति वृष्ट्यर्थम्। [v]पुरः असुरनगराणि च [v]वि [v]दर्दरीति अत्यर्थं विदारयति। दृ विदारणे, यङ्लुकि "रुग्रिकौ च लुकि" (पा ७ ४ ९१) इति रुक्, "यङो वा" (पा ७ ३ ९४) इति ईडागम। [v]कनिक्रदत् अत्यर्थं शब्दं कुर्वन् अत्यर्थं क्रन्दन्। दाधर्त्यादौ निपात्यते (पा ७ ४ ६५)। [94]तत [v]सुवः आदित्यम् [95-v]अपः च [95] [v]जिगाय जयति। आदित्यादाकृष्य मध्यमस्थाने उदकं [96]वृष्ट्युन्मुखं प्रवर्तयति पर्जन्यात्मना। छान्दसे लिटि (पा ३ ४ ६) "सन्लिटोर्जेः" (पा ७ ३ ५७) इति जयते कुत्वम्। एवं महानुभावोऽयम् अस्मदीयं यजमानमानुजावरत्वा मुक्त्वा समानानामग्रं परिणयत्विति॥

इति श्रीमद्भास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे तृतीये प्रश्ने चतुर्दशोऽनुवाकः ॥

९०-९० मै४—यजमान एकम्। ९१ मै—'तं' नास्ति। ९२ मै४—'अपि' नास्ति। ९३ त१ तर ल—आविवासन्ति। ९४ मै४ तेन। ९५ मै४—एव। ९६ पर—वृष्ट्युदकम्।

बुध्नादिति ॥ तत्रैव विकल्पितां याज्यामाह–‘बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः। भिनद्वलं वि पुरो दर्दरीति कनिक्रदत् सुवरपो जिगाय’ इति ॥ यः बृहस्पतिर्जगतो [40]देहस्य कर्मणो वा बुध्नात् आरभ्य अग्रम् अभ्यर्ति अवसानम् ओजसा स्वबलेन प्राप्नोति तं बृहस्पतिम् इतरे देवाः आ विवासन्ति आगत्य विशेषेण वासयन्ति परिचरन्तीत्यर्थः। [41]स बृहस्पतिः वलं [42]यजमानसंबन्धिनां [43]समानानां मध्ये प्रबलं पुरुषं भिनत् भिनत्ति प्रातिकूल्यात् निवारयति, पुरः समानानां पुराणि विशेषेण दर्दरीति प्रातिकूल्यनिवारणाय पुनः [44]पुनर्द्दारितवान्। कनिक्रदत् उत्साहेन शब्दं कुर्वन् सुवः [45]स्वर्गसदृशं श्रेष्ठ्यम् अपः तत्साधनं सर्वं जलक्षेत्रादिकं जिगाय जितवान् [46]यजमानार्थं संपादितवानित्यर्थः ॥

अत्र विनियोगसंग्रहः—

“ यज्ञविभ्रष्टयागे तु [47]याज्याः स प्र निकेति [48] च।
इन्द्रमिन्द्रं चैन्द्रयागे त्वं नः सौम्यचरौ तथा ॥ १ ॥
अग्नी कामप्रापकेऽग्नी [49]ब्रह्मवर्चसिनस्त्रयम्।
आ प्या सं ते चरौ सौम्ये गणा [50]ग्रामप्रदे त्रयम् ॥२ ॥
मरु यागे [51]नाशकेऽग्द्यावर्यमाऽऽर्यमणे चरौ ।
[52]बुध्नादैन्द्रे प्रवल्लिस्तो[53] बार्हस्पत्यानुवाक्ये ।
[54]पञ्चविंशतिरप्रोक्ता अनुवाके चतुर्दशे ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयः प्रपाठकः ॥

४०. भ.उ.ह.पा.गृ.हो१–वेदस्य। ४१. आ–‘सः’ नास्ति। ४२.गृ–°संबन्धिनो। ४३. आ.उ.क.जो.ना.पा–‘समानानां’ नास्ति। ४४. क.हा.हो१–पुनर्वारितवान्। ४५. आ–तत्सदृशं। ४६. ह–यजमानार्थं। ४७–४७. क.हा–आद्ये याज्याः स प्रत्नके, ह–याज्या स प्रत्न नीति च; गृ.हो१–याज्या स प्रनिकेति च। ४८. क.हा–°वर्चसगे त्रयम्। ४९. क–ग्रामरते। ५०. ह.हो१–मारुतेन्द्रौ°। ५१–५१. हा–बुध्नादैन्द्रे प्रवल्लिस्त्रयः। ५२. क–°तिमन्त्रोक्ताः।

# ( अथ द्वितीयकाण्डे चतुर्थः प्रपाठकः )

हरिः ॐ ॥

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षांसि रात्रीभिरसुभ्नन् तान्त्सुब्धान् मृतानभि व्यौच्छत्

देवा । मनुष्याः । पितरः । ते । अन्यतः । आसन् । असुराः । रक्षांसि । पिशाचाः । ते । ५
अन्यतः । तेषाम् । देवानाम् । उत । यत् । अल्पम् । लोहितम् । अकुर्वन् । तत् । रक्षांसि ।
रात्रीभिरिति रात्रि भिः । असुभ्नन् । तान् । सुब्धान् । मृतान् । अभि । वीति । औच्छत् ।

देवा मनुष्या इत्यादि ॥ अन्यत एकस्मिन् पक्षे देवादयोऽभवन् । असुरादयोऽप्येकस्मिन् [1]आसन् । “ नपुंसकमनपुंसकेन° ” ( पा १ २ ६९ ) इत्येतत् व्यत्ययेन [2]न प्रवर्तते । अथ तेषां देवानां शरीरेषु [3]असुरादयः यत् अल्पम् अपि लोहितम् अकुर्वन् व्रणमुदपादयन् १० तत् असुरपक्षपातीनि रक्षांसि रात्रिभिः असुभ्नन् रात्रिष्वागम्य [4]धर्षितमकुर्वन्, येन क्षुभ्नन्त ते मृताः स्युः । ततः तान् सुब्धान् निव्रणान् तेनैव हेतुना मृतान् अभि वि औच्छत् रात्रिरुपरताऽभवत्, रात्र्यवसाने मृतानपश्यन्निति यावत्, प्राणक्षुक्षोभस्य रक्षोहेतुत्वात् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥ १५
प्रपाठके द्वितीये च तृतीये चेष्टयः क्रमात् ।
प्रोक्तास्तत्रावशिष्टास्तु वक्ष्यन्तेऽस्मिंश्चतुर्थके ॥ २ ॥

चतुर्थस्य प्रथमानुवाके भ्रातृव्यवतः स्पर्धमानस्य त्रिहविष्कां काश्चिदिष्टिं विधातुं प्रस्तौति– ‘ देवा मनुष्या पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षांसि रात्रीभिरसुभ्नन् तान्त्सुब्धान् मृतानभि व्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षांसि वा २० इमं घ्नन्तीति ते रक्षांस्युपामन्त्रयन्त तान्यब्रुवन् वरं वृणामहै यदसुराञ्जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुराञ्जित्वा रक्षांस्यपानुदन्त तानि रक्षांस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षांस्यासन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षांस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षांस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् २५

१ त१ त२ मै ल– ‘ आसन् ’ नास्ति । २ त१ त२– ‘ न ’ नास्ति । ३ मै४ ल–असुरा ।
४ मै४– कुपित° ।

ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपा-
मन्त्रयन्त तान्यब्रुवन् वरं वृणामहै य( १ )दसुराञ्जयाम तन्नः सहासदिति ततो वै
देवा असुरानजयन् तेऽसुराञ्जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति
समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं

५ ते । देवाः । अविदुः । यः । वै । नः । अयम् । म्रियते । रक्षाꣳसि । वै । इमम् । घ्नन्ति । इति ।
ते । रक्षाꣳसि । उपेति । अमन्त्रयन्त । तानि । अब्रुवन् । वरम् । वृणामहै । यत् (१) । असुरान् ।
जयाम । तत् । नः । सह । असत् । इति । ततः । वै । देवाः । असुरान् । अजयन् । ते ।
असुरान् । जित्वा । रक्षाꣳसि । अपेति । अनुदन्त । तानि । रक्षाꣳसि । अनृतम् । अकर्त । इति ।
समन्तमिति सम्-अन्तम् । देवान् । परीति । अविशन् । ते । देवाः । अग्नौ । अनाथन्त । ते ।
१० अग्नये । प्रवत इति प्र - वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् ।

ते देवा इत्यादि ॥ गतम् । तन्न सहेति । अस्मत्पक्षे युष्माभिर्वर्तितव्यमिति । तत रक्षोभिः सहाये देवा असुरान् अजयन् । जयानन्तरं रक्षांसि अप अनुदन्त ॥

अथ देवैरपनुन्नानि रक्षांसि देवान् समन्तं परि अविशन् । परीय अविशन् । सर्वत्र देवानां शरीरादिष्वनुप्रविश्य अबाधन्त । किं वदन्त इत्याह– अनृतम् असत्यम् १५ अकर्त कृतवन्तो यूयमिति अन्याय्यं व्यापयन्त पर्यविशन् । निरुद्ध्येव स्थितानि इति वा ॥ अथैनं तैरभिभूयमाना देवा अग्नौ अनाथन्त ऐश्वर्यमारोपयन् अग्निं नाथयन्ति स्मेति यावत् । यद्वा– अग्नौ याचितृत्वेनावर्तन्त । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु । त्वया वयं रक्ष्या इति । तत एतां त्रिहविष्कामिष्टिम् अग्नये निरवपन् देवाः । प्रवते । प्रवत्,

पराऽसुरा इति ॥ देवादीनामसुरादीनां च सैन्यद्वयं युद्धाय सन्नद्धमासीत् । असुराणां रक्षसां चाल्पयैवा
२० यान्तरजातिभेदः । तदीये युद्धे स्वल्पप्रहारेण देवानां शरीरे यत् लोहितम् इतरे अनुर्धन तत् लोहितस्थानं रक्षांसि प्रतिघ्नन्ति शस्त्रिण्यागत्य केनचिद्विपान्प्रयोगेण असुभ्नन् क्षुभितं कृतवन्तः । तदानीमेव तेन क्षोभेण देवा म्रियन्ते । तान् म्लानान् अभिरक्ष्य पश्चात् व्यौच्छत् रात्रिः प्रभातं प्राप्तवती । तत देवा रक्षसा हृव्यमिदमित्यवगम्य रक्षांसि उपामन्त्रयन्त उत्कोचं प्रतिश्रुत्य स्वाधीनानि कृतवन्त ।

५–५. मै– 'अविशन् । सर्वत्र' नास्ति, त१ तं२ ल – सर्वत्र। ६. ल– 'देवानामपि विशन'
२५ नास्ति। ७ तं१ तं२ मै ल–वदन्ति। ८–८. तं१ तं२ मै ल – अन्याय्यं व्यापयन्ति॥ ९. मै–'पर्यविशन्।
१०–१० मै– निरुद्धेव स्थिता । ११–११. मै– ॥ एव त्रिहविष्म ।

१ आ– देवाना° । २ आ क– चाल्पैवान्तर°, इ– चाल्पयान्तरभेद , नो गा ग१– चाल्प-
यान्तर° । ३ ग१– 'स्वल्पप्रहारेण' नास्ति। ४–४ हो१– क्षुभितवन्त । ५. ङ ग१– °मिदमित्यवगम्य।

निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ता-द्रक्षाꣳस्या( २ )सन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान

निरिति । अवपन् । अग्नये । विबाधवत इति विबाध वते । अग्नये । प्रतीकवत इति प्रतीक वते । ५
यत् । अग्नये । प्रवत इति प्र वते । निरवपन्निति नि – अवपन् । यानि । एव । पुरस्तात् ।
रक्षाꣳसि ( २ ) । आसन् । तानि । तेन । प्रेति । अनुदन्त । यत् । अग्नये । विबाधवत
इति विबाध वते । यानि । एव । अभितः । रक्षाꣳसि । आसन् । तानि । तेन । वीति ।
अबाधन्त । यत् । अग्नये । प्रतीकवत इति प्रतीक वते । यानि । एव । पश्चात् । रक्षाꣳसि ।
आसन् । तानि । तेन । अपेति । अनुदन्त । ततः । देवाः । अभवन् । परेति । असुराः । यः । १०
भ्रातृव्यवानिति भ्रातृव्य वान् । स्यात् । सः । स्पर्धमान । एतया । इष्ट्या । यजेत । अग्नये ।
प्रवत इति प्र वते । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् ।

“ उपसर्गात् छन्दसि° ” ( पा ५ १ ११८ ) इति वतिः । [12]विश्लेष्य बाधो विबाधः, तद्वान् तत्समर्थः । [13]प्रतीकम्याऽऽवृत्तिः तद्वान् प्रतीकवान्[14] ॥ पुरस्तादिति । पूर्वस्यां दिशि । “ अस्ताति च ” ( पा ५ ३ ४० ) इति पुरादेशः । [15]प्रगतत्वात् तस्याः । प्राणुदन्तेति । प्रथमतः उत्पत्ता १५ वेनानुदन् । अभित इति । दक्षिणत उत्तरतश्च । व्यबाधन्तेति । [16]विश्लेष्याबाधन्त दक्षिणत उत्तरतश्चेति विकृष्याबाधयन्[16] । पश्चादिति । अपरस्यां दिशि “ पश्चात् ” ( पा ५ ३ ३२ ) इति निपात्यते । अपानुदन्तेति । अपरस्यां दिशि [17]अपाकृष्यानाशयन् । ततः [18]इत्यादि । रक्ष-पीडायाः[19] निर्मुक्ता भूतिमन्तः [5]अभवन् असुरानजयन्नित्यर्थः । अत एवाह—पराभूता [6]असुरा इति ॥

ततो रक्षांसि विजयफले भाग सम्प्राप्तं स्वसैन्यान्निर्गत्य देवसैन्ये प्रविष्टानि । [1]ततः [2]देवा असुरान् [3]निरस्य २० [4]रक्षांसि अपनोदितवन्तः । [5]तानि [6]रक्षांसि देवाः [7]अनृतम् अकुर्वन् [8]इति निश्चित्य प्रहर्तुं परितो वेष्टन-मकुर्वन् । तदानीं [9]देवाः [10]अग्नौ स्वकार्यसिद्धिमपश्यन्त । याचित्वा त्रिहविष्कामिष्टिं [11]निरवपन् । तत्र प्रथमस्य हविषः प्रवानग्निर्देवता, याज्यापुरोनुवाक्ययोः “ प्रप्रायमग्निर्भरतस्य ” ( तैस २ ५ १२ ) इत्यादिक्यो 'श्रुत' प्रशब्दो यस्याग्नेरस्ति सोऽयं प्रवान् । द्वितीयस्य हविषो विबाधवानग्निर्देवता, “ वि पाजसा पृथुना ” ( तैस २ ५ १२ ) इत्यस्मिन् मन्त्रे श्रूयमाणो विबाधशब्दो यस्याग्नेरस्ति सोऽयं विबाधवान् । तृतीयस्य १५ हविषः प्रतीकवानग्निर्देवता, “स त्वमग्ने प्रतीकेन” ( तैस २ ५ १२ ) [7]इति मन्त्रे प्रतीकशब्दो यस्याग्नेरस्ति सोऽयं प्रतीकवान् । तत्र प्रवतोऽग्नेरिष्ट्या पूर्वस्यां दिशि [1]रक्षांसि प्रणोदितवन्तः । विबाधवतोऽग्नेरिष्ट्या दक्षिणोत्तरयोः पार्श्वयोः [1]रक्षांसि विबाधितवन्तः । प्रतीकवतोऽग्नेरिष्ट्या प्रतीच्यां दिशि [1]रक्षांसि अपनोदितवन्तः । [1]ततः [2]देवा विजयिनः [3]अभवन् [4]असुराः पराजिता अभवन् ॥

१२ त१.तैर-विशेष्य । १३ मै-प्रतिकूला वृत्ति । १४ ल- 'प्रतीकवान्' नास्ति । १५. ३० त१ तर.मै- प्रहतत्वात् । १६-१६ मै - विश्लेष्यानाशयन्, तै१ तर.पर.ल-विकृष्यानाशयन् । १७ त१ तर.मै ल- अपकृष्य । १८. मै- इति । १९. त१ तर- °पीडया ।

६ ड हो१- 'श्रुत ' नास्ति । ७ हो१- तं सुप्रतीकमित्यनयो ।

एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते (३) ऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनाप नुदते प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं (४) विद्वानेतयेष्ट्या यजते ॥ १ ॥

[ वृणामहै यत्पुरस्ताद्रक्षाꣳसि वपेदग्नये विबाधवत एव चत्वारि च । ] ॥

निरिति । वपेत् । अग्नये । विबाधवत इति विबाध-वते (३) । अग्नये । प्रतीकवत इति प्रतीक-वते । यत् । अग्नये । प्रवत इति प्र-वते । निर्वपतीति, निः-वपति । यः । एव । अस्मात् । श्रेयान् । भ्रातृव्यः । तम् । तेन । प्रेति । नुदते । यत् । अग्नये । विबाधवत इति विबाध-वते । यः । एव । एनेन । सदृङिति स-दृङ् । तम् । तेन । वीति । बाधते । यत् । अग्नये । प्रतीकवत इति प्रतीक-वते । यः । एव । अस्मात् । पापीयान् । तम् । तेन । अपेति । नुदते । प्रेति । श्रेयाꣳसम् । भ्रातृव्यम् । नुदते । अतीति । सदृशम् । क्रामति । न । एनम् । पापीयान् । आप्नोति । यः । एवम् (४) । विद्वान् । एतया । इष्ट्या । यजते ॥ १ ॥

[ मैसं २.१.११, १०.७ काठसं ]

य इत्यादि ॥ गतम् । श्रेयान् प्रशस्यतर । त तावत् प्र नुदते स्वरूपाच्च्यावयति सदृङिति । समानं पश्यतीति सदृङ् । "समानान्ययोश्च" (पा ३.२.६० वा १) इति क्विन् । "दृक्स्ववस्स्वतवसां छन्दसि" (पा ७.१.८३) इति नुम् । वि बाधत इति । विश्लेष्य नाशयति । किं च नैनं कदाचिदपि पीडा प्राप्नोति । साम्यमस्य निवर्तयति स्वयमतिशेत इति यावत् । पापीयान् पापतरः तम् अप नुदते नाशयति यथाऽस्य न कदाचिदनुकरोति । अथ वेदितुः स्तुतिः— श्रेयांसं प्र नुदते, सदृशम् अति क्रामति, न एनं कदाचिदपि पापीयान् भ्रातृव्य आप्नोति । गतमन्यत् ॥ इति द्वितीये चतुर्थे प्रथमोऽनुवाकः ॥

य इति ॥ इष्टिं विधत्ते— 'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् स तेनाप नुदते' इति ॥ त्रिविधो हि भ्रातृव्यः । प्रबलः समानबलो हीनबलश्चेति । तेषां त्रयाणां क्रमेण त्रिभिर्हविर्भिरपाकरणं भवति ॥

प्रेति ॥ वेदनं प्रशंसति— 'प्र श्रेयांसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते' इति ॥ भ्रातृव्यं श्रेयांसं प्र नुदते, सदृशम् अति क्रामति, पापीयान् न प्राप्नोत्येव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥

२०. मै-दृगाप । २१. तै१.तै२ °करोतीति । २२. तै१.तै२.मै.मं– 'पापीयान्' नास्ति । २३. मं– 'आप्नोति' इत्यस्यानन्तरं 'साम्यमस्य' ।

देवासुराः संयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमंहोमुगियं विमृधेयमिन्द्रियावती(१)त्यब्रवीत्

देवासुरा इति देव-असुरा । संयत्ता इति सं-यत्ता । आसन् । ते । देवा । अब्रुवन् । य । ५
न । वीर्यावत्तम इति वीर्यावत्-तम । तम् । अन्विति । समारभामहा इति सम् आरभामहै ।
इति । ते । इन्द्रम् । अब्रुवन् । त्वम् । वै । न । वीर्यावत्तम इति वीर्यावत् तम । असि । त्वाम् ।
अन्विति । समारभामहा इति सम् आरभामहै । इति । स । अब्रवीत् । तिस्र । मे । इमा ।
तनुव । वीर्यावतीरिति वीर्य-वती । ता । प्रीणीत । अथ । असुरान् । अभीति । भविष्यथ ।
इति । ता । वै । ब्रूहि । इति । अब्रुवन् । इयम् । अंहोमुगित्यंहः-मुक् । इयम् । १०
विमृधेति वि मृधा । इयम् । इन्द्रियावतीतीन्द्रिय वती (१) । इति । अब्रवीत् ।

देवासुरा इत्यादि ॥ गतम् । [v]वीर्यावत्तम । "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम् । [']तमन्विति ॥ [v]त प्रधानभूत [']पुरुषमनुसरतो वय सभूय कर्माण्यारभामहे । "हीने" (पा १ ४ ८६) इत्यनो कर्मप्रवचनीयत्वम् । [']स इत्यादि[']। गतम् । एव वीर्यावतीरिति । वीर्यवत्य । पूर्ववदीर्घत्वम्, "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्ण १५ दीर्घत्वम् । ता वा इत्यादि । [v]अब्रुवन् देवा । इयमित्यादि । [v]अब्रवीत् इन्द्र । विमृधेति । "अन्" (पा ५ ४ ७५) इति योगविभागादच् समासान्त ॥

आद्येऽनुवाके काम्येष्टि स्पर्धमानस्य वर्णिता ॥

देवासुरा इति ॥ अथ द्वितीये [१]स्पर्धमानस्यैव विजितिसज्ञाम् [२]इष्टिं विधातु प्रस्तौति- 'देवासुरा सयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्व वै नो २० वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ता प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमंहोमुगियं विमृधेयमिन्द्रियावतीत्यब्रवीत् त इन्द्रायांहोमुचे पुरोडाशमेकादशकपाल निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायांहोमुचे निरवपन्नंहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिंशत्कपाल पुरोडाश निरवपन् त्रयस्त्रिंशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ता वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त' इति ॥ युद्धायोद्युक्ता [']देवा परस्परमिदम् [v]अब्रुवन् [']न अस्माक मध्ये [']य अतिशयेन २५ वीर्यवान् [']तम् अनुसृत्य वय सर्वे [']समारभामहै सम्यग्युद्धोपक्रम कुर्म [']इति । तत [']ते [']इन्द्रम् अतिशयेन

१ त१ त२ मै ल तमनु । २ त१ त२ मै ल- 'पुरुषम्' नास्ति । ३-३ ल- इत्यादि ।

१ आ- स्यैव । २ क ह्य- इष्ट ।

त इन्द्रा॑यांꣳहोमु॒चे॑ पु॑रो॒डाश॒मेका॑दशकपालं॒ निर॑वप॒न्निन्द्रा॑य वैमृ॒धायेन्द्रा॑येन्द्रि॒याव॑ते॒ यदिन्द्रा॑यांꣳहोमु॒चे॑ नि॒रव॑प॒न्नꣳह॑स ए॒व तेना॑मुच्यन्त॒ यदिन्द्रा॑य वैमृ॒धाय॒ मृधं॑ ए॒व तेना॒पाघ्न॑त॒ यदिन्द्रा॑येन्द्रि॒याव॑त इन्द्रि॒यमे॒व तेना॒ऽऽत्मन्न॑दध॒त त्रय॑स्त्रिꣳशत्कपालं पु॒रो॒डाशं॒ निर॑वप॒न् त्रय॑स्त्रिꣳशद्वै दे॒वता॒स्ता इन्द्र॑ आ॒त्मन्न॑नु स॒मार॑म्भयत॒ भूत्यै॑ (२)

५ तां वाव दे॒वा विजि॑तिमुत्त॒माम॑सु॒रैर्व्य॑जयन्त

ते । इन्द्रा॑य । अꣳहोमु॒च इत्य॑ꣳहः-मुचे॑ । पु॒रो॒डाश॑म् । एका॑दशकपाल॒मित्येका॑दश क॒पा॒लम् । निरिति॑ । अ॒व॒प॒न् । इन्द्रा॑य । वै॒मृ॒धाय॑ । इन्द्रा॑य । इ॒न्द्रि॒याव॑त॒ इती॑न्द्रि॒य-व॒ते॒ । यत् । इन्द्रा॑य । अ॒ꣳहो॒मु॒च इत्य॑ꣳहः-मु॒चे॑ । निर॑वप॒न्निति॒ नि – अव॑पन् । अꣳह॑सः । ए॒व । तेन॑ । अ॒मु॒च्य॒न्त॒ । यत् । इन्द्रा॑य । वै॒मृ॒धाय॑ । मृधः॑ । ए॒व । तेन॑ । अपेति॑ । अ॒घ्न॒त॒ । यत् । इन्द्रा॑य । इ॒न्द्रि॒याव॑त

१० इती॑न्द्रि॒य-व॒ते॒ । इ॒न्द्रि॒यम् । ए॒व । तेन॑ । आ॒त्मन् । अ॒द॒ध॒त॒ । त्रय॑स्त्रिꣳशत्कपाल॒मिति॒ त्रय॑स्त्रिꣳशत्-क॒पा॒लम् । पु॒रो॒डाश॑म् । निरिति॑ । अ॒व॒प॒न् । त्रय॑स्त्रिꣳश॒दिति॒ त्रय॑ – त्रि॒ꣳश॒त् । वै । दे॒वताः॑ । ताः । इन्द्रः॑ । आ॒त्मन् । अन्विति॑ । स॒मार॑म्भयते॒ति॑ सम्-आर॑म्भयत । भूत्यै॑ (२) । ताम् । वाव । दे॒वाः । विजि॑ति॒मिति॒ वि-जि॒ति॒म् । उ॒त्त॒मामित्यु॑त्-त॒माम् । असु॑रैः । वीति॑ ॥ अ॒ज॒य॒न्त॒ ।

अथ [4]ते देवा [5]इन्द्राय एता त्रिहविष्कामिष्टिं [6]नि॰ [6]अवपन् । त्रयस्त्रिंशत्कपालमिति ।

१५ त्रयाणामेकादशकपालाना त्रयस्त्रिंशत्कपाला[1] भवन्तीति भावः । [7]पुरोडाशम् इति च [6]जात्यभिधानम् । आत्मन्निति । आत्मनि गुणभूतानकरोत्, तद्देवाना [7]भूत्यै अभवत् । विजितिमिति । व्यावृत्तो जयो विजिति । असुरेभ्यो व्यावृत्ताम् [7]उत्तमाम् [7]विजितिम् इति । [1]वि [7]अजयन्त प्राप्नुवन्, उत्तममसुरविजयमलभन्तेति, यावत्, ' गोपोप पुष्णाति ' इतिवत् [8]सामान्यविशेषविषयत्वम् उभयो [8] । गतमन्यत् ॥

२० पीर्येयन्त विश्विरम तेनोक्तास्तद्दाया. [1]त्रिसः तनूहंविर्भिस्तर्पितवन्त॰ । तैश्च हविर्भि. क्रमेण पापविमोके वैर्यपघातं सामर्थ्यधारणं च कृतवन्त. । [4]त्रिष्वेकादशकपालपुरोडाशेषु मिलित्वा त्रयस्त्रिंशत्कपालः पुरोडाशः सम्पद्यते । तेन च [5]त्रयस्त्रिंशत्सङ्ख्याकान् देवान् [1]इन्द्र आत्माधीनान् करोति । तच्चैश्वर्याय सम्पद्यते । तत. [1]देवा. [1]असुरैः सह [1]युद्ध्वा [1]ता पूर्वोक्ता पापविमोकाद्युक्तथेन्द्रियधारणरूपाम् [1]उत्तमां [1]विजितिं प्राप्नुवन् ॥

२५ ४. मै॰८– इन्द्राद्य । ५. मै॰१,॰– कपालानि । ६. मै॰८– जात्यभिप्रायम् । ७–७. ता॰१,ता॰२, मै–सामान्यविशेषाभिप्रायत्वात्; पै॰– सामान्यविशेषविषयत्वात् ।

३. हो॰१– ॰कपालेषु पुरोडाशेषु । ४. ट– त्रयस्त्रिंशत्कपालसङ्ख्याकान् । ५. आ–पुढाणं ।

यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेका-
दशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान्
भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो
यस्मात् समानेष्वन्यः श्रेयानुत(३)भ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते

प.। भ्रातृव्यवानिति भ्रातृव्य-वान्। स्यात्। स। स्पर्धमान। एतया। इष्ट्या। यजेत। ५
इन्द्राय। अꣳहोमुच इत्यꣳहः-मुचे। पुरोडाशम्। एकादशकपालमित्येकादश कपालम्।
निरिति। वपेत्। इन्द्राय। वैमृधाय। इन्द्राय। इन्द्रियावत इतीन्द्रिय वते। अꣳहसा। वै।
एष। गृहीत। यस्मात्। श्रेयान्। भ्रातृव्य। यत्। इन्द्राय। अꣳहोमुच इत्यꣳह-मुचे।
निर्वपतीति निः-वपति। अꣳहस। एव। तेन। मुच्यते। मृधा। वै। एष।
अभिषण्ण इत्यभि सन्न। यस्मात्। समानेषु। अन्य। श्रेयान्। उत (३)। अभ्रातृव्य। १०
यत्। इन्द्राय। वैमृधाय। मृध। एष। तेन। अपेति। हते।

यस्मादिति ॥ यस्मात् भ्रातृव्य श्रेयान् प्रशस्यतरो भवति, सोऽयम् अꣳहसा गृहीत, तस्मात् अꣳहोमुचे निर्वपेत्। तेन अꣳहस मुक्तो भवति। मृधा वा इत्यादि। समानेषु मध्ये अभ्रातृव्य अपि नाम कश्चित् यस्मात् अन्य श्रेयान् प्रशस्यतरो भवति एष खलु मृधा अभिषण्ण सग्रामाभिभूत इव भवति। तस्मात् इन्द्राय वैमृधाय निर्वपेत्, मृध १५ सग्रामानपहन्ति ॥

य इति ॥ विधत्ते–'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाश मेकादशकपाल निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान् भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात् समानेष्वन्य श्रेयानुत भ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन् धत्ते त्रयस्त्रिꣳ- २० शत्कपाल पुरोडाश निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते मृत्यै' इति ॥ पूर्वोक्तप्रचद्वादिविशेषणवदꣳहोमुगादिविशेषणानि याज्यानुवाक्यागतशब्दाभिप्रायेण वा स्वार्थपरत्वेन वा योजनीयानि। "अꣳहोमुचे प्र भरेमा मनीषाम्" (तैस १ ६ १२) इत्यस्मिन् मन्त्रेऽस्त्यꣳहोमुक्शब्द। "वि न इन्द्र मृधो जहि" (तैस १ ६ १२) इत्यस्मिन् मन्त्रेऽस्ति विमृच्छब्द। "इन्द्रियाणि शतक्रतो" (तैस १ ६ १२) इत्यस्मिन्मन्त्रेऽस्तीन्द्रियशब्द। अर्थपरत्व तु विस्पष्टम्। पूर्वोक्तेषु प्रचदादिष्वपि २५ प्रणोदनवत्त्व शत्रुविबाधवत्त्व प्रत्यङ्मुखवत्त्व चेत्यर्थपरत्व योज्यम्। यस्मात् यजमानात् भ्रातृव्य

६ आ इ– विमृधशब्द। ७ हो१ – प्रनुन्दनवत्वम्। ८ क हा – प्राङ्मुख, इ ग्र– प्रामुख्यवत्त्व हो१– आरम्भवत्वम्।

यदिन्द्रा॑येन्द्रि॒यावे॑त इन्द्रि॒यमे॒व तेना॑ऽऽत्मन् ध॑त्ते त्रय॑स्त्रिꣳशत्कपालं पुरो॒डाशं॒ निर्व॑पति त्रय॑स्त्रिꣳशद्वै दे॒वता॒स्ता ए॒व यज॑मान आ॒त्मन्न॑नु स॒मार॑म्भयते भूत्यै॒ सा वा ए॒षा विजि॑तिर्नामे॒ष्टिर्य ए॒वं वि॒द्वाने॒तये॒ष्ट्या यज॑त उत्त॒मामे॒व विजि॑तिं॒ भ्रातृ॑व्येण॒ वि ज॑यते ॥ २ ॥

५ [ इन्द्रि॒यावे॑ती भूत्यां उ॒तैका॑न्नपञ्चा॒शच्च॑ ]

यत् । इन्द्रा॑य । इ॒न्द्रि॒यावे॑त॒ इती॑न्द्रि॒य-वते॑ । इ॒न्द्रि॒यम् । ए॒व । तेन॑ । आ॒त्मन् । ध॒त्ते॒ । त्रय॑स्त्रिꣳशत्कपाल॒मिति॒ त्रय॑स्त्रिꣳशत्-क॒पा॒ल॒म् । पु॒रो॒डाश॑म् । निरिति॑ । व॒प॒ति॒ । त्रय॑स्त्रिꣳश॒दिति॒ त्रय॑:-त्रि॒ꣳश॒त् । वै । दे॒वता॑: । ताः । ए॒व । यज॑मानः । आ॒त्मन् । अन्विति॑ । स॒मार॑म्भय॒त॒ इति॑ सम्-आर॑म्भयते । भूत्यै॑ । सा । वै । ए॒षा । विजि॑ति॒रिति॒ वि-जि॒ति॒: । १० नाम॑ । इ॒ष्टिः । यः । ए॒वम् । वि॒द्वान् । ए॒तया॑ । इ॒ष्ट्या । यज॑ते । उ॒त्त॒मामित्यु॑त्-त॒माम् । ए॒व । विजि॑ति॒मिति॒ वि-जि॒ति॒म् । भ्रातृ॑व्येण । वीति॑ । ज॒य॒ते॒ ॥ २ ॥

[ मैत्र २·२·५, १० काठ १०·१० ]

विजितिर्नामेति ॥ विजयहेतुत्वात् । गतमन्यत् ॥

इति द्वितीये चतुर्थे द्वितीयोऽनुवाकः ॥

१५ श्रेयान् भवति सः [10]एषः यजमानः पाप्मना गृहीतः भवति । ■ च प्रथमहविषा पापात् मुच्यते । समानेषु मध्ये यस्मात् यजमानात् अन्यः श्रेयान् भवति सोऽन्यो यद्यपि अभ्रातृव्यः तथाऽपि एषः अश्रेयान् यजमानः [10]श्रेयस्त्वमात्रसंपादितवैरित्वेन तेनान्येन अभिपन्नः अभिभूतो भवति, तदीयश्रेयस्त्वम् असहमानः [11]तेनाहमभिभूतोऽस्मीति क्लिश्यति । स तु द्वितीयेन हविषा मृधः तादृशान्शत्रून् अपहते । तृतीयेन हविषेन्द्रियधारणं भवति । पूर्ववत् समुन्नितया त्रयस्त्रिंशत्संख्यया यजमानस्य सर्वा देवताः २० स्वाधीना भवन्ति । तच्च भूत्यै संपद्यते ॥

सेति ॥ इष्टेः [12]नामोपदिश्य तद्वेदनं प्रशंसति–' सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ' इति ॥ विशेषेण जयन्त्यनयेति विजितिः । एतद्वेदिता भ्रातृव्येण सह युद्ध्वा तां पूर्वोक्तां पापमोक्षादिरूपाम् उत्तमां विजितिं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
२५ द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥

९. आ–एष। १०. दो१–श्रेयसि तमत्र संपादितवैरित्वेन। ११. आ,द,ग१– तत्रहमभि॰।
१२-१२. ब–नामाभिधाय; दो१– नाम अभीष्य।

देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽ-
दायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां
व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतराꣳश्चनोपावर्तत

देवासुरा इति देव - असुराः । संयत्ता इति सं - यत्ताः । आसन् । तेषाम् । गायत्री । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र-जाम् । पशून् । संगृह्येति सं - गृह्य । आदायेत्या-दाय । अपक्रम्येत्यप-क्रम्य । अतिष्ठत । ते । अमन्यन्त । यतरान् । वै । इयम् । उपावर्त्स्यतीत्युप-आवर्त्स्यति । ते । इदम् । भविष्यन्ति । इति । ताम् । वीति । अह्वयन्त । विश्वकर्मन्निति विश्व - कर्मन् । इति । देवाः । दाभि । इति । असुराः । सा । न । अन्यतरान् । चन । उपावर्ततेत्युप - आवर्तत ।

देवासुरा इत्यादि ॥ तेषां देवासुराणाम् ओजःप्रभृति संगृह्य आदाय आच्छिद्य अपक्रम्य तेन सह तत्सकाशादपक्रम्य क्वापि अतिष्ठत् गायत्री । ते देवा असुराश्च अमन्यन्त अस्माकं मध्ये यतरान् इयम् उपावर्त्स्यति उपावर्तिष्यते ते इदं विश्वं भविष्यन्ति इति अस्य विश्वस्य स्वामिनस्ते भविष्यन्तीति । यद्वा– इदं विश्वं ते भविष्यन्ति

द्वितीये विजयार्थेष्टिः प्रोक्ता विजितिनामिका ॥

देवासुरा इति ॥ अथ तृतीये भ्रातृव्यवतः स्पर्धमानस्य संवर्गेष्टिं विधित्सुरादौ तदङ्गभूतं मन्त्रं पठितुं प्रस्तौति–' देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायाप-क्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतराꣳश्चनोपावर्तत ते देवा एतमपश्यन् ' इति । ओजः त्वगसृङ्मांसादिधातुष्वष्टमो धातुः । तथा च संप्रदायविद्भिरुक्तम् – "ओजो नामाष्टमो धातुः" इति । बलं शरीरशक्तिः । इन्द्रियं दृष्ट्यादिपाटवम् । वीर्यमुत्साहः । प्रजाः पुत्रादिकाः । पशवो गवादिकाः । देवासुरेषु "युद्धार्थं गतेषु" मदीयानोजःप्रभृतीन् षट्पदार्थान् गायत्री संगृह्य तदुभयेभ्यः अपक्रम्य दूरे स्थितवती । तां दृष्ट्वा ते देवाश्चासुराश्चैवम् अमन्यन्त– उभयोर्वर्गयोर्मध्ये यतरान् यद्वर्गस्थितान् इयं गायत्री प्राप्स्यति तद्वर्गस्थिताः इदं सर्वैश्वर्यं प्राप्स्यन्तीति । तदुभयेऽपि तां गायत्रीं विलक्षणेन शब्देनाऽऽ-हूतवन्तः । हे विश्वकर्मन् इति देवानामाह्वानं, हे दाभि इति असुराणामाह्वानं, विश्वानि कर्माणि यस्याः सा विश्वकर्मा, तत्संबोधनं हे विश्वकर्मन्निति । दभ्नोति विरोधिनो हिनस्तीति दाभी, तत्संबोधनं हे दाभीति । सा गायत्री अन्यतरान् उभयोर्वर्गयोः मध्ये कानपि पुरुषान् न एव प्राप्नोत् । ततः ते देवाः तत्प्राप्त्युपायत्वेन एतत् यजुः अपश्यन् ॥

१–१. तं.तंर.मै.लं– देवासुराः । २. तं१.तंर.लं– 'ते' नास्ति । ३. तं१.तंर– 'इति' नास्ति ।

१. आ.ङ– नामका । २. इ.बो.ना.हा– भ्रातृव्येण । ३. आ.क– °मांसादिधातुभ्यो जातः; इ.ना– °मांसादिधातुभ्य' । ४–४. क– नामाष्टमोमिति, हो१– नामाष्टमो धातुरिति । ५–५. अ.ढ.पा– युद्धं गतेषु; इ– युद्धार्थे संगतेषु । ६. ड.हो१– प्राप्यते । ७. इ– मध्यस्थितान् । ८. हो१– कानिचिदपि । ९–९. ड.श्रृं– 'ते देवाः' नास्ति ।

ते दे॒वा ए॒तद्यजु॑रपश्य॒न्नोजो॑ऽसि॒ सहो॑ऽसि॒ बल॑मसि॒ ( १ ) भ्राजो॑ऽसि दे॒वानां॒ धाम॒ नामा॑सि॒ विश्व॑मसि वि॒श्वायुः॒ सर्व॑मसि स॒र्वायु॑रभि॒भू-

ते । दे॒वाः । ए॒तत् । यजुः॑ । अ॒प॒श्य॒न् । ओजः॑ । अ॒सि॒ । सहः॑ । अ॒सि॒ । बल॑म् । अ॒सि॒ (१)। भ्राजः॑ । अ॒सि॒ । दे॒वाना॑म् । धाम॑ । नाम॑ । अ॒सि॒ । विश्व॑म् । अ॒सि॒ । वि॒श्वायु॒रिति॑ वि॒श्व - आ॒यु॒ः । सर्व॑म् । अ॒सि॒ । स॒र्वायु॒रिति॑ स॒र्व - आ॒यु॒ः । अ॒भि॒भूरित्य॑भि - भूः ।

प्राप्स्यन्तीति । " वृद्भ्य. स्यसनोः " ( पा १·३ ९२ ) इति परस्मैपदम्, न वृद्भ्यश्चतुर्भ्य ( पा ७ २ ५९ ) इतीडभाव । अथ देवासुराः [v]ता [v]त्रि [v]अह्वयन्त विनिधमाह्वयन्निति । " निसमुपविभ्यो ह्व. " ( पा १ ३ ३० ) इत्यात्मनेपदम् । विश्वकर्मन्निति । विश्वानि कर्माण्य स्यामिति विश्वकर्मा । " मन " ( पा ४·१·११ ) इति ङीप्प्रतिषेध , " आमन्त्रितायुदात्तत्वम् " १०(पा ६·१ १९८) । हे [v]विश्वकर्मन् [v]इति [v]देवा गायत्रीमाह्वयन् । [4]हे [v]दाम्भि [v]इति [v]असुरा आह्वयन्[4], सामर्थ्यात् ह्वयत्यर्थमात्र सबध्यते । यद्वा– व्यह्वयन्त विलक्षणमाह्वान वृतवन्त. । [5]वैलक्षण्य चाह्वानपदभेद[5] । दमन दाहः, [6]दभि प्रकृत्यन्तरमस्ति, तस्मात् घञन्तात् मत्वर्थीय अकारः, गौरादिर्द्रष्टव्य ( पा ४·१·४१ ), पूर्ववदामन्त्रितायुदात्तत्वम्, " अम्बार्थनद्योः° " ( पा ७·३·१०७ ) इति ह्रस्वत्वम् । यद्वा–पचाद्यजन्तात् स्वार्थिकोऽण्, तत " टिड्ढाणञ्° " १५ ( पा ४·१·१५ ) इति ङीप् । सेत्यादि । गतम् ॥

ओजोऽसीत्यादि ॥ [7]"[v]ओजः [v]असि तेजोऽसि"[7] [8]यशोऽसि [v]देवानाम् । सर्वत्र तद्धेतुत्वात् ताच्छब्द्यम् । [v]सहः [v]असि अभिभवसाधनमसि शत्रूणाम् । [v]बल प्रसिद्धम् । [v]भ्राजः दीप्ति । [v]धाम स्थानम् । [v]नाम नमनमुपकारकम् । [v]विश्वम् [v]असि अन्यदपि यद्भद्र तदसि । [v]विश्वायु. [9]विश्वमायुर्जीवितमस्मिन्निति विश्वायु. । "बहुव्रीहौ विश्व सज्ञायाम्" ( पा ६·२·१०६ ) २० इति विश्वशब्दस्यान्तोदात्तत्वम् । [v]सर्वम् [v]असि सर्वमपि [10]जगत्कर्तृ त्वमसि[10] । [11][v]सर्वायु

ओज इति ॥ तदिद यजुः पठति– ' ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवाना धाम नामासि विश्वमसि विश्वायु सर्वमसि सर्वायुरभिभू ' इति ॥ अत्र सर्वात्मकत्वेन गायत्री स्तूयते । ओजोबले व्याख्याते । [v]सहः सहिष्णुत्वं धैर्यम् । [v]भ्राज. दीप्ति. । [v]देवाना [v]धाम स्वर्गः । [v]नाम इन्द्रादिकम् । [v]विश्वम् अचेतनं कृत्स्नं जगत् । [v]विश्वायु. कृत्स्नायुस्त्वम् । [v]सर्व चेतनरूपं कृत्स्नं जगत् । सर्वाण्यायूंष्यपि २५ यस्य चेतनस्य जगतस्तत् [v]सर्वायु । वैरिणोऽभिभवतीति [v]अभिभू ॥

४–४. मै४– ' हे दाम्भि .....आह्वयन् ' नास्ति । ५–५. मै४– तत्र वैलक्षण्यं चाह्वानस्याह, हे दाम्भि । ६. मै४– दाम्भि. । ७–७ तै१ तै२,मै ए– तेजोऽसि । ८. तै१,तै२– ' यशोऽसि ' नास्ति । ९. तै१,तै२,मै ए – विश्वायुर्जीवित° । १०–१०. तै१,तै२,मै ए – जगत्सर्वमसि । ११–११. तै१, तै२,मै ए सर्वायुरसि ।

-रिति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत यद्गायत्र्यप-क्रम्यातिष्ठत् तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं (२) प्रजां पशूनवृञ्जत तस्मादेताः संवर्ग इतीष्टिमाहु-

इति । वाव । देवाः । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र-जाम् । ५
पशून् । अवृञ्जत । यत् । गायत्री । अपक्रम्येत्यप-क्रम्य । अतिष्ठत् । तस्मात् । एताम् । गायत्री ।
इति । इष्टिम् । आहुः । संवत्सर इति सं-वत्सरः । वै । गायत्री । संवत्सर इति सं-वत्सरः । वै ।
तत् । अपक्रम्येत्यप-क्रम्य । अतिष्ठत् । यत् । एतया । देवाः । असुराणाम् । ओजः । बलम् ।
इन्द्रियम् । वीर्यम् (२) । प्रजामिति प्र-जाम् । पशून् । अवृञ्जत । तस्मात् । एताम् ।
संवर्ग इति सं-वर्गः । इति । इष्टिम् । आहुः । १०

च असि[१२] । सर्वाणि चायूंषि [१३]सर्वाण्यन्नानि अस्यामिति [१३]सर्वायु सर्वान्नहेतुरसि । [v]अभिभू-
यस्मादेवं तस्मात् त्वं [१४]सर्वस्य उपरि भवसि [१५]सर्वस्य च[१६] अभिभवितासि ॥

इति वावेत्यादि ॥ [v]इति अनेन यजुषा [v]देवा [v]असुराणाम् अपि ओजआदिकम् [v]अवृञ्जत आवर्जयन् आत्मसात्कृतवन्तः न केवलमात्मीयमेव लब्धवन्तः ।

यदित्यादि । गायत्र्यपक्रमणहेतुत्वात् [v]एतां वक्ष्यमाणाम् [v]इष्टिं [v]गायत्री [v]इति [v]आहुः , १५
वेदार्थविदः ॥

संवत्सरो वा इत्यादि ॥ [१७]संवत्सरवत् सर्वार्थहेतुत्वात् तत्साम्यात्[१७] तदानीं [v]संवत्सर एव देवेभ्यः [v]अपक्रम्य [v]अतिष्ठत् । यथा संवत्सरापक्रमेण[१८] ओजआदिकं नश्यति तद्वदिदमिति ।
यदेतयेत्यादि । [१९]संवृज्यते ओजआदिकं सर्वं सहैवानेन [२०]आवृज्यते आच्छिद्यते इति [v]संवर्गः ।
योगः । वृजी वर्जने, घञि "चजोः कु घिण्यतोः" (पा ७ ३ ५२) इति कुत्वम् ॥ २०

इतीति ॥ [१०]यथोक्तं मन्त्रसाध्यं[१०] फलं दर्शयति–'इति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत' इति ॥ अनेनैवोक्तेन स्तुतिरूपेण मन्त्रेण गायत्रीं प्रसाद्य तत्प्रसादात् असुराणामोजआदिषट्कं विनाश्य स्वयं तल्लब्धवन्तः ॥

यदिति ॥ अथोक्तिं विधातुं प्रस्तौति–'यद्गायत्र्यपक्रम्यातिष्ठत् तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां २५

१२. त१ त२ मै ल – अन्नानि । १३–१३. त१ त२ मै मै४ ल–'सर्वायु' नास्ति । १४ त१ त२–सूर्यस्य । १५ ल– सूर्यस्य । १६ त१ त२ मै ल–'च' नास्ति । १७–१७ मै४– संवत्सरस्यार्थहेतुत्वात् तात्साम्यात् । १८ मै४ –°क्रमेण । १९ मै– संवज्यते । २० मै– आवज्यते ।

१०. आ– यथा मन्त्रस्यार्थम्, हो१– यथोक्तमन्त्रस्यार्थम् ।

-र्यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टा-कपालं निर्वपेत् त९ शृतमासन्नमेतेन यजुषाऽभि मृशेदोजं एव बलमिन्द्रियं वीर्यं प्रजां पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ॥ ३ ॥

[ बलमस्येतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं पञ्चचत्वारिं९शच्च ]

५ य । भ्रातृव्यवानिति भ्रातृव्य वान् । स्यात् । स । स्पर्धमान । एतया । इष्ट्या । युजेत । अग्नये । सुवर्गायेति स वर्गाय । पुरोडाशम् । अष्टाकपालमित्यष्टा - कुपालम् । निरिति । वुपेत् । तम् । शृतम् । आसन्नमित्या - सुन्नम् । एतेन । यजुषा । अभीति । मृशेत् । ओज । एव । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र जाम् । पशून् । भ्रातृव्यस्य । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्य । भवति ॥ ३ ॥

१० [ मैत्र २ १ ११, काठ १० ७ ]

यो भ्रातृव्यवानित्यादि गतम् । एतेन यजुषेत्यादि । 'ओजोऽसि' इत्यादिना । अत्रा चार्येण–" सर्वासुरभिभूरस्यभिभूरहम् "अनेन हविषाऽमु भ्रातृव्यमभिभूयासम् " ( द्र बौश्रौ १३ ३५ ) इति शेषो दर्शित ॥

इति द्वितीये चतुर्थे तृतीयोऽनुवाक ॥

१५ पशूनवृञ्जत यस्मादेतास्त सवर्ग इतीष्टिमाहु ' इति ॥ विधास्यमानाया इष्टेर्गायत्री सवर्ग इति नामद्वयम् । यस्मात् 'गायत्री सर्वमादाय 'अपक्रम्य स्थित्वा मन्त्रेण स्तुता सती सर्वमानीतवती 'तस्मात् तेन मन्त्रेण हविरभिमृश्य क्रियमाणेष्टि 'गायत्री इत्युच्यते । सा च 'गायत्री सवत्सररूपा तदीयाक्षरेष्वर्धमासेषु च चतुर्विंशतिसख्याया समानत्वात् । अत 'सवत्सर एव तदानीं गायत्रीरूपेण 'अपक्रम्य 'अतिष्ठद् इति सवत्सरात्मकत्वात् मदाख्येयमिष्टि । यस्मात् 'एतया इष्ट्या 'देवा 'असुराणा सवन्ध्योजआदिषट्क

२० वर्जितवन्त 'तस्मात् सम्यग्वृज्यते विनाश्यतेऽनेनेति सवर्गनामकोऽय याग ।

य इति ॥ इदानीं विधत्ते– 'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये सवर्गाय पुरोडाशमष्टाकपाल निर्वपेत्' इति ॥ "सवर्ग" स९ रयिं जय" ( तैस २ ६ ११ ) इति याज्याया संवर्गशब्दश्रवणात् "वैरिसव न्ध्योजआदिवर्जनहेतुत्वाच्चायमग्नि सवर्ग ॥

तमिति ॥ पूर्वपठितम् 'ओजोऽसि' इत्यादिमन्त्र विनियुङ्क्ते–'त९ शृतमासन्नमेतेन यजुषाऽभि

२५ मृशेदोज एव बलमिन्द्रिय वीर्यं प्रजा पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति ॥ 'त पुरोडाश 'शृतं पक्वम् 'आसन्न यथास्थानमासादितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाक ॥

२१ मै–तो।

१० ¹¹ हो१– धैरिणा सव° ।

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैतां सोऽब्रवीद्बृहस्पतिरनया त्वा प्र तिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं प्रातिष्ठत् ततो वै प्रजापतिं प्रजा उपावर्तन्त

प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जा । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन् । ताः । यत्र । अवसन् । ततः । गर्मुत् । उदिति । अतिष्ठत् । ताः । बृहस्पतिः । च । ५
अन्ववैतामित्यनु-अवैताम् । सः । अब्रवीत् । बृहस्पतिः । अनया । त्वा । प्रेति । तिष्ठानि । अथ । त्वा । प्रजा इति प्र-जा । उपावर्त्स्यन्तीत्युप आवर्त्स्यन्ति । इति । तम् । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा-पतिम् । प्रजा इति ■ जा । उपावर्ततेत्युप-आवर्तन्त ।

प्रजापति प्रजा असृजतेत्यादि ॥ [v]पराचा पराचीनगतय. अपुनरावृत्ता एव [1] [v]आयन् गता [1] [v]ता [v]यत्र [v]अवसन् [v]तत [v]गर्मुत् [v]उत् [v]अतिष्ठत् अकृष्टादेव प्रदेशात् स्वयमेवाजायत । १०
निजातीयेन सहोत्पन्न तृणविशेषो गर्मुत् । ओषधीना [2]दुष्टपरिणाम इत्येके । अथ [v]ता [3]प्रजा [v]बृहस्पति [4]च[4] प्रजापतिश्च [v]अनु [v]अवैता पश्चादनुसृत्य अवगतवन्तौ । अथ [v]स [v]अब्रवीत् [v]बृहस्पति प्रजापतिम् [v]अनया गर्मुता त्वा [v]प्र [v]तिष्ठानि प्रकर्षेण स्थापयामि । [v]अथ प्रकृष्टस्थितिक त्वा [v]प्रजा [v]उपावर्त्स्यन्ति [v]इति । अथ [v]त गार्मुतेन चरुणा [v]प्रातिष्ठत् [5]प्रकृष्ट स्थापितवान् ।

१५

स्पर्धमानस्य विहिता सर्वोऽपिस्तृतीयके ॥

प्रजापतिरिति ॥ अथ चतुर्थे गार्मुत चरु विधातु प्रस्तौति—' प्रजापति प्रजा असृजत ता अस्मात् सृष्टा पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैतां सोऽब्रवीद्बृहस्पतिरनया त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति त प्रातिष्ठत् ततो वै प्रजापति प्रजा उपावर्तन्त ' इति ॥ [v]ता पराङ्मुखत्वेनापगता प्रजा [1] [v]यत्र [v]अवसन्[1] यत्र देशे निवास कृतवत्यस्तत्र देशे भाण्डशालनादि २०
निष्कासपातेन [v]तत देशात् [v]गर्मुत्सञ्ज्ञकम् अकृष्टपच्यम् अरण्यमुद्गरूप धान्यम् [v]उदतिष्ठत् तदानीं [v]बृहस्पति [v]च प्रजापतिश्च [v]ता प्रजा अनुगतवन्तौ ॥ अत्र चकारादनाम्नातोऽपि प्रकृत प्रजापति समुच्चीयते । तदा प्रजापति प्रति [v]बृहस्पति छ्यम् [v]अब्रवीत् । [v]अनया गार्मुतधान्यरूपया त्वा [v]प्रतिष्ठानि धान्यवत्त्वेन प्रतिष्ठित करोमि । ततो धान्यवन्त त्वा तदर्थिन्य [v]प्रजा उपगमिष्यन्तीत्युक्त्वा [v]स प्रजापति प्रति प्रतिष्ठितवान् । [v]तत धान्यवन्त [v]प्रजापतिं धान्यार्थिन्य [v]प्रजा उपगता ॥

२५

१–१ त१ त२ मै ल– यद्गता । २ त१ त२– दुष्ट° । ३ त१ त२ मै ल– ' प्रजा ' नास्ति । ४ त१ त२ मै ल– ' च ' नास्ति । ५ मै४– अपकृष्य ।

१ अ आ उ क ड ञो ना पा श्र हा हो१– ' यत्रावसन् ' नास्ति । २ आ गर्मुसञ्ज्ञकम्, ड हो१– गर्मुन्नामकम् ।

यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् प्रजापति(१)मेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां प्र जनयति प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टाः पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्वैतां सोऽब्रवीत् पूषाऽनया मा प्र तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मा प्र तिष्ठेति सोमोऽब्रवीन्- ५

य । प्रजाकाम इति प्रजा काम । स्यात । तस्मै । एतम् । प्राजापत्यमिति प्राजा - पत्यम् । गार्मुतम् । चरुम् । निरिति । वपेत् । प्रजापतिमिति प्रजा पतिम् (१) । एव । स्वेन । भागधेयेनेति भाग - धेयेन । उपेति । धावति । स । एव । अस्मै । प्रजामिति प्र - जाम् । प्रेति । जनयति । प्रजापतिरिति प्रजा पति । पशून् । असृजत । ते । अस्मात् । सृष्टा । पराञ्च । १० आयन् । ते । यत्र । अवसन् । तत । गर्मुत् । उदिति । अतिष्ठत् । तान् । पूषा । च । अन्वैतामित्यनु - अैताम् । स । अब्रवीत् । पूषा । अनया । मा । प्रेति । तिष्ठ । अथ । त्वा । पशव । उपावर्त्स्यन्तीत्युप आवर्त्स्यन्ति । इति । माम् । प्रेति । तिष्ठ । इति । सोम । अब्रवीत् ।

यत्र धात्वर्थनिवृत्तौ प्रशब्द तत्रैव "समवप्रविभ्य स्थ" (पा १ ३ २२) इति आत्मनेपदम् अकर्मकस्यैव भवति, इह तु सकर्मक एव प्रवृत्ताया स्थितौ वर्तते, तेनात्मनेपदाभाव, यथा– १५ 'प्रधान् प्रस्थास्याम समिधमाधाय' इति । तत्रापि हि प्रवृत्तस्थितिकर्मा तिष्ठति, न तु स्थिति निवृत्तिकर्मा । ततो वा इत्यादि । गतम् ॥

पूषा चेति ॥ पूषा च प्रजापतिश्च, अथ स अब्रवीत् पूषा प्रजापतिम् अनया गर्मुता प्र तिष्ठ ततो मयि प्रवृत्तस्थितिके सति त्वा पशव उपावर्त्स्यन्ति इति । अत्रान्तरे

य इति ॥ विधत्ते– "य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत् प्रजापतिमेव २० स्वेन भागधेयेनोप धावति स एवास्मै प्रजा प्र जनयति" इति ॥

प्रजापतिरिति ॥ अथ पशुकामस्य सोमापौष्ण गार्मुत चरु विधातु प्रस्तौति– 'प्रजापति पशूनसृजत तेऽस्मात् सृष्टा पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्वैता सोऽब्रवीत् पूषाऽनया मा प्र तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मा प्र तिष्ठेति सोमोऽब्रवीदहम् वा

मम् वा (२) अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पुशर्वं उपावर्तन्त यः पुशुकामः स्यात् तस्मा एतं सौमापौष्णं गार्मुतं चुरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोपं धावति तावेवास्मै पुशून् प्र जनयतः

सोमो वै रेतोधाः पूषा पंशूना प्रजनयिता सोम एवास्मै रेतो दधाति

पूषा(३)पुशून् प्र जनयति ॥ ४ ॥

[ वपेत् प्रजापतिं वै दधाति पूषा त्रीणि च। ]

---

मम। वै (२)। अकृष्टपच्यमित्यकृष्ट-पच्यम्। इति। उभौ। वाम्। प्रेति। तिष्ठानि। इति। अब्रवीत्। तौ। प्रेति। अतिष्ठत्। ततः। वै। प्रजापतिमिति प्रजा-पतिम्। पशवः। उपावर्तन्तेत्युप-आवर्तन्त। यः। पुशुकाम इति पुशु-कामः। स्यात्। तस्मै। एतम्। सौमापौष्णमिति सौमा-पौष्णम्। गार्मुतम्। चरुम्। निरिति। वपेत्। सोमापूषणाविति सोमा-पूषणौ। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तौ। एव। अस्मै। पुशून्। प्रेति। जनयतः। सोमः। वै। रेतोधा इति रेतः-धाः। पूषा। पुशूनाम्। प्रजनयितेति प्र-जनयिता। सोमः। एव। अस्मै। रेतः। दधाति। पूषा(३)। पुशून्। प्रेति। जनयति ॥४॥

[ मेल २२४ कास १०११ ]

---

सोम अपि मा प्र तिष्ठ इति प्रजापतिम् अब्रवीत्। मदीय हि अकृष्टपच्यम्, तस्मादनया मा प्रतिष्ठेति। अकृष्टं स्वयमेव पच्यते इति अकृष्टपच्यम्। "अकृष्टे च" (पा ३ १ ११४) इति यप्रत्ययः। अथ उभौ अपि युवां प्र तिष्ठानि इति प्रजापति अब्रवीत् सोमापूषणौ। ततः तौ गार्मुतेन चरुणा प्रातिष्ठत्। ततो वा इत्यादि। गतम् ॥

इति द्वितीये चतुर्थे चतुर्थोऽनुवाकः ॥

---

अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त' इति ॥ पशुनिवासस्थानेऽपि भक्षिततृणशेषगोमयादिपातेन गार्मुत उत्पत्ति। तथा गार्मुता प्रजापतिं पूषणं सोमं च प्रतिष्ठाप्य पशून् प्राप्तवान् ॥

य इति ॥ यथेष्टि विधत्ते– 'य पशुकामः स्यात् तस्मा एतं सोमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनयति' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥

---

६ त१ त२ मे ल– अकृ० । ७ त१ त२– सोमापौष्णौ।

---

३ हा– गार्मुत, ड– गर्मुत। ४ ड– तथा। ५ हा– गार्मुता, ड– गर्मुता।

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः ॥
सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु ॥

अग्ने । गोभिः । नः । एति । गहि । इन्दो इति । पुष्ट्या । जुषस्व । नः । इन्द्रः । धर्ता । गृहेषु । नः ॥
सविता । यः । सहस्रियः । सः । नः । गृहेषु । रारणत् । एति । पूषा । एतु । एति । वसु ॥

५　अथ चित्रायागो वक्ष्यते । [1]तस्यैते उपहोममन्त्राः सप्त । तत्राद्याश्चतस्रो गायत्र्यः । पञ्चमी [2]सतोबृहती । ततो द्वे यजुषी ॥

तत्र प्रथमा– ' अग्ने गोभिः ' इति ॥ हे अग्ने, गोभिः नः अस्मान् आ गहि आगच्छ । शपो लुक् । हे इन्दो, पुष्ट्या पशुपुष्ट्या अस्माकं जुषस्व सेवस्व प्रीणय वा । इन्द्रः च गृहेषु अस्माकं धर्ता धारको भवितुमर्हतीति । " अर्हे कृत्यतृचश्च " ( पा ३ ३
१० १६९ ) इति तृच् ॥

द्वितीया– ' सविता ' इति ॥ यः सविता सहस्रियः सहस्रेण समितः । " सहस्रेण संमितौ घः " ( पा ४ ४ १३५ ) । सः अस्माकं गृहेषु रारणत् रमताम् । रमतेर्लेटि शपः श्लुः ( पा २ ४ ७६ ), तुजादित्वादभ्यासस्य दीर्घत्वम् ( पा ६ १ ७ ), लेटोऽडागमः ( पा ३ ४ ९४ ), वर्णव्यत्ययेन णत्वम् । पूषा चास्मद्गृहेषु आ एतु आगच्छतु । वसु
१५ पशुलक्षणं धनं च अस्मद्गृहेषु आगच्छतु ॥

प्रजापश्वर्थिनोरुक्तश्चतुर्थे गार्मुतश्चरुः ॥
अथ व्यवहितेन पठेन चित्रायागं विधित्सुरादौ पञ्चमेनानुवाकेनोपहोममन्त्रान् पठति ॥
अग्न इति ॥ कल्पः – " चित्रापौर्णमासे चित्रामिष्टिं निर्वपेदाग्नेयादीनि सप्त । अग्ने गोभिर्न आ गहि [1]इत्युपहोमाः " ( आपश्रौ १९ २५ १४ १५ ) इति ॥ तत्र प्रथममन्त्रपाठस्तु– ' अग्ने गोभिर्न आ
२० गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः ' इति ॥ हे अग्ने, गोभिः सह नः अस्मान् प्रति आ गहि आगच्छ । हे इन्दो, पशुपुष्ट्या नः अस्मान् जुषस्व प्रीणय । इन्द्रः नः अस्माकं गृहेषु [2]धर्ता पशूनां धारयिता भवतु ॥

सवितेति ॥ द्वितीयमन्त्रपाठस्तु– ' सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु ' इति । पशूनां सहस्रं यस्यास्त्यसौ सहस्रियः । तादृशः यः सविता नः अस्माकं गृहेषु रारणत्
२५ भृशं [3]रमताम् । पशुपोषकश्च देवः आगच्छतु । वसु धनमपि आगच्छतु ॥

[1] तरै तर मै ई– सप्तामेते । [2] तैर तर मै– बृहती । [3] मै४–पशुभिः ।

[1] आ हा– इत्यनेनानुवाकेनोपहोमाः । [2] ह– ' गृहेषु ' नास्ति । [3] ह– रमतात् ।

धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥
त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च ॥

धाता । ददातु । नः । रयिम् । ईशानः । जगतः । पतिः । सः । नः । पूर्णेन । वावनत् ॥
त्वष्टा । यः । वृषभः । वृषा । सः । नः । गृहेषु । रारणत् । सहस्रेण । अयुतेन । च ॥

तृतीया– ‘धाता’ इति ॥ धाता सर्वस्य विधाता देवोऽस्मभ्य रयिं धन पशुलक्षण । ५
ददातु ईशान दातु समर्थ जगत पति पालयिता । “षष्ठ्या पतिपुत्र°” ( पा ८ ३ ५३ ) इति सत्वम् । किं च– स देवोऽस्मान् पूर्णेन अस्मदभिमत आप्यायितेन धनेन वावनत् सभजताम् अस्मान् परिगृह्णातु । वन षण सभक्तौ, लेटि शप श्लु, अडादि पूर्ववत् ॥

अथ चतुर्थी– ‘त्वष्टा’ इति ॥ य त्वष्टा वृषभ वर्षिता कामाना वृषा प्रधानभूत सेक्ता वा, स अस्माक गृहेषु रारणत् रमताम । व्याख्यातम् । सहस्रेण पशूना दशभि १०
शते रमताम् । अयुतेन दशभि सहस्र च रमताम् ॥

धातेति ॥ तृतीयमन्त्रपाठस्तु– ‘धाता ददातु नो रयिमीशानो जगतस्पति । स न पूर्णेन वावनत्’ इति ॥ सर्वस्य विधाता जगत पालक ईश्वर न अस्मभ्य रयिं धन ददातु । स ईश्वर न अस्मान् पूर्णेन धनेन वावनत् भृश भजतु रक्षतु ॥

त्वष्टेति ॥ चतुर्थमन्त्रपाठस्तु–‘त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च’ १५
इति ॥ य त्वष्टा वृषभ श्रेष्ठ वृषा कामाना वर्षिता स अस्माक गृहेषु पशूना सहस्रेण अयुतेन च सह रारणत् भृश रमताम् ॥

४ तं१ त२ मै ल–सर्वाभिमते । ५ त१ त२ मै ल–पशूना । ६ मै४– अयतेन’ इत्यस्यानन्तर ‘च’ ।

४ मू–सभजतु । ५ मू हो१– ‘रक्षतु’ नास्ति । ६ ङ हो१– वर्धयतु ।

येनं देवा अमृतं (१) दीर्घ॰ श्रवों दिव्यैरयन्त।
रायस्पोष त्वमस्मभ्यं गवां कुल्मि जीवस आ युवस्व॥
अग्निर्गृहपतिः सोमों विश्ववनिः सविता सुमेधाः स्वाहा॥

येनं। देवा। अमृतम् (१)। दीर्घम्। श्रवं। दिवि। ऐरयन्त॥
५ रायं। पोष। त्वम्। अस्मभ्यमित्यस्म भ्यम्। गवाम्। कुल्मिम्। जीवसे। एति। युवस्व॥
अग्नि। गृहपतिरिति गृह पति। सोमं। विश्ववनिरिति विश्व वनि।
सविता। सुमेधा इति सु मेधा। स्वाहा॥

अथ पञ्चमी– 'येन' इति॥ हे [v]रायस्पोष धनपुष्ट, [v]येन त्वया [v]देवा [v]अमृतम् अमृतत्व [v]दीर्घम् अविच्छिन्न [v]श्रव अन्न च [v]दिवि [v]ऐरयन्त द्युलोके प्राप्नुवन्। स [v]त्वम्
१० [v]अस्मभ्य [v]गवां [v]कुल्मि सघात सतान वा [v]आ [v]युवस्व अस्माभिर्मिश्रय, देहीति यावत्। यौतेर्व्यत्ययेनात्मनेपदम्, विकरणव्यत्ययेन श। [v]जीवसे अस्मान् जीवयितुम्। तुमर्थे असेप्रत्यय (पा ३ ४ ९)॥

अथ षष्ठो मन्त्र – 'अग्नि' इति। गृहाणा पति पाता [v]अग्नि [v]सोम सर्वस्य धनस्य सभक्ता संविभक्ता। "छन्दसि वनसन॰" (पा ३ २ २७) इती प्रत्यय। [v]सविता [v]सुमेधा
१५ शोभनमति सदा भानुमहद्बुद्धि। तस्मादेतेभ्यो[7] महानुभावेभ्य इद स्वाहुतमस्त्विति॥

येनेति॥ पञ्चममन्त्रपाठस्तु– 'येन देवा अमृत दीर्घं श्रवो दिव्यैरयन्त। रायस्पोष त्वमस्मभ्य गवा कुल्मि जीवस आ युवस्व' इति॥ हे 'रायस्पोष धनपोषक, 'येन त्वया 'देवा 'अमृतं पीयूषं 'दीर्घं 'नपुंसं 'श्रव [8]कीर्तिर्हिमुत्तमम 'दिवि 'ऐरयन्त 'स्थापितवन्त, तादृश 'त्वम् अस्मदर्थं 'गवां 'कुल्मि गर्भं 'जीवसे [9]जीवनार्थम् 'आ 'युवस्व आनीय मिश्रय॥
२० अग्निरिति॥ षष्ठमन्त्रपाठस्तु– 'अग्निर्गृहपति सोमो विश्ववनि सविता सुमेधा स्वाहा' इति॥ 'अग्नि अस्मद्गृहस्याधिपति। 'सोम विश्व धनं भजत इति 'विश्ववनि। 'सविता शोभना मेधा यस्येति 'सुमेधा। एतेभ्य इद [10]'स्वाहा हुतमस्तु'[10]॥

७ मै॰ द॰– °देभ्या।

७ भा गृ॰ [illegible]। ८ ट–कीर्तिर्हि [illegible]। ९ इ– 'स्थापितवन्त' इत्यस्मात्परं 'तादृग्भ
२५ इ॰ [illegible]'। १०–१० इ॰–स्वाहुतम् अस्तु।

अग्ने॑ गृहपते॒ यस्ते॒ घृत्यो॑ भा॒गस्तेन॒ सह॒ ओज॑ आ॒क्रम॑माणाय धेहि॒ श्रैष्ठ्या॑त्
प॒थो मा योषं॑ मूर्धा भूयास॒ꣳ स्वाहा॑ ॥ ५ ॥
[ अ॒मृत॑मष्टात्रिꣳशच्च ॥ ]

अग्ने॑ । गृ॒हपत॒ इति॑ गृह-प॒ते॒ । य । ते॒ । घृत्य॑ । भा॒ग । तेन॑ । सह॑ । ओज॑ ।
आ॒क्रम॑माणा॒येत्या॑-क्रम॑माणाय । धे॒हि॒ । श्रैष्ठ्या॑त् । प॒थ । मा । योष॑म् ।
मू॒र्धा । भू॒या॒स॒म् । स्वाहा॑ ॥ ५ ॥ 5
[ मैम कास ]

अथ सप्तम – 'अग्ने' इति । हे अग्ने गृहपते गृहाणा पालयित । "नामन्त्रित समानाधिकरणे" (पा ८ १ ७३) इति पूर्वपदस्य अविद्यमानवत्त्वाभावात् इद निहन्यते । य ते घृत्य घृतार्ह, छान्दसो यत् (पा ५ १ ६७) । भाग एकदेशोऽह्नभेद तेन कर्मणा 10 आक्रममाणाय शत्रूनभिभवते [11]अन्यमभूताय मह्य सह बलम् ओज तेजश्च धेहि देहि । यद्वा– य ते भाग हविर्भाग घृत्य घृते भव घृतप्रकृतिर्वा, तेनानेन हेतुना शत्रून् आक्रममाणाय मह्य सह ओजश्च देहि । श्रैष्ठ्यात् पथ मार्गात् मा योषम् अपहृतो मा भूयम् । यौतेर्लिङि वृद्ध्यभावश्छान्दस, इडभावश्च । अपि च मूर्धा प्रधानभूत भूयासम् । स्वाहुत चेद घृत तुभ्यमस्तु ॥ 15

इति द्वितीये चतुर्थे पञ्चमोऽनुवाक ॥

अग्न इति ॥ सप्तममन्त्रपाठस्तु– 'अग्न गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात् पथो मा योष मूर्धा भूयासꣳ स्वाहा' इति ॥ हे गृहपते अग्ने, घृतमर्हतीति घृत्य य ते भाग तेन सह ओज अष्टमधातुरूप शरीरसारम् आक्रममाणाय [11]कर्म अनुतिष्ठते यजमानाय धेहि स्थापय । यजमानोऽह श्रैष्ठात् पथ श्रेष्ठना [12]यागकर्तृणा सम्बन्धिनोऽस्मादनुष्ठानमार्गात् मा योष 20 वियुक्तो मा भूव मूर्धा यजमानाना मध्ये शिरोधरुत्तम भूयास, तुभ्यमिद स्वाहा हुतमस्तु ॥

अत्र विनियोगसग्रह —

अग्ने गोभिस्तूपहोमाश्चिन्नायाने हि सप्त ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाक ॥ 25

८ त१ मै ल– पात । ९ मै८ ल– पूर्वस्य । १० त१ त२ मै ल – विद्यमानत्वाभावात् ।
११ मै४– अन्यकृताय सत्यम् (?) ।

११ आ श्रु– कर्म' नास्ति । १२ आ– मार्गकर्तृणाम् ।

चि॒त्रया॑ यजेत प॒शुका॑म इ॒यं वै चि॒त्रा यद्वा अ॒स्यां विश्वं॑ भू॒तमधि॑ प्र॒जाय॑ते तेने॒यं चि॒त्रा य ए॒वं वि॒द्वाञ्चि॒त्रया॑ प॒शुका॑मो यज॑ते॒ प्र प्र॒जया॑ प॒शुभि॑र्मिथु॒नैर्जाय॑ते॒ प्रैवा-ऽऽग्ने॒येन॑ वापयति॒ रेतः॑ सौ॒म्येन॑ दधाति॒ रेत॑ ए॒व हि॒तं त्वष्टा॑ रू॒पाणि॒ वि क॑रोति

चि॒त्रया॑ । य॒जे॒त॒ । प॒शुका॑म॒ इति॑ प॒शु-का॒म॒ । इ॒यम् । वै । चि॒त्रा । यत् । वै । अ॒स्याम् । विश्व॑म् । ५ भू॒तम् । अधीति॑ । प्र॒जाय॑त॒ इति॑ प्र जाय॑ते । तेन॑ । इ॒यम् । चि॒त्रा । यः । ए॒वम् । वि॒द्वान् । चि॒त्रया॑ । प॒शुका॑म॒ इति॑ प॒शु का॒म॒ । यज॑ते । प्रेति॑ । प्र॒जयेति॑ प्र जया॑ । प॒शुभि॒रिति॑ प॒शु भिः॑ । मि॒थु॒नैः । जा॒य॒ते॒ । प्रेति॑ । ए॒व । आ॒ग्ने॒येन॑ । वा॒प॒य॒ति॒ । रेतः॑ । सौ॒म्येन॑ । द॒धा॒ति॒ । रेतः॑ । ए॒व । हि॒तम् । त्वष्टा॑ । रू॒पाणि॑ । वीति॑ । क॒रो॒ति॒ ।

चित्रया यजेतेत्यादि॥ चित्रापूर्णमासे चित्राम् [१]इष्टिं निर्वपेत्। इयं वा इति। [२]विश्व [V]भूत जनाधिकरणतया [३]चायनीय ग्रादिष्टिपृथिव्योरभेदोपचार । य एवमित्यादि । गतम्॥ १०

आग्नेयोऽष्टाकपाल, सौम्यश्चरु, त्वाष्ट्रोऽष्टाकपाल, सरस्वत्यै चरु, सरस्वते चरु, सिनीवाल्यै चरु, ऐन्द्र एकादशकपाल, [V]सप्त [V]एतानि [V]हवींषि [V]भवन्ति। प्रैवेति। [V]आग्नेयेन [V]प्र [V]वापयति प्रजनने [V]रेत सिञ्चति सेचयति पुम्सि स्त्रीषु, ततसिक्त [V]सौम्येन [V]दधाति धारयति। तत्र [४][V]हित धारित[४], [V]त्वष्टा [V]रूपाणि [V]वि [V]करोति विविधेन रूपेण परिणत

१५ चित्रायागस्योपहोममन्त्रा पञ्चम ईरिता ॥

चित्रयेति ॥ अथ षष्ठे त याग विधत्ते-'चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाञ्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते' इति॥ चित्रेति यागस्य नामधेयम्। सा च [V]चित्रा भूमिस्वरूपा। [V]यत् यस्मात् कारणात् [V]अस्यां भूमौ सर्वं [V]भूत प्राणिजातमाधिक्येनोत्पद्यते [V]तेन चित्रप्राण्युत्पादनेन [V]इयं भूमि [V]चित्रा। तद्वद्विचित्रप्रजापशुहेतुत्वात् २० यागोऽपि चित्रेत्युच्यते ॥

प्रेति ॥ चित्राया स्वरूपभूतान् सप्त यागविशेषान् विधातु तद्विधिं क्रमेणोपपत्ति-'प्रैवाऽऽग्नेयेन वापयति रेत सौम्येन दधाति रेत एव हित त्वष्टा रूपाणि वि करोति सारस्वतौ भवत एतद्वै दैव्य मिथुन दैव्यमेवास्मै मिथुन मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टि खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनम्' इति॥ अत्र [V]आग्नेयेन हविषा [V]प्र २५ [V]वापयति प्रकर्षेण पशूत्पत्तिबीज प्रक्षिपति। [V]सौम्येन हविषा व्रीह्यादिबीजेषु गोमयमिव प्रजादिबीजेषु पोषक [V]रेत धारयति। तृतीयहविर्देवता [V]त्वष्टा च [V]हित [V]रेत नानाविधरूपाकारेण [V]वि [V]करोति।

१ तै१ तै२ मै ल- 'इष्टिं' नास्ति। २. मै ल भूत°। ३. तै१ तै२ मै ल- चयनीय°। ४ मै१- निहितं धारयति।

४-४ क ट जो मा१,२ डा हो१- स्वर्णनिहितं।

सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै (१) मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त

सारस्वतौ। भवत । एतत्। वै। दैव्यम्। मिथुनम्। दैव्यम्। एव। अस्मै (१)। मिथुनम्। मध्यत । दधाति। पुष्ट्यै। प्रजननायेति प्र जननाय। सिनीवाल्यै। चरु । भवति। वाक्। वै। सिनीवाली। पुष्टि । खलु। वै। वाक्। पुष्टिम्। एव। वाचम्। उपेति। एति। ऐन्द्र। उत्तम इत्युत् तम । भवति। तेन। एव। तत्। मिथुनम्। सप्त। एतानि। हवीꣳषि। भवति। सप्त। ग्राम्या । पशव । सप्त। आरण्या ।

करोति त्वाष्ट्रेण। सारस्वताभ्या [१]दैव्य [१]मिथुन, सरस्वसरस्वतीसबन्धिभ्या [१]दैव्य [१]मिथुन गर्भस्थस्य जन्तो पुष्ट्यर्थं काले प्रजननार्थं च [१]मध्यत अन्त [१]दधाति [१]स्थापयति। ततो वाक्प्रवृत्ति- हेतुभूताया सिनीवाल्या चरुणा वाचश्च पुष्टिविशेषत्वात् [१]पुष्टि [१]वाच च प्राप्नोति गर्भस्थो जीव । उत्तमस्यैन्द्रस्य भावात् सिनीवाल्या हि तदपर मिथुनम् अन्ते भवति। ततस्तदपि [१]पुष्ट्य [१]प्रजननाय च सपद्यते इति भाव । सप्तेति। [१]गोऽश्वाजाविपुरुषगर्दभोष्ट्रा [१] [१]सप्त [१]ग्राम्या [१]पशव । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेया [१]सप्त [१]आरण्या गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुब्जगत्य [१]सप्त [१]छन्दासि प्रधानानि (द्र बौश्रौ २४ ५)। उभयस्येति। पशूना छन्दसा च।

[१]अत [१]सरस्वतीदेवताक सरस्वद्देवताकश्चत्युभौ [१]सारस्वतौ [१]भवत । [१]एतत् च द्वय स्त्रीपुरुषरूपत्वात् देवतासबन्धि [१]मिथुन, तस्य हविषा मध्येऽनुष्ठानेन यजमानार्थं [१]दैव्य [१]मिथुन गृहमध्ये सपादितवान् भवति। तच्चोत्पन्नाना प्रजाना पशूना च [१]पुष्ट्यै सपद्यते, [१]अनुत्पन्नाना च [१]प्रजननाय [१] उत्पत्तये सपद्यते। तत्र [१]सिनीवाल्यै [१]चरु कर्तव्य । सिनीवाल्या वाक्त्वमर्थवादान्तरे द्रष्टव्यम् (द्रष्ट ३ ५ १ ३)। वाच पुष्टिहेतुत्व [१]सभामध्ये पण्डितोऽयमिति लोकेऽयते। तस्मादनेन चरुणा पुष्टिहेतु [१]वाच प्राप्नोति। [१]ऐन्द्र यागश्चरम कर्तव्य । [१]तेन [१]एव इन्द्रस्य पुरुषत्वेन सिनीवाल्या स्त्रीत्वेन च [१]तत् उभय मिलित्वा [१]मिथुन भवति। अत्र द्रव्यविशेषा शाखान्तरे द्रष्टव्या ॥

सप्तेति ॥ पाठप्राप्ता हवि सख्या प्रशसति–'सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्या पशव सप्ताऽऽरण्या सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै' इति ॥ [१]गोपुरुषाश्वाजाविगर्दभोष्ट्रा [१]ग्राम्या ।

५ मै–[०]सरस्वतीतिसबन्धाभ्याम्, त१ त२,ल–सरस्वत्यैति (?) सबन्धाभ्याम्। ६ त१ त२–'स्थापयति' नास्ति। ७ त१ त२,मै ल– गोजाविकपुरुषगर्दभाश्वोष्ट्रा ।

■ इ क ञ जो ना ग हा हो१– तत । ३ अ उ जो ना पा हा– स्त्रीसरस्वती[०]। ४–४ आ– प्रजाना पशूना च प्रजननाय इ हो– अनुत्पन्नाना च जननाय। ५ ग– सभा मध्ये। ६ इ क जो ना हा हो– गोमहिष्याश्वा[०]।

ग्राम्याः पुशर्वः सुप्ताऽऽरण्याः सुप्त छन्दाꣳस्युभयस्यावरुद्ध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवा(२)स्मिन् पुष्टिं दधति पुष्यति प्रजया पुशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै ॥ ६ ॥

[ अस्मै त एव द्वादश च । ]

५ सुप्त । छन्दाꣳसि । उभयस्य । अवरुद्ध्या इत्यव रुद्ध्यै । अर्थ । एताः । आहुतीरित्या हुताः । जुहोति । एते । वै । देवाः । पुष्टिपतय इति पुष्टि पतयः । ते । एव । (२) अस्मिन् । पुष्टिम् । दधति । पुष्यति । प्रजयेति प्र जया । पुशुभिरिति पुशु भिः । अथो इति । यत् । एताः । आहुतीरित्या हुताः । जुहोति । प्रतिष्ठित्या इति प्रति स्थित्यै ॥ ६ ॥

[ मंस काम ]

१० अथैता इति॥ प्रधानयागादनन्तर पुरस्तात् स्विष्टकृत । "अग्ने गोभिर्न आ गहि" ( तैस २ ४ ५ ) इत्याद्या सप्त [v]आहुती [v]जुहोति। '[v]एते [v]वै [v]देवा अग्न्यादय । [v]अथो अपि च [v]एता आहुतय [v]प्रतिष्ठित्यै च भवन्ति एतेषा देवाना प्रतिष्ठाया अपि हेतुत्वात्।

इति द्वितीये चतुर्थे षष्ठोऽनुवाक ॥

द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनाद्या ' 'सप्त 'आरण्या । गाय त्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टु
१५ जगत्य 'छन्दांसि ( द्र बौश्रौ २४५ )। 'उभयस्य पशुसघस्य छन्द सघस्य च ॥

अथेति ॥ "अग्ने गोभिर्न आ गहि" (तैस २ ४ ५) इत्यादिभिर्मन्त्रैरुपहोमान् विधत्ते–' अथैता आहुतीर्जुहोत्येत वै देवा पुष्टिपतयस्त एवास्मिन पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुती र्जुहोति प्रतिष्ठित्यै ' इति ॥ 'एते 'वै मन्त्रोक्ता अग्नीन्द्रादय ॥

अत्र मीमासा ॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

२० "यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ।
चित्रस्त्रीत्वगुणो स्यादेदग्नीषोमीयके पशौ ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरव तत ।
स्यान्नाम पृषदाज्यवद्बहिष्पवमानपु तत्तथा" ॥ ( जैन्या १ ४ ६ ७ ) ॥

' चित्रया यजेत पशुकाम " ( तैस २ ४ ६ ) इत्याम्नायते। तत्र ' चित्राशब्दो नोद्भिच्छब्दवत्
२५ यौगिक-", किं तु रूढ्या चित्रस्त्रीत्वमभिधत्ते । ततो न पूर्वन्यायेन नामत्वम्। तथा सति " अग्नीषोमीयं पशुमालभेत " (तैस ६ १ ११) इति विहित पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रस्त्रीत्व गुणो विधीयत इति प्राप्ते ब्रूम — चित्रत्व स्त्रीत्व चेति द्वावेतौ गुणौ, 'तयोर्द्वयोर्विधाने वाक्य भिद्येत । तथा चोक्तम्– " प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण । [१०]अप्राप्ते तु [१०]विधीयन्ते बहवोऽप्येकयत्नत " ( तन्त्रवार्तिक २ २ ६ ) इति। अथ वाक्यभेदपरिहाराय "गुणद्वयविशिष्टपशुद्रव्यरूप [११]कर्म विधीयेत तदा
३० गौरव स्यात्। तस्मादुद्भिन्नयायेन पूर्ववद्यागसामानाधिकरण्येन यागनामधेय भवति। चित्रत्व च तत्र

८-८ दीर हिं मैग– ता या इति। अग्न्यादय । अथो इति ।

७ द हो१–नामधेया । ८-८ द हो१– चित्राशब्दो नोद्भिच्छब्द" । ९ द– तयोर्विधा । १०-१० द– अप्राप्ते तु। ११ द हो१– °पशुयागकर्म । १०, हा– कर्मान्तरं ।

विलक्षणद्रव्यद्वारेणोपपद्यते। "दधि मधु घृतमापो धाना तण्डुलास्तत्संसृष्टं प्राजापत्यम्" (द्र तैसं २ ३ २, तैसं २ ३ ६) इति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि पठ्याम्नातानि। तदेवं चित्रानामकस्य यागस्योत्पत्ति वाक्य, यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकाम' इत्यत्र[13] फलमात्रस्य। [14]एव सति प्रकृतार्थो लभ्येत। [15]अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। [16]लिङ्प्रत्ययस्य चानुवादत्वाङ्गीकारात् मुख्यविध्यर्थो बाध्येत[17]। 'तस्माच्चित्रापदं नामधेयम्[18]'। यथा चित्राशब्दे नामधेयत्वं तथा बहिष्पवमानशब्दे [18]आज्यशब्दे पृष्ठशब्दे च तत्तत्कर्मनामधेयत्व योजनीयम्॥

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्य स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वत ॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पकम्।
[19]पुत्रप्रवृत्त्यादिनाप्येते प्रतिबन्धे भवेत् फलम्" ॥ (जैन्या ४ ३ १६ १७)॥ १०

काम्यकर्मण्येव श्रूयते–"चित्रया यजेत पशुकाम" (तैसं २ ४ ६), "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम" (तैसं २ २ १) इति। तत्र यथा स्वर्गफलस्याऽऽमुष्मिकत्वं नियतम्, एवं पश्वादिफलस्यापि। यदि स्वर्गहेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादक, तर्हि चित्रादिरपि तथाऽस्त्विति चेत्। नैवम्। वैषम्यात्। १५
अस्मिन् देहे स्वर्गस्य भोक्तुमशक्यत्वादश्रुताऽप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। चित्रया त्वन्यदेहोऽपश्य उत्पाद्यत इति नियमो न श्रुतो [20]नापि किंचित् तस्य कल्पकमस्ति, [21]अनेनापि देहेन पश्वादिफलस्य भोक्तु शक्यत्वात्। अस्मिन् देहे प्रतिग्रहादिदृष्टोपायमन्तरेण [22]पश्वाद्यलाभाद्वैव चित्रादिफलमामुष्मिकमेवेति चेत्। न। प्रतिग्रहादे प्रतिबन्धनिवृत्तावुपयुक्तत्वात्। तस्मादसति [23]प्रतिबन्धे फलमैहिकं, सति त्वामुष्मिकम्॥ २०

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मेण क्रम ।
नास्त्यस्ति वाऽत्र नास्त्येष नियामकववर्जनात्॥
याज्यानुवाक्यापाठेन स्त्रीप्राथम्य हि मुख्ययो ।
मुख्यार्थत्वेन धर्माणा स्यान्मुख्यक्रमत क्रम "॥ (जैन्या ५ १ १४ १५)॥ २५

चित्रायागे सप्तानां हविषा मध्ये चतुर्थपञ्चमे द्रव्यमाम्नायेते–"सारस्वतौ भवत एतद्वै दैव्य मिथुनम्" इति॥ सरस्वती च सरस्वाश्चेति विगृह्य समासे कृते "पुमान् स्त्रिया" (पा १ २ ६७) इति सूत्रेणैकशेषात् [24]सरस्वन्ताविति भवति। [25]तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ। एतच्च मिथुनमिति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्मा [26]चोदकेन प्राप्ता। तत्र स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वाप [26]कार्य। कुत? श्रुत्यर्थपाठप्रवृत्तिस्थानानामन्यतमस्य नियामकस्या ३०
भावादिति प्राप्ते ब्रूम – ब्राह्मणकाण्डे स्त्रीदेवताया पूर्वं याज्यानुवाक्ये आम्नाते। "प्र णो देवी सरस्वती", "आ नो दिव" (तैसं १ १ ११) इति। पश्चात्पुंदेवताया "पीपिवांसं सरस्वत", "ये ते सरस्व ऊर्मय" (तैसं १ १ ११) इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते। ततो धर्माणा मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे सिद्धे सति स्त्रीयागस्यैव प्रथमं निर्वाप कार्य ॥ ३५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाक ॥

---

१३ अ उ ड पा गृ हा१– पशुकामस्य। १४ अ उ ड पा गृ– एव च। १५ अ उ ञो ना पा हा– अग्नीषोमीयस्य पश्व°। १६–१६ अ उ ड पा गृ हो१– 'लिङ्प्रत्ययस्य बाध्येत' नास्ति। १७–१७ आ क–तस्माच्चित्रापद कर्मनामधेयम्, अ उ ञो पा हा–तस्माच्चित्रा पशुनामधेय, ड–तथा चित्रशब्दे ४० नामधेयत्वम्। १८ अ उ ञो ना पा हा–'आज्यशब्दे' नास्ति। १९ ड गृ– पुत्रभृत्या°। २० गृ– 'अपि' नास्ति। २१ अ उ पा– पश्वादिलाभाच्चैव ञो हा–पश्वादिलाभाद्वैव। २२ ड हो१–प्रतिबन्धे। २३ क ड सारस्वताविति। २४ अ उ ड पा– ते। २५ आ– चोदक°। २६ ड– कार्य।

मारुतमसि मरुतामोजोऽपां धारां भिन्द्धि

मारुतम् । असि । मरुताम् । ओजः । अपाम् । धाराम् । भिन्द्धि ।

अथ कारीरिमन्त्राः । तत्र यजमानः कृष्णं वासः कृष्णतूषं परिधत्ते— 'मारुतमसि' इति यजुषा ॥ अत्राहुः —'होतॄन् [1]प्रवर्ग्यकाण्ड च याथोपनिषदो[1] विदुः ।
५ अरुणाम्नायविधिश्चैव काठके परिकीर्तितौ ॥
[2]रुद्रा नारायणश्चैव मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥
कारीर्यश्चापि पित्र्याश्च दिवाकीर्त्येति येषु च ।
रुद्राः संततिरित्येतावनुवाकौ च सात्रिकौ[2] ॥
१० होतृविध्यवसाने चाप्यनुवाकचतुष्टयम् ।
[3]सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैव पित्रियः ॥
काठकानि च सर्वाणि सर्वाण्यारण्यकानि च ।
दिवाकीर्त्यानि शाखायामेतावन्तीह धारणा ॥
कल्पे पितृविधिश्चैव प्रवर्ग्यविधिरेव च ।
१५ काठकानां विधिश्चैव कारीरीविधिरेव च ।
अरुणाम्नायविधिश्चैव शतरुद्रविधिस्तथा ॥
कल्पेषु च य आम्नाता मन्त्रास्तानप्यतन्द्रितः ।
यथाव्रतमुपाकृत्य अधीयीतेति चोच्यते' ॥ (काण्डानुक्रमणी ३·१-७) इति ॥

वास आमन्त्र्योच्यते— हे वासः, [v]मारुतं मरुता संबन्धि त्वम् [v]असि, [v]मरुताम् [v]ओजः
२० बलं त्वमसि; [4]त्वद्धारणबलत्वात् तेषाम् । अतः [v]अपाम् [v]धारां [v]भिन्द्धि पातय । यद्वा— अपां धारयितारं मेघं भिन्द्धि । लिङ्गव्यत्ययः । अपां धारयित्रीं वा मेघपङ्क्तिं भिन्द्धि ॥

पशुकामस्य चित्राख्यो यागः षष्ठे निरूपितः[1] ॥
अथ सप्तममारभ्य दशमान्तैश्चतुर्भिरनुवाकैः कारीरीष्टिः प्रतिपाद्यते । तत्र तावत् सप्तमेऽनुवाके वैदिकमन्त्राः पठ्यन्ते ॥
२५ मारुतमिति ॥ कल्पः—"कारीर्या वृष्टिकामो यजेत । अग्नीनन्वाधायापरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य '[2]उपविश्य यजमानो मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्ते" (आपश्री १९·२५·

[1]–[1]. तै१,तै२,ह– °काण्डे च यथोपनिषदो । [2]–[2]. मै८– 'रुद्रा नारायणश्चैव…… सात्रिकौ' नास्ति । [3]. तै१,तै२,ह– सूक्ते च । [4]. ह– अधीन° ।

[1]. ह शो१– मन्त्रीरितः । [2]. ह– 'उपविश्य' नास्ति ।

रमयंत मरुतः श्येनमायिनं मनोजवसं वृषणं सुवृक्तिम् ॥
येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तं स्वस्ति ।

रमयंत । मरुत । श्येनम् । आयिनम् । मनोजवसमिति मन --जवसम् । वृषणम् ।
सुवृक्तिमिति सु - वृक्तिम् ॥
येन । शर्धं । उग्रम् । अवसृष्टमित्यव - सृष्टम् । एति । तत् । अश्विना । परीति । धत्तम् । स्वस्ति । ५

पश्चाद्वात प्रतिमीवति निवर्तयति-- 'रमयत' इति जगत्या ॥ हे मरुत, रमयत उपरमयत निवर्तयत श्येन श्येनगतिमपि पश्चाद्वात निवर्तयत । यद्वा-- उदकस्य श्यातारम् अपगमयितार तनूकर्तार वा आयिनम् आगमनवन्तम् आयन्त निवर्तयत । अथ तन्निवर्त्य अन्य मनोजवस महावेग वृषण वर्षितारमुदकस्य सुवृक्ति शोभनशक्ति पुरोवात रमयतेत्येन । सामर्थ्यात् प्रवर्तयत * इत्यर्थस्य गति । यद्वा--श्येन प्रशस्तगमनम् आयिनम् उदकानयनकुशल १० मनोजवस वृषण शोभनशक्ति च पुरोवात रमयत * प्रवर्तयत । सामर्थ्याद्विपरीतस्याभाव पश्चाद्वात निवर्तयतेति गम्यते । एव श्रुत्यर्थोभ्या लब्धमुभय ब्राह्मण प्रतिपादयति-- "पश्चाद्वात प्रति मीनति पुरोवातमेव जनयति" ( तेस २ ४ ९ ) इति । येन प्रकारेण ह्रते शर्ध उदक

१६-१७ ) इति । पाठस्तु-'मारुतमसि मरुतामोजोऽपा धारा भिन्धि' इति । हे कृष्णवास, त्व मरुत्सम्बन्धि असि, यतो प्रक्षिप्तस्य कृष्णद्रव्यमिश्रस्य जलस्य मरुद्भि शोषणीयत्वात् । अत एव मरुताम् १५ ओज बलमसि, मेघेषु प्रतिबद्धानाम् अपा धाराम् उद्दिश्य प्रतिबन्धरूप मेघं भिन्धि ॥

रमयतेति ॥ कल्प -- "रमयत मरुत श्येनमायिनमिति पश्चाद्वात प्रति मीवति । पुरोवातमेव जनयति" ( आपश्रौ १९ २५ १८ १९ ) इति । प्रतिमीवति प्रतिबध्नाति ॥ पाठस्तु-- 'रमयत मरुत श्येनमायिनं मनोजवस वृषणं सुवृक्तिम् । येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तं स्वस्ति' इति ॥ हे मरुत, श्येन श्येनवत् प्रवृद्धगति पुरोवात रमयत क्रीडयत । कीदृशम् ? आयिनम् आगच्छन्त, २० मनोजवस मनस इव जवो वेगो यस्य तादृश, वृषणम् उदकस्य वर्षयितार सुवृक्ति सुष्ठु पश्चाद्वातस्य वर्जयितारम् । येन पुरोवातेन अवसृष्ट मेघेभ्यो मोचित जलम् उग्र तीव्रधारारूप भूत्वा शर्ध शीर्णम् अतिशोषेण हिंसितम् एति प्राप्नोति । तादृश पुरोवात रमयतेति पूर्वेणान्वय । हे अश्विनौ देवभिषजौ, तत् जल स्वस्ति क्षेमकर यथा भवति तथा परितो धारयतम् ॥

५. ल-- निवर्तते । ६. त१ त२ प१ ल-- निकर्तारम् । ७. त१ त२ मै ल-- आयन्तम् । ८ २५
मै४-- 'प्रशस्तगमनम्' इत्यस्यानन्तर 'तनूकर्तार वा' । [ *-* ल-- 'इत्यर्थस्य गति रमयत' इत्यय भागो नास्ति । ] ।

३ ड हो१ -- कृष्णद्रव्यस्य । ४ अ आ क ना चो पा हा -- पाश्चात्यवातस्य । ५ ड ग-- अतिशोषणेन । ६ ड क जो ड ना ग हो१--क्षेममिति ।

पुरोवातो वर्षञ्जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत् स्वाहाऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेपरावृत् स्वाहाऽतिरात्रं वर्षन् पूर्तिरावृत् (१) स्वाहा

पुरोवात इति पुर –वात । वर्षन् । जिन्व । आवृदित्या – वृत् । स्वाहा । वातावदिति वात - वत् । वर्षन् । उग्र । आवृदित्या वृत् । स्वाहा । स्तनयन् । वर्षन् । भीम । आवृदित्या - वृत् ।
५ स्वाहा । अनशनि । अवस्फूर्जन्नित्यव - स्फूर्जन् । दिद्युत् । वर्षन् । त्वेप । आवृदित्या - वृत् । स्वाहा । अतिरात्रमित्यति - रात्रम् । वर्षन् । पूर्ति । आवृदित्या - वृत् ( १ ) । स्वाहा ।

बलहेतुर्वा मरुता बलकृत वा । [v]उग्रम् उद्गूर्णम् [v]अवसृष्ट मुक्तम् [v]एति आगच्छति तया रमयतेति । हे [v]अश्विनौ, युवामपि [v]तत् उदक [v]परि [v]धत्त परितो धारयत [v]स्वस्ति अविनाशार्थं लोकस्य उदकस्येव वा अक्षयाय ॥

१० वातनामानि जुहोति– ' पुरोवात. ' इत्यष्टौ ॥ [v]पुरोवातः [1]पूर्वस्या दिश [1] आगत [v]पुरोवातः [v]वर्षन् [v]जिन्वः प्रीणयिता लोकस्य, पुरोवातस्य प्रीणनत्वात् । जिवि प्रीणने, इदित्वान्नुम् ( पा ७·१·५८ ), पचाद्यच् ( पा ३·१·१३४ ) । छान्दस [10]साहिति- कोऽस्य रेफः, उक्त च प्रातिशाख्ये– " आवृत्परः " ( तैप्रा ८·१० ) इति । [v]आवृत् आवर्तमान· अस्त्विति शेषः । आवर्ततामिति यावत् । स्वाहुत चेदमस्तु तस्मा इति । [v]वातावत्
१५ वातेन युक्त [v]वर्षन् । छान्दस दीर्घत्वम् । [v]उग्र उद्गूर्णः । आवृत्परत्वे [ रत्वाद्रेफः ] वातयुक्त स्योद्गूर्णत्वात् । समानमन्यत् । [v]स्तनयन् शुष्क गर्जन् [v]वर्षन् [v]भीमः भीतिहेतु· प्रजाना, तस्य [11]त्रस्यमानत्वात् । [v]अनशनि अविद्यमानाशनिपातम् [v]अवस्फूर्जन् अवसेचनेन शब्दयन् [v]दिद्युत्

पुरोवात इति ॥ कल्प.– " पुरोवातो वर्षन्नित्यष्टौ वातनामानि हुत्वा " ( आपश्रौ १९·२६·१ ) इति । पाठस्तु– ' पुरोवातो वर्षञ्जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत्
२० स्वाहाऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेपरावृत् स्वाहाऽतिरात्रं वर्षन् पूर्तिरावृत् स्वाहा बहु हायमवृषादिति श्रुतरावृत् स्वाहाऽऽतपति वर्षन् विराडावृत् स्वाहाऽवस्फूर्जन् दिद्युद्वर्षन् भूतरावृत् स्वाहा ' इति ॥ य [v]पुरोवात. [?] [v]वर्षन् वृष्टि प्रवर्तयन् [v]जिन्व. प्रजा प्रीणयन् [v]आवृत् आवर्तता तस्मै [8-8]स्वाहा हुतमस्तु [8] । [v]वातावत् प्रवातेन युक्तः [v]उग्र. तीव्रधारायुक्त । [v]स्तनयन् गर्जन् [v]भीम. [v]गर्जनाधिक्येन भयंकर इव । [v]अन- शनि [10]प्रागवातम. अशनिर्यथा न पतति तथा [v]अवस्फूर्जन् [v]अवसेचनेन शब्दयन्, [v]दिद्युत् विद्युद्रूपेण
२५ प्रकाशनेन युक्त [v]त्वेष वर्षधारया सस्यक्षेत्रादेर्दीपक· । [v]अतिरात्रम् रात्रिमतीत्य दिवारात्रमित्यर्थः, [v]पूर्ति महोत्सवं पूरयिता । [v]अयं वातः [v]बहु यथा भवति तथा [v]अवृषात् [v]ह [11]अवर्षयत् [v]किल इति [v]श्रुत

१–१. पं. मै८– पूर्वस्या दिशः । १०. मै८– साहितिकस्य । ११. मै४– तादात्म्यभावत्वात् ।

७. आ.क ट– ' मः ' नास्ति । ८–८. आ.इ.उ.क ओ.ट.पा गे– स्वाहुतमस्तु । ९. अ उ.ओ.प– गर्जनाधिक्य । १०. हो१– प्राग्वातक·, ट– प्रागवातुका·, गे– प्रागवातक । ११. इ– अवर्षत् ।

ग्रहु ह्यर्यमवृपादिति अुवरावृत् स्वाहाऽऽतपति वर्षेन् विराड़ावृत् स्वाहाऽवस्फूर्जेन् दिद्युद्वर्षेन् भूतरावृत् स्वाहा मान्दा वाशाः शुन्ध्यूरजिराः ।

ग्रहु । हि । अयम् । अवपात् । इति । श्रुत । आवृदित्या वृत् । स्वाहा । आतपतीत्या - तपति । वर्षेन् । विराडिति वि - राट् । आवृदित्या - वृत् । स्वाहा । अवस्फूर्जन्नित्यव स्फूर्जन् । दिद्युत् । वर्षेन् । भूत । आवृदित्या वृत् । स्वाहा । मान्दा । वाशा । शुन्ध्यू । अजिरा । ५

दीप्तिमत् विद्युत्सम्बन्धेन प्रकाशयन् [11] आयुधजानिव वर्तमानो [12] वा । अत एव [V]त्वेष दीप्यमान । [V]अतिरात्र रात्रिमप्यतीत्य सर्वमप्यहोरात्र, न रात्रिमात्रम् । " अह सर्वैक° " ( पा ५ ४ ८७ ) इत्यच् समासान्त । [V]पूर्ति पर्याप्तिमान् [13]पूरयन् वा गृहीतस्य सर्वम् । [14]"क्तिच्क्तौ च ' ( पा ३ ३ १७४ ) इति क्तिच् [15] ॥ [V]बहु प्रभूतम् । [V]हि इत्यवधारणे । बहुव [V]अयम् [V]अनुपात् अवपत् देव [V]इति एव [V]श्रुत [16]सर्वैर्निश्चयाति गच्छन् । [V]आतपति[16] सति, ईषत् तपति वा सूर्ये १० [V]वर्षन् [V]विराट् प्रशस्ततया विराजमान । [V]अवस्फूर्जन् [V]दिद्युत् [V]वर्षन् [V]भूत प्रभूत सर्वलोक धारणक्षम [17] पुन पुनरित्थं वर्षेदिति प्रतिपादनार्थम् अवस्फूर्जन्नित्याद पुनराम्नानम् ।

अन्तर्वेदि कृष्णाजिने कृष्णेन मधुना करीरसक्तून् संयौति– ' मान्दा वाशा ' इति तिसृभि ॥ प्रथमा एकपदा गायत्री । परे द्वे द्विपदे गायत्र्यौ । मान्दादीन्येता यथा नामानि एकादश । सर्वाण्यप्यामन्त्रिताद्युदात्तानि ( पा ६ १ १९८ ), पूर्वपूर्वाविद्यमानतया ( पा १५ ८ १ ७२ ) उत्तरोत्तरनिघाताभाव । [18]मन्दयन्ति मोदयन्ति प्रजा इति [V]मान्दा । [19]ण्यन्तात् पचाद्यच् ( पा ३ १ १३४ ) । व्यत्ययेनानुपधाभूतस्याप्याकारस्य णिचि वृद्धि ।

वर्षेषु दमाल । [V]आतपति आतपे स्थिते सति [V]विराट् विशेषेण राजमान । [V]अवस्फूर्जन् [V]दिद्युत् इति शब्दौ व्याख्यातौ । आदरार्थं पुनर्वचनम् । [13][V]भूत इत्यभूत यथोक्तगुणैर्युक्त सन् सर्वलोकधारणक्षम इत्यर्थ ॥

मान्दा इति ॥ कल्प – " अन्तर्वेदि कृष्णाजिन प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन् सर्वैर् २० सक्तून् करीरसक्तून् वा मान्दा वाशा इति कृष्णमधुना [13]संयुत्य मिश्र पिण्डी कृत्वा पुष्करपलाशे संवेष्ट्य " (आपश्री १९ २६ १) इति ॥ पाठस्तु ' मान्दा वाशा शुन्ध्यूरजिरा । ज्योतिष्मतीस्तमस्वरीरुन्दती सुफेना । मित्रभृत क्षत्रभृत सुराष्ट्रा इह मावत ' इति । मान्दादीन्येकादशापा नामानि संबुध्यन्तानि ।

११-१२, मै४–युद्धायिकर्वमान एव । १३ ०१ व२ मै स्–पूरयन् । १४–१४ व१ त२ मै ४– क्तिच् । १५ ल – सर्वेर्ध्याति । १६ मै – ' आतपति ' इत्यस्यानन्तरम् ' आतपे ' । १७ ४– १५ °धारणे क्षम । १८ मै४– मदयन्ति । १९–१९ व१ त२ मै– ' ण्यन्तात् ' नास्ति ।

१७ आ ' भूत ' नास्ति । १३ आ संयुत्य ।

ज्योति॑ष्मती॒स्तम॑स्वरी॒रुन्द॑ती॒ः सुफे॑नाः ।
मि॒त्र॒भृतः॑ क्ष॒त्र॒भृतः॑ सु॒राष्ट्रा॒ इ॒ह मा॑ऽवत ॥

ज्योति॑ष्मती । तम॑स्वरी । उन्द॑ती । सुफे॑ना॒ इति॒ सु-फे॒ना॒ ॥
मि॒त्र॒भृत॒ इति॑ मि॒त्र भृ॒त॒ । क्ष॒त्र॒भृ॒त॒ इति॒ क्ष॒त्र भृ॒त॒ । सु॒राष्ट्रा॒ इति॒ सु रा॒ष्ट्रा॒ ।
५ इ॒ह । मा॒ । अ॒व॒त॒ ।

वाशयन्ति शब्दयन्ति प्रजा इति [v]वाशा । वाशृ शब्दे । वष्टेर्वा वञ् । काम्या । [']शुन्ध्यू शोधयित्र्य । औणादिक क्यिप्रत्यय, " वा छन्दसि " (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । [v]अजिरा अजनशीला जनन्यादि(?)रूपेण परिणामात् ॥

ज्योतिष्मत्य [v]शुक्लच्छाया [v]दुर्ज्ञानयाथात्म्या । [']तमस्वरी दौर्दिन्यकारिण्य [v] ।
१० उन्दत्य क्लेदयन्त्य [v] भुव । [v]सुफेना अलङ्कारभूतफेना उपर्युपरि वर्धमाना । [']मित्रभृत दु खात् त्रायकाणाम् [v]ओषध्यादीना भर्त्र्य । [v]क्षत्रभृत बलस्य पोषयित्र्य । [v]सुराष्ट्रा शोभनराष्ट्र कर्तुं समर्था । ईदृश्यो यूयम् [v]इह अस्मिन् कर्मणि माम् [v]अवत अविघ्नेन प्रवर्तयत । यद्वा—कर्मफलप्रदानेन मा तर्पयत ।

तादृश्यो हे आप, यूयम् [']इह अस्मिन् कर्मणि माम् [']अवत फलप्रदानेन रक्षत । [']मान्दा हर्षहेतव ।
१५ [']वाशा शब्देन घर्षणजन्येन युक्ता । [']शुन्ध्यू शुद्धिहेतव । [']अजिरा प्रवाहरूपेण गमनशीला । [']ज्योतिष्मती शुभ्ररूपयुक्ता । [']तमस्वरी सूर्यप्रकाशाच्छादनेन तमो यथा भवति तथा स्यन्दमाना गच्छन्त्य । [']उन्दती भूमिं क्लेदयन्त्य । [']सुफेना जलप्रवाहबाहुल्येन बहुफेनयुक्ता । जगन्मित्रभूता ओषधीर्बिभ्रति पोषयन्तीति [']मित्रभृत । क्षत्र [v]देशाधिपतिं राजान सुवृष्टिजन्यसंतोषेण बिभ्रति पोषयन्तीति [']क्षत्रभृत । सुष्ठु शोभन [v]सस्यै सपूर्णं राष्ट्र यासा ता [']सुराष्ट्रा ।

२० २०, ता१ त२ मै४— सच्छाया । २१-२१ मै४ — तमस्वत्य मूर्तज्ञानयाथार्थ्या औदन्यकारिण्यो वा । २२ ता१ त२ मै४— क्लेदयित्र्य । २३ मै४— ओषधीनाम् ।

२४ हो१— देवाधिपतिम् । २५ आ सस्येन, अ इ [illegible] पा— अन्ये ।

वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामि ॥ ७ ॥
[ पुतिगृद् द्विचत्वारिंशच्च । ]

वृष्णः । अश्वस्य । सुदानमिति स दानम् । असि । वृष्ट्यै । त्वा । उपेति । नुह्यामि ॥ ७ ॥
[ मैत्र २४७, काठ ११९ ]

अथ कारीरसक्तून् त्रिधा पिण्डान् कृत्वा "समुद्गृह्य कृष्णाजिनस्यान्तान्" कृष्णेन सदाने ५ नोपनह्यति–' वृष्ण. ' इति ॥ 'वृष्णः वर्षितु 'अश्वस्य व्यापकस्य 'सदान बन्धनम् 'असि । अत 'वृष्ट्यै वृष्ट्यर्थं त्वाम् 'उप 'नह्यामि बध्नामि, त्वयोपनह्यामि वा ॥

इति द्वितीये चतुर्थे सप्तमोऽनुवाक ॥

वृष्ण इति ॥ कल्प – " समुद्गृह्य "कृष्णाजिनस्यान्तान् वृष्णो अश्वस्य सदानमसीति कृष्णेन दाम्नोपनह्यति " ( आपश्रौ १९२६ १ ) इति ॥ पाठस्तु–' वृष्णो अश्वस्य सदानमसि वृष्ट्यै त्वोप नह्यामि ' १० इति ॥ हे रज्जो, त्वं 'वृष्णः 'अश्वस्य सेचनसमर्थस्य "वृषभस्येवास्य कृष्णाजिनस्य 'सदान दृढबन्धन साधनम् 'असि । अतो वृष्टिसिद्ध्यर्थमनेन सदानेन हे कृष्णाजिन, त्वाम् 'उप 'नह्यामि बध्नामि ॥

अत्र विनियोगसग्रह —

"कारीर्या मारुत कृष्ण त्वामी भारयते परम् ।
रमेति पश्चिम वात "पुरोवात करोति हि " ॥ १ ॥ १५
पुरोऽथावाडुदीर्ध्वंया मान्दा सयौति सक्तुकम् ।
वृष्ण सनह्यते सक्तु मन्त्रा द्वादश वर्णिता ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाक ॥ ७ ॥

२४. प१ मै४ – समुद्धित्य । २५ त१ त२– °जिनस्यान्तात् । २०

१६. आ– °नह्यान्ती । १७ आ– अश्वस्यास्यैवास्य । १८–१८ अ– पुरोवर्त्ति करोति, उ भो ना पा हा– पुरोवर्त्ति करोति हि ड पुरोवाति करोति ।

देवा वसव्या अग्ने सोम सूर्य* ॥

देवा । वसव्या । अग्ने । सोम । सूर्य ॥

अथोत्करे प्राचीप त्रिगधमनोऽवस्थित भवति पादत्रयप्रतिष्ठित[1] त्रिच्छदिष्कम् । तत्र तिसृषु गधासु त्रिभिर्मन्त्रै प्रतिदिशम् आबध्नाति पिण्डी । तत्र पूर्वस्या गधाया छदिष्कमपि
५ कृष्णाजिनमाबध्नीयात् ' देवा वसव्या ' इति । तच्च [2]अहोरात्रासक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात्, यदि न वर्षेत् ' [3]देवा शर्मण्या ' इति मध्यमायामाबध्नीयात्, तत्र चाहोरात्रासक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात् यदि न वर्षेत् ' देवा सपीतय ' इति जघन्यायामाबध्नीयात्, अहोरात्रासक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात्, यदि न वर्षेत्[3] श्वोभूते धामच्छदादीनि त्रीणि हवींषि निवपति । एते च त्रय पङ्क्तिप्रकारा । ' उग्रो दत्त '
१० इत्यादिक च [4]त्रिष्वप्यनुषज्यते ॥

तत्र प्रथम – हे [V]देवा [V]वसव्या । स्वार्थिको यत् । जगता वासहेतवो वसव, वसु समूहो वा वसव्य, तद्वन्त । मत्वर्थीयो लुप्यते । " वसो. समूहे च " (पा ४ ४ १४०) इति यत् । वृष्टिहेतुत्वेन वसुसमूहवन्त वासयितारश्च प्रजानाम् । वसुभ्यो वा हिता वसव्या, वसूनि धनानि । तेषु च काश्चिद्दर्शयति–[V]अग्ने [V]सोम [V]सूर्य एवमादयो हे वसव्या देवा यूय [V]उग्र
१५ उदक [V]दत्त । पद्दन्नादिना (पा ६ १०६३) उदकस्य उदन्भाव । पूर्ववत् कर्मणि षष्ठी, उदात्त निवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । [V]तदर्थम् [V]उदधिं मेघ [V]भिन्त विदारयत यथोदक पतेत् । उदक धीयतेऽस्मिन्निति उदधि । " कर्मण्यधिकरणे च " ( पा ३ ३ ९३ ) इति कि, " पेषवास वाहनधिषु च " (पा ६ ३ ५८) इत्युदभाव, पूर्ववत कर्मणि षष्ठी, उदात्तनिवृत्तिस्वरेण विभक्ते उदात्तत्वम्[5] । [V]दिव द्युलोकात् [V]अन्तरिक्षात् [V]पृथिव्या । ल्यब्लोपे पञ्चमी । द्युलोकमन्तरिक्ष
२० *प्राच्याद्यमन्त्रा कार्यार्थ सहमे समुदीरिता ।

देवा इति ॥ अथाग्निष्टमन्त्रा अष्टमे वर्ण्यन्ते । कल्प – " उत्करे प्राचीप त्रिगधमनोऽवस्थित भवति । [6]छदिर्धान्यर्थ । देवा वसव्या इति पूर्वस्या गधाया कृष्णाजिनमाबध्नीयात् । अहोरात्रासक्त भवति । यदि वर्षेत पिण्डीरेव जुहुयात् । यदि न वर्षेत देवा शर्मण्या इति मध्यमायामाबध्नीयात् अहोरात्रासक्त भवति । यदि वर्षेत पिण्डीरेव जुहुयात् । यदि न वर्षेत देवा सपीतय इति जघन्यायामा
२५ बध्नीयात् । अहोरात्रासक्त भवति । यदि वर्षेत पिण्डीरेव जुहुयात् । यदि न वर्षेच्छ्वोभूते धामच्छदादीनि त्रीणि हवींषि निर्वपति (आपश्रौ १९ २६ २-१२) इति ॥ पाठस्तु–"देवा वसव्या अग्ने सोम सूर्य । देवा शर्मण्या मित्रावरुणार्यमन् । देवा सपीतयोऽपा नपादाशुहेमन । उग्रो दत्तोदधि भिन्त दिव पर्जन्यादन्तरिक्षात्

१. तै१ तै२ मै ^– "प्रतिष्ठित" । २. तै१ तै२– अहोरात्रावसक्तम् । ३–३ तै१ तै२– 'देवा शर्मण्या ... न वर्षेत्' इत्यारभ्य भागो नास्ति । ४ मै – त्रिष्वपि, तै१ तै२ ^ – त्रिष्वप्यनुषज्यते ।
३० ५–५. ^–'उदात्तत्वम् ... ' इत्ययं भागो नास्ति ।

* इ आ ग घ–प्राच्योमन्त्रा । [b] बो छ–छदिर्धान्यर्थ ।

देवाः शर्मण्या मित्रावरुणार्यमन् ॥ देवाः सपीतयोऽपां नपादाशुहेमन् ।
उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽवत ॥

देवाः । शर्मण्याः । मित्रावरुणेति मित्रा वरुणा । अर्यमन् ॥
देवाः । सपीतय इति स - पीतयः । अपाम् । नपात् । आशुहेमन्नित्याशु हेमन् ॥
उद्नः । दत्त । उदधिमित्युद धिम् । भिन्त । दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । ५
नः । वृष्ट्या । अवत ॥

पृथिवीं च व्याप्य या वृष्टिः पर्जन्यात् प्रवर्तते तया वृष्ट्या नः अस्मान् अवत रक्षत तर्पयत वा । अत्र "विभाषितं विशेषवचने बहुवचनम्" (पा ८ १ ७४) इति 'देवाः' इत्यस्याविद्यमानवत्त्वनिषेधात् 'वरुण्याः' इति निहन्यते, "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८ १ ७२) इति द्वयोरामन्त्रितयोः अविद्यमानवत्त्वात् 'अग्ने' इति न निहन्यते। अथ यदा १०
"अथ मे प्राणाः" इति तद्वचनभेदेऽपि सामान्यविशेषभावमात्रेण सामानाधिकरण्यं भवति तदा उपात्तदेवविशेषणत्वात् अग्न्यादीनां यद्यपि "नामन्त्रिते समानाधिकरणे" (पा ८ १ ७३) इत्यविद्यमानवत्त्वप्रतिषेधात् 'अग्ने' इत्यस्यापि निघातः प्राप्नोति, तथापि "विभाषितं विशेषवचने बहुवचनम्" (पा ८ १ ७४) इति पक्षे अविद्यमानवत्त्वान्निघाताभावः । पक्षे विद्यमानवत्त्वात् उत्तरयोः निघातः प्रवर्तते। ननु 'अग्ने' इत्यनेन विशेषवचने व्यवधानं न १५
स्यात्। नैष दोषः, "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८ १ ७२) इति तस्याविद्यमानवत्त्वात्, तेन स्यात् व्यवधानम् ॥

अथ द्वितीय – देवाः शर्मण्याः शरण्याः शरणभावे साधवः शर्मणे सुखाय वा गृहाय वा हिताः । हे मित्रावरुणौ हे अर्यमन् । पूर्ववत् स्वरः । 'उद्नो दत्त' इत्यादि समानम् ॥

अथ तृतीय – हे देवाः सपीतयः समानपानाः परस्परतः अस्माभिश्च सह हे अपां २०
नपात् अपां चतुर्थ। "सुबामन्त्रिते" (पा २ १ २) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रित

पृथिव्यास्ततो नो वृष्ट्याऽवत' इति ॥ अत्र 'उद्नो दत्त' इत्येष त्रयाणां मन्त्राणां शेषत्वेनानुषज्यते। हे देवाः, उद्नः दत्त उदकानि प्रयच्छत। कीदृशा देवाः ? वसव्या प्रजानां वासयितारः । क एते देवा इति तदुच्यते– अग्ने सोम सूर्य इति। एवमादिका हे देवा इति पूर्वेणान्वयः । उदकदाने क उपाय इति तदुच्यते उदधिं भिन्त, उदकं धीयतेऽस्मिन्नित्युदधिर्मेघस्तं विदारयत। केभ्यो विभिन्नेभ्य ? दिवः २५

६-६ मै ल–अग्ने प्राण । ७-७ तर तर मै ल–इतिवत् वचनविशेषेऽपि। ८ तर तर मै न– 'बहुवचन' नास्ति। ९ तर तर मै न–गृहीता । १०-१० मै ४ ञ– मित्रावरुणा अर्यमन्।

३ क–इत्येषा ह–इत्येतेषा। ४ अ उ पा शेषत्वेना°, ह हो–°त्वेनानुषज्यते। ५ आ–उच्यते।

दिवा चित् तमः कृण्वन्ति पुर्जन्येनोदवाहेन ।
पृथिवीं यद्व्युन्दन्ति ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदवाहेनेत्युद-वाहेन ॥
पृथिवीम् । यत् । व्युन्दन्तीति वि-उन्दन्ति ॥

५ समुदायस्यामन्त्रितायुदात्तत्वम् । हे आशुहेमन् शीघ्रगते । हि गतौ, "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) इति मनिन्प्रत्ययः[11]। प्रदर्शनार्थं द्वयोरुपादानम्। 'उग्रो दत्त' इत्यादि । गतम् ॥

पिण्डीर्जुहोति–'दिवा चित्' इत्यादिभिस्तिसृभिः ॥ प्रथमा गायत्री। द्वितीयाऽऽस्तार-पङ्क्ति, अयुजो द्वादशाक्षरत्वात्[12]। तृतीया बृहती ॥

१० तत्र प्रथमा– दिवा चित् दिवाऽपि तमः दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति, किं पुनर्नक्तम्? पर्जन्येन उदवाहेन उदकस्य वाहकेन अनवरतवर्षिणा सह दिवाऽप्यन्धकारितमिव रोदोन्तरं दर्शयन्ति घनपटलाच्छादितदिगन्ता[13] नक्तदिनं वर्षयन्तीति यावत्। कदेति? आह– यत्। "सुपां सुलुक्" (पा ७·१·३९) इति सप्तम्या लुक्। यदा पृथिवीं व्युन्दन्ति विशेषेण क्लेदयन्ति। उन्दी क्लेदने। एते च पूर्वोक्ता अग्न्यादयो वक्ष्यमाणा मरुतो वा द्रष्टव्याः। १५ अस्माकमप्येतत् [14]वृष्टिं प्रवर्तयन्त्विति[14] ॥

अन्तरिक्षात् पृथिव्या, लोकत्रयं निमित्तीकृत्येत्यर्थः। ततः मेघविदारणादूर्ध्वं पर्जन्यात् आगतया वृष्ट्या नः अस्मान् अवत रक्षत। द्वितीयमन्त्रे तु मित्रावरुणा अर्यमन् इत्येवमादयो हे देवाः शर्मण्याः सुखप्रदा इति व्याख्येयम्। तृतीयमन्त्रे तु अपां नपात् उदकानामविनाशयितः आशुहेमन् शीघ्रगते इत्येवमादयो हे देवाः सपीतयः समाना पीतिः सोमपानं येषां ते तादृशा इति व्याख्येयम् ॥

२० दिवेति ॥ कल्प.–" उपहोमकाले दिवा चित् तमः कृण्वन्तीत्येतैः प्रतिमन्त्रं पिण्डीरावध्नाति। जुहोतीत्येके" (आपश्रौ १९·२६·१७-१८) इति ॥ तत्र प्रथममन्त्रपाठस्तु– 'दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन। पृथिवीं यद्व्युन्दन्ति' इति ॥ यदा देवाः पृथिवीं विशेषेण क्लेदयन्ति तदानीमुदके वहता पर्जन्येन दिवा चित् तमः कृण्वन्ति किमुत रात्रौ ॥

११. तै१ तै२ मै लं– 'प्रत्ययः' नास्ति। १२. तै१,तै२–द्वादशाक्षरत्वात्। १३. तै१,तै२ मै लं– २५ °पटलाच्छादित°। १४–१४ तै१,तै२,मै,लं– वृष्टिः निवर्तयन्त्विति।

६. अ,आ,उ,पा– कृण्वन्तीति, क,बो,ना,हा–कृण्वन्तीति तैः। ७. इ,क,जो,ना,हा – 'इति' इत्यस्यानन्तरं– 'दिवा चिद्दिनेऽपि तमो दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति पर्जन्येन मेघेनोदकवाहिपूर्णेन सकल पृथिवीं यदा व्युन्दन्ति क्लेदयन्ति मेघा वा वृष्ट्योदकप्रवाहरूपं दुर्दिनं कुर्वन्तु वृष्टेरर्थाय'। ८. आ-अदि।

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
वि पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति (१) वृष्टयः ।
उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत ॥

एति । यम् । नरः । सुदानव इति सु-दानवः । ददाशुषे । दिवः । कोशम् । अचुच्यवुः ॥ ५
वीति । पर्जन्याः । सृजन्ति । रोदसी इति । अन्विति । धन्वना । यन्ति (१) । वृष्टयः ॥
उदिति । ईरयथ । मरुतः । समुद्रतः । यूयम् । वृष्टिम् । वर्षयथ । पुरीषिणः ।
न । वः । दस्राः । उपेति । दस्यन्ति । धेनवः । शुभम् । याताम् । अन्विति । रथाः । अवृत्सत ॥

अथ द्वितीया– 'आ यं नरः' इति॥ [v]नरः ऋत्विजः [v]सुदानवः शोभनहविषां दातारः । [१५][v]ददाशुषे यजमानाय हविषां दात्रे । तादर्थ्ये चतुर्थी । [१६]यजमानार्थं [v]यं [v]कोशम् उदकस्याधारं मेघं [v]दिवः द्युलोकात् [v]अचुच्यवुः आच्यावयन्ति स्थानात् । यद्वा– दिवः आदित्यात् गृहीत रश्मिषु नरो नेतारः मरुतः च्यावयन्ति । ततः कोशात् [v]पर्जन्याः[१७] उदकं [v]वि [v]सृजन्ति मुञ्चन्ति [v]रोदसी [v]अनु द्यावापृथिव्यौ लक्षयित्वा । विसर्जनानन्तरं [v]धन्वना अनुदकेन देशेन । विभक्तिव्यत्ययो वा । निरुदके देशे । [v]वृष्टयः वृष्टानि जलानि [v]यन्ति नद्यो भूत्वा प्रवहन्ति । च्यवतेर्लेटि शपः श्लुः (पा २·४·७६), "[१८]सिजभ्यस्तविदिभ्यश्च" (पा. ३·४·१०९) १५ इति झुस्, "जुसि च" (पा ७·३·८३) इति गुणः[१९], "मन्त्रे वृष°" (पा ३·३·९६) इति वृषेः क्तिन उदात्तत्वम् ॥

अथ तृतीया– हे [v]मरुतः, [v]यूयम् [v]उत् [v]ईरयथ प्रेरयथ [v]वृष्टिं [v]समुद्रत. समुन्दनात् मेघात् । ततः [v]वर्षयथ पर्जन्यात् । हे [v]पुरीषिणः उदकवन्तः, उदकेन हि सर्वं पूर्यते । [v]न हि

यति ॥ द्वितीयमन्त्रपाठस्तु– 'आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः । वि २० पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः' इति ॥ [s]नरः मनुष्या ऋत्विजः [s]सुदानवः सुष्ठु [s]हविषां दातारः [s]ददाशुषे हविर्दत्तवते [९]यजमानाय यजमानार्थं [s]यं [s]कोशम् उदकधारकं मेघं [s]दिवः सकाशात् [s]आ [s]अचुच्यवुः समन्तात् [११]च्यावितवन्तः प्रसारितवन्त इत्यर्थः । स मेघः पूर्वमेकोऽपि [s]पर्जन्याः बहवो मेघा भूत्वा [s]रोदसी [s]अनु द्यावापृथिव्यावनुलक्ष्य विविधां वृष्टिं [s]सृजन्ति । बहुपर्जन्यभावाभिप्रायेण बहुवचनम् । ताश्च [s]वृष्टयः [s]धन्वना मरुभूमावुदकरहितायां [s]यन्ति प्रवर्तन्ते ॥ २५

उदीरयथेति ॥ तृतीयमन्त्रपाठस्तु–'उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः । न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत' इति ॥ हे [s]मरुतः, [s]यूयं समुद्रतः उदशाम्

१५. मै.मै४– दाशुषे । १६. तं१.तं२.लं– 'यजमानार्थं' नास्ति । १७. मै४–पर्जन्यात् ।
१८–१९. [ संभावितोऽयं पाठः ], तं१.तं२.मै.लं– 'समविप्रविभ्यश्च' इति झुस्, 'जुसि च' इति गुणः; मै४– सिजभ्यस्तविदिभ्यश्चेति गुणः । ३०

९. अ.आ.उ.इ.पा.गृ.हो–हविषः । १०. इ.क.जो.ना.हा–'यजमानाय' नास्ति । ११. इ.क.जो. ना.हा–च्यावित° ।

सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण ॥
अब्जा असि प्रथमजा बलमसि समुद्रियम् ॥

सृज । वृष्टिम् । दिवः । एति । अद्भिरित्यत्-भिः । समुद्रम् । पृण ॥
अब्जा इत्यप्-जाः । असि । प्रथमजा इति प्रथम-जाः । बलम् । असि । समुद्रियम् ॥

५ वः युष्मदीयाः धेनवः प्रीणनहेतवः अपः उपदस्यन्ति उपक्षीयन्ते, हे दस्राः दंसनशीला दानशीला वा । अतो वर्षयतेति । किं च रथाः रंहणशीलाः [19]यूयं यातां कालानुकूलप्रवृत्तां शुभं शोभाम् । [20]शुभेः संपदादिलक्षण. क्विप् (पा ३·३·१०८ वा ९)। ताम् अनु अवृत्सत अनुवर्तध्वम् । यद्वा—यातां गतिं शुभमनुवर्तध्वं सुष्ठु [21]अविच्छेदेन कुरुध्वम् । [22]पूर्वप्रवृत्तं मार्गं मा मुञ्चत, यस्मात् इदानीमपि रंहणाः स्थ, तस्माच्छक्तत्वात् स्वभावो न त्याज्यः इति । वृतेः छान्दसे लुङि व्यत्ययेन
१० क्सः ( पा ३·१·४५ ), "द्युद्भ्यो लुङि" ( पा १·३·९१ ) इति व्यत्ययेन परस्मैपदं, "न वृद्भ्यश्चतुर्भ्यः" ( पा ७·२·५९ ) इतीडभावः ॥

अथ कृष्णामां कुम्भीमद्भिः पूरयति—'सृजा वृष्टिम्' इति द्विपदया गायत्र्या ॥ 'आ' इति प्रथमपादान्तः । सृज वृष्टिं दिवः द्युलोकात् द्योतमवतो मेघाद्वा आदित्याद्वा[23] । ततः अद्भिः समुद्रं तमेव समुन्दनं मेघम् आ पृण पूरय पुनःपुनर्वृष्ट्यर्थम् ॥

१५ अथ कृष्णां व्रीहिभिर्जुहोति—'अब्जा असि' इति द्विपदया गायत्र्या ॥ अब्जा असि इति अद्भ्यो [24]जायत इति[24] । "जनसन॰" (पा ३·२·६७) इति विट्, "विड्वनोरनुनासिकस्यात्"

मेघात् वृष्टिम् उदीरयथ उत्पादयत । ततः पुरीषिणः पांसुयुक्तान् भूप्रदेशान् वर्षयथ आप्लावयथ। हे दस्रा भूमिदोपम् [12]उपक्षयितारः मरुतः, वः युष्माकं धेनवः धेनुसदृशा मेघाः न उप दस्यन्ति नैवोपक्षीयन्ते। किं कुर्वतां युष्माकम्? शुभं यातां [13]जगदनुग्रहरूपं मङ्गलकार्यं प्राप्नुवताम्। किं
१० च इतरेषां देवानां रथाः अन्ववृत्सत भवदीयान् रथाननुवर्तन्तां, वृष्टिं दातुमस्मदीये कर्मणि रथानारुह्य युष्मासु समागच्छत्सु इतरः सर्वेऽप्यन्ये देवा रथमारुह्य समागच्छन्त्वित्यर्थः ॥

सृजेति ॥ कल्पः—"उत्करे कृष्णाम् आमपत्रां" स्थालीमद्भिः पूरयति सृजा वृष्टिमिति। यदि मिथेत वर्षिष्यतीति विद्यात्" ( आपश्रौ १९·२७·२-३ ) इति ॥ पाठस्तु—'सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण' इति। हे मरुत्संघ, दिवः सकाशात् वृष्टिं सृज। [14]आभिः अद्भिः समुद्रसदृशं यद्वि-
१५ गाहमन्तरेणाऽऽतपेन शुष्कमिमं कुम्भम् आ पृण समन्तात् पूरय ॥

अब्जेति ॥ कल्पः—"[15]अनयः उपसम्भने याङ्की या कृष्णाऽविवंदा भवति। अब्जा असीति तां [16]प्रोक्षति" ( आपश्रौ १९·२७·४-५ ) इति ॥ पाठस्तु—'अब्जा असि प्रथमजा बलमसि समुद्रियम्'

१९. मे-'युवम्' नास्ति। २०. मे-'शुभेः' नास्ति। २१. तै१,तै२,-मे,ले-अविच्छेदम्। २२. तै१,तै२,मे,ले-॰प्रवृत्त॰। २३-२३. मे,ले-'आदित्याद्वा' नास्ति। २४-२४. मे४-जायन्त इत्यब्जाः।

१२. क,द,हो१-उपक्षयितारः। १३. आ-॰रूपमिदं। १४. क,द,हो१-अनयाम्। १५. द-गाभिः। १६. आ-अन॰। १७. अ, द,जो,ना,पा,हा-अभिमन्त्रेत्।

उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नर्भः ।
उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् ।

---

उदिति । नम्भय । पृथिवीम् । भिन्द्धि । इदम् । दिव्यम् । नर्भ ॥
उद्न । दिव्यस्य । नु । देहि । ईशान । वीति । सृज । दृतिम् ॥

---

(पा ६ ४ ४१) इत्याकार । [v]प्रथमजा च [v]असि, प्रथम प्रजापति तस्माज्जात इति। ५
पूर्ववत् प्रत्यय , आकारश्च। यथोक्त– "राजन्यो मनुष्याणामजि पशूनाम्" (तैस ७ १ १)
इति । [v]बलम् [v]असि [v]समुद्रिय समुद्रे मेघे भवम् । [v]समुद्रात् अभ्रात् मेघात ईदृश बलहेतुरुदक
त्वमसि ईदृशोदकहेतुरसि ॥

अथ वर्षाभूस्तम्बमभिजुहोति– 'उन्नम्भय' इत्यनुष्टुभा ॥ हे वर्षाभूस्तम्ब, [v]उन्नम्भय
उच्छ्वासय । नभि गतिकर्मा, छान्दसो नुम् । [v]पृथिवीं वृष्ट्या । तद्दर्शयति– [v]इद [v]दिव्य दिवि १०
स्थित [v]नभ मेघ [v]भिन्द्धि । नहेरसुनि (उ ६६०) नभ । नभरम् । तथा कृत्वा [v]उद्न
उदकस्य [v]दिव्यस्य [v]न अस्मभ्य [v]देहि । कर्मण सप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। [v]ईशान उदक
दातु समर्थ स्थ [v]वि [v]सृज विमुञ्च [v]दृति दृतिस्थानीय मेघ क्षारय । "द्व्यचोऽतस्तिङ"
(पा ६ ३ १३५) इति दीर्घत्वम् । पूर्ववदुदकस्योदन्भाव , उदाद्यनिवृत्तिस्वरश्च। उद्न ईशान इति वा ।
"अधीगर्थ°" (पा २ ३ ५२) इति षष्ठी ॥ १५

---

इति ॥ हे [18]अग्ने, [v]अब्जा [19]त्वम् उदकाज्जाता [v]असि । [20]मातृपित्रुदकात् रेतोरूपेण परिणतादुत्पन्नाऽसि ।
किं च [v]प्रथमजा असि सुवर्भानुप्रसारितात्रादित्यावरकतमोभागात् प्रथममपह्नवादुत्पन्नाऽसि । "तस्य मत् प्रथम
तमोऽपाघ्नन्त्सा कृष्णाऽविरभवत्" (तैस २ १ २) इति श्रुते । [v]समुद्रियं समुद्रसदृशमेघसबन्धि
[v]बल वृष्ट्युत्पादनसामर्थ्यम् [v]असि । त्वत्प्रसादेन वृष्टिभविष्यतीति शत्रु शक्यस्मादित्यर्थ ॥

उन्नम्भयेति ॥ कल्प – "उत्करे वर्षाहूस्तम्ब प्रतिष्ठाप्योन्नम्भय पृथिवीमिति वर्षाह्वा जुहोति" १०
(आपश्रौ ११ २७ ७) इति । वर्षाहू पुनर्नवा ॥ पाठस्तु– 'उन्नम्भय पृथिवीं भिन्द्धीद दिव्य नभ ।
उद्नो दिव्यस्य नो देहीशानो [illegible] सृजा दृतिम्' इति । हे पुनर्नवे, [v]पृथिवीम् उन्नम्भय उत्कर्षेण क्लेदय, तदर्थं
[v]दिव्य दिवि भवमिद [v]नभ आकाशवद्व्याप्त मेघमण्डल [v]भिन्द्धि विदारय । विदार्य च [v]दिव्यस्य दिवि
भवस्य [v]उद्न उदकस्य वर्षेण [v]न अस्मभ्य [v]देहि । पुनर्नवाया ओषध्या उत्पादक हे देव, त्वम् ईशान
सन् [v]दृतिं [v]विसृज उदकपूर्णदृतिसमान मेघ वर्षणाय विमुक्तद्वार कुरु ॥ २५

---

२५ ल–आ समुद्रात् ।

---

१८ मृ– अग्ने। १९ अ आ इ ड पा– 'त्वम्' नास्ति। २० मृ–मातापितृपीतादुदकात्,
ड– मातृपितादिपीतादुदकात्।

ये देवा( २ )दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः ।
त इमं यज्ञमवन्तु त इदं क्षेत्रमा विंशन्तु त इदं क्षेत्रमनु वि विंशन्तु ॥ ( ८ )॥
[ यन्ति देवा विंशतिश्च । ]

---

ये । देवाः ( २ ) । दिविभागा इति दिवि - भागाः । ये । अन्तरिक्षभागा इत्यन्तरिक्ष - भागाः ।
ये । पृथिविभागा इति पृथिवि - भागाः ॥
ते । इमम् । यज्ञम् । अवन्तु । ते । इदम् । क्षेत्रम् । एति । विशन्तु ।
ते । इदम् । क्षेत्रम् । अनु । वीति । विशन्तु ॥ ८ ॥
[ मैसं २.४.७ कासं ११.९ ]

---

अन्तर्वेदि तिष्ठन् कृष्णाजिनमवधूनोति– ' ये देवाः ' इति जगत्या षट्पदया ॥ [v]ये [v]देवाः [v]दिविभागा दिवि भागो येषाम् । " हलदन्तात्° " (पा ६.३.९ ) इति सप्तम्या अलुक् । [v]ये [v]अन्तरिक्षभागाः, [v]ये च [v]पृथिविभागाः [v]ते सर्वे [v]इमं [v]यज्ञम् [v]अवन्तु रक्षन्तु फलप्रदानसमर्थं कुर्वन्तु । [v]ते [v]इदं [v]क्षेत्रम् [v]आ [v]विशन्तु वर्षरूपेण विशन्तु, वर्षितृरूपेण वा परिगृह्णन्तु, [v]ते [v]इद [v]क्षेत्रम् [v]अनु [v]वि [v]विशन्तु [१६]अनुपूर्वं विविध च विशन्तु[१६] ओषध्यादि-रूपेण व्याप्य तिष्ठन्तु, मा कदाचिदपीदं शुष्क भूत् ॥

इति द्वितीये चतुर्थे अष्टमोऽनुवाकः ॥

---

य इति ॥ कल्पः–" ये देवा दिविभागा इत्युपर्याहवनीये कृष्णाजिनमवधूनोत्यूर्ध्वमीवं बहिर्वाद्-विशसनम् " (आपश्रौ १९.२७.११) इति ॥ पाठस्तु–' ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः । त इमं यज्ञमवन्तु त इदं क्षेत्रमा विशन्तु त इदं क्षेत्रमनु वि विशन्तु ' इति ॥ लोकत्रयभाजः 'ये 'देवाः 'ते प्रथमं 'यज्ञं प्रविश्य सस्यनिष्पादकं 'क्षेत्रं सामान्येनाऽऽविश्य ततः [२१]प्रतिकेदारम् 'अनु[२१] विशेषेण 'विशन्तु ॥

अत्र विनियोगसंग्रहः–

वृष्टिप्रदायां कारीर्यां देवा इत्यादिकैस्त्रिभिः ।
दिनत्रये धर्मबन्धः शाकटस्थे छदिस्त्रये ॥ १ ॥
उद्गो दत्तेति वाक्यं तु त्रयाणां शेष इष्यते ।
दिवा त्रिभिः सक्तुहोमः सृजेत्पुत्करसस्थिताम् ॥ २ ॥
स्थालीमद्भिः पूरयित्वा हाब्जाः प्रोक्षत्यर्थि स्थिताम् ।
उक्षं पुनर्नवाहोमो ये धर्मान्तौ तु धूयते ॥
अष्टमे त्वनुवाकेऽस्मिन् दश मन्त्रा उदीरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥

---

१६–१६. पंर–अनुपूर्वं विशन्तु, तै१.तैर–अनुप्रविशन्तु; टं–अनुप्रविशन्तु अनुपूर्वं विशन्तु ।

---

२१–२१. अ.आ.उ.क.पा– प्रतिक्षेत्रमनु च, ओ.ना.हा– प्रतिक्षेत्रं प्रतिकेदारमनु च ।

**मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे**

मारुतम् । असि । मरुताम् । ओजः । इति । कृष्णम् । वासः । कृष्णतूषमिति कृष्ण–तूषम् । परीति । धत्ते । एतत् । वै । वृष्ट्यै । रूपम् । सरूप इति स–रूपः । एव । भूत्वा । पर्जन्यम् । ५
वर्षयति । रमयत । मरुतः । श्येनम् । आयिनम् । इति । पश्चाद्वातमिति पश्चात्–वातम् । प्रतीति ।
मीवति । पुरोवातमिति पुरः–वातम् । एव । जनयति । वर्षस्य । अवरुद्ध्या इत्यव–रुद्ध्यै ।
वातनामानीति वात–नामानि । जुहोति । वायुः । वै । वृष्ट्याः । ईशे ।

अथ 'मारुतमसि' (तैस २ ४ ७) इत्यादीनां कारीरीमन्त्राणां ब्राह्मणम्–'मारुतमसि' इत्यादि ॥ [v]कृष्णतूषं [v]कृष्णदशान्तं [v]कृष्णं [v]वासो यजमानः [v]परि [v]धत्ते । [vv]एतत् कृष्णं वासः १० [v]वृष्ट्यै वृष्ट्याः [v]रूपम्, ततश्च पर्जन्यसमानरूपः [v]भूत्वा [v]पर्जन्यं [v]वर्षयति ॥

रमयतेत्यादि । [v]पश्चाद्वातम् अपरस्या दिशि [v]आगच्छन्तं वातं [v]प्रति [v]मीवति प्रतिनिवर्तयति वर्षप्रतिकूलमपि [v]पुरोवातं पूर्वस्या दिशः आगच्छन्तं [v]वातं वर्षानुकूलं [v]जनयति [v]एव । [v]तच्च [v]वर्षस्य [v]अवरुद्ध्यै भवति । मीव स्थौल्ये । प्रतिमीवति प्रक्षीयमाणं करोतीति यावत् ॥ १५

वातनामानीति ॥ "पुरोवातो वर्षन्" (तैस २ ४ ७) इत्यादीन्यष्टौ । ईशे इति । "लोपस्त आत्मनेपदेषु" (पा ७ १ ४१) इति तलोपः ॥

कारीर्युत्तरभागस्था मन्त्रा अष्टम ईरिताः ॥

**मारुतमिति** ॥ अथ नवमे पूर्वभागस्थाः सप्तमानुवाकोक्तमन्त्रा व्याख्यायन्ते । [1]तत्र यजमानस्य वस्त्रपरिधानं विधत्ते–'मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप २० एव भूत्वा पर्जन्यं वर्षयति' इति ॥ तूषा वस्त्रस्य दशाः, ताः कृष्णा यस्य तत् [2]कृष्णतूषम् । जलपूरितैर्मेघैः आदित्यप्रकाशे सर्वतः आवृते सति वृष्टेः स्वरूपं कृष्णं [3]भाति । यजमानोऽपि [4]कृष्णवस्त्रप्रावरणात् वृष्टिसमानरूपः सन् [4]पर्जन्यं वर्षयितुं प्रभुर्भवति ॥

**रमयतेति** ॥ मन्त्रान्तरं विनियुङ्क्ते–'रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै' इति ॥ [5]प्रति [5]मीवति प्रतिबध्नाति ॥ २५

**वातनामानीति** ॥ 'पुरोवातो वर्षन्' इत्यादिमन्त्राणां विनियोगं दर्शयति–'वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति' इति ॥ 'जिन्वरक्ष' इत्यादीनि वायोर्नामानि तदुद्देशेन होमे सति यः [6]वायुः वृष्टेरीश्वरः [7]स तुष्टः [8]सन् [9]वर्षयति ॥

१. त१ तं२.मै क– 'कृष्णदशान्तम्' इत्यस्यानन्तरम् 'उदकम्' । २ मै४– तत् । ३ मै४– °समान । ४–४ मै४– गच्छन्तम् । ५ [illegible] तं२– प्रवर्तयति ग– प्रतिप्रवर्तयति । ६–६. मै४– ३० पूर्वस्या दिशि । ७–७ मै४– वर्षवातं वा अनुकूलम् । ८ मै ग– वश । ९. त१ तं२.मै ग– क्षीयमाणम् ।

१ ङ– अत्र । २. ङ– भवति । ३ ङ क ओ ना गं.हा– °प्रावरण । ४–४ क– स तुष्ट ।

वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयत्यष्टौ ( १ ) जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टि॑ सं प्र च्यावयति कृष्णाजिने सं यौति हविरेवाकरन्तर्वेदि सं यौत्यवरुद्ध्यै यतीनामद्यमानाना॑ शीर्षाणि पराऽपतन्

वायुम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मै । ५ पर्जन्यम् । वर्षयति । अष्टौ ( १ ) । जुहोति । चतस्र । वै । दिश । चतस्र. । अवान्तरदिशा इत्यवान्तर दिशा । दिग्भ्य इति दिक् भ्य । एव । वृष्टिम् । सम् । प्रेति । च्यावयति । कृष्णाजिन इति कृष्ण अजिने । समिति । यौति । हवि । एव । अक. । अन्तर्वेदीत्यन्त -वेदि । समिति । यौति । अवरुद्धया इत्यव रुद्धये । यतीनाम् । अद्यमानानाम् । शीर्षाणि । परेति । अपतन् ।

अष्टावित्यादि । गतम् । कृष्णाजिने स यौतीति । अन्तर्वेदि कृष्णाजिने मधुपा १० करीरसक्तून् सयौति इति । हवि एव अक अकार्षीत् । करोतेः छान्दसो लुङ्, "मन्त्रे घस° " ( पा २ ४ ८० ) इति च्लेर्लुक् । अन्तर्वेदि सयवन वर्षस्यावरोधनाय भवति । यतीनामिति । प्राणिना घातयितारो रक्षोविशेषा यतय, तेषा सालावृकै अद्यमानानाम् । यदाह–

अष्टाविति ॥ पाठगता मन्त्रसख्या प्रशंसति– ' अष्टौ जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तर दिशा दिग्भ्य एव वृष्टि॑ स प्र च्यावयति ' इति ॥

१५ कृष्णाजिन इति ॥ ' मान्दा वाशा ' इति मन्त्रेण सक्तूना संयवन यद्विधास्यते तस्याऽऽधार विधत्ते– ' कृष्णाजिने सं यौति हविरेवाक. ' इति ॥ प्रकृतौ कृष्णाजिने हवि स्वरूपान् व्रीहीनय हन्ति तण्डुलान् पिनष्टि च । अतोऽत्रापि कृष्णाजिने संयवनेन हवि कृतं भवति ॥

अन्तर्वेदीति ॥ देशविशेष विधत्ते – ' अन्तर्वेदि स यौत्यवरुद्ध्यै ' इति ॥ वेदेर्बहि सयवने यज्ञभूमिमप्रविश्य हविर्नावरुध्यते ॥

२० यतीनामिति ॥ करीराणि विधातु प्रस्तौति–' यतीनामद्यमानाना॑ शीर्षाणि पराऽपतन् त खर्जूरा अभवन् तेषा॑ रस ऊर्ध्वोऽपतत् तानि करीराण्यभवन्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टि च्यावयति ' इति ॥ पारमहंसरूपं चतुर्थाश्रमं प्राप्ताना येषा यतीना मुखे ब्रह्मात्मप्रतिपादको वेदान्त शब्दो नास्ति तान् यतीनिन्द्र आरण्येभ्य श्वभ्य प्रायच्छत् । तथा च कौषीतकिब्राह्मणोपनिषदीन्द्रस्य प्रतिज्ञा समाम्नायते– " अरुन्मुखान् यतीन्सालावृकेभ्य प्रायच्छम् " (कौउ ३.१) इति । पतितत्वात् २५ तेषां तथात्व युक्तम् । तथा च स्मर्यते– " नित्यकर्म परित्यज्य वेदान्तश्रवण विना । वर्तमानस्तु संन्यासी पतत्येव न संशय. " इति ॥ तेषां च सालावृकैर्भक्षणं षष्ठकाण्डे समाम्नायते– " इन्द्रो यतीन्सालावृकेभ्य प्रायच्छत् तान दक्षिणत उत्तरवेद्या आदन् " (तैसं ६ २.७ ) इति । वेदान्त श्रवणमन्तरा विना नित्यकर्म परित्यक्तवतां यतीनामपीदृशी गतिरिति दर्शयितुं वेदिसमीपे भक्षणम् ।

१०. मे८– ' श्री ' नास्ति । ११ तै१ तै२ मे स– करोति ।

३० ५–५. ह– व्रीहिस्तान् । ६. आ ह उ खो ना पा हा– तेषा॑ वा । ७. हा– °यरुध्यति, हो१– °यरुध्ये । ८. अ उ ह पा – यरु° । ९. हो१– सालावृकेभ्य । १०. अ आ उ क खो ना पा हा– ' च ' नास्ति । ११. अ उ पा–समाम्नाये, शृ– समाम्नायेऽ । १२ क खो ना हा– भक्षणेन, ह ह शृ हो१– भक्षणं एवम् ।

ते खर्जूरा अभवन् तेषाꣳ रस ऊर्ध्वोऽपतत् तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति यत् करीराणि भवन्ति (२) सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्द्धे मधुषा सं यौत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षयत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति मान्दा वाशा

ते। खर्जूरा। अभवन्। तेषाम्। रस। ऊर्ध्व। अपतत्। तानि। करीराणि। अभवन्। सौम्यानि। वै। करीराणि। सौम्या। खलु। वै। आहुतिरित्या हुति। दिव। वृष्टिम्। च्यावयति। यत्। करीराणि। भवन्ति (२)। सौम्यया। एव। आहुत्येत्या-हुत्या। दिव। वृष्टिम्। अवेति। रुन्द्धे। मधुषा। समिति। यौति। अपाम्। वै। एष। ओषधीनाम्। रस। यत्। मधु। अद्भ्य इत्यत्-भ्य। एव। ओषधीभ्य इत्योषधि-भ्य। वर्षति। अथो इति। अद्भ्य इत्यत्-भ्य। एव। ओषधीभ्य इत्योषधि-भ्य। वृष्टिम्। नीति। नयति। मान्दा। वाशा। ५ १०

“इन्द्रो यतीन् सालावृकेभ्य” (तैस ६ २ ७) इत्यादि। °खर्जूरा महाताला, तत्फलानि °करीराणि। सौम्यानीति। रसपरिणामत्वात्। सौम्येति। °सोम्या एव हि °दिव °वृष्टिं च्यावयितुं शक्नोति। गतमन्यत्॥

मधुषेति॥ क्षौद्रेण। मधुशब्दपर्यायो मधु शब्द उसिप्रत्ययान्त। °अद्भ्य °ओषधीभ्य च हेतुभ्य °वृष्टिं प्रवर्तयति मधुषा सयवनेन। अथो इति। अपि च °अद्भ्य °ओषधीभ्य अपि उपादानेभ्य °वृष्टिम् उत्पादयति॥ १५

नामधेयैरिति॥ मान्दादिभिरेकादशभिर्नामभि[12] (तैस २ ४ ७)। °अच्छैति आभि मुख्येन प्राप्नोति, अभिमन्त्रणेनाभिमुख्यकरणात्[13]। अथो इति। असाविति। नामविशेषार्थं

सालावृके °भयमानाना °यतीना यानि[13-]°शीर्षाणि कपालास्थीनि[13] भूमौ °अपतन्, तानि खर्जूरवृक्षत्वेन उदभवन्। ये तालाभिधाना महाखर्जूरा तेषा फलानि शिर कपालसदृशानि लक्ष्यन्ते। °तेषा फलाना °रस ऊर्ध्वमुखस्य भूमौ °अपतत्। पतित्वा च सोमलतासदृशीना लताना सोमप्रतिनिधिभूतानामङ्कुररूपाणि करीरशब्दवाच्यानि[14]°अभवन्। अत एव सोमाङ्कुरसदृशत्वात् °सौम्यानि °करीराणि तदाहुतिश्च °सौम्या सती °दिव सकाशात् °वृष्टिं प्र °च्यावयति। “अग्नौ प्रास्ताऽऽहुति सम्यगादित्यमुपतिष्ठते। आदित्यात् जायते वृष्टि” (मनुस्मृ ३ ७६) इति स्मृते॥ २०

यदिति॥ सक्तूना प्रकृतिद्रव्य विधत्ते– ‘य करीराणि भवन्ति सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्द्धे’ इति॥ २५

मधुषेति॥ सयवनसाधन माक्षिकद्रव्य विधत्ते– ‘मधुषा स यौत्यपा वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षयत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति’ इति॥ मक्षिका हि नाना विधेभ्य पुष्पेभ्यो रसानादाय मधु कुर्वन्ति। तेषा च रसानामोषधिजन्यत्वात् °द्भ्य इत्याद्युपपन्नम्॥

१२ त१ तर भैरु– ‘नामभि’ नास्ति। १३ त१ तर ल– °करणत्वात्। ३०

१३–१३ अ उ ग्रा म्र – शिरःकपालास्थीनि ह हो१ – शिर कपालान्यस्थीनि। १४ ह– अभुवन्। १५ ग्र–रसत्वा°।

इति सं यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा (३) च्यावयति वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैन꣸ समर्धयति वर्षस्यावरुद्ध्यै ॥ ९ ॥

५ [ अष्टौ भवन्ति नामधेयैरेकान्नत्रि꣸शच्च । ]

इति । समिति । यौति । नामधेयैरिति नाम-धेयैः । एव । एनाः । अच्छ । एति । अथो इति । यथा । ब्रूयात् । असौ । एति । इहि । इति । एवम् । एव । एनाः । नामधेयैरिति–नाम-धेयैः । एति (३) । च्यावयति । वृष्णः । अश्वस्य । संदानमिति सम्-दानम् । असि । वृष्ट्यै । त्वा । उपेति । नह्यामि । इति । आह । वृषा । वै । अश्वः । वृषा । पर्जन्यः । कृष्णः । इव । खलु । वै ।

१० भूत्वा । वर्षति । रूपेण । एव । एनम् । समिति । अर्धयति । वर्षस्य । अवरुद्ध्या इत्यव-रुद्ध्यै ॥९॥

[ मैस २.४.८, काठ ११.१० ]

सामान्यपदम् । यथा कश्चिदामन्त्रयमाणः ब्रूयात्–दत्त एहि, गुप्त एहि इति एवम् एव अपोऽपि नामधेयैः आत्मसमीपे [14]आनयति ॥

वृष्ण इति ॥ तिस्रः पिण्डीः कृत्वा समुच्छ्रितानेन मन्त्रेण कृष्णाजिनस्यान्तान् कृष्णेन

१५ सदानेनोपनह्यति । वृषेति । वर्षिता अश्वः पर्जन्य वा[15] वर्षिता । तस्मात् वृषत्वेन पर्जन्य सदृशाश्वसंकीर्तनं वृष्ट्यै भवति । किं च – कृष्णः इव भूत्वा पर्जन्यः वर्षति । तस्मात् कृष्णाजिनसम्बन्ध रूपसमृद्ध्या वृष्टिहेतुर्भवति ॥

इति द्वितीये चतुर्थे नवमोऽनुवाकः ॥

मान्दा इति ॥ मन्त्रेण संयवनं विधत्ते– 'मान्दा वाशा इति सं यौति नामधेयैरेवैना अच्छैत्यथो

२० यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा च्यावयति' इति ॥ मान्दादीन्यपां नामानि तैः एनाः अभिमुखत्वेन प्राप्नोति । किं च हे देवदत्त, समागच्छ इति यथा लोके ब्रूयात् एवम् एव एनाः अपः स्वनामभिः आ [17]च्यावयति ॥

वृष्ण इति ॥ कृष्णाजिनबन्धनमन्त्रं व्याचष्टे– 'वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैन꣸ समर्धयति वर्षस्याव-

२५ रुद्ध्यै' इति ॥ यथा अश्वः वृषा सेचनसमर्थः एवं पर्जन्यः अपि सेचनसमर्थः । [18]समुद्रकारणेन कृष्ण एव भूत्वा पश्चात् वर्षति । अतः कृष्णेन रज्जुरूपेण एनं पर्जन्यं समृद्धं करोति । तच्च वर्षस्यावरोधाय संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥

३० १४. तै१,तै२,मै१–आगमयति । १५. तै१,तै२,मै१,ठ–'कृष्णेन' नास्ति । १६–१६. मै४–अपि । १६. ट,२,हो१– वर्षति । १७. आ–मधुरकपूर्गैन । १८. ट,हो१–'तच्च' नास्ति ।

देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्या नेभाति देवताभिरेवान्वहं वृष्टिमिच्छति यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपेदहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति नक्तं वा हि दिवा वा वर्षति

देवाः । वसव्याः । देवाः । शर्मण्याः । देवाः । सपीतय इति सऽपीतयः । इति । एति । बध्नाति । देवताभिः । एव । अन्वहमित्यनु अहम् । वृष्टिम् । इच्छति । यदि । वर्षेत् । तावति । एव । ५
होतव्यम् । यदि । न । वर्षेत् । श्वः । भूते । हविः । निरिति । वपेत् । अहोरात्रे इत्यह रात्रे ।
वै । मित्रावरुणाविति मित्रा-वरुणौ । अहोरात्राभ्यामित्यह -रात्राभ्याम् । खलु । वै । पर्जन्यः ।
वर्षति । नक्तम् । वा । हि । दिवा । वा । वर्षति ।

" देवा वसव्या " ( तैस २ ४ ८ ) इत्यादिभि स्त्रिभिर्मन्त्रैः तिसृषु गाथासु त्रिषु दिनेषु अन्वहम् [V]आ [V]बध्नाति पिण्डी । यदि वर्षेदिति । तत्र ' अन्वहम् ' इति वचनात् त्रिषु दिनेषु १०
पिण्डीहोम । श्वो भूते चतुर्थेऽहनि हविः निर्वपेत् । तत्राय क्रमः – [V]यदि प्रथमे दिने [V]वर्षत्
[V]तावति तस्मिन् [V]एव अहनि [V]होतव्य पिण्डीलक्षण हविः । अथ यदि तत्र न वर्षेत् द्वितीये दिने
मध्यमाया कृष्णाजिनमाबध्नीयात् । यदि तस्मिन् दिने वर्षेत् तावत्येव होतव्यम् । यदि तस्मिन्नपि
न वर्षेत् तृतीये दिने तृतीयस्या कृष्णाजिनमाबध्नीयात् । यदि तस्मिन् दिने वर्षेत् यदि च न
वर्षेत् उभयथाऽपि तृतीये दिने पिण्डीर्जुहुयात् । अथ [V]यदि [V]न [V]वर्षेत् [V]श्वोभूते चतुर्थेऽह्नि प्राप्ते १५
[V]हविः निर्वपेत् ॥ हविरिति जातावेकवचनम् । धामच्छदादीनि त्रीणि हवींषि निर्वपेत् कृष्णाना

आध्यात्ममन्त्रा कारीर्यां व्याख्याता नवमे स्फुटम् ॥
अथोत्तरभागस्थमन्त्रा दशमे [1]व्याख्यायन्ते ॥

देवा इति ॥ तत्र त्रिषु दिनेषु क्रमेण वृष्टिकामे 'सक्तुबन्धनार्थान् मन्त्रान् विनियुङ्क्त– ' देवा वसव्या देवा शर्मण्या देवा सपीतय इत्या बध्नाति देवताभिरेवान्वह वृष्टिमिच्छति ' इति ॥ तत्तन्मन्त्रो २०
क्ताभि [V]देवताभि अनुगृहीत प्रतिदिन [V]वृष्टिम् [V]इच्छति ॥

यदीति ॥ तत्र वर्षावर्षपक्षयोर्व्यवस्थया सक्तुहोम पुरोडाशनिर्वाप च विधत्ते – ' यदि वर्षेत् तावत्येव होतव्य यदि न वर्षेच्छ्वो भूते हविर्निर्वपेत् ' इति ॥ [V]तावति [V]एव सक्तुबन्धने [V]एव कृते सति
वर्षणपक्षे पुरोडाशनिर्वापमन्तरेण पिण्डीर्जुहुयात् । प्रथमदिने [V]वृष्टौ सत्या पिण्डप्रयहोमेनैव कर्मसमाप्ति ।
तथा द्वितीयतृतीययोर्दिनयो । त्रिष्वपि दिनेषु वृष्ट्यभावे चतुर्थदिने पुरोडाशनिर्वाप कुर्यात् ॥ २५

अहोरात्रे इति ॥ ' अहोरात्रावासनत भवति ' ( आपश्रौ १९ २६ ५ ) इति वदता सूत्रकारेण अत्यन्तसंयोगवाचिनीं द्वितीया (पा २ ३ ५) प्रयुञ्जानेनाहोरात्रयोर्निरन्तर बन्धन यदुक्त तद्विधिमर्थवादेनो पपत्ति– ' अहोरात्रे वै मित्रावरुणावहोरात्राभ्या खलु वै पर्जन्यो वर्षति नक्त वा हि दिवा वा वर्षति
मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्या पर्जन्य वर्षयत ' इति । अह

१ अ– व्याख्यास्यन्ते । २ अ आ उ क जो ना पा हा– [0]बन्धनार्थं । ३ अ आ क जो ना ३०
पा– ' एव ' नास्ति । ४ हो १– वृष्ट्याम् ।

मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मै (१) अहोरात्राभ्यां पर्जन्यं वर्षयतोऽग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता

५ मित्रावरुणाविति मित्रा वरुणौ । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । तौ । एव । अस्मै (१) । अहोरात्राभ्यामित्यह –रात्राभ्याम् । पर्जन्यम् । वर्षयत । अग्नये । धामच्छद इति धाम च्छदे । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । निरिति । वपेत् । मारुतम् । सप्तकपालमिति सप्त कपालम् । सौर्यम् । एककपालमित्येक - कपालम् । अग्नि । रे । इत । वृष्टिम् । उदिति । ईरयति । मरुत । सृष्टाम् । नयन्ति । यदा । खलु । वै । असौ ।

१० आदित्य । न्यङ् । रश्मिभिरिति रश्मि भि । पर्यावर्तत इति परि आवर्तते । अथ । वर्षति । धामच्छदिति धाम - च्छत् । इव । खलु । वै । भूत्वा । वर्षति । एता । वै । देवता ।

व्रीहीणाम् । अहोरात्रे इत्युक्तम् । एकैकस्या गधायामहोरात्रावसक्त भवति । सति वर्षे 'तत्र तत्रैव होम , असति श्वोभूते हविर्निर्वप्तव्यमिति'[1] । तत्राहोरात्रावसक्ते वृष्टिहेतुत्व तावत् समर्थयते[2]– नक्त वा दिवा वा अहोरात्राभ्याम् एव पर्जन्य वर्षति । तयोश्च मित्रावरुणात्मकत्वात् तावेव

१५ पर्जन्य वर्षयत , अहोरात्रावसक्तनलक्षणस्वभागोपहृतत्वात् ॥

अथ हवींषि विदधाति– 'अग्नये धामच्छदे' इत्यादि ॥ धामानि स्थितानि तेजासि वा छादयति वृष्टिकाल इति धामच्छत् । "बहुल सज्ञाछन्दसो" (उ १९०) इति णिलुक् । अग्निर्वा इति । आहुतिद्वारेण अग्नि वृष्टिम् उदकम् उत् ईरयति ऊर्ध्वं गमयति आदित्य प्रापयति, तस्मादग्ने निरुप्यते । ता वृष्टि सृष्टाम् अवसृष्टा मरुत नयन्ति देशान्तर प्राप

२० यन्ति, तस्मात्मरुद्भ्यो निरुप्यते । यदा खलु आदित्य रश्मिभि न्यङ् अवाङ्मुखाश्च नि

सूर्यप्रकाशयुक्तत्वान्मित्रत्वम् । रात्रेरन्धकारेण अवरुद्धत्वात् वरुणत्वम् । पर्जन्य च अहोरात्राभ्या अन्तरेण वर्षितु न समर्थ । कालान्तरस्याभावात् । तथा सति रात्रौ दिवसे वा कदा वर्षिष्यतीति शक्तुम् अनवधार्यत्वादिरन्तर वर्षणीयम् । तेन तुष्टौ मित्रावरुणौ वर्षयत ॥

अग्नय इति ॥ 'हविर्निर्वपेत्' इति सामान्येन यदुक्त तदेव विशेषत प्रपञ्चयति– 'अग्नये

२५ धामच्छदे पुरोडाशमष्टाकपाल निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुत सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभि पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै

१–१. तै॰ सं॰ भै॰– तत्रैव तत्रैव । २. भै॰– निर्वप्स्यामीति । ३. भै॰– 'समर्थयते' इत्यस्यानन्तरं 'नक्तं वा दिवा वा अहोरात्राभ्यामेव भवति' इति । ४–४. तै॰ सं॰ भै॰– अत्रापि प्रभृति ।

५. आ क ता– गत्वात्, अ ड थो पा ग– तीत्वात्, ग ह हो१– आवर्त्तत्वात् । ६. अ

३० आ ग क थो ना पा हा हो१– धाम वृत्त, इ– नाम वृत्त । ७. आ ग ट थो पा हा हो१– संज्ञा, ना– ग बहु, भ– 'बहु' नास्ति, म– यदा ।

वृष्ट्यां ईशते ता एव स्वेन भागधेयेनोप धावति ता ( २ ) एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन् वर्षत्येव सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः

वृष्ट्याम् । ईशते । ताः । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ताः (२) । एव । अस्मै । पर्जन्यम् । वर्षयन्ति । उत । अवर्षिष्यन् । वर्षति । एव । सृज । वृष्टिम् । दिवः । एति । अद्भिरित्यत्-भिः । समुद्रम् । पृण । इति । आह । इमाः । च । एव । अमूः । च । अपः । ५

पर्यावर्तते इतोऽमुत्र प्रवर्तते अथ वर्षति रश्मिषु पक्वमुदकं पर्जन्यः आगमयति, तस्माद् सूर्याय निरूप्यते इति । अनेन त्रिहविष्केण यागेन पर्जन्यः धामच्छत् इव भूत्वा वर्षति भूयिष्ठं वर्षतीति यावत् । एता वा इत्यादि । गतम् ॥

कुम्भीमद्भिः पूरयति—'सृजा वृष्टिम्' इति ॥ इमाः भूमिष्ठाः अमूः दिविष्ठाः मेघस्था वा अपः समृद्धाः करोति । अपि च आभिः एव करणभूताभिः अमूः आभिमुख्येन १० प्राप्नोति । 'सृजा वृष्टिम्' इति वचनात् वर्षेण इमाः समृद्धाः भवन्ति । आभिरद्भिः समुद्रस्य मेघस्थस्य उदकस्यापूरणात् अमूः समृद्धाः भवन्ति ॥

भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ता एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन् वर्षत्येव' इति ॥ "धामा ह यत् ते अजर" (तैस ३. १ ११) इति याज्यानुवाक्ययोर्धामशब्दो पेतत्वाद्धामच्छद्वह्निः । तदर्थस्तु धामान्यन्तरगृहादीनि अन्धकारापादिकया वृष्ट्याऽऽच्छादयतीति धामच्छत्, १५ तस्मै निर्वापः । "अग्नौ प्रास्ताऽऽहुतिः" (मनु ३. ७६) इति स्मृत्यनुसारेण अग्निः अस्माल्लोकादाहुत्याऽऽदित्य द्वारा वृष्टिम् उत्पादयति । सृष्टाम् उत्पादितां तां वृष्टिं मरुतः यत्र तत्र नयन्ति । यस्मिन् काले असौ आदित्यः स्वरूपे तीक्ष्णैः रश्मिभिः परितः आवर्ततेऽतिशयेन सन्तापं करोति तदा पर्जन्यद्वारा वर्षति । वर्षंश्च धामानि गृहादीन्याच्छादयन् इव बहुलमेघयुक्तः भूत्वा वर्षति । तथा सत्यग्निर्मरुत आदित्य इति एता एव देवता वृष्टेर्नियमनाय समर्था । ता च हविर्भिस्तुष्टा यजमानार्थं वर्षयन्ति । यद्यपि पर्जन्यः २० स्वयमेव अवर्षिष्यत् इव पूर्वं स्थितस्तथाऽप्येताभिर्देवताभिः प्रेरितः क्षणमात्रेण पुरोवातादिसामग्रीं सम्पाद्य सर्वथा वर्षति एव ॥

सृजेति ॥ आमस्थालीपूरणमन्त्रं व्याचष्टे—'सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः समर्धयत्यथो आभिरेवामूरच्छैति' इति ॥ 'अद्भिः पृण' इत्यनेन इमाः भूलोकस्थाः अपः समर्धयति । 'सृजा वृष्टिम्' इत्यनेन अमूः स्वर्गस्था अपः समर्धयति । किं च आभिः अत्र २५ भूलोकस्थाभिरद्भिः अमूः अच्छ एति स्वर्गस्था अपः प्राप्य गच्छति ॥

अब्जेति ॥ कृष्णाविप्रोक्षणमन्त्रस्य स्पष्टार्थतां दर्शयति—'अब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतत्' इति ॥

५ मै४—इत्यमूश्च । ६ त१ त२ मै ल—वर्षिष्ठ° । ७ मै४—स्थापयति । ८ त१ त२ मै४ ७—भूयिष्ठा । ९–९ त१ त२—अमूभि । ३०

८ क—अन्धकारादिकया । ९ अ उ पा—दृष्टया । १० अ उ ना जो पा ह्रा—वृष्टिम् । ११ होर—स्वीयैः । १२ आ—वर्षन् स, ड होर—वर्षन् । १३ आ क ना—वृष्टिनिय° । १४–१४ क ह्रा—स्वयमेव वर्षिष्यन् ड ग्र होर—स्वयम् अवर्षिष्यन् । १५ ड होर—स्थितवान् तथा° । १६ ड ग्र होर—स्वर्गलोकस्था ।

सर्मर्धयत्यथो आभिरेवामूरच्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथा-यजुरेवैतदुन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा (३) ओषधीनां वृष्टिवनिस्तयैव वृष्टिमा च्यावयति ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति ॥ १० ॥

५ [अस्मै धावति ता वा एकविंशतिश्च।]

समिति। अर्धयति। अथो इति। आभि। एव। अमू। अच्छ। एति। अब्जा इत्यप् जा। असि। प्रथमजा इति प्रथम-जाः। बलम्। असि। समुद्रियम्। इति। आह। यथायजुरिति यथा यजु। एव। एतत्। उदिति। नम्भय। पृथिवीम्। इति। वर्षाह्वामिति वर्ष-ह्वाम्। जुहोति। एषा। वै (३)। ओषधीनाम्। वृष्टिवनिरिति वृष्टि-वनिः। तया। एव। वृष्टिम्। एति।
१० च्यावयति। ये। देवा। दिविभागा इति दिवि भागा। इति। कृष्णाजिनमिति कृष्ण अजिनम्। अवेति। धूनोति। इमे। एव। अस्मै। लोकाः। प्रीता। अभीष्टा-इत्यभि-इष्टाः। भवन्ति ॥१०॥

[मैत्र २४८, ११ १० कासं]

अब्जा इति। अविमभिजुहोति। यथायजुरिति। मेघोदकस्य बलहेतुत्वम् [v]असि इति [v]एतत् [१०v]यथायजु भवति [v]एव। उन्नम्भयेति ॥ [११-v]वर्षाह्वा [v]जुहोति[-११]। वर्षम् आह्वयतीति वर्षाह्व।
१५ क्विपि सम्प्रसारण, साहितिक पूर्वपदस्य दीर्घत्व छान्दस, कृदुत्तरपदस्य प्रकृतिस्वरत्वे "उदात्तयणो [१२]हल्पूर्वात्" (पा ६ १·१७४) इति विभक्तेरुदात्तत्वम्। पुनर्नवैकोच्यते। 'वृष्टिवनि' इति। [v]ओषधीना मध्ये [v]एषा वृष्टे सम्भक्तिः। "छन्दसि वनसन°" (पा ३ २·२७) इतीन्प्रत्यय। गतमन्यत् ॥

इति द्वितीये चतुर्थे दशमोऽनुवाक ॥

२० उन्नम्भयेति ॥ पुनर्नवामा होम विधत्ते–'उन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीना वृष्टिवनिस्तयैव वृष्टिमा च्यावयति' इति ॥ [v]एषा [v]वै पुनर्नवैव [v]ओषधीनां सर्वासां मध्ये [v]वृष्टिवनि वृष्टिभाक् वर्तते [१७]बहुलतरसमुद्भवात् ॥

य इति ॥ मन्त्रान्तर विनियुङ्क्ते–'ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोका प्रीता अभीष्टा भवन्ति' इति ॥ [v]दिविभागा अन्तरिक्षभागा पृथिविभागा इत्युक्तत्वात् [v]लोका
२५ [v]प्रीता सन्तो [१८]"यजमानायाभीष्टप्रदा [v]भवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाक ॥

१०. ए–यथायजुर्वदति यथा तत्। ११–११. तै१ तै२ मे लं– 'वर्षाह्वा जुहोति' नास्ति।
१२. तै१ तै२ मे – 'हल्पूर्वात्' नास्ति।

३० १७. ट ग्र होर–बहूलं तदुद्भवात्। १८ ट होर– यजमानाभीष्ट°।

सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यव रुन्द्धे गायत्री वा एषा यदुष्णिहा

सर्वाणि । छन्दाꣳसि । एतस्याम् । इष्ट्याम् । अनूच्यानीत्यनु - उच्यानि । इति । आहुः । त्रिष्टुभः । वै । एतत् । वीर्यम् । यत् । ककुत् । उष्णिहा । जगत्यै । यत् । उष्णिहककुभावित्युष्णिह ककुभौ । अन्वाहेत्यनु - आह । तेन । एव । सर्वाणि । छन्दाꣳसि । अवेति । रुन्द्धे । गायत्री । वै । एषा । यत् । उष्णिहा । ५

सर्वाणि छन्दांसीत्यादि ॥ अस्ति त्रैधातवीयेष्टि । ता विधास्यन् प्रथम तद्गताम् काश्चित् विशेषान् विदधाति । [v]एतस्याम् [v]इष्टया सामिधेनीषु [v]सर्वाणि, [1]नैकैव गायत्री अपि तु बहूनि[1] [v]छन्दासि [v]अनूच्यानि [v]इति यज्ञविद [v]आहु । यद्वे छान्दस लिप्। तत् कथमित्याह– 'त्रिष्टुभ' इत्यादि । [v]ककुत् नाम [v]त्रिष्टुभ [v]वीर्यं वीर्यपरिणाम कार्य इत्यर्थ । [v]उष्णिहा नाम जगत्या वीर्यम् । उष्णिक्पर्याय उष्णिहाशब्द । तस्मादुष्णिहककुभो [v]यत् अनुवचन लोके समिध्यमानवतीसमिद्धवत्योर्मध्ये निधाय [v]तेन सर्वच्छन्दोऽवरोध । प्रकृति गायत्र्यौ, वैकृत्यौ चोष्णिक्ककुभौ, तत्कारणे च त्रिष्टुब्जगत्याविति । तत्र " प्र सो अग्ने तवोतिभि ", " प्र होत्रे पूर्व्यं वच " ( तैस ३ २ ११ ) इत्येते उष्णिक्ककुभौ वेदितव्ये । तत्र प्रथमा ककुप्, मध्यमस्य पादस्य द्वादशाक्षरत्वात् । द्वितीया परोष्णिक्, [2]तृतीयस्य पादस्य द्वादशाक्षरत्वात् । अत्र ककुदुष्णिहाविति वक्तव्ये उष्णिहककुभाविति विपर्यासश्छान्दस ॥ १० १५

गायत्री वा इत्यादि ॥ [v]गायत्री [v]वै [v]एषा[2] । इयमुष्णिक्त्वादुष्णिग्ग्रहणमेव कृतम् । तत्र चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, तत् कथमनयोरेकत्वमित्यत आह–' यानि ' इति ।

अनुवाके तु दशमे कारीरीष्टि समापिता ॥

अथैकादशे त्रैधातवीयेष्टिर्विधातव्या[1] ॥ २०

सर्वाणीति ॥ तत्राऽऽदौ सामिधेनीषु द्वे धाय्ये विधत्ते–' सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यव रुन्द्धे' इति ॥ [v]एतस्या त्रैधातवीयेष्टौ सामिधेनीरूपेण [v]सर्वाणि अपि [v]छन्दासि अनुवक्तव्यानि [v]इति अभिज्ञा [v]आहु । तत् तु सर्वच्छन्दोनुवचन कथ घटत इति तदुच्यते । ककुच्छन्द [v]त्रिष्टुभ सारम्, उष्णिक्छन्दो जगत्या सारम् । अतस्तदुभयानुवचनेन सर्वच्छन्दोनुवचन सपद्यते । " प्र सो अग्ने तवोतिभि " ( तैस ३ २ ११ ) इत्येषा ककुप्, तदीयेषु त्रिषु पादेषु मध्यमपादस्य द्वादशाक्षरत्वात् । " प्र होत्रे पूर्व्यं वच " ( तैस ३ २ ११ ) इत्येषोष्णिक्, तदीयेषु त्रिषु पादेष्वन्तिमपादस्य द्वादशाक्षरत्वात् ॥ २५

१–१. तै१ तर मै ठ – 'नैकैव गायत्री अपि तु बहूनि ' नास्ति । २ मै८– वार्यन् ।
२–२. त१ तर ठ – ' तृतीयस्य पादस्य . गायत्री वै एषा ' नास्ति ।

१ अ आ उ फ हो१– °विधीयते । ३०

यानि॑ च॒त्वार्य॑ध्य॒क्षरा॑णि च॒तुष्पा॑द ए॒व ते प॒शवो॒ यथा॑ पुरो॒डाशे॑ पुरो॒डाशो॒ऽध्ये॒वमे॒व तद्य॒दृच्य॑ध्य॒क्षरा॑णि॒ यज्ज॑गत्या (१) परि॒दध्या॒दन्तं॑ य॒ज्ञं ग॑मयेत् त्रि॒ष्टुभा॒ परि॑ दधाति॒-

यानि॑ । च॒त्वारि॑ । अधीति॑ । अ॒क्षरा॑णि । च॒तुष्पा॑द॒ इति॒ चतुः॑ - पा॒दः॒ । ए॒व । ते । प॒शवः॑ । यथा॑ । पु॒रो॒डाशे॑ । पु॒रो॒डाश॑ । अधीति॑ । ए॒वम् । ए॒व । तत् । यत् । ऋ॒चि । अधीति॑ । अ॒क्षरा॑णि । यत् । जग॑त्या (१) । प॒रि॒दध्या॒दिति॑ परि-द॒ध्यात् । अन्त॑म् । य॒ज्ञम् । ग॒म॒येत् । त्रि॒ष्टुभा॑ । परीति॑ । द॒धा॒ति॒ ।

अयमभिप्रायः—गायत्र्या एव पशुसाधन रूप यदुष्णिङ्नाम, तस्मात् "यानि "चत्वारि "अक्षराणि अभ्यधिकानि तानि "चतुष्पाद "पशवः । तद्धेतुत्वात् ताच्छब्द्यम् । तस्मादुष्णिक्प्रवेशव्याजेन गायत्रीमेव प्रकृतिं पशुसाधनभूतां कुर्म इति ॥

एवं सर्वच्छन्दोऽवरोधहेतुत्वेन पशुलाभहेतुत्वेन च उष्णिक्ककुभोः प्रवेशं स्तुत्वा इदानीम् इष्टिस्वभावसुलभं "दुर्बोधं चेदमक्षराधिक्यमिति दृष्टान्तेन दर्शयति—'यथा' इति ॥ 'उत्तर उत्तरो ज्यायान् भवति' इति "यथा "पुरोडाशे प्रथमे "अधि उपरि मध्यमः, तस्मिन्नपि तृतीयो भवति, "एवम् "एव एतत् द्रष्टव्य, "यत् "ऋचि गायत्र्याम् "अधि उपरि चत्वारि "अक्षराणि भवन्ति । यद्वा—पुरोडाशे पुरोडाशान्तरमधिकप्रमाणं तिष्ठति तद्वदिदमृचि गायत्र्या अधिकाक्षरा उष्णिक्त्रिष्टुबिति ॥

१५　यज्जगत्येति ॥ उक्तं जगत्या वीर्यमुष्णिगिति । उक्तं च 'गायत्री वा एषा यदुष्णिहा' इति । तस्मादेव जगतीभावत्या "आ जुहोत" (तैब्रा ३·५·२) इति गायत्र्या परिधानं यज्ञस्य मध्ये अन्तगमनाय "विनाशाय स्यात्, जगत्या छन्दसामन्त्यत्वात् । यद्वा—गायत्र्येव

गायत्रीति ॥ एतदुभयवचनेन त्रिष्टुब्जगत्योर्लाभेऽपि गायत्र्या अलाभदाढ्यं वारयितुमन्तर्भावं दर्शयति—'गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तदृच्यध्यक्षराणि' इति ॥ उष्णिक्छन्दसोऽष्टाविंशत्यक्षराणि । तत्र "चतुर्विंशत्यक्षरैर्गायत्र्यन्तर्भूता । "यानि अधिकाक्षराणि "चत्वारि सन्ति "ते "चतुष्पात्पशुस्वरूपा एव । पूर्वस्मिन् प्रपाठके "त्रिधातावीष्टौ (तैसं २·३·६) पुरोडाशस्योपरि पुरोडाशान्तरस्थापनं विहितम् । एवमत्रापि विधास्यते । एवं सति "यथा "पुरोडाशे "अधि उपरि अन्यः "पुरोडाशः स्थाप्यते, "एवम् "एव उष्णिक्छन्दस्कायाम् "ऋचि गायत्रीछन्दोक्षरसंख्यायाः अधिकाक्षराणि चत्वारीति "यत् "तत् अवगन्तव्यम् । अतः पुरोडाश-

२५ साम्यायाक्षराधिक्यं "युक्तमित्यभिप्रायः ॥

यदिति ॥ "प्रकृतौ—'आ जुहोत दुवस्यत' (तैब्रा ३·५·२) इति गायत्री सामिधेनीषु परिधानीया भवति । तामत्रापवदितुं त्रिष्टुभं विधत्ते—'यज्जगत्या परिदध्यादन्तं यज्ञं

४. मैऽ—'दुर्बोधं' नास्ति । ५. मैऽ—नाशाय ।

१. दहोर—चर्युनिरि । ३. द.होर—"स्वसुरूपाः । ४. ह—त्रैधातवीयेष्टौ । ५. होर—
३० दरति" । ६-६. अ.आ.उ.क.जो.ना.पा.हा.होर—प्रकृतौ द्वे ऋचावुक्ते आ जुहोत दुवस्यतेति गायत्री सामिधेनी ह्र्य यत्र इति जगती भवति, ते अपवदितुं ।

-न्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रति ष्ठापयति नान्तं गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय सर्वो वा एष यज्ञो यत् त्रैधातवीयं कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते

इन्द्रियम्। वै। वीर्यम्। त्रिष्टुक्। इन्द्रिये। एव। वीर्ये। यज्ञम्। प्रतीति। स्थापयति। न। अन्तम्। गमयति। अग्ने। त्री। ते। वाजिना। त्री। सधस्थेति सध स्था। इति। ५
त्रिवत्येति त्रि वत्या। परीति। दधाति। सरूपत्वायेति सरूप त्वाय। सर्वः। वै। एषः। यज्ञः।
यत्। त्रैधातवीयम्। कामायकामायेति कामाय कामाय। प्रेति। युज्यते। सर्वेभ्यः। हि।
कामेभ्यः। यज्ञः। प्रयुज्यत इति प्र युज्यते।

वर्धमानाक्षरा उष्णिहादिभावमापद्यमाना उपर्युपरि गच्छतीति जगतीत्युच्यते। त्रिष्टुगिति।
"अग्ने त्री ते वाजिना" इत्येतया। त्रिवत्येति। त्रिष्टुबन्तराद्वैलक्षण्यमस्या दर्शयति। "छन्दसीरः" १०
(पा ८ २ १५) इति मतुपो वत्वम्। सरूपत्वायेति। त्रित्वान्वयात् त्रैधातवीय सारूप्यमिति॥
सर्वो वा इत्यादि॥ त्रैधातवीयाख्य यत् इदं कर्म एष सर्वः यज्ञ सर्वयज्ञतुल्य इति
यावत्। 'यत् त्रि प्रायच्छन् त्रि प्रत्यगृह्णात्' इति त्रिषु लोकेषु भव इन्द्राविष्णो सम्बन्धी

गमयेत् त्रिष्टुभा परि दधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रति ष्ठापयति नान्तं गमयति'
इति॥ उष्णिक्छन्दसो जगतीवीर्यत्वेन निरूपितत्वात् तदेवात्र जगतीशब्देन विवक्ष्यते। तस्मिंश्चौष्णिकछन्दसि १५
गायत्र्यन्तर्भावस्योक्तत्वाल्लक्षितलक्षणया जगतीशब्दो गायत्रीं ब्रूते। तथा सति प्रकृतियज्ञाय या परिधानं यद्
तदेवात्र जगतीपरिधानमिति विवक्षितत्वात् तत्र "नाम इत्युच्यते"। अथवा शाखान्तरानुसारेण मुख्यैव
जगत्याऽत्र प्राप्त परिधानं दृष्यते। तत्परिधाने हि यज्ञ नाशितवान् भवति। अथ त्रिष्टुभा परिदध्यात्
सामिधेनी समापयेदित्यथ। त्रिष्टुभ इन्द्रियसामर्थ्यरूपत्वात यज्ञ सामर्थ्ये प्रतिष्ठापितवान् भवति। ततो
यज्ञं न नाशयति॥ २०

अग्न इति॥ तां त्रिष्टुभं दर्शयति– 'अग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति
सरूपत्वाय' इति॥ त्रिशब्दा बहवो यस्या सन्तीति त्रिवती। सेयं तृतीयकाण्डस्य द्वितीयप्रपाठके
समाम्नास्यमानत्वात् तत्रैव (तैसं ३ २ ११) व्याख्यास्यते॥ यथाऽस्यामृचि त्रिशब्दस्तथा त्रैधातवीय
कर्मनामन्यपि त्रिशब्दोऽस्तीति सारूप्यम्॥

सर्व इति॥ सर्वकामसाधनत्वेन याग विधत्ते–'सर्वो वा एष यज्ञो यत् त्रैधातवीयं कामायकामाय २५
प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते' इति॥ सर्वेषु यज्ञेषु यानि छन्दांसि प्रयोक्तव्यानि तानि
सर्वाण्यत्रौष्णिकच्छन्दस्येवात्र रूप्याणीत्युक्तम्। अतोऽयं सर्वयज्ञस्वरूपत्वादस्य यः कामोऽस्ति तेन तदर्थं
प्रयोक्तव्यः। यस्माज्ज्योतिष्टोमादिरखिलः यज्ञः सर्वकामार्थं प्रयुज्यते तस्मात् सर्वयज्ञस्वरूपत्वादस्य
सर्वकामार्थत्वं युक्तम्॥

६ तर– 'जगती' नास्ति। ■ त१ त२,ल– भवत, मे भवत [ वनो ]। ३०

७ इ–वर्णितत्वात्। ८–८ हो१–दोष उच्यते। ९ ड–अत। १० अ उ पा–यथान्यामृचि।

त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा (२) एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्ये-

५ त्रैधातवीयेन। यजेत। अभिचरन्नित्यभि चरन्। सर्वः। वै (२)। एषः। यज्ञः। यत्। त्रैधातवीयम्। सर्वेण। एव। एनम्। यज्ञेन। अभीति। चरति। स्तृणुते। एव। एनम्। एतया। एव। यजेत। अभिचर्यमाण इत्यभि-चर्यमाणः। सर्वः। वै। एषः। यज्ञः। यत्। त्रैधातवीयम्। सर्वेण। एव। यज्ञेन। यजते। न। एनम्। अभिचरन्नित्यभि चरन्। स्तृणुते। एतया। एव। यजेत। सहस्रेण। यक्ष्यमाणः। प्रजातमिति प्र जातम्। एव। एनत्। ददाति।

१० वीर्यविशेषः त्रैधातवः। तत्प्राप्तिहेतुत्वेन तत्सम्बन्धि कर्म त्रैधातवीयम् इष्टिलक्षणम्। कामायकामाय सर्वस्मै कामाय स्वर्गपशुप्रजादिकामाय प्र युज्यते। हेतुमाह– 'सर्वेभ्यः हि' इति। सामान्यविवक्षयैकवचनम्। सर्वकामसंपत्तिः यज्ञैर्भवति। अयं च यागः सर्वयज्ञात्मा, तस्मात् सर्वेभ्यः कामेभ्यः प्रयोक्तव्य इति॥

सर्वेणैवैनमिति॥ अस्य सर्वयज्ञात्मकत्वात् अनेन यजमानः सर्वेण आभिचारिकेण
१५ यज्ञेन एनम् अभिचरितव्यम् अभि चरति। ततः एनं स्तृणुते हिनस्ति एव। सर्वेणैवेति। अस्य सर्वयज्ञात्मकत्वात्। सर्वेण अभिचारादिदोषनिघातार्थेनापि यज्ञेन अयं यजमानो भवति। ततः एनम् अभिचरन् न स्तृणुते॥

प्रजातमिति॥ प्रजातं संतानवत् अविच्छिन्नम् एव सहस्रं ददाति। उत्तरोत्तरप्रभूतमिति यावत्। सर्वयज्ञत्वेन अस्य धनाभिवृद्धिहेतुत्वात्। ईजान इति। इष्टवान् सहस्रेण

२० त्रैधातवीयेनेति॥ सामान्येन सर्वकामार्थत्वं विधाय विशेषतोऽभिचारहेतुत्वं विधत्ते– 'त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा एष यज्ञो यत् त्रैधातवीयं सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनम्' इति॥

एतयेति॥ अभिचारपरिहारार्थत्वं विधत्ते– 'एतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत् त्रैधातवीयं सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुते' इति॥ एतया एव त्रैधातवीयेष्ट्यैव॥

२५ एतयेति॥ सहस्रदक्षिणाकस्य ज्योतिर्विश्वज्योतिरसोर्यामसहाव्रतादेरनुष्ठानसिद्धिं प्रति साधनत्वं विधत्ते– 'एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददाति' इति॥ यस्तु सहस्रदक्षिणा

८. तै१ तै२ मै९– य। ९. तै१ तै२– 'कामेभ्य' नास्ति। १०. तै१ तै२– यत (?) यज्ञा°
११. तै१ तै२– अभिचारिणा। १२. मै८– सर्वेणैव येति। १३. तै१ तै२– यज्ञ। १४. तै१ तै२– तौ।

१७. इ– [illegible]। १९. इ– [illegible]।

-तयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति (३) यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत तांस्त्रैधातवीयेनैवासृजत य एवं विद्वांस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरँ सहस्रं नमति देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत　　　५

एतया । एव । यजेत । सहस्रेण । ईजानः । अन्तम् । वै । एषः । पशूनाम् । गच्छति (३) । यः । सहस्रेण । यजते । प्रजापतिरिति प्रजा-पतिः । खलु । वै । पशून् । असृजत । तान् । त्रैधातवीयेन । एव । असृजत । यः । एवम् । विद्वान् । त्रैधातवीयेन । पशुकाम इति पशु-कामः । यजते । यस्मात् । एव । योनेः । प्रजापतिरिति प्रजा-पतिः । पशून् । असृजत । तस्मात् । एव । एनान् । सृजते । उपेति । एनम् । उत्तरमित्युत्-तरम् । सहस्रम् । नमति । देवताभ्यः । १०
वै । एषः । एति । वृश्च्यते । यः । यक्ष्ये । इति । उक्त्वा । न । यजते । त्रैधातवीयेन । यजेत ।

[४]पशूनाम् [५]अन्तं समाप्तिं [४]गच्छति अपशुरेव स्यात् । यस्मादिति । [१५]त्रैधातवीयेनोत्सृजते । उपैनमुत्तरमिति । यागप्रभावात् सहस्रान्तरम् [४]एनम् [४]उप [४]नमति ॥

यो यक्ष्य इत्युक्त्वेति ॥ यज्ञार्थं कृतसङ्कल्पः तेन यज्ञेन अनिष्टवानपि सर्वयज्ञात्मकेनानेन यजमानः तेनापीष्टवान् भवति । तस्मादयागदोषाभावात् [४]देवताभ्य [४]न [४]वृश्च्यते न [१६]हीयते ॥ १५

येन यागेन [१३]यष्टुमसमर्थः सन्नहं तेन यक्ष्य इति कामयते सोऽयम् [१]एतया [१४]इष्ट्वा [१]यजेत[१४] । पश्चात् तत्र [१]यजमानः प्रभूतं बहुविधं सहस्रं गां दातुं शक्तो भवत्येव । ततस्तस्मादिदं कर्मानुष्ठानं सिध्यति ॥

एतयैवेति ॥ अथ सहस्रदक्षिणाकेन यागेनेष्टवतः [१५]उपरितनबहुविधयज्ञसाधनद्रव्यार्थं विधत्ते— 'एतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत तांस्त्रैधातवीयेनैवासृजत य एवं विद्वांस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः २० पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरँ सहस्रं नमति ' इति ॥ [१]यः पुमान् गोसहस्रदक्षिणाकेन यागेनेष्टवान् भवति स [२]एष [४]पशूनाम् अवसानं प्राप्नोति । तेनोत्तरक्रतूननुष्ठातुमसमर्थो भवति । अतस्तत्सामर्थ्याय [४]पशुकामः सन् प्रजापतिवत् [१५]एतया इष्ट्वा पशुयोनेरस्मादेव यागात् पशून् प्राप्नोति । [१७]तत उत्तरक्रतुषु [१७]दातव्यं गोसहस्रम् [४]एनं यजमानं प्राप्नोति ॥

देवताभ्य इति ॥ यज्ञसङ्कल्प्याननुष्ठातुः सङ्कल्पभ्रंशपरिहारार्थं विधत्ते— ' देवताभ्यो वा एष २५ आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञो यत् त्रैधातवीयं सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते ' इति ॥ [१८]आवृश्चनं सर्वथा विच्छेदो देवताद्रोह इति यावत् ॥

१५ मै४– त्रैधातवीयाख्यात । १६ त१ त२ प२ ट– स्थीयते ।

१३ ट–°मशक्त । १४–१४. गृ हो१– इष्ट्वा । १५ ङ हो१– 'उपरितनबहुविध°' नास्ति । १६ आ ब– एतेन । १७–१७ आ– तदुत्तर° । १८ अ आ उ क को ङ ना पा गृ हा हो१– आवृश्चनं ।

　　　　　३०

सर्वो वा एष यज्ञो ( ४ ) यत् त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिष्षमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोका यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै

५ सर्वः । वै । एषः । यज्ञः ( ४ ) । यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । देवताभ्य । एति । वृश्च्यते । द्वादशकपाल इति द्वादश कपाल । पुरोडाशः । भवति । ते । त्रय । चतुष्कपाला इति चतु कपाला । त्रिष्षमृद्धत्वायेति त्रिष्षमृद्ध त्वाय । त्रय । पुरोडाशा । भवन्ति । त्रय । इमे । लोका । एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तर –उत्तर । ज्यायान् । भवति । एवम् । इव । हि । इमे । लोका । यवमय इति यव-मय । मध्ये । एतत् ।
१० वै । अन्तरिक्षस्य । रूपम् । समृद्ध्या इति सम् ऋद्ध्यै ।

द्वादशकपाल इति ॥ चतुरो मुष्टीन् व्रीहीणा निरुप्य चतुरो यवाना निरुप्य पुनश्चतुरो व्रीहीणा निर्वपेत् । गार्हपत्ये द्वादशकपालान्युपदधाति । सर्वत्रैन्द्राविष्णुभ्यामेव निर्वापादि । ते त्रय इति । अवयुत्य सख्यास्तुति । त्रिष्षमृद्धत्व तिसृभिरावृत्तिभिर्योग । त्रैधातवीयानुरूपत्वम् । त्रय इति । उपर्युपर्यवस्थिता । [१७]उत्तरउत्तर पूर्वस्मात् पूर्वस्मात् [१७]ज्यायान् वृद्धतर । 'इमे खलु
१५ [१७]लोका पृथिव्यादय उत्तरमुत्तर ज्यायास । यवमय इति । "द्व्यचश्छन्दसि" (पा ४ ३ १५०) इति विकारे मयट् । एतद्वा इति । यौति [१८]"पृथग्भावे ।"[१८] पृथग्भूत वा सर्वपदार्थेभ्योऽन्तरिक्षम्[१८] ।

द्वादशकपाल इति ॥ अस्मिन् कर्मणि द्रव्य विधत्ते– 'द्वादशकपाल पुरोडाशो भवति त त्रयश्चतुष्कपालास्त्रिष्षमृद्धत्वाय' इति ॥ समूहाकारेण [१९]गणनाया द्वादशकपालत्वेऽप्यनुष्ठाने त्रिसख्याका [१९]चतुष्कपाला कर्तव्या । [२०]तया त्रिसख्यया यजमानस्य त्रिवार समृद्धत्व सपद्यते ॥
२० त्रय इति ॥ पुरोडाशसख्या प्रशसति– 'त्रय पुरोडाशा भवन्ति त्रय इमे लोका एषा लोकानामाप्त्यै' इति ॥

उत्तर उत्तर इति ॥ [२१]पूर्वप्रपाठकोक्तविधानादिव (तैस २ ३ ६) प्रमाणमेवाय विधत्ते– 'उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोका' इति ॥

यवमय इति ॥ चोदकप्राप्तं व्रीहिमयत्वमपवदितु [२२]यवमय विधत्ते– 'यवमयो मध्य एतद्वा
२५ अन्तरिक्षस्य रूपꣳ समृद्ध्यै' इति ॥ भूलोकवर्तिनो मनुष्या स्वर्गलोकवर्तिन सूर्यचन्द्रादयश्च विस्पष्टम्

१७ तै१ १०२ मै १०– पृथग्भाव । १८–१८ तै१ तै२ मै २– पृथग्भूतश्च सर्वपदार्थोऽन्तरिक्षम् ।

१९ को१– गणनया । २० आ क ट ९ को१– तया । २१ ट– एव प्रवा°, ग– °विधानो वा । २२ ट ग– 'यवमय' नास्ति ।

सर्वेषामभिगमयन्नवै घ्यत्यछम्बट्कार॒ हिर॑ण्यं ददाति तेज॑ एवा(५)वं रुन्द्धे ताप्य॑
द॑दाति प॒शूने॒वाव॑ रुन्द्धे धे॒नुं द॑दात्या॒शिष॑ ए॒वाव॑ रुन्द्धे साम्नो॒ वा

सर्वे॑षाम् । अ॒भि॒ग॒म॒यन्नित्य॑भि - ग॒मय॑न् । अवे॑ति॑ । च्यति॑ । अछम्बट्का॒र॒मित्य॑छम्बट् - का॒र॒म् ।
हि॑रण्यम् । द॒दा॒ति॒ । तेजः॑ । ए॒व ( ५ ) । अवे॑ति॑ । रु॒न्द्धे । ताप्य॑म् । द॒दा॒ति॒ । प॒शून् । ए॒व ।
अवेति॑ । रु॒न्द्धे । धे॒नुम् । द॒दा॒ति॒ । आ॒शिष॑ इत्या॑ - शिषः॑ । ए॒व । अवे॑ति॑ । रु॒न्द्धे । साम्नः॑ । वै । ५

सर्वेषामभिगमयन्नित्यादि । व्याख्यातम् ( तैस २.३.६ ) ॥

हिरण्यमिति ॥ अन्वाहार्यमासाद्य सहस्र [२४]हिरण्य [२५]ददाति । ताप्यं घृताक्त वासः, तत् घृतसम्बन्धात् पशुलाभहेतुः । धेनुः प्रत्यग्रप्रसवा गौः । [१२-१९]"सा प्रीणनहेतुत्वात्"[१९] तत आशिषां लाभः । साम्नो वा इति । तस्य तैजसत्वात् "सर्वं तेजः सामरूप्यम्" ( तैब्रा ३.१२.९ )

उपलभ्यन्त इत्यस्ति तयोरेकविधत्वम् । अन्तरिक्षवर्तिनस्तु यक्षगन्धर्वादयो नोपलभ्यन्त इति वैलक्षण्यम् । १० एवं [२३]यजमानस्य [२४]इतरवैलक्षण्यादन्तरिक्षरूपत्वम् । तच्च [२५]समृद्ध्यै संपद्यते ॥

सर्वेषामिति ॥ [२६]त्रिधातुवत् ( तैसं २.३.६ ) त्रिष्वपि पुरोडाशेषु सकृदेव हस्तस्पर्शेनावदानं विधत्ते– 'सर्वेषामभिगमयन्नव घ्यत्यछम्बट्कारम्' इति ॥

हिरण्यमिति ॥ यदुक्तं सूत्रकारेण–"हिरण्यं ताप्यं धेनुरिति दक्षिणा" (आपश्रौ १९.२७.२१) इति तदेतद्विधत्ते –'हिरण्यं ददाति तेज एवाव रुन्द्धे ताप्यं ददाति पशूनेवाव रुन्द्धे धेनुं ददात्याशिष १५ एवाव रुन्द्धे साम्नो वा एष वर्णो यद्धिरण्यं यजुषां ताप्यमुक्थामदानां धेनुरेतानेव सर्वान् वर्णानव रुन्द्धे' इति ॥ हिरण्यस्य [२७]तेजस्वित्वात् तद्दानेन तेजःप्राप्तिः । ताप्यस्य [२८]घृताक्तवस्त्रत्वात् तद्दानेन पशुप्राप्तिः । धेनोः कामधेनुत्वसाम्यात् तद्दानेनाऽऽशिषां प्राप्तिः । "सर्वं तेजः सामरूप्यꣳ ह शश्वत्" ( तैब्रा ३.१२.९ ) इत्याम्नानाद्धिरण्यस्य सामवर्णत्वम् । "यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिम्" (तैब्रा ३.१२.९) इत्याम्नातत्वात्, ताप्यस्य च राजसूये *क्षत्रियेण परिहितत्वात्तदीयं संबन्धमभिप्रेत्य ताप्यं यजुषां [२९]वर्णः स्वरूपमित्युच्यते । २०

१२-१९. मै– सप्रीणनहेतुत्वात् ।

२३. इ – यजमानस्य । २४. अ – वैलक्षण्यात्, उ.पा – इह वैलक्षण्यात् । २५. हा– समृद्ध्यैव । २६. होर– त्रिधातावित्र । २७. ड– तेजस्त्वात्° । २८. होर– °वस्त्रत्वात्° । *[द्र. तैब्रा १.७.६.–"क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति ताप्यं चोष्णीषं च प्रयच्छति सयोनित्वाय"; आपश्रौ १८.१४.१ ]।

एष वर्णो यद्धिरण्यं यजुषां ताप्यैमुक्थामदानां धेनुरेतानेव
सर्वान् वर्णानवं रुन्द्धे ॥ ११ ॥
[ जगत्याऽभिचरन्त्सर्वो वै गच्छति यज्ञस्तेज एव त्रिःशच्च । ]

एषः । वर्णः । यत् । हिरण्यम् । यजुषाम् । ताप्यम् । उक्थामदानामित्युंक्थ-मदानाम् । धेनुः ।
५ एतान् । एव । सर्वान् । वर्णान् । अवेति । रुन्द्धे ॥ ११ ॥
[ मैसं २·४·४,५, कासं १२·४ ]

इति दर्शनाच्च । [7]यजुषां वर्णो [8]ताप्यम्, द्वयोः क्षत्रसम्बन्धित्वात् । क्षत्रं द्वितीयो वर्णः, [9]धेनुः च [9]उक्थामदानां शस्त्राणामृचामित्यर्थः । तासां वर्णो धेनुः, [20]प्रीणनहेतुत्वात् ॥

इति द्वितीये चतुर्थे एकादशोऽनुवाकः ॥

१० उक्थैः शस्त्रैर्देवतानां जायमाना मदा याद्दक्षु वा ऋच उक्थामदास्तासां नवप्रसूतधेनुवत् [29]हर्षहेतुत्वात् धेन्वा ऋग्वर्णत्वम् । उक्तद्रव्यत्रयदानेनोक्तान् [7]वर्णान् प्राप्नोति ॥

अत्र मीमांसा ॥ षष्ठाध्यायस्य द्वितीयपादे चिन्तितम्—
"असमाप्यं समाप्यं वा [30]काम्यं [31]कामे निवर्तिते"[32] ।
आद्यः प्रयोजनाभावादन्त्यो "निन्दादिसंश्रवात्" ॥ (जैन्या ६·२·४) ॥

१५ "चित्रया यजेत पशुकामः" (तैसं २·४·६), "कारीर्या वृष्टिकामो यजेत" (आपश्रौ १९·२५·१६) इत्यादिषु कामप्रेरितेन पुरुषेण [33]"कर्मोपक्रान्तम् । तस्य[34] च समाप्तेः प्रागेव केनचिन्निमित्तेन तत्फलप्राप्तौ दोषदर्शनेन वा कामो निवर्तते तदानीं कर्मानुष्ठाने प्रयोजनाभावात् समापनीयमिति चेत् । नैवम् । प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात् । 'देवताभ्यो वा एष आवृश्चते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत" इति [34]यदुभयं श्रुतं, तस्मात्समापनीयम् ॥

२० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः ॥

---

२०. तै१ तैर पैर ल– प्रीणनत्वात् ।

---

२९. आ ट– वर्णहेतु° । ३०. ट– काम्ये । ३१. अ उ पा– कामे निवर्तते, ओ द्वा– कर्मे (?) निवर्तेत ; ट– कामे निवर्ते । ३२. अ ना– °संश्रयात् । ३३ ट– कर्मोपक्रान्तस्य । ३४. आ ट ना हो१– तदुभयं ।

त्वष्टा ह॒तपु॑त्रो॒ वीन्द्र॒ꣳ॒ सोम॒माऽह॑र॒त् तस्मि॑न्नि॒न्द्र॑ उपह॒वमै॑च्छत॒ तं नोपा॑ह्वयत पु॒त्रं मे॑ऽवधी॒रिति॒ स य॑ज्ञवेश॒सं कृ॒त्वा प्रा॒सहा॒ सोम॑मपिबत् तस्य॒ यद॒त्यशि॑ष्यत॒ तत् त्वष्टाऽऽह॑व॒नीय॒मुप॒ प्राव॑र्तयत्॒ स्वाहेन्द्र॑शत्रु॒र्वर्ध॒स्वेति॒ स याव॑दू॒र्ध्वः

त्वष्टा॑ । ह॒तपु॑त्र॒ इति॑ ह॒त पु॒त्र॒ । वीन्द्र॒मिति॒ वि-इ॒न्द्र॒म् । सोम॑म् । एति॑ । अ॒ह॒र॒त् । तस्मि॑न् । इन्द्रः॑ । उ॒प॒ह॒वमित्यु॑प ह॒वम् । ऐ॒च्छ॒त॒ । तम् । न । उपेति॑ । अ॒ह्व॒य॒त॒ । पु॒त्रम् । मे॒ । अ॒व॒धी॒ । ५
इति॑ । स । य॒ज्ञ॒वे॒श॒समिति॑ यज्ञ वे॒श॒सम् । कृ॒त्वा । प्रा॒सहेति॑ प्र-सहा॑ । सोम॑म् । अ॒पि॒ब॒त् । तस्य॑ । यत् । अ॒त्यशि॑ष्य॒तेत्य॑ति-अशि॑ष्यत । तत् । त्वष्टा॑ । आ॒ह॒व॒नीय॒मित्या॑-ह॒वनी॑यम् । उप॑ । प्रेति॑ । अ॒व॒र्त॒य॒त् । स्वाहा॑ । इन्द्र॑शत्रु॒रितीन्द्र॑ श॒त्रु॒ । व॒र्ध॒स्व॒ । इति॑ । स । याव॑त् । ऊ॒र्ध्वः ।

त्वष्टा हतपुत्र इत्यादि ॥ इन्द्रेण हतपुत्र त्वष्टा इन्द्रनिरहित सोमम् आ अहरत् । तत एवैनं क्रुद्ध इन्द्रं यज्ञे न उप अह्वयत । अथ स इन्द्र यज्ञहिंसा कृत्वा प्रासहा १०
प्रसह्य सोमम् अपिबत् तेनाननुज्ञातो बलेनैवापिबत् । सहते क्विपि "नहिवृतिवृषि" (पा ६ ३ ११६ ) इति पूर्वपदस्य दीर्घत्वम् । अथ त्वष्टा इन्द्रपीतो य त सोमं गृहीत्वा तेन आहवनीयम् उपेत्य अग्नि प्र अवर्तयत् उददीपयत् उदीर्णज्वालमकरोत् । उत्थापना प्रवर्तना । यथा–"यत् प्रानर्तत । तत् प्रवर्ग्यस्य प्रवर्ग्यत्वम्" ( तैआ ५ १ ) इति । स्वाहा

त्रैधातवीयतद्द्रव्ये एकादश उदीरते ॥ १५

त्वष्टेति ॥ अथ द्वादशे तस्य द्रव्यस्यैन्द्राविष्णुदेवताकस्य सहस्रदक्षिणा च विधास्यमानादौ कर्मनाम्नि त्रिधातुत्वसपादनायोपाख्यानं दर्शयति– 'त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' इति ॥ विश्वरूप नाम्न त्वष्टृपुत्रस्येन्द्रेण कृतो वध उपरितनप्रपाठकस्य प्रथमानुवाके स्पष्टीभविष्यति । स च हतपुत्र त्वष्टा कोपात् इन्द्ररहित सोमयाग कर्तुमुद्यत । तस्मिन् यागे मामाह्वयेत्येवम् इन्द्र अब्रवीत् । स तु २०
त्वष्टा पुत्र मे अवधी इति वदन् तम् इन्द्र न उपाह्वयत । स चेन्द्रो यज्ञस्य विघात कृत्वा बलात्कारेण सोमम् अपिबत् ।

तस्येति ॥ अथ त्वष्टुरभिचारहोमेनेन्द्रवधहेतो पुरुषस्योत्पत्ति दर्शयति– 'तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वं पराविध्यति तावति स्वयमेव

१-१ त१ त२– तत एव तत्र यज्ञे नोपाह्वयत, मै ल तत एव त यज्ञे नोपाह्वयत । २ त१– २५
असह्यम् त२– प्रसह्य असह्यम्, मै४– 'प्रसह्य' नास्ति । ३-३ प२– इन्द्रपीतशेषसोमम् मै४– इन्द्रपीत सोमम्, त१ त२ ल– इन्द्रपीतये त सोमम । ४-४ मै४– उत्थापन प्रवर्तनाय ।

१ अ उ जो ना पा– त्रैधातवीया तद्द्रव्ये । २ अ उ क जो ना पा हा– द्रव्यस्य ऐन्द्राविष्णु°, इ– द्रव्यस्य ऐन्द्रादिविष्णु°, क ग हो१– इन्द्राविष्णु° । ३ अ उ ना जो पा हा– कृतस्य कृत । ४ अ– सोमपान, हा– सोमयोग । ५ आ– त्वष्ट त । ६ आ– अवदत् । ७ अ आ उ क जो ना पा हा– पीतवान् । ३०

[ काम्या इष्टयः

परा॑विध्य॒तीति॒ ताव॑ति॒ स्वय॑मे॒व व्य॑रमत॒ यदि॑ वा॒ ताव॑त् प्रव॒ण (१) मासी॒द्यदि॑ वा॒ ताव॑द॒ध्य॑ग्नेरासी॒त् स सं॒भव॑न्न॒ग्नीषोमा॑व॒भि सम॑भवत्

प॒रा॒वि॒ध्य॒तीति॑ परा॒ऽवि॒ध्य॒ति॒ । ताव॑ति । स्व॒यम् । ए॒व । वीति॑ । अ॒र॒म॒त॒ । यदि॑ । वा॒ । ताव॑त् । प्र॒व॒णमिति॑ प्र-व॒नम् (१) । आसी॑त् । यदि॑ । वा॒ । ताव॑त् । अधीति॑ । अ॒ग्ने । आसी॑त् । स । स॒म्भव॒न्निति॑ स॒-भव॑न् । अ॒ग्नीषोमा॑वि॒त्य॒ग्नी-सोमौ॑ । अ॒भि । समिति॑ । अ॒भ॒व॒त॒ । ५

स्वाहुतमिदं तवास्तु, हे अग्ने, इन्द्रस्य शत्रुः शातयिता भूत्वा वर्धस्व इति । एवमिन्द्रस्य विनाशमाशासान ग्लानबुद्धिः अग्निं प्रार्थयत । अथ स अग्निः तेनोद्दीपितः यावत् ऊर्ध्वं गत्वा परा विध्यति पराहन्ति इन्द्रं बाधते तावति तत्र प्रागेव अग्निः स्वयम् एव वि अरमत निवृत्तोद्योगोऽभवत् , शत्रुरभिमतं नाकरोत् । केचिदाहुः— सोऽग्निस्त्वष्ट्रा उद्दीपितो १० यावदूर्ध्वः पराविध्यति यावत्याकाशप्रदेशे ऊर्ध्वो गत्वा पराविध्यति पराहन्ति तावति तत्र प्रागेव तदीयोद्दीपनप्रयत्नानुरूपमुर्ध्वगतिं कृत्वैव अकस्माज्झटिति स्वयमेव व्यरमत निवृत्ततेजा अभवत् । अयमभिप्राय — इन्द्रस्य शत्रु शातयिता नाशयिता अस्येत्यर्थः स्यात् , ततश्च इन्द्रेण

व्यरमत यदि वा तावत्प्रवणमासीद्यदि वा तावदध्यग्नेरासीत् स संभवन्नग्नीषोमावभि समभवत् ' इति । तस्य इन्द्रेण बलात् पीतस्य सोमस्य सबन्धि रसरूपं यत् अल्पम् अत्यशिष्यत तत् गृहीत्वा त्वष्टा अभिचार १५ कर्तुम् आहवनीयम् उपेत्य होमेन अग्निं वैर्युत्पादनाय प्रवृत्तमकरोत् । तस्मिन् होमे मन्त्रमिममुच्चारितवान् —' स्वाहेन्द्रशत्रुर्वर्धस्व ' इति । तस्यायमर्थः —हेऽग्ने, तुभ्यमिदं स्वाहुतं, पुनरिन्द्रस्य शातयिता शत्रुः भूत्वा वर्धस्व इति । स. अग्निर्यावता कालेन ऊर्ध्वज्वालारूपो भूत्वा पराभूतमिन्द्रं कर्तुं विध्यामीत्युद्यतो भवति तावति काले यदि स्वयम् एव विरतोऽभूत् ज्वाला शान्तेत्यर्थः । तत्र मन्त्रगतस्वरापराधो निमित्तम् । तथा हि, इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम् । २० आद्युदात्तस्त्वयं शब्दः प्रयुक्त । स च बहुव्रीहितां द्योतयति । "बहुव्रीहौ प्रकृत्या पूर्वपदम्" (पा ६·२·१) इति पूर्वपदाद्युदात्तत्वविधानात् । सति बहुव्रीहाविन्द्रः शातयिता यस्येत्यर्थो भवति । सोऽयं मन्त्रगत स्वरापराधः । अपराधाभावे सत्युन्नतया ज्वाल्या यजमानस्य कार्यसिद्धिः सूचिता भवति । अपराधे स्वयनतया ज्वाल्या यजमानस्य कार्यसिद्ध्यभाव. सूच्यते । यदि अत्र कार्यसिद्ध्यभावसूचनाय अग्ने प्रवणम् अवनतिरभूत् । यदि वा कार्यसिद्धेः सूचनार्थम् अग्नेः ज्वालाया अधिका वृद्धिरभूत् । २५ तथया तथा वा तिष्ठतु । सः स्वाग्नि पुरुषरूपेण संभवन् एव अग्नीषोमौ अभिप्राप्य समुत्पन्नो

५. ते१ तै२ न— हुतमिदं । ६. मै— ' भूत्वा ' नास्ति । ७. तै१ तै२ मै न— ' अग्नि ' नास्ति । ८. तै१ तै२ न— ' पराहन्ति ' नास्ति ।

८-८. इ,दो१— रसरूपं यत् , गृ— रसरूपं यदल्पम् । ९. अ उ.पा— ऊर्ध्वरूपो, इ— ऊर्ध्वज्वालनरूपो । १०. दा— आरिप्या° । ११. इ.गृ— बहुव्रीहित्वम् । १२. इ— पूर्वपदोदात्त° । १३. दो१— स्वकार्य° ३० १४-१४. अ.आ.उ.क.को.ना.पा दा— °सूचनायाग्नि , इ.गृ.दो१— सूचनयाग्ने. । १५. आ— अवनतासीत् । १६-१७ आ— अग्निज्वाला ।

स इ॑षुमा॒त्रमि॑षुमात्रं॒ विष्व॑ङ्ङवर्धत॒ स इ॒माँल्लो॒कान॑वृणो॒द्यदि॒माँल्लो॒कानवृ॑णो॒त्
तद्वृ॒त्रस्य॑ वृत्र॒त्वं

स । इ॒षु॒मा॒त्रमि॑षुमा॒त्रमितीषु॑मात्रम्-इ॒षु॒मा॒त्रम् । विष्व॑ङ् । अ॒व॒र्ध॒त । स । इ॒मान् । लो॒कान् ।
अ॒वृ॒णो॒त् । यत् । इ॒मान् । लो॒कान् । अवृ॑णोत् । तत् । वृ॒त्रस्य॑ । वृ॒त्र॒त्वमिति॑ वृत्र॒त्वम् ।

नाशयितव्यो वर्धस्वेति प्रार्थितत्वाद् इन्द्रेण नाशयितव्य कश्चिदस्या आहुतेर्जायेतेति तदनुरूप   ५
मेव अग्निना चेष्टितम् "आगामि इन्द्रेणास्य निपातनमिति सूचयितुमिति"। एव स्वरापराधेन
मन्त्रप्रयोगोऽभिमतनिघातहेतुरासीत् । यथोक्तम् —

"दुष्ट शब्द स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।

स वाग्वज्रो यजमान हिनस्ति यथेन्द्रशत्रु स्वरतोऽपराधात्" ॥ (द्र पाशि ५२) इति ।

अथ च शत्रुशब्द इदानीं क्रियाशब्दो द्रष्टव्य । "शातयिता शत्रु । जातिशब्दस्य बहुव्रीहि,   १०
तत्पुरुषवृत्त्यो फलविशेषाभावात्" । योऽस्माज्जायते "यज्ञात्, इन्द्रस्य वा शातयिता, इन्द्रेण
वा शातयितव्य, तस्यैव उद्भवो "वा स्यात् अभिभवो वा । अग्ने किमायातमित्याह– 'यदि
वा' इत्यादि ॥ यजमानस्य 'यदि 'वा 'प्रवणम् अवनतिर्भवति, 'यदि 'वा आधिक्यमुच्छ्रायो
भवति तदानीम् अग्ने एव 'तावत् प्रवण भवति, आधिक्य चाग्नेरेव तावत् भवति । [illegible]न्दसो
लुक् । "निपातैर्यद्यदिहन्त°" (पा ८ १ ३०) इति निघाताभाव । स सम्भवन्नित्यादि । 'स   १५
इन्द्रशत्रुत्वेन वर्धमानोऽग्निजन्मा पुरुष 'सम्भवन् विश्व जगद्व्याप्नुवन् 'अग्नीषोमौ "अपि
आक्रम्य" 'समभवत् अग्नीषोमावप्यभिव्याप्तवान् । "प्रमाणेनातिरेक सम्भव"। "ततो
यशीघ्रयाग्नीषोमाविषुप्रमाणया वृद्धया वर्धमान" दिनेदिने 'विष्वङ् नानागति 'अवर्धत क्रमेण
'इमान् सर्वानपि 'लोकान् 'अवृणोत् व्याप्तवान् । ततश्च "सवरणात् वृत्र इत्युच्यते" ॥

होमाधाराङ्गाराभिमानिनमग्निदेव हूयमानस्याभिमानिन सोमदेव च स्वमुखे प्रक्षिप्य उभयो "पार्श्वयो   २०
ऊर्ध्वाधोदन्तपङ्क्तिभ्या दष्टवानित्यर्थ । एतच्चोपरितनग्रन्थस्य "तावन्तावभि सन्दधौ वै स्व"
(तैब्रा २ ५ २) इत्यत्र स्पष्टीभविष्यति ॥

स इति ॥ एतस्योत्पन्नस्य पुरुषस्य वृत्रत्व दर्शयति– 'स इषुमात्रमिषुमात्र विष्वङ्ङवर्धत स
इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वम्' इति ॥ इषुपातो यावति देशे भवति तावन्त
देश सर्वासु दिक्षु व्याप्य प्रतिदिनमयम् 'अवर्धत, तत सर्वलोकावरणादस्य 'वृत्रत्वम् ॥   २५

९ मै४–'नाशयितव्य' इत्यस्यानन्तर 'वर्धयितव्य'। १० मै४–नागामि इन्द्रेणास्य निपातन
सूचितमिति। ११–११ त२ त२ मै ल–'शातयिता शत्रु विशेषाभावात्' नास्ति। १२ त१ त२ ७–
'यज्ञात्' नास्ति। १३. त१ त२ मै ल–'वा' नास्ति। १४–१४ मै४–अत्याक्रम्य। १५–१५ मै४–
प्रमाणानतिरेक सभव। १६–१६. मै४–तत सोऽग्नीषोमाविषुमात्रप्रमाणया वृद्धया वर्धमान, मै–'वर्धमान'
नास्ति। १७–१७. मै ल–स वरणाद्वृत्र उच्यते।   ३०

१७ अ ड उ ओ ना पा हा– 'पार्श्वयो' नास्ति।

**तस्मा॒दिन्द्रो॑ऽबिभे॒द॒पि॒ त्वष्टा॒ तस्मै॒ त्वष्टा॒ वज्र॑मसिञ्च॒त् तपो॒ वै स वज्र॑ आसी॒त् तमुद्य॑न्तुं॒ नाश॑क्नो॒दथ॒ वै त॒र्हि॑ विष्णु॒(२)र॒न्या दे॒वता॑ऽऽसी॒त् सो॑ऽब्रवी॒द्विष्ण॒वेही॒दमा ह॑रिष्या॒वो येना॒यमि॒दमि॒ति**

तस्मा॑त् । इन्द्रः॑ । अ॒बि॒भे॒त् । अपि॑ । त्वष्टा॑ । तस्मै॑ । त्वष्टा॑ । वज्र॑म् । अ॒सि॒ञ्च॒त् । तपः॑ । वै । स । वज्रः॑ । आ॒सी॒त् । तम् । उद्य॑न्त॒मित्यु॑त् य॒न्तु॒म् । न । अ॒श॒क्नो॒त् । अथ॑ । वै । त॒र्हि । विष्णु॑ (२) । अ॒न्या । दे॒वता॑ । आ॒सी॒त् । स । अ॒ब्र॒वी॒त् । विष्णो॑ । एति॑ । इ॒हि॒ । इ॒दम् । एति॑ । ह॒रि॒ष्या॒व॒ । येन॑ । अ॒यम् । इ॒दम् । इति॑ ।

^V^तस्मात् ^V^इन्द्र ^V^अबिभेत् । [१८] ^V^त्वष्टा ^V^अपि अबिभेत् [१८], यस्तस्य प्रवर्तयिता सोऽप्य बिभेत् इति अपिशब्दस्यार्थः ॥

१० तस्मा इत्यादि ॥ अथ ^V^त्वष्टा ^V^तस्मै वृत्राय त वृत्र निग्रहीतुम् । यद्वा—तस्मै इन्द्राय युद्धार्थिने ^V^वज्रम् आयुधम् ^V^असिञ्चत् उदपादयत् । तपोविशेषस्तेनोत्पादित ^V^स स्वय ^V^वज्र एवाभवत्, यद्वा—तदाय तपो वज्रत्वेनातिष्ठत् । अथेन्द्र केवल ^V^तम् उद्यन्तुं ^V^न ^V^अशक्नोत् । ^V^अथ ^V^तर्हि तदानीं ^V^विष्णु नाम ^V^अन्या ^V^देवता ^V^आसीत् इन्द्राय विपीदते आविरासीत् । अथेन्द्रस्तम् ^V^अब्रवीत्—हे ^V^विष्णो, ^V^एहि ^V^इदम् अस्य वीर्यम् ^V^आ ^V^हरिष्याव ^V^येन वीर्येण १५ ^V^अयम् ^V^इदम् विश्वम् अभूत् ^V^इति ॥

तस्मादिति ॥ अथास्य वृत्रस्य वधाय साधनभूतस्य [१९]वज्रस्योत्पत्तिं दर्शयति— 'तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत् तपो वै स वज्र आसीत्' इति ॥ ^V^तस्मात् सर्वलोकावरकाद्वृत्रात् ^V^इन्द्र ^V^अबिभेत् । यथेन्द्रस्तथा ^V^त्वष्टा ^V^अपि अबिभेत् । त्रिष्वपि लोकेष्वनेनाऽऽवृतेषु त्वष्टुरिन्द्रस्य चोभयो समान एव स्थानाभाव । तत ^V^त्वष्टा त वृत्र हन्तु [१९]तेनेन्द्रेण सह मैत्रीं कृत्वा[१९] ^V^तस्मै २० इन्द्राय ^V^वज्रम् ^V^असिञ्चत्, अस्त्ररूपत्वायाभिमन्त्रितेन जलेन तदीय वज्र प्रक्षाल्य तस्मै दत्तवानित्यर्थ । ^V^स अयमिन्द्रस्यपी ^V^वज्र अभिमन्त्रितत्वात् तपोरूप एव ^V^आसीत् ॥

तमिति ॥ तपोरूपस्य [२०]तस्य वज्रस्योद्यमनाय [२१]विष्णुमाहात्म्यापेक्षामिन्द्रस्य दर्शयति— 'तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुरन्या देवताऽऽसीत् सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनायमिदमिति' इति ॥ यमिन्द्र उद्यमने शक्तो नाभूत् तदानीं तस्येन्द्रस्य पुरत ^V^विष्णु नाम काचित ^V^देवता ^V^आसीत्, तं विष्णुमेव २५ प्रार्थितवान्—वृत्रस्य वीर्यं दृष्ट्वा भयमापन्नस्य मम हस्तो वज्रमुद्यन्तु न प्रभवति । ^V^येन वीर्येण ^V^अय वृत्र ^V^इद जगद्व्याप्तवान, [२२]तत् इद[२२] वीर्यम् आवाम् उभावस्मात् वृत्रात् ^V^आ ^V^हरिष्याव । अतो हे विष्णो, मम महकारित्वमाचरेति ॥

१८–१८ तै१ तै७– 'त्वष्टा अपि अबिभेत्' नास्ति ।

१८ आ क पा–भयोत्पत्तिं, इ–वृत्रस्योत्पत्तिं । १९–१९ ह्वो१–'तेनेन्द्रेण सह मैत्रीं कृत्वा' २० नास्ति । २० इ–'तस्य' नास्ति । २१. आ क–विष्णुमहत्त्वापेक्षा, ह्वा–विष्णुमाहात्म्यापेक्षा । २२ ह्वो१–तदिदम्, आ–तादृग्म् ।

स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयम-भिपर्यावर्ताद्ध्यबिभेद्यत् पृथिव्यां तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हारस्ति वा इदं (३) मयि वीर्यं तत् ते प्र दास्यामीति तदस्मै प्रायच्छत् तत् प्रत्यगृह्णादधा मेति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति

स । विष्णुः । त्रेधा । आत्मानम् । वि । नीति । अधत्त । पृथिव्याम् । तृतीयम् । अन्तरिक्षे । तृतीयम् । दिवि । तृतीयम् । अभिपर्यावर्तादित्यभि-पर्यावर्तात् । हि । अबिभेत् । यत् । पृथिव्याम् । तृतीयम् । आसीत् । तेन । इन्द्रः । वज्रम् । उदिति । अयच्छत् । विष्णवनुस्थित इति विष्णु-अनुस्थितः । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् ( ३ ) । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति । अगृह्णात् । अधाः । मा । इति । तत् । विष्णवे । अतीति । प्रेति । अयच्छत् । तत् । विष्णुः । प्रतीति । अगृह्णात् । अस्मासु । इन्द्रः । इन्द्रियम् । दधातु । इति ।

स विष्णुरित्यादि । गतम् । अभिपर्यावर्तादिति । अभितः परितः सर्वतः आक्रमणम् अभिपर्यावर्तनं, तत्परिहारार्थं तत्रो मा कार्षीदिति लोकत्रयेऽपि आत्मानं त्रेधा विभज्य स्थापितवान् ॥

यत्पृथिव्यामित्यादि ॥ तेन तृतीयेन सह विष्ण्वनुस्थितः विष्णुना गुणभावेन धारितः, सारथिनेव राजा गुणभावेन । अनोः कर्मप्रवचनीयत्वम् (पा १ ४ ८४), उपसर्गत्वाभावात् "उपसर्गात् सुनोति°" (पा ८ ३ ६५) इत्यादिना षत्वाभावः, कर्मप्रवचनीयत्वेऽपि व्यत्ययेन समासः । अथ स अब्रवीत् वृत्र मा मा प्र हाः प्रहार्षीः । सिचि वृद्धौ (पा ७ २ १), "बहुलं छन्दसि" (पा ७ ३ ९७) इतीडभावः । अस्ति वा इत्यादि । गतम् । अथ

स इति ॥ [73]प्रार्थितस्य विष्णोः साहाय्याचरणप्रकारं दर्शयति—'स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेत्' इति ॥ विष्णुः मूर्तित्रयं सपाय रक्षणाय लोकत्रये स्थापितवान् । यस्मादस्य वृत्रस्य अभिपर्यावर्तात् सर्वव्याप्तिरूपात् वृत्रेरयमिन्द्रः अबिभेत् तस्मादिन्द्रभीतिनिवारणाय मूर्तित्रयस्थापनं युक्तमित्यभिप्रायः ॥

यदिति ॥ मूर्तित्रयस्थापनानन्तरं प्रवृत्तमिन्द्रव्यापारं दर्शयति—'यत् पृथिव्यां तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत् ते प्र दास्यामीति तदस्मै प्रायच्छत् तत् प्रत्यगृह्णादधा मेति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति' इति ॥ विष्णुना स्वकीयवक्ष्यमाणव्यापारापेक्षया तृतीयं शरीरं पृथिव्यां स्थापितम् आसीत् तेन युक्तः

७३ ह-भाषितस्य । ७४ ड-आचरणाय, हो१-चरणानि । ७५ ?-कर्मणि ।

यद॒न्तरि॑क्षे तृ॒तीय॒मासी॒त् तेने॒न्द्रो वज्र॒मुद॑यच्छ॒द्विष्ण्व॑नुस्थित॒ः सो॑ऽब्रवी॒न्मा मे॒ प्र हा॒रस्ति॒ वा इ॒दं ( ४ ) मयि॑ वी॒र्यं॑ तत् ते॒ प्र दा॑स्या॒मीति॒ तद॑स्मै॒ प्राय॑च्छ॒त् तत् प्रत्य॑गृह्णा॒द्द्विर्मा॑ऽधा॒ इति॒ तद्विष्ण॒वेऽति॒ प्राय॑च्छ॒त् तद्विष्णु॒ः प्रत्य॑गृह्णाद॒स्मास्विन्द्र॑ इन्द्रि॒यं द॑धा॒त्विति॑

५ यत्। अ॒न्तरि॑क्षे। तृ॒तीय॑म्। आसी॑त्। तेन॑। इन्द्र॑ः। वज्र॑म्। उदिति॑। अ॒य॒च्छ॒त्। विष्ण्व॑नुस्थित॒ इति॒ विष्णु॑-अ॒नु॒स्थि॒त॒ः। सः। अ॒ब्र॒वी॒त्। मा। मे॒। प्रेति॑। ह॒ाः। अस्ति॑। वै। इ॒दम् ( ८ )। मयि॑। वी॒र्य॑म्। तत्। ते॒। प्रेति॑। दा॒स्या॒मि॒। इति॑। तत्। अ॒स्मै॒। प्रेति॑। अ॒य॒च्छ॒त्। तत्। प्रतीति॑। अ॒गृ॒ह्णा॒त्। द्विः। मा॒। अ॒धा॒ः। इति॑। तत्। विष्ण॑वे। अति॑। प्रेति॑। अ॒य॒च्छ॒त्। तत्। विष्णु॑ः। प्रतीति॑। अ॒गृ॒ह्णा॒त्। अ॒स्मासु॑। इन्द्र॑ः। इ॒न्द्रि॒यम्। द॒धा॒तु॒। इति॑।

१० वृत्रेण दत्त वीर्यम् [19]इन्द्र प्रति अगृह्णात्[-19], तत् विष्णवे आत्मानमतीत्य प्रायच्छत्। यद्वा— प्रतिग्रहानन्तर तस्यान्यस्मै [20]प्रदानमतिप्रदानम्। किं ब्रुवन्? अधा मेति। माम् अधाः धारितवान् [21]त्वमसीति विष्णु वदन्। विष्णुः च तत् प्रति अगृह्णात्, कथ मन्यमान.? इन्द्र अस्मासु इन्द्रिय दधातु आस्थापयतु इन्द्रार्थमेव मयि तिष्ठतु इति[22] ॥

यदन्तरिक्ष इत्यादि समानम्॥ द्विः मा अधा. इति विशेष द्वौ वारौ मा

१५ धारितवानिति ॥

स इन्द्रः तस्य विष्णो. पृष्ठतः स्थितस्तं वज्रम् उदयच्छत्। तदानीं सः वृत्रो भीतः सन्निन्द्रम् [26]अब्रवीत्— हे इन्द्र, मे शरीर मा [27]प्रहा॰, अस्ति [28]वा इदं किञ्चित् मयि वीर्यं पृथिवीव्याप्तिक्षमं तत् सर्वं तुभ्यं दास्यामि इति उक्त्वा तत् इन्द्राय दत्तवान्। स चेन्द्रः तत् स्वीचकार, स्वीकृत्य च मां धारय इति ब्रुवन् विष्णवे तत् वीर्यमत्यादरेण प्रायच्छत्। स च विष्णु अस्मासु मध्येऽयम् इन्द्र. वीर्यं

२० धारयतु इति अभिप्रेत्येन्द्रार्थं तत् वीर्यं प्रत्यगृह्णात् ॥

यदिति ॥ इदमिन्द्रकृत्यं [29]द्वितीयपर्याये दर्शयति— 'यदन्तरिक्षे तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्ण्वनुस्थित. सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत् ते प्र दास्यामीति तदस्मै प्रायच्छत् तत् प्रत्यगृह्णाद्द्विर्माऽधा इति तद्विष्णवेऽति प्रायच्छत् तद्विष्णु प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति' इति। हे विष्णो, पूर्वं मद्वीर्यग्रहणेन मां [30]धारितवानसि, तदपेक्ष्य द्विः मां धारय इति

२५ ब्रुवन् वीर्यं प्रायच्छत् ॥

१९–१९. तं१.तं२.मै॰– 'इन्द्रः प्रत्यगृह्णात्' नास्ति। २०. तं१.तं२.मै॰– प्रदानमिति। २१. तं१. तं२.मै॰– त्वमिति। २२. मै८– इति भावः।

२६. आ.ट– इदमब्रवीत्। २७. ट– प्रहर। २८. क– वा, ना– च। २९. ड.क जो. ना.हा.गो१– °पर्यायेण। ३०. ड.क जो ना.हा– भृतवानसि।

यद्दिवि तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हार्येनाह(५)मिदमस्मि तत् ते प्र दास्यामीति त्वी३ इत्यब्रवीत् संधां तु सं दधावहै त्वामेव प्र विशानीति यन्मां प्रे विशेः किं मां भुञ्ज्या इत्यब्रवीत् त्वामेवेन्धीय

यत्। दिवि। तृतीयम्। आसीत्। तेन। इन्द्रः। वज्रम्। उदिति। अयच्छत्। विष्णवनुस्थित इति विष्णु - अनुस्थितः। सः। अब्रवीत्। मा। मे। प्रेति। हाः। येन। अहम् (५)। इदम्। अस्मि। तत्। ते। प्रेति। दास्यामि। इति। त्वी३। इति। अब्रवीत्। संधामिति सम् - धाम्। तु। समिति। दधावहै। त्वाम्। एव। प्रेति। विशानि। इति। यत्। माम्। प्रविशेरिति प्र - विशेः। किम्। मा। भुञ्ज्याः। इति। अब्रवीत्। त्वाम्। एव। इन्धीय।

यद्दिवीत्यादि ॥ गतम्। येनाहमिदमिति। पूर्वं वीर्यैकदेश [23]एव वृत्रेणेन्द्राय दत्त, इदानीं कृत्स्नप्रदानमभ्युपगच्छति — येन वीर्येण अहम् इद विश्वम् अस्मि तत् सर्वं ते दास्यामि इति। अब्रवीत् इन्द्र बाढमित्यर्थः। अभ्युपगमे प्लुत। अथ वृत्रोऽब्रवीत्— [24]सन्धा त्विति। त्व चाह च एकत्व प्रतिपद्यावहा[24] इत्यर्थ। यद्वा— त्वी इति पर्यनुयोगे विस्मृतस्मरणे वा। सर्वं वीर्यं ते प्रदास्यामीत्युक्तम्, अत्र किंचिद्विस्मृत तदिदानीं [25]स्मृतमिति स्मृतिम्[25] अभिनीयाब्रवीत् [26]वृत्र एव[26]—संधा त्विति तुशब्दो विशेषमाह। सर्वं वीर्यं ते प्रदास्यामि, किं तु आवां संदधावहै, त्वाम् एव अह [27]प्र विशानि[27] [28]यदीद लभ्यते ततो वीर्यं दास्यते इति। 'गोपोषं पुष्णाति' इतिवत् एक सदधाति सामान्यवचनो द्रष्टव्य। अथेन्द्रः अब्रवीत् यदा त्व मा प्रविशे किम् इदानीं मा प्रविश्य त्व मा भुञ्ज्याः? यद्वा—किं

यदिति ॥ [31]तृतीयपर्याये तस्येन्द्रस्य कृत्यं दर्शयति—'यद्दिवि तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हार्येनाहमिदमस्मि तत् ते प्र दास्यामीति त्वी३ इत्यब्रवीत्' इति। येन वीर्येण अहम् इदं जगद्व्याप्तवान् अस्मि तत् सर्वं ते प्र दास्यामि [32]इति उक्त इन्द्रोऽङ्गीचकार। अङ्गीकारार्थोऽयं त्वीशब्द[33], अस्तु तथेत्यर्थः ॥

संधामिति ॥ तस्य वीर्यस्य प्रदानात् प्रागेवेन्द्रवृत्रयोः संधिं दर्शयति— 'संधां तु सं दधावहै त्वामेव प्र विशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत् त्वामेवेन्धीय तव भोगाय त्वां प्र विशेय-मित्यब्रवीत् तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो य एवं वेद हन्ति क्षुधं भ्रातृव्यम्' इति ॥ तुशब्दो वक्तव्यशेषसद्भावद्योतनार्थः। तत्सर्वं [34]वीर्यं तुभ्य [34]दास्यामि, किं त्वन्यच्छेषं वक्तव्य-मस्ति। [35]आवामुभौ संधानं करवाव। कीदृशं संधानमिति तदुच्यते। हे इन्द्र, त्वाम् एव अहं

२३. मै लं–'एव' नास्ति। २४–२४ तं१ तं२ पं२– वृत्र एव शब्दो विशेष.। एकत्वं प्रति-पाद्यावहा। २५–२५. मै४– स्मृतम्। २६–२६. तं१, तं२ मै–वृत्रे एव। २७–२७. तं१ तं२–प्रविशामि। २८. तं१, तं२, मै, लं– यदिदम्।

३१. क.जो.ना.हा– °पर्यायेण। ३२. इ.क.जो.ना.हा– इत्युक्तवान्। ३३. ड हो१– 'वीर्यम्' ३० ।।स्ति। ३४. आ– दास्यामीति। ३५ आ – तावदुभौ।

तव॒ भोगा॑य त्वा॒ प्र वि॑शे॒यमित्य॑ब्रवी॒त् तं वृ॒त्रः प्रावि॑श॒दुद॑रं॒ वै वृ॒त्रः क्षुत् खलु॒ वै म॑नु॒ष्य॑स्य॒ भ्रातृ॑व्यो॒ य (६) ए॒वं वेद॒ हन्ति॒ क्षुधं॒ भ्रातृ॑व्यं॒ तद॑स्मै॒ प्राय॑च्छ॒त् तत् प्रत्य॑गृह्णा॒त् त्रिर्माऽधा॒ इति॒ तद्विष्ण॑वेऽति॒ प्राय॑च्छ॒त् तद्विष्णुः॒ प्रत्य॑गृह्णा॒दस्मास्विन्द्र॑ इन्द्रि॒यं द॒धात्विति॒ यत् त्रिः प्राय॑च्छ॒त् त्रिः प्र॒त्यगृ॑ह्णा॒त् तत् त्रि॒धातो॑स्त्रिधातु॒त्वं

५ तव॑ । भोगा॑य । त्वाम् । प्रेति॑ । वि॒शे॒यम् । इति॑ । अ॒ब्र॒वी॒त् । तम् । वृ॒त्रः । प्रेति॑ । अ॒वि॒श॒त् । उ॒द॑रम् । वै । वृ॒त्रः । क्षुत् । खलु॑ । वै । म॒नु॒ष्य॑स्य । भ्रातृ॑व्यः । यः (६)। ए॒वम् । वेद॑ । हन्ति॑ । क्षुध॑म् । भ्रातृ॑व्यम् । तत् । अ॒स्मै॒ । प्रेति॑ । अ॒य॒च्छ॒त् । तत् । प्र॒तीति॑ । अ॒गृ॒ह्णा॒त् । त्रिः । मा॒ । अ॒धाः॒ । इति॑ । तत् । विष्ण॑वे । अति॑ । प्रेति॑ । अ॒य॒च्छ॒त् । तत् । विष्णुः॑ । प्र॒तीति॑ । अ॒गृ॒ह्णा॒त् । अ॒स्मासु॑ । इन्द्रः॑ । इ॒न्द्रि॒यम् । द॒धा॒तु॒ । इति॑ । यत् । त्रिः । प्रेति॑ । अ॒य॒च्छ॒त् । त्रिः ।
१० प्र॒त्यगृ॑ह्णा॒दिति॑ प्रति॒ अगृ॑ह्णात् । तत् । त्रि॒धातो॒रिति॑ त्रि धातोः । त्रि॒धा॒तु॒त्वमिति॑ त्रिधातु त्वम् ।

मा प्रविश्य [ii]मामेव भुञ्ज्या, किं मामेव भोक्तुमारभसे ? अथ वृत्र [v]अब्रवीत् मम मतः [iv]त्वाम् [v]एव [v]इन्धीय दीपयेयम् अतः [v]तव एव भोगार्थं [v]त्वा [v]प्र विशेयम् [v]इति । भुजेर्लव्याडागमः, छान्दसोऽकारलोपः लुग्विकरणत्वेन वा अयम् । अथ इन्द्रेण [x]अनुमतः स्थितः यत्र क्षुदुपजायते, जाठराग्निरूपेणान्तः [xv]प्राविशत् इत्यर्थः । स च क्षुद्रूपो दिने दिने सर्वैर्हन्यते । क्षुत्खल्वित्यादि ।
१५ वेदितुः फलम् । अथ वृत्रः [v]तत् चात्मीयं वीर्यं कृत्स्नम् इन्द्राय [v]प्रायच्छत् तत्प्रवेशेन [v]सर्वशक्तिरिन्द्रोऽभवत् । इन्द्रश्च [v]तत् प्रतिगृह्य [v]विष्णवे [v]प्र [v]अयच्छत् [v]त्रिः [v]मा [v]अधाः त्रीन् वारान् मा धारितवानसि [v]इति । विष्णुरित्यादि । गतम् ॥

[1]प्रविशानि [2]इति, तत इन्द्र [3]एनम् [4]अब्रवीत् यदि त्वं [5]मां [6]प्रविशेः तदा [7]किं मामेव भोक्ष्यसे इति । ततो वृत्र [8]इन्द्रम् [9]अब्रवीत् नाहं त्वां भोक्ष्ये किं [10] [11]त्वाम् [12]इन्धीय उदराग्निप्रावल्येन प्रकाशयेय दीपयेय
२० तथा तव बहुविधान्नभोगायोपयुज्येत, ततस्त्वा प्रविशामीत्युक्त्वा [13]तम् इन्द्रं [14]वृत्र [15]प्राविशत् । [16]प्रविष्ट [17]वृत्र [18]यद्वह्निपूरणक्षममयथाशरूपम् [19]उदरम् अभवत् । लोकेऽपि [20]मनुष्यस्य उदरे वर्तमाना [21]क्षुत् [illegible] सहन [22]भ्रातृव्य । [23]एवं वेदेदस्य [24]क्षुदपघात फलम् ॥

तदिति ॥ तस्य वृत्रस्य प्रवेशात् पूर्वं [illegible] यदस्ति तदिदानीं दर्शयति– ' तदस्मै प्रायच्छत् तत् प्रत्यगृह्णात् त्रिर्माऽधा इति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं
२५ दधात्विति ' इति ॥ [25] इद [illegible] पूर्ववद्व्याख्येयम् ॥

यदिति ॥ इदानीं त्रिधातुनिर्वचनं दर्शयति – ' यत् त्रिः प्रायच्छत् त्रिः प्रत्यगृह्णात् तत् त्रिधातोस्त्रिधातुत्वम् ' इति ॥ वृत्रस्य त्रिवारप्रदानादिन्द्रस्य [26]त्रिवारप्रतिग्रहण च वीर्यस्यास्य पुरोडाशस्य

२९. ११ १२.[illegible]–[illegible]। ३८–३० [illegible]–अनुमता, मे अनु [तुमतो] भूत्वा, मे[illegible]–'अनुमत' [illegible] 'वृत्र तमब्रवीदुदरं'। ३१. मे–प्रविशामि। ३०–३२ तै१ तै२ –'सर्वशक्तिरिन्द्रोऽभवत्' नास्ति।
३० [illegible]
[illegible]

काम्या इष्टयः ]

यद्विष्णुरन्वतिष्ठत विष्णवेऽति प्रायच्छन् तस्मादैन्द्रावैष्णवꣳ हविर्भवति (७) यद्वा इदं किं च तदस्मै तत् प्रायच्छन्नृचः सामानि यजूꣳषि सहस्रं वा अस्मै तत् प्रायच्छन् तस्मात् सहस्रदक्षिणम्॥ १२ ॥

[ प्रगुण विष्णवां इदमिदमह यो मनुष्येकविꣳशतिश्च । ]

यत् । विष्णुः । अन्वतिष्ठतेत्यनु-अतिष्ठत । विष्णवे । अति । प्रेति । अयच्छन् । तस्मात् । ५
ऐन्द्रावैष्णवमित्यैन्द्रा-वैष्णवम् । हविः । भवति (७)। यत् । वै । इदम् । किम् । च । तत् ।
अस्मै । तत् । प्रेति । अयच्छन् । ऋचः । सामानि । यजूꣳषि । सहस्रम् । वै । अस्मै । तत् ।
प्रेति । अयच्छन् । तस्मात् । सहस्रदक्षिणमिति सहस्र-दक्षिणम् ॥ १२ ॥

[ मेल २४३, काम १२३ ]

यत् त्रिरित्यादि ॥ दानप्रतिग्रहयोस्त्रिरावृत्त्या त्रिधातुत्वं, वृत्रो दाता इन्द्रः प्रतिग्रहीता । १०
त्रयो धातवः दानानि [३३]धारणानि वा अस्येति त्रिधातुर्यागविशेषः, तत्सम्बन्धी यागः त्रैधातवीयम्
इह त्वभेदेनोच्यते । यद्विष्णुरित्यादि । यस्मात् विष्णुः इन्द्रम् अन्वतिष्ठत, यस्माच्च विष्णवे
इन्द्रः अति प्र अयच्छत् तस्मात् ऐन्द्रावैष्णवं हविः भवति ॥

यद्वा इति ॥ यत् किंचिदात्मनि वीर्यं निधत्ते ऋचः सामानि यजूꣳषि च,
[३४]ऋगादिनिमित्तमिति यावत्, तत् सर्वम् अस्मै इन्द्राय तदानीं वृत्रः प्रायच्छत् । अत एव १५
पूर्वानुवाके दक्षिणाभूतानां हिरण्यादीनां सामादिरूपेण वर्णना कृता । सहस्रं वा इति । सहस्र
वीर्याणि सहस्रप्रकारं वीर्यं तदा प्रायच्छत् । तस्मात् सहस्रहिरण्यदक्षिणत्वमस्य पूर्वमुक्तम् ॥

इति द्वितीये चतुर्थे द्वादशोऽनुवाकः ॥

हविषस्त्रिधा भिन्नस्य त्रिधातु नाम सम्पन्नम् । त्रयो धातवश्चतुष्कपालरूपा भेदा यस्य द्वादशकपाल
पुरोडाशस्य [४३]सोऽयं त्रिधातुः ॥ २०

यदिति ॥ तस्य [४४]हविषो व्यासक्तदेवता विधत्ते – ‘यद्विष्णुरन्वतिष्ठत विष्णवेऽति प्रायच्छत
तस्मादैन्द्रावैष्णवꣳ हविर्भवति’ इति ॥ [४५]यस्माद् विष्णुः अनुकूलत्वेन स्थितस्तस्मै च विष्णवे स्वयमिन्द्रो
ऽत्यादरेण प्रायच्छत् तस्मात् व्यासक्तयोरिन्द्राविष्ण्वोस्तत्र देवतात्वम् ॥

यदिति ॥ त्रिधा [४५]प्रत्त तद्धार्यरूपं हविर्वैन्द्रावरूपेण [४५]प्रशंसति– ‘यद्वा इदं किं च तदस्मै
तत् प्रायच्छदृचः सामानि यजूꣳषि’ इति ॥ २५

सहस्रमिति ॥ अत्र च या हिरण्यदक्षिणा पूर्वमुक्ता तस्याः संख्याविधिमुन्नयति– ‘सहस्रं वा
अस्मै तत् प्रायच्छन् तस्मात् सहस्रदक्षिणम्’ इति ॥ यस्मात् सहस्रभेदभिन्नं वीर्यं दत्तवान् [४६]तस्मात्
सहस्रदक्षिणात्मकम् इदं कर्म द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥ ३०

३३ ना१ तर मैल– धारणानि । ३४ तर– स्वर्गादिनिमित्तम् ।

४३-४३ आ ङ पा सोऽयं त्रिधातुः त्रिसंख्यातस्य, ङ श्र– सोऽयं त्रिधातुः तस्य, को ना– सोऽयं त्रिधातु
यत्र संख्यातस्य, क– त्रिधातुर्यत्संख्या तस्य ह्रा– त्रिधातुश्च संख्या तस्य र– ‘सोऽयं त्रिधातु त्रिगत्या
तस्य’ नास्ति, ह– सोऽयं त्रितयस्य, हो१– त्रितयस्य । ४४ ■ कओ ङ ना श्र ह्रा हो१– यस्मात्, कारणात् ।
४५-४५ ङ हो१ यत्तदीयं रूपं हविर्भेदत्रयरूपेण । ४६ ङ श्र हो– अतस्तस्मात् सहस्रहिरण्यदक्षिणात्मकम् । ३५

देवा वै राजन्याज्जायमानादबिभयुस्तमन्तरेव सन्तं दाम्नाऽपौम्भन्त्स वा एषोऽ-
पोब्धो जायते यद्राजन्यो यद्वा एषोऽनपोब्धो जायेत वृत्रान् घ्नश्चरेद्यं कामयेत

देवाः । वै । राजन्यात् । जायमानात् । अबिभयुः । तम् । अन्तः । एव । सन्तम् । दाम्ना ।
अपेति । औम्भन् । सः । वै । एषः । अपोब्ध इत्यप उब्धः । जायते । यत् । राजन्यः । यत् ।
५ वै । एषः । अनपोब्ध इत्यनप उब्धः । जायेत । वृत्रान् । घ्नन् । चरेत् । यम् । कामयेत ।

देवा वा इत्यादि ॥ [१]अन्तः गर्भे [१]एव [१]सन्तं [१]दाम्ना [१]अप [१]औम्भन् अपरुद्ध
शक्तिकम्[१] अकुर्वन् । उभ उम्भ पूरणे ॥

त्रैधातवीययागस्य द्वादशे देवतेरिता[१] ॥

देवा इति ॥ अथ त्रयोदशेऽनुवाके ऐन्द्राबार्हस्पत्य [२]चरु विधातु प्रस्तौति– 'देवा वै राज
१० न्याज्जायमानादबिभयुस्तमन्तरेव सन्तं दाम्नाऽपौम्भन्त्स वा एषोऽपोब्धो जायते यद्राजन्यो यद्वा एषो
ऽनपोब्धो जायेत वृत्रान् घ्नश्चरेत्' इति ॥ [३]राजन्यस्याप्रतिबद्धशक्तिकत्वेनेतरवैरिवद्देवानपि हनिष्यतीति
मत्वा [१]देवा भीता सन्तो गर्भमध्य एव स्थितं [१]सन्तं राजन्यं शक्तिप्रतिबन्धलक्षणेन [१]दाम्ना अपगतशक्तिको
यथा भवति तथा [१]औम्भन्[४] शक्तिप्रतिबन्धं पूरितवन्तः[५] । अत एव सर्वत्र लोके [१]राजन्यः प्रतिबद्ध
शक्तिक एव [१]जायते । यद्यप्रतिबद्धशक्तिकः [१]जायेत गर्भनिर्गमनमारभ्य वैरिणो [१]मारयन्नेव लोके [१]चरेत् ॥
१५ यमिति ॥ इदानीं विधत्ते– 'यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान् घ्नश्चरेदिति तस्मा
एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्रह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति' इति ॥
[१]यं [१]राजन्यं प्रत्यध्वर्युरेवं [१]कामयेत दैवैरप्रतिबद्धशक्तिकोऽयं जायतां, सर्वत्र निवारयन् वैरिणो मारयन्नेव
चरिष्यति तस्येयमिष्टिः । देवेष्विन्द्रस्य क्षत्रियत्वं बृहदारण्यके समाम्नातम्— "यान्येतानि देवत्रा
क्षत्राणीन्द्रो वरुणः सोमो रुद्रः" (बृउ १ ४ ११) इति । तस्मान्मनुष्येषु [१]राजन्यः [१]ऐन्द्रः । "ब्रह्म वै

२० [१] त१ त२ मै ल– °शक्तिकाङ्कम् ।

[१] ङ– देव ईरिता । [२] अ इ उ ओ ना पा हा– 'चरु' नास्ति । ३. ई– °तिहतशक्ति°, ओ– °निप्रधशक्ति°, हो१– °शक्तित्वेऽयतः, ङ– °तिबन्धशक्तित्वेनेतर° । ४–५. ई– शक्तिप्रतिबन्धं कारित वन्तः । [५] अ आ उ ना पा हा– मारयन्निव ।

राजन्यमर्नपोऽध्यं जायेत वृत्रान् घ्नश्चेरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यों ब्रह्म बृहस्पतिर्ब्रह्मणैवैनं (१) दाम्नोऽपोम्भनान्मुञ्चति हिरण्मयं दाम दक्षिणा साक्षादेवैनं दाम्नोऽपोम्भनान्मुञ्चति ॥ १३ ॥

[ एनं द्वादश च । ]

राजन्यम् । अनपोऽध्य इत्यनप-उब्ध । जायेत । वृत्रान् । घ्नन् । चरेत् । इति । तस्मै । एतम् । ५ ऐन्द्राबार्हस्पत्यमित्यैन्द्रा-बार्हस्पत्यम् । चरुम् । निरिति । वपेत् । ऐन्द्र । वै । राजन्य । ब्रह्म । बृहस्पति । ब्रह्मणा । एव । एनम् (१) । दाम्न । अपोम्भनादित्यप उम्भनात् । मुञ्चति । हिरण्मयम् । दाम । दक्षिणा । साक्षादिति स अक्षात् । एव । एनम् । दाम्न । अपोम्भनादित्यप-उम्भनात । मुञ्चति ॥ १३ ॥

[ मैत्रै २ १ १२, काठं १२ ४ ] १०

वृत्रानिति । वारकान् शत्रून् ॥

अन्वाहार्यमासाद्य [२]हिरण्मय [२]दाम दद्यात् ॥

इति द्वितीये चतुर्थे त्रयोदशोऽनुवाक ॥

इति काम्या इष्टय समाप्ता

वैवाना बृहस्पति " ( तैस २ २ ९ ) [६]इत्यन्यत्र श्रवणाद्बृहस्पतेर्ब्राह्मणजातित्वम् । अत ऐन्द्रा १५ बार्हस्पत्यचरौ निरुप्ते सति [६]एनम् [६]राजन्य [६]ब्रह्मणा बृहस्पतिनामार्येन [७]दैविकाच्छक्तिप्रतिबन्धात् मोचयति ॥

हिरण्मयमिति ॥ "[८]अत्रोचिता दक्षिणा[८]" विधत्ते–'हिरण्मय दाम दक्षिणा साक्षादेवैन दाम्नोऽपोम्भनान् मुञ्चति ' इति ॥ [२]दाम रज्जु । बन्धके दामनि दत्ते सति प्रत्यक्षत एव बन्धमोक्षो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाक २०

२. त१ त२– 'दाम' नास्ति ।

६ ङ जो ना –इत्यत्र, अ आ उ क पा हा– इत्यस्य । ७. हो– दैवशक्तिप्रति°, म– दैविकौमि°, ङ– दैवी शक्ति प्रतिबन्धात् । ८–८ हा– अत्रोचिता दक्षिणा ।

नवो॑नवो भवति॒ जाय॑मा॒नोऽह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्रे॑ ।
भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन् प्र च॒न्द्रमा॑स्तिरति दी॒र्घमायुः॑ ॥

नवो॑नव॒ इति॒ नव॑:-न॒व॒: । भ॒व॒ति॒ । जाय॑मानः । अह्ना॑म् । के॒तुः । उ॒षसा॑म् । ए॒ति॒ । अग्रे॑ ।
भा॒गम् । दे॒वेभ्य॑: । वीति॑ । द॒धा॒ति॒ । आ॒य॒न्नित्या॑ - य॒न् । प्रेति॑ । च॒न्द्रमा॑: । ति॒र॒ति॒ । दी॒र्घम् । आयु॑: ॥

५ अथ याज्याकाण्ड वैश्वदेवम् । " य पापयक्ष्मगृहीत स्यात् तस्मा एतमादित्य चरु निर्वपेत् " ( तस २ ३ ५ ) इत्यस्या पुरोऽनुवाक्या — ' नवोनव ' इति त्रिष्टुप् ॥ अत्र चन्द्रगुणकीर्तनेन आदित्य एव स्तूयते, तेषा चन्द्रगुणानामादित्याधीनत्वात् । तथा हि चन्द्रो नामाय भास्कर मल्लिकटाहा मा । यथाहु —

" सूर्योऽग्निमयो गोल चन्द्रोऽम्बुमय स्वभावत स्वच्छ " ॥ इति ॥ तस्मादस्य

१० दिवसकरमरीचिसमाश्लेषेण भास्वरत्व भवति । यथाहु —

" भूग्रहभाना गोलार्धानि स्वच्छायया विवर्णानि ॥

अर्धानि यथासार सूर्याभिमुखानि दीप्यन्ते " ॥ (आभ गोलपाद ५) ॥ इति ॥

तस्माच्चन्द्रमसो बिम्ब गोलार्ध सूर्याभिमुख सदा चकास्ति । किं सर्वदा चकास्ति ? यदि चकास्ति किमिति नोपलभ्यते ? श्रूयताम्—अमावास्याया चन्द्रमस उपर्यादित्य , तदा तस्य

---

१५ त्रयोदशो चरु प्रोक्त शान्तिस्तम्भनिवारक ॥

इत्थ काम्येष्ट्य समापिता । अथान्तिमानुवाके चतुर्दशे याज्यानुवाक्या वक्तव्या ॥

नवोनव इति ॥ तत्र—" य पापयक्ष्मगृहीत स्यात् तस्मा एतमादित्य चरु निर्वपेत् " ( तैस २ ३ ५ ) इत्यत्र पुरोनुवाक्यामाह— ' नवोनवो भवति जायमानोऽह्ना केतुरुषसामेत्यग्रे । भाग देवेभ्यो वि दधा यायन् प्र चन्द्रमास्तिरति दीर्घमायु ' इति ॥ आदित्यस्य चन्द्रदीप्तिकारणत्वा चन्द्रा

२० भेदेनाऽऽदित्य इह स्तूयते । चन्द्रमा जायमान प्रतिदिनमुदय गच्छन् नवोनव भवति । शुक्लप्रति पदि कलयायुक्त , द्वितीयाया कलाद्वययुक्त , इत्येव कलावृद्धिक्षयाभ्या प्रतिदिन नूतनत्वम् । चन्द्रवत् तद्दीप्तिकारणभूत आदित्योऽपि प्रतिदिन नूतनो भवति । स्वरूपे वृद्धिक्षयाभावेऽपि दक्षिणोत्तरगतिभ्या नूतनत्वम् । स च अह्ना केतु चिह्न, तस्मिन्नुदिते सत्यहर्दृश्यमिति ज्ञायमानत्वात् । उषसा प्रभा तानाम् अग्रे उपक्रमे प्राप्यामुदयम् एति, तदनुरोधेन प्रातरग्निहोत्रादीना प्रवृत्त देवेभ्य भाग वि

२५ दधाति । तादृशश्चन्द्रकलावृद्धिक्षयहेतुरादित्य इह कर्मण्यागच्छन् दीर्घम् आयु प्र तिरति प्रवर्धय दधातु ॥

१ [illegible]—[illegible]। २ [illegible]— भास्कर । ३. [illegible]— "करमरी" । ४ [illegible]— भास्करत्वम् । ५. [illegible]— 'दिव' नास्ति । ६ [illegible]— यदा । ७–७ [illegible]— 'यदि चकास्ति' नास्ति । ८ [illegible]— 'तस्य' नास्ति ।

३० १ [illegible]— [illegible] । २ [illegible]— चन्द्रमा[illegible] । ३ [illegible]— [illegible] । [illegible] । ४ [illegible]— [illegible] । ५ [illegible]— 'कर्मणि' नास्ति । ६ [illegible]— [illegible] ।

चन्द्रमस उपरि यद्बिम्बार्धं तदशेषमवभासयति सविता। [9]अथ चन्द्रमस[9] अमावास्योपलक्षितो परिबिम्बे[10] केन्द्राद्यथायथा पश्चादादित्योऽवलम्बते तथातथा चन्द्रमसो बिम्ब [11]केन्द्रस्य परतोऽलम्बते[11]। तत्केन्द्रवशात् चन्द्रमसो बिम्बार्धशेषमाभासयति[12] सविता। यावदेवास्योपलक्षित बिम्बपरिध्यवधेरधोऽवलम्बते तावत् चन्द्रमसो [13]बिम्बमस्माभिरुपलक्ष्यते, [14]शेषमुपरिस्थितत्वात् नोपलभ्यते सूर्याभिमुख भास्वरमपि, भूगोलविशेषवर्तिभिरस्माभिरुपलब्धुमयोग्यत्वात्। तस्माद्यावत् यावत् सवितृकराश्लिष्टमवलम्बते तावत् तावत् तिथिभेदेन शुक्लचन्द्र उपलभ्यते। तेनामी ज्योत्स्ना-वितानावभासिनश्चन्द्रकराः तत्तत्क्षितितलावभासिनो भवन्ति। यथा दर्पणोदरे जले वा दिवाकरकराः समूर्च्छिता सन्तो गृहान्तर्गत तम क्षपयन्ति एव सवितृमरीचयोऽम्बुमये स्वभानस्यामेऽपि चन्द्रबिम्बे समूर्छिता नैश ध्वान्तमपध्वसयन्ति। तत्रायं विशेष·– [15]योऽय चन्द्रबिम्बप्रदेशः सवितृमार्गे ऋजुत्वेन व्यवस्थित स एव शुक्लः उपलभ्यते; तेन दक्षिणोत्तरयो शृङ्गयो कालविशेषेणोन्नतिविशेष। तत्र यावद्यावत् सवित्रा विश्लिष्टो भवति तावत्तावच्छुक्ल प्रतिपत्प्रभृति चन्द्रमसि सितिमा सवर्धते। कृष्णप्रतिपत्प्रभृति असितिमा सवर्धते। एतावता जायमान आप्यायमानः क्षीयमाण चन्द्रमा उपलभ्यते। उक्त च निरुक्ते–"तस्यैको रश्मिश्चन्द्रमस प्रति दीप्यते" (निरुक्त २.६) इति। श्रूयते च– "सुषुम्न सूर्यरश्मिश्चन्द्रमा गन्धर्वः" (तैस ३.४ ७) इति। ननु कथम् अस्तमिते सवितरि चन्द्रश्चकास्ति? नैष दोष – भूमेर्दूरेण सूर्यमार्ग, तेनोपरिमुखाना सूर्यमरीचीना न व्यवधात्री भूतधात्री भवति। कृष्णपक्षप्रतिपदादिषु चन्द्रमसो बिम्बपूर्वभाग प्रत्यासन्नः सवितेति [16]पुरस्ताच्छुक्लमुपपद्यते। अत्र यदुक्त सौगतैः– स्वत एव शुक्लस्य चन्द्रमस [17]सवितृसनिकर्षाद्वैवर्ण्यं भवतीति, तदयुक्त, [18]यत स्वभावतः शुक्लस्य [19]सूर्यसनिकर्ष. स्याच्चेत्[19] तदा शुक्लप्रतिपदादिषु चन्द्रमसो बिम्बस्यापरभागे वैवर्ण्यं स्यात्, सनिकृष्टत्वात् तस्यापरभागस्य। ततश्चावाङ्मुख[20] चन्द्रबिम्बमुपलभ्येतेत्यल विस्तरेण[21] ॥

एव यश्चन्द्रमा [v]जायमान प्रादुर्भवन् शुक्लप्रतिपदादिषु आदित्यस्यार्चिषा प्रकाशमानः [v]नवोनव [v]भवति पुन पुन. अभिनव एव भवति प्रजानामाह्लादहेतुर्भवति। "अनुदात्त च" (पा ८.१.३) इति द्वितीयो नवशब्द अनुदात्त। किं च– [v]अह्ना तिथीना [v]केतु तद्वत् केतयिता ज्ञापयिता। कित ज्ञाने। तिथिविभागहेतुत्वात्। [v]उषसा रात्रीणाम् [v]अग्रे गच्छति अग्रणीः भवति, रजनीना कर्तृत्वात्। यद्वा– अह्ना केतुः अहरवसाने शुक्लपक्षे प्रतीच्या दृश्यते, कृष्णपक्षे

९–९. तं१.तं२.मै लं – चद्रस। १०. मै४– °लक्षणबिम्ब°। ११–११. लं– केन्द्रमध्यपरतोऽवलम्बते। १२. लं– °शेषमवभासयति। १३ मै– बिम्बस्यार्धमस्मा°। १४. लं– शेषमुपस्थित°। १५. मै – यो य। १६ तं१.तं२.मै – परमुच्छुक्लमुपलभ्यते। १७. मै – सूर्यसंनि°। १८. मै– 'यतः' नास्ति। १९–१९. मै४– सूर्यसनिकर्षात् वैवर्ण्यं स्यात्। २०–२०. तं१.तं२.मै– °मुखः। २१. तं१ तं२.मै– अतिप्रसङ्गेन।

यमा॑दि॒त्या अ॒ꣳशुमा॑प्या॒यय॑न्ति॒ यमक्षि॑तमक्षि॒तयः॒ पिब॑न्ति ।
तेन॑ नो॒ राजा॒ वरु॑णो॒ बृह॒स्पति॒रा प्या॑ययन्तु॒ भुव॑नस्य गो॒पाः ॥

यम् । आ॒दि॒त्याः । अ॒ꣳशुम् । आ॒प्या॒यय॒न्तीत्या॑प्या॒यय॑न्ति । यम् । अक्षि॑तम् । अक्षि॒तयः॑ । पिब॑न्ति ॥
तेन॑ । न॒ः । राजा॑ । वरु॑णः । बृह॒स्पतिः॑ । एति॑ । प्या॒य॒य॒न्तु॒ । भुव॑नस्य । गो॒पा इति॑ गो पाः ॥

५ तु रात्रीणामवसाने प्राच्या दृश्यते । एवम् आयन् आगच्छन् अय देवेभ्य भाग वि दधाति तिथिविशेषनिबन्धनत्वात् सर्वयागानाम्, आदित्यसंनिकर्षविप्रकर्षनिबन्धनत्वात् सर्व तिथीनाम् । सूर्याचन्द्रमसोर्हि परस्परसंनिकर्ष अमावास्या, विप्रकर्ष पौर्णमासीति । इत्थ महानु भावोऽय चन्द्रमा दीर्घम् आयु अस्य प्र तिरति वर्धयतु ॥ यद्वा – आदित्य एव चन्द्रमा उच्यते, चन्द्रस्य माता निर्माता उत्पादक इति । " गतिकारकयोरपि " ( उ ६७६ ) इति असि,
१० डित्वात् टिलोप । स जायमानो दिनेदिने प्राच्याम् उद्यन् नवोनवो भवति सदोद्यन्नप्यपूर्व इव भवति । अह्ना केतु दिवसकरत्वात् । उषसा रात्रीणाम् अग्रे अग्रतो गच्छति रात्रय एनमनु धावन्ति । एवमायन् उद्यन् देवेभ्यो भाग विदधाति, आदित्यगत्यधीनत्वात् सर्वकर्मणाम् । एव महानुभावश्चन्द्रमसोऽप्युक्तवन्निर्माता आदित्य दीर्घमायुर्वर्धयत्विति ॥

तत्रैव याज्या ' यम् ' इति त्रिष्टुप् ॥ यम् अंशुम् रश्मिम् आत्मीयरश्मिभूत सोमम्
१५ आदित्या आ प्याययन्ति वर्धयन्ति, य च सोमम् अक्षितम् अविच्छिन्न सर्वेष्वपि पर्वसु अक्षितय अक्षीणा पित्रादय पिबन्ति, तेन सोमेन सह राजा देवराज वरुण च बृहस्पति च आ प्यायन्तु हीयमान यजमान वर्धयन्तु भुवनस्य भूतजातस्य गोपा प्रवृत्तिप्रदा ॥

यामिति ॥ तत्रैव याज्यामाह–' यमादित्या अंशुमाप्याययन्ति यमक्षितमक्षितय पिबन्ति । तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपा ' इति ॥ यं चन्द्रमसम् अत्र स्थिरमूर्तैककलामात्र
१० परिशिष्टम् आदित्या शुक्लपक्षे प्रतिदिनमेवैककलाप्रदानेन आ प्याययन्ति । किं च यम् अक्षितं पौर्णमास्याम् अक्षीणबिम्ब कृष्णपक्षे प्रतिदिन वह्निरव्यादयो देवा स्वयम् अक्षितय क्षयरहिता सन्त पिबन्ति एकैका कलामपक्षयन्ति । अत एव सोमोत्पत्तौ स्मर्यते–' प्रथमां पिबते वह्नि द्वितीयां पिबते रवि ' ॥ इति । ज्योति शास्त्रप्रक्रियया रव्यादित्यरश्मय एव स्वयमक्षितय एकैकां कलां पिबन्त उपादयन्ति । तेन पात्रेण अमृतेन राजा दीप्यमान आदित्य वरुण बृहस्पति इत्येवमादय
१५ भुवनस्य गोप्तारो देवा न अस्मान् रोगग्रस्तान् रोग निवार्य आ प्याययन्तु ॥

२२. तै१ तै२ मै– महाप्रभावोऽयं । २३ तै १ तै२– ' वर्धयन्ति ' नास्ति । २४ तै१ तै२ मै – इममगिम् ।

७–७ क– नीदम । ८ आ क– अभीगार्द्र । ९ आ क– बहलपादपा । १० आ– ' तत्र ' नास्ति । ११–११ आ– ' द्वितीयां पिबते रवि ' नास्ति । १२ क गृ– इत्यादि । १३ दा– त्यादित्यस्य । १४ १५ भ भा ग पा– पात्रेण ।

प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्या वृत्रहन् वृत्रहाऽसि ।
यत्र यन्ति स्रोत्यास्तज्(१)जितं ते दक्षिणतो वृषभ एधि हव्यः ॥

प्राच्याम् । दिशि । त्वम् । इन्द्र । असि । राजा ।
उत । उदीच्याम् । वृत्रहन्निति वृत्र-हन् । वृत्रहेति वृत्र हा । असि ।
यत्र । यन्ति । स्रोत्या । तत् (१) । जितम् । ते । दक्षिणत । वृषभ । एधि । हव्य ॥

"य कामयेतान्नाद स्यादिति तस्मा एत त्रिधातु निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" (तैस २ ३ ६) इत्यस्या प्रथमस्या पुरोनुवाक्या, तृतीयस्याश्च याज्या– 'प्राच्याम्' इति त्रिष्टुप् ॥ 'जित ते' इति तृतीयपादान्त । हे इन्द्र, त्वम् प्राच्या दिशि राजा स्वामी असि । [२५] उत अपि [२५] च उदीच्याम् अपि अधिराज इत्येव । यतस्त्व वृत्रहा वृत्रस्य मेघस्य * हन्ता असि मेघ हत्वा उदकेन जीवयसि [२६]जन्तून्, हे वृत्रहन् वृत्रासुरस्य हन्त । प्रदर्शनार्थं च दिग्द्वयोरुपादान, सर्वास्वपि दिक्षु त्वमेव राजेति । कथ ज्ञायते इति ? आह– यत्र स्रोत्या नद्य यन्ति * गच्छन्ति तत् सर्वं त्वया जित [२७]तत्र सर्वं ते जित जय । सनत्र च नद्यो यन्ति, तस्मात् सर्वासु दिक्षु त्व राजासीति । "स्रोतसो विभाषा ड्यड्ड्यौ" (पा ४ ४ ११३) इति ड्य । किं च– वृषभ वर्षयिता कामानाम् । [२८]हव्य हविषा आराध्य । एव महानुभावस्त्व दक्षिणत एधि भोक्तु भव । [२८]हवमर्हतीति हव्य [२८] । यद्वा– हविरर्हसि त्व हवि प्रतिग्रहीतु दक्षिणतो भव, दक्षिणतो हि स्थापयित्वा [२९]अन्वाहार्यादि दीयते, यथा– "दक्षिणत एत" (आपश्रौ ३ ४ २) इति, तद्वदिद द्रष्टव्यम् ॥

प्राच्यामिति ॥ "य कामयेतान्नाद स्यादिति तस्मा एत त्रिधातु निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" (तैस २ ३ ६) इत्यत्र राजेन्द्रहविष पुरोनुवाक्यारूपा स्वराडिन्द्रहविषो याज्यारूपामुभयाकारामृच पठति– 'प्राच्या दिशि त्वमिन्द्रासि राजोतोदीच्या वृत्रहन् वृत्रहाऽसि । यत्र यन्ति स्रोत्यास्तज्जित ते दक्षिणतो वृषभ एधि हव्य ' इति ॥ हे इन्द्र, त्व प्राच्या दिशि राजा अधिपति असि । अपि च, हे वृत्रहन्, उदीच्या वृत्रहा वैरिघातक असि । किं च स्रोत्या नद्य यत्र यन्ति तत् सर्वं ते जितम् । नद्यो हि सर्वासु दिक्षु प्रवहन्ति । अत सर्वत्र तव विजय इत्यर्थ । किं च त्व वृषभ कामाना वर्षयिता हव्य होमयोग्य सन् दक्षिणत एधि आहवनीयस्य दक्षिणभागे स्थितो भव । तत्र स्थित्वा हि ऋत्विग्भिर्हविर्दीयते ॥

२५–२५ त१तर मै– अपि च । *–* [ ■१ त२– 'हन्तासि नद्य यन्ति ' इत्यय भागो नास्ति । ] । २६ त१त२ मै–'जन्तून्' नास्ति । २७ मै– यत्र यत्र तत् । २८–२८ मै–हवि मान्ति (?) हव्य , त१ त२ प२–' हवमर्हतीति हव्य ' नास्ति । २९ त१ त२ मै– आहार्यादि ।

इन्द्रो॑ जयाति॒ न परा॑ जयाता अधिरा॒जो राज॑सु राजयाति ।
वि॒श्वा॒ हि भू॒याः पृत॑ना अ॒भिष्टी॑रुप॒सद्यो॑ नम॒स्यो॑ यथाऽस॑त् ॥

इन्द्रः॑ । ज॒याति॒ । न । परेति॑ । ज॒याते॒ । अ॒धि॒रा॒ज इत्य॑धि - रा॒ज । रा॒ज॒स्विति॒ राज सु । रा॒ज॒याति॒ ।
विश्वाः॑ । हि । भू॒याः । पृत॑नाः । अ॒भिष्टीः॑ । उ॒प॒सद्य॒ इत्यु॑प सद्यः॑ । न॒म॒स्यः॑ । यथा॑ । अस॑त् ॥

५ अथ प्रथमस्य याज्या, द्वितीयस्य पुरोऽनुवाक्या– ‘ इन्द्र ’ इति त्रिष्टुप् ॥ इन्द्र सर्वदा जयाति जयति न तु कदाचिदपि परा जयाते पराजय न प्रतिपद्यते। लेटया डागम (पा ३ ४ ९४), “ विपराभ्या जे ” (पा १ ३ १९) इत्यात्मनेपदम्, “ वैतोऽन्यत्र ” (पा ३ ४ ९६ ) इत्यैकार । अपि च अधिराज अधिक राजमान, अधिकदीप्ति । राजसु दीप्तिमत्सु चन्द्रादिषु मध्ये यो नाम कश्चिद्राजति त राजयाति तस्मादय जयतीति । ण्यन्ताद्
१० लेटि पूर्ववदाडागम (पा ३ ४ ९४)। किं च– विश्वा पृतना सग्रामान् अभिष्टी आभिमुख्येनागच्छन्ती । इषेर्गत्यर्थत्वात् कर्तरि क्तिन्, “ मन्त्रे वृष॰ ” (पा ३ ३ ९६ ) इति क्तिन उदात्तत्वम्, शकन्ध्वादित्वात् पररूपत्वम् (पा ६ १ ९४ वा ४)। इच्छतेर्वा, आभिमुख्येन आगन्तुमिच्छन्ती । ईदृशी सर्वा पृतना उपसद्य भूया भूयात्। प्रथमत्वेन नति । उपसीदतीत्युपसद्य । “ कृत्यल्युटो बहुलम् ” (पा ३ ३ ११३) इति कर्तरि यत्। उपसदनम्
१५ उपरोधनम्। पञ्चमावरछान्दस । यथा अयमिन्द्र सर्वै नमस्य नमस्कार्य असत् भवेत्। लेटयडागम, पूर्वत्र “ हि च ” (पा ८ १ ३४) इति निघाताभाव । उत्तरत्र यद्वृत्तयोगात् (पा ८ १ ६६)। नम शब्दयोगात् “ नमोवरिवश्चित्रङ ° ” (पा ३ १ १९) इति क्यच। तदन्तात् “ अचो यत् ” (पा ३ १ ९७)। यद्वा– नमस्य नमस्कारार्ह । “ तदर्हति ” (पा ५ १ ६३) इति छान्दसो यत्। तथा विश्वा पृतना अभिभवत्विति । यद्वा– यथा विश्वा

२० इन्द्र इति ॥ राजेन्द्रहविषो याज्या, अधिराजेन्द्रहविष पुरोनुवाक्येत्युभयरूपामृच पठति– ‘ इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाति। विश्वा हि भूया पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत् ’ इति ॥ इन्द्र सर्वत्र जयत्येव न तु क्वापि पराजयते, सर्वेषु राजसु अधिको राजा भूत्वा सर्वानन्यान् राजयाति, अराज्ञामपि राज्यप्रदानेन राजत्व सपादयति। किं च सर्वेषा राज्ञाम् उपसद्य शरण्यो नमस्कारार्हश्च यथा असत् येन प्रकारेणास्ति तथा विश्वा पृतना परकीयसेना अभिष्टी
२५ अभिभवितु समर्थ भूया ॥

३०–३० तै१ तै२ तै२–प्रथमत्वेन नती, [ मै–तत्टिप्पण्याम्–‘ प्रथमत्वेनानुनी ]; मै४–‘ प्रथमत्वेन नति ’ नास्ति। ३१ तै१ तै२ मै–यच्छब्दयोगात्। ३०–३२. मै४– नम शब्दात्। ३३ तै१ तै२ मै– ‘ यत ’ नास्ति।

अस्येदेव प्र रिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात्।
स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥

अस्य । इत् । एव । प्रेति । रिरिचे । महित्वमिति महि त्वम् ।
दिवः । पृथिव्याः । परीति । अन्तरिक्षात् ॥
स्वराडिति स्व राट् । इन्द्रः । दमे । एति । विश्वगूर्त इति विश्व गूर्तः ।
स्वरिः । अमत्रः । ववक्षे । रणाय ॥　　५

पृतना अभिभूयात्। विध्यादिलिङि (पा ३ ३ १६१) शपो लुक्। तथा च सर्वैर्नमस्यो भवेत्, तदनुरूपं जयति, न च पराजयते, सोऽयमस्मान् अन्नादान् करोत्विति ॥

अथ तत्रैव द्वितीयस्य याज्या, तृतीयस्य पुरोऽनुवाक्या–'अस्येत्' इति त्रिष्टुप् ॥ अस्य एव इन्द्रस्य। इत् इति पादपूरणे। महित्वं महत्त्वं प्र रिरिचे प्ररिच्यते। प्रशब्दो धात्वर्थस्य　१०
निवृत्तिमाचष्टे, यथा प्रस्मरणं प्रस्थानमिति। एवं रेकनिवृत्तिः प्ररेकः पूरणम्। कुतः प्ररिरिचे? दिवः पृथिव्याः अन्तरिक्षात् च। परि उपरि। अध्यर्थे परिशब्दः। दिवं पृथिवीम् अन्तरिक्षं च अतीत्य प्र रिरिचे। छान्दसो लिट् (पा ३ ४ ६)। स्वराट् स्वायत्तदीप्तिः, स्वयं राजतीति स्वराट्, दमे दमयितव्ये स्वराट्। दमे धत्रि "नोदात्तोपदेशस्य°" (पा ७ ३ ३४) इति वृद्ध्यभावः। विश्वगूर्तः सर्वस्मिन् काले उद्गूर्णः। दासीभारादित्वात्　१५
(पा ६ २ ४२), बहुव्रीहिस्वरस्योपलक्षणत्वात् "बहुव्रीहौ विश्वं संज्ञायाम्" (पा ६ २ १०६) इत्येतद्भवति। यद्वा– विश्वमायुधादिकं गूर्तमुद्यतं यस्येति बहुव्रीहिः। "नसत्तनिषत्त°" (पा ८ २ ६१) इत्यत्र गूर्तशब्दो निपातितः। स्वरिः स्वरणीयः कीर्तनीयः। स्वृ शब्दे, "अच इः" (उ ५८८) इतिप्रत्ययः। शोभनारिरित्यवग्रहः नेष्यते। अमत्रः अमनकुशलः शत्रुभञ्ज-

अस्येति ॥ अधिराजेन्द्रहविषो याज्या, स्वराडिन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति–　२०
'अस्येदेव प्र रिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय' इति ॥ इदेवेत्युभयं मिलित्वाऽवधारणे वर्तते। अपि च ननु चेत्यादिवन्निपातसमुदायस्यैकार्थत्वम्। प्र रिरिचे इत्यत्र प्रशब्दोऽतिशब्दार्थे वर्तते। अस्य इत् एव अस्येन्द्रस्यैव महित्वं महिमा परितः दिवः पृथिव्याः अन्तरिक्षात् च प्र रिरिचे सर्वतो लोकत्रयमतिरिच्य वर्तत इत्यर्थः। किं च इन्द्रः रणाय युद्धार्थम् आ ववक्षे आभिमुख्येन वहति सेनां प्रापयति। कीदृश इन्द्रः? स्वराट् स्वयमेव　२५
राजा न तु परतन्त्रः। दमे गृहे विश्वगूर्तः विश्वानि सर्वाण्यायुधानि गूर्तान्युद्यतानि येनासौ विश्वगूर्तः। युद्धार्थं त्वरया निर्गन्तुं गृहेऽप्युद्यतायुध एव वर्तते, किमु वक्तव्यं रणभूमावित्यर्थः। स्वरितुं परकीयसेनानामुपरि गन्तुं शीलमस्येति स्वरिः। अमत्रः अमाद्रोगात् क्षुद्रपादवदानेन त्रायत इत्यमत्रः ॥

२४ मै– प्ररिरिच्यते। २५. मै ल– शोभनारिरित्य नवग्रह, पर–शोभनारित्यमनवग्रहात् (?)।

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशान(२)मस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः ॥

---

अभीति । त्वा । शूर । नोनुमः । अदुग्धा । इव । धेनवः ॥
ईशानम् (२)। अस्य । जगतः । सुवर्दृशमिति सुवः - दृशम् । ईशानम् । इन्द्र । तस्थुषः ॥

---

५ नादिकुशल । मात्रारहितोऽमत्रो महानित्येके । अत्र पृषोदरादित्वात् स्वरूपस्वरादिसिद्धिः" (पा ६ ३ १०९ )। एव महानुभावोऽयम् [v]इन्द्र [v]रणाय [v]आ [v]ववक्षे आभिमुख्येन वहति । उक्त कर्मणः सम्प्रदानत्वम् । वहेर्लेटि " सिब्बहुल लेटि " ( पा ३ १·३४ ) इति सिप्, " लोपस्त आत्मनेपदेषु " (पा ७·१·४१) इति तलोप, " बहुल छन्दसि " (पा २ ४ ७६ ) इति शप श्लु । मेघाना सम्प्रामोत्पादनेन वृष्टिमुत्पाद्य प्रभूतान्नादिना अस्मानन्नादान् करोत्विति ॥

१० अथ " य इन्द्रियकामो वीर्यकाम स्यात् तमेतया सर्वपृष्ठया याजयेत् " (तैस २ ३ ७) इत्यस्या सर्वपृष्ठायामिष्टया प्रथमस्य " यदिन्द्राय राथन्तराय निर्वपति " ( तैस २·३ ७ ) इत्यस्य प्रथमस्य हविष पुरोऽनुवाक्या, षष्ठस्य च याज्या–' अभि त्वा ' इति पथ्याबृहती, तृतीय पादस्य द्वादशाक्षरत्वात् ॥ हे [v]शूर विक्रान्त, इन्द्र त्वाम् [v]अभि [v]नोनुम आभिमुख्येनात्यर्थं नुम स्तुम । नौतेर्यङ्लुगन्तात् लट् । [v]अदुग्धा [v]धेनव [v]इव यथा तावत् [v]वत्से आभिमुख्येन १५ शब्दयन्ति । कीदृशम् ? [v]ईशानम् ईश्वरम् [v]अस्य [v]जगत जङ्गमस्य [v]तस्थुषः स्थावरस्य च [v]सुवर्दृश स्वर्गाख्यस्य परमसुखस्य द्रष्टारम् । स त्वमिन्द्रिय वीर्यं चास्मभ्य देहीति ॥

अथ तस्यैव प्रथमस्य याज्या, " इन्द्राय बार्हताय " (तैस २·३ ७ ) इत्यस्य च पुरोऽनुवाक्या– ' त्वामिद्धि ' इति पूर्ववत् पथ्याबृहती ॥ ' नर ' इति तृतीयपादान्तः । हे [v]इन्द्र, [v]त्वाम् [v]इत् त्वामेव [v]हवामहे आह्वयामः । [v]वाजस्य अन्नस्य [v]साता सातौ [v]तन्निमित्तम् २० "अस्मभ्य देहि वाजमिति" त्वामेवाह्वयाम । [v]कारव स्तोतृत्वेन शिल्पिनः । " कृवापाजि° " ( उ १ ) इत्युण्प्रत्ययः । सने क्तिनि " जनसनखना° " (पा ६·४·४२) इत्यात्वम्, " सुपां

---

अभीति ॥ " य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेत् " ( तैस २·३ ७) इत्यत्र राथन्तरेन्द्रहविषः पुरोनुवाक्या, रैवतेन्द्रहविषो याज्येत्युभयरूपामृचं पठति– ' अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः ' इति । [v]अदुग्धा १५ [v]धेनवः यथा वत्सान् प्रत्यादरेण हम्भारवं कुर्वन्ति तथा हे [v]शूर इन्द्र, त्वामभितः [v]नोनुमः पुनः पुनः स्तुमः । कीदृशं त्वाम् ? [v]अस्य [v]जगतः जङ्गमस्य प्राणिजातस्य [v]ईशानं [v]तस्थुषः स्थावरस्यापि [v]ईशानं [v]सुवर्दृशं स्वर्गस्य प्रदर्शयितारम् ॥

---

३६–३६. मै८– त्वमिद्धि । ३७. तै१,तै२–यत्रोऽपि, सं–यत्रोऽपि । ३८ मै मै४–परीति । ३९–३९. मै१ मै२ सं–देहि वाजमस्मभ्यमिति ।

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी ॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ॥ ५
त्वाम् । वृत्रेषु । इन्द्र । सत्पतिमिति सत्-पतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥
यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युः । न । त्वा । वज्रिन् । सहस्रम् ।
सूर्याः । अन्विति । न । जातम् । अष्ट । रोदसी इति ॥

सुलुक्° " (पा ७·१·३९) इति सप्तम्या आकारः, "ऊतियूति° " (पा ३·३·९७) इत्यादिना क्तिन उदात्तत्वम् । "हि च" (पा ८·१·३४) इत्याख्यातस्य निघाताभावः । [v]हि १० यस्मात् वाजस्य [v]लाभाय [v]त्वाम् एवाह्वयामः, [v]यस्माच्च [v]वृत्रेषु अरिषु उपस्थितेषु[v] [v]सत्पतिं सतां पातारं विदुषां पालयितारं [v]त्वाम् एवाह्वयामः [v]नरः सर्वेऽपि वय मनुष्याः, यस्माच्च [v]त्वा [v]काष्ठासु दिक्षु [v]अर्वत अरणवतः उदकस्य च सात्यर्थं त्वामेवाह्वयामः, तस्मात् सर्वस्मादभिमत-संपादनेन इन्द्रिय वीर्यं चास्मभ्य देहीति ॥

अथ द्वितीयस्य याज्या, तृतीयस्य पुरोऽनुवाक्या– "इन्द्राय वैरूपाय" (तैस २·३· १५ ७) इत्यस्य । 'यद् द्यावः' इति पूर्ववत् गायत्र्यावृहती । 'अनु' इति तृतीयपादान्त. ॥ हे [v]इन्द्र,

त्वामिति ॥ शाक्वरेन्द्रहविषो याज्या, बार्हतेन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति– 'त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः' इति ॥ हे [v]इन्द्र, [v]कारवः कर्तारो वयं [v]त्वाम् [v]इत् त्वामेव [v]हवामहे आह्वयामः । किंनिमित्तम्? [v]वाजस्य [v]साता अन्नस्य दाननिमित्तम् । अत एव साताविति सप्तम्यन्ततया छन्दोगाः (तासं १·२·१·५·२) अधीयते । [v]वृत्रेषु वैरिषु १० प्राप्तेषु [v]सत्पतिं सन्मार्गपालकं [v]त्वाम् आह्वयामः । [v]नरः मनुष्या वयं [v]काष्ठासु सर्वासु दिक्षु [v]अर्वतः शत्रुसेनागतानश्वान् दृष्ट्वा [v]त्वाम् आह्वयामः । हि यस्मादेवं तस्माद्वीर्यप्रदानेनास्मान् पालयेत्यर्थः ॥

यदिति ॥ बार्हतेन्द्रहविषो याज्या, वैरूपेन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति– 'यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी' इति ॥ हे [v]इन्द्र यद्यपि [v]शतं [v]द्यावः [v]स्युः द्युलोकाः शतसंख्याका भवेयुः, अपि च भूमयोऽपि शतसंख्याका भवेयुः, १५ तथाऽपि शतसंख्यावैरवान्तरविशेषैर्युक्ते [v]ते द्यावापृथिव्यौ [v]जातं त्वाम् [v]अनु [v]न [v]अष्ट जातमात्रं त्वाम् ऐश्वर्येणानुकर्तुं न व्याप्नुतो न शक्नुत इत्यर्थः । तथा यद्यपि [v]सूर्याः सहस्रसंख्याकाः स्युस्तथाऽपि हे [v]वज्रिन् तेजसा त्वामनुकर्तुं [v]न क्षमन्त इत्यभिप्रायः ॥

४०. तै१,तै२,ल– 'लाभाय' नास्ति । ४१–४१. मै– यस्माच्चारिषूपस्थितेषु; मै४–'यस्माच्च वृत्रेषु अरिषु उपस्थितेषु' नास्ति । ३०

पिबा सोमंमिन्द्र मन्दंतु त्वा यं ते सुषावं हर्यश्वाद्रिः ( ३ )।
सोतुर्बाहुभ्याꣳ सुयंतो नार्वा ॥

पिबं। सोमंम्। इन्द्र। मन्दंतु। त्वा। यम्। ते। सुषावं। हर्यश्वेति हरि-अश्व। अद्रि (३)।
सोतुः। बाहुभ्यामिति बाहु-भ्याम्। सुयंत इति सु-यत। न। अर्वा ॥

५ [v]ते तव। [v]यत् यद्यपि [v]द्याव द्युलोका [v]शत [v]स्यु [v]उत अपि च [v]भूमी· भूमयोऽपि यद्यपि [v]शत स्यु, तथापि [v]हे [v]वज्रिन्, [v]रोदसी द्यावापृथिव्यौ त्वा [v]जातम्[v] जातमात्रमपि [v]न [v]अनु [v]अष्ट नाश्नुवाते नानुव्याप्नुत तवैश्वर्याधारत्वाय न पर्याप्नुतः। तथा यद्यपि [v]सहस्र [v]सूर्या स्यु, तथापि ते त्वा तेजसा नान्वश्नुते। अश्नोते छान्दसे लङि वचनव्ययेनैकवचनम्, शपो लुक्, " बहुलं छन्दस्यमाङ्योगेऽपि " (पा ६·४·७५) [v]इत्यडभावः। यद्यपि शत द्यावः स्यु

१० भूमयश्च, सूर्याश्च सहस्र, ये रोदसी ये च सूर्याः त इन्द्र नान्वष्ट। " नपुंसकमनपुंसकेन " (पा १·२·६९) इति नपुंसकस्य शेषः, एकवचनं च ॥

अथ तृतीयस्य याज्या, चतुर्थस्य " इन्द्राय वैराजाय " (तैस २·३·७) इत्यस्य पुरोऽनुवाक्या– 'पिबा सोमम्' इति विराट् त्रिपदा। हे [v]इन्द्र, [v]सोम [v]पिब, पीतश्चाय सोम त्वा [v]मन्दतु तर्पयतु। मदि स्तुतिमोदमदस्वप्नगतिषु; व्यत्ययेन परस्मैपदम्। हे [v]हर्यश्व

१५ हरितुरङ्ग, [v]ते त्वदर्थं [v]य सोमम् [v]अद्रि· ग्रावा [v]सुषाव अभिषुतवान्। किं स्वयमेव? नेत्याह– [v]सोतु अभिषोतुः ऋत्विज। साधुकारिणि तृन् (पा ३·२·१३४, १३५)। तस्य [v]बाहुभ्या

वैरूपेन्द्रस्य याज्या, वैराजेन्द्रस्य पुरोनुवाक्येत्युभयरूपा 'कदा चन स्तरीरसि' इत्येषा नाम्नाऽऽम्नाता किं तु शाखान्तरवशात् [v]व्याहर्तव्या। सा च प्रथमकाण्डे (तैसं १·४·२२) एव व्याख्याता ॥

पिबेति ॥ वैराजेन्द्रस्य याज्या, शाक्वरेन्द्रस्य पुरोनुवाक्येत्युभयरूपामृचं पठति – 'पिबा

२० सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्याꣳ सुयतो नार्वा' इति ॥ हे [v]इन्द्र, त्वं [v]सोमं [v]पिब। स च पीतः सोमः [v]त्वा [v]मन्दतु त्वा हर्षयतु। [१५]"हरिनामका अश्वा[१६]" यस्यासौ हर्यश्व, हे [v]हर्यश्व, [v]ते त्वदर्थम् [v]अद्रिः उपांशुसवनादिरूपः पाषाणः [v]यं सोम [v]सुषाव अभिषुतवान् तं[१७] पिबेति पूर्वत्रान्वयः। कीदृशोऽद्रिः? [v]सोतु· अभिषोतुर्ऋत्विजः [v]बाहुभ्यां [v]सुयतः सुष्ठु नियमितः। अत एव [v]नार्वा न [१८]"स्वपार्थानो नियमनरहितः सोमं यत्र तत्र पातयित्वा विनाशयति। तादृशं सोमं पीत्वा वीर्य

२५ देहीत्यभिप्राय· ॥

४२. मे–'हे' नास्ति। ४३ तै१.तै२.मै.ल–'जातं' नास्ति। ४४. तै१.तै२.मै.ल–इत्यडागमः।

१५. क ह – अध्याहर्तव्या। १६–१६. अ.इ.उ.ओ.ना.पा.शं.हा – °नामकायश्वौ। १७ अ भा इ.ऊ.ओ.पा– स्यम। १८. क ह शं हो१– स्वपार्चीनः।

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
उदग्ने शुचयस्तव॰ वि ज्योतिषा॰–

रेवतीः । नः । सधमाद इति सध मादे । इन्द्रे । सन्तु । तुविवाजा इति तुवि वाजाः ।
क्षुमन्तः । याभिः । मदेम ॥
उदिति । अग्ने । शुचयः । तव ॥ वीति । ज्योतिषा ॥ ५

सह अभिषुणव"। यद्वा– सोतुर्जाङ्घ्या "सुयत सुष्टु यन्त्रित, अत एव 'नार्वा नारणशील स्वकार्यकरणे सुप्रतिष्ठित । यद्वा–अत न अर्वा न पाप, कार्यविरोधित्वमेव पापम्। अर्वे "अन्येभ्योऽपि दृश्यन्ते" (पा ३ २ ७५) इति वनिप् । ततस्त्वदृत्त्वमस्मभ्यम् अभिमत देहीति ॥

अथ चतुर्थस्य याज्या, 'कदा चन' इति सूत्रकारवचनात् (द्र आपश्रौ १९ २३ २, बौश्रौ १३ २९), सैव पञ्चमस्य च "इन्द्राय शाक्वराय" (तैस २ ३ ७) इत्यस्य १० पुरोनुवाक्या। पञ्चमस्य याज्या– 'रेवतीर्न' इति गायत्री, इयमेव षष्ठस्य च "इन्द्राय रैवताय" (तैस २ ३ ७) इत्यस्य पुरोऽनुवाक्या। व्याख्याता चेयम्–"अन्वह मासा" (तैस १ ७ १३) इत्यत्र। रेवत्यो धनवत्य "सधमाद" सह मादनय । "तुविवाजा बहुन्ना समृद्धान्ना मा अस्माक "सन्तु अस्मदीया वा "इन्द्रे सन्तु, इन्द्रस्य सन्तु आपो गावो वा। "याभि धय "क्षुमन्त कीर्तिमन्त "मदेम मादयेमेति ॥ १५

"यथक्षुत्काम स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल सौर्य चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपाल" (तैस २ ३ ८) इत्यत्र 'अग्नये भ्राजस्वते' इत्यस्य पुरोनुवाक्या– 'उदग्ने शुचयस्तव' इति गायत्री ॥ व्याख्यातेय "त्वमग्ने रुद्र" (तैस

रेवतीरिति ॥ शाक्वरेन्द्रस्य याज्या, रैवतेन्द्रस्य पुरोनुवाक्येत्युभयरूपामृच पठति– 'रेवतीर्न सधमाद इन्द्रे सन्तु तुविवाजा । क्षुमन्तो याभिर्मदेम' इति॥ रेवत्यो धनवत्य, 'सधमाद अस्माभि २० सह मादयन्त्यो हर्षयुक्ता, 'तुविवाजा बहुव्रीपेता आप 'न अस्माक स्वामिनि 'इन्द्रे 'सन्तु अस्माक सुखाय तिष्ठन्तु। 'याभि अद्भि सह वय 'क्षुमन्त शब्दयन्त इन्द्र स्तुवन्त 'मदेम 'हृष्याम ॥

उदिति ॥ "यक्षुत्काम स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल सौर्य चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्" (तैस २ ३ ८) इत्यत्राऽऽग्नेये कर्मणि याज्यानु वाक्ययो प्रतीके दर्शयति– 'उदग्ने शुचयस्तव, वि ज्योतिषा' इति॥ 'उदग्ने शुचयस्तव शुक्रा' २५ इत्येषा पुरोनुवाक्या। सा च प्रथमकाण्डस्य तृतीयप्रपाठके (तैस १ ३ १४) व्याख्याता। 'वि ज्योतिषा बृहता भात्यग्नि' इत्येषा याज्या। सा च प्रथमकाण्डस्य द्वितीयप्रपाठके (तैस १ २ १४) व्याख्याता ॥

४५–४५ त१ त२ गै ल– अद्रि सुषाव पर– अद्रि त्वा सुषाव। ४६ त१ त२ ल– 'सधमाद' नास्ति।

१९ ह– हृष्यास ।

–दु त्यं जातवेदसः॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥

उदिति । उ । त्यम् । जातवेदसमिति जात - वेदसम् ॥
सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य ।
५ शोचिष्केशमिति शोचि –केशम् । विचक्षणेति वि - चक्षण ।

१·३·१४ ) इत्यत्र । तस्याः[४७] इह प्रतीकग्रहणम् । हे अग्ने, ते तव शुक्राः निर्मला. शुचय. रश्मयः भ्राजन्तः राजन्तः उत् ईरते उद्गच्छन्ति तव । किं च तव अर्चय तेजांसि ज्योतींषि ग्रहनक्षत्राणि भवन्ति । यद्वा– तवार्चयितार ज्योतींषि भवन्तीति ॥

तत्रैव याज्या 'नि ज्योतिषा' इति त्रिष्टुप् ॥ इयमपि "कृणुष्व पाज." (तैस १·२ १४)
१० इत्यत्र व्याख्याता । [४८]प्रतीकमात्रमत्रास्या गृह्यते। अयम् अग्निः बृहता ज्योतिषा नि भाति निनिध भाति, विश्वानि च महित्वा माहात्म्यानि आविः कृणुते आविष्करोति । अदेवी अदेवनशीलाश्च दुरेवाः दु खेन गन्तव्याः मायाः प्र सहते प्रकर्षेणाभिभवतु । किं च– शृङ्गे गोशृङ्गस्थानीये ज्वाले शिशीते निशितीकरोति । किमर्थम् ? रक्षसो विनाशार्थमिति ॥

अथ [४९]सौर्यस्य चरो. पुरोऽनुवाक्या– 'उदु त्यम्' इति गायत्री ॥ व्याख्याता [५०]चेय
१५ [५१]ग्रहप्रश्ने ( तैस १·४·४३ )। प्रतीकग्रहणमिदम् । देव सूर्य जातवेदस जातानां वेदितार देव केतव रश्मयः उत् वहन्ति निश्वस्य लोकस्य दृशे दर्शनार्थमिति ॥

[५२]तत्रैव पुरोऽनुवाक्या विकल्प्यते–'सप्त त्वा' इति गायत्री ॥ हे देव सूर्य, त्वा सप्त सर्पणशीलाः हरित. रसभरणा. रश्मय रथे रहसो रमन्तेऽस्मिन् आप इति वा, रथे मण्डले वहन्ति । शोचिष्केश दीप्तरश्मि केशस्थानीया रश्मयः केशाः । हे विचक्षण प्रकाशक।

२० उदिति ॥ सौर्ये कर्मणि पुरोनुवाक्यायाः प्रतीकं दर्शयति–'उदु त्यं जातवेदसम्' इति ॥ सेयं प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्याता ( तैस १·४·४३ ) ॥

सप्तेति ॥ तत्रैव याज्यामाह– 'सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण' इति ॥ हे सूर्य देव, त्वां सप्त हरितः अश्वा. रथे वहन्ति । कीदृशं त्वाम् ? शोचिष्केश शोचींषि दीप्यमानाः केशस्थानीया रश्मयो यस्य तादृशम् । हे विचक्षण इति सूर्यविशेषणम् ॥

२५ ४७. मै– तस्य। ४८. मै– प्रतीकग्रहणमत्रास्या , मै४ – प्रतीकमात्रमस्याः । ४९. तै१.तं२ मै.४– सौम्यस्य। ५०. तै१.तं२– इयम् । ५१. मै४– ग्रहप्रकरणे। ५२. तै१.तं२– अत्रैव ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षः सूर्य आत्मा जगतस्तस्थुषश्च ॥

चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ॥
एति । अप्राः । द्यावापृथिवी इति द्यावा-पृथिवी । अन्तरिक्षम् ।
सूर्यः । आत्मा । जगतः । तस्थुषः (४) । च ॥ ५

चष्टिर्दर्शनकर्मा । विविधं चष्टे पश्यतीति विचक्षणः । "अनुदात्तेतश्च हलादेः" (पा ३ २ १४९) इति युच् । स त्वमस्मभ्यं चक्षुर्देहीति ॥

तत्रैव याज्या– 'चित्रम्' इति त्रिष्टुप् ॥ चित्रं चायनीयं सर्वलोकपूजितं देवानां रश्मीनामिन्द्रादीनां वा ऋत्विजाम् अनीकं मुखस्थानीयं समूहस्थानीयं वा उत् अगात् उद्गच्छति सर्वात्मकसमष्टिरूपत्वात् । किं च– चक्षुःस्थानीयं ख्यातिकरं वा मित्रादीनाम् । अथ १० देवः द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च आ अप्राः आपूरयति तेजसा । प्रा पूरणे, पुरुषव्यत्ययः । जगतः जङ्गमस्य सर्वस्य तस्थुषः स्थावरस्य सर्वस्य आत्मा सूर्यः एकः प्रेरको ना सर्वस्य तस्मादात्मा, सर्वोपकारकत्वात् । यद्वा– "यश्चायं पुरुषे । यश्चासावादित्ये । स एकः" (तैउ २ ८ ) इति दर्शनात् आत्मा सर्वस्य । अत्राचार्येण 'समानी याज्यानुवाक्ये भवतः" (तस २ ३ ८) इत्येतदनुसारेण उक्तम्– "उदग्ने शुचयस्तव, वि ज्योतिषा, उदु १५ त्यं जातवेदसं, चित्रं देवानाम्, उदग्ने शुचयस्तव, वि ज्योतिषा" (द्र बौश्रौ १३ ३०) इति हविषां याज्यानुवाक्याः, "उदु त्यं जातवेदसं, सप्त त्वा हरितो रथे, चित्रं देवानाम् इति पिण्डान् प्रयच्छति" (बौश्रौ १३ ३०) इति ॥

चित्रमिति ॥ तत्रैव विकल्पितां याज्यामाह– 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षः सूर्य आत्मा जगतस्तस्थुषश्च' इति ॥ चित्रं रक्तश्वेतादि २० विविधवर्णं देवानां रश्मीनाम् अनीकं सैन्यसदृशं मण्डलम् उदगात् उदेति । कीदृशम् ? मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयम् । तन्मण्डलस्थः सूर्यः जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा । स लोकत्रयम् आऽप्राः सर्वतः पूरितवान् ॥

५३–५३ मै४– ख्यातिर्वा वा । ५४–५४ पर मै४– आऽप्रात् आपूरयति, मै– आ (प्रागा) पूरयति । ५५ तः तर मै ल–'उक्तम्' नास्ति । ५६–५६ मै– 'उदग्ने शुचयस्तव वि ज्योतिषा' नास्ति । २५

विश्वे॑ दे॒वा ऋ॑ता॒वृध॑ ऋ॒तुभि॑र्हवन॒श्रुत॑ः । जु॒षन्तां॒ युज्यं॒ पय॑ः ॥

विश्वे॑ । दे॒वा । ऋ॒ता॒वृध॒ इत्यृ॑त वृध॑ । ऋ॒तुभि॒रित्यृ॒तु भि॑ । ह॒व॒न॒श्रुत॒ इति॑ हवन-श्रुत॑ । जु॒षन्ता॑म् । यु॒ज्य॑म् । पय॑ ॥

अथ " वैश्वदेवीं साग्रहणीं निर्वपेद्ग्रामकाम " ( तैस २ ३ ९ ) इत्यस्या पुरोऽनु ५ वाक्या— ' विश्वेदेवा ऋतावृध ' इति गायत्री ॥ विश्वे देवा ऋतावृध ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितार । ण्यन्तात् क्विप्, " बहुलमन्यत्रापि " ( उ १९० ) इति णिलुक्, " अन्येषामपि दृश्यते " ( पा ६ ३ १३७ ) इति पूर्वपदस्य दीर्घत्वम् । हवनश्रुत आह्वानस्य श्रोतार आह्वानप्रयोजनस्य कर्तार इति यावत् । ह्वयतेर्लटि " बहुल छन्दसि " (पा ६ १ ३४) इति सम्प्रसारणम् । ते ऋतुभि कालावयवै पर्वादिभि सह जुषन्ता सेवन्ता युज्य योग्य १० पय पयसि चरुम्, अत एव वचनादिति ॥

तत्रैव याज्या— ' विश्वे देवा शृणुत ' इति त्रिष्टुप् ॥ हे विश्वे देवा, मे मम इम हवम् आह्वान शृणुत । ये यूयम् अन्तरिक्षे स्थ, ये च उप समीपे पृथिव्या स्थ, ये च दिवि द्युलोके स्थ । ये च अग्निजिह्वा अग्ने जिह्वाया स्थिता हविर्भागार्हा । तात्स्थ्यात् ताच्छब्द्यम् । यद्वा— अग्निर्जिह्वास्थानीयो येषाम् । छान्दसमन्तोदात्तत्वम् । उत वा अपि वा ये

१५ विश्व इति ॥ "वैश्वदेवीं साग्रहणीं निर्वपेद्ग्रामकाम " ( तैस २ ३ ९ ) इत्यत्र पुरोनुवाक्यामाह— ' विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुत । जुषन्ता युज्य पय ' इति ॥ विश्वे देवा युज्य योग्य पय क्षीरवत् सारभूत हवि जुषन्ताम् । कीदृशा देवा ? ऋतावृध ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितार, ऋतुभि हवनश्रुत तस्तैर्ऋतुभिरुपलक्षिते कर्मण्याह्वानस्य श्रोतार ॥

विश्वे इति ॥ तत्रैव याज्यामाह— ' विश्वे देवा शृणुतेमं हव मे ये अन्तरिक्षे य उप द्यवि २० ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ' इति ॥ हे विश्वे देवा, मे मदीयम् इम हवम् आह्वान शृणुत । ये यूयम् अन्तरिक्षे स्थ अन्तरिक्षलोके स्थिता ये च उप समीपे पृथिव्या स्थिता ये च द्यवि द्युलोके स्थ, ये च अग्निजिह्वा अग्निरेव जिह्वा येषा ते अग्निजिह्वा अग्निद्वारेण हविष स्वीकर्तार उत वा अन्येऽपि वा यजत्रा यष्टव्या ते सर्वेऽपि अस्मिन् बर्हिषि यज्ञे आसद्य उपविश्य मादयध्व हृष्टा भवत यजमान हर्षयध्वम् ॥

२५ ५७ तै१ तै२— इत्यस्य । ५८ तै१ त२ मै ए — ' यावत् ' नास्ति । ५९. मै४ — ' योग्य ' इत्यस्यानन्तरं ' युजि साधु ' । ६० मै४— चरु । ६१ तै १ तै२ मै— ' अग्निजिह्वा ' इत्यस्यानन्तरं ' ये च ' । ६२. मै— हविर्भाज ।

२० ड— ' पय ' नास्ति । २१. ड हो१— च यूयम् । २२. ड— स्थ । २३—२३ हो१— अग्निद्वारा हविष स्वीकर्तार ग१— अग्निद्वारा हविष स्वीकर्तार । २४—२४ ड ग१— किन्तु कालान्तरे यष्टव्या ते सर्वेऽपि पूर्वो ३० क्तं गच्छन्ति पूर्वोक्तानपि । श्रुत्वा च अस्मिन् बर्हिषि यज्ञे आसद्य उपविश्य मादयध्वं यजमानं हर्षयध्वम् ।

विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ १४ ॥

[ तमीशानमङ्गिरस्तत्सूर्यस्त्रिꣳशच्च । ] [ देवा मनुष्या देवासुरा अब्रुवन् देवासुरास्तेषां गायत्री प्रजापतिस्त्वा यत्राग्ने गोभिश्चियत्रो मारुत देवा वसव्या अग्ने मारुतमिति देवा वसव्या देवा शर्मण्या मर्माणि त्वष्टा हतपुत्रो देवा वै राजन्यात्तोनवचत्वारिꣳशत् ॥ ] [ देवा मनुष्या प्रजा पुराण् देवा वसव्या परिदृष्याद्दिमस्म्यष्टाचत्वारिꣳशत् ॥ ] [ देवा मनुष्या मादयध्वम् ॥ ] ५

विश्वे । देवा । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उपति । द्यवि । स्थ ॥ ये । अग्निजिह्वा इत्यग्नि जिह्वा । उत । वा । यजत्रा । आसद्येत्या सद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ १४ ॥

[ मैष काल ] १०

[v]यजत्रा [v]यजनीया पूजामाचमान । ते सर्वेऽपि ययम् [v]अस्मिन् [v]बर्हिषि यज्ञे [v]आसद्य आसित्वा [v]मादयध्व तृप्यत । मद तृप्तियोगे चौरादिक, अनुदात्तेत्, तृप्ताश्चास्माक काम साधयतेति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये द्वितीये काण्डे
चतुर्थे प्रश्ने चतुर्दशोऽनुवाक समाप्त ॥ १५
समाप्तश्च प्रपाठक ॥

अत्र विनियोगसग्रह —
" आदित्येष्टौ नवो द्वे तु भव्यामित्यादिक त्रय (चाष्टक) म् ।
"राजादिगुणकेन्द्रस्य पुरोडाशसमूहके ॥ १ ॥
आग्नेय उद्विध्यो द्व उदु त्य जातवेदसम् । २०
सप्त चित्र त्रय सौर्य साग्रहण्या उभे इमे ॥
विश्वे देवा इति प्रोक्ता मन्त्रा सप्तदशैव हि ॥ २ ॥
इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाक ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । २५
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर ॥
इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे चतुर्थ प्रपाठक ॥ ४ ॥

६३ मैध- पूजनीया । ३०

२५ अ उ ओ पा हा- सामादिगुण° । २६ इ ग्र-सप्तदशेह ।

# ( अथ द्वितीयकाण्डे पञ्चमः प्रपाठकः )

हरिः ॐ ।

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां

विश्वरूप इति विश्व-रूप । वै । त्वाष्ट्र । पुरोहित इति पुरः-हित । देवानाम् । आसीत् ।
५ स्वस्रीय । असुराणाम् ।

अथ दर्शपूर्णमासब्राह्मण प्राजापत्य काण्ड, विश्वरूप इत्यादय षडनुवाका । तत्राग्नीषोमीयमेकादशकपाल पूर्णमासे विधास्यन् तदर्थमर्थवाद प्रस्तौति– विश्वरूप नाम त्वष्टु पुत्र देवाना पुरोहित आसीत् । "पुरोऽव्ययम्" (पा १ ४ ६७) इति गतित्वात् "गतिरनन्तर" (पा ६ २ ४९) इति गते प्रकृतिस्वरत्वम् । असुराणा स्वस्रीय स्वसु पुत्र ।

१० यस्य निःश्वसित वेदा यो वेदेभ्योऽखिल जगत् ।
निर्ममे तमह वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
द्वितीयादिचतुर्थान्तैस्त्रिभिरेतै प्रपाठके ।
"उक्ता काम्येष्टयस्तासा प्रकृतिस्त्वथ वर्ण्यते ॥ २ ॥
पौरोडाशिककाण्डे तु मन्त्रव्याख्यानमीरितम्" ।
१५ विधयो मन्त्रसम्बद्धा यद्यप्य प्रतिपादिता ॥ ३ ॥
तथाप्यविधयो याज्या व्याख्येया हौत्रमन्त्रका ।
अतोऽनुब्राह्मण त्वत्र वर्ण्यते काण्डद्वये ॥ ४ ॥
प्रपाठके पञ्चमेऽनुवाका द्वादश संस्थिता ।
आध्वर्यवं पूर्वषट्के विधिशेषो विविच्यते ॥ ५ ॥
२० "व्याख्यान हौत्रमन्त्राणा सविधि प्राय उत्तरे" ।
दार्शपौर्णमासिकविधयो विधिमन्त्राऽऽश्रयो द्वयो ॥ ६ ॥

विश्वरूप इति ॥ अत्र द्वितीयानुवाके पौर्णमासीगतमग्नीषोमीयपुरोडाशं विधित्सुस्तदुपोद्घाततया प्रथमानुवाके [illegible] – 'विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयो [illegible] त्रीणि शीर्षाण्यासन्त्सोमपानं सुरापानमन्नादनं स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः [illegible]
२५ [illegible] ' इति ॥ [illegible] विश्वरूपः । [illegible]

तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्ष देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं वि पर्यावर्तयतीति

तस्य । त्रीणि । शीर्षाणि । आसन् । सोमपानमिति सोम पानम् । सुरापानमिति सुरा पानम् । अन्नादनमित्यन्न अदनम् । स । प्रत्यक्षमिति प्रति अक्षम् । देवेभ्य । भागम् । ५
अवदत् । परोक्षमिति पर–अक्षम् । असुरेभ्य । सर्वस्मै । वै । प्रत्यक्षमिति प्रति अक्षम् । भागम् । वदन्ति । यस्मै । एव । परोक्षमिति पर–अक्षम् । वदन्ति । तस्य । भाग । उदित । तस्मात् । इन्द्र । अबिभेत् । ईदृङ् । वै । राष्ट्रम् । वीति । पर्यावर्तयतीति परि आवर्तयति । इति ।

" त्यच्छुश्छ " (पा ४ १ १४३) इति छ, ईयादेशश्च (पा ७ १ २)। [v]तस्य सोमपानादीनि [v]त्रीणि [v]शीर्षाणि [v]आसन्। " शीर्षंश्छन्दसि " (पा ६ १ ६०) इति शीर्षादेश । सोम १०
[1]पीयते अनेन इति करणे ल्युट्। एव सर्वत्र। [v]स [v]देवेभ्य [v]प्रत्यक्ष [v]भागम् [v]अवदत् यूयमेव भागार्हा इति देवाना संनिधौ देवानवदत्। प्रत्यक्षपरोक्षशब्दौ व्याख्यातौ (तैस १ ७ ३)। [v]असुरेभ्य तु [v]परोक्ष भागमवदत्, स्वसीयत्वात् तेषामसंनिधावेवासुरा भागार्हा इत्यवदत्। अथव कुर्वतोऽस्य दुष्टाभिप्रायत्वमस्तीत्याह– सर्वस्मा इति। यस्मै भाग दास्यन् भवति तस्मै [v]सर्वस्मै [v*]प्रत्यक्ष [v]भाग [2][v]वदन्ति लौकिका [3]। त्वमेव सर्वमर्हसि इति संनिधा [3]अपह्नुवया एव १५
वदन्ति। तस्मात् [v]यस्मै [v]एव [v]परोक्ष [v]वदन्ति असंनिधा स्वयमेव [4]भागभोक्तृत्वेन बहु मन्यते [5v]तस्य [v]भाग [v]उदित उक्त उद्धृत सुनिश्चित इति यावत्, अन्योऽनुक्तप्राय । यद्वा– हस्तस्थप्राय । " कर्षात्वतो घञोऽन्त उदात्त " (पा ६ १ १५९) इति भागशब्द अन्तोदात्त । [6]तस्मात् तथा कुर्वतो विश्वरूपात् [v]इन्द्र [v]अबिभेत् [7]ईदृक् इदृशमाचरन् [6v]राष्ट्रम् अपि [6] अस्माकमपि [v]वि [v]पर्यावर्तयति [7]अस्मत्तोऽपहृत्य असुरेभ्यो दास्यतीति ॥ २०

[9]बहुरूपत्वम्। यो विश्वरूपनामकस्त्वष्टु पुत्र स [v]देवाना [v]पुरोहित न तु शरीरसबन्धी, [v]असुराणा तु भागिनेय । स च [10] सात्त्विकेन शिरसा सोम पिबति। [11]राजसेन अन्नमत्ति। [12]तामसेन सुरा पिबति। [v]स च यज्ञमण्डपेषु गत्वा सर्वेषा श्रोत्रप्रत्यक्ष यथा भवति तथा [v]देवेभ्य हविर्भागो युक्त इति [13]वदति। सर्वेषा [v]परोक्ष यथा भवति तथा रहस्ये ऋत्विग्भि सह मय हविर्भाग [v]असुरेभ्य [14]एव युक्त

१ मै– प्रीयते। * [ समाचित पाठ, मै-मुद्रितपुस्तके लिखितपुस्तकेषु 'अप्रत्यक्षम्' इति। ]। २५
२–२ मै– वदति लौकिक । ३ मै – अह्नुवया। ४ त१ त२,तं मै ल– भागभाक्त्वेन। ५ प२, ल– तस्मात्। ६–६ त१ त२ त३– राष्ट्रमाभ विट। ७–७ त१ त२,त३ अस्मात् वा प्रापयित्वा।

९, आ ड– विश्वरूपत्वम्। १० ड – सात्विक°। ११ ड गृ हो१ – राजस°। १२ ड गृ,हो१– तामस°। १३ गृ– वक्ति। १४ आ– 'एव' नास्ति।

तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत् सोमपान( १ )मासीत् स कपिञ्जलोऽभवद्यत्
सुरापान९ स कलविङ्को यदन्नादन९ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्
ता९ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति

तस्य । वज्रम् । आदायेत्या दाय । शीर्षाणि । अच्छिनत् । यत् । सोमपानमिति सोम पानम्
५ (१)। आसीत् । स । कपिञ्जल । अभवत् । यत् । सुरापानमिति सुरा पानम् । स ।
कलविङ्क । यत् । अन्नादनमित्यन्न अदनम् । स । तित्तिरि । तस्य । अञ्जलिना ।
ब्रह्महत्यामिति ब्रह्म हत्याम् । उपेति । अगृह्णात् । ताम् । सुवत्सरमिति स वत्सरम् । अबिभ ।
तम् । भूतानि । अभीति । अक्रोशन् । ब्रह्महन्निति ब्रह्म हन् । इति ।

तस्येत्यादि ॥ गतम् । कपिञ्जल अपाश्याति ( [8] )। [9]कलविङ्क चटकविशेष ।
१० तित्तिरि [10]चिच्चिदिति [11]कटुकरावीति । अञ्जलिनेति । [12]बुद्धिपूर्वकृतत्वख्यापनार्थम् अञ्जलि
ग्रहणम् । तस्य इति सबन्धसामान्ये षष्ठी, तत्सबन्धेन [13]उत्थिता ब्रह्महत्येति । तस्य वधेनेति वा
सामर्थ्याल्लभ्यते । “ हनस्त च ” ( पा ३ १ १०८ ) इति हन्ते क्यप । तामिति । अकृत
प्रायश्चित्त एव ता ब्रह्महत्या सवत्सर भृतवान् । ब्रह्महन् इति ब्राह्मण हतवानिति,
किंरूपमिद तवेति स भूतानि भूतजाता यनिन्दन् । यद्वा– तस्याभिमुखे स्थित्वा भूतानि
१५ ब्रह्महन्नित्याक्रोशमकुर्वन् । तत स इन्द्र पृथिवीम् उप असीदत् [14]उपसन्न आह[14] अस्या

[15]अतस्तानेवोद्दिश्य प्रयच्छत [15]इत्येव वदति । तेषामृत्विजा तस्मिन् परोक्षवादे विश्वास उत्पन्न । तस्य
परोक्षवादस्य हृदयपूर्वकत्वात् । लोकेऽपि तवाय भाग इति सर्वस्मै पुरुषाय प्रीतिमुत्पादयितु तत्समीपे सर्वे
वदन्ति । हृदयपूर्वकत्वाभावाच्च [16] स उदितो भवति [16]। परोक्ष यदर्थ तु भाग उच्यते तस्य एव
भाग [17]हृदयपूर्वकत्वात् उदित भवति । एव वृत्तान्त श्रुत्वा तस्मात् विश्वरूपात् इन्द्र अबिभेत् ।
२० किमिति ? [18]ईदृश स्वामिद्रोही सर्वथा कालान्तरे [18] राष्ट्र नि पर्यावर्तयति इति । अस्मत्तोऽपनीया
सुरेभ्य समर्पणं विपर्यावृत्ति । तत तस्य द्रोहिण शिर सु छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि ॥
तस्येति ॥ तस्येन्द्रस्य प्रत्यवाय जनापवाद च दर्शयति–‘ तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ता९
सवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति ’ इति ॥ तस्य असुरस्य वधेन निष्पन्ना या ब्रह्महत्या
ताम् अञ्जलिना स्वीचकार । पापिना शिक्षायामीश्वरेण नियुक्ताना यमचित्रगुप्तादीना पुरतोऽञ्जलि कृत्वा

२५ ८ मै४– अपाक्याती ( ! )। ९ तै१ तै२ तै३– कलपिङ्क । १० मै ए– तिरश्चिदीनि ( ! )।
११ मै४– कटुक रावी । १२ मै४ – बुद्धिपूर्वकृतत्व°, तै१ तै२ तै३ – °कृतत्वशापनार्थम्, तै२ तै३–
°शापनार्थम् । १३ मै– आत्मा , ए– आत्मने । १४–१४ तै३– ‘ उपसन्न आह ’ नास्ति ।

१५ इ– इति तत्स्थाने चोद्दिश्य अ उ पा– इति तत्स्थाने चोद्दिश्य, जो ना हा– इत्यतस्ताने° ।
१६ आ– इति न पठ्यते । १७–१७ इ ग१ हो१– तत्परम् । १८ इ ग१ हो१– हृदयपूर्वकम् । १९–१९
३० आ– ईदृशस्वामिद्रोही सर्वथा कृत्वा, इ द१ हो– ईदृगस्त्वय द्रोही । २० इ इ ग१ हो१– विभस्य

स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं वृणै खातात् पराभविष्यन्तीं मन्ये ततो मा परा भूवमिति पुरा ते (२) संवत्सरादपि रोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपि रोहति वारेवृतं॰ ह्यस्यै

स । पृथिवीम् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म-हत्यायै । तृतीयम् । प्रतीति । गृहाण । इति । सा । अब्रवीत् । वरम् । वृणै । खातात् । पराभविष्यन्तीमिति पराभविष्यन्तीम् । मन्ये । ततः । मा । परेति । भूवम् । इति । पुरा । ते (२) । संवत्सरादिति सं-वत्सरात् । अपीति । रोहात् । इति । अब्रवीत् । तस्मात् । पुरा । संवत्सरादिति सं-वत्सरात् । पृथिव्यै । खातम् । अपीति । रोहति । वारेवृतमिति वारे-वृतम् । हि । अस्यै । ५

ब्रह्महत्याया तृतीय भाग प्रति गृहाण इति । "पूरणाद्भागे तीयादन्" (पा ५ ३ ४८) इति स्वार्थिकोऽप्रत्यय । षष्ठ्यर्थे चतुर्थी (पा २ ३ ६२ वा १) । सेत्यादि । किं वृणै । १० प्राप्तकाले लोट् (पा ३ ३ १६३) । [१५–]खातात् भूमे [१५] यत्र मृद खनति, पराभवो विनाश पराभविष्यामीति मन्ये, तत निमित्तात् अह मा परा भूवम् इति । अथेन्द्र अब्रवीत्– संवत्सरसमाप्ते प्राक् तत्र खातम् अपि रोहात् विरोहति । "लेटोऽडाटौ" (पा ३ ४ ९४) तस्मादित्यादि । गतम् । [१६]वारोऽभिमतवरलाभ । तत तृतीय प्रति अगृह्णात् पृथिवी ब्रह्महत्याया ॥ १५

निर्भय सन् ब्रह्महत्या मया बुद्धिपूर्वकमेव कृतेत्येवमङ्गीकारस्यार्थ । प्रायश्चित्तमकृत्वा संवत्सर निरन्तर [२१]ता ब्रह्महत्यामङ्गीकृत्यैव तस्थौ । आत्मतत्त्वज्ञानेन पापलेपाभावाद्दोषाभावस्तस्य युक्त । अत एव कौषीतकिन इन्द्रवाक्यम् [२२]एवम् आमनन्ति– "यस्मा विजानीयात् । त्रिशीर्षाणं त्वाष्ट्रमहनम् । अरुर्मुखान् यतीन्सालावृकेभ्य प्रायच्छम्" (कौउ ३ १) इत्यादि । दुरितत्वाभावेऽपि सर्वप्राणिन तम् इन्द्र ब्रह्महन् इति एव सर्वोऽप्यभिशस्तस्याऽऽक्रोश कृतवन्त ॥ २०

स इति ॥ ततस्तस्य जनापवादस्य परिहारायेन्द्रेणानुष्ठितम् [२३]उपायविशेष दर्शयति– 'स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं वृणै खातात् पराभविष्यन्ती मन्ये ततो मा परा भूवमिति पुरा ते संवत्सरादपि रोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपि रोहति वारेवृतं ह्यस्यै तृतीय ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्नि श्रद्धादेव स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्ण ' इति ॥ उपासीदत् उपेत्य प्रार्थितवान् । खातात् पराभविष्यन्ती २५ मन्ये, जना स्वेच्छया तत्र तत्र भूमिं खनन्ति तदुपद्रवात् पराभूता पीडिता भविष्यामीति मनसा चिन्तयामि । खातप्रदेश [२४]संवत्सरमन्तरेण पांसुप्रक्षेपात् तृणाद्युत्पत्तेर्वा अपि रोहात् पूरितो भूयादिति वर । तदिदम्

१५–१५ मै४– खात भूम तै३– खातात् भू । १६–१६ तै१ तर,तैर मै ल– वरे ह्रित वरणवाल ।

२१. आ– 'ताम्' नास्ति । २२ आ ड– एतत् । २३ ड– उपायम् । २४ भू– संवत्सरमात्रे, क ड हो१– संवत्सरमात्रेण । ३०

तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृक्णात् ( ३ ) पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयांसः उत्तिष्ठानित्यब्रवीत्

---

५ तृतीयम् । ब्रह्महत्याया इति ब्रह्म हत्यायै । प्रतीति । अगृह्णात् । तत् । स्वकृतमिति स्व कृतम् । इरिणम् । अभवत् । तस्मात् । आहिताग्निरित्याहित अग्नि । श्रद्धादेव इति श्रद्धा देव । स्वकृत इति स्व-कृते । इरिणे । न । अवेति । स्येत् । ब्रह्महत्याया इति ब्रह्म हत्याय । हि । एष । वर्णः । स । वनस्पतीन् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ते । अब्रुवन् । वरम् । वृणामहै । वृक्णात् ( ३ )। पराभविष्यन्त इति
१० परा भविष्यन्तः । मन्यामहे । ततः । मा । परेति । भूम । इति । आव्रश्चनादित्या व्रश्चनात् । वः । भूयांसः । उदिति । तिष्ठान् । इति । अब्रवीत् ।

---

तदित्यादि ॥ स्वेनैव कृतेन कारणान्तरेण कृत [v]स्वकृतम् । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । [v]इरिणम् ऊषरम् । [v]श्रद्धादेव धार्मिक [v]न [v]अव [v]स्येत् न वसेत् । कश्चिदाह– श्रद्धावान् [v]यष्टुक श्रद्धादेव स [v]स्वकृते [v]इरिणे देवयजनाध्यवमान न
१५ कुर्यादिति । अत्रैव हेतु – [v]ब्रह्महत्याय [v]हि [v]एष [v]वर्ण इति ॥

स वनस्पतीनित्यादि ॥ गतम् । [v]वृक्णादिति । छिन्नात् तदवयवात् । वृश्चते निष्ठायाम् " ओदितश्च " (पा ८ २ ४५) इति निष्ठानत्व, तस्यासिद्धत्वात् " स्कोः संयोगाद्योरन्ते च " (पा ८ २ २९) इति सलोप, " खरि च " (पा ८ ४ ५५) इति चर्त्वम् ॥

---

[v]अस्यै [v]धारेयृतम् अस्या पृथिव्या खातपूर्णं वरेण एकधम् । पृथिव्या स्वीकृतस्तृतीयो ब्रह्महत्याया भाग
२० [v]स्वकृतम् [v]इरिणम् [v]अभवत्, इतस्तत आनीय [v]प्रक्षिप्त न [v]भवतीति स्वत भिदमूषरसेव्रमासीत् । यस्मादिरिणं ब्रह्महत्याया स्वरूप [v]तस्मात् [v]आहिताग्नि [v]श्रद्धादेव तस्मिन् [v]इरिणे कदाचिदपि [v]न तिष्ठेत् । यद्वा – [v]"देवयजनत्वेन नाध्यवस्येत्" । श्रद्धैव देवो यस्यासौ श्रद्धावानित्यर्थ ॥

स इति ॥ एकस्य ब्रह्महत्याभागस्य परिहारोपायमुक्त्वा [v]"भागान्तरस्य तं दर्शयति– 'स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीय प्रति गृह्णीतेति तेऽब्रुवन् वर वृणामहै वृक्णात् पराभविष्यन्तो
२५ मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयांस उत्तिष्ठानित्यब्रवीत् तस्मादाव्रश्चनाद्वृक्षाणां भूयांस

---

१७ तै१ तै२– यष्टक । १८ तै१ तै२ ह– प्रकरणादिति ।

---

१८ अ इ ठ पा हा– प्रक्षिप्ते ᵛᶻ ह–मताॽ छिन्न । २७–२७ हो१– श्रद्देयपजनत्वेन नाध्यवेदू । १८ आ– अगरण्य ।

तस्मादानश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्य-
गृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव
लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्यं (४) काममन्यस्य स स्त्रीषꣳ-
सादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति ता अब्रुवन् वरं वृणामहा
ऋत्वियात् प्रजां विन्दामहै काममा विजनितोः सं भवामेति तस्मादृत्वियात् स्त्रियः प्रजा　५

तस्मात् । आव्रश्चनादित्या - व्रश्चनात् । वृक्षाणाम् । भूयाꣳस । उदिति । तिष्ठन्ति । वारेवृतमिति
वारे वृतम् । हि । एषाम् । तृतीयम् । ब्रह्महत्याया इति ब्रह्म हत्यायै । प्रतीति । अगृह्णन् ।
स । निर्यास इति नि - यास । अभवत् । तस्मात् । निर्यासस्येति नि –यासस्य । न ।
आश्यम् । ब्रह्महत्याया इति ब्रह्म हत्यायै । हि । एष । वर्णः । अथो इति । खलु । य । एव ।
लोहित । य । वा । आव्रश्चनादित्या व्रश्चनात् । निर्येषतीति नि –येषति । तस्य । न । आश्यम्　१०
(४) । कामम् । अन्यस्य । स । स्त्रीषꣳसादमिति स्त्री - सꣳसादम् । उपेति । असादत् । अस्यै ।
ब्रह्महत्याया इति ब्रह्म-ह यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ता । अब्रुवन् । वरम् ।
वृणामहै । ऋत्वियात् । प्रजामिति प्र जाम् । विन्दामहै । कामम् । एति । विजनितोरिति
वि जनितो । समिति । भवाम । इति । तस्मात् । ऋत्वियात् । स्त्रियं । प्रजामिति प्र जाम् ।

अथो खलु । अस्ति पक्षान्तर, लोहित लोहितवर्ण य वा आव्रश्चनात् निर्येषति　१५
निर्गच्छति । येषृ प्रयत्ने, अनुदात्तेत् व्यत्ययेन परस्मैपदम् । अन्यस्येति । अलोहितस्य अनाव्रश्च
नान्निर्गतस्य तस्य निर्यासस्य कामम् आश्य न आश्य वा । काम्यत इति कामम् ॥

स स्त्रीषꣳसादमित्यादि ॥ स्त्रिय सह सीदन्त्यस्मिन्निति स्त्रीषꣳसाद स्त्रीसमूह । छान्दस
साहितिक प यम् । ऋत्वियादिति । ऋतु प्राप्तोऽस्येति ऋत्वियम् आर्तवम् उच्यते । छन्दसि

उत्तिष्ठन्ति वारेवृतꣳ ह्येषा तृतीय ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाऽऽश्य ब्रह्महत्यायै　२०
ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्य काममन्यस्य' इति ॥ वृक्णात्
छेदनात् । आव्रश्चनात् छिन्नप्रदेशात् भूयास बहवस्तुरा उत्तिष्ठन्तीयति वर । वृक्षान्निर्गत्य घनीभूतो
रस निर्यास । ब्रह्महत्याया स्वरूपत्वात् निर्यासस्य स्वरूप न भोज्य भवति । अपि च पक्षान्तरमस्ति,
न सर्वोऽपि निर्यासो निषिद्ध किं तु य लोहितवर्ण य च छिन्नात् वृक्षप्रदेशान्निर्गतस्तदेवोभयं
निषिद्धम् । अन्यस्य तु निर्यासस्य स्वरूप कामम् आश्यम् इच्छाया सत्यामशितु योग्यम् ॥　२५

स इति ॥ त्रिषु ब्रह्महत्याभागेषु द्वयो परिहारमुक्त्वा अवशिष्टस्य परिहार दर्शयति– 'स
स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै तृतीय प्रति गृह्णीतेति ता अब्रुवन् वर वृणामहा ऋत्वियात् प्रजा

१९ भै– 'तस्य' नास्ति तर– तस्य अस्ति च ।

२९ क हा– 'य' नास्ति । ३० आ–छिन्न° । ३१ आ हा–'कामम्' नास्ति । ३२ आ–तृतीयस्याव° ।

**विन्दन्ते काममा विजनितोः सं भवन्ति वारेवृत२ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्य-
गृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न सं वदेत (५) न सहाऽऽसीत
नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव
स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति**

५ विन्दन्ते । कामम् । एति । विजनितोरिति वि-जनितो । समिति । भवन्ति । वारेवृतमिति
वारे-वृतम् । हि । आसाम् । तृतीयम् । ब्रह्महत्याया इति ब्रह्म हत्यायै । प्रतीति । अगृह्णन् ।
सा । मलवद्वासा इति मलवत् वासा । अभवत् । तस्मात् । मलवद्वाससेति मलवत्-वाससा ।
न । समिति । वदेत (५) । न । सह । आसीत । न । अस्याः । अन्नम् । अद्यात् । ब्रह्महत्याया
इति ब्रह्म-हत्यायै । हि । एषा । वर्णम् । प्रतिमुच्येति प्रति-मुच्य । आस्ते । अथो इति । खलु ।
१० आहुः । अभ्यञ्जनमित्यभि-अञ्जनम् । वाव । स्त्रियाः । अन्नम् । अभ्यञ्जनमित्यभि अञ्जनम् । एव ।
न । प्रतिगृह्यमिति प्रति गृह्यम् । कामम् । अन्यत् । इति ।

घस्" (पा ५.१ १०६) इति यत्प्रत्यय, वृषादि (पा ६ १ २०३) द्रष्टव्य । विजनन
प्रसव । "भावलक्षणे स्थेण्°" (पा ३.४ १६) इति जने स्तोसुन्प्रत्यय । सभव संयोग ।
प्रथमसयोगे गर्भो भवतीति यद्यपि द्वितीयादिप्रवृत्ति vअप्रजार्था, तथापि कामानुरूपम् vआ
१५ vविजनितो vस vभवाम; गर्भ सुख वर्धताम् vइति ॥

vमलवद्वासा रजस्वला । वासोग्रहण वाससि रज स्पर्शात् प्रभृति अज्ञातेऽप्यप्रायत्य(?)-
मस्तीति सूचनार्थम् । तेन वासस्यस्पृष्टे [२१]ज्ञानादूर्ध्वमेवाशुद्धि । तस्मादिति । सहभाषण सवाद । तस्य
प्रतिषेध. पुरुषार्थ. प्रासङ्गिक । एव सर्वत्र । नास्या इति । अनया स्पर्शादिना दूषित vन vअद्यात् ।
अनया वा दत्त न [२२]गृह्णीयात् । vएषा vहि vब्रह्महत्याया· vवर्णं vप्रति vमुच्य देहे बद्ध्वा
२० vआस्ते । vअथो अपि vखलु vआहु. तद्विद । अभ्यज्यते परिष्क्रियते शरीरमनेनेति vअभ्यञ्जनं
तैलादि । तद्ध vअन्न स्त्रीणा प्रियतमत्वात्, तस्मात् तत् vएव तस्या अन्न vन [२३]प्रतिग्राह्यम् ।
केचिदाहु – तया अभ्यञ्जन न कर्तव्यमिति । ब्रह्महत्याभिकायास्तस्या अभिमततम सर्वदा
वर्ज्यमिति विवक्षितम् ॥

विन्दामहै काममा विजनितो सम्भवामेति तस्मादृत्वियात् स्त्रिय प्रजा विन्दन्ते काममा विजनितो स
१५ भवन्ति वारेवृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न सं
वदेत न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव
स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति' इति। स्त्रिय सम्यक् सीदन्ति विधर्मेणोपविशन्ति
यस्यां सभायामिति स्त्रीसभाविशेष स्त्रीसंस्माद्यः। 'ऋत्वियात् ऋतुसंबन्धादृत्वियात् प्रथमसंभोगादेव गर्भे

२०. तै१ तै२ग– प्रजायां । २१ तै३– ज्ञानादूर्ध्वमित्येवा° । २२. तै३ मै४ ई– प्रतिगृह्णीयात् ।
३० २३. तै२– प्रतिग्राह्यम् ।

यां मलंवद्वासस॒ꣳ संभव॑न्ति॒ यस्त॒तो जाय॑ते॒ सो॑ऽभिश॒स्तो याम॑रण्ये॒ तस्यै॑ स्ते॒नो यां परा॑ची॒ं तस्यै॑ ह्रीतमु॒ख्य॑पग॒ल्भो या स्नाति॒ तस्या॑ अ॒प्सु मा॒रुको॒ या( ६ )ऽभ्यु॒ङ्क्ते तस्यै॑ दु॒श्चर्मा॒ या प्र॑लि॒खते॒ तस्यै॑ खल॒तिर॑पमा॒री याऽऽङ्क्ते तस्यै॑ का॒णो या द॒तो धाव॑ते॒ तस्यै॑ श्या॒वद॒न् या न॒खानि॒ निकृ॒न्तते॒ तस्यै॑ कुन॒खी या कृ॒णत्ति॒ तस्यै॑ क्ली॒बो

याम्। मलंवद्वाससमिति॒ मलंवत्-वाससम्। सभवन्तीति स-भवन्ति। यः। ततः। जायते। ५
सः। अभिशस्त इत्यभि-शस्तः। याम्। अरण्ये। तस्यै। स्तेन। याम्। पराचीम्। तस्यै।
ह्रीतमुखीति ह्रीत-मुखी। अपगल्भ इत्यप-गल्भः। या। स्नाति। तस्याः। अप्स्वित्यप्-सु।
मारुकः। या ( ६ )। अभ्यङ्क्त इत्यभि-अङ्क्ते। तस्यै। दुश्चर्मेति दु-चर्मा। या। प्रलिखत
इति प्र-लिखते। तस्यै। खलतिः। अपमारीत्यप-मारी। या। आङ्क्त इत्या-अङ्क्ते।
तस्यै। काणः। या। दतः। धावते। तस्यै। श्यावदन्निति श्याव-दन्। या। नखानि। १०
निकृन्तत इति नि-कृन्तते। तस्यै। कुनखी। या। कृणत्ति। तस्यै। क्लीब।

यामित्यादि॥ [v]अभिशस्तः मिथ्यारोपितपातकेन दूषित गृहे अभिशस्त। [v]अरण्ये [v]स्तेन चोर। [v]पराची स्नापाशनादिना अन्यपराम्। अवाङ्मुख शयानामित्येके। [v]ह्रीतमुखी लज्जावनतवदन। कर्मधारयादिनि। अपगल्भोऽपगतगल्भः। [v]अप्सु [v]मारुक अप्सु मरणशील। छान्दस उकञ्। [v]दुश्चर्मा कुष्ठी। [v]खलतिः केशशून्यमस्तकः। [v]अपमारी अपमृत्युमान्। यद्वा–कुत्सितमरण। १५
[v]काण कुण्ठिताक्ष। [v]श्यावदन् व्याध्यापन्नदन्त, मलिनदन्तो वा। "विभाषा श्यावारोकाभ्याम्" (पा ५·४·१४४) इति दतृभाव। [v]कुनखी कुत्सितनख। कृणत्ति कट सृजति। विकरण-

जातेऽपि [s]कामम् उद्दिश्य [s]आ [s]विजनितोः आ प्रसवात् पुरुषेण संगच्छेमहि। गर्भोपद्रव, प्रत्यवायश्च निषिद्धदिनकृतोऽस्माकं मा भूदिति पर। अत एव याज्ञवल्क्यस्मृति– "[s]यथाकामी भवेद्वाऽपि स्त्रीणा वरमनुस्मरन्" (याज्ञस्मृ १·८१) इति। यो ब्रह्महत्याया तृतीयो भाग [s]सा [s]मलवद्वासा रजस्वला २०
योषित् [s]अभवत्। यस्मादियं ब्रह्महत्याया रूप शरीरे कञ्चुकवत् [s]प्रतिमुच्य [s]आस्ते तस्मात् तया सह संभाषण [s]न कुर्यात्। तया [s]सह एकस्मिन् गृहे वास [s]न कर्तव्य। तत्स्वामिकं तत्स्पृष्ट वा [s]अन्नं [s]न [35]अद्यात्, अपि च [35]अभिज्ञा केचिदेवम् [s]आहु– [s]स्त्रिया [36]शृङ्गारप्रियत्वेन [s]अभ्यञ्जनम् एवास्यानीयं, मदीय तैलादिकमेव [s]न गृह्णीयात्, तया वा [37]स्वशरीराभ्यञ्जनं न कारयेत्। [s]अन्यत् अन्नं तस्याभिच्छाया भोक्तव्यमिति॥ २५

यामिति॥ प्रसङ्गाद्रजस्वलाव्रतानि विधत्ते– 'यां मलवद्वाससं संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो या पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको याऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन

१४ ल–मारुत॰। १५. ङ–'काण' नास्ति। ३०

३३. हा– यथाकामी। ३४. आ ड. अश्नीयात्। ३५. ड.ए– 'अभिज्ञाः' नास्ति।
३६ आ–शृङ्गारोपयोगित्वेन। ३७ ड हो१–स्वशरीरस्य अभ्य॰; ए– अन्य स्वशरीरस्य अभ्य॰।

या रज्जु॑ सृ॒जति॒ तस्या॑ उ॒द्बन्धु॑को॒ या प॒र्णेन॒ पिब॑ति॒ तस्या॑ उ॒न्मादु॑को॒ या खर्वे॑ण॒ पिब॑ति॒ तस्यै॑ ख॒र्वस्ति॒स्रो रात्री᳚र्व्र॒तं च॑रेदञ्ज॒लिना॑ वा॒ पिबे॒दख॑र्वेण॒ वा॒ (७) पात्रे॑ण प्र॒जायै॑ गोपी॒थाय॑ ॥ १ ॥

[ यत् सो॑मपान॑ ते वृ॒क्णात् तस्य नाऽऽर्यं वदेत मारु॑को॒ याऽखर्वेण॒ वा त्रीणि च । ]

५ या । रज्जु॑म् । सृ॒जति॑ । तस्या॑ । उ॒द्ब॒न्धु॑क॒ इत्यु॑त् बन्धु॑कः । या । प॒र्णेन॑ । पिब॑ति । तस्या॑ । उ॒न्मादु॑क॒ इत्यु॑त् मादु॑कः । या । खर्वे॑ण । पिब॑ति । तस्यै॑ । ख॒र्वः । ति॒स्रः । रात्री॑ । व्र॒तम् । च॒रे॒त् । अ॒ञ्ज॒लिना॑ । वा॒ । पिबे॑त् । अख॑र्वेण । वा॒ (७) । पात्रे॑ण । प्र॒जाया॒ इति॑ प्र जायै॑ । गो॒पी॒थाय॑ ॥१॥

[ मैस २ ४ १, काम १२ १०, गबा १ ६ ३ १-१५, ५५.४ २-६ ]

व्यत्ययेन श्नम् (पा ३ १ ८५)। [v]क्लीब यो न स्त्री न पुमान्। [v]उद्बन्धुक यो रज्ज्वा
१० उद्बध्य आत्मान व्यापादयति। [v]पर्णेन पत्रदलादिना। [v]उन्मादुक उन्मदनशील । पूर्ववदुकञ्।
[v]खर्व खरेनसोऽर्वतते (?) खण्डिताङ्ग खर्व इति केचित्। व्रत यथोक्तस्वरूप प्रजाया रक्षणार्थम्।
औणादिकस्थप्रत्यय (उ १७४), इडागमश्च ॥

इति द्वितीये पञ्चमे प्रथमोऽनुवाक ॥

पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रत चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण
१५ प्रजायै गोपीथाय' इति ॥ [v]अभिशस्त मिथ्यापवादयुक्त । [v]याम् [v]अरण्ये, 'मलवद्वाससा सभवति'
इत्यनुवर्तते। [३८]पराचीम् [३९]इच्छाराहित्यात् एवनया [४०]वा [४१]पराङ्मुखीम्। सभायामवाङ्मुखो वक्तुमशक्त
'ह्रीतमुखी 'अपगल्भ इत्युच्यते। 'मारुक मरणशील । 'दुश्चर्मा कुष्ठी। 'प्रलिखते [४२]भित्तौ चित्रादिक
करोति। 'खलति केशशून्य । 'अपमारी दुर्मरणयुक्त । 'काण [४३]कुपिताक्ष । 'श्यावदन् मलिनदन्त'।
'तृणत्ति तृणादि छिनत्ति। 'उद्बन्धुक रज्जु बद्ध्वा मरणशील । [४४]पर्णेन पान भोजनस्याप्युपलक्षणम्।
२० उन्मादुक उन्मादशील [४५]। 'खर्वेण वह्निपक्वेन शरावादिना। 'खर्व वामन । यस्मादुक्ता दोषा [४६]वर्तन्ते
तस्मात् तत्परिहाराय रजस्वलानत सभयादिवर्जनरूप नियममाचरेत्। भोजनेऽञ्जलिरपक्वशरावादिर्वा
साधनमस्तु। [v]एतच्च व्रताचरणमुत्पत्स्यमानाया प्रजाया रक्षणार्थं भवति ॥

अत्र मीमासा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"न नवदेत मलवद्वाससेत्यपि पूर्ववत्।
२५ पुमर्थं स्यात् क्रतौ वापि सवादस्याप्रसक्तित ॥" ॥ (जैन्या ३ ४ २०) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "मलवद्वाससा न स वदेत" (तैस २ ५ १) इति । अस्य निषेधस्य
प्रकरणात् क्रत्वङ्गत्वमिति चेत्। न। अप्रसक्तप्रतिषेधप्रसङ्गात्। "यस्य व्रत्येऽहन् पत्न्यनालम्भुका भवति।
वामपदस्य यजेत" (तैब्रा ३ ७ १) इति रजस्वलाया नि सारणाच्च क्रतौ सवादप्रसक्ति । तस्मात् [४७]क्रत्व
पुरुषार्थत्वात्स्य प्रकरणादुत्कर्ष ॥

३० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाक ॥

३८. हा–पराची। ३९. आ–उच्चारणसीत्या। ४०. ट–'वा' नास्ति। ४१. हा–पराङ्मुखी।
४२. ग–मुनो। ४३ अ इ उ बो ग पा हा– कुपिताक्ष । ४४-४५. आ ट–'पर्णेन पान ... शील'
नास्ति। ४६. क ख हा१–विधन्ते। ४६ आ–'एतच्च' नास्ति। ४७ अ इ उ बो ना पा हा–क्रत्व
३५ पुरुषार्थत्वात्स्य।

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्ये( १ )न्द्रः शत्रुरभवत् स संभवन्नग्नीषोमावभि समभवत्

त्वष्टा। हतपुत्र इति हत - पुत्र । वीन्द्रमिति वि - इन्द्रम्। सोमम्। एति। अहरत्। तस्मिन्। ५
इन्द्रे । उपहवमित्युप - हवम्। ऐच्छत। तम्। न। उपेति। अह्वयत । पुत्रम्। मे। अवधीः।
इति। सः। यज्ञवेशसमिति यज्ञ - वेशसम्। कृत्वा। प्रासहेति प्र - सहा। सोमम्। अपिबत्।
तस्य। यत्। अत्यशिष्यतेत्यति - अशिष्यत। तत्। त्वष्टा। आहवनीयमित्या - हवनीयम्। उप।
प्रेति। अवर्तयत्। स्वाहा। इन्द्रशत्रुरितीन्द्र - शत्रुः। वर्धस्व। इति। यत्। अवर्तयत्। तत्।
वृत्रस्य। वृत्रत्वमिति वृत्र - त्वम्। यत्। अब्रवीत्। स्वाहा। इन्द्रशत्रुरितीन्द्र - शत्रुः। वर्धस्व। १०
इति। तस्मात्। अस्य ( १ )। इन्द्रः। शत्रुः। अभवत्। सः। संभवन्निति सम् - भवन्।
अग्नीषोमावित्यग्नी - सोमौ। अभि। समिति। अभवत्।

त्वष्टा हतपुत्र इत्यादि ॥ व्याख्यातम् ( तैस २·४ १२ )। यदिति। यस्मादेनम् आहवनीय त्वष्टा अवर्तयत् उप प्रावर्तयत्, पीतशेषेण सोमेनादीपयत् तस्मात् ततो जात वृत्र, [1]वृत्र इति [2]व्यपदेश्य भवति। वृतेर्ण्यन्तादौणादिक कर्मणि रक्प्रत्ययः ( उ १७८ ), १५ " बहुलमन्यत्रापि° " ( उ १९० ) इति णिलुक् ॥

यदब्रवीदिति ॥ इन्द्रस्य शत्रु वर्धस्व इति विवक्षन् अन्तोदात्तम् इन्द्रशत्रुशब्दम् आद्युदात्त *प्रयुक्तवान् तस्मात् अस्य वृत्रस्य इन्द्रः एव शत्रु शातयिता सजात। बहुव्रीहिपूर्वपदप्रकृतिस्वरत्वेन इन्द्रशत्रुशब्द आद्युदात्तो भवति। इन्द्रोऽस्य शत्रु. शातयितेति।

उपोद्घाते विश्वरूपवध [1]आद्ये समीरित ॥ २०

त्वष्टेति ॥ अथ द्वितीयानुवाकेऽग्नीषोमीयपुरोडाश विधित्सुरादौ तस्योपोद्घातस्य विध्युपयोग दर्शयति– ' त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्येन्द्र शत्रुरभवत् स संभवन्नग्नीषोमावभि समभवत् ॥ इषुमात्रमिषुमात्र विष्वङ्ङवर्धत स इमाँल्लोकानवृणोत् यदिमाँल्लोकान- २५ वृणोत् तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्' इति। यस्मात् कारणादस्योत्पत्त्यर्थमाहुतिम् [1]अवर्तयत् तस्मात्

१. त३– अत्र। २. ल– व्यपदेशम्। *–* त३ मै–'प्रयुक्तवान्. इति तत्त्वम्' इति नास्ति।

१. आ द– सम्यक्।

स इ॑षुमा॒त्रमि॑षुमात्रं॒ विष्व॑ङ्ङवर्धत॒ स इ॒माँल्लो॒कान॑वृणो॒द्यदि॒माँल्लो॒कान॑वृ॒णोत् तद्वृ॒त्रस्य॑ वृत्र॒त्वं तस्मा॒दिन्द्रो॑ऽबिभे॒त् स प्र॒जाप॑ति॒मुपा॑धाव॒च्छत्रु॑र्मेऽज॒नीति॒ तस्मै॒ वज्र॑ꣳ सि॒क्त्वा प्राय॑च्छदे॒तेन॑ ज॒हीति॒ तेना॒भ्या॑यत॒ ताव॑ब्रूताम॒ग्नीषोमौ॒ मा(२) प्र हा॑रा॒वमन्तः॒ स्व॒ इ॒ति

स.। इ॒षु॒मा॒त्रमि॑षुमा॒त्रमिती॑षुमा॒त्रम् - इ॒षु॒मा॒त्रम्। विष्व॑ङ्। अ॒व॒र्ध॒त॒। सः। इ॒मान्। लो॒कान्।
५ अ॒वृ॒णो॒त्। यत्। इ॒मान्। लो॒कान्। अवृ॑णोत्। तत्। वृ॒त्रस्य॑। वृ॒त्र॒त्वमिति॑ वृ॒त्र - त्वम्। तस्मा॑त्।
इन्द्रः॑। अ॒बि॒भे॒त्। सः। प्र॒जाप॑ति॒मिति॑ प्र॒जा - प॒ति॒म्। उपेति॑। अ॒धा॒व॒त्। शत्रुः॑। मे॒। अ॒ज॒नि॒।
इति॑। तस्मै॑। वज्र॑म्। सि॒क्त्वा। प्रेति॑। अ॒य॒च्छ॒त्। ए॒तेन॑। ज॒हि॒। इति॑। तेन॑। अ॒भीति॑। आ॒य॒त॒।
तौ। अ॒ब्रू॒ता॒म्। अ॒ग्नीषो॑मा॒वित्य॒ग्नी-सोमौ॑। मा ( २ )। प्रेति॑। हा॒ः। आ॒व॒म्। अन्तः॑। स्वः॑। इति॑।

ततश्च शत्रुशब्दस्य क्रियाशब्दत्वात् वृत्रस्यैव इन्द्रः नाशयिता तेन होमेन बभूव। शद्लृ शातने।
१० णिचि "शदेरगतौ तः" (पा ७·३·४२) इति तत्वम्। ततः औणादिके क्रुन्प्रत्यये (उ ५५३) "बहुलमन्यत्रापि" (उ १९०) इति णिलुक्। उक्तं च– "यथेन्द्रशत्रुः स्वरतोऽपराधात्" (पाशि ५२) इति। स संभवन्नित्यादि। व्याख्यातम् (तैसं २·४·१२)। वृत्रत्वमिति। वृणोतेः त्रप्रत्ययः। इदं द्वितीयं वृत्रत्वमस्य॥

स प्रजापतिमित्यादि॥ गतम्। [३]सिक्त्वा तीक्ष्णं कृत्वा।[४]उत्पाद्येत्येके। अथेन्द्रः [५]तेन वज्रेण
१५ सह वृत्रमभ्यागच्छत्। [५]अथ यदग्नीषोमौ, पूर्वं [७]सः [५]संभवन् वृत्रः [५]अभि [५]समभवत् [५]तौ [५]अग्नीषोमौ [६]प्रहर्तुकामम् [५]अब्रूतां [५]मा त्वमावां[६] प्रहार्षीः, [७]यं त्वं प्रहर्तुमारभसे अत्रान्तर्भूतौ [५]स्व आवाम्

कारणात् वर्धयति एतदर्थमिति व्युत्पत्त्या [२]वृत्रत्वं संपन्नम्। यस्मात् कारणात् [३]षष्ठीसमासस्वरं [४]विसृज्य बहुव्रीहिस्वरमुच्चारितवान्, [४]तस्मात् इन्द्रः [५]शातयिता यस्येति व्युत्पत्त्या वृत्रस्य [६]अस्य [७]इन्द्रः घातकः [८]अभवत्। [९]अवशिष्टं पूर्वप्रपाठके व्याख्यातम्॥

२० स इति॥ तस्य वधोपायं दर्शयति– 'स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत' इति॥ [१]सः इन्द्रो मम कश्चित् [२]शत्रुः जातः [३]इति वदन् [४]प्रजापतिम् असेवत। [५]तस्मै इन्द्राय स प्रजापतिः [६]वज्रं [१०]सिक्त्वा वृत्रमुद्दिश्य कृत्याभिमन्त्रितजलेन प्रोक्ष्य [७]एतेन [८]जहि [९]इति वदन् [७]प्रायच्छत्। जहि मारयेत्यर्थः॥ [७]तेन वज्रेण सहितः स इन्द्र एनं वृत्रं हन्तुमभिलक्ष्य [९]आयत [११]आगतवान्॥

२५ ताविति॥ इत्थमुपोद्घातं तदुपयोगं चोक्त्वाऽग्नीषोमीयपुरोडाशविधिमर्थवादेनोपपत्ति– 'तावब्रूतामग्नीषोमौ मा प्र हारावमन्तः स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेय-

३. लं– वृत्रमभ्य। ४. लं– उत्पाद्येके। ५. तं२–'अथ' नास्ति। ६–६. तं२–प्रहर्तुकामौ अमुना मा भावाम्। ७. तं२– यः।

२. गृ–°स्वरितं। ३. आ–विसृज्य। ४. आ–तस्मात् कारणात्। ५. अ.इ.उ.जो.पा.हा–
३० शाता। ६. क.रो१–'अस्य' नास्ति। ७. आ– अभूत्। ८. आ–घातम्। ९. आ– 'सः' नास्ति।
१०. इ.उ.जो.पा.हा– 'सिक्त्वा' नास्ति; ट.गृ– सिक्त्वा तीक्ष्णीकृत्वा। ११. ट– हन्तुमागत°।

**मम॒ वै यु॒वꣳ स्थ॒ इत्य॑ब्रवी॒न्माम॒भ्ये॑त॒मिति॒ तौ भा॑ग॒धेय॑मैच्छेतां॒ ताभ्या॑मे॒तम॑ग्नीषो॒मीय॑-मेका॑दशकपालं पू॒र्णमा॑से॒ प्राय॑च्छ॒त् ताव॑ब्रूताम॒भि सं॑दष्टौ॒ वै स्वो॒ न श॑क्नुव॒ ऐतु॒मिति॒ स इन्द्र॑ आ॒त्मनः॑ शीतरू॒राव॑जनय॒त्**

मम॑। वै। यु॒वम्। स्थ॒। इति॑। अ॒ब्र॒वी॒त्। माम्। अ॒भि। एति॑। इ॒त॒म्। इति॑। तौ। भा॒ग॒धेय॒मिति॑ भा॒ग-धेय॑म्। ऐ॒च्छे॒ता॒म्। ताभ्या॑म्। ए॒तम्। अ॒ग्नी॒षो॒मी॒यमित्य॑ग्नी-सो॒मीय॑म्। ५
एका॑दशकपाल॒मित्येका॑दश-क॒पा॒ल॒म्। पू॒र्णमा॑स॒ इति॑ पू॒र्ण मा॒से। प्रेति॑। अ॒य॒च्छ॒त्। तौ। अ॒ब्रू॒ता॒म्। अ॒भीति॑। सदं॑ष्टा॒विति॑ स॒ द॒ष्टौ॑। वै। स्वः॒। न। श॒क्नु॒व॒। ऐतु॒मित्या॒ ए॒तु॒म्। इति॑। स। इन्द्रः॑। आ॒त्मनः॑। शी॒त॒रू॒रावि॒ति॑ शी॒त-रू॒रौ। अ॒ज॒न॒य॒त्।

ᵛइति। इरतेर्लुङि (पा ३ २ ११०), सिचि वृद्धौ (पा ७ २ १) "बहुलं छन्दसि" (पा ७ ३ ९७) इतीडभावः। अथेन्द्र ᵛअब्रवीत् मदीयौ सुहृदौ युवां ᵛस्थ। इतिकरणो हेतौ। १० यस्मादेवं तस्मात् ᵛमाम् एव ᵛअभ्येत स्वज्यतामय जाल्मं ᵛइति। अथाग्नीषोमौ ᵛभागधेयं किंचि दात्मीयं भागम् इन्द्राल्लब्धुं ᵛऐच्छेताम्। अथ विदिताभिप्राय इन्द्रः ᵛताभ्याम् ᵛएतम् ᵛअग्नीषोमीयम् ᵛएकादशकपालं * ᵛपूर्णमासे आग्नेयस्य अनुनिर्वाप्यं ᵛप्र ᵛअयच्छत् प्रादात्। "द्यावापृथिवी शुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च" (पा ४ २ ३२) इति छः। तस्मादग्नीषोमीयमेकादशकपालं पूर्णमासे प्रधानमेव * कुर्यादिति विधिरनुमीयते ॥ १५

अथाग्नीषोमौ लब्धभागावपि पुनरपि ᵛअब्रूताम्– आवामत्र वृत्रभोगे ᵛअभि ᵛसंदष्टौ ᵛस्वः लग्नाविव भवाव। तस्मादिमं हित्वा त्वाम् ᵛऐतुम् आगन्तुं ᵛन ᵛशक्नुव न क्षमावहे

मैच्छेतां ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति॥ हे इन्द्र, 'मा 'प्र 'हा, वृत्र मा महर। 'आवम् 'अन्त 'स्वः, आवामुभावेतस्य [11]मुखमध्ये तिष्ठाव। [12]तच्छ्रुत्वा स इन्द्रः 'अब्रवीत् युवां [13]'मम 'स्थ [14]वै खलु 'इति, तस्मात् 'माम् 'अभ्येत मामभिलक्ष्याऽऽगच्छतम्[15] 'इति। २० ततोऽग्नीषोमौ [16]स्वसकाशमागतयो [17]आवयोः किं 'भागधेयम् इति पप्रच्छतुः। स चेन्द्रः [18]पूर्णमासे योऽग्नीषोमीयपुरोडाशः ■ युवयोर्भाग इति दत्तवान्। 'अग्नीषोमीयमेकादशकपालं [19]निर्वपेत्' इति विधिरत्र द्रष्टव्यः॥

ताविति ■ अग्नीषोमयोर्निर्गमनप्रकारं दर्शयति– 'तावब्रूतामभि संदष्टौ वै स्वो न शक्नुव ऐतुमिति स इन्द्र आत्मनः शीतरूरावजनयत् तच्छीतरूरयोर्जन्म य एवं शीतरूरयोर्जन्म वेद नैनं २५

८. ल– ताम्। *–* ल– 'पूर्णमासे आग्नेयस्य. प्रधानमेव' नास्ति। ९. मे४– वृत्रभागे, प२– वृत्रभेदे।

१२ आ– मुखे। १३ आ– तच्छ्रुत्वा। १४. ड ग्र.हो१– मदीयौ। १५–१५ ग्र हो१– तस्मा मामभिलक्ष्यागतम्, ड– तस्मा मामभिलक्ष्यागच्छतम्। १६ ड ग्र.हो१ त्वत्समीपमा°। १७ ड– 'आवयो' नास्ति। १८. ड ग्र हो१– पूर्णमासयागे। १९. ड– कुर्यात्। ३०

तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद ( ३ )नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिता प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति

तत्। शीतरूरयोरिति शीत-रूरयोः। जन्म। यः। एवम्। शीतरूरयोरिति शीत रूरयोः।
५ जन्म। वेद (३)। न। एनम्। शीतरूराविति शीत रूरौ। हतः। ताभ्याम्। एनम्। अभीति। अनयत्। तस्मात्। जञ्जभ्यमानात्। अग्नीषोमावित्यग्नी-सोमौ। निरिति। अक्रामताम्। प्राणापानाविति प्राण-अपानौ। वै। एनम्। तत्। अजहिताम्। प्राण इति प्र अन। वै। दक्षः। अपान इत्यप-अन। क्रतुः। तस्मात्। जञ्जभ्यमानः। ब्रूयात्। मयि। दक्षक्रतू इति दक्ष-क्रतू। इति।

१० इति। अथ इन्द्र आत्मन शीतरूराख्यौ रोगविशेषौ [10]आलस्यजृम्भणकारिणौ अजनयत्। देहस्यायासकरौ यत्नविशेषावि येके। तदित्यादि। गतम्। अथ इन्द्र ताभ्या शीतरूराभ्याम्, एन वृत्रम् अभ्यनयत् अभिसप्राप्तमकरोत्। यद्वा– अन्येनाविष्टस्य तन्मयत्व प्रतिपन्नस्य तदात्मतया चेष्टा अभिनय, तत्कारिण वृत्रमकरोत्। शीतरूरावावेश्य तद्भावापन्न वृत्रमभिनयति स्म। तत तस्मात् जञ्जभ्यमानात् शीतरूरावेशनेन आस्य व्यादाय जृम्भमाणगात्रात् वृत्रात् अग्नीषोमौ
१५ नि अक्रामता निष्क्रान्तौ। "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" (पा ३ १ २४) इति यङ्॥

अथ प्रसङ्गात् इद परमुच्यते। यदाऽग्नीषोमौ वृत्रमत्यजता तत् तदा प्राणापानौ एव खलु [11]एन वृत्रम् अजहिताम् अत्यजताम्। किं च प्राण दक्ष दक्षयिता। अपान क्रतु [12]कारयिता। तस्मात् जञ्जभ्यमान ब्रूयात् मयि दक्षक्रतू इति, न निष्क्रान्ता

२० शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामताम्' इति॥ वृत्रस्य मुखे दन्तपङ्क्तिस्याममिव सम्यग्दष्टावेव वर्तावहे। तस्मादागन्तु न शक्नुव इति उक्त इन्द्र तयो रागमनाय स्वात्मन सकाशाच्छीतज्वरं तदनन्तरभाविसताप चोभावुत्पादितवान्। तदानीं शीतरूरशब्दाभिधेययोर्ज्वरतापयो जन्म समुत्पन्नम्। तज्जन्मवेदिन [20-20]न शीतरूरौ हत न मारयत [20]। तत स इन्द्र ताभ्या शीतरूराभ्यामायुधभूताभ्याम् एनं वृत्रमभिलक्ष्य प्रयुक्ताभ्याम् अनयत् एन वृत्रं
२५ गर्भोऽजितवान्। तदा शीतज्वरसंतापाभ्या जञ्जभ्यमानात् मुखविदारण कुर्वत तस्मात् वृत्रात् अग्नीषोमौ निर्गतौ॥

प्राणापानावित्यिति॥ प्रसङ्गान्मन्त्र [21]कश्चिन्मुख्याय विनियुज्यते– 'प्राणापानौ वा एन तदजहितां प्राणो वै दक्षोऽपान क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेयाऽऽत्मन् धत्ते सर्वमायु

१० तै२ मै– मूत्रस्य जृम्भण°, पै२,ए– कुम्भ्य जृम्भण°। ११ तै२ मै ए– एताम्। १२
३० मै४ कारयिता।

२०–२० तौ शीतरूरौ न मारयत। २१ आइ– 'कैश्चित्' नास्ति।

प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायुरेति स देवता वृत्रान्निर्हूय वार्त्रघ्नं हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आ( ४ )ऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते

प्राणापानाविति प्राण-अपानौ । एव । आत्मन् । धत्ते । सर्वम् । आयुः । एति । सः । देवताः । वृत्रात् । निर्हूयेति निः-हूय । वार्त्रघ्नमिति वार्त्र-घ्नम् । हविः । पूर्णमास इति पूर्ण-मासे । ५
निरिति । अवपत् । घ्नन्ति । वै । एनम् । पूर्णमास इति पूर्ण-मासे । एति ( ४ ) ।
अमावास्यायामित्यमा-वास्यायाम् । प्याययन्ति । तस्मात् । वार्त्रघ्नी इति वार्त्र-घ्नी ।
पूर्णमास इति पूर्ण-मासे । अन्विति । उच्येते इति ।

वेति । एवं ब्रुवन् प्राणापानौ आत्मनि स्थापयति । ततः सर्वम् आयु प्राप्नोति । इद च क्रत्वङ्गमेवेति राद्धान्तितम्– " अहीनवत् पुरुषधर्मस्तदर्थत्वात् " ( द्र. मीसू ३-४-१४ ) इत्यत्र ॥ १०

अथाज्यभागयोर्विशेष उच्यते– अथेन्द्रः देवता अग्नीषोमादीन् वृत्रात् निर्हूय निर्गतान् कृत्वा हन्तु योग्य वृत्र कृत्वा पूर्णमासे वार्त्रघ्न वृत्रहण. सबन्धि हवि आज्यभाग-लक्षणं निरवपत् । यद्वा–वृत्रहत्यर्थं हविराज्य निरवपत् स्वात्वा पृथक् कृतवान् । हेतुमाह– एन हि वृत्र पूर्णमासे देवा घ्नन्ति तमोरूपत्वात् विनाशोपायस्तदा भवति । तस्मात् वार्त्रघ्नी वृत्रहन्तुः सबन्धिन्यौ तल्लिङ्गवत्यौ ऋचौ पूर्णमासे अनु उच्येते आज्यभागयो. १५

वेति ' इति । अग्नीषोमौ यदा निर्गतौ तदाना प्राणापानौ एव एनं वृत्रं त्यक्तवन्तौ । तयोश्च प्राणापानयोः क्रमेण दक्षः क्रतुः इत्येते नामनी । यस्मात् कारणात् एते तयोर्नामनी तस्मात् कारणात् मन्त्रकाले जञ्जभ्यमानः मुखविदारणरूपं गात्रविनामं कुर्वन् यजमान ' मयि दक्षक्रतू ' इति मन्त्रं ब्रूयात् । तिष्ठतामिति मन्त्रवाक्यशेषस्याध्याहारः । तेन मन्त्रपाठेन प्राणापानौ एव स्वात्मनि स्थिरौ धारितवान् भवति । ततोऽपमृत्युपरिहारेण सर्वम् आयु प्राप्नोति ॥ २०

स इति ॥ अथानेन वृत्रवधप्रसङ्गेनाऽऽज्यभागमन्त्रयुगल्यो कालभेदेन व्यवस्थां विधत्ते– ' स देवता वृत्रान्निर्हूय वार्त्रघ्नं हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम् ' इति ॥ स. इन्द्रोऽग्नीषोमप्रमुखा वृत्रमुखे स्थिता. सर्वा. देवता वृत्रात् निर्हूय नि सार्य वृत्रहननहेतुभूतं हविः आज्यभागद्वयरूपं पूर्णमासे सपादितवान् । लोकेऽपि एनं वृत्रम् आवरणात्मकान्धकाररूपेणावस्थितं चन्द्रं पूर्णिमादिने ज्योत्स्नया २५

१३. तं१.लं– स्थापयते । १४. तं२. ३– अग्नीषोमादिभि. । १५. मै– वृत्रह.संबन्धि । १६. मै.ल– ' निरवपत् ' नास्ति । १७. तं१.मै.ल– प्रयच्छन् । १८. तं१–विनाशोपायस्तदा ।

२२. भा–इत्येव, हो१–इत्येते तयोः । २३. द हो१– स्थितौ । २४. भा– अपरणात्मकं वृत्रान्धकार°; द–आवरणात्मकान्धकारेणावस्थितम् ।

वृधन्वती अमावास्यायां तत्सऽस्थाप्य वार्त्रघ्नं हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै

वृधन्वती इति वृधन् - वती । अमावास्यायामित्यमा - वास्यायाम् । तत् । सऽस्थाप्येति स स्थाप्य । वार्त्रघ्नमिति वार्त्र - घ्नम् । हविः । वज्रम् । आदायेत्या - दाय । पुनः । अभीति । आयत । ते इति । ५ अब्रूताम् । द्यावापृथिवी इति द्यावा - पृथिवी । मा । प्रेति । हा । आवयोः । वै । श्रितः । इति । ते इति । अब्रूताम् । वरम् । वृणावहै ।

पुरोऽनुवाक्ये *कार्ये । ते च “ अग्निर्वृत्राणि ”, “ त्वं सोमासि ” इत्येते ( तैब्रा ३ ५ ६ ) । हविर्ग्रहणं निर्वपति । ग्रहणं च हविर्धर्मविशेषप्राप्त्यर्थम् । "अमावास्यायाम् एनम् "आ "प्यायवन्ति । प्रवृद्ध इव भवति, तदानीं तमोपावृद्धया । तस्मात् "वृधन्वती वृधिक्रियालिङ्गवत्यौ ऋचौ १० "अमावास्यायाम् अनूच्येते, आज्यभागयोः पुरोनुवाक्ये* क्रियेते– “ अग्निः प्रत्नेन ”, “ सोम गीर्भिः ” ( तैब्रा ३ ५·६ ) इत्येते । वृधेरौणादिके कनिन्प्रत्यये मतुप्, “ अनो नुट् ” (पा ८ २ १६) च । "वार्त्रघ्न्यो वृत्रस्यैव "वृद्धि' शब्देनोच्यते । स एव पौर्णमासे हन्यते । वृधन्वत्योस्तु सोमस्य वृद्धि शब्देनोच्यते । तद्वृद्ध्या वृत्रस्य वृद्धिरित्यर्थात् गम्यते । वृत्रश्च तदानीं वर्धते इति "प्रसिद्धिः । उभयत्रापि “ वा छन्दसि ” (पा ६ १ १०६) इति पूर्वसवर्ण १५ दीर्घत्वम् ॥

तत्सऽस्थाप्येत्यादि । गतम् । ते इत्यादि । पूर्वं वर्धमानो वृत्रो ये द्यावापृथिव्यौ अभिसमभवत् "ते "अब्रूताम्– "मा आवा "प्र "हाः प्रहार्षीः "आवयोः खल्वसौ वृत्रः "श्रितः, तस्मात्

विनाशयन्ति । "अमावास्यायां ज्योत्स्नाया अभावात् वृत्रस्तमनन्धकारम् "आ "प्यायवन्ति "सर्वतो वर्धयन्ति" । यस्मादेव "तस्मात् वृत्रहननशब्दलाञ्छिते ऋचावाज्यभागयोः "पूर्णमासे पुरोनुवाक्ये कर्तव्ये । २० वृधिधातुयुक्ते ऋचौ "अमावास्यायां पुरोनुवाक्ये कर्तव्ये । “ अग्निर्वृत्राणि जङ्घनत् ”, “ त्वं राजोत वृत्रहा ”, ( तैब्रा ३·५ ६ ) इत्यनयोर्वृत्रहननप्रतीतेरेते ऋचौ वार्त्रघ्न्यौ । “ कविर्विप्रेण वावृधे ”, “ वर्धयामो वचोविदः ” ( तैब्रा ३·५ ६ ) इत्येते ऋचौ, वृधिधातुयुक्तत्वाद्वृधन्वत्यौ ॥

तदिति ॥ प्राप्तस्त्रिमाज्यभागमन्त्रव्यवस्था" विधाय प्रकृतं वृत्रवधप्रकारं दर्शयति– 'तत्सऽस्थाप्य वार्त्रघ्नं हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते २५ अब्रूतां वरं वृणावहै नक्षत्रविहिताऽहमसानीत्यसाववब्रवीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं ॥ एवं द्यावापृथिव्योर्वरं वेदेनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्' इति ॥

०–० तै१ मै१८–'कार्ये. ... पुरोनुवाक्ये' नास्ति । १९. तै३–वार्त्रघ्न्यो । २०. तै३–वृद्धि° । २१. तै१ मै१४– वृद्धि. ।

१५–१५. गे– 'सर्वतो वर्धयन्ति' नास्ति । २६. आ– °भागव्यवस्थां ।

नक्षत्रविहिताऽहमसानीत्यसावब्रवीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं य एवं द्यावापृथिव्यो(५)र्वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन् ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्यं नो वहतमिति

नक्षत्रविहितेति नक्षत्र - विहिता । अहम् । असानि । इति । असौ । अब्रवीत् । चित्रविहितेति चित्र विहिता । अहम् । इति । इयम् । तस्मात् । नक्षत्रविहितेति नक्षत्र विहिता । असो । ५
चित्रविहितेति चित्र - विहिता । इयम् । य । एवम् । द्यावापृथिव्योरिति द्यावा पृथिव्यो (५) । वरम् । वेद । एति । एनम् । वरः । गच्छति । स । आभ्याम् । एव । प्रसूत इति प्र - सूत । इन्द्रः । वृत्रम् । अहन् । ते । देवा । वृत्रम् । हत्वा । अग्नीषोमावित्यग्नी - सोमौ । अब्रुवन् । हव्यम् । न । वहतम् । इति ।

अस्मदाश्रय प्रहर्तुं नार्हसि इति । पुनश्च ते अब्रूताम् वरमित्यादि । नक्षत्रविहिता नक्षत्रैर्विनिध १० हिता स्थापिता नक्षत्राधीनस्थिति । यद्वा– नक्षत्रे निशिष्टानस्थानशरीरा । चित्रविहिता चित्रे नानाविधे पूजितेर्वा कुलशैले समुद्रादिभि विहिता तदधीनस्थिति, तद्विशिष्टावस्थाना वा । उभयत्रापि " तृतीया कर्मणि " ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । स इत्यादि । तत इन्द्र द्यावापृथिवीभ्या प्रसूत अनुज्ञात वृत्र हतवान् । अथ ते देवा इन्द्रेण राज्ञा

स इन्द्रो वृत्रहननहेतुभूतमाज्यभागरूप हवि सपूर्णं कृत्वा वर्धयन् वज्रम् आदाय पुन अपि १५ वृत्रमभिलक्ष्य हन्तुमागतवान् । तदानीं द्यावापृथिवी अब्रूताम्– अय वृत्रो भूमिमारभ्य द्युलोकपर्यन्त व्याप्य आवयो आश्रितो वर्तते तस्मान्मदीयमेन मा प्रहर इति । तत इन्द्रस्तावङ्गीकारमपरोक्ष्य प्रहारमभ्यनुज्ञातुमुकोवरयेन वर वृतवत्यौ । नक्षत्रैर्विहिताऽलङ्कृता स्याम् इति दिवो वर । मनुष्यपशुवृक्षनगनदीसमुद्रादिरूपेण विचित्रेण विहिताऽलङ्कृता स्याम् इति पृथिव्या वर । तेन वरेण ते तथैव स्याताम् । एतद्वराभिज्ञोऽपि स्वाभीष्ट वर प्राप्नोति । तत स इन्द्रो द्यावापृथिवीभ्यामनुज्ञात. २० वृत्र हतवान् ॥

त इति ॥ अथाभिहितस्याग्नीषोमीयपुरोडाशस्य वेदनं प्रशंसति– ' ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्य नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साऽब्रवीद्वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद २५ तेजस्व्येव भवति ' इति ॥ इन्द्रयुक्ता पार्श्ववर्तिन सर्वे देवा वृत्र हत्वा तन्मुखगाविन्तौ अग्नीषोमौ प्रति हव्यम् अस्मदर्थं वहतम् इति अब्रुवन् । तत तौ अग्नीषोमौ तान् देवान् प्रत्येवम् अब्रूताम्–त्यौ

२२. तैर मैल–विहिता । २३. मैर–' स्थापिता ' इत्यस्यानन्तर ' विर्द निशष्येरे ता ' । २४ मैर–कुशले । २५. मैल–तत्र । २६. ल–' इन्द्र ' नास्ति ।

२७. होर– न । २८. कग्र.होर– °कुशगिरिनदी° । २९. क–चित्रेण । ३०. कखग्र. ३० होर– अप विहितस्या° । ३१. आ मे–देवी ।

तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साऽब्रवीत् (६) वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति

५ तौ । अब्रूताम् । अपतेजसावित्यप - तेजसौ । वै । त्यौ । वृत्रे । वै । त्ययोः । तेजः । इति । ते । अब्रुवन् । कः । इदम् । अच्छ । एति । इति । गौः । इति । अब्रुवन् । गौः । वाव । सर्वस्य । मित्रम् । इति । सा । अब्रवीत् ( ३ ) । वरम् । वृणै । मयि । एव । सता । उभयेन । भुनजाध्वै । इति । तत् । गौः । आ । अहरत् । तस्मात् । गवि । सता । उभयेन । भुञ्जते । एतत् । वै । अग्नेः । तेजः । यत् । घृतम् । एतत् । सोमस्य । यत् । पयः । यः । एवम् ।
१० अग्नीषोमयोरित्यग्नी - सोमयोः । तेजः । वेद । तेजस्वी । एव । भवति ।

वृत्रं हत्वा । अग्नीषोमावित्यादि । गतम् । त्याविति । ताविमौ वामपगततेजस्कौ स्वः वृत्रे खलु त्ययोः [* तेजः इति । ते देवा अब्रुवन् कः नाम इदं तेज आसु गच्छति इति* । ] पुनः स्वयमेव देवा अब्रुवन् ननु गौः सर्वस्य मित्रं भवति तस्मात् सर्वत्र गच्छन्तीमिमां न कश्चिन्निवारयति तस्मादियमेव गत्वा तत्तेज आहरत्विति ॥
१५ साऽब्रवीदित्यादि ॥ यथाऽऽज्ञापितं देवैः तदिदं क्रियत एव मया, अहमपि किंचित् वरं वृणे वरितुं प्राप्तकालाऽहम् । किं तदिति चेत् ? इदं विज्ञाप्यते– मयि एव सता उभयेन घृतेन पयसा च भुनजाध्वै सुहिता भवितुमर्हथ । भोगेन सौहित्यं लक्ष्यते । लेटि आडागमः, (पा ३ ४ ९४) "वैतोऽन्यत्र" (पा ३ ४ ९६) इत्यैकारः, "छन्दस्युभयथा" (पा ३ ४ ११७) इति लेटि आर्धधातुकत्वेन ङित्त्वाभावात् "श्नसोरल्लोपः" (पा ६ ४ १११) इति न
२० प्रवर्तते । तदित्यादि । गतम् ॥

तथाविधौ वृत्रेण चिरं दलनादपगततेजस्कावेव सपत्नौ । त्ययोः तथाविधयोः आवयोः [31] तेजः सामर्थ्यं वृत्रे एव स्थितम् इति । [32] ते देवा परस्परम् अब्रुवन्– कः नाम इदं तेज आसु गच्छति इति । तत्र बुद्धिमन्त एवं गौः [33] सर्वमित्रत्वेन वैराभावात् गौः एव वृत्रशरीरं गत्वा तेजः समानेष्यति इति उक्तवन्तः । सा [34] च [35] गौरुक्तोपरूपं [36] वरमेवमयाचत–अनयोः सम्बन्धि घृतपयोरूपं तेजो वृत्रशरीरादानेष्यामि, आनीतं
२५ च तत् मयि एव सर्वदा तिष्ठतु, मयि एव स्थितेन तेन उभयेन तदा तदा स्वीकृतेन [37] यूयं भोगं निर्वर्तयध्वम् इति । तमिमं वरं लब्ध्वा तत् तेजः गौः आहरत् । तस्मात् घटपूर्वस्याल्लोकेऽपि निरन्तरं गवि ....... । ]

०-० [ लिखितपुस्तकेषु एतावान् ग्रन्थो नोपलभ्यते, मै–मुद्रितपुस्तकमनुसृत्य पूरितोऽयं भागः । ]

३२ आ ट– 'आवयोः' नास्ति । ३३. ट–ततो । ३४–३५ ओ मा– वेचा अ आ ? उ पा– गो । – ३५. आ हो१– अपि । ३६ आ– °लोचरूपत्वे । ३७ ग्रे– वरभोगम° । ३८
३० आ ट– 'पूर्वे' नास्ति ।

ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं निरवासाययदिति तस्मा( ७ )ज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ॥ २ ॥
[ अस्य मा वेदा द्यावापृथिव्योरब्रवीदिति तस्माच्चत्वारि च ]

ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । किंदेवत्यमिति कि-देवत्यम् । पौर्णमासमिति पौर्ण-मासम् । इति । प्राजापत्यमिति प्राजा-पत्यम् । इति । ब्रूयात् । तेन । इन्द्रम् । ज्येष्ठम् । पुत्रम् । निरवासाययदिति निः-अवासाययत् । इति । तस्मात् । ज्येष्ठम् । पुत्रम् । धनेन । निरवसाययन्तीति निः-अवसाययन्ति ॥ २ ॥ ५
[ मैसं . कासं ... कपिसं . ]

आज्यभागयोर्विधिः– 'ब्रह्मवादिनः' इत्यादि ॥ कस्यै देवतायै इदम् । "देवतान्तात् तादर्थ्ये यत्" (पा ५ ४ २४ ) पौर्णमास्या कार्यं कर्म [v]पौर्णमासम् । तदिदं [v]किंदेवत्यम् [v]इति [v]यदा [v]ब्रह्मवादिन पृच्छेयुः तदा [v]ब्रूयात् उत्तर– [v]प्राजापत्यम् [v]इति । प्रदर्शनार्थत्वात् आमावास्यमपि गृह्यते । यदुक्त–" परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्" (तैस १.६ ९) इति, तदेष[27] स्मारयति । इन्द्रग्रहण चोपलक्षण तत्रोक्ताना त्रयाणाम् इन्द्राग्निसोमानाम् । एतदुक्त भवति –प्रशस्ततमान् पुत्रान् इन्द्राग्निसोमान् प्रजापतिरनेन कर्मणा [v]निः [v]अवासाययत् [29]देवतान्तरेभ्यो व्यावृत्तानकरोत्, प्रशस्ततमान् [v]एतान् मन्यमानो ज्येष्ठभागमिन्द्राग्न्यादिभ्यः कर्मैतदुक्तानिति । तस्मादित्यादि । वयसा विद्यादिना[31] वा प्रशस्यतम [v]पुत्र [v]धनेन [v]निरवसायपन्ति पुत्रान्तरेभ्यो व्यावृत्तमधिकधन कुर्वन्ति पितर. । "शाच्छासाह्वाव्यावेपा°" (पा ७ ३.३७) इति युक्, "गतिर्गतौ" (पा ८.१.७०) इति पूर्वस्य निघाताभाव । "उदात्तवता तिङा" (द्र. पामा २.२ १८ वा ४) इति समास. ॥ १० १५

इति द्वितीये पञ्चमे द्वितीयोऽनुवाकः ॥ २०

[32]तिष्ठत्येव तेजसा घृतपयोरूपेण[33] [v]उभयेन यदा तदा स्वीकृतेन सर्वे भोजनं निष्पादयन्ति । तत्र [v]यत् [v]घृतम् [v]एतद् एव [v]अग्नेः [v]तेजः, [v]यत् [v]पयः [v]एतत् एव [v]सोमस्य तेजः, तदुभयवेदनेन [v]तेजस्वी [v]भवति इति ॥

ब्रह्मवादिन इति ॥ तदिदमग्नीषोमीयपुरोडाशरूपं पौर्णमासकर्म प्रजापतिसम्बन्धित्वेनेन्द्रसम्बन्धित्वेन च प्रशंसति– 'ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं २५

२७. तं३.मै.लं– यावत् । २८. तं३.मै.लं– तदवरे । २९. तं३.मै– देवान्तरेभ्य ३०. तं३.मै.लं– 'एतान्' नास्ति । ३१. तं३– विद्यादिना (?)।

३२–३९. मृं– तिष्ठता तेज पयो°, ब होर– तिष्ठति तेज पयो°।

निरवासाययदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ' इति ॥ नात्र प्रजापतेः हविर्भावत्वेन[40] पौर्णमास देवतात्वं किं[41]तु तत्कर्मस्रष्टृत्वेन। तच्च पूर्वकाण्ड उदाहृतम्– " प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं च " (तैस १ ६ ९) इत्यादि। स च प्रजापतिः [42]तेन पौर्णमासकर्मणा स्वकीयं [43]ज्येष्ठं [44]पुत्रम् [45]इन्द्रं [46]निरवासाययत् नि शेषवित्तदानेन स्थिरनिवासमकरोत्। एतदपि पूर्वकाण्ड एव स्पष्टमुदाहृतम् –" तेनेन्द्रं निरवासाययत् तेनेन्द्रः परमां काष्ठामगच्छत् " (तैस १ ६ ९) इति। यथा प्रजापतिर्यज्ञान् ससर्ज तथेन्द्रोऽप्यग्नीषोमौ वृत्राद्वि सार्य ताभ्यामिमं पुरोडाशं दत्तवानिति अस्ति प्रजापतेरिवेन्द्रस्यापि संबन्धः। यस्मात् प्रजापतिरिन्द्रं निरवासाययत् [47]तस्मात् लोकेऽपि [48]ज्येष्ठं [49]पुत्रं [50]धनेन [51]निरवसाययन्ति नि शेष मायुषोऽवसान धनेन युक्तो यथा प्राप्नोति तथा कुर्वन्तीत्यर्थः ॥

[52]अत्र मीमांसा ॥ पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" अग्नीषोमीय आग्नेयात् पूर्वो नो वाऽस्तु पूर्वता ।
ब्राह्मणक्रमतो नैव मन्त्रक्रमबलत्वतः ॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः ॥
[53]प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता " ॥ ( जैन्या ५ १ १८ १९ ) ॥

अग्नीषोमीययागस्तैत्तिरीयब्राह्मणे[54] पञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः –"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् " (तैस २ ५ २) इति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाक आम्नातः – " यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति " (तैस २ ६ ३) इति। [55]तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति [56] प्राप्ते ब्रूमः – मन्त्रकाण्डे पूर्वं पठिता आग्नेय मन्त्राः । तथा हि होतृकाण्ड आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् " अग्निर्मूर्धा " (तैब्रा ३ ५ ७) इत्यादिके आग्नेय्यौ, याज्यानुवाक्ये आम्नाते। तत –" प्रजापते न त्वदेतानि " ( तैब्रा ३ ५ ७ ) इत्यादिके प्राजापत्ये। तत – " अग्नीषोमा सवेदसा " ( तैब्रा ३ ५ ७ ) इत्यादिके अग्नीषोमीये। [57]आध्वर्यवकाण्डे– " अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम् " ( तैस १ १ ४ ) इत्याग्नेय पूर्वमाम्नातः । [58]याजमानकाण्डेऽपि– " अग्नेरहं देवयज्ययाऽन्नादो भूयासम् " ( तैस १ ६ २ ) इत्याम्नाय[59] पश्चात् " अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् " ( तैस १ ६ २ ) इत्याम्नायते। मन्त्रक्रमश्च प्रबलः । [60]मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात्। ब्राह्मणं स्वप्राप्तपदार्थविधिनाऽपि चरितार्थम्। अतोऽनुष्ठानस्मरणायैवोत्पन्नान् मन्त्रान् बाधितुं नालमिति मन्त्रक्रमेणाऽऽग्नेयस्यैव [61]प्रथममनुष्ठानम् ॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत।
वाक्यादाद्यः प्रक्रियया द्वितीयस्त्वविरुद्धया " ॥ ( जैन्या ३ ४ १७ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– " प्राणो वै दक्षोऽपान क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायुरेति " इति। गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः,

---

[40] आ ढ– हविर्भावत्वेन। [41] ग्र.होर– तर्हि। [42] आ– अय। [43] अ इ उ जो ना पा हा– प्रादन्यात्। [44] अ इ उ जो हा– °रीये ■ ब्राह्मणेन, ना– °रीये ■ ब्राह्मणे क– °रीये ब्राह्मणे। [45-55] अ इ उ पा–तत्रानुष्ठानस्योक्तविध्यधीनत्वादग्नीषोमीयस्य पूर्वत्वे, ढ होर–अत्रानुष्ठानेऽक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति, जो ना हा– तत्रानुष्ठानस्य प्रथममनुष्ठाने। [56] अ इ उ जो पा हा– यथाध्वर्यु°, ना होर– तथाध्वर्यु°। [57] आ हा होर– यजमान°। [58] क ना जो हा– इत्याग्नेयस्य, हाइ–इत्याम्नाय तत्°। [59] हा– मन्त्रैश्च। [60] ढ–प्रथमानु°।

तस्य वाक्यात् मन्त्रोक्ति प्रतीयते। वाक्य च प्रकरणाद्बलीय। तस्मात् केवल मुख्य इति चेत्। मैवम्। क्रतावपि जप्यमानपुरुषसमेन वाक्यप्रकरणयोर्विरोधाभावे सत्युभाभ्या क्रतुयुक्तपुरुषसंस्कारत्वाव गमात्[५१]॥

तत्रैव प्रथमपादे चिन्तितम्—

" [५२]वार्त्रघ्न्यौ पौर्णमासे स्तो वृधन्वत्यौ तु दर्शगे। ५
इति [५३]प्रधानशेषत्वमुक्त किं[५३] वा व्यवस्थिति ॥
क्रमेण प्रापिता [५४]मन्त्राश्चत्वारोऽप्याज्यभागयो।
क्रमाद्वाक्य बलीयोऽत एषा दर्शादिशेषता॥
न मुख्ये सोम एकोऽस्ति आऽऽधारत्वादिकालयो।
दर्शादेरव्यवस्थित्याऽऽप्तौ वाक्याद्व्यवस्थिति "॥ ( जैम्या ३ १ २९-३१ )॥ १०

दर्शपूर्णमासप्रकरणे श्रूयते—" तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्" ( तैस २ ५ ६ ) इति। तत्रैव वार्त्रघ्नीयुगल वृधन्वतीयुगल च होतृकाण्डे आज्यभागयो क्रमे "अग्निर्वृत्राणि जङ्घनत्" ( तैब्रा ३ ५ ६ ) इत्यनुवाकेनाऽऽम्नातम्[५५]। उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरव गम्यते। तत्र वाक्यस्य प्रबलत्वादेषा मन्त्राणा दर्शपूर्णमासयागाङ्गत्व [५६]न त्वाज्यभागाङ्गत्वम् [५६] इति प्राप्ते ब्रूम —" अग्निर्वृत्राणि जङ्घनत् " ( तैब्रा ३ ५ ६ ) इत्याग्नेयी प्रथमा वार्त्रघ्नी। " त्व सोमासि सत्पति " १५ ( तैब्रा ३ ५ ६ ) इति सौम्या द्वितीया वार्त्रघ्नी। " अग्नि प्रत्नेन जन्मना " ( तैब्रा ३ ५ ६ ) इत्याग्नेयी प्रथमा वृधन्वती। " सोम गीर्भिष्ट्वा वयम् " ( तैब्रा ३ ५ ६ ) इति सौम्या द्वितीया वृधन्वती। तत्र मुख्ययो [५७]दर्शपूर्णमासयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यात्व[५८] कथचित् [५९]भवतु। सौम्ययोस्तु तत्र सभवति। सोमदेवताया अभावात्। न ह्यग्नीषोमीयेऽपि केवल सोमो विद्यते। किं च [६०]पूर्णमासे, अमावास्यायामिति[६०] [६१]सप्तमीभ्याम् आधारत्व गम्यते। [६२]तच्च यागवाचित्वे यागस्य २० मुख्यत्वाच्च सभवति। कालस्य तूपसर्जनत्वात् तद्वाचित्व युक्तम्। किं च प्रधानमन्त्रानुवाकस्यानन्तर मेवायमनुवाक पठित। स चाऽऽज्यभागयोरङ्गयो क्रमो न तु मुख्ययोर्दर्शपूर्णमासयो। तस्माच्च मन्त्र चतुष्टयस्य मुख्ययागाङ्गत्व [६३]किं तु आज्यभागाङ्गत्वम्[६३]। अन्यतत् क्रमेणैव स्थ तत्राप्याग्नेये प्रथम आज्यभागे मन्त्रोऽप्याग्नेय। सौम्ये द्वितीये सौम्य इत्येषा व्यवस्था लिङ्गेनैव लभ्यते। [६४]बाढम्। तथाऽपि[६४] वार्त्रघ्नीयुगल पूर्णमासे वृधन्वतीयुगलममावास्यायामित्येषा व्यवस्था दर्शमपारा ब्राह्मणवाक्येन २५ [६५]विधीयते इति न [६६]वैयर्थ्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥

---

५१ अ इ उ जो ना पा हा– °त्वाभ्युपगमात्। ५२ अ इ उ ऊ पा– वार्त्र(?)घ्नी, जो ग१ हो१– वार्त्रघ्नी। ५३–५३ अ इ उ पा– °शेषत्वमुतास्विन् वा। ५४ अ इ उ पा– मन्त्रा श्रुत्या नेप्यत्व°। ३० ५५ अ इ पा– इत्यादिनानुवाकेनाम्नातम्। ५६–५६ अ उ ऊ पा हो१– ' न त्वाज्यभागाङ्गत्वम् ' नास्ति। ५७ क जो ना हा– °मासयागयोराग्नेय°। ५८ हा– पुरोनुवाक्यार्थत्वम्। ५९ अ इ उ पा हो१– भवति। ६०–६० आ क जो ना– पौर्णमास्याममावा°, अ इ उ पा– पौर्णमासे अमावास्या°। ६१ ग इ पा– सप्तम्या। ६२ ग१– तत्र। ६३–६३ अ इ उ पा ग१ हो१– ' किं तु आज्यभागाङ्गत्व ' नास्ति। ६४–६४ अ इ उ पा– ' बाढम् तथापि ' नास्ति, ङ हो१– बाढ तथापि। ६५ क हो१– अभिधानं। ३५ ६६ क ङ जो ना हा हो१– नैरर्थ्यम्।

इन्द्रं वृत्रं जघ्निवांसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्
तं निरवपत् तेन वै स मृधोऽपाहत यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृधं एव
तेन यजमानोऽपं हत इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत
स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि ( १ )

---

५ इन्द्रम् । वृत्रम् । जघ्निवांसम् । मृधः । अभि । प्रेति । अवेपन्त । स । एतम् । वैमृधम् ।
पूर्णमास इति पूर्णमासे । अनुनिर्वाप्यमित्यनु - निर्वाप्यम् । अपश्यत् । तम् । निरिति । अवपत् ।
तेन । वै । स । मृधः । अपेति । अहत । यत् । वैमृधः । पूर्णमास इति पूर्ण मासे ।
अनुनिर्वाप्य इत्यनु निर्वाप्यः । भवति । मृधः । एव । तेन । यजमान । अपेति । हते । इन्द्रः ।
वृत्रम् । हत्वा । देवताभिः । च । इन्द्रियेण । च । वीति । आर्ध्यत । स । एतम् । आग्नेयम् ।
१० अष्टाकपालमित्यष्टा कपालम् । अमावास्यायामित्यमा - वास्यायाम् । अपश्यत् । ऐन्द्रम् । दधि

---

इन्द्र वृत्रमित्यादि ॥ वैमृधस्यैकादशकपालस्य विधि । [१]वृत्र हतवन्तम् [२]इन्द्र [३]मृध सङ्ग्रामाभिमुख्येन आगत्य प्रकर्षेणावेपयन् । स एतमित्यादि । विमृदिन्द्र , तस्येद कर्म [४]वैमृध प्रधानानन्तरम् [५]अनुनिर्वाप्यम् । गतमन्यत् ॥

इन्द्रो वृत्र हत्वेत्यादि ॥ ऐन्द्राग्नस्य विधि , ऐन्द्रस्य च दध्न ॥

---

१५ [१]द्वितीयेऽग्नीषोमयागोऽभिहित पूर्णिमादिने ॥

अथ तृतीयेऽमावास्याया सानाय्ययागो वक्तव्य ।

इन्द्रमिति ॥ तत्र प्रथम तावत् पौर्णमास्यामनुनिर्वाप्य वैमृधं विधित्सु ' प्रस्तौति– ' इन्द्र वृत्रं जघ्निवांसम् मृधोऽभि प्रावेपन्त स एत वैमृध पूर्णमासेऽनुनिर्वाप्यमपश्यत् त निरवपत् तेन वै स मृधोऽपाहत ' इति ॥ अथ च इन्द्र [२]वृत्र हतवान्तम् [३]इन्द्र [४]मृध वृत्रपक्षपातिनो वैरिणोऽमित समागत्य प्रकर्षेण
२० भयमुत्पाद्याकम्पयन् । विनाशिता मृधो वैरिणो येन देवेनासौ [५]विमृत् । स देवो यस्यैतादृशाय तत्स्य पुरोडाशस्य सोऽयं वैमृध । त पुरोडाश [६]पूर्णमासयागे [७]अनुनिर्वाप्य प्रधानकर्मणः पश्चान्निर्वापयोग्यम् [८]अपश्यत् ॥

यदिति ॥ अथ विधत्ते– ' यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हते ' इति ॥

२५ इन्द्र इति ॥ अथ सानाय्यनामकमैन्द्र दधि विधातु प्रस्तौति– ' इन्द्रो वृत्रꣳ हत्वा देवताभिरिन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्र दधि त निरवपत् तेन वै स देवताभिरिन्द्रि

तं निरवपत् तेन वै स देवताश्चेन्द्रियं चावारुन्द्ध यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्द्ध इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं ( २ ) पृथिवीमनु व्यारत् तदोषधयो

( १ ) । तम् । निरिति । अवपत् । तेन । वै । स । देवताः । च । इन्द्रियम् । च । अवेति । ५
अरुन्द्ध । यत् । आग्नेय । अष्टाकपाल इत्यष्टा कपाल । अमावास्यायामित्यमा वास्यायाम् ।
भवति । ऐन्द्रम् । दधि । देवताः । च । एव । तेन । इन्द्रियम् । च । यजमान । अवेति ।
रुन्द्धे । इन्द्रस्य । वृत्रम् । जघ्नुषः । इन्द्रियम् । वीर्यम् । पृथिवीम् । अनु । वीति । आर्छत् । तत् ।
ओषधय । वीरुध । अभवन् । स । प्रजापतिमिति प्रजा पतिम् । उपेति । अधावत् । वत्रम् ।
मे । जघ्नुषः । इन्द्रियम् । वीर्यम् ( २ ) । पृथिवीम् । अनु । वीति । आरत् । तत् । ओषधय । १०

'इन्द्रस्य वृत्र जघ्नुष ' इत्यादिना सानाय्यादीनामुत्पत्तिक्रम दर्शयति– वृत्र हतवत इन्द्रस्य इन्द्रिय वीर्यं च पृथिवीम् अनुप्रविश्य वि आर्छत् विविध व्याप्तमभवत्। अर्तेः "पाघ्रा° " ( पा ७ ३ ७८ ) इत्यादिना ऋच्छादेश । तत् च पृथिवीमनुप्रविष्टम् इन्द्रिय वीर्यं च ओषधय वीरुध च अभवन् तदात्मना परिणतमभूत् । " ओषध्य फलपाकान्ता * लता गुल्माश्च वीरुध * " ( इ अको २ ४ ६ ९ ) इति । अथेन्द्र प्रजापतिम् १५ उपाधावत्, ' वृत्र जघ्नुष ' इत्यादि वदन् । अथ तच्छ्रुत्वा प्रजापति पशून् अब्रवीत्

यावारुन्द्ध ' इति ॥ "इन्द्र' वृत्रवधेन भीतो दूरे पलायमान स्वकीयाभि देवताभि "च स्वकीयेन सामर्थ्येन "च "व्याप्यैत वियुक्तोऽभूत् ॥

यदिति ॥ अथ विधत्ते – ' यदाग्नेयोऽष्टाकपालोऽमावास्याया भवत्यैन्द्र दधि देवताश्चैव तेनेन्द्रिय च यजमानोऽव रुन्द्धे ' इति ॥ अत्राऽऽग्नेयो न विधीयते । षष्ठे प्रपाठके–" यदाग्नेयोऽष्टाकपालोऽमावास्याया च २० पौर्णमास्या चाच्युतो भवति " ( तैस २ ६ ३ ) इति काण्डद्वये विधानात् । अत एव 'ऐन्द्राग्नैकादशकपाल-विष्णुक्रमणाय अयमर्थवाद – यथा केवलेनाप्याग्नेयेन देवतानामिन्द्रियस्य चावरोधो भवति तदानीमैन्द्राग्नेन तदवरोध इति किमु वक्तव्यमिति । 'अनया श्रुत्या' तद्विधिरस्त्रीयते। शाखान्तरे समानप्रकरणे १पष्ट तद्विधानात् । ऐन्द्रदधिविधिस्त्वसंदिग्ध एव ॥

इन्द्रस्येति ॥ तमेव विधिं स्तोतु सानाय्यनिर्वचन दर्शयति– ' इन्द्रस्य वृत्र जघ्नुष इन्द्रिय वीर्यं २५ पृथिवीमनु व्यार्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्र मे जघ्नुष इन्द्रिय वीर्यं पृथिवीमनु व्यारत् तदोषधयो वीरुधोऽभूवन्निति स प्रजापति पशूनब्रवीदेतदस्मै स नयतेति तत् पशव ओषधीभ्योऽ-

२. तै३– 'च' इत्यस्यानन्तर 'न'। *–* [ " प्रतानैर्वीरुध स्मृता " इति चरक–संहिताया सूत्रस्थाने ( १ ७२ ) ]

५ क शू हो१– 'इन्द्र ' नास्ति। ६ अ इ उ वो ना पा हा– 'च' नास्ति। ७ आ क ३० हो१– धृद्दो, शू– ध्यर्थो। ८ आ हा– ऐन्द्राग्नविष्णुक्रमणाय। ९–९ आ क–अनया श्रुत्या।

वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सं नयतेति तत्पशव ओषधीभ्यो-ऽध्यात्मन्त्समनयन् तत्प्रत्यदुहन् यत् समनयन् तत्सान्नाय्यस्य सान्नाय्यत्वं यत् प्रत्यदुहन् तत् प्रतिधुषः प्रतिधुक्त्वꣳ समनैषुः प्रत्यधुक्षन् न तु मयि श्रयत इत्यब्रवीदेतदस्मै

वीरुधः । अभूवन् । इति । सः । प्रजापतिरिति प्रजा पतिः । पशून् । अब्रवीत् । एतत् । अस्मै । ५ समिति । नयत । इति । तत् । पशवः । ओषधीभ्य इत्योषधि भ्यः । अधीति । आत्मन् । समिति । अनयन् । तत् । प्रतीति । अदुहन् । यत् । समनयन्निति सम् अनयन् । तत् । सान्नाय्यस्येति सा नाय्यस्य । सान्नाय्यत्वमिति सान्नाय्य त्वम् । यत् । प्रत्यदुहन्निति प्रति-अदुहन् । तत् । प्रतिधुष इति प्रति धुषः । प्रतिधुक्त्वमिति प्रतिधुक् त्वम् । समिति । अनैषुः । प्रतीति । अधुक्षन् । न । तु । मयि । श्रयते । इति । अब्रवीत् । एतत् । अस्मै ( ३ ) ।

१० [v]एतत् इन्द्रियादिकम् [v]अस्मै इन्द्राय [v]सनयत सम्यगिम प्रापयत [v]इति । [v]पशवः च [v]ओषधीभ्य ओषधीनां सकाशात् [v]तृणादिभक्षणद्वारेण [v]तत् इन्द्रियादिकम् [v]आत्मनि [v]अधि [v]समनयन् आत्मनि सम्यगानीतवन्त । [v]तत् च अनुनीत सजात [v]प्रति [v]अदुहन् ओषधीभ्य आत्मनि [v]दुग्ध प्रत्यदुहन् इन्द्राय पुनरदुहन् । एव सनयनात् [v]सान्नाय्यत्व, प्रतिदोहनात् [v]प्रतिधुक्त्व पयस । प्रतिदुह्यत इति * प्रतिधुक्, छान्दसो वर्णविकार । नयतेर्ण्यति "पाय्यसान्नाय्य०"
१५ (पा ३ १ १२९ ) इति निपात्यते, निपातनादेवाभिमतस्वरसिद्धि ॥

अथेन्द्र प्रजापतिम् [v]अब्रवीत् मदीयमिन्द्रियादिकं पशव * ओषधीभ्य आत्मनि [v]सम् [v]अनैषु । मह्य च [v]प्रति [v]अधुक्षन् । "शल इगुपधादनिट क्स" (पा ३ १ ४५) ।

ध्यात्मन्त्समनयन् तत् प्रत्यदुहन्, यत् समनयन् तत् सान्नाय्यस्य सान्नाय्यत्वं यत् प्रत्यदुहन् तत् प्रतिधुष प्रतिधुक्त्वम्' इति ॥ [1]अभ्भुव इतवन्त । [2]व्याप्तेस् विविधत्वेन प्राप्नोत् । ओषधिवीरुधोर्भेद पूर्वाचार्यैर्दर्शित
२० –"ओषध्य फलपाकान्ता लता गुल्माश्च वीरुध *" (द्र अको २ ४ ६ ९) इति । तदेतदिन्द्रियसामर्थ्यस्योषध्यादिरूपत्व प्रजापतेरग्रे कथितवान् । [3]स च [4]प्रजापति [5]एतत् इन्द्रियसामर्थ्यमिन्द्रार्थं सम्यक् प्रापयतेति [6]पशून् [7]अब्रवीत् । [8]तत् सामर्थ्यं [9]पशव [10]ओषधिसकाशादानीय स्वात्मन [11]अधि [12]स्वशरीरे सम्यक् स्थापितवन्त । पुन स्वनिष्ठ [13]तत् वीर्यं क्षीरादिरूपमिन्द्र प्रति दुग्धवन्त । यस्मात् पशव [14]समनयन् तस्मात् [15]सान्नाय्यस्य सम्यक् [16]नयनेन सम्पन्नम् इति व्युत्पत्त्या सान्नाय्यनाम भवति । [17]अस्मादिन्द्र प्रति
२५ दुग्धत्वस्मात् [18]प्रतिधुष प्रतिदिनं दुह्यमानस्य क्षीरस्य प्रतिधुगिति नाम सम्पन्नम् ॥

समिति ॥ अथ शतनामनिर्वचन दर्शयति– 'समनैषु प्रत्यधुक्षन् न मयि श्रयत इत्यब्रवीदिन्द्र तस्मै पुन पशवोऽर्पयन्, तदस्मै शतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयत् तच्छृतस्य शृतत्वम्' इति ॥

३ तै३ ९– पुमादि च सम्यक्' । ४ तै३– अदुग्धम् । ०-० [ ख– 'प्रतिधुक् इन्द्रियादिकं सम्यक्' इत्यर भागो नास्ति ] ।

३० *(द्र मानवं शतपथ० ( ५२) । १० आ–ओषधीभ्य सका° । ११, ट तै१– स्वशरीरमध्ये स्थापितवन्त मध्य । १२ आ–सान्नाय्यस्य सम्यक् । १३ आ–आनयेन । १४–१४ अ उ को नास्ति ।

( ३ ) शृतं कुरुतेत्यब्रवीत् तदस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छृतस्य शृतत्व५ समनैषुः प्रत्यधुक्षञ्छृतमक्रन् न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वं

शृतम् । कुरुत । इति । अब्रवीत् । तत् । अस्मै । शृतम् । अकुर्वन् । इन्द्रियम् । वाव । अस्मिन् । वीर्यम् । तत् । अश्रयन् । तत् । शृतस्य । शृतत्वमिति शृत त्वम् । समिति । अनैषु । ५ प्रतीति । अधुक्षन् । शृतम् । अक्रन् । न । तु । मा । धिनोति । इति । अब्रवीत् । एतत् । अस्मै । दधि । कुरुत । इति । अब्रवीत् । तत् । अस्मै । दधि । अकुर्वन् । तत् । एनम् । अधिनोत् । तत् । दध्न । दधित्वमिति दधि त्वम् ।

[5]तत् [v]तु [v]मयि [6] [v]न [v]श्रयते न पच्यते न मयि प्रीतिं करोति । श्रिञ् पाके, व्यत्ययेन शप् । अथ प्रजापति पशून् [v]अब्रवीत् । [v]एतत् [v]अस्मै इन्द्राय [v]शृत पाक्य [v]कुरुत । यद्वा–न तु मयि श्रयते १० स्थितिं न करोति । श्रीञ् सेवायाम् । एवमिन्द्रेणोक्ते प्रजापतिरब्रवीत् एतदस्मै शृत पक्व कुरुत यथाऽस्मिन् श्रयत इति । शृतेति "शृत पाके" (पा ६ १ २७) इति निपात्यते । यद्वा–शृणाते शृतमिति छान्दस सम्प्रसारणम् ॥ [v]आह च–[v]तत् [v]अश्रयन्, [v]तत् [v]शृतस्य [v]शृतत्वम् इति । अथेन्द्र आह– [v]सम् [v]अनैषु [v]प्रति [v]अधुक्षन् [v]शृतम् [v]अक्रन् अकार्षु । [v]न [v]तु मा [v]धिनोति प्रीणयति [v]इति । करोते [v] लुङि "मन्त्रे घस" (पा २ ४ ८०) इति च्लेर्लुक् । धिवि १५

भो प्रजापते, त्वदाज्ञया पशव [v]समनैषु [v]प्रत्यधुक्षन् च क्षीररूप तद्वीर्यं [v]मयि [v]न [v]श्रयते पाकाभावात् मदुदरे सम्यक् जीर्यति [15]इति उक्तवान् । तत प्रजापति [16]पाककर्तॄन् प्रति [v]शृत पक्व [v]कुरुत [v]इति [v]अब्रवीत् । तथा कृते सति [17]तदिन्द्रियसामर्थ्यरूप पक्व पयोऽस्मिन्निन्द्रोदरे सम्यगाश्रितमभूत् । [18]तस्मात् श्रा पाक इत्यस्मात् श्रिञो वा शृतमिति नाम [19]निष्पन्नम् ॥

समिति ॥ अथ दधिनामनिर्वचन दर्शयति– 'समनैषु प्रत्यधुक्षञ्छृतमक्रन् न तु मा धिनोतीत्य- २० ब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वम्' इति । सनयनप्रति-दोहनशृतत्वानि सपन्नान्येव, किन्तु तच्छृत मा [v]तु [v]न [v]धिनोति न प्रीणयतीत्युक्त [20] प्रजापतिरातञ्चन-कर्तॄन् प्रति [v]दधि [v]कुरुत [v]इति [v]अब्रवीत् । [v]तत् च दधिकृत सत् [v]एनम् इन्द्रम् [v]अधिनोत् अप्रीणयत् । तस्मात् [21]धिनोतीति व्युत्पत्त्या[21] दधिनाम सपन्नम् । अत्र 'ऐन्द्र दधि ' इति विधिर्विस्पष्ट एव दृश्यते[22] । शृतनामनिर्वचनार्थवादेन 'ऐन्द्र पय ' इत्यपि[23] विधिमुन्नयेत् । अन्यथा वक्ष्यमाणशृतावदानविधानानुदय २५ प्रसङ्गात् ॥

५–५. तं२ मै ल– कर्तुमपि । ६–६ तं२ मै ट– अक्रन् ।

१५. आ क– इत्यर्थम् । १६ आ हा– पक्त, हो१– पाककर्तॄन् । १७ अ आ इ न जो ना पा हा– °सामर्थ्यं । १८–१८. अ आ इ उ ओ पा हा– पमभूत्, ट हो१ गं – पमभूत् पक्वमाश्रित च । १९ ट– ईपन्नम् । २०. आ– °तीत्युक्ते । २१–२१ आ– 'धिनोतीति व्युत्पत्त्या' नास्ति । ३० आ भं– 'दृश्यते' नास्ति । २३ आ– 'अपि' नास्ति ।

ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं (४) दधि हि पूर्वं क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्याव द्येदिन्द्रियमेवास्मिन् वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं तद्यत् क्वलै राक्षसं तद्यत् तण्डुलैर्वैश्वदेवं

ब्रह्मवादिन इति ब्रह्म वादिन । वदन्ति । दध्न । पूर्वस्य । अवदेयमित्यव देयम् (४) । दधि । हि । पूर्वम् । क्रियते । इति । अनादृत्येत्यना दृत्य । तत् । शृतस्य । एव । पूर्वस्य । अवेति । द्येत् । इन्द्रियम् । एव । अस्मिन् । वीर्यम् । श्रित्वा । दध्ना । उपरिष्टात् । धिनोति । यथापूर्वमिति यथा पूर्वम् । उपेति । एति । यत् । पूतीकै । वा । पर्णवल्कैरिति पर्ण-वल्कै । वा । आतञ्च्यादित्या तञ्च्यात् । सौम्यम् । तत् । यत् । क्वलै । राक्षसम् । तत् । यत् । तण्डुलै । वैश्वदेवमिति वैश्व देवम् ।

१० प्रीणनं, इदित्वान्नुम् (पा ७ १ ५८), "धिन्विकृण्व्योर च" (पा ३ १ ८०) इयुप्रत्यय । अथ प्रजापति अब्रवीत् पशून् एतत् अस्मै दधि प्रीणन कुरुत इति । ते च अस्मै प्रीणनम् अकुर्वन् । तदेनमित्यादि । गतम् । धिनोतीति दधि । धिनोते नि, द्विवचनादि । दधातिर्वा प्रीणने, इदित्वान्नुम् (?), "आदृगमहन°" (पा ३ २ १७१) इति कि प्रत्यय । दध्न इत्यनडादेशस्योदात्तत्वादुदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

१५ ब्रह्मवादिन इत्यादि ॥ अतीतायामेव रजन्या दधि उत्पाद्यते उत्तरेद्यु प्रातर्दोह इति दध्न पूर्वत्वमिति । एतद्दूषयति– अनादृत्येत्यादि । यदिन्द्रस्येन्द्रियादिकमोषधीभ्य आनीय इन्द्राय प्रतिदुग्ध तदिन्द्रे प्रथम श्रित्वा सेवित पक्व वा कृत्वा उपरिष्टात् उत्तरकाल दधिभागेन इन्द्र धिनोति तस्माच्छृतस्यैव पूर्वत्वम् । गतमन्यत् ॥

यदित्यादि ॥ पूतीक सोमसदृशो लताविशेष । पर्णवल्क पलाशत्वक् । आतञ्चन

२० द्रव्यान्तरप्रयोगेन पयसो घनीभाव । तञ्चू सङ्कोचने । क्वल हस्वबदर । तण्डुला गता ।

ब्रह्मवादिन इति ॥ तमेव विचारमभिप्रेत्य पूर्वपक्षमुपन्यस्यति– 'ब्रह्मवादिनो वदन्ति दध्न पूर्वस्यावदेय दधि हि पूर्वं क्रियत इति' इति ॥ यस्मात् पूर्वेद्युर्ने रात्रौ दधि क्रियते तस्मात्[illegible] [illegible] दध्न एवास्यैव पूर्वम् अवदेयम् ॥

अनादृत्येति ॥ तमेव पूर्वपक्ष दूषयित्वा सिद्धान्त विधत्ते– 'अनादृत्य तच्छृतस्यैव पूर्वस्या

२५ वद्येदिन्द्रियमेवास्मिन् वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति' इति । 'तत् पूर्वं दध्यवदान[illegible] अनादृत्य क्षीरस्य एव स्वस्य पूर्वमवदेयम् । तथा सति अस्मिन् यजमाने इन्द्रियरूपं क्षीरं प्रथम अवदाय उपरिष्टात् दध्ना प्रीणयति । क्षीरं पूर्वभावि दधि पश्चाद्भावीत्येवमुत्पत्तिक्रममपि प्राप्त भवति ॥

७ [illegible]–[illegible]म् । ८. [illegible]–'वा' नास्ति । ९ [illegible]– दधिभागेन, [illegible]–दधिभागेन ।

३० २४ [illegible]–[illegible], [illegible]–'अपि' नास्ति । २५ [illegible]–[illegible] । २६ [illegible]–[illegible] ।
२७ [illegible]–'[illegible]' नास्ति ।

तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत् सेन्द्रं दुध्नाऽऽतनक्ति (५) सेन्द्रत्वायाग्नि-होत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्या इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपा-राधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्यः प्रथमोऽनुविन्दति

तत्। यत्। आतञ्चनेनेत्या-तञ्चनेन। मानुषम्। तत्। यत्। दध्ना। तत्। सेन्द्रमिति स इन्द्रम्। दध्ना। एति। तनक्ति (५)। सेन्द्रत्वायेति सेन्द्र त्वाय। अग्निहोत्रोच्छेषणमित्यग्निहोत्र -उच्छेषणम्। अभ्यातनक्तीत्यभि - आतनक्ति। यज्ञस्य। संतत्या इति सं तत्यै। इन्द्र। वृत्रम्। हत्वा। पराम्। परावतमिति परा-वतम्। अगच्छत्। अपेति। अराधम्। इति। मन्यमान। तम्। देवता। प्रैषमिति प्र-एषम्। ऐच्छन्। स। अब्रवीत्। प्रजापतिरिति प्रजा पति। य। प्रथम। अनुविन्दतीत्यनु विन्दति।

आतञ्चनद्रव्य दधि प्रसिद्धम्। [v]सेन्द्रम् इन्द्रेण देवतया सहितम्। अग्निहोत्रोच्छेषणम् [10]अग्निहोत्र होमशेष यवागूशेष। तत् [v]अभि [v]आतनक्ति दध्ना आतच्य उपरि आ तनक्ति, [v]यज्ञस्य अविच्छेदाय ॥

इन्द्रो वृत्र हत्वेति॥ पितृयज्ञविधि। परा परावतमिति। दूरदेशम् [v]अगच्छत्। "उपसर्गा-च्छन्दसि धात्वर्थे" (पा ५ १ ११८) इति वति। [v]अप [v]अराधम् [11]अपाराद्धम्। छान्दस सिग्लुक्। वृत्र हतवान् [v]इति सापराधमात्मान [v]मन्यमान दूरात् गन्तु श्रेय इति निश्चित्यागच्छत्। अथ [12v]देवता [v]त [v]प्रैष प्राप्तुम् [v]ऐच्छन्। इष गतौ, [13]"छान्दस सिग्लुक्"[13]। सोऽब्रवीदित्यादि।

यदिति ॥ अथाऽऽतञ्चन विधत्ते—"यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्य तद्यत् क्वलै राक्षस तद्यत् तण्डुलैर्वैश्वदेव तद्यदातञ्चनेन मानुष तद्यद्दध्ना तत् सेन्द्र दध्नाऽऽतनक्ति सेन्द्रत्वाय" इति॥ सोमवल्लीसमानाया लताया खण्डा पूतीका। [18]पलाशवृक्षस्याशा पर्णवल्का। मौदर्यदरफलानि क्वला। ईषदम्लतक्रमातञ्चनम्। पूतीकादिभिरातञ्चन सोमादीना प्रियम्। तथा सति [19]अत्र इन्द्रप्रीत्यै दध्ना आतञ्च्यात् ॥

अग्निहोत्रोच्छेषणमिति ॥ दध्नाऽऽतञ्चनस्योपर्यग्निहोत्रार्थयवागूशेषेणातञ्चन विधत्ते— 'अग्नि होत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सतत्यै' इति ॥ दर्शयागस्याग्निहोत्रेण सहाविच्छेद सतति ॥

इन्द्र इति ॥ अथ पिण्डपितृयज्ञ विधत्ते— 'इन्द्रो वृत्रꣳ हत्वा परा परावतमगच्छदपाराधमिति मन्यमानस्त देवता प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्य प्रथमोऽनुविन्दति तस्य प्रथम भागधेयमिति त पितरोऽन्वविन्दन् तस्मात् पितृभ्य पूर्वेद्यु क्रियते' इति। वृत्रवधेनासुराणामपराध कृतवान् अस्मि 'इति

१०. त३ मै ल– °होमशेष। ११ तै३– अपाराद्धम्। १२ मै– देवा। १३–१३ मै– 'छान्दस सिग्लुक्' नास्ति, मै४– छान्दसो णमुल्।

१८ क हो१– °शकाद्यस्याशा। १९ ग, हो१– 'अत्र' नास्ति।

तस्यं प्रथमं भागधेयमिति तं पितरोऽन्वंविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्यां प्रत्याऽगंच्छत् तं देवा अभि समंगच्छन्तामा वै नो( ६ )ऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वं

तस्यं । प्रथमम् । भागधेयमिति भाग धेयम् । इति । तम् । पितरः । अन्विति । अविदन् । ५ तस्मात् । पितृभ्य इति पितृ भ्यः । पूर्वेद्युः । क्रियते । स । अमावास्यामित्यमा-वास्याम् । प्रति । एति । अगच्छत् । तम् । देवाः । अभि । समिति । अगच्छन्त । अमा । वै । नः ( ६ ) । अद्य । वसु । वसति । इति । इन्द्रः । हि । देवानाम् । वसु । तत् । अमावास्याया इत्यमा वास्यायाः । अमावास्यत्वमित्यमावास्य-त्वम् ।

गतम् । अनु विन्दति अनुक्रमेण लभते । पूर्वेद्यु पूर्वस्मिन्नहि । “ सद्य. परुत्° ” (पा ५ १० ३·२२ ) इत्यादिना निपात्यते ।

अमावास्या प्रति, लक्षणे कर्मप्रवचनीयत्वम् (पा १·४ ८४), अमावास्यया गमन लक्ष्यते इति । अथामावास्याया देवा तम् इन्द्रम् अभि समगच्छन्त आभिमुख्येन सगता अभवन् । कथ [१४]वदन्त ? अद्य अस्मिन्नहि न अस्माक वसु अस्मदीय धनम् इन्द्रोऽयम् अमा सहास्माभि वसति इति । एव [१४]देवा वदन्त [१६]एनमिन्द्रमभितः समागताः । इन्द्रो हीति । [१७]वसु वरिष्ठ १५ [१८]द्रव्यम् । अमावास्यत्वमिति । अमा [१९]सह वसन्त्यस्यामिन्द्रो देवताश्चेत्यमावास्या । अधिकरणे (पा ३ १ १२२) ण्यत् । इद च व्युत्पत्त्यन्तरम्, अमा वसत सूर्याचन्द्रमसावस्याम् इति [२०]व्युत्पत्तिदर्शनात् ॥

मन्यमान इन्द्र भीतोऽत्यन्त दूरम् अगच्छत् । तम् इन्द्रं प्रति देवता आह्वानम् ऐच्छन् । [१]देवताना मध्ये य अन्विष्य प्रथमम् इन्द्र लभते तस्य प्रथमम् भागो दीयते इति प्रजापतिनोक्ता. पितर प्रथमम् इन्द्र यस्मादलभन्त, तस्मात् पितृभ्य पूर्वेद्यु पिण्डपितृयज्ञ कुर्यात् । दर्शयागदेवतानाममावास्या २० यामारम्भ प्रतिपदि तद्याग । पितृणा त्वमावास्यायामेव पिण्डदानम् ॥

ननु ब्राह्मणग्रन्थे प्रथमकाण्डस्य तृतीयप्रपाठकेऽन्त्यानुवाके महता प्रबन्धेन पिण्डपितृयज्ञो विहित । पाठम् । एव तर्हि सान्नाय्यप्रशसार्थमत्र तदनुवादोऽस्तु ॥

स इति ॥ तामेव स्तुतिं द्योतयितुममावास्यानिर्वचन दर्शयति– ‘ सोऽमावास्यां प्रत्याऽगच्छत् तं देवा अभि समगच्छन्तामा वै नोऽद्य वसु वसतीतीन्द्रो हि देवाना वसु तदमावास्याया अमा- २५ वास्यात्वम्’ इति ॥ पितृभिरन्विष्य लब्ध स इन्द्र अमावास्याया पलायनदेशात् [१]प्रतिनिवृत्त

[१४]. तै३– ‘ वदन्त ’ इत्यस्यानन्तरम् ‘ आह ’ । १५. मै४– तृप्त्या । १६ तै३ मै४ °मभिगता । १७. तै३– ‘ वसु ’ नास्ति । १८. मै४– द्रव्यं वसु । १९. तै३ तै– ‘ सह ’ नास्ति २०. तै३– °दर्शनार्थम् ।

३०. ओ ना–देवाना, धा– ‘ देवानां ’ नास्ति । ३१. अ इ ड.ओ पा हा– प्रतिपदि निर्वर्त्य, ना- ३० न्निर्वर्त्य ।

पौर्णमास्या वैमृधपुरोडाश , अमावास्याया सानाय्यादियाग ]

ब्रह्मवादिनो वदन्ति किंदेवत्यꣳ सान्नाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति ॥ ३ ॥

[ दर्धि मे जुघ्नष इन्द्रिय वार्यमित्यब्रवीदेतदस्मा अनुदेयं तनक्ति नो द्विचत्वारिꣳशच्च ] ॥

ब्रह्मवादिन इति ब्रह्म वादिनं । वदन्ति । किंदेवत्यमिति किं-देवत्यम् । सान्नाय्यमिति सा-नाय्यम् । इति । वैश्वदेवमिति वैश्व देवम् । इति । ब्रूयात् । विश्वे । हि । तत् । देवा । भागधेयमिति भाग धेयम् । अभीति । समगच्छन्तेति सम् अगच्छन्त । इति । अथो इति । खलु । ऐन्द्रम् । इति । एव । ब्रूयात् । इन्द्रम् । वाव । ते । तत । भिषज्यन्त । अभि । समिति । अगच्छन्त । इति ॥ ३ ॥ ५

[ दशा १ ६ ४ ] १०

वैश्वदेवमिति ॥ वृत्रवधादनन्तरम् 'इन्द्रिय वीर्यं च ' दूरतर गतम् । पितृभि प्रत्यानीतमिन्द्रममावास्याया सानाय्येन प्रवृद्धेन्द्रियवीर्यं कर्तुं 'विश्वे 'देवा 'तत् सानाय्य एव ऐन्द्रम् 'भागधेयम् 'अभि 'समगच्छन्त । तस्माद्वैश्वदेव भवितु युक्तमिति ॥

दूषयति– अथो इति । तदानीं देवा 'इन्द्र 'भिषज्यन्त एव 'अभि 'सम् 'अगच्छन्त न 'त्वामभागलब्धये । तल्लक्षणहेतौ शतृप्रत्यय (पा ३ २ १२६), इन्द्रभैषज्यार्थमेव अभिसम गच्छन्त । तस्माद्विश्वे देवा 'अप्रसक्ता 'एवेति 'ऐन्द्रम् 'इति 'एव उत्तर समीचीनमिति । भिषज्यति कण्ड्वादियगन्त (पा ३ १ २७) ॥ १५

इति द्वितीये पञ्चमे तृतीयोऽनुवाक ॥

समागत । [१९]तदा 'देवा 'तम् इन्द्रम् अभिमुखीकर्तुं सप्राप्ता परस्परमिदमब्रुवन्– [११]'अत्र 'न अस्माक 'वसु श्रेष्ठं धनम् 'अमा 'वसति सह तिष्ठति, सर्वेषा साधारणत्वेन वर्तत इत्यर्थ । किं तद्वसिवति चेत्[१] २० तदुच्यते–'इन्द्र' खलु सर्वेषा 'देवाना 'वसु श्रेष्ठ धन, तस्मिन् वर्तमाने सति स्वामिलाभात् । यस्माद्देवा एवमुक्तवन्तस्तस्मादमा वसत्यत्रेति व्युत्पत्त्या [१४]'अमावास्या नाम'[१५] सपन्नम् ॥

२१ मै४–वृत्रवधानन्तरम् । २२–२३ मै४ इन्द्रियवीर्यहीनम् । २३ मै४–एतद्दूषयति–अथो खल्विति । ऐन्द्रमित्येव उत्तरं ब्रूयात् । हेतुमाह इन्द्र वा इति । यद्यपि विश्वेऽपि देवा अभिसमगच्छन्त तथापि गिरवि व्यत्ययेन इन्द्रस्यैव प्राधान्यात् ऐन्द्रमेव भवितुमर्हतीति । यद्वा तदानीं विश्वेदेवा भागधेयं वयमपि भागिनो २५ भूयास्मेति । एवमात्मीयभागभूतमेव तत् समगच्छन्त । तस्मात् वैश्वदेव भवितु युक्तमिति दूषयति । २४–२८ मै४–°भागलिप्सया हेतौ । २५ तत्र मै९ – प्रसक्ता चेति । २६ मै४–'एवेति' । इत्यस्यानन्तरम् 'ऐन्द्रमिति' ।

३२. भा ह ते हो१ – तदा ते । ३३ अ इ उ बो ग पा हा हो१ – अथ । ३४ भा – 'चेत्' नास्ति । ३५–३५ ङ १६– तन्नाम । ३०

तै० ४३

ब्रह्मवादिन इति ॥ 'ऐन्द्रं दधि' इति विधिवाक्ये सांनाय्यस्य यदैन्द्रत्वमुक्तं तदेव पूर्वोत्तर-पक्षाभ्यां द्रढयति– 'ब्रह्मवादिनो वदन्ति किंदेवत्यꣳ सांनाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तदभिषज्यन्तोऽभि समगच्छन्तेति' इति॥ पितृभिरानीयमानमिन्द्रमभिमुखीकर्तुं सर्वेऽपि 'देवाः यदा समागच्छंस्तदा[38] तत्सांनाय्यलक्षणं [39]भागमभि-लक्ष्यैव समागच्छन्निति [38-39]सांनाय्यं 'वैश्वदेवम्'[38] 'इति केषांचित् पक्षः। अथोशब्दः पक्षान्तरार्थः। भीत्या दूरदेशं गतम् 'इन्द्रम् 'भिषज्यन्तः एव भयनिवारणेन समाधित्सन्त एव 'ते 'देवास्तत्र समागताः, न तु सांनाय्यलिप्सया। तस्मात् सांनाय्यम् 'ऐन्द्रम् 'इति 'एव बुद्धिमान् 'ब्रूयात्॥

अत्र मीमांसा॥ चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।
द्वयोरङ्गमुतैकस्य द्वयोः स्यात् प्रक्रियावशात्॥
उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात्।
तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता"॥ (जैन्या ४·३·२०-२१)॥

दर्शपूर्णमासप्रकरणे श्रूयते–"सꣳस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" (द्र. आपश्रौ ३·१५·१) इति। तत्रेयं वैमृधेष्टिः प्रकरणबलात् प्रयाजादिवदुभयोरपि दर्शपूर्णमासयोरङ्गमिति चेत्। न। वाक्यस्य प्रबलत्वात्। न च 'संस्थाप्य' इति [40]पौर्णमास्याः समाप्त्यभिधानात् [41-]तदङ्गत्वमयुक्तमिति वाच्यम्[-41]। दर्शसाधारणाङ्गसमाप्त्यभिप्रायेण [42]तदुपपत्तेः। तस्मादुत्पत्तिवाक्यादेककर्तृकत्वस्यावगतत्वात्प्रत्ययाच्च पूर्ण-मासस्यैवाङ्गम्॥

द्वितीयाध्याये तृतीयपादे चिन्तितम्—

"[43-]दर्शपूर्णिमयोः प्रोक्तः[-43] आग्नेयः [44]केवलोऽप्यसौ।
दर्शे यदिति वाक्याभ्यां कर्मान्यद्वाऽनुवादगीः॥
अभ्यासादन्यकर्मत्वं द्विर्दर्शेऽसौ प्रयुज्यताम्।
एकत्वं प्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः"॥ (जैन्या २·३·२३-२४)॥

"यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" (तैसं २·६·२) इति कालद्वये विहितम्, "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति" (तैसं २·५·२) इति एकस्मिन् काले पुन-र्विहितम्। [45]तत्राविशेषपुनःश्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः। तथा सति आग्नेययागस्य दर्शकाले द्विः प्रयोग इति चेत्। न। प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येव कालवाक्यस्यानुवादकत्वात्[46]। न चानुवादो व्यर्थः। विधेयैन्द्राग्नस्तुत्यर्थत्वात्। यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथाऽपि न केवलेनाग्निना साधुर्भवति[47]। इन्द्रसहितोऽग्निः समीचीनतरः। तस्मादैन्द्राग्नः कर्तव्य इति विधेयस्तुतिः। अतएवैतद्वाक्यं सूक्तमेवानुसंधेयम्। तस्मादनुवादः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

३६. ब.ग.ङ.होर–°दानीम्। ३७. ब.ग.ङ.होर– भागधेयम्°। ३८–३८. ब.ग.ङ.होर–सांनाय्यस्य वैश्वदेवत्वम्। ३९. आ– देवास्त्विन्द्रं। ४०. क– पौर्णमासस्य। ४१–४१. होर– [illegible]मिति वाच्यम्। ४२. आ.ट– उपपत्तेः। ४३–४३. को.ना– यो दर्शपूर्णमासोक्तः, ब.होर– दर्शपूर्णमासयोः प्रोक्तः। ४४. अ.उ.ब.ग.ङ.– केवलोऽप्यसौ। ४५. क– तत्राविशेषे पुनः°; ङ– तत्र विशेष पुनः°। ४६. आ– °स्यानुवादत्वात्। ४७. ङ– °र्भवतीति।

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता(१)मिष्टिमपश्यन्नाग्नावैष्णव-

---

ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सः । तु । वै । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजेत । यः । एनौ । सेन्द्राविति स-इन्द्रौ । यजेत । इति । वैमृधः । पूर्णमास इति पूर्ण-मासे । अनुनिर्वाप्य इत्यनु-निर्वाप्यः । भवति । तेन । पूर्णमास इति पूर्ण-मासः । सेन्द्र इति स-इन्द्रः । ऐन्द्रम् । दधि । अमावास्यायामित्यमा-वास्यायाम् । तेन । अमावास्येत्यमा-वास्या । सेन्द्रेति स-इन्द्रा । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । सेन्द्राविति स-इन्द्रौ । एव । एनौ । यजते । श्वश्व इति श्वः-श्वः । अस्मै । ईजानाय । वसीयः । भवति । १०
देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एताम् (१) । इष्टिम् । अपश्यन् । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् ।

---

ब्रह्मवादिन इत्यादि ॥ गतम् । य एनावित्यादि । अविदुषो नार्थः । [1]पूर्णमासे वैमृधेन [2]अमावास्यायाम् ऐन्द्रेण दध्ना च इत्येवं विदितेष्टवतो यजमानायोत्तरमुत्तर दिनं प्रशस्ततरं [3]भवति ॥
देवा वा इत्यादि ॥ गतम् । एतामिष्टिमिति । वक्ष्यमाणा त्रिहविष्का पौर्णमासीसमाप्त्य- १५
नन्तरं तस्या [1]अनुनिर्वाप्याम् अकुर्वन् । पौर्णमास्येनानुनिर्वाप्यसहिता फलं ददाति ॥

---

उक्ते वैमृधसांनाय्ये द्विमूर्तीयानुवाक्ये ॥

अथ चतुर्थं आग्नावैष्णवादयो वक्तव्याः ॥

ब्रह्मवादिन इति ॥ तत्राऽऽदौ तावत् [1]पूर्वानुवाकोक्तयोः दर्शपूर्णमासयोः प्रशंसामाह– '[2]ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो २० भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति' इति ॥ [3]यः [4]एनौ दर्शपूर्णमासयागौ [5]इन्द्रसहितौ यजेत स एव दर्शपूर्णमासयाजी न त्वन्यः । तयोश्च यागयोः सेन्द्रत्वं वैमृधसांनाय्याभ्यां सम्पद्यते । एवं विदुषः सेन्द्रयागेनो(णो)त्तरोत्तरदिने धनाधिक्यं भवति ॥

देवा इति ॥ अथ पौर्णमास्यां काम्यमनुनिर्वाप्यमिष्टित्रयं विधातुं प्रस्तौति– 'देवा वै १५ यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं ता पौर्णमासं सꣳस्थाप्यानु निरवपन् ततो देवा अभवन् पराऽसुरा' इति ॥ देवानां यज्ञं दृष्ट्वा

---

1. पंर– अभिव्याप्याम्; सं– अभिव्याप्यम् ।

---

1. आ– पूर्वोक्तानुवाकयोः । 2–3. आ,ग– एतौ, क– यःएनौ । 3. —
इत्यस्यानन्तरं 'च' । 4 आ– यदो । 5. अ,ड,त,ण, ग– भेदर्थं ।

मेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानु निरवपन्
ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स पौर्णमासꣳ सꣳस्थाप्यैता-
मिष्टिमनु निर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञं
च भ्रातृव्यस्य वृङ्क्ते मिथुनान् पशून्त्सारस्वताभ्यां यावदेवास्यास्ति तत् ( २ )सर्वं
५ वृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्याꣳ हत्वा भ्रातृव्यं नाऽऽ प्यायपति

सरस्वत्यै। चरुम्। सरस्वते। चरुम्। ताम्। पौर्णमासमिति पौर्ण मासम्। सꣳस्थाप्येति
सं-स्थाप्य। अनु। निरिति। अवपन्। ततः। देवाः। अभवन्। परेति। असुराः। यः।
भ्रातृव्यवानिति भ्रातृव्य-वान्। स्यात्। सः। पौर्णमासमिति पौर्ण-मासम्। सꣳस्थाप्येति
सं-स्थाप्य। एताम्। इष्टिम्। अनु। निरिति। वपेत्। पौर्णमासेनेति पौर्ण-मासेन। एव।
१० वज्रम्। भ्रातृव्याय। प्रहृत्येति प्र-हृत्य। आग्नावैष्णवेनेत्याग्ना-वैष्णवेन। देवताः। च। यज्ञम्।
च। भ्रातृव्यस्य। वृङ्क्ते। मिथुनान्। पशून्। सारस्वताभ्याम्। यावत्। एव। अस्य। अस्ति।
तत् ( २ )। सर्वम्। वृङ्क्ते। पौर्णमासीमिति पौर्ण-मासीम्। एव। यजेत। भ्रातृव्यवानिति
भ्रातृव्य-वान्। न। अमावास्यामित्यमा-वास्याम्। हत्वा। भ्रातृव्यम्। न। एति। प्याययति।

[1]आह च– 'पौर्णमासेनैव' इत्यादि[1]। [2]वृङ्क्ते वर्जयति स्वयं गृह्णाति। यस्मादेव तस्माद्
१५ [3]यावत् किंचित् भ्रातृव्यस्य विद्यते [4]तत् [5]सर्वम् अनयेष्ट्या [6]वृङ्क्ते॥
नामावास्यामिति॥ तत्र पितृयज्ञ एव क्रियते। [7]हत्वेत्यादि। उक्तम्–"प्रति वा एन पूर्णमास
आऽमावास्याया प्याययन्ति" (तैस २·५·२) इति[7]। [8]तत्राप्यायितस्य पश्चादनाप्यायनमेव शेष

[1]तथैवानुचरतामसुराणां दृश्यमान विजयं दृष्ट्वा [2]देवा तामसुरान् बाधयित्वाऽनुष्ठितेनानुनिर्वाप्येन सर्वं
विजयं प्राप्ता [3]असुरा च पराभूता.॥

भ्रातृव्यवतः पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ ]

साकंप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति

साकंप्रस्थायीयेनेति साकं-प्रस्थायीयेन । यजेत । पशुकाम इति पशु-काम । यस्मै । वै । अल्पेन । आहरन्तीत्या-हरन्ति । न । आत्मना । तृप्यति । न । अन्यस्मै । ददाति । यस्मै । ५
महता । तृप्यति । आत्मना । ददाति । अन्यस्मै । महता । पूर्णम् । होतव्यम् । तृप्त । एव । एतम् । इन्द्रः । प्रजयेति प्र-जया । पशुभिरिति पशु-भि । तर्पयति ।

इति लुप्यते, अमावास्याया प्याययन्ति इति [4] । तद्वत् पौर्णमास्या, पौर्णमासे भ्रातृव्य हत्वा [5]अमावास्यालोपेन आप्यायनम् अस्य निवर्तयति । यावदमावास्यामाप्यायितस्य वृद्ध्या वृत्रस्य अमावास्याया ऊर्ध्वं वध क्रियते । तत्राप्यायितस्य वधादनाप्यायनमेव श्रेय इति लुप्यते अमावास्या ॥ १०

साकप्रस्थायीयेनेति ॥ साक सह ब्राह्मणै प्रतिष्ठते होतुमिति साकप्रस्थायी अध्वर्यु । तस्य सबन्धी साकंप्रस्थायीयो याग, [6]यत्र द्वौ सायदोहौ द्वौ प्रातर्दोहौ । तत्र ब्राह्मणा पूर्णपात्रैः अध्वर्युं जुह्वन्तमनुजुह्वति । [7]अमावास्यैव क्रियते । यस्मै वेति । [4]यस्मै [4]अल्पेन प्रमाणेन धनादिकम् [4]आहरन्ति [5]यथा स [4]न [4]आत्मना [4]तृप्यति । येनात्मनि तृप्तिर्नास्ति

भ्रातृव्यवानमावास्याꣳ हत्वा भ्रातृव्य नाऽऽप्याययति ' इति ॥ द्वितीयानुवाके वृत्रप्रसङ्ग इदमुक्तम्–" अन्ति १५
या पुन पूर्णमास आऽमावास्याया प्याययन्ति " ( तैस २ ५.२ ) इति । तस्मादत्रापि पूर्णमासानुष्ठानेन [4]भ्रातृव्य [4]हत्वा दर्शयागपरित्यागेन भ्रातृव्यस्याऽऽप्यायन परित्यक्तवान् भवति ॥

साकंप्रस्थायीयेन इति ॥ अथ [11]दर्शस्य गुणविकृतिरूप कंचिद्याग विधत्ते–' साकप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्य तृप्त एवैनमिन्द्र प्रजया पशुभिस्तर्पयति ' इति ॥ दधिक्षीरपूर्णाभिश्चतसृभि. २०
कुम्भीभि [12]ब्राह्मणात् हस्ताभि [12] साकमध्वर्यो प्रस्थान होमस्थान प्रति प्रस्थानं यस्मिन् [13]यागे सोऽय साकंप्रस्थायीयो [14]याग, तेन [4]पशुकाम [4]यजेत । [15]तत्र [4]महता [16]दधिक्षीरद्रव्येण [4]पूर्णं हवि [4]होतव्यम् । लोके च [17][4]यस्मै [18]राज्ञे करप्रदायिन्य प्रजा [4]अल्पेन प्रमाणेन धनम् [4]आहरन्ति स राजा [4]न स्वयं [4]तृप्यति [4]न अपि [4]अन्यस्मै दातुं शक्नोति । [4]यस्मै तु [19][4]महता प्रमाणेन धनमाहरन्ति स राजा [20][4]स्वय [4]तृप्यति च [4]अन्यस्मै दातुमपि च [20] प्रभवति । तस्मादत्रापि महता [21] प्रमाणेन पूर्णस्य द्रव्यस्य होमे सति स्वयं २५

४ मै४–अमावास्यालोपेन पुनरेन नाप्याययति । ५ मै– तत्र । ६ मै४– अमा वा सैव ।
७. मै–अय स ।

११. आ– दर्शपूर्णमासस्य ॥ १२–१२. ह– ब्राह्मणधृताभि । १३ ह श्र– यागे योऽस्ति ।
१४. ह– ' याग ' नास्ति । १५. क– अन्यत्र । १६. आ–क्षीरद्रव्येण । १७ ह–यस्मिन् । १८. ह–
राज्ञि । १९. अ इ उ जो पा– महता द्रव्येण । २०–२०.ह– स्वयमपि च तृप्यति अन्यस्मै च दातुम् । ३०
२१. हा– महता द्रव्येण ।

दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानश औदुम्बरं( ३ )भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्द्धे

दारुपात्रेणेति दारु - पात्रेण। जुहोति। न। हि। मृन्मयमिति मृत् - मयम्। आहुतिमित्या - हुतिम्। आनशे। औदुम्बरम् (३)। भवति। ऊर्क्। वै। उदुम्बरः। ऊर्क्। पशवः। ऊर्जा। एव। अस्मै। ऊर्जम्। पशून्। अवेति। रुन्द्धे।

५ "असौ धनान्तरं च "न "अन्यस्मै" *"दातुं शक्नोति"*। यदि "महता प्रमाणेन अस्मा आहरन्ति, स स्वय च "तृप्यति, "अन्यस्मै चाय महता प्रमाणेन "ददाति, "तस्याप्यति-तृप्तिर्भवतीति भावः ॥

दारुपात्रेणेति ॥ औदुम्बरैश्चतुर्भिः (द्र. आपश्रौ ३·१६·१५) पात्रैः। न हीति। "मृन्मय
१० "कुम्भादिक "न हि " आहुतिम् "आनशे अश्नुते आहुतिसाधनं न भवति। मृन्मयेन हुता आहुतिरेव न स्यादिति यावत्। "एकाचो नित्य मयटमिच्छन्ति" (पा काशिका वा ४·३·१४४) इति मयट् ॥

औदुम्बरमित्यादि ॥ गतम् ( तैस २·१·१ )। "अनुदात्तादेरञ्" (पा ४·२·४४)॥

"तृप्तः "इन्द्रः "प्रजया "पशुभिः "-च "एनं" "यजमानं "तर्पयति। "एतद्यागप्रकारः सूत्रकारेण स्पष्टीकृतः-
१५ "साकंप्रस्थायीयेन यजेत पशुकामः इत्यमावास्या विक्रियते। द्वौ सायंदोहावेवं प्रातः। सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम्। सर्वेषां प्रातः" ( आपश्रौ ३·१६·११-१४ ) इति ॥

दारुपात्रेणेति ॥ क्षीरश्रपणपात्राणां मृन्मयत्वाद्धोमेऽपि तत्प्रसक्तिं वारयितुं विधत्ते- 'दारु-पात्रेण जुहोति न हि मृन्मयमाहुतिमानशे' इति ॥ "यस्मात् मृन्मयपात्रम् "आहुतिं व्याप्तुं "न अर्हति तस्मात् "दारुपात्रेण होमः। न ह्यत्र जुह्वामवदानमस्ति, पूर्णस्य होतव्यत्वात्। अतो हविष्पूर्णकुम्भेन
२० जुहुयात् ॥

औदुम्बरमिति ॥ दारुविशेषं विधत्ते- 'औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्द्धे' इति ॥ "प्रथमप्रपाठकस्याद्यानुवाके "औदुम्बरो यूपो भवति" (तैसं २·१·१) "इत्यत्र वाक्यमेतत्" व्याख्यातम्। अत्र सूत्रम्- "पात्रसंसादनकाले "चतुर्यौदुम्बरपात्राणि प्रयुनक्ति। तेषां जुहूयत् यत्पः" ( आपश्रौ ३·१६·१५-१६ ) इति; "यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिण
२५ उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा "तेष्वाध्वर्युं जुहूतमनु जुहति। विपर्ययमेके विदधते" ( आपश्रौ ३·१७·१-२ ) इति च ॥

८-८. मै८ - अगाधनात् न चान्यस्मै। *-* मै८-ददाति। अन्यस्मै मित्राय दातुमवर्तते भवति। तथा अस्मै यस्मै आहरन्ति राजा वा गुरुदो वा स वा पशुकामो बाडनेन पशुकामो यजेत यस्मै महेन्द्र दिना यतः यस्मात् यस्मै महता प्रमाणेन धनादिकमाहरन्ति स्वयं दातुं न पश्यति तृप्यन्त्यन्ना मे
३० स्तोनात्मनो महती तृप्तिर्भवति ददाति च अन्यस्मै महता प्रमाणेन धनादिकं तादृशोऽयं सर्वस्मादिन्द्र भवति। पशवो पूर्णपात्रा यजेद्दुतं होतव्यं तर्पयति। ] । ९. तै३-तदप्यति°। १०. तै१-तृप्यतिइन्।

भ्रातृव्यवत पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ ]

नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति

---

न । अगतश्रीरित्यगत श्री । महेन्द्रमिति महा इन्द्रम् । यजेत । त्रयः । वै । गतश्रिय इति गत - श्रियः । शुश्रुवान् । ग्रामणीरिति ग्राम नी । राजन्यः । तेषाम् । महेन्द्र इति महा इन्द्र । देवता । यः । वै । स्वाम् । देवताम् । अतियजत इत्यति यजते । प्रेति । स्वायै । देवतायै । ५
च्यवते । न । पराम् । प्रेति । आप्नोति । पापीयान् । भवति ।

---

नागतश्रीरित्यादि ॥ [v]शुश्रुवान् षडङ्गवेदत्रयवेदी श्रुतसपन्न । स च प्राप्तश्री, "सा हि श्रीरमृता सताम्" (तैब्रा १ २ १) इति श्रीनाद्वेदानाम् । [v]ग्रामणी ग्रामाध्यक्ष । राज्ञोऽपत्य [v]राजन्य । "राजश्वशुराद्यत्" (पा ४ १ १३७), "राज्ञोऽपत्ये जातिग्रहणम्" (पा ४ १ १३७ वा १) इति क्षत्रिय उच्यते । *स्पष्टमेतयोर्गतश्रीत्व, यतो हीन्द्र (हि [v]महेन्द्र ) १०
एषा [v]देवता । तस्मादेभ्योऽन्योऽगतश्री महेन्द्र यष्टु नार्हति ॥

यो वा इत्यादि ॥ आत्मीयदेवतातिक्रमेण [v]य अन्या देवता यजते स स्वाया देवताया * तावत् [v]प्र [v]च्यवते [11]तस्या अनुग्राह्यो न भवति[11] । ततश्च [v]पापीयान् पापतर [v]भवति । [12]अयष्टुरस्यापापत्वमेव । यष्टु पापतरत्व स्यात्, [13]देवतान्तराभावात् ॥

---

नेति ॥ अधिकारिभेदेन सान्नाय्यस्य देवताव्यवस्था विधत्ते– 'नागतश्रीर्महेन्द्रं यजेत त्रयो वै १५ गतश्रिय शुश्रुवान् ग्रामणी राजन्यस्तेषा महेन्द्रो देवता यो वै स्वा देवतामतियजते प्र स्वायै देवतायै च्यवते न परा प्राप्नोति पापीयान् भवति' इति ॥ [r]शुश्रुवान् वेदत्रयाभिज्ञ । वेदत्रयस्य च श्रीरूपत्वात् तदभिज्ञ प्राप्तश्रीर्भवति । श्रीरूपत्व चैवमाम्नायते– "अहे बुध्निय मन्त्र मे गोपाय । यमृषयस्त्रैविदा विदु । ऋच सामानि यजूंषि । सा हि श्रीरमृता सताम्" (तैब्रा १ २ १) इति । ग्रामाध्यक्ष [r]ग्रामणी । राज्ञ पुत्र [r]राजन्य । तयो प्राप्तश्रीकत्व प्रसिद्धम् । [r]तेषाम् एव त्रयाणा [r]महेन्द्र [r]देवता । एव सति [r]य २०
पुरुष स्वकीया [r]देवताम् अतिक्रम्य यजते, एतेषु कश्चिदिन्द्र यजति, अन्यो वा महेन्द्र यजति । तादृश [31]स्वकीयदेवताया प्रच्युत सन् [32]परकीया देवता[32] [33]न [r]प्राप्नोति । तद्देवताशापेन [r]पापीयान् दरिद्रश्च [r]भवति ॥

---

*–* [ख – 'स्पष्टमेतयोर्गत देवताया' नास्ति । ]। ११–११. तर मै४ ख – भवति पारपराकीया देवताम् अनात्मीयदेवतात्वेन प्राप्नोति । तस्यानुग्राह्यो न भवति । पर– परा परकीया २५
देवतामात्मीयदेवतात्वेन प्राप्नोति । तस्या अनुग्राह्यो न भवति । १२ मै४– यष्टुरस्य पापत्वमेव । १३. मै४– देवतात्वा° ।

---

३१ ङ– स्वकीयाया देवताया । ३२–३२ ङ श्र – परा स्वदेवताम् । ३३ अ इ ड जो ना पा हा– च न ।

संवत्सरमिन्द्रं यजेत संवत्सरं हि व्रतं नाति स्वै( ४ )वैनं देवतेज्यमाना भूत्या इन्द्रे वसीयान् भवति संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् संवत्सरमेवैनं वृत्रं जघ्निवांसमग्निर्व्रतपतिर्व्रतमा लम्भयति ततोऽधि कामं यजेत ॥४॥

[ एता तदौदुम्बरं स्वा त्रिंशच्च ] ॥

५ संवत्सरमिति सं वत्सरम् । इन्द्रम् । यजेत । संवत्सरमिति सं-वत्सरम् । हि । व्रतम् । न । अतीति । स्वा ( ४ ) । एव । एनम् । देवता । इज्यमाना । भूत्यै । इन्द्रे । वसीयान् । भवति । संवत्सरस्येति सं वत्सरस्य । परस्तात् । अग्नये । व्रतपतय इति व्रत-पतये । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् । निरिति । वपेत् । संवत्सरमिति सं वत्सरम् । एव । एनम् । वृत्रम् । जघ्निवांसम् । अग्निः । व्रतपतिरिति व्रत पतिः । व्रतम् । एति । लम्भयति । ततः । अधीति ।
१० कामम् । यजेत ॥ ४ ॥

[ काम ३०४, ३१२ कपिष ४६७ ]

संवत्सरमित्यादि ॥ संवत्सरातिक्रमे ᵛव्रत ᵛन अस्ति । तस्मात् गतश्रीत्वाय संवत्सर व्रत चरन्त ᵛस्वा आत्मीया ᵛदेवता इन्द्र ᵛइज्यमाना ᵛएनम् ¹⁴अगतश्रिय भूत्यर्थम् ᵛइन्द्रे दीपयति। तत ᵛवसीयान् वसुमत्तर. ᵛभवति, महेन्द्रयागार्हो गतश्रीरेव भवति, गता श्री आत्मीया देवता
१५ अनेनेति कृत्वा ॥

ततः समाप्ते संवत्सरे गते ᵛअग्नये ᵛव्रतपतये ᵛपुरोडाशम् ᵛअष्टाकपाल ᵛनि ᵛवपेद्, स ᵛअग्नि ᵛव्रतपति तृप्त ᵛएन व्रतफलम् ᵛआ ᵛलम्भयति गतश्रीत्वमस्योत्पादयति स्वयमप्य नुग्राय स्थिरीकरोति । कीदृशमित्याह ᵛसंवत्सर व्रत चरित्वा ¹⁶ᵛवृत्र वारक पाप महेन्द्रयागानर्हत्व लक्षण ᵛजघ्निवांसम् अभिभवन्त तत्फल ¹⁶प्रापयति । यथा इन्द्रो वृत्र ¹⁷हत्वा महेन्द्रोऽभवद्,
२० एवमयमपि ¹⁸तु अयोग्यताल्क्षणवृत्रवधेन महेन्द्रयागयोग्यो भवति । तत उपरि ᵛकाम यथेष्ट महेन्द्रमेव ᵛयजेत ॥

इति द्वितीये पञ्चमे चतुर्थोऽनुवाक ॥

१४. तै३ मै१ सं–अगतं' । १५. तै३ सं–'वृत्रं' नास्ति । १६ सं-प्रापयन्ति । १७ तै३ मै सं–'हत्वा' इत्यस्यानन्तरम् 'इन्द्र' । १८ मै४–'तु' नास्ति ।

भ्रातृव्यवत पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ ]

**संवत्सरमिति** ॥ अंगतद्विधेय [34]सर्वदेन्द्रप्राप्तौ विशेष विधत्ते— 'संवत्सरमिन्द्र यजेत संवत्सरं हि व्रत नाति रेत्येव देवतेज्यमाना भूत्या इन्द्रे वसीयान् भवति ' इति ॥ 'संवत्सरम् अतिक्रम्य यस्मात् 'व्रत 'न अनुष्ठेय भवति [35]तस्मादगतश्री 'संवत्सरम् 'इन्द्र 'यजेत । एव सति स्वकीया 'एव 'देवता अन्यस्मिन् संवत्सरे 'इज्यमाना सती भूत्यर्थं यजमान प्रकाशयति । ततोऽय धनवत्तर 'भवति ॥

**संवत्सरस्येति** ॥ अगतश्रिय कार्याविशिष्टिं विधत्ते– 'संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपाल निर्वपेत् संवत्सरमेवैन वृत्र जघ्निवा समर्षितपरिवृतमा लम्भयति ' इति ॥ व्रतपालक 'अग्नि महेन्द्रयागाधिकारनिवारक पापरूप 'वृत्र संवत्सरेन्द्रानुष्ठानेन हतवन्तम् [36]एन यजमान महेन्द्रयागानुष्ठानरूप 'व्रत प्रापयति ॥

**तत इति** ॥ व्रतपतेष्टरूर्ध्वमगतश्रिय इन्द्रमहेन्द्रयोरैच्छिक च विधत्ते – 'ततोऽधि काम यजेत ' इति ॥ १०

[37]अत्र मीमांसा ॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" आक्रामन् सह [38]कुम्भीभिरस्ति शेषक्रिया न वा ।
जुह्वावदानात् प्रकृताविव शेषक्रियोचिता ॥
कुम्भीषु शेषासंसिद्धे साकप्रस्थाय्यकर्मणि ।
न स्विष्टकृदिडे [39]कार्यमग्नीधे सुक्प्रदानत [39]" ॥ ( जैन्या ३ ५ ३ ४ )॥ १५

" साकप्रस्थायीयेन यजेत पशुकाम " ( तैस २ ५ ४ आपश्रौ ३ १६ ११ ) इति विहिते कर्मणि श्रूयते– " सह [40]कुम्भीभिरभिक्रामन् " ( आपश्रौ ३ १६ १७ ) [41]इति । तत्र चतसृभि [42]दधिपय कुम्भीभि सहाऽऽहवनीयदेशेऽभिक्रमणमात्र श्रुतम् । न तु [43]तत्र कुम्भीभिर्होम [43] श्रुत । तथा सत्यस्य कर्मण सान्नाय्यविकृतित्वात् [44]जुह्वा कुम्भीभ्योऽवदाय [45]जुहुयात् । ' हुतशेषेण च स्विष्टकृदादिक सान्नाय्यशेषेणेव कर्तव्यमिति प्राप्ते ब्रूम – नात्र कुम्भीषु [46]हुतशेष सिध्यति [47]सान्नाय्य इव जुह्वावदानाभावात् [48]। २०
" अग्नीधे स्रुचौ प्रदाय सह [49]कुम्भीभिरभिक्रामन् " ( आपश्रौ ३ १६ १७ ) इत्युक्तत्वात् जुहूपभृतो प्रदत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते, न [50]तु हवि शेष । तत्र कुत [51]शेषकार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाक ॥ २५

---

३४ ड– सर्वदेन्द्रदेवताप्राप्तौ । ३५ हो१– तस्मादेवाग° । ३६ आ– 'एनम् ' नास्ति । ३७ भू– अथ । ३८ आ हा – °भिरस्मिन् । ३९–३९ अ इ उ ओ पा हा– कार्यमस्तिस्य प्रदानत, क ना– कार्यमाग्नीध्रस्रुक्प्रदानत भू हो१– कार्यमसिद्धि सुक्प्रदानत । ४० अ इ उ ओ ना पा हा– °रभिक्रामन्ती क– °रभिक्रामन् जुहोति, ड भू– °भिरतिक्रामन्नाह । ४१ उ– 'इति ' नास्ति । ४२ भू– कुम्भीभि ड– ' दधिपय कुम्भीभि ' नास्ति । ४३–४३ अ इ उ ओ ना पा हा– तत्कुम्भी° । ४४ आ क ड हो१– जुह्वा । ४५ ड भू हो१ होतव्यम् । ४६ ड भू– हुतशेषे । ४७ आ– 'हुतशेष ' नास्ति । ३०
४८–४८ ना भू– सान्नाय्य इव जुह्वा तदव°, क ड हो१– सान्नाय्यवज्जुह्वा तदव°, हा– सान्नाय्यवज्जुह्वा° । ४९ अ इ उ ड ओ ना पा हा– °रतिक्रामन् । ५० आ– हुत° । ५१ आ हा– शेषकर्म कार्यम् ।

नासो॑मयाजी॒ सं न॑येदनाग॒तं वा ए॒तस्य॒ पयो॒ योऽसो॑मयाजी॒ यद॑सोमयाजी सं॒नये॑त् परिमो॒ष ए॒व सोऽनृ॑तं क॒रोत्यथो॒ परै॑व सिच्यते सोमया॒ज्ये॑व सं न॑ये॒त्
पयो॒ वै सोम॒: पय॑: सांना॒य्यं पय॑सै॒व पय॑ आ॒त्मन् ध॑त्ते

न । अ॒सो॒म॒या॒जीत्यसो॑म-या॒जी । समिति॑ । न॒ये॒त् । अना॑गत॒मित्यना॑-ग॒तम् । वै । ए॒तस्य॑ ।
५ पय॑: । य: । अ॒सो॒म॒या॒जीत्यसो॑म-या॒जी । यत् । अ॒सो॒म॒या॒जीत्यसो॑म-या॒जी । सं॒नये॒दिति॑ स-नये॑त् । प॒रि॒मो॒ष इति॑ परि मो॒ष । ए॒व । स: । अनृ॑तम् । क॒रोति॑ । अथो॒ इति॑ । परेति॑ । ए॒व । सि॒च्य॒ते॒ । सो॒म॒या॒जीति॑ सोम-या॒जी । ए॒व । समिति॑ । न॒ये॒त् । पय॑: । वै । सोम॑: । पय॑: । सा॒ना॒य्यमिति॑ सा-ना॒य्यम् । पय॑सा । ए॒व । पय॑: । आ॒त्मन् । ध॒त्ते॒ ।

नासोमयाजी स नयेदित्यादि ॥ दधिपयोभ्यां याग सनयनम् । अनागतमिति । असोम
१० याजिनः पय सबन्धो नास्ति, सर्वरसकारणेन सोमेन सबन्धाभावात् । तस्मात् असोमयाजी यदि स नयेत् स परिमोष. चौर्यम् एव, अस्वेन यष्टु प्रवृत्तत्वात् । तस्मादयम् अनृत करोति व्रतचारिणो यत् प्रतिषिद्ध तदेवानृत करोति । अथो अपि च परा एव सिच्यते एतद्द्रव्य परा सिच्यते अस्थाने विनाश्यत एव । तस्मात् सोमयाजी एव स नयेत् इति ॥
पयो वा इत्यादि ॥ उभयोः पयस्त्वात् पयसा सोमेन स आत्मनि पय सानाय्य
१५ धत्ते स्थापयति ॥

द्विधा चतुर्थे पुभेदात् प्रोक्ता सानाय्यदेवता ॥
अथ पञ्चमे अभ्युदयेष्ट्याद्यो वक्तव्या ॥

नेति ॥ आदौ तावत् सानाय्याधिकारिणं विविनक्ति– 'नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी संनयेत् परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव
२० सं नयेत् पयो वै सोम पय सानाय्य पयसैव पय आत्मन् धत्ते' इति । सोमयागात् पुरा दर्शयागे सांनाय्य न अनुतिष्ठेत् । असोमयाजिन पय अनागतम् अप्राप्तम् । सोमस्यौषधिरसत्वेन तद्भावे सत्योषधिरसविशेषस्य पयस सुतरामभावात् । एव सति यदि असोमयाजी संनयेत् तदाऽसौ परिमोष एव तस्कर एव सन् अनृतम् अन्याय्यं करोति । अपि च यद्दो सिच्यमान तत् सानाय्यम् अनार्हत्वात् परा एव सिच्यते विनाश्यत एव । तस्मात् सोमयाजी एव स नयेत् । न चायेनाप
१५ पयोऽभावः, सोमस्यौषधिरसत्वेन पयोरूपत्वात् । सांनाय्यम् अपि तथाविधम् । अत सोमयाजी सोमरूपेण पयसा सह सांनाय्यरूपं पयः आत्मनि धारयति ॥

१. ग॰ पञ्चमऽनुवाके, ख होर– पञ्चमेऽनुवाके । २. आ– तय । ३ आ हा– ॰दार्श । ४ अ इ उ ओ आ पा हा– 'एव' नास्ति । ५ आ– अतो करोति । ६ अ इ उ ओ आ पा हा– करोति च । ७ आ– अन्यप्रसार । ८. इ ग॰– स्थापनि ।

पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधङ्श्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छति यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति

---

पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। कुर्यात्। ये। स्थविष्ठाः। तान्। इन्द्राय। प्रदात्र इति प्र-दात्रे। दधन्। चरुम्। ये। अणिष्ठाः। तान्। विष्णवे। शिपिविष्टायेति शिपि विष्टाय। ५ शृते। चरुम्। अग्निः। एव। अस्मै। प्रजामिति प्र-जाम्। प्रजनयतीति प्र जनयति। वृद्धाम्। इन्द्रः। प्रेति। यच्छति। यज्ञः। वै। विष्णुः। पशवः। शिपिः। यज्ञे। एव। पशुषु। प्रतीति। तिष्ठति।

---

यथोक्तम्—“निरुप्ते स्यात् तत्संयोगात्” (मीसू ६ ५ १२) इत्यत्र। तथा हि “अभिरभागे” (पा १ ४ ९१) इत्थंभूतलक्षणे कर्मप्रवचनीयत्वम्। लक्षणं च ज्ञापकम्। तथा प्रवृत्तं ज्ञापकमिति १० यस्य निरुप्तं हविरभ्युदेतीति निर्णीयते। तदा [17]निरुप्तमिति यागावयवानामुपलक्षणं [18]वाक्यम्, उभयविधाने [19]वाक्यभेदप्रसङ्गात्। ततश्चाग्न्यन्वाधानप्रभृति यावद्ब्राह्मणभोजनमुदयोऽस्य परिहर्तव्य इत्युक्तं भवति। तत्र च— “अभ्युदये [20]कालापराधादिज्याचोदना स्यात् यथा पञ्चशरावे” (मीसू ६ ५ १) इति त्रैधेत्यादिकं न कर्मान्तरविधानम्, अपि तु अपनीतदेवताकं तदेव प्राकृतं ‘शूर्पे राशीकृतं’ हविर्देवतान्तरे संयुज्यत इति राद्धान्तितम्। तत्राप्यनिरुप्तेऽभ्युदिते प्राकृतीभ्य १५ एव देवताभ्यो निर्वापः कार्यः, *तण्डुलभूतेषु देवतापनयस्य विधानादिति सिद्धान्तितम्— “अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेत्” (मीसू ६ ५ १६) इत्यादौ ॥

[21]स्थविष्ठाः स्थूलराशिगताः। “स्थूलदूर°” (पा ६ ४ १५६) इति लोपो गुणश्च। [21]अणिष्ठा अणुराशिगताः। “टेः” (पा ६ ४ १४३) इति टिलोपः। एवं दातृत्वादिगुणेभ्योऽन्यादिभ्यो मध्यमादिभिरष्टाकपालादयः कार्याः। दधन् इति “सुपां सुलुक्°*” (पा ७ १ ३९) इति सप्तम्या २० लुक्। अनङादेशे “विभाषा ङिश्योः” (पा ६ ४ १३६) इति लोपाभावः। शृतं पक्वं पयः ॥

अग्निरेवेत्यादि ॥ गतम्। पशवः शिपिरिति। शिपयो रश्मयः, तैः [22]विष्टः [23]प्रविष्टः शिपिविष्टः। निर्वेष्टितशेपः शिपिविष्ट इत्यन्ये। तत्र पशुहेतुत्वात् ताच्छब्द्यम्। यज्ञे पशुषु च प्रतिष्ठितो [24]भवतीत्येव ॥

---

१७ तरे– प्रवृत्तमिति। १८ तरे– त्याज्यम्। १९ तरे ल– वाक्यशेषप्र°। २० तरे– २५ कालापराभिधा इज्या°। २१–२१ तरे पर ल– स्थूलराशिगता, मै४– स्थूलराशिगतम्। *–* तरे ल– ‘तण्डुलभूतेषु ... सुपां सुलुक्’ इत्ययं भागो नास्ति। २२ मै– विशिष्टः। २३ ल– ‘प्रविष्ट’ नास्ति। २४ मै४– भवत्येव।

त्रेधा तण्डुलान् वि भजेद्ये मध्यमाः स्युस्तानग्नये दात्रे

त्रेधा । तण्डुलान् । वीति । भजेत् । ये । मध्यमा । स्युः । तान् । अग्नये । दात्रे ।

चेष्ट्वा प्रजावान् पशुमान् [४]भ्रातृव्यहा च सपद्यते। हविस्म्युदयाय विपरीतफल स्यात्। तस्मान्निर्वापयागयोर्मध्ये यथा चन्द्रमस पुरस्तात् उदयो न भवति तथा कालो ग्राह्य ॥

५ अत्र भ्रमः– अस्य चन्द्रमसो द्वादश दृश्यादृश्यकला अशा, एतैरशैरय दृश्यश्चादृश्यश्च भवति। तत्र [५]स्फुटजिज्ञासाया खखाग्निभि[५] शतत्रयेण द्वादशभागान् सगणय्य पूर्वस्या दिशि उदयेऽस्तमये[६] च विचार्यमाणे कर्मद्वयसस्कृतेनोदयराशिना विभज्य लब्धेन अशादिना युक्त स्फुटोऽर्क उदयार्को भवति। तद्युक्तो यावान् स्फुटोऽर्क तावान् यदा गणितानीतोऽर्को भवति तदा चन्द्रमा उदेति, अथ तेनैव [*]अशादिना [७]रहितः स्फुटोऽर्को [*]वा अस्तमयार्को वा भवति। तावान्

१० यदा स्फुटोऽर्को भवति तदा चन्द्रमा अस्तमेति। यदा पुनः [८]प्राच्या दिश्युदयोऽस्तमयो वा विचार्यते तदा पूर्ववत् सगुणितान् द्वादशभागान् [९]चन्द्रकर्मद्वयसस्कृतेऽस्तमयराशिना विभज्य लब्धेनाशादिना स्फुटोऽर्क [१०]उदययुक्त उदयार्को[*] भवति। तद्रहितोऽस्तमयार्क । तत्र चन्द्रस्य उदयार्केणास्तमयार्केण वा सह यदन्तर तस्मिन्नन्तरे यावान् काल तेन कालेन घटिकादिना उदितोऽस्तगतो वा भवति। तत्र द्वेधा चन्द्रस्योदयास्तमयौ यथा प्रतिदिन च भवत गोलकाप्राहिपरित्यागाभ्या

१५ सूर्यस्येव। तथाऽऽदित्यस्यैव सनिकर्षाद्विप्रकर्षात् [११]च अस्योदयास्तमयौ भवतः। तदपि कथ्यते–अय चन्द्र शीघ्रगतित्वात् प्रत्यहमर्कसमीपमागच्छति [१२]यावान् प्राच्यामस्त व्रजति। अस्त [१३]गतश्च सतः शीघ्रगतित्वात् आदित्यमनुदिन परित्यजति यावत् प्रतीच्यामुदेति। एवमस्यादित्यसनिकर्षाद् विप्रकर्षाच्च प्राच्यामस्तमय. प्रतीच्यामुदयः। तच्चन्द्रार्कयोर्भुक्त्यन्ता द्वादशमहाभागा अशा.। तेन गोलार्धभागानामशीतिशतसख्यभागे हृते लब्ध पञ्चदश प्रतिपदादयस्तिथय । तिथिभागघटिके

२० द्वे, दृश्यगोलार्धभागस्य त्रिंशद्घटिकात्वात्। तत्र चन्द्रार्कयोः परो विप्रकर्ष पौर्णमासी, पर सनिकर्ष. [*]अमावास्या। तत्राभीष्टकाले स्फुटभुक्त्य तर स्फुटकालाशादधिक वा भवेत् तदन्यून वा; अधिकत्वे पञ्चदश्यामपि चन्द्रो दृश्य स्यात्। न्यूनत्वे तु चतुर्दश्यामपि न दृश्येत। तस्मात् तादृश सूक्ष्मगणनाकौशलशालिना कालोऽन्वेष्य.[*] ॥

प्रमादाच्चेद्दुष्ट काल आपतेत् तदा [१४]त्रेधा [१५]तण्डुलान् इत्यादि [१६]कर्माचरेत्।

२५ तत्र निरुप्तमनिरुप्त वा प्रवृत्त हविर्यदाऽभ्युदेति तदेद कर्म कर्तव्यमिति [१६]मीमासका,

४. मै८– भ्रातृव्यवान्। ५–५. तै३ मै८– °जिज्ञासाया वराग्निभि. (?); मै४– °त्रिश्च घ उदग्निभि (?)। ६. तै– 'अस्तमये' नास्ति। ७. मै४,८– आदिना। ८. तै– अस्ति। *–* तै३ मै– 'वा अस्तमयार्को ...... उदयार्को' नास्ति। ९. मै८– प्रतीच्याम्। १०–१०. मै८– °तै लब्धेनास्तमय°। ११. मै४– उदय उक्त°। १२. तै३,मै४– वा। १३. तै३,मै८ – यावत्। १४

३० मै४ – गच्छाम। *–* तै३,८– 'अमावास्या। तत्रा .............. कालोऽन्वेष्य' इत्ययं भागो नास्ति। १५. तै३– कर्मणि चरेत्। १६. मै२–मीमांसायाम्; मै८– 'मीमांसकाः' नास्ति।

ऽनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयाऽवरुन्द्ध इन्द्रियमुत्तरया देवलोकमेव (३) पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति

अनादृत्येत्यना - दृत्य । तत् । द्वे इति । एव । यजेत । यज्ञमुखमिति यज्ञ मुखम् । एव । पूर्वया । ५
आलभत इत्या लभते । यजते । उत्तरयेत्युत् तरया । देवताः । एव । पूर्वया । अवरुन्द्ध इत्यव रुन्द्धे ।
इन्द्रियम् । उत्तरयेत्युत् तरया । देवलोकमिति देव लोकम् । एव (३) । पूर्वया ।
अभिजयतीत्यभि - जयति । मनुष्यलोकमिति मनुष्य लोकम् । उत्तरयेत्युत् तरया । भूयसः ।
यज्ञक्रतूनिति यज्ञ - क्रतून् । उपेति । एति । एषा । वै । सुमना इति सु मनाः । नाम । इष्टिः ।
यम् । अद्य । ईजानम् । पश्चात् । चन्द्रमाः । अभीति । उदेतीत्युत् एति । अस्मिन् । एव । १०
अस्मै । लोके । अर्धुकम् । भवति ।

इति च । अन्वाधानादियावदिष्टयन्तं चन्द्रोदयेऽभ्युदयेष्ट्या भाव्यम् । तथा पर्वसन्धे पूर्वमिष्टिसमाप्तौ पुनर्यष्टव्यमित्याहुः । तत्र पर्वणः सूक्ष्मत्वात् प्रयासन्नतिथिद्वयलक्षणाया [27]पञ्चदशीप्रतिपदौ पर्वणी उच्येते । तस्मात् स्फुटीकरणेन तिथिद्वयांश एवानीय कालोऽन्वेष्टव्यः । तत्र पञ्चदश्याः प्रथमेंऽशे तिथिद्वयांशक्षये चन्द्रोदयसंभावना[28] । तत्रोत्तरयोश्चांशयोः क्षये पूर्वं यागसमाप्तिः स्यात् । १५
चतुर्थे तु दोषद्वयाप्रसङ्गः । प्रतिपदाद्यंशे सर्वदोषाभावः । चतुर्थे तु तिथिद्वयांशे क्षयाय[29] चन्द्रोदयसंभावना । अथ यदि पूर्वेद्युश्च पञ्चदशघटिका चतुर्दशी उत्तरेद्युरष्टौ घटिका पर्व, यदा च पूर्वेद्युरष्टादश घटिका पर्व उत्तरेद्युर्दश घटिका प्रतिपत् तत्र गत्यभावात् यष्टव्यमित्येके । ननु 'यमद्येजानम्' इत्यादिदर्शनात् द्वितीयायामपि तत्संभवात् यागोऽनुमीयते । नैवम् । [30]चतुर्दश्याः क्षये प्रतिपद्येवोदयसंभवाकाङ्क्षासंभवात् । एवं पश्चादिष्वपि निपुणं निरूपणीयमिति ग्रन्थविस्तर- २० भयादुपरम्यते ॥

अनादृत्येति ॥ समिमं पूर्वपक्षं निराकृत्य सिद्धान्तं विधत्ते–'अनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयाऽवरुन्द्ध इन्द्रियमुत्तरया देवलोकमेव पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति' इति ॥ एकामेवेति यदुक्तं [तत्] [अनादृत्य] [द्वे] [एव] [यजेत], तत्र [पूर्वया] इष्ट्या १५ सम्यगनुष्ठितया [29]यज्ञोपक्रमस्य संपादनं [31]देवतावरोधो देवलोकजयश्चेति प्रयोजनत्रयं संपद्यते । [उत्तरया

२७ प२–पञ्चदशी प्रतिपच्च । २८ तै२–°संभवात् । २९ तै३ प२ ल–क्षयाय (?), मै भिभाय [क्ष एव] । ३० त२ मै मै४ ल– श्चो दृश्याम् ।

२९ आ क जो ना हा– यज्ञमुखस्यप्रयो°, अ इ उ पा– यज्ञमुखस्यप्रयोग° । ३० आ क ना– आलम्भनं, अ इ उ पा– सम्यगाछदन (?) । ३१ अ इ उ जो पा हा– देवरोधो । ३०

न द्वे ( २ ) यजेत यत् पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्यादुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते-

न। द्वे इति (२)। यजेत। यत्। पूर्वया। सम्प्रतीति सं-प्रति। यजेत। उत्तरयेत्युत्-तरया।
५ छम्बट्। कुर्यात्। यत्। उत्तरयेत्युत्-तरया। सम्प्रतीति सं-प्रति। यजेत। पूर्वया। छम्बट्। कुर्यात्। न। इष्टिः। भवति। न। यज्ञः। तत्। अन्विति। ह्रीतमुखीति ह्रीत-मुखी। अपगल्भ इत्यप-गल्भः। जायते। एकाम्। एव। यजेत। प्रगल्भ इति प्र-गल्भः। अस्य। जायते।

"अथ शाखान्तरे ऋद्धिकाममधिकृत्योक्तम्– "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः "कामयेत" (आपश्रौ ३ १४ १४)*। तत्र च यावदेवमुपपद्यते तावान् प्रकर्षः सोप्य (?) इति
१० चतुर्थोऽशो दृष्टः। 'तत्र यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्णमास्यां वा यजेत' इत्युच्यते। तथा– 'पक्षान्तेऽन्वाधानं पक्षादौ यागः, 'पूर्वेद्युरन्वाधानमुत्तरेद्युर्यागः'

प्रजया पशुभिः च व्यर्धयति एव अस्य भ्रातृव्यं च वर्धयति। अतोऽभ्युदये निमित्ते इष्ट्यैव तण्डुलान् मध्यमस्थविष्ठाणिष्ठरूपेण त्रेधा भिक्षास्तान् पूर्वदेवताभ्यः वि भजेत्। विभज्य च दात्रादिगुणकाग्न्यादिदेवताभ्यो हविः कुर्यात्॥

१५ नेति॥ "यदुक्तं सूत्रकारेण– "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामित्युक्त्वाऽऽहैकामेव यजेत" (आपश्रौ ३ १४ १४) इति। अस्यायमर्थः– पौर्णमास्यामन्वाधाय प्रतिपदि पौर्णमासयागं कृत्वा तदानीमेवान्वाधाय द्वितीयायां पुनः पौर्णमासयागं कुर्यात्। एवममावास्यायामपि। सेयमृद्धिकामस्येष्टिः सुमना इत्यभिधीयते। तामेतां सुमनसमिष्टिं पूर्वोत्तरपक्षाभ्यां विचार्य विधातुमादौ पूर्वपक्षी सिद्धान्तं निराकृत्य स्वपक्षं विधत्ते– 'न द्वे यजेत यत् पूर्वया सम्प्रति यजेतोत्तरया छम्बट्कुर्या-
२० दुत्तरया सम्प्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते' इति॥ सिद्धान्तिना यदुच्यते 'द्वे यजेत' इति तन्न युक्तम्। यदि तत्र 'पूर्वया पौर्णमास्या 'सम्प्रति 'यजेत सम्यगनुतिष्ठेत् तदानीम् 'उत्तरया 'छम्बट् 'कुर्यात् "व्यर्थमेव कुर्यात्"। यद्युत्तरा सम्यगनुष्ठिता तदा पूर्वैव व्यर्थम्। तथा सति द्विरनुष्ठिता सेयम् 'इष्टिः इत्यपि वक्तुं 'न शक्यते। इष्टावधिकावृत्तेरविहितत्वात्। "न अप्यग्निष्टोमादियज्ञ" इति वक्तुं शक्यतेऽधिकप्रयोगे सत्यपि प्रातःसवनादी-
२५ नामभावात्। अत उभयभ्रष्टत्वात् तदनुष्ठाता यजमानः सभायां 'ह्रीतमुखी भवति। स एष सभ्युत्तरं वक्तुं न प्रगल्भो भवेत्। तस्मादृद्धिकाम्यावृत्तिं परित्यज्य 'एकाम् 'एव पौर्णमासीममावास्यां च 'यजेत। तथा सति 'अस्य यजमानस्य "पुत्रोऽपि सभायां 'प्रगल्भः 'जायते, किमु वक्तव्यमयं "प्रगल्भ इति॥

२५ तै३– 'अथ' नास्ति। २६ मै– 'कामयेत' इत्यस्यानन्तरं 'मनव'। * [अत्रग्रन्थः परित्रुटित इवाभाति।]।

३० २२–२२ बो हा– वर्धयतोऽभ्युदयं, क–वर्धयति। अभ्युदयं। २३ आ ट– °कृत्येत°। २४ ट– तदुक्तं। २५–२५ आ क– 'व्यर्थमेव कुर्यात्' नास्ति। २६ क– °यज्ञादिः। २७ हो१–पुत्रादि। २८ आ– 'प्रगल्भ' नास्ति।

तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् (४) पूर्वेद्युर्यजते वेदिमेव तत् करोति यद्वत्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सं पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति

तेषाम्। मैत्रावरुणीति मैत्रा-वरुणी। वशा। अमावास्यायामित्यमा-वास्यायाम्। अनूबन्ध्येत्यनु-बन्ध्या। यत् (४)। पूर्वेद्युः। यजते। वेदिम्। एव। तत्। करोति। यत्। वत्सान्। अपाकरोतीत्यप-आकरोति। सदोहविर्धाने इति सदः-हविर्धाने। एव। समिति। मिनोति। यत्। यजते। देवैः। एव। सुत्याम्। समिति। पादयति। सः। एतम्। अर्धमासमित्यर्ध-मासम्॥ सधमादमिति सध-मादम्। देवैः। सोमम्। पिबति।

देवानां सोमः एतम् अनन्तरभाविनम् अर्धमासं सर्वं प्रसुतः भवति। तस्य प्रवृद्धा गतिर्योगः। यद्वा— प्रकर्षेणानुज्ञातः प्रसुतः हुतो भवति। अथ तेषां देवानाम् अमावास्यायां मैत्रावरुणी वशा अनूबन्ध्या भवति। एवम् देवा अयजन्त इति॥

इदानीं दाक्षायणयज्ञं तद्भावेन रूपयति— यदिति॥ पूर्वस्मिन्नहनि यत् अग्नीषोमाभ्यां यजते उत्तरवेदिकरणस्थानीयं तत्। यत् वत्सापाकरणं सदोहविर्धानयोः समितिस्थानीयं तत्। यत् उत्तरस्मिन्नह्नि सान्नाय्येन यजते तत् देवैः सहेन्द्रस्य सुत्या यागं संपादयति, सुत्यास्थानीयोऽर्धमासः। यस्मादेवं तस्मात् स इन्द्रः एतम् आगामिनम् अर्धमासं सर्वं देवैः

सोमोऽभिषुतो भवति। 'पयो वै सोमः पयः सान्नाय्यम्' (तैसं २५५) इति पूर्वमुक्तत्वात्। किं च तेषां देवानां पौर्णमासीमारभ्यामावास्यापर्यन्तम् अर्धमासं नैरन्तर्येण सोमः प्रकर्षेण सुतो भवति। प्रतिदिनमनुष्ठिताभिः सोमविकृतिभिर्या प्रीतिः सा तेन सान्नाय्येन संपद्यत इत्यर्थः॥

तेषामिति॥ अथोत्तरस्याममावास्यायां विहितामामिक्षां प्रशंसति— 'तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् पूर्वेद्युर्यजते वेदिमेव तत् करोति यद्वत्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सं पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति यन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽऽनूबन्ध्या सो एवैषैतस्य' इति॥ येयम् अमावास्यायाम् अनुष्ठिता मैत्रावरुणी आमिक्षा सा तेषां देवानां वशा अनूबन्ध्या संपद्यते। तत् कथमिति तदुच्यते— पूर्वेद्युः शुक्लप्रतिपदि यजते इति यत् तेन सौमिकीं वेदिम् एव कृतवान् भवति। तस्मिन्नेव दिने पुनरपि वत्सान् अपाकरोति इति यत् तेन सदोहविर्धाने द्वे यागमण्डपे संपादितवान् भवति। द्वितीयायां प्रातराग्नेयेनाष्टाकपालेन यजते इति यत् तेन देवैः क्रियमाणां सुत्याम् एव संपादितवान् भवति। स तादृशो यजमानः एतम् अर्धमासं शुक्लपक्षं नैरन्तर्येण देवैः सधमादं सहर्षोपेतं सोमं पीतवान्

३४ त३ मै ख– पूर्वस्मिन् दिने।

४० आ ङ– 'पूर्वम्' नास्ति। ४१–४१ आ– 'किं च' नास्ति। ४२ च थो ना हा– शुद्धमति°। ४३ आ– पुनरेव। ४४–४४ क– द्वौ यागमण्डपौ, आ ३ च पा– द्वौ मण्डपौ, ना ओ– मण्डपौ। ३०

दाक्षायणयज्ञेनं सुवर्गकामो यजेत पूर्णमासे सं नयेन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यांया यजेत पूर्णमासे वै देवानाᳪ सुतस्तेषामेतमर्धमासं प्रसुतस्-

दाक्षायणयज्ञेनेति दाक्षायण यज्ञेनं । सुवर्गकाम इति सुवर्ग-काम । यजेत । पूर्णमास इति पूर्ण मासे । समिति । नयेत् । मैत्रावरुण्येति मैत्रा-वरुण्या । आमिक्षया । अमावास्यायामित्यमा
५ -वास्यायाम् । यजेत । पूर्णमास इति पूर्ण मासे । वै । देवानाम् । सुत । तेषाम् । एतम् । अर्धमासमित्यर्ध-मासम् । प्रसुत इति प्र सुत ।

दाक्षायणयज्ञेनेति ॥ येन दाक्षायणा यजन्ते । दक्षात् “ अत इञ् ” (पा ४ १ ९५), “ यञिञोश्च ” ( पा ४ १ १०१ ) इति फक् । पूर्णमाम इति । द्वे [31]पूर्णमास्यौ द्वे अमावास्ये यजेत । तत्र पौर्णमास्या पूर्वेद्युराग्नेयोऽष्टाकपाल [ [32]अग्नीषोमीय एकादशकपाल । आग्नेयोऽष्टा
१० कपाल [32] ] ऐन्द्र [33]दध्युत्तरेषु । अमावास्याया पूर्वेद्युराग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपाल आग्नेयोऽष्टाकपाल , मैत्रावरुण्यामिक्षा द्वितीयोत्तरेषु ॥

पूर्णमासे वा इत्यादि ॥ देवाना सोमयागत्वेनाय स्तूयते । तत्र यो देवाना सोमयाग तत्स्वरूप तावदाह । देवा येन सोमेन यजन्ते तत्र [v]पूर्णमासे [v]सुत अभिषुत सोम [v]तेषा

सम्यगनुष्ठितया प्रकृतयज्ञसपूर्तिरिन्द्रियावरोधो मनुष्यलोकजयश्चेति[11] [11]सपद्यन्ते त्रीणि प्रयोजनानि[11]।
१५ अतो नैरस्या अपि वैयर्थ्यम् । नापीष्टियज्ञत्वयोरभाव प्रत्येकमिष्टित्वेऽपि [v]समुदितस्य प्रौढयज्ञत्वात् अत [11]एव तदनुष्ठानेन [11] [v]भूयस [11]बहूनेकाहाहीनसत्ररूपान् [v]यज्ञक्रतून् [v]उपैति । किं चाय द्वितीयाया मिष्यन्त [1]यजमानमभिलक्ष्य [v]पश्चात् [v]चन्द्रमा [v]अभ्युदेति तस्येयमिष्टिर्नाम्ना [v]सुमना इत्युच्यते वर्धिष्णुचन्द्रोदयस्य सौमनस्यहेतुत्वात् । तत [v]अस्मिन् [v]एव [v]लोके तस्य [16]समृद्धिर्धन [v]भवति ॥

दाक्षायणयज्ञेनेति ॥ यथेय सुमना नामेष्टिर्दर्शपूर्णमासयोर्गुणविकृतिस्तथैवान्या गुणविकृतिं
२० विधत्ते– ‘ दाक्षायणयज्ञेन सुवर्गकामो यजेत ’ इति । एतस्य यज्ञस्य स्वरूप सूत्रकारेण स्पष्टीकृतम्– “ दाक्षायणयज्ञेन सुवर्गकाम । द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत । आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादश कपाल पूर्वस्या पौर्णमास्याम् । आग्नेयोऽष्टाकपाल ऐन्द्र दध्युत्तरस्याम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादश कपाल पूर्वस्याममावास्यायाम् । आग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् ” ( आपश्रौ ३ १७ ४ ६ ) इति ॥

२५ पूर्णमास इति ॥ तत्रोत्तरस्या पौर्णमास्यामुत्तरस्याममावास्याया चैकैक विधत्ते– ‘ पूर्णमासे सं नयेन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्याया यजेत ’ इति ॥

पूर्णमास इति ॥ तत्रैन्द्र दधिरूप यदुत्तरस्मिन् पौर्णमासे सान्नाय्य तत् प्रशसति– ‘ पूर्णमासे वै देवानाᳪ सुतस्तेषामेतमर्धमासं प्रसुत ’ इति । यदैन्द्र दध्यनुष्ठितं तेन [11]पूर्णमासे एव [v]देवाना

३१ प२,मे४– पौर्णमास्यौ । ३२–३२ [ मे– मुद्रितपुस्तकमनुसृत्य पूरितोऽयमश । लिखित
१० पुस्तकेषु नास्ति । ] । ३३ ए– ‘ दध्युत्तरेषु ’ नास्ति ।

३२ अ इ उ ओ ना पा– ‘ चेति ’ नास्ति । ३३–३३ क ग ह ो१–प्रयोजनत्रय संपद्यते । ३४ आ–समृद्धिरस्य, इ–समाहितस्य । ३५–३५ आ क ओ ना हा–एतदनुष्ठानेन । ३६ इ ग ह ो१–बहूनो° । ३७ हा– यज्ञमा । ३८ इ ग्रे– समृद्धिरीशं । ३९ आ इ–पौर्णे° ।

भवति यदि नावविर्ध्यति सदृङ्व्यावृत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक् पुण्यो वा भवति प्र वा मीयते तस्यैतद्व्रतं नानृतं वदेन्न मांसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयु(६)रेतद्धि देवाः सर्वं न कुर्वन्ति ॥५॥

[ चन्द्रमा हि देवलोकमेव यदङ्ग पल्पूल्येयुः षट् च । ]

भवति । यदि । न । अवविध्यतीत्यव विध्यति । सदृङिति स-दृङ् । व्यावृत्काम इति ５ व्यावृत्-काम । एतेन । यज्ञेन । यजेत । क्षुरपविरिति क्षुर पविः । हि । एषः । यज्ञः । ताजक् । पुण्यः । वा । भवति । प्रेति । वा । मीयते । तस्य । एतत् । व्रतम् । न । अनृतम् । वदेत् । न । मांसम् । अश्नीयात् । न । स्त्रियम् । उपेति । इयात् । न । अस्य । पल्पूलनेन । वासः । पल्पूलयेयुः (६) । एतत् । हि । देवाः । सर्वम् । न । कुर्वन्ति ॥ ५ ॥

[ शबा १६४१० ]　　१०

सदृङ् सदृश एव यजमानान्तरे स्यात् न [38]तु विशेषैश्वर्यं स्यात्[39] । तस्मादन्येभ्यो यजमानेभ्य व्यावृत्काम एतेन यजेत । व्यावृत्तिर्व्यावृत् । सपदादिलक्षण क्विप् (पा ३ ३ १०८ वा ९) । कोऽस्य विशेष इत्याह— क्षुरपविः निश्चितफल[40] यथाक्षुरच्छेदेन[41] पविर्वज्र[42] सद्य[43] प्रचयवृत्[44] एवमय यज्ञ । ताजक् तदानीमेव प्र मीयते । तस्येत्यादि । गतम् । अनृता स्त्रियम् न उपेयात् इति एके । [45]पल्पूलनं शोधनम् ऊषादि[45], तेन अस्य वास न पल्पूलयेयु । १५ [46]अनेनाश्मपीडनादिकमपि निषिध्यत इत्यन्ये । पल्पूलयति स्नानकर्मा ॥

इति द्वितीये पञ्चमे पञ्चमोऽनुवाकः ॥

वा भवति प्र वा मीयते' इति ॥ अन्येषु यज्ञेषु यदि अवविध्यति किंचिद्वैकल्यं करोति [51]तदानीं पापीयान् भवति अन्ययजमानापेक्षया । [52]अतिनिकृष्टो भवति । यदि न अवविध्यति वैकल्यं न करोति तदानीमन्यै [53]सदृङ् समान एव भवति न तु तेभ्य [54]आधिक्यलक्षणा व्यावृत्ति सिध्यति । २० अत व्यावृत्काम एतेन दाशायणयज्ञेन यजेत । यस्मात् एष यज्ञ क्षुरवद्वज्रवच्चातितीक्ष्ण [55]तस्मादेतदनुष्ठायी ताजक् पुण्य वा भवति, तदानीमेवेतरेभ्यो व्यावृत्त एव भवति । [56]तद्विरोधी ताजक् [57]प्रमीयते एव । अथवा यजमान एव सम्यगनुष्ठानादुत्तमो भवति वैकल्यात् प्रमीयते वा ॥

३८–३९ तै३ – 'तु विशेषैश्वर्यं स्यात्' नास्ति । ४० त३ प२ ल – ततफल । ४१ त३– यथा क्षुर° । ४२ त३– नववीर्येश । ४३ ल– यज्ञ सत्र । ४४ त३ प२ ल– प्रत्यक्कृत, २५ मै४– प्रत्यक्कृत् (?) । ४५–४५ त३– पल्पूलन शोभन दूषणादि, ल– पवन शोभनदूरादि (?) । ४६ प२– एकस्य विधानादि°, ल– नकस्य विधानादि° ।

५१ ड हो१– तदा पापीयान् इतरयजमानेभ्यो । ५२ ड मू हो१– अत्यन्तनिकृष्टो, अ इ उ जो पा हा– अतिकृष्टो । ५३ अ इ उ जो ना पा हा– सदृश । ५४ ड– आदिलक्षणा । ५५ ड मू– अतस्तदनुष्ठायी हो१– अतस्तदनुष्ठाय । ५६ आ ड– एतद्विरोधी । ५७ अ उ जो ना पा हा– म्रियते । ३०

यन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽनूबन्ध्या सो एवैषैतस्य साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञ( ५ )मभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान्

यत् । मैत्रावरुण्येति मैत्रा - वरुण्या । आमिक्षया । अमावास्यायामित्यमा - वास्यायाम् । यजते । या । एव । असौ । देवानाम् । वशा । अनूबन्ध्येत्यनु - बन्ध्या । सो इति । एव । एषा । एतस्य । साक्षादिति स - अक्षात् । वै । एषः । देवान् । अभ्यारोहतीत्यभि - आरोहति । यः । एषाम् । यज्ञम् ( ५ ) । अभ्यारोहतीत्यभि - आरोहति । यथा । खलु । वै । श्रेयान् । अभ्यारूढ इत्यभि - आरूढः । कामयते । तथा । करोति । यदि । अवविध्यतीत्यव - विध्यति । पापीयान् ।

सधमाद सोम पिबति । देवैः सह मादयति इति सधमात् । "सधमादस्थयो." (पा ६ ३·९६ ) इति सधादेशः । यद्वा– सह मदिता । [45]या मैत्रावरुण्यामिक्षा[45] सा देवानाम् अनूबन्ध्यास्थानीया ॥

साक्षाद्वा इत्यादि ॥ इत्थमयमव्यवधानेन देवान् अभि आरोहति देवसमूहमनुप्रविशति यः एषां देवानां यज्ञम् अभ्यारोहति अनुष्ठानेनाक्रामति[46] । यथेत्यादि । यथा लोके श्रेयान् [47]अश्रेयांसमभ्यारूढमात्मान कामयते इहोऽप्यह श्रेयान् भूयासमिति तथा अयं दाक्षायणयज्ञयाजी करोति ॥

इदानीं यज्ञान्तरेभ्योऽस्य वैलक्षण्यं दर्शयितुमाह– यदीति ॥ यागान्तरेषु [48-49]यदि अव-विध्यति[48-49] विच्छिन्नानुष्ठायी स्यात्, पापीयान् पापतरः भवति । यदि ॥ न अवविध्यति

भवति । तस्मादाग्नेयादूर्ध्वं तस्मिन् द्वितीयामावास्याकर्मणि मैत्रावरुण्या आमिक्षया यजते इति यत् सो एव आमिक्षा यजमानस्य [45]एषा वशा [46]संपद्यते । काऽसौ वशेति तदुच्यते– सोमयागावसाने देवानाम् अर्थं एव या वशा अनूबन्ध्या क्रियते सैवेयमामिक्षेत्यर्थः ॥

साक्षादिति ॥ दाक्षायणयज्ञानुष्ठानं प्रशंसति– 'साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञमभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति' इति ॥ यः यजमानः एषां सिद्धि-साध्योपेतानामग्न्यादीनां देवानां यज्ञम् अभ्यारोहति सम्यगनुतिष्ठति एषः साक्षात् एव तानग्न्यादिदेवान् अभ्यारोहति प्राप्नोति । बहुकालव्यवधानमन्तरेणैव देवसदृशं [49]भोगं प्राप्नोतीत्यर्थः । प्राप्य च यथा लोके श्रेयान् राजामात्यादिरुत्तमं पदम् अभ्यारूढः [48]सर्वमप्युत्पानामभे ममेद[48] भोगसाधनमास्तेति पुनः पुनः कामयते तथा अयं यजमान [47]आवृत्तयाजी पुनः पुनः फलसंपादनं करोति ॥

यदीति ॥ एवं स्वर्गकामस्यायं यज्ञ उक्तः, इदानीं [50]भ्रातृव्यकामस्य स एवोच्यते– 'यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सदृङ्भ्रातृव्यत्वाम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्तामुष्यो

३५–३५. तै२.मै लं– मैत्रावरुण्यामिक्षा या । ३६. तै२.मै लं– °नाक्रमति । ३७ तै२– °समारूढः' । ३८–३८. लं– भवपि विध्यति ।

४५. भा–'एषा' नास्ति । ४६. ड–संपादयेत । ४७. इ–भागं । ४८–४८. हो१– °नामप्रमेदं । ४९. इ.उ.इ.ण.हो१– आवृत्तयज्ञ; वो हा– आवृत्तये आवृत्तयज्ञे । ५०. ड.ए.हो१– भ्रातृव्यविनाशस्य ।

[79]दर्शे, तथा [80]सति दर्शभ्रान्त्याऽपि[81] चतुर्दश्यां निर्वापाभावान्निर्वापादूर्ध्वं चन्द्रोदयो न प्राप्नोति। नैष दोषः। दध्नो द्व्यहकालीनत्वेनार्थसिद्धे[82] [83]पूर्वेद्युर्दोहावधाने, तदभिप्रायेण निरुप्तमित्युच्यते। यद्वा– व्रीहिनिर्वापोऽपि पूर्वेद्युर्विकल्पित। तथा च श्रूयते– "यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत्" (द्र मीसू ६ ५ ४ शाभा) इति। अयमर्थः– भ्रान्त्या [84]प्रमादेन वा दर्शोऽयमित्यभिनिश्चितवतो मा प्रति चन्द्रोऽभ्युदेष्यतीति भीतिरस्ति तदा तस्मिन्नेव दिने महारात्रे सर्वाणि निर्वपेदिति। अतो निरुप्तस्यैव हविषोऽस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेद उपदिश्यते। ततो [85]दर्शस्यैवायं नैमित्तिकः प्रयोगो न तु दर्शलोपप्रायश्चित्तमिति नैमित्तिकं दर्शप्रयोगमनुष्ठाय पश्चात् स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठातव्य ॥

तत्रैवान्यद्विचिन्तितम्—

"ऊर्ध्वं चन्द्रोदये [86]सेष्टिर्निर्वापात् [87]पूर्वमभ्युत।
उपतेराद्योऽन्तिमः पक्षो निरुप्तेत्यविवक्षया" ॥ (जैन्या ६ ५ ४) ॥

सा पूर्वोक्ताऽभ्युदयेष्टिर्हविर्निर्वापादूर्ध्वं चन्द्रोदये सति कर्तव्या, 'निरुप्तं हविरभ्युदेति' (द्र तैस २ ५ ५) इत्युक्तत्वादिति चेत्। नैवम्। हविरभ्युदयस्य [88]निमित्तत्वे [89]तद्विशेषणस्य निर्वापस्याविवक्षितत्वात्। अन्यथा वाक्यभेदापत्ते। यस्य हविरभ्युदेति तत्र हविर्निरुप्तमित्येव वाक्यभेद। [90]तस्मात् निर्वापात् प्रागपि चन्द्रोदये सत्यविहितकाले कर्मोपक्रममात्रेणेयमिष्टि कर्तव्या ॥

तत्रैवान्यद्विचिन्तितम्—

"[91]प्राक् प्राकृतीभ्यो[92] निर्वापो वैकृतीभ्योऽथवाऽग्रिम।
तण्डुलोक्तेर्वैकृतीभ्यो हविर्मात्रोपलक्षणात्" ॥ (जैन्या ६ ५ ५) ॥

निर्वापात् प्राग्यदा चन्द्रोदयस्तदा चन्द्रोदयादूर्ध्वं क्रियमाणो निर्वाप प्राकृतीभ्यो देवताभ्यो युक्त। कुत? तण्डुलान् विभजेदिति वाक्येन [93]तण्डुलीभावादूर्ध्वं [94]प्राकृतदेवतापनयनश्रवणात्। निर्वापस्तु व्रीहीणामेवेति तस्मिन् काले प्राकृताग्न्यादिदेवता नापनीता इति प्राप्ते ब्रूम– [95]वैकृतीभ्यो दात्रादिगुणयुक्ताभ्यो [96]अग्न्यादिदेवताभ्य निर्वाप कर्तव्य। कुत? तण्डुलशब्देन [97]हविर्मात्रस्योपलक्षणात्। अन्यथा दधिपयसोरतण्डुलत्वेन देवतापनयो न स्यात्। हविर्मात्रविवक्षाया तु व्रीहीणामपि हविष्ट्वेन [98]प्राकृतदेवतासम्बन्धम् अपनीय देवतान्तरसम्बन्धस्य कर्तुं युक्तत्वाद्वैकृतीभ्यो निर्वपेत् ॥

---

७९ अ इ उ जो ना पा हा हो१ – दर्शे। ८०. अ इ उ ड जो पा मृ हा हो१ – अपि। ८१. अ इ उ जो ना पा हा– 'अपि' नास्ति। ८२ अ इ उ क ड जो पा मृ हा हो१– °सिद्धे। ८३ अ इ उ पा– पूर्वेद्युर्दोहनान्तरं, ड मृ हो१– पूर्वेद्युर्दोहनातञ्चने। ८४ मृ हो१ प्रमाणेन। ८५ ड– दर्शप्राय°। ८६ अ इ उ जो पा हा–चेष्टिर्निर्वापात्, हो१–सेष्टिनिर्वाप। ८७ अ इ उ जो ना पा हा–पूर्वमिष्यते। ८८ आ–निमित्तत्वेन। ८९. अ इ उ जो पा– तद्विशेषस्य। ९० आ– तस्मिन्। ९१–९२ ड हो१– प्राकृतीभ्योऽथ,क हा–प्राकप्राकृताभ्यो। ९२ अ इ उ ड जो मृ हा–तण्डुलभावा°, हो१– तण्डुलभावार्थ°। ९३. मृ– °पनयश्रवणात्। ९४ हा– वैकृताभ्य। ९५. आ क–'अग्न्यादिदेवताभ्य' नास्ति। ९६ ना. मृ– °पलक्षणत्वात्। ९७ अ इ उ जो पा हा– प्रकृतसम्बन्धम्।

तस्येति ॥ अतो वैक्लव्यपरिहाराय व्रतविशेषान् विधत्ते– ‘ तस्यैतद्व्रतं नानृतं वदेन्न मांसम् अश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति ’ इति ॥ पल्पूलनं [58]वस्त्रशुद्धिसाधनमूषादि, तेन [°]अस्य [°]वासः [°]न शोधयेयुः । यस्मात् [°]देवाः पूज्याः [59-59]एतत् [°]सर्वम् अनृतवदनादि [59] [°]न [°]कुर्वन्ति, तस्मादयमपि न कुर्यात् । अस्य दाक्षायणयज्ञस्याऽऽधानादूर्ध्वं दर्शपूर्णमासाभ्यां

५ सह विकल्पो द्रष्टव्यः । तथा च सूत्रकार आह– “ [60] सोऽयं दर्शपूर्णमासयोः [61]प्रक्रमे [62]विकल्पः, [63]अनेन दर्शपूर्णमासाभ्यां वा [64] यजेत । तेन [64] [65]पञ्चदशवर्षाणीष्ट्वा विरमेद्यजेत वा । संतिष्ठते दाक्षायणयज्ञः ’ ( आपश्रौ ३ १७ ९ ११ ) इति ॥

अत्र मीमांसा ॥ षष्ठाध्यायस्य पञ्चमपादे चिन्तितम्—

" इष्टिरभ्युदये दर्शात् कर्मान्यदुत देवता ।

१० पूर्वास्त्वाज्या विशिष्टस्य विधानादन्यकर्मता[66] ॥

प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना ।

देवता [67]प्राकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते " ॥ ( जैन्या ६ ५ १ २ )॥

दर्शपूर्णमासयोः श्रूयते– “ यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्

१५ विष्णवे शिपिविष्टाय शृते चरुम् ” इति ॥ [68]अयमर्थः – दर्शभ्रान्त्या केनचिच्चतुर्दश्यां हविर्निरुप्तं भवति । तत ऊर्ध्वं पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तदा निरुप्तास्तण्डुलास्त्रेधा [69]विभक्तव्याः । अखण्डिता ईषत्खण्डिता अतिसूक्ष्मकणाश्चेति त्रैविध्यम् । ते च त्रिविधा दात्रादिगुणविशिष्टेभ्योऽग्न्यादिभ्यो देवेभ्य इति । तत्रेदं प्रक्रान्तदर्शकर्मणोऽन्यत् [70]कर्म । कुतः ? कालापराधप्रायश्चित्तार्थं द्रव्यदेवताविशिष्टस्य कर्मणो विधीयमानत्वात् । तत इदं प्रायश्चित्तं कृत्वा परेद्युः [71] [71]दर्शकर्म नानुष्ठेयमिति [72] प्राप्ते ब्रूमः – हविर्निरुप्तमिति

२० [73]प्रकृतं यद्दर्शकर्म तत्परित्यज्य कर्मान्तरविधिकल्पने [74]प्रकृतहानाप्रकृतागमौ प्रसज्येयाताम् । अतस्तस्मिन्नेव प्रकृते कर्मणि निरुप्तस्य हविषः पूर्वदेवताभ्यो [75] दर्शसम्बन्धिनीभ्योऽपनयोऽत्राभिधीयते । तण्डुलोपलक्षित पशुविर्दधिरूपं व्रीहिरूपं च पूर्वेद्युर्निरुप्तं यद्धविः पूर्वदेवता अग्नेरिन्द्रस्य च विभजेदिति [76]देवताहविषोः परस्परविभागोऽत्र [77]विधीयते, न तु तण्डुलानां स्थविष्ठमध्यमाणिष्ठरूपस्त्रिविधो विभागो विधीयते, तस्य प्राप्तत्वात् । ये मध्यमाः स्युरिति [78]विनियोगभेदादर्थप्राप्त [illegible] विभाग । तत पूर्वदेवताभ्यो दात्रादि

२५ गुणयुक्ताभ्यो [°] यद्दात्रादिदेवताभ्यः पूर्वं निरुप्तं हविः प्रदातव्यम् । ननु प्रतिपदि प्रातर्यापवादो न [illegible]

---

५८ क ग्र– °मूषादिकं, हो१ – °मूषादिक अ इ उ ओ ना पा हा – °साधन मद्रकादि । ५९–५९ क ग्र हो१– अनृतवदनादिक क–एतत्सर्वमनृतवदनादिकं, अ इ उ ओ ना पा हा–एतत्सर्वं । ६० आ क–‘ सोऽयं ’ नास्ति । ६१ उ क हो१– प्रक्रमो, हा–प्रक्रम्य । ६२ आ क उ ना हा– विकल्पने अनिरुप्तौ । ६३ आ क– एतेन । ६४–६४ आ– यजते एतेन ना– यजते तेन क जी हा– यजते न । ३० ६५ आ क– °णीष्ट्वा वा । ६६ आ क ना– °दन्यकर्म तत्, अ इ उ ओ पा हा– °दन्यकर्मता । ६७ क ग्र–प्रकृतीस्त्यक्त्वा । ६८ क हो१–अभ्यायमर्थः । ६९ अ इ उ ओ पा हा–विभज्य कर्तव्या । ७० अ इ उ पा–‘ कर्म ’ नास्ति । ७१–७१ अ आ इ उ क ओ पा ग्र हा हो१–अनुष्ठेयमिति । ७२ ग्र–प्राप्तम् । ७३ क ग्र हो१– °दागमप्रसक्तेः । ७४ अ इ उ ओ ना पा हा– °संबन्धिभ्योऽ° । ७५ [illegible] इ उ ओ ना पा हा– °हविष । ७६ ग्र– वीयते । ७७ क– °दर्थप्राप्तो , अ इ उ ओ पा हा– °दर्थप्राप्तोऽपि । ३५ ७८ क–अग्न्यादि° ।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

"यद्दाक्षायणयज्ञेन स्वर्गकामो यजेत तत् ।
कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये ॥
गुणस्याख्याप्रसिद्धत्वात् कर्मभेदोऽत्र संज्ञया ।
गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्यो[११६] न नाम तत्" ॥ (जैन्या २·३·१०-११) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– 'दाक्षायणयज्ञेन सुवर्गकामो यजेत' (तैसं २·५·५) इति। तत्र दाक्षायणशब्दवाच्यस्य कस्यचित् [११७]गुणस्य लोके प्रसिद्ध्यभावाद्वृद्धिदादिवद्यजिसामानाधिकरण्येन कर्मनामत्वात् 'अथैष ज्योतिः' इत्यादिवदपूर्वसंज्ञया [११८]कर्मान्तरविधिरिति चेत्। न। दाक्षायणशब्दस्याऽऽवृत्तिवाचकत्वात्। [११९]तच्च शब्दनिर्वचनाद्वाक्यशेषाच्चावगम्यते। तथा हि– अयनमित्यावृत्तिरुच्यते। [१२०]दक्षस्यैते दाक्षास्तेषामयनमिति तन्निर्वचनम्। दक्ष उत्साही पुनः पुनरावृत्त्यावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः। तथा चाऽऽवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः। [१२१]आवृत्तिप्रकारस्तु– "द्वे पौर्णमास्यौ द्वे अमावास्ये" (आपश्रौ ३·१७·४) इत्यादिवाक्यशेषादवगम्यते। ततो दध्यादिवत् [१२२]प्रसिद्धार्थत्वात् दर्शपूर्णमासयोः प्रकृतयोरयं[१२३] स्वर्गफलसिद्ध्यर्थमावृत्त्याख्यस्य[१२४] गुणस्य विधिर्न तूद्भिदादिवत् कर्मनामधेयम्। एवं "साकंप्रस्थायीयेन यजेत पशुकामः" (तैस २·५·४ आपश्रौ ३·१६·११) इत्यत्रापि द्रष्टव्यम्। अमावास्यायागे द्वौ द्वौ दोहौ संपाद्य चतसृणां दधिपयसोः कुम्भीनां सह [१२५]प्रस्थापनं साकंप्रस्थायशब्दार्थो [१२६]दर्शयागः साकंप्रस्थायीयः। तथा सति प्रकृते दर्शयागे पशुफलाय [१२७]साकंप्रस्थायाख्यो गुणो विधीयते ॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"अनृतं न [१२८]वदेद्वैधः [१२९]पुंधर्मो वाऽनुवादगीः[१२९] ।
सक्रतौ पुंसि यद्वे वा क्रतौ यद्वा विधिः क्रतौ ॥
अनृतोक्तेः पुमर्थत्वात् तन्निषेधे [१३०]तथा विधिः[१३०] ।
स्मार्तानुवादः पुंक्रत्वोः [१३१]श्रुतिप्रक्रिययोर्वशात् ॥
नाऽऽख्याते [१३२]पुरुषस्योक्तिः क्रतावेव प्रयाजवत् ।
[१३३]स्मार्तोक्तनियमादन्यः [१३४]सयोगोऽतः क्रतौ विधिः" ॥ (जैन्या ३·४·१४-१६) ॥

---

११६. अ.इ.उ.क.जो.पा.हा– °वृत्या स्यात्। ११७. आ.क– 'गुणस्य' नास्ति। ११८. क. हा– कर्मविधि°। ११९. आ.क. तत्र। १२०. ङ– दक्षस्येमे। १२१. अ.इ.जो.ना.पा.हा– °प्रकारश्च। १२२. आ.क – प्रसिद्धत्वात्। १२३. अ.इ.उ.जो.ना.पा.हा – 'अयं' नास्ति। १२४. ङ.हो१ – °र्थमावर्तनाख्यस्य। १२५. अ.इ.उ.पा– प्रवदनं। १२६. आ.क.हो– यागः। १२७. अ.इ.उ.जो.पा.हा– साकप्रस्थानाख्यो। १२८. आ– यदेदेषः। १२९–१२९. ग– पुंधर्मोऽथानु°। १३०–१३०. आ.ना– तथाविधः १३१ ङ– स्मृति°। १३२. क– पुरुषानुक्तिः। १३३. ङ हो१– स्म्योक्त°; ग – सत्योक्ति°। १३४. क.ङ–संयोगोऽतः; हो१ – संयोगे तु।

तत्रैवान्यच्चिन्तितम्—

"[९८]प्राकृतीभ्योऽल्पनिर्वापेऽभ्युदये शिष्टतण्डुलान्।
प्राकृतीभ्यो वैकृतीभ्यस्तूर्ष्णी वा निर्वपेदिह॥
प्राकृतीभ्य प्रवृत्तत्वाद्वैकृतीभ्यो निमित्तत।
शिष्टाशस्यापदार्थत्वादसयोगादिहान्तिम [९९]"॥ (जैन्या ६ ५ ६ ७)॥

५ यदा प्राकृतीभ्यो मुष्टिमात्रे निरुप्ते सति चन्द्रोऽभ्युदेति तदा मुष्टित्रयरूपोऽवशिष्टाश प्राकृतीभ्य एव [१००] निर्वप्तव्य। कुत? [१०१] प्राकृतीना प्रवृत्तत्वात् [१०१], इत्येक पक्ष। चन्द्रोदये [१०२]निमित्ते सति नैमित्तिकस्य पूर्वदेवतापनयस्यावश्यभावात् [१०३]वैकृतीभ्योऽवशिष्टाशनिर्वाप इति द्वितीय पक्ष। अस्तु प्राकृतदेवतापनयो निमित्ताधीन। अन्यदेवतासयोगस्त्वशस्य न सभवति। अन्याश्च देवता प्राकृतदेवतास्थाने निवेशनीया।

१० [१०४]प्राकृतदेवाना च निर्वापपदार्थसबन्ध कृत्स्नो न तु पदार्थांशेन। ततस्तत्स्थानपतिताना वैकृतीना च नाशसयोगो युक्त इत्यस्याशस्य प्राकृतीभ्योऽपनीतत्वाद्वैकृतीभिरसयोगाच्च तूर्णीमेव निर्वाप इति राद्धान्त॥

तत्रैवान्यच्चिन्तितम्—

"सेष्टि सानाय्यिनो वा स्यादन्यस्यापि दधिश्रुते।
१५ [१०५]नान्यस्येत्यग्रिमोऽन्त्य स्यात् [१०५] देयमात्रविधानत"॥ (जैन्या ६ ५ ८)॥

न हि सानाय्यरहितस्य दधिपयसी विद्येते, तदभावे च 'दधश्चरु, शृते चरुम्' (द्र तैस २ ५ ५) इति विधिर्न [१०६]सगच्छेत। तस्मात् सानाय्यिन एव सा पूर्वोक्ताऽभ्युदयेष्टिरिति चेत्। मैवम्। [१०७]अप्राप्ता देवता [१०८] एवात्र विधीयन्ते [१०८]। दधिपयसोरपि विधाने वाक्य भिद्येत। [१०९]तत तण्डुलवद् [११०]प्राप्तयोर्दधिशृतयोरनूद्यमानतया विध्यभावादुदके चरुश्रपणसभवाच्च [१११]सानाय्यिवदन्यस्यापि सेष्टिरस्ति॥

२० नवमाध्यायस्य द्वितीयपादे चिन्तितम्—

"शृतदध्नो प्रणीताना न धर्मा सन्ति वा न हि।
अपाकार्थत्वत, सन्ति पाकहेतुत्वसाम्यत"॥ (जैन्या ९ २ २२)॥

[११२]अभ्युदयेष्टया 'शृते चरु दधनि चरुम्' (द्र तैस २ ५ ५) इति शृतदधिनी [११३]आम्नाते। तयो प्रणीताधर्मा न कर्तव्या। हवि श्रपणार्थमु पाता उत्पवनादिधर्मसस्कृता आप [११४]प्रणीता। दधिपयसी तु

२५ श्रपणार्थं नोत्पन्ने। किं तु हविष्ट्वेन प्रदानार्थमुत्पन्ने। [११५]तत साम्याभावात्रोत्पवनादयो धर्मास्तयोरिति [११५] चेत्। मैवम्। अन्यार्थमुत्पन्नयोरपि दधिपयसोरत्र चन्द्रोदय निमित्तीकृत्य चरुश्रपणहेतुत्व वाचनिकम्। तत समानत्वात् तद्धर्मा सन्ति।

---

९८ होर– प्रकृतिभ्यो°, ग्र– °तीभ्य ऊर्ध्वंनि°, अ इ उ जो ना पा हा– °निर्वपेऽभ्युदये, क– °भ्योऽल्पनि°। ९९ अ इ उ जो पा– °दसदेहदिहान्तिम। १०० ड–निर्वपेत्। १०१–१०१ अ इ उ जो

३० पा हा– प्राकृताना प्रवृत्तत्वात् क ना– प्राकृताना प्रवृत्तत्वात्। १० ग्र– निरुप्ते। १०३ अ इ जो ना पा – वैकृताभ्यो°। १०४ आ – प्राकृतीना, हा – प्रकृताना, अ इ उ क जो ना – प्राकृताना। १०५–१०५ अ इ उ जो पा हा–°मोऽन्यस्य। १०६ आ क ड– सगच्छते। १०७ होर–अप्राप्तावेव ड–अप्राप्ते एव। १०८–१०८ ड–अत्राभिधीयन्ते। १०९ अ इ उ जो ना पा हा– न। ११० क आ– °दधिपयसोर्न°, ना– °दधिपयसोरत्रा° अ इ उ जो पा हा– °दधिपयसोरत्राविद्यमान°। १११ क

३५ ड हा हार– °वदन्यापि। ११२ [illegible]– अभ्युदयेष्ट्या श्रूयते। ११३ आ क– आम्नायेते। ११४ आ– प्रणीता उच्यन्ते। ११५–११५ अ उ जो हा–न तत्साम्याभावात् न उत्पवनादयो धर्मास्तयोरिति पा–न तत्साम्याभावात् न उत्पवनादयोरिति इ– तत्साम्याभावात् न उत्पवनादयो धर्मास्तयोरिति ना– तत् साम्याभावादुत्पवनादयो धर्मास्तयोरिति।

दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यम् ]

एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यत्येतानि वा अङ्गापरूंष्यपि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते-

एष । वै । देवरथ इति देव-रथ । यत् । दर्शपूर्णमासाविति दर्श पूर्णमासौ । यः । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । इष्ट्वा । सोमेन । यजते । रथस्पष्ट इति रथ स्पष्टे । ५ एव । अवसान इत्यव-साने । वरे । देवानाम् । अवेति । स्यति । एतानि । वै । अङ्गापरूंषीत्यङ्गा-परूंषि । संवत्सरस्येति सं-वत्सरस्य । यत् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते ।

एष वा इत्यादि ॥ [१]देवरथ देवाना रथस्थानम् । [२]रथस्पष्ट रथेन [१]प्रकाशित क्षुण्ण । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र [२]देवाना [२]वरे उत्कृष्टे १० [१२]अवसाने देवाना स्वभूते देवाना गृहे [२]अव [२]स्यति देवयजनमध्यवस्यति । तादृशे देवै स्वम्यस्ते देवयजनेऽनेनेष्ट भवति ॥

पञ्चमेऽभ्युदयेष्ट्याद्यास्तत्र इष्टय ईरिता ॥

एष इति ॥ अथ षष्ठे दर्शपूर्णमासयो सोमयागेन सह पौर्वापर्यं [१]विधत्ते- 'एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यति' इति ॥ १५ [२]दर्शपूर्णमासौ इति [२]यत् अस्ति [२]एष एव देवाना [२]रथ रथसदृश । तथा सति प्रथमत [२]दर्शपूर्णमासौ [२]इष्ट्वा पश्चात् [२]सोमेन [२]य [२]यजते तस्यानुष्ठाने महत् सौकर्यं भवति। यथा लोके भूयो रथसचरणेन [३]मार्गस्थकण्टकपाषाणादिषु क्षुण्णेषु [४]स मार्गो विस्पष्टो [५]भवति, अयमस्य ग्रामस्य मार्ग इति सुखेन [६]अध्यवसातु शक्यते, कण्टकाद्यभावात् वर श्रेष्ठश्चासौ भवति। तादृशे मार्गे मनुष्या अनायासेन गन्तु शक्नुवन्ति। तथा [७]देवाना सबन्धिना दर्शपूर्णमासरथेन स्पष्टे सुखेनाध्यवसातु शक्ये श्रेष्ठे मार्गे यजमान २० सोमेन यष्टुमध्यवस्यति। दर्शपूर्णमासयोरिष्टिप्रकृतित्वात् तयो प्रयोगे स्वाधीने सति तद्विकृतिभूता सोमाङ्गभूता प्रायणीयाद्या सर्वा सुखेनानुष्ठातु शक्यन्ते। अननुष्ठितयोस्तु दर्शपूर्णमासयो सोमप्रकरणे दीक्षणीयादिकर्मस्वरूपमात्रस्योपदिष्टत्वात् तदङ्गानि प्रयाजादीन्यनुष्ठातु न शक्यन्ते। तस्मादिष्टिपूर्वत्वम् ॥

एतानीति ॥ [७]अथ दर्शपूर्णमासौ बहुधा प्रशसति [७]। तत्र प्रथम सवत्सरावयवत्वेन प्रशसति- 'एतानि वा अङ्गापरूंष्यपि सवत्सरस्य यद्दर्शपूर्णमासौ य एव विद्वान् दर्शपूर्णमासौ यजतेऽङ्गापरूंष्येव २५

१ प२- स्थान (?), मै४- स्थानि (?), त३ ळ- स्थानि (?)। २ त३ ळ- अवस्थाने।

१ अ इ उ क को ना पा हा- विधीयते। २ ड ग होर- रथ ' नास्ति। ३ आ क ड- महामार्ग°। ४ आ क- 'स ' नास्ति। ५ होर- भवतीति। ६ ना- अध्यवसितु ड- अनुष्ठातुम्। ७-७ आ क- दर्शपूर्णमासयोर्बहुधा प्रशस्यते, अ इ उ को ना पा हा- दर्शपूर्णमासौ प्रशस्येते। ३०

दर्शपूर्णमासप्रकरणे श्रूयते– “नानृतं[125] वदेत्” (तैसं २·५·५) इति। तत्र पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते। कुतः? प्रतियोगिनोऽनृतवदनस्य [126]पुरुषधर्मत्वात् तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात्। ‘वदेत्’ इत्येतदाख्यातं तावत् कर्तृवाचकं, तेन [127]आख्यातेन कर्तुः प्रतीयमानत्वात्। पुरुषस्य [128]आख्यातप्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तम्। [129]‘प्रकृतिप्रत्ययौ
५ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन’ इति शाब्दिकैरुद्घोषणात्। वदनस्य पुरुषधर्मत्वे तन्निषेधस्यापि पुरुषधर्मत्वं युक्तम्[129]। अन्यथा भिन्नविषयत्वेन [140]बाधकत्वं न स्यात्। तस्मात् पुरुषवाचकाख्यातश्रुत्या प्रकरणं बाधित्वा पुरुषार्थोऽयं [141]प्रतिषेधो विधीयते। [142]अस्त्येव स्मार्तः प्रतिषेध इति चेत्। तर्हि [143]तस्यैतत् श्रुतिवाक्यं मूलमस्तु। तस्मात् पुरुषार्थ इत्येकः पूर्वः पक्षः[144]। आख्यातश्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुषधर्मोऽस्तु। न ह्येतद्वाक्यं [145]स्मृतेर्मूलं, भिन्नविषयत्वात्। स्मृतिश्चोपनयन-
१० मारभ्याऽऽमरणं[146] पुरुषस्याऽनृतं प्रतिषेधति। तन्मध्यपातित्वात् क्रतावपि स्मार्तो निषेधः प्राप्त एव। [147]एत उभयार्थोऽप्ययं[147] प्रतिषेधो न विधीयते किं त्वनूद्यत इति द्वितीयः पूर्वः पक्षः। आख्यातेन भावनाऽभिधीयते। कर्ता तु तदविनाभूतोऽर्थात्[148] प्रतीयते। [149]अतः श्रुत्यभावात् केवलेन प्रकरणेन प्रजायादिवदारादुपकारकः क्रतावेव निविशते। न च तत्रापि विधीयते, किं तु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वादनूद्यते[150] एवेति तृतीयः पूर्वपक्षः। ‘सत्यमेव वदेन्नानृतम्’ इति योऽयं
१५ स्मार्तनियमरूपः पुरुषार्थः संयोगस्तस्मादन्यः क्रत्वर्थः संयोगः। अतोऽप्राप्तत्वाद्विधीयते। एतद्विषयनियमे क्रतोरेव वैगुण्यं न तु पुरुषस्य प्रत्यवायः। अतोऽत्र क्रतुगामि प्रायश्चित्तम्। पुरुषार्थनियमातिक्रमे तु [151]पुरुषस्यैव प्रत्यवायो न तु क्रतोर्वैगुण्यम्। तत्र स्मार्तप्रायश्चित्तमिति विशेषः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥

---

२० १२५. हा–वद। १२६. आ,हा–पुंधर्मत्वात्; क–पुंधर्मतया। १२७. हा–‘आख्यातेन’ नास्ति। १२८. अ,इ,उ,जो,ना,पा,हा– आख्यातवाच्यत्वे। १२९–१२९. आ,क–‘प्रकृतिप्रत्ययौ...युक्तम्’ नास्ति। १४०. अ,इ,उ,जो,ना,पा,हा– बाधकं। १४१. आ,क– निषेधः। १४२. अ,इ,उ,जो,ना,पा,हा–अस्त्येव। १४३. अ,इ,उ,जो,ना,पा,हा– तस्यैव। १४४. आ,क–‘पक्षः’ इत्यस्यानन्तरं– ‘आख्यातभिन्नविषयत्वेन बाधकत्वं न स्यात्’। १४५. अ,इ,उ,क,जो,पा,हा–श्रुतेर्मूलं। १४६. इ,हो१–°मरणपर्यन्तं। १४७–१४७
२५ आ,क– तदुभय°। १४८. हो१ ‘अर्थात्’ नास्ति। १४९. इ– अथ। १५०. इ– °दनूद्यतो। १५१. क–तत्पुरुषस्यैव।

य एव देवयानः पन्थास्तꣳ समारोहत्येतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्या(२)मेवैभ्यो हव्यं वहत्येतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते

यः । एव । देवयान इति देव-यानः । पन्थाः । तम् । समारोहतीति सम् आरोहति । एतौ । वै । देवानाम् । हरी इति । यत् । दर्शपूर्णमासाविति दर्श पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । यौ । एव । देवानाम् । हरी इति । ताभ्याम् (२) । एव । एभ्यः । हव्यम् । वहति । एतत् । वै । देवानाम् । आस्यम् । यत् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । ५

लक्षणेऽनोः कर्मप्रवचनीयत्वम् (पा १ ४ ९०) । "वृत्तिसर्गतायनेषु क्रमः" (पा १ ३ ३८) इति वृत्तावात्मनेपदम् । १०

देवयान इति ॥ देवा येन यान्ति स देवप्रयातो मार्गो देवयानः । देवैः सदा मुक्तमार्ग एवेति ॥

देवा येन प्राप्यन्ते देवप्राप्तिहेतुत्वात् हरी अश्वौ हविषां वाहनस्थानीयत्वात् ॥

आस्यमिति ॥ अभ्यवहर्तव्याधारत्वात् । साक्षात् अव्यवधानेन देवानाम् आस्ये हुतं भवति ॥ १५

हविर्धानी ॥ सोमस्य हविराधारदर्शपूर्णमासवत्त्वात् दर्शपूर्णमासयाजी हविर्धानी । किं च — यदयं सायंप्रातः अग्निहोत्रं जुहोति दर्शपूर्णमासौ एव अहरहः यजते, तस्मादयं

एव इति ॥ अथ [12]स्वर्गमार्गत्वेन प्रशंसति– 'एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहति' इति ॥ देवा यान्ति गच्छन्ति [13]यस्मिन् मार्गे सोऽयं देवयानः ॥ १०

एताविति ॥ अथाश्वरूपेण प्रशंसति– 'एतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्यामेवैभ्यो हव्यं वहति' इति ॥ एभ्यः अग्न्यादिदेवेभ्यः ताभ्याम् एव दर्शपूर्णमासाभ्यां यजमानः पुरोडाशं वहति ॥

एतदिति ॥ अथ देवमुखत्वेन प्रशंसति– 'एतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोति' इति ॥ [14]साक्षात् व्यवधानमन्तरेण एव, यथा ब्राह्मणाय दत्तमन्नं पात्रहस्तव्यवधानेन मुखं [15]प्रविशति, तद्वदित्यर्थः [15] ॥ १५

४-४ तउ– 'किं च' नास्ति ।

१२. अ इ उ ओ पा हा– स्वर्गत्वेन, ऊ ए हो१– स्वर्गलोकमार्गत्वेन । १३ आ,क ड– यस्मिन् ।
१४ ए– साक्षादेव । १५–१५ हो१– प्रतिदिशति तद्वन्न भवतीत्यर्थः ।

ऽङ्गापरूंष्येव संवत्सरस्य प्रति दधात्येते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनु पश्यत्ये(१)षा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमत एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते

५ अङ्गापरूंषीत्यङ्गा - परूंषि। एव। संवत्सरस्येति सं - वत्सरस्य। प्रतीति। दधाति। एते इति। वै। संवत्सरस्येति सं - वत्सरस्य। चक्षुषी इति। यत्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ। य। एवम्। विद्वान्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ। यजते। ताभ्याम्। एव। सुवर्गमिति सुव - गम्। लोकम्। अन्विति। पश्यति (१)। एषा। वै। देवानाम्। विक्रान्तिरिति वि - क्रान्तिः। यत्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ। य। एवम्। विद्वान्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ।
१० यजते। देवानाम्। एव। विक्रान्तिमिति वि - क्रान्तिम्। अनु। वीति। क्रमते। एषः। वै। देवयान इति देव - यानः। पन्थाः। यत्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ। य। एवम्। विद्वान्। दर्शपूर्णमासाविति दर्श - पूर्णमासौ। यजते।

[v]अङ्गापरूंषि अङ्गानि च परूंषि पर्वाणि च संवत्सरस्थितिहेतुत्वात्। "परादिश्छन्दसि" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। प्रतिधानम् [v]अविचलितस्थापनम् ॥

१५ संवत्सरनिरूपणाथ सर्वेऽर्थाः। संवत्सरात्मन चक्षुःस्थानीयाख्या साक्षाद्व्यवधानेन स्वर्गम् अनुक्रमेण [v]पश्यति स्वर्गोऽस्य प्रकाशितो भवति।

[v]विक्रान्ति विशिष्ट क्रमणम्। आभ्यां देवा हि विक्रमवन्तो वीरा भवन्ति धारकत्वात् तेषाम्। अनु वि क्रमते इति। यत्रयत्र देवा विक्रमन्ते तत्रतत्रायमप्रतिबन्धेन [v]विक्रमते।

संवत्सरस्य प्रति दधाति'। यथा मनुष्यस्य हस्तपादादीन्यङ्गानि मणिबन्धकूर्परकक्षादिसन्धिरूपाणि परूंषि
२० पर्वाणि तथा 'संवत्सरस्य द्वादश दर्शा अङ्गानि द्वादश पौर्णमास्यः परूंषि, तद्विदित्वा "अनुष्ठाने तदुभयं 'प्रति 'दधाति 'सम्यगनुष्ठापयति ॥

एत इति ॥ अथ चक्षुष्ट्वेन प्रशंसति– 'एते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनु पश्यति' इति ॥

एषेति ॥ अथ "पराक्रमरूपेण प्रशंसति– 'एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं
२५ विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमते' इति ॥ 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति शाखान्तरे श्रुतत्वात् पुरुषार्थहेतुत्वमप्यस्तीति "पराक्रमरूपत्वम् ॥

३ तै१– °स्थानम्।

८–८ को ना – अनुष्ठानेन तदुभये, अ इ उ ट पा हा हो१ – अनुष्ठाने तदुभये। ९. ग– सम्यगनुष्ठापयति। १०. आ क हा– इदं परा°, अ इ उ पा– इदं परा°, को ना– इद परा°। ११. अ.
३० इ उ को ता पा हा–पराक्रमहेतुत्व°।

दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यम् ]

देवा वा अहः(३) यज्ञियं नाविन्दन् ते दर्शपूर्णमासावपुनन् तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात्

देवाः । वै । अहः (३) । यज्ञियम् । न । अविन्दन् । ते । दर्शपूर्णमासाविति दर्श - पूर्णमासौ । अपुनन् । तौ । वै । एतौ । पूतौ । मेध्यौ । यत् । दर्शपूर्णमासाविति दर्श - पूर्णमासौ । यः । ५ एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श - पूर्णमासौ । यजते । पूतौ । एव । एनौ । मेध्यौ । यजते । न । अमावास्यायामित्यमा - वास्यायाम् । च । पौर्णमास्यामिति पौर्ण - मास्याम् । च । स्त्रियम् । उपेति । इयात् । यत् । उपेयादित्युप - इयात् । निरिन्द्रिय इति निः– इन्द्रियः । स्यात् ।

देवा वा इत्यादि ॥ [5]यज्ञार्हं [5]यज्ञियम् [5]। " यज्ञर्त्विग्भ्या घखञौ " (पा ५·१·७१)। दर्शपूर्णमासाविति । कालवचनाविमाविदानीम् । य एवमिति । एवं वेदितुरेव एतौ [6]पूतौ भवत.॥ १०

[30]भवति ॥ [31]स्वल्पेऽपि [32]कर्मण्यधिकधर्मसंपादनवेदनेन फलाधिक्यप्राप्तिः पूर्वकाण्डे– " प्रजापतिर्यज्ञान-सृजत " (तैसं १·६·९) इत्यनुवाके प्रपञ्चिता ॥

देवा इति ॥ अथ दर्शपूर्णमासकर्मणोस्तिथिविषयविधिमर्थवादेनोन्नयति– 'देवा वा अहर्यज्ञियं नाविन्दन् ते दर्शपूर्णमासावपुनन् तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते ' इति ॥ एतौ दर्शपूर्णमासौ, यज्ञावर्हतीति [2]यज्ञियं, तादृशमेकमपि [3]अहः १५ [1]देवाः [33–33]न [4]अविन्दन्[33] न लेभिरे । ततो विचार्य [6]दर्शपूर्णमासौ अमावास्यां पौर्णमासीं च तिथिद्वयम् [7]अपुनन् शोधितवन्तः [34]यज्ञियं निश्चितवन्त इत्यर्थः । यस्मिन् दिने सूर्य एव दृश्यते चन्द्रमास्तु [35]लेशतोऽपि न दृश्यते सोऽयं दर्शः । अमावास्या च तादृशी । तस्यां तिथौ सूर्येण सहैव वसतश्चन्द्रमसो द्रष्टुमशक्यत्वात् । अतः सा तिथिः [36]सूर्यमात्रदर्शनात् दर्शनामाङ्कितस्य कर्मणो योग्या[36] । यस्यां तिथौ चन्द्रमण्डलं संपूर्णं दृश्यते सा पौर्णमासी । सा चन्द्रमसः पूर्तेः पूर्णनामाङ्कितस्य कर्मणो योग्या । प्रतिपदादिषु २० चतुर्दश्यन्तासु तिथिषु चन्द्रमा लेशतो दृश्यते न [37]तु सपूर्णः[38] नाप्यत्यन्तमदृष्टः । अतस्तयोः कर्मणोर्योग्या न भवन्ति । तस्मात् [8]तौ एव [9]एतौ उक्तौ तिथिविशेषौ देवैरुक्तरीत्या शोधितौ सन्तौ यज्ञयोग्यौ सपन्नौ । अत्र दर्शपूर्णमासशब्दस्तिथिपरो न [12]तु कर्मपरः । [13]यः तु [14]एवं तिथ्योः शुद्धिं [15]विद्वान् कर्मद्वयं कुरुते सोऽयं शोधितौ यज्ञयोग्यौ तिथिविशेषावेव प्राप्य कृतवान् भवति । तस्मात् तयोस्तिथ्योः कुर्यादिति तात्पर्यार्थः ॥ २५

नेति ॥ प्रसङ्गात् पुरुषार्थं कंचिन्नियमं विधत्ते– 'नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात् ' इति ॥

५–५. मै४– यज्ञिय यज्ञार्हम् । ६. वं३– पूर्वेण ।

३०. अ,इ,उ,जो,ना,पा,हा – ' भवति ' इत्यस्यानन्तरं ' बर्हिष्यं ' । ३१. हो१ – सत्त्वेऽपि । ३२. अ इ,उ,जो,ना,पा,हा – °संपादने वेदनेन । ३३–३३. आ– ' न अविन्दन् ' नास्ति । ३४ आ,क– ३० यज्ञियत्वं । ३५. आ,क– ' लेशतोऽपि ' नास्ति । ३६–३६. ङ– सूर्यनामाङ्कितस्य कर्मणो योग्यता; हो१– सूर्यदर्शनामाङ्कितस्य कर्मणः योग्यः; मं– सूर्यमाने दर्शनामाङ्कितस्य कर्मणः योग्या । ३७. आ, क– पूर्णः । ३८. आ,क– ' तु ' नास्ति ।

साक्षादेव देवानामास्ये जुहोत्येष वै हविर्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनां सुतो य एवं विद्वान् दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति

साक्षादिति स अक्षात्। एव। देवानाम्। आस्ये। जुहोति। एषः। वै। हविर्धानीति
५ हवि - धानी। यः। दर्शपूर्णमासयाजीति दर्शपूर्णमास याजी। सायंप्रातरिति सायं प्रातः।
अग्निहोत्रमित्यग्नि-होत्रम्। जुहोति। यजते। दर्शपूर्णमासाविति दर्श पूर्णमासौ।
अहरहरित्यहः - अहः। हविर्धानिनामिति हवि - धानिनाम्। सुतः। यः। एवम्। विद्वान्।
दर्शपूर्णमासाविति दर्श-पूर्णमासौ। यजते। हविर्धानीति हवि - धानी। अस्मि। इति।
सर्वम्। एव। अस्य। बर्हिष्यम्। दत्तम्। भवति।

१० [१]हविर्धानिनां [२]सुतः अपि हविर्धानीमिः सुत्वानैः अनुज्ञातः। हविर्धानित्वं पर्वणि पर्वणि अनुत्वानत्वमस्यानुमन्यते। पर्वणि सुन्वान अहरहर्दर्शपूर्णमासयाजी भवति॥

य एवमित्यादि॥ [३]एवं [४]हविर्धानी [५]अस्मि [६]इति [७]विद्वान् [८]यः एतौ [९]यजते [१०]अस्य सम्बन्धि यत् [११]दत्तं यागात् कश्चिदस्य धनव्ययः स सर्वो बर्हिषि यज्ञे विनियुक्तो [१२]भवति। सहविर्धानयागात् सर्वो व्ययो यज्ञे व्ययो भवतीति॥

१५ एष इति॥ अथ सोमयाजित्वसंपादनेन [१३]स्तौति- 'एष वै हविर्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनां सुतो य एवं विद्वान् दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति' इति॥ हवींषि सोमग्रहरूपाणि [१४]धीयन्ते आसाद्यन्ते यस्मिन् मण्डपे तदिदं हविर्धानं, तदस्यास्तीति [१]हविर्धानी सोमयाजी। दर्शपूर्णमासयाजिनः सोमयाजित्वं कथमिति [१५]तदुच्यते- आधानानन्तरमेव [१६]प्रवृत्तः सन् [२]अग्निहोत्रं तत्प्रतिदिनं [३]सायंप्रातः [४]अनुतिष्ठति,
२० पर्वणि पर्वणि च [५]दर्शपूर्णमासौ [६]यजते। तदुभयानुष्ठानेन [७]हविर्धानिनां सोमदेवानां प्रतिदिनं सोमोऽभिषुतो भवति। [८]सोमाभिषवेण या प्रीतिः सा देवानामत्र संपद्यते। [१७]अग्निहोत्रदर्शपूर्णमासप्रवृत्त्या तदनन्तरभाविनि सोमयागेऽपि प्रवर्तिष्यत [१८]इत्येष तैर्निश्चेतुं शक्यत्वात्॥ तत्प्रवृत्तिक्रमश्च [१९]सूत्रकारेण दर्शितः - "अपरेषाम् आधानाधाय दर्शनाद्यनिज्य संवत्सरमग्निहोत्रं [२०]हुत्वा दर्शपूर्णमासावारभते। आभ्यां संवत्सरमिष्ट्वा सोमेन [२१]यजते वा यजते। तत ऊर्ध्वमन्यानि कर्माणि [२२]कुरुते" ( आपश्रौ ५.२३.२ ) इति। [९]यः यजमानः देवानां भविष्यत्सोमयागविषयां प्रीतिं [१०]विद्वान् अहं [११]हविर्धानी सोमयाजी भवामि [१२]इति बुद्ध्या [१३]दर्शपूर्णमासौ [१४]यजते, [२३]अस्य यजमानस्य बर्हिषि सोमयागे धनस्य [२४]दत्तम्हूयते तत् [१५]सर्वं [२५]बर्हिष्यं [१६]दत्तम् [२६]एव

१६. क ट ग् हो१- प्रमाणति। १७ ग् हो१- निधीयन्ते। १८ आ- उच्यते। १९ अ इ उ जो पा- प्रयुक्तं वृत्तं, हा- प्रयुक्तो वृत्तो। २० आ क- ०भिषवे। २१ क- ०मग्निप्रवृत्तौ। २२. आ क- इत्येवं। २३. ट हो१- सूत्रकृता। २४ अ इ उ जो ना पा हा- 'हुत्वा' नास्ति। २५. हो१- कुर्वे। २६. आ क- तत ऊर्ध्वमन्य। २७ ट- यदपि। २८. अ इ उ जो ना पा हा- 'दर्शपूर्ण'
३० नास्ति। २९. आ क- 'एव' नास्ति।

देवा ईज्यान्ता इति तस्मात् सदृशीनाꣳ रात्रीणाममावास्यायां च पौर्णमास्यां च देवा ईज्यन्त एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवं वेद भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितरः संवत्सरे वनस्पतयस्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा ईज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं (६) गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृव्यम् ॥(६)॥ ५

[पश्यति ताभ्यामहरदसान फलꣳ सप्त च।]

देवा। इज्यान्ते। इति। तस्मात्। सदृशीनाम्। रात्रीणाम्। अमावास्यायामित्यमा वास्यायाम्। च। पौर्णमास्यामिति पौर्ण मास्याम्। च। देवा। इज्यन्ते। एते इति। हि। देवानाम्। भागधे इति भाग धे। भागधा इति भाग धा। अस्मै। मनुष्या। भवन्ति। य। एवम्। वेद। भूतानि। क्षुधम्। अघ्नन्। सद्य। मनुष्या। अर्धमास इत्यर्ध मासे। देवा। मासि। १० पितर। संवत्सर इति सं-वत्सरे। वनस्पतय। तस्मात्। अहरहरित्यह - अह। मनुष्या। अशनम्। इच्छन्ते। अर्धमास इत्यर्ध मासे। देवा। इज्यन्ते। मासि। पितृभ्य इति पितृ भ्य। क्रियते। संवत्सर इति सं वत्सरे। वनस्पतय। फलम् (६)। गृह्णन्ति। य। एवम्। वेद। हन्ति। क्षुधम्। भ्रातृव्यम् ॥ ६ ॥ [भैष काय वपिव]

क्षुध घ्नन्ति हविर्भिर्यागप्रभवै। मासि पितर श्राद्धेन। वनस्पतय संवत्सरे फलग्रहणेन १५ तृप्ता क्षुध घ्नन्ति। तस्मात् पर्वणिपर्वणि यष्टव्या देवा इति ॥

इति द्वितीये पञ्चमे षष्ठोऽनुवाक ॥

अर्धमासस्य शुक्लपक्षस्य रात्रय एको वर्ग, कृष्णपक्षस्य रात्रय [40]अपरो वर्ग। ते अमावास्यापौर्णमास्यौ एन सोमम् अभि समनह्येताम् आभिमुख्येन सभोगाय गृहीतवत्यौ। बलात्कारेण भुज्यमान स सोमम् अतिव्यवायेन क्षयव्याधि प्राप्तवान्। एतच्च "प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर [41]आसन्" (तैस २ ३ ५) २० इत्यत्र [42]यथा व्याख्यात, [43]तद्वदत्रापि व्याख्यातव्यम्[43]। आवामुभे एव देवाना हविर्भागधारिण्यौ भवाव, [44]आवयोरधिश्रित्याग्न्यादयो देवा इज्यन्ताम् इति अनयोर्वर। एतयोर्भागधारित्व चानते। मनुष्या सर्वेऽपि भाग धारयित्वा प्रयच्छन्ति ॥

भूतानीति ॥ अथ मनुष्यादिसाम्योपन्यासेनोक्तार्थमेव पुन प्रशसति– 'भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितर सवत्सरे वनस्पतयस्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा २५ इज्यन्ते मासि पितृभ्य क्रियते सवत्सरे वनस्पतय फल गृह्णन्ति य एव वेद हन्ति क्षुध भ्रातृव्यम्' इति ॥ भूतानि मनुष्याद्या प्राणिन। वनस्पतय [45]पनसाम्राद्या। तेषा फलग्रहणमेव क्षुन्निवारणरूपा तृप्ति सूचयति। [46]एव क्षुधो हनन य [46]वेद [47]सोऽप्यत्रसमृद्ध्या क्षुद्रूप शत्रु सर्वदा हन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाक ॥ ३०

३९ आ– पर। ४० ड हो१– नियुज्यमान। ४१ आ क– 'आसन्' नास्ति। ४२ आ हा– 'यथा' नास्ति। ४३–४३ आ क– तथैव व्याख्येयम्। ४४ ड– आवदधि श्रि°। ४५ ड शृ हो१– पनसचूताद्या°। ४६ शृ–य एत क्षुधो हनन, ड–एव क्षुधो हनन। ४७ आ–°समृद्ध, ड शृ हो१–सोऽन्न°।

सोम॑स्य॒ वै राज्ञो॑ऽर्धमा॒सस्य॒ रात्र॑यः॒ पत्न॑य आस॒न् तासा॑ममावा॒स्यां॑ च पौर्ण॑मा॒सीं च॒ नोपै॑त्(४)ते ए॑नम॒भि सम॑नह्येतां॒ तं यक्ष्म॒ आर्छ॑द्राजा॒नं॑ यक्ष्म॒ आर॒दिति॒ तद्रा॑ज-यक्ष्मस्य॒ जन्म॒ यत् पापी॑या॒नभ॑व॒त् तत् पा॑पयक्ष्मस्य॒ यज्जा॒याभ्या॒मवि॑न्दत् तज्जा॒ये-न्य॑स्य॒ य ए॒वमे॒तेषां॒ यक्ष्मा॑णां॒ जन्म॒ वेद॒ नैन॑मे॒ते यक्ष्मा॑ विन्दन्ति॒ स ए॒ते ए॒व

५ न॑म॒स्यन्नु॒पाधा॑व॒त् ते अ॑ब्रूतां॒ वरं॑ वृणावहा आ॒वं दे॒वानां॑ भाग॒धे अ॑सा॒वा(५)वदधि

सोम॑स्य। वै। राज्ञः॑। अ॒र्ध॒मा॒सस्येत्य॑र्ध मा॒सस्य॑। रात्र॑यः। पत्न॑यः। आ॒स॒न्। तासा॑म्। अ॒मा॒वा॒स्या॑मित्य॑मा-वा॒स्या॑म्। च॒। पौ॒र्ण॒मा॒सीमिति॒ पौर्ण-मा॒सीम्। च॒। न। उपे॑ति॑। ऐ॒त् (४)। ते इति॑। ए॒न॒म्। अ॒भि। समिति॑। अ॒न॒ह्ये॒ता॒म्। तम्। यक्ष्म॑। आ॒र्छ॒त्। रा॒जान॑म्। यक्ष्म॑। आ॒र॒त्। इति॑। तत्। रा॒ज॒य॒क्ष्मस्येति॑ राज-य॒क्ष्मस्य॑। जन्म॑। यत्। पापी॑यान्।

१० अभ॑वत्। तत्। पा॒प॒य॒क्ष्मस्येति॑ पाप य॒क्ष्मस्य॑। यत्। जा॒याभ्या॑म्। अवि॑न्दत्। तत्। जा॒येन्य॑स्य। यः। ए॒वम्। ए॒तेषा॑म्। य॒क्ष्मा॑णाम्। जन्म॑। वेद॑। न। ए॒न॒म्। ए॒ते। यक्ष्मा॑। वि॒न्द॒न्ति॒। सः। ए॒ते इति॑। ए॒व। न॒म॒स्यन्। उपेति॑। अ॒धा॒व॒त्। ते इति॑। अ॒ब्रू॒ता॒म्। वर॑म्। वृ॒णा॒व॒है॒। आ॒व॒म्। दे॒वाना॑म्। भा॒ग॒धे इति॑ भाग धे। अ॒सा॒व॒ (५)। आ॒व॒त्। अधीति॑।

नामावास्याया चेति ॥ गतम् ॥ रात्रय इति ॥ पञ्चदश तिथय । [१]पत्नय' इति छान्दसो

१५ वर्णविकार. । अभि समनह्येतामिति । सोमेन राज्ञा अनुपेते त्यक्ते एते तिथी [२]एनम अभिभूय आभिमुख्येन वा भोक्तृत्वेन गृहीतवत्यौ । तत [३]त तथा ताभ्या भुज्यमान [४]यक्ष्म क्षयरोग [५]आर्छत् आर्तिमकरोत् ॥ राजान यक्ष्म आरदित्यादि । व्याख्यातम् । अमावास्यायामिति शेष ॥

स एते इत्यादि ॥ गतम् । भागधे इति । भागाना हविषा धार्यौ आवाम् [६]असाव । भवाव । [७-८]आवत् [८]अधि आवयोरेव उपरिष्टात्' [९]देवा' [१०]इज्यान्ता 'इति । 'पूर्वसवर्णदीर्घ

२० ऐकारादि'। तस्मादित्यादि ॥ गतम् ॥

भूतानीत्यादि ॥ सर्वाणि [११]भूतानि [१२]क्षुध बुभुक्षा घ्नन्ति तदुपघातहेतुभिरुपशमयन्ति । [१३]सद्य. समानेऽह्नि एकस्मिन्नहनि सकृदुपघातहेतुशमन कृत्वा क्षुध हन्ति । [१४]अर्धमासे [१५]देवा

सोमस्येति ॥ पूर्वोक्तयोस्तिथ्योर्वैशिष्ट्यममावास्यायित्वा प्रपञ्चयति– 'सोमस्य वै राज्ञोऽर्धमासस्य रात्रय पत्नय आसन् तासाममावास्या च पौर्णमासीं च नोपैत् ते एनमभि समनह्येतां तं यक्ष्म आर्छद्राजानं

२५ यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्यामविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति ॥ एते एव नमस्यन्नुपाधावत् ते अब्रूतां वरं वृणा-वहा आवं देवानां भागधे असावाऽऽवदधि देवा इज्यान्ता इति तस्मात् सदर्शीनाम रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्त एते हि देवानां भागधे भागधा वसौ मनुष्या भवन्ति य एवं वेद' इति ॥

७ तै१– भागध्य(। ८–८. मै४– आवयोरेव अधि उपरि। ९. तै१ मै४–पूर्वसवर्ण हेर्।

यत्रैव देवा अश्रयन्त तत एवैनान् प्र युङ्क्ते हिं करोति वाच एवैष योगो हिं करोति प्रजा एव तद्यजमानः सृजते त्रिः प्रथमामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्वर्सं (१) नह्यत्यप्रस्रंसाय

यत्र । एव । देवाः । अश्रयन्त । तत । एव । एनान् । प्रेति । युङ्क्ते । हिम् । करोति । वाचः । एषः । एषः । योगः । हिम् । करोति । प्रजा इति प्र जाः । एव । तत् । यजमानः । सृजते । त्रिः । प्रथमाम् । अन्विति । आह । त्रिः । उत्तमामित्युत्-तमाम् । यज्ञस्य । एव । तत् । वर्सम् (१) । नह्यति । अप्रस्रंसायेत्यप्र स्रंसाय ।

होता । हिनोति प्रीणयति वा सर्वमिति हिम् । हि गतौ, हिवि प्रीणने, मक्षणो नामेद, छान्दसी [v]रूपसिद्धिः । [v]साम [v]एव [v]अकः कृत भवति, साममक्तित्वाद्धिंकारस्य । छान्दसो लुङ्, " मन्त्रे घस° " (पा २ ४ ८०) इति च्लेर्लुक् । असकृद्विधान हिंकारस्य फलभेदप्रदर्शनार्थम् । यत्रैवेति । १० [v]यत्र स्थिता [v]देवा [v]तत [v]एव [v]एनान् देवानानीय इह [v]प्रयुङ्क्ते ॥

वाच इति ॥ वाग्योग खल्वयम् । [v]वाक् सामिधेनीलक्षणा अनेन युज्यते । प्रजा एवेति । * एतेन हिंकारस्य पशव्यत्वमाह ॥

त्रि प्रथमामित्यादि ॥ " प्र वो वाजा " (तैब्रा ३ ५ २) इत्याद्या एकादशर्चं । आद्यन्तयो पुनर्वचनेन पञ्चदश सामिधेन्य क्रियन्ते । तेन सामिधेनीनाम् आद्यन्तयो अभ्यासेन १५ [v]यज्ञस्य [v]वर्सम् आवरण [v]नह्यति बध्नाति । वृ आवरणे, औणादिक सप्रत्यय तत् यज्ञस्य अप्रस्रंसनाय भवति" * ।

तेन [v]साम [v]एव कृत भवति । [v]"पञ्चकृत्य ससकृत्यो [v]" वा साम्न आदौ "हिंकारस्य विद्यमानत्वात् । तस्य हिमितिशब्दस्य त्रिरुच्चारणमभिप्रेत्य त्रिवार विधिरनूद्य प्रशस्यते । [v]यत्र [v]एव [v]देवा [v]अश्रयन्त यत्रैव सामनि देवा सतुष्टा [v]तत [v]एव साम्न [v]एनान् देवान् [v]प्र [v]युङ्क्ते "होता हिंकुर्वन् प्रकर्षेण २० तोषयतीत्यर्थ । प्रथमोच्चारणेन साम कृत भवति । तथा द्वितीयोच्चारणेन [v]वाच [v]योग सपद्यते । सामाश्रयभूताया ऋग्रूपाया वाच सबन्ध सपद्यत इत्यर्थ । तृतीयोच्चारण यत्प्रास्ति तेन [v]यजमान [v]प्रजा [v]एव सृष्टवान् भवति ॥

त्रिरिति ॥ एकादशाना समिधेनीनाम् ऋचामाद्यन्तयोरावृत्ति विधत्ते—'त्रि प्रथमामन्वाह त्रिरुत्तमा यज्ञस्यैव तद्वर्सं नह्यत्यप्रस्रंसाय' इति ॥ "प्र वो वाजा अभिद्यव " (तैब्रा ३ ५ २) इत्येषा १५ प्रथमा । " आ जुहोत दुवस्यत " (तैब्रा ३ ५ २) इति वा, "त्व वरुण उत मित्र " (तैब्रा ३ ५ २)

३. तउ ठ– रूपविधि । ४. पर–या, तउ ल–वा । *–* [तउ ठ–'एतेन हिंकारस्य भवति' नास्ति ।] ।

१०–१०. ड होउ-पञ्चभक्तौ सप्तभक्तौ । ११ अ इ उ ओ ना पा.हा–हिंकारस्य,' नास्ति । १२ होउ–होत्रा ।

संततमन्वाह प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै राथंतरीं प्रथमामन्वाह राथंतरो वा अयं लोक इममेव लोकमभि जयति त्रिर्वि गृह्णाति त्रयं इमे लोका

संततमिति स ततम् । अन्विति । आह । प्राणानामिति प्र अनानाम् । अन्नाद्यस्येत्यन्न अद्यस्य । संतत्या इति स तत्ये । अथो इति । रक्षसाम् । अपहत्या इत्यप हत्यै । राथंतरीमिति राथं-तरीम् ।
५ प्रथमाम् । अन्विति । आह । राथंतर इति राथं-तर । वै । अयम् । लोक । इमम् । एव । लोकम् । अभीति । जयति । त्रिः । वीति । गृह्णाति । त्रयं । इमे । लोका ।

सततमिति ॥ पूर्वस्या उत्तरमर्धर्चम् उत्तरस्याश्च पूर्वं सहितं कुर्यात्। प्रथमाया च हिंकारेण मध्यमाया अर्धर्चमालभेत। न हिंकृत्येति केचित्। अविशेषात् सर्वेषां सततत्वम्। ऋचाव-तराऽनुच्छ्वास· सततत्वम्। श्रूयते–"नान्तरर्चौं व्यन्यात्" (द्र. आपश्रौ २४·११ १२-
१० १३) इति। एकेनोच्छ्वासेनोच्चार्यैव क्रियमाण प्राणानाम् अन्नाद्यस्य च अविच्छेदाय भवति। अथो अपि च रक्षसाम् अपहत्यै भवति, सामिधेनीनाम् अनुच्छ्वासेन रक्षसामनुच्छ्वासः क्रियते इति। केचिदाहुः– प्रथमोत्तमयोरेवेद सततत्वविधानमिति ॥

राथन्तरीमिति ॥ सामविशेषसबन्धेन ऋच स्तुति । रथन्तरसामसबन्धिनी प्रथमा ऋक्, प्राथम्यात् द्वयोरुदात्तस्वरत्वाच्च। उत्सादिभ्यादञ् (पा ४ १ ८६)। अयं लोक भूलोक·
१५ राथन्तर., स एव हेतुः ॥

इति वा द्वयोरन्यतरोत्तमा। तत् तेन प्रथमोत्तमयो त्रि अभ्यासेन यज्ञस्य वर्त्म अन्तभाग बध्नाति बध्नाति। यथा लोके वस्त्रेण कम्बलेन वा व्रीहीन् वोढुकामोऽन्तद्वयं बध्नाति तद्वत्। तच्च बन्धनं स्रसनराहित्याय भवति॥

संततमिति ॥ पूर्वस्यामृच्युत्तरार्धस्योत्तरस्यामृचि पूर्वार्धस्य च परस्परमविश्लेषं विधत्ते–
२० 'सततमन्वाह प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै' इति। तदेतत्संततोच्चारणं यजमानस्य प्राणाना सतत्यै भोज्यवस्तुसंतत्यै च सपद्यते। किं च राक्षसा. श्वासनिरोधेनापहता भवन्ति॥

राथन्तरीमिति॥ यस्या प्रथमाया आवृत्तिर्विहिता ता स्वरूपेण विधत्ते– 'राथंतरीं प्रथमामन्वाह राथंतरो वा अयं लोक इममेव लोकमभि जयति' इति॥ कस्मिंश्चित् सामशाखाविशेषे "प्र वो याना" इत्येतस्यामृचि रथंतरसाम्नो गीतत्वादियं राथंतरी। रथंतरसामयुक्तेन कर्मणा संपादयितुं
२५ शक्यत्वाद्भूलोकस्य राथंतरत्वम्॥

त्रिरिति॥ यदुक्तं सूत्रकारेण– "तृतीया सामिधेनीं त्रिर्विगृह्णाति" (आपश्रौ २४ ११·९) इति, तदेतद्विधत्ते– 'त्रिर्वि गृह्णाति त्रय इमे लोका इमानेव लोकानभि जयति' इति॥ तृतीयस्या.

५. मै८-प्रथमाया.। ६. मै८-मध्यमायाम्; तं३ ए-मध्यमया। ७. हो-'अभ्' नास्ति।

१३. श्रा- अन्तभागान्। १४ आ क- परस्पराविश्लेषं। १५. ङ- प्राणा। १६. क ङ
२० गृ,हो१-भोग्यवस्तु। १७. गृं- भवति। १८-१८. गृं- रथन्तरसाम।

प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमेवाव रुन्द्धे प्र वो वाजा इत्यन्वाह तस्मात् प्राचीन२ रेतो धीयतेऽग्न आ याहि वीतय इत्याह तस्मात् प्रतीचीः प्रजा जायन्ते प्र वो वाजा(३)इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची

प्रेति । वः । वाजाः । इति । अन्विति । आह । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । ५ रुन्द्धे । प्रेति । वः । वाजाः । इति । अन्विति । आह । तस्मात् । प्राचीनम् । रेतः । धीयते । अग्ने । एति । याहि । वीतये । इति । आह । तस्मात् । प्रतीचीः । प्रजा इति प्र जाः । जायन्ते । प्रेति । वः । वाजाः (३) । इति । अन्विति । आह । मासाः । वै । वाजाः । अर्धमासा इत्यर्ध मासाः । अभिद्यव इत्यभि-द्यवः । देवाः । हविष्मन्तः । गौः । घृताची ।

प्राचीनमिति । उपसर्गविशेषसम्बन्धेन स्तुतिः । प्रगतं प्राचीनम् । "* विभाषाऽञ्चेर-१० दिक्स्त्रियाम्" (पा ५ ४ ८) इति खः ॥

'अग्न आ याहि' इति द्वितीया ऋक् ॥ आयाहि इति वचनात् प्राचीनं निहितं रेतः †प्रतीचीनं* प्रजात्वेन परिणतं निर्गच्छति । प्रतिकूला प्रतीच्यः । "वा छन्दसि" (६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । "चौ" (पा ६ ३ १३८) इति पूर्वपदस्य दीर्घत्वम्, अन्तोदात्तत्वं च (पा ६ १ २२२) ॥

१५ मासा वा इत्यादि ॥ मन्त्रपदानां सर्वेषां स्तुतिः । हे ऋत्विग्यजमाना वाजादयो युष्माकम् अभिमतसिद्धये भवन्तु । वाजाः मासाः अन्नहेतवः, गतिमन्तो वा सर्वक्रियाणामाधाराः । अर्धमासाः १ अभिद्यवः दिवसैरभिगतदीप्तित्वात् १ साभिप्रायेण क्रियाप्रवर्तकाः । हविष्मन्तः

प्रेति ॥ अस्मिन् मन्त्रे वाजशब्दोच्चारणं प्रशंसति– 'प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमेवाव रुन्द्धे' इति ॥

२० प्रेति ॥ तथाऽत्र प्रशब्दोच्चारणं प्रशंसति– 'प्र वो वाजा इत्यन्वाह तस्मात् प्राचीन२ रेतो धीयते' इति ॥ यस्मात् प्रशब्द उच्चारितः तस्मात् प्राचीनं प्रमुखे रेतोवर्तिनि योषिच्छरीरेऽग्रतः गच्छतीति प्राचीनं, तथाविधं रेतः धीयते गर्भाशये स्थाप्यते ॥

अग्न इति ॥ एतस्य मन्त्रस्य चरमपादेन १सहोत्तरस्य मन्त्रस्य प्रथमपादोच्चारणं प्रशंसति– 'अग्न आ याहि वीतय इत्याह तस्मात् प्रतीचीः प्रजा जायन्ते' इति ॥ यस्मात् 'आ याहि' इत्युक्तं २५ तस्मात् प्रतीचीः प्रत्यङ्मुखाः सत्यः प्रजाः उत्पद्यन्ते ॥

प्रेति ॥ १ मन्त्रगतानां पदानामर्थान् १ दर्शयति– '[illegible] वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानः सुम्नयुः' इति ॥ १यन्ति

*-* [ तै३– 'विभाषाञ्चेरदिक् रेतः प्रतीचीनम्' इति नास्ति । ] ।
†[ सम्भावितोऽयं पाठः, मुद्रितपुस्तके लिखितपुस्तकेषु– 'प्राचीनम्' इति । ] । १-१ तै३ लं हो-
३० 'अभिद्यवः दिवसैः' नास्ति ।

२३ ह ११. सहोत्तर° । २४-२४ ह– मन्त्रगतान् पदार्थान् २५. अ १ उ. जो पा हा–मर्जात ।

**य॒ज्ञो दे॒वाञ्जि॑गाति॒ यज॑मानः सु॒म्न॒युरि॒दम॑सी॒दम॒सीत्ये॒व य॒ज्ञस्य॑ प्रि॒यं धामाव॑ रुन्द्धे॒ यं का॒मये॑त॒ सर्व॒मायु॑रिया॒दिति॒ प्र वो॒ वाजा॒ इति॒ तस्या॒नूच्याग्न॒ आ या॑हि॒ वी॒तय॒ इति॒ संत॑त॒मुत्त॑रमर्ध॒र्चमा ल॑भेत( ४ ) प्रा॒णेनै॒वास्या॑पा॒नं दा॑धार॒ सर्व॒मायु॑रेति॒**

य॒ज्ञ । दे॒वान् । जि॒गा॒ति॒ । यज॑मान । सु॒म्न॒युरिति॑ सु॒म्न यु । इ॒दम् । अ॒सि॒ । इ॒दम् । अ॒सि॒ । इति॑ । ए॒व । य॒ज्ञस्य॑ । प्रि॒यम् । धाम॑ । अवेति॑ । रु॒न्द्धे॒ । यम् । का॒मये॑त । सर्व॑म् । आयु॑ । इ॒यात् । इति॑ । ५
प्रेति॑ । व॒ । वाजा॑ । इति॑ । तस्य॑ । अ॒नूच्येत्य॑नु उच्य॑ । अग्ने॑ । एति॑ । या॒हि॒ । वी॒तये॑ । इति॑ ।
संत॑त॒मिति॒ स त॒तम् । उत्त॑र॒मित्यु॒त् त॒रम् । अ॒र्ध॒र्चमित्य॑र्ध ऋ॒चम् । एति॑ । ल॒भे॒त (४) ।
प्रा॒णेनेति॑ प्र अ॒नेन॑ । ए॒व । अ॒स्य॒ । अ॒पा॒नमित्य॑प अ॒नम् । दा॒धा॒र । सर्व॑म् । आयु॑ । ए॒ति॒ ।

देवा क्रियया आराध्या । घृताची घृतमञ्चतीति । घृतहेतु गौ हवि प्रदानेन क्रिया-प्रवृत्तिहेतु । पूर्ववत् "चा" (पा ६ ३ १३८) इति दीर्घत्वम्, अन्तोदात्तत्व च (पा ६ १ २२२) । स यज्ञ देवान् जिगाति गच्छति तृप्तिहेतुत्वेन । गाङ् गतौ, व्यत्ययेन परस्मैपद, शप श्लु, अभ्यासस्य चेत्त्वम् (पा ७ ४ ७९) । सुम्नयु सुखमात्मन इच्छतीति सुम्नयु यजमान फलभाक् । एवमेते यज्ञस्याधारा । एभिस्ताद्रूप्येण इदम् असि इदम् असि इति अग्नि स्तुत्वा यज्ञस्य प्रिय धाम स्थान वाजादिकम् अव रुन्द्धे ॥ १०

यम् इत्यादि ॥ एतेन प्रथमद्वितीययो सतानस्य विशेषणात् आयुर्हेतुत्वेन स्तुति क्रियते । 'प्र वो वाजा ' इत्येताम् अनूच्य अस्या उत्तरम् अर्धर्चम् 'अग्न आ याहि वीतये' १५

(द्र भापा २५२) गच्छन्ति क्रमेण प्रवर्तन्त इति चैत्रादिमासा वाजा । इदमेव ब्राह्मणवाक्य हृदि निधाय मन्त्रार्थ पूर्व दर्शित ॥

इदमिति ॥ पदार्थानभिधाय मन्त्रतात्पर्यार्थमाह –'इदमसीदमसीत्येव यज्ञस्य प्रिय धामाव रुन्द्धे' इति ॥ सामिधेनीभि समिध्यमान हेऽग्ने, त्वम् इद मासाना स्वरूपम् असि, अर्धमासाना स्वरूपम् असि देवाना स्वरूपमसि इति एव तात्पर्यार्थ । अनेन तात्पर्येण यज्ञस्य प्रिय धाम आहुतिस्थानम् इध्यमानाग्निस्वरूप सपादितवान् भवति ॥ २०

यमिति ॥ यदुक्त "सततमन्वाह "प्राणानामन्नाद्यस्य सतत्यै" इति, तदेवेदानीं काम्यत्वेनापि विधत्ते– 'य कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्यानूच्याग्न आ याहि वीतय इति सततमुत्तर-मर्धर्चमा लभेत प्राणेनैवास्यापान दाधार सर्वमायुरेति' इति ॥ य यजमानमुद्दिश्य होता कामयेत । किमिति? अय यजमान अपमृत्युरहित सर्वम् आयु प्राप्नुयात् इति । तस्य यजमानस्याऽऽयुष्प्राप्तये २५

१० मै– यज्ञम् । ११–११ मै४– प्रयोगहेतुत्वेन, त३ ल–प्रायोहेतुत्वेन ।

२६ अ इ उ ओ ना पा हा– 'प्राणानामन्नाद्यस्य' नास्ति । २७ आ द– मृत्युरहित ।

यो वा अरत्निꣳ सामिधेनीनां वेदारत्नावेव भ्रातृव्यं कुरुतेऽर्धर्चौ सं दधात्येष वा अरत्निः सामिधेनीनां य एवं वेदारत्नावेव भ्रातृव्यं कुरुते

---

यः । वै । अरत्निम् । सामिधेनीनामिति साम् इधेनीनाम् । वेद । अरत्नौ । एव । भ्रातृव्यम् । कुरुते । अर्धर्चाविर्त्यर्ध ऋचौ । समिति । दधाति । एषः । वै । अरत्निः । ५ सामिधेनीनामिति साम् इधेनीनाम् । यः । एवम् । वेद । अरत्नौ । एव । भ्रातृव्यम् । कुरुते ।

---

(तैब्रा ३ ५ २) इत्यनया [1]सततम् [2]आलभेत । ऋचोऽर्धमर्धर्चम् । "ऋक्पू °" (पा ५ ४ ७४) इति समासान्त । प्राणेनैवेति । [3]द्वयो अर्धर्चयो प्राणापानस्थानीयत्वात् । [4]दाधार इति छान्दसो लिट् , तुजादित्वादभ्यासस्य दीर्घत्वम् (पा ६ १ ७ ) ॥

'यो वा' इत्यादिना सतानस्य [5]फलान्तर दर्शयति । समिधामाधानमन्त्रा सामिधेन्य । १० "समिधामाधाने" ( पा ४ ३ १२० वा १० ) इति षेण्यण् प्रत्यय, "षिद्गौरादिभ्यश्च" ( पा ४ १ ४१ ) इति ङीष् , "यस्य°" ( पा ६ ४ १४८ ) इति लोपे "हलस्तद्धितस्य" (पा ६ ४ १५०) इति यलोप । तासाम् [6]अरत्नि [7]अरमणम् । नञ्पूर्वादमेर्निप्रत्ययेऽन्य त्निकार । यद्वा– अरणम् अरत्नि सामिधेनीना गमनविशेष । अर्तेरत्निप्रत्यय । अथवा द्वौ प्रादेशौ सहितावरत्नि , प्रदेशस्थानीययोरर्धर्चयो सधानम् । तावेनारत्निरित्युपचर्यते ।

---

१५ प्रथमा सामिधेनीं सर्वाम् [1]अनूच्य विच्छेदमकृत्वोत्तरमन्त्रस्य प्रथमम् [2]अर्धर्चम् उपक्रमेत । तेन सातत्येन [3]अस्य यजमानस्य प्राणवायुना बहिर्निर्गच्छता सह [4]एव अपानवायु पुनरप्यन्तरा गच्छन्त धारितवान् भवति । तेन च धारणेन [5]सर्वम् आयु प्राप्नोति ॥

य इति ॥ तदेव सातत्य पुर प्रकारान्तरेण प्रशसति– 'यो वा अरत्नि' सामिधेनीना वेदारत्नावेव भ्रातृव्य कुरुतेऽर्धर्चौ स दधात्येष वा अरत्नि सामिधेनीना य एव वेदारत्नावेव भ्रातृव्य २० कुरुत ' इति ॥ कूर्परमारभ्य प्रसारितकनिष्ठाङ्गुलिपर्यन्तो हस्तभागोऽरत्नि । न च तस्यारत्नेर्मध्ये विच्छेदोऽस्ति तद्वदुभयो सामिधेन्योर्मध्ये सातत्यमरत्नित्वेनोपचर्यते । [1]य होता [2]तदिद [3]सातत्य विदित्वाऽनुतिष्ठति स होता [4]भ्रातृव्य यजमानस्य [5]अरत्नौ स्थापयति । चतुररत्निपरिमितस्य पुरुषस्या रत्निमात्रपरिमितो यत्नो यथा नीचो भवति तद्वदमु कुरुत इत्यर्थ । [6]य [7]एव [8]वेद इति पुनरभिधान प्रतिज्ञातस्य निगमनार्थम् ॥

---

२५ १२ तर लहो– द्वयो अस्य । १३. मैः– फलान्तराणि । १४ तर ए आर्ति । १५ त्रि पर हो– अरमगम् अविरमण , ए– अरमगम् अविरमगम् ।

---

२८ हो१– तदिदम् । २९ हा हो१– सातत्यम् ।

**ऋषेऋषेर्वा एता निर्मिता यत् सामिधेन्यस्ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वि तिष्ठेरन्नर्धर्चा स दधाति**

ऋषेर्ऋषेरित्यृषे — ऋषे । रै । एता । निर्मिता इति नि — मिता । यत् । सामिधे र्य इति साम इधे र्य । ता । यत् । असयुक्ता इत्यसं युक्ता । स्यु । प्रजयेति ■ जया । पशुभिरिति पशु भि । यजमानस्य । वीति । तिष्ठेरन् । अर्धर्चाविति र्यर्ध ऋचौ । समिति । दधाति । ५

प्रमाणलक्षणाद्वा [v]सामिधेनानाम् उच्छ्वासप्रमाण [v]य [v]वेद इति । अरत्नाविति । सधानस्यारत्नि-शब्देनाभिधानस्येद[१६] फलम् । अरमणे अरमणशीलत्वे प्रादेशद्वयपरिमितत्वे वा शत्रून् [v]वृश्त । क पुन स आसाम् [१७]अरत्निरित्याह—अर्धर्चाविति । यजमान०यतिरिक्तवेदित्रर्थे 'य एव वेद' इत्यादे पुनर्वचनम् ।

ऋषीणा सर्वाभ्य आविर्भूता [१८v]एता । [v]ता यदि परस्परम् [v]असयुक्ता [v]स्यु तदा १० या एता ऋषिभ्यो गोत्रकृद्भ्य [१९]भृग्वादिभ्य उपन्ना प्रजा पशवश्च, तैरपि सर्वैरेता [v]नि [v]तिष्ठेरन् [२०]विश्लिष्टा स्यु, [v]यजमानस्य प्रजापशुसिद्धिहेतवो न स्युरित्यर्थ । तस्मादर्धर्चसधानेन

ऋषेर्ऋषेरिति ॥ तदेव सातत्य [३०]विपक्षबाधकोपन्यासपुर सर [३१]पुन प्रशसति– 'ऋषेर्ऋषेर्वा एता निर्मिता यत् सामिधेन्यस्ता यदसयुक्ता स्यु प्रजया पशुभिर्यजमानस्य वि तिष्ठेरन्नर्धर्चौ स दधाति स युनक्त्येवैनास्ता अस्मै सयुक्ता अवरुद्धा सर्वानाशिष दुहे' इति ॥ [३२]ऋषिरतीन्द्रियार्थस्य द्रष्टा । तादृश १५ ऋषिरेकैका सामिधेनीमीश्वरानुग्रहेण दृष्ट्वा शिष्यप्रशिष्यपरम्परा निर्मितवान् ॥ अत एव स्मर्यते– "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षय । लेभिरे तपसा पूर्वमनुज्ञाता स्वयभुवा" ( मभा १२ २०३ १७ ) इति ॥ तथा सति भिन्नेभ्य ऋषिभ्य प्रवर्तिता [v]ता सामिधेन्य यदि [v]असयुक्ता भवेयुस्तदानीं [३३v]यजमानस्य [v]प्रजया [v]पशुभि एता सामिधेन्य [v]वि [v]तिष्ठेरन् वियुक्तास्तिष्ठेयु, प्रजापशुसमृद्धिहेतवो न भवयुरित्यर्थ ।

१६ मै४–°शब्दाभिधानस्येद । १७ ल हो– अरत्निरित्याह । १८ ल हो– 'एता' २० नास्ति । १९ ल हो– 'भृग्वादिभ्य' नास्ति । २० ल हो– विशिष्टा ।

३० क ड म ह ो१– विपक्षबाधोप° । ३१ क– 'पुन' नास्ति । ३२ ङ– °तीन्द्रियस्य । ३३ अ इ उ जो ना पा हा– 'यजमानस्य' नास्ति ।

सं ( ५ ) युनक्त्येवैनास्ता अस्मै संयुक्ता अवरुद्धाः सर्वामाशिषं दुहे ॥ ७ ॥

[ वसं वो जायन्ते प्र वो वाजा लभेत दधाति सं दर्श च । ]

समिति ( ५ )। युनक्ति। एव। एनाः। ताः। अस्मै। संयुक्ता इति सं-युक्ताः।
अवरुद्धा इत्यव-रुद्धाः। सर्वाम्। आशिषमित्या-शिषम्। दुहे ॥ ७ ॥

५ [ शत्रा १·४·१·१-२१ ]

एता [v]सयुनक्ति। [v]ताः च सयुक्तवत्सा गाव इव गोष्ठे [v]अवरुद्धाः [v]अस्मै यजमानाय [v]सर्वाम् [v]आशिषम् अभिमतमर्थ [v]दुहे स्वयमेव दुहन्ते। कर्मकर्तरि "न दुहस्नुनमां" (पा ३.१.८९) इति यगभाव, "बहुलं छन्दसि" (पा ७·१·८) इति [21]रुट्, "लोपस्त आत्मनेपदेषु" (पा ७·१·४१) इति तलोप, "अतो गुणे" (पा ६·१·९७) पररूपत्वम् ॥

१० [22]इति द्वितीये[22] पञ्चमे सप्तमोऽनुवाक. ॥

तत्परिहाराय पूर्वस्याः सामिधेन्या [34]उत्तरार्धमुत्तरस्याः [35]सामिधेन्याः [36]पूर्वार्धं च संदध्यात्। तथा सति [37]एनाः सामिधेनीः संयोजितवानेव भवति। न चैवमेकस्यामपि सामिधेन्यां पूर्वोत्तरार्धयोः संधातव्याविति शङ्कनीयम्। तयोरेकर्षिप्रवर्तितत्वेन [38]होतृप्रयुक्तसंधानमन्तरेणापि स्वरूपतो वियोगाभावात्। यथोक्तरीत्या [v]संयुक्ताः [v]ताः सामिधेन्यो यजमानाय [v]सर्वाम् [v]आशिषं [39]दुहे दुहन्ति संपादयन्ति ॥

१५ [40]अथ मीमांसा ॥ नवमाध्यायस्य प्रथमपादे चिन्तितम्—

"[41]त्रिरग्र किमृचो[41] धर्मः [42]स्थानधर्मोऽथवाऽऽदिमः।
स्त्रीलिङ्गत्वाच्च तत्प्रातिपदिकप्रबलत्वतः" ॥ (जैन्या ९·१·१४) ॥

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य श्रूयते— "त्रिः प्रथमामन्वाह" (तैस २·५·७) इति। सोऽयं त्रिरभ्यास आदौ [43]पठितस्य "प्र वो वाजाः" (तैत्रा ३·५·२) इत्यृग्विशेषस्य धर्मः। कुतः? २० 'प्रथमाम्' इत्यस्य [44]पदस्य स्त्रीलिङ्गत्वात् ऋक्परत्वोपपत्तेरिति चेत्। नैतद्युक्तम्। स्त्रीलिङ्गवाचिनः [45]टाप्प्रत्ययादपि [46]पूर्वं पठितस्य स्थानवाचिनः प्रथमेत्यस्य प्रातिपदिकस्य प्रबलत्वात्। अतो [47]निवृत्तिरप्यन्यया अप्यृचः [48]प्रथमस्थानपठितायास्त्रिरभ्यासः कर्तव्यः। स्थानान्तरे [49]पठितायाः "प्र वो वाजाः" (तैब्रा ३·५·२) इत्यस्या अप्यृचो नाभ्यासः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
२५ द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

२१. तैउ.मै– रुट्; ल.हो– रुट्। २२. ल.हो– 'इति द्वितीये' नास्ति।

३४. क.ट.हो१– उत्तरार्धंचमु°। ३५. अ.ट.उ.पा.ग्रं.हा– 'सामिधेन्याः' नास्ति। ३६. ट.हो१–पूर्वार्धंचम्। ३७ क.हा– एताः। ३८. ट.हो१– होतृप्रयुक्तं संधा°। ३९. अ.ट.उ.ट.पा.हो१– 'दुहे' नास्ति। ४०. ट–अत्र। ४१–४१. क.ग्रं.हो१– त्रिरनूक्तिर्ऋचो; ट– त्रिरनुक्ते ऋचो। ४२. ट.ग्रं– °धर्मो यथाग्रिमः। ४३. अ.उ.ट.ना.पा– प्रमितस्य; जो.हो१– प्रति(ती)तस्य। ४४. आ.ट– ३० 'पदस्य' नास्ति। ४५.अ.ट.उ.वो.ना.पा.हा– स्त्रीप्रत्य°। ४६. ट– पूर्वे°। ४७. क.हो१– निवृत्तिरप्यन्य°। ४८. क.ट.ग्रं.हो१– प्रथमस्थाने पठि°। ४९. हो१– प्रतीतायाः।

सप्तमे सामिधेन्याद्या व्याख्याताऽत्यन्तविस्तरात् ॥

[1]अथाऽष्टमेऽवशिष्टाः सामिधेन्यो व्याख्यायन्ते। तत्र द्वितीया सामिधेनी मन्त्रकाण्ड एव पठिता– "अग्न आ याहि वीतये। गृणानो हव्यदातये। नि होता सत्सि बर्हिषि" (तैब्रा ३.५.२) इति। हेऽग्ने, हव्यदातये यजमानस्य हविर्दानाय वीतये देवानां हविर्भक्षणाय गृणानो [2]यजमानो देवानां हविर्दास्यतीति भवद्भिर्भक्षणीयमिति वदन्नायाहि। आगत्य च होताऽऽह्वाता [3]भूत्वा बर्हिषि यज्ञे निषत्सि निषीद ॥

तृतीयसामिधेनीपाठस्तु– "तं त्वा समिद्भिरङ्गिरः। घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य" (तैब्रा ३.५.२) इति। हेऽङ्गिरोऽग्ने, तं त्वा तादृशं देवानामाह्वातारं त्वां समिद्भिर्घृतेन च वर्धयामः। हे यविष्ठ्य युवतम, बृहत् ज्वालाधिक्यं यथा भवति तथा शोच दीप्यस्व ॥

[4]चतुर्थसामिधेनीपाठस्तु– "स नः पृथु श्रवाय्यम्। अच्छा देव विवाससि। बृहदग्ने सुवीर्यम्" (तैब्रा ३.५.२) इति। हेऽग्ने देव, स त्वं नोऽस्मदर्थं पृथु विस्तीर्णं श्रवाय्यं देवैः श्रोतुं योग्यमिदं कर्माच्छाभिमुखीकृत्य बृहत् सुवीर्यं च यथा भवति तथा विवाससि विभातं कुरु प्रकाशयेत्यर्थः। बृहच्छब्देन ज्वालाधिक्यं विवक्षितम्। सुवीर्यशब्देन हूयमानस्य हविषः सम्यग्दहनसामर्थ्यमुच्यते ॥

पञ्चमसामिधेनीपाठस्तु– "ईडेन्यो नमस्यस्तिरः। तमांसि दर्शतः। समग्निरिध्यते वृषा" (तैब्रा ३.५.२) इति। अयमग्निः सम्यगिध्यते। कीदृशः? ईडेन्यः स्तोतुं योग्यः, नमस्यो [5]नमस्कर्तुं योग्यः। तमांसि तिरस्कुर्वन् दर्शतः पदार्थानां [6]दर्शयिता, वृषा कामानां वर्षयिता ॥

षष्ठसामिधेनीपाठस्तु– "वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तं हविष्मन्त ईडते" (तैब्रा ३.५.२) इति। अयमग्निः सम्यगिध्यते। कीदृशः? वृषः कामानां वर्षयिता। अश्वो न देववाहनोऽश्व इव देवार्थस्य हविषो वोढा। तमिममग्निं हविष्मन्तो यजमानाः स्तुवन्ति ॥

सप्तमसामिधेनीपाठस्तु– "वृषणं त्वा वयं वृषन्। वृषाणः समिधीमहि। अग्ने दीद्यतं बृहत्" (तैब्रा ३.५.२) इति। हे वृषन्, [7]कामाभिवर्षकाग्ने, वृषणं कामानां [8]वर्षयितारं त्वां वृषाणो वयमाहुतिवृष्टिं कुर्वन्तो वयं [9]समिधीमहि सम्यक् प्रकाशयामः। कीदृशं त्वां, बृहद्दीद्यतं प्रौढज्वालं यथा भवति तथा दीप्यमानम् ॥

अष्टमसामिधेनीपाठस्तु– "अग्निं दूतं वृणीमहे। होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्" (तैब्रा ३.५.२) इति। इममग्निं वयं वृणीमहे प्रार्थयामहे। कीदृशम्? दूतं देवान् प्रति [10]प्रेषणार्हं होतारमाह्वातारं विश्ववेदसं विश्वान् सर्वान् देवान् वेत्तीति विश्ववेदास्तादृशम्। अस्य यज्ञस्य संबन्धिनं सुक्रतुं शोभनकर्माणम् ॥

नवमसामिधेनीपाठस्तु– "समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे" (तैब्रा ३.५.२) इति। योऽग्निरध्वरेऽस्मिन् कर्मणि समिध्यमानः पावकः शुद्धिहेतुरीड्यः स्तुत्यः शोचींषि दीप्तयः केशस्थानीया यस्यासौ शोचिष्केशस्तमग्निमीमहे प्राप्नुमः ॥

दशमसामिधेनीपाठस्तु– "समिद्धो अग्न आहुत। देवान् यक्षि स्वध्वर। त्वं हि हव्यवाडसि" (तैब्रा ३.५.२) इति॥ हे आहुताऽऽहुत्याराधिताग्ने, त्वं समिद्धः सन् देवान् यक्षि [11]यज। हे स्वध्वर सुष्ठुनिष्पादितयाग, हि यस्मात् त्वं हव्यवाडसि तस्माद्यजेत्यन्वयः ॥

---

१. अ.इ.उ.बो.ना.पा.हा– 'अथ' नास्ति। २. अ.इ.उ.बो.ना.पा.हा– 'यजमानो' नास्ति। ३. आ– भवन्। ४. हो१– °सामिधेन्याः पाठस्तु। ५. आ.ड– नमस्कार°। ६. आ– आदर्शयिता। ७. आ– कामाना वर्षकाग्ने; ड.हो– कामाना वर्षयितरग्ने। ८. ड.गं.हो१– वर्षयितारं। ९. अ.इ.उ.बो.ना.पा.हा– सम्यगिधीमहि। १०. ड– प्रेरणार्थं; हो१– प्रेरणार्हम्। ११. आ– यजसि।

अयज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथंतरस्यैष वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो

---

अयज्ञ । वै । एष । य । असामा । अग्ने । एति । याहि । वीतये । इति । आह । रथंतरस्येति रथ तरस्य । एष । वर्ण । तम् । त्वा । समिद्भिरिति समित्-भि । अङ्गिर । इति । आह ।
५ वामदेव्यस्येति वाम देव्यस्य । एष । वर्ण । बृहत् । अग्ने । सुवीर्यमिति सु-वीर्यम् । इति । आह । बृहत । एष । वर्ण ।

---

अयज्ञो वा इत्यादि ॥ द्वितीयाप्रभृते ऋच स्तुति क्रियते । रथन्तरस्येति । पूर्ववत् प्राथम्यादिना रथन्तरादिरूपत्व तिसृणाम् ऋचाम् । "वामदेवाड्ड्यड्यौ" (पा ४ २ ९) । बृहदग्न इति । बृहच्छन्दसत्व धेन बार्हतत्व दर्शयितु तृतीयस्य पदस्योपादानम् ॥

---

१० एकादशसामिधेनीपाठस्तु– "आजुहोत दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्व[12] हव्यवाहनम्" (तैब्रा ३ ५ २) इति । हे यजमाना, "[12]इममग्निमाहुतिभिराजुहोत प्रीणयत, दुवस्यत परिचरत, प्रयति प्रयत्नेन वर्तमानेऽस्मिन्नध्वरे यागे "[13]हव्यवाहनमग्निं वृणीध्व प्रार्थयध्वम् । अनया सामिधेनीना परिसमाप्य मानत्वादिय परिधानीया ।

तत्र पुरुषभेदेनान्या परिधानीया "[14]विकल्प्यते । तथा च सूत्रकार –"त्व वरुण इति वसिष्ठराज
१५ न्याना परिधानीया । आजुहोतेतीतरेषा गोत्राणाम्" (आपश्रौ २४ ११ १५) इति ॥ विकल्पिताया पाठस्तु– "त्वं वरुण उत मित्रो अग्ने । त्वा वर्धन्ति मतिभिर्वसिष्ठा । त्वे वसु सुषणनानि सन्तु । यूयं पात स्वस्तिभि सदा न" (तैब्रा ३ ५ १) इति । हेऽग्ने, त्वमनिष्टनिवारकत्वाद्वरुण इष्टप्रापकत्वात् मित्रश्च । वसिष्ठगोत्रीया मतिभिर्मनीषाभि स्तुतिभि "[15]त्वा वर्धन्ति वर्धयन्ति"[15] । त्वे त्वयि वसु धन सुषणनानि सुष्ठु दातव्यानि हवींषि च सन्तु तिष्ठन्तु । यूय च नोऽस्मान् स्वस्तिभि "[16]श्रेयोभि "[17]पात सदा"[17] रक्षत । यूयमिति
२० बहुवचन पूजार्थम् ॥

अयज्ञ इति ॥ आसु सामिधेनीषु द्वितीयादिचतुर्थ्यन्त तृच प्रशसति– 'अयज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथन्तरस्यैष वर्णस्त त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैव वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत् सामन्वन्त करोति' इति ॥ दर्शपूर्ण मासयो सामानि न सन्ति तद्रहितश्च न मुख्ययज्ञ । अतोऽय तृच सामत्रयस्वरूपत्वेनाऽत्र "[18]पठ्यते ।
२५ यद्यप्येता ऋचो रथन्तरादीना योनयो न भवन्ति तथाऽपि स्तुतित्वात् "[19]तद्रूपत्वम् अविरुद्धम् । शाखान्तरे या तास्वृक्षु 'गीतानि सामानि द्रष्टव्यानि । "[20]'तत् तेन'"[21] तृचपाठेन दर्शपूर्णमासयज्ञ "[22]सामयुक्त 'करोति । 'बृहदग्ने' इति तृतीयपादोपादानं बृहत्सामद्योतकस्य बृहच्छन्दस्य प्रदर्शनार्थम् ॥

---

१२ क ख ग होर– °मिमाजुहोताहुतिभि । १३ ख ग– °वाहन तमग्नि । १४ आ हा– विकल्पते । १५–१५ आ–वर्धन्ति वर्धयन्ति त्वा, अ इ उ ओ ना पा होर–त्वा वर्धयन्ति । १६ आ–'श्रेयोभि'
३० नास्ति । १७ आ क– सदा पात । १८ क– पठ्यो । १९ हा– उपपद्यो तद्रूपत्वम् । २० ग– तानि, होर–एतानि, अ इ उ ओ पा हा– भूतानि । २१–२१ आ– एतेन । २२ आ– सामवन्तं ।

यदे॒तं तृ॒चम॒न्वाह॑ य॒ज्ञमे॒व तत् साम॑न्वन्तं करोत्य॒ग्निर॒मुष्मि॑ꣳल्लो॒क आसी॑दादि॒त्योऽस्मिन् तावि॒मौ॑ लो॒कावशा॑न्ता(१)वास्ता॒ं ते दे॒वा अ॑ब्रुवन्नेते॒मौ वि पर्यू॑हा॒मेत्यग्न आ या॑हि वी॒तय॑ इत्य॒स्मिꣳल्लो॒केऽग्निम॑दधुर्बृ॒हद॑ग्ने सु॒वीर्य॒मित्य॒मुष्मि॑ꣳल्लो॒क आ॑दि॒त्यं त॒तो वा इ॒मौ

यत्। एतम्। तृचम्। अन्वाहेत्यनु-आह॑। यज्ञम्। एव। तत्। साम॑न्वन्तमिति साम॑न्-व॒न्तम्। क॒रोति। अ॒ग्निः। अ॒मुष्मि॑न्। लो॒के। आसी॑त्। आ॒दि॒त्यः। अ॒स्मिन्। तौ। इ॒मौ। लो॒कौ। ५ अशा॑न्तौ (१)। आ॒स्ता॒म्। ते। दे॒वाः। अ॒ब्रु॒वन्। ए॒ति॑। इ॒त॒। इ॒मौ। वि। परी॑ति। ऊ॒हा॒म॒। इति॑। अग्ने॑। ए॒ति॑। या॒हि॒। वी॒तये॑। इति॑। अ॒स्मिन्। लो॒के। अ॒ग्निम्। अ॒द॒धुः। बृ॒हत्। अ॒ग्ने॒। सु॒वीर्य॒मिति॑ सु-वीर्य॑म्। इति॑। अ॒मुष्मि॑न्। लो॒के। आ॒दि॒त्यम्। त॒तः। वै। इ॒मौ। लो॒कौ।

तृचमिति। तिसृणामृचां समाहारस्तृचम्। "ऋक्पू°" (पा ५ ४ ७४) इति समासान्तः। त्रेः सम्प्रसारणम् उत्तरपदलोपश्च। सामन्वन्तमिति। "अनो नुट्" (पा ८ २ १० १६) इति नुट्॥

अग्निरमुष्मिन्नित्यादि॥ स्वर्लोके [१]अग्निः [१]आसीत्, पृथिव्याम् [१]आदित्यः। ततः [१]इमौ [१]लोकौ [१]अशान्तौ असुखौ [१]आस्ताम् अभवताम्। अथ च [१]ते तथा पश्यन्तः [१]देवाः परस्परम् [१-१]अब्रुवन् [१]एत आगच्छत[१] [२]सर्वेऽपि यूयम् [१]इमौ अग्न्यादित्यौ [१]वि [१]पर्यूहाम निपरिवृत्तलोकौ स्थापयाम। 'अग्न आ याहि' इति, 'बर्हिषि निषीद' इति लिङ्गं नीचैस्स्थानस्य। ऋचश्च १५ प्रथमत्वात् [३]प्रथमलोकपरिग्रहः। तत्र तृतीयदेशस्यापि प्रथमपादादावग्निशब्दोपादानादग्नेः प्रथमलोकानस्थानं सूच्यते। बृहदग्न इति। [४]निरासनकारित्वमादित्यामन एव। अग्नेरिति। तस्योच्चैस्स्थानलिङ्गनिशेषः। ऋचः [५]तृतीयत्वात् तृतीयलोकपरिग्रहः। तत्र तृतीयदेशत्वम्॥

अग्निरिति॥ अस्मिन्नेव तृचे [२२]आयन्तौ मन्त्रौ[२३] पुनः प्रशंसति– 'अग्निरमुष्मिँल्लोक आसीदादित्योऽस्मिन् तावेमौ लोकावशान्तावास्तां ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यग्न आ याहि वीतय २० इत्यस्मिँल्लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिँल्लोक आदित्यं ततो वा इमौ लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद' इति॥ पुरा स्वर्गलोके [२४]अग्निः स्थितः [२४]आदित्यः तु भूलोके। [२५]तदानीं लोकद्वयमशान्तं [२५]क्षुब्धमासीत्। स्वर्गे हि [२६]अमृतसेविनां पाकापेक्षा नास्ति। प्रकाशाय केवलमादित्योऽपेक्षित एव। भूलोकवासिनां तु पाको मुख्यं प्रयोजनम्। [२७]तदुभयासिद्धेर्लोकयोः क्षोभः। तं क्षोभं दृष्ट्वा [२८]ते [२८]देवाः परस्परमिदमूचुः– [२८]इमौ अग्न्यादित्यौ [२८]वि [२८]पर्यूहाम २५ विपरिवृत्तौ स्थापयाम। तस्मात् [२८]एत सर्वे [२८]यूयमागच्छत [२८]इति। 'अग्न आयाहि' इत्यस्यामृचि 'बर्हिषि

१. ल हो– 'अब्रुवन् एत आगच्छत' नास्ति। २–२ तं३ ल हो– ते सर्वेऽपि। ३ ल हो– प्रथमलोप परि°। ४ त३ ल हो– विवास्कारि°। ५. ल– 'तृतीयत्वात्' नास्ति।

२२–२३ आ– आयन्तौ, हो१– आयन्तमन्त्रौ। २४ ह म– तदा। २५. गृ– क्षुभितमासीत्। २६ हो१– अमृताशिनाम्, अ इ उ जो ना पा हा– °सेवनात्। २७ आ ह– °लोक°। २८–२८ आ– ३० एते सर्वे, ह हो– एतदर्थम्।

लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद पञ्चदश सामिधेनीरन्वाह पञ्चदश( २ )वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते तासां त्रीणि च शतानि पष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयो-

अशाम्यताम् । यत् । एवम् । अन्वाहेत्यनु आह । अनयो । लोकयो । शान्त्यै । शाम्यत । ५ अस्मै । इमौ । लोकौ । य । एवम् । वेद । पञ्चदशेति पञ्च-दश । सामिधेनीरिति साम् इधेनी । अन्विति । आह । पञ्चदशेति पञ्च दश (२) । वै । अर्धमासस्येत्यर्ध मासस्य । रात्रय । अर्धमासश इत्यर्धमास श । सवसर इति स वसर । आप्यते । तासाम् । त्रीणि । च । शतानि । पष्टि । च । अक्षराणि । तावती । सवसरस्येति स वसरस्य । रात्रय ।

[४]अर्धमासश [ अर्धमासेन ] अक्षरश अक्षरेण सवसरमाप्नोति । अक्षराणा रात्रीणा च १० समसख्याकारेण सवसराप्ताति । पूर्ववच्छस् ॥

निपीद ' इति लिङ्गाच्च प्राथम्याच्च प्रथमलोके स्थापन [२९]तया सपद्यते । ' बृहदग्ने सुवीर्यम् ' इत्यस्यामृचि ' विभासासि ' इति विभातत्वोक्तिलिङ्गाद्घस्तृतीयत्वाच्चास्या [३०]तृतीयलोके [३१]स्थापनहेतुत्व [३२]गम्यते । यद्यप्यादित्यो नास्मिन् मन्त्रे श्रुतस्तथापि [३३]तृषस्थानवर्तित्वेन तमस्तिरस्कारित्वेन[३३] विभातत्वेन [३४]आदित्य [३५]सूच्यते । किं [३६]च इसमन्त्रावसाने " ऋत बृहत् " (तैस १८१५) इत्यादित्यमण्डलपरत्वेन श्रुतो १५ बृहच्छन्दोऽत्रापि [३७]श्रूयमाण आदित्यस्य प्रत्यभिज्ञापक । तस्मात् तेन मन्त्रेणाऽऽदित्यस्थापन सिध्यति । [३८]अनयोर्विपर्यासवृत्त्या लोकयो स्वस्वकार्यसिद्धेयुक्ता शान्ति । तस्मादनेन क्रमेण पाठो [३९]लोकद्वयशान्त्यै भवति । तद्वेदितुश्च तदुभयशान्तिर्भवति ॥

पञ्चदशेति ॥ सख्या विधत्ते– ' पञ्चदश सामिधेनीरन्वाह पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासश सवसर आप्यते ' इति । यद्यपि द्वादश [४०]पठितास्तथाऽप्येकादशैव । एकस्या पुरुषभेदेन २० [४१]विकल्पितत्वात् । तासु च प्रथमोत्तमयोस्त्रिरावृत्त्या पञ्चदशत्वसपत्ति । [४२]अर्धमासस्य रात्रीणा पञ्चदशत्वात् तद्रूपत्वमपि सपद्यते । एकैकस्मिन् अर्धमासे पञ्चदशस्वन्तर्भूतासु तासामर्धमासाना चतुर्विंशतिवारमावृत्त्या सवत्सरप्राप्तिश्च सपद्यते ॥

तासामिति ॥ [४३]इदानीमक्षरसख्या सवत्सरसपत्त्या प्रशसति– ' तासा त्रीणि च शतानि पष्टिश्चाक्षराणि तावती सवत्सरस्य रात्रयोऽक्षरश एव सवत्सरमाप्नोति ' इति । [४३]तासा [४३]पञ्चदश सामि- २५ धेनीना [४३]गायत्रीछन्दस्कत्वादेका चतुर्विंशत्यक्षरा । तथा सति मिलित्वाऽक्षरसख्या सवत्सररात्रिसख्या

२९ ङ होर–तया । ३०. ङ– तृतीये लोके । ३१ ङ ग्रं–स्थापनम् । ३२ ङ–तया गम्यते । गम्यते ३३–३३ आ–उभे स्थानवृत्ति वकारित्वेन । ३४ होर–आदित्या । ३५ आ– श्रूयते, होर– सूच्यते । ३६ ङ–तु । ३७ अ इ उ नो ना पा हा–श्रयमाण बृहच्छन्द । ३८ ङ होर–अनया विप° । ३९. आ– लोकयो शान्त्यै । ४०. क ग्रं– ' एकादशैव ' नास्ति । ४१ ङ ग्रं– विकल्पितत्वात् ३० एकादशैव । ४२. ङ ग्रं होर–°सख्ययाऽपि । ४३–४३. आ–सामिधेनीन पञ्चदशसख्याना, क– सामिधेनीनां पञ्चदशसंख्याना ।

-ऽक्षर॒श ए॒व सं॑वत्स॒रमा॑प्नोति नृ॒मेध॑श्च॒ परु॑च्छेपश्च ब्रह्मवा॒द्य॑मवदेता॒म॒स्मिन् दारा॑वा॒र्द्रेऽग्निं ज॑नयाव॒ यत॒रो नौ॑ ब्र॒ह्मीया॒निति॑ नृ॒मेधो॒ऽभ्य॑वदत्

अ॒क्ष॒र॒श इत्य॑क्षर श । ए॒व । स॒व॒त्स॒रमिति॑ स व॒त्स॒रम । आ॒प्नो॒ति । नृ॒मेध॒ इति॑ नृ मेध । च । परु॑च्छेप । च॒ । ब्र॒ह्म॒वा॒द्यमिति॑ ब्रह्म वा॒द्य॑म् । अ॒व॒दे॒ता॒म् । अ॒स्मिन् । दारौ॑ । आ॒र्द्रे । अ॒ग्निम् । ज॒न॒या॒व॒ । य॒त॒र । नौ॒ । ब्र॒ह्मीया॑न् । इति॑ । नृ॒मेध॒ इति॑ नृ मेध॑ । अ॒भीति॑ । अ॒व॒द॒त् । ५

^6^नृमेधश्चेत्यादि ॥ ब्रह्मवादित्व ब्रह्मवाद्यम् । ब्रह्म वेद वदितुमिष्टे विषये नियोक्तृ ^7^सामर्थ्यं ब्रह्मवाद, तदेव ब्रह्मवाद्यम् । स्वार्थिको यत्, "परादिश्छन्दसि°" (पा ६ २ १९९) इति उत्तरपदाद्युदात्तत्वम् । यद्वा ^8^ब्रह्मणो वदनसामर्थ्यं ब्रह्मवाद्यम् । "वद सुपि क्यप् च" (पा ३ १ १०६) इति यत्, वर्णविकारश्छान्दस, कृदुत्तरपदप्रकृतिस्वरत्वेन "यतोऽनाव" (पा ६ १ २१३) इत्याद्युदात्तत्वम् । श्यन् वा व्यत्ययेन प्रवर्तते । पूर्वं नृमेधपरुच्छेपनामानावृषी १० ब्रह्मवाद्ये विप्रतिपन्नावभवताम्, अह ब्रह्मतरोऽह ब्रह्मतर इति । तौ तथा विप्रतिपन्नौ इद ब्रह्मवाद्यम् ^V^अवदता वैमत्येन अवदताम् । "^9^भासन°" (पा १ ३ ४७) इत्यादिना^9^ निमित्तात्मनेपदम् । कथमित्याह– ^V^नौ आवयोर्मध्ये ^V10^यतर ^V^ब्रह्मीयान् ब्रह्मतर ^V^अस्मिन् ^V^आर्द्रे ^V^दारौ ^V^अग्निं ^V^जनयाव अह वा त्व वा । तन्त्रेण द्वयोरभिधान, यतरो नौ ब्रह्मीयान् त्व वाऽह वा तावावामत्राग्निं ^11^जनयावेति । विशिष्टज्ञाननिमित्तत्वेन ब्रह्मशब्दस्य गुणवचनत्वात् १५ "अजादी गुणवचनादेव" (पा ५ ३ ५८) इति ईयसुप्रत्यये ^12^अल्लोप । "किंयत्तदो निर्धारणे°" (पा ५ ३ ९२) इति यच्छब्दात् डतरच्प्रत्यय ॥ ^V^नृमेध ^V^अभि ^V^अवदत् ।

च समा इति कृत्वाऽक्षरद्वारा ^44^तथैव सवत्सरप्राप्तिर्भवति । यद्यपि वासिष्ठाना परिधानीयायाश्त्रिष्टुप्त्वाद् अधिकान्यक्षराणि तथाऽपीतरगोत्रापेक्षयाऽयमर्थवाद इत्यविरोध ॥

नृमेध इति ॥ आसु सामिधेनीषु 'त त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ' इत्येत ^45^मन्त्र २० विशेष प्रशसति–' नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन् दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत् स धूममजनयत् परुच्छेपोऽभ्यवदत् सोऽग्निमजनयदृष इत्यब्रवीत् समावद्विद्व कथा त्वमग्नि मजीजनो नाहमिति सामिधेनीनामेवाह वर्णं वेदेत्यब्रवीद्यत् घृतवत् पदमनूच्यते स आसा वर्णस्त त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति ' इति ॥ नृमेधपरुच्छेपनामानौ ^46^उभावृषी परस्पर ^V^ब्रह्मवाद्यम् ^V^अवदता मन्त्रसामर्थ्यविषय ^47^सवादमकुरुताम् । तत्रानयोरिय प्रतिज्ञा– आवयोरुभयोर्मध्ये २५ ^V^यतर ^V^ब्रह्मीयान् ब्रह्मणि सामिधेनीमन्त्रेऽत्यन्त कुशलस्तादृश निश्चेतु स्वत्वमसि सामिधनीमन्त्रमनु

६ तत्र नि मै ल हो– नृमेधश्चेत्यादिना । ७ ल हो–असामर्थ्यम् । ८ तैत्र ल हो– ब्रह्मणा । ९-९ मै४ – भाषनादिना । १० तत्र ल हो– यत । ११ ल हो–जनायेति । १२ ल हो– 'अल्लोप ' नास्ति ।

४४ आ– तदेवम् । ४५ ग्र– मन्त्र विशेषेण । ४६ आ– ऋत्विजौ, क ड हो१– ऋषी । ३० ४७ आ हा– वाद° ।

स धूममंजनयत् पर्रुच्छेपोऽभ्यंवदत् सोंऽग्निमंजनयदप इत्यंब्रवीत्( ३ )यत् समावंद्विद्व कुथा त्वमग्निमजीजनो नाहमितिं सामिधेनीनांमेवाहं वर्णं वेदेत्यंब्रवीद्यद् घृतवत् पुदमं- नूच्यते स आंसां वर्णस्तं त्वां सुमिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति

स । धूमम् । अजनयत् । परुच्छेप । अभीति । अवदत् । स । अग्निम् । अजनयत् । ऋषे । इति । अब्रवात् (३) । यत् । समावत् । विद्व । कथा । त्वम् । अग्निम् । अजीजन । न । अहम् । इति । सामिधेनीनामिति साम्-इधेनीनाम् । एव । अहम् । वर्णम् । वेद । इति । अब्रवीत् । यत् । घृतवदिति घृत-वत् । पदम् । अनूच्यत इत्यनु उच्यते । स । आसाम् । वर्ण । तम् । त्वा । समिद्भिरिति समित्-भि । अङ्गिर । इति । आह । सामिधेनीष्विति साम् इधेनीषु । एव । तत् । ज्योति । जनयति ।

१० आर्द्रं दारुमभिलक्ष्य अग्नि जनयितुकामो [13]ब्रह्म वदन्[13] स धूमम् एव अजनयत् नाग्निम् । परुच्छेप तु अग्निम् अजनयत् । अथ त दृष्टातिशयप्रतिपत्त्यर्थम् ऋषिशब्देन प्रेम्णाऽऽमन्त्र्य नृमेध अब्रवीत् [14]यत् यदा समावत् [15]विद्व सममेनावयोर्वेदन सर्वत्र [15]तदा कथा केन[16] हेतुना त्वम् अग्निम् अजीजन न अहम् इति । समादावत्तुप् स्वार्थिक, “था हेतौ च° ” (पा ५ ३ २६) इति थाप्रत्यय । अथ परुच्छेप अब्रवीत्– सामि १५ धेनीना वर्णं स्वरूपम् अह वेद जानामि न त्वमिति ॥

इदानीं त वर्णं स्वयमेव परुच्छेप आह– यदिति ॥ घृतेनाभिधेयेन तद्वत्पद घृतवत् घृतशब्द एव । यद्वा– घृतशब्दवत् पद “ त त्वा समिद्भि ” (तैब्रा ३ ५ २) इत्यस्या द्वितीय

स्मरन्तौ अस्मिन् आर्द्रे काष्ठे मथनेन अग्निं जनयाव इति । तदा प्रथम नृमेध आर्द्रं काष्ठमभिलक्ष्य मन्त्रम् अवदत् । स तन्मन्त्रसामर्थ्यात् धूमम् उत्पादितवान् । परुच्छेप मन्त्र पठित्वा अग्निम् २० अजनयत् । [48]तदानीं नृमेध परुच्छेप प्रति हे ऋषे, त्वमतीन्द्रियद्रष्टाऽसि इति अभिप्रेत्य [49]सबोधितवान् । सबोध्य चैव पप्रच्छ– यत् यस्मात् कारणात् समावत् विद्व आवयो [50]सामिधेनीवेदन समानमेव[50], तथा सति कथ त्वम् अग्निम् उत्पादितवान् न तु अहम् इति । तत्र परुच्छेप उत्तरमुवाच–यद्यप्यावयो सामिधेनीपाठ [51]तदर्थविज्ञान च समान, तथाऽपि अह तासाम् एव समिधेनीना वर्णं रहस्य तेज वेद, त्व तु न वेत्सि । किं तत्तेज इति तदुच्यते–घृतशब्दोपेत पाद अनूच्यते इति स अयमनूच्यमान पाद २५ सामिधेनीना वर्णं सारभूत तेज । [52]स पाद[52] कस्यामृचि वर्तत इति चेत् तदुच्यते– “ त त्वा समि

१३-१३. ल–ब्रह्मन् वदन्, हो–‘ब्रह्म वदन्’ नास्ति । १४ ल हो–‘यत्’ नास्ति । १५. त३ ल हो– ‘विद्व’ नास्ति । १६-१६ हो– तथा कथनेन, तं२ र– तथा कथानेन ।

४८ आ– तदिदानीम् । ४९. अ उ पा– संबोधितवान् । ५०-५० ट–सामिधेनीपाठस्तदर्थ- विज्ञान समाने । ५१ आ–तदर्थज्ञान । ५१-५२ अ१ उ ओ ग पा हा– ‘स पाद’ नास्ति ।

त्रिय॒स्तेन॒ यदृ॒चस्त्रिय॒स्तेन॒ यद्गा॑य॒त्रियः॒ त्रिय॒स्तेन॒ यत् सा॑मिधे॒न्यो
वृष॑ण्वता॒मन्वा॑ह॒ (४) तेन॒ पुरु॑ष्वती॒स्तेन॒ सेन्द्रा॒स्तेन॑ मिथु॒ना

त्रिय॑ । तेन॑ । यत् । ऋचः॑ । त्रिय॑ । तेन॑ । यत् । गा॒य॒त्रिय॑ । त्रिय॑ । तेन॑ । यत् ।
सा॒मि॒धे॒न्य॑ इति॑ साम् इ॒धे॒न्य॑ । वृष॑ण्वता॒मिति॒ वृष॑ण् व॒ती॒म् । अन्वि॑ति॑ । आ॒ह॒ (४) ।
तेन॑ । पुरु॑ष्वती । तेन॑ । सेन्द्रा॒ इति॒ स इ॒न्द्रा॒ । तेन॑ । मि॒थु॒ना । ५

पाद । तस्य यदनुवचन [१५]स एव तासाम् एक [१६]वर्ण । [१७]तमेवार्थं समर्थयते[१७] 'त त्वा' इति । ज्योतिष्मत्त्वमासा घृतसबन्धेन क्रियते 'तेजो घृतम्' इति । अथ वर्णान्तराण्याह–त्रियस्तेनेत्यादि । ऋक्त्वेन [१८]गायत्रीत्वेन सामिधेनीत्वेन त्रिप्रकार स्त्रीत्वमासाम् ॥

वृषण्वतीमिति ॥ "वृषण त्वा वय वृषन्" (तैब्रा ३ ५ २) [१९]इत्येतत्सबन्धेनैता पुस्त्वनत्य [२०]सेन्द्रा [२१]मिथुना च भवन्ति । वृषा सेक्ता पुमान् । "तसौ मत्वर्थे" (पा १ ४ १९) १० इति भत्वम् । वृषा इन्द्र प्रधानत्वादेतासाम् । स्त्रीत्वात् पुसो योगाच्च मिथुनत्वमासामस्तीति मिथुना । पामादित्वान्नप्रत्यय (पा ५ २ १००) । केचिदाहु –"स न पृथु श्रवाय्यम्" (तैब्रा ३ ५ २) इत्यन्ताना चतसृणा पूर्वं स्तुति कृता । "अग्निं दूतम्" (तैब्रा ३ ५ २) इत्यादीना स्तुति करिष्यते । "ईडेन्य" (तैब्रा ३ ५ २) इत्यादीना तिसृणा 'वृषण्वतीमन्वाह' इत्यादिका स्तुति क्रियते इति । "अनो नुट्" (पा ८ २ १६) इति नुट् । अयस्मयादित्वेन (पा १ ४ २०) १५ भत्वात् पदकालेऽपि तस्य णत्व न निवर्तते ॥

भिरङ्गिर" (तैब्रा ३ ५ २) इति एतामृच पठेत् । तस्यामृचि 'घृतेन वर्धयामसि' [५३]इत्यय पादो वर्तते । [५४]तत् तेन पादपाठेन[५४] [५५]सामिधनीषु [५६]एव [५७]ज्योति [५८]जनयति । [५९]त्वमेत पाद पठन्नपि महिमान न जानासि । अह तु जानामि । तस्मादार्द्रकाष्ठे मयाऽग्निरुत्पादित ॥

त्रिय इति ॥ 'वृषण त्वा वयम्' इत्येतामृच विशेषत प्रशसति–'त्रियस्तेन यदृच त्रियस्तेन १० यद्गायत्रिय त्रियस्तेन यत् सामिधेन्यो वृषण्वतीमन्वाह तेन पुरुष्वतीस्तेन सेन्द्रास्तेन मिथुना' इति ॥ ऋग्गायत्रीसामिधेनीशब्दै स्त्रीलिङ्गैरभिधीयमानत्वात् स्त्रीत्वमेव । अत पुरुषत्वाय वृषन् शब्दवतीमृच ब्रूयात् । [५५]तेन पाठेन [५६]पुरुष्वती पुरुषवत्य [५७]सेन्द्रा इन्द्रिययुक्ता [५६]स्त्रीपुरुषमिथुनरूपा सपद्यन्ते । "ईडेन्य" (तैब्रा ३ ५ २) इत्येषाऽपि वृषण्वती, 'समभिरिष्यते वृषा' इत्यन्ते पठितत्वात् । "वृषो अग्नि" (तैब्रा ३ ५ २) इत्येषाऽपि वृषशब्दोपेतत्वात् वृषण्वती । [५७]तयोरप्युक्तप्रशसा द्रष्टव्या ॥ १५

१७–१७ ल हो– तमर्थयते त२ तदेव समर्थयते । १८ ल हो– गायत्रीत्वे । १९–१९ हो– °सबधदेवत, त२ ल– °सबधा देवता ।

५३ ड– इत्येव य । ५४–५४ आ– ततोऽनेन पठितेन पादेन, ड हो१–तत्तेन पादेन । ५५ आ– तेन त्व, ड– तत्तेन ५६ क ड हो– स्त्रीपुरुषरूपेण मिथुनरूपा । ५७ आ–तयोरप्येषा प्रशसा ।

अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यध्वरवतीमन्वाह

अग्नि । देवानाम् । दूत । आसीत् । उशना । काव्य । असुराणाम् । तौ । प्रजापतिमिति
५ प्रजा पतिम् । प्रश्नम् । ऐताम् । स । प्रजापतिरिति प्रजा पति । अग्निम् । दूतम् । वृणीमहे । इति । अभीति । पर्यावर्ततेति परि आवर्तत । तत । देवा । अभवन् । परेति । असुरा । यस्य । एवम् । विदुष । अग्निम् । दूतम् । वृणीमहे । इति । अन्वाहेत्यनु आह । भवति । आत्मना । परेति । अस्य । भ्रातृव्य । भवति । अध्वरवतामित्यध्वर वतीम् । अन्विति । आह ।

अग्निर्देवानामित्यादि ॥ दूत [20]हविषा देवसकाश [21]प्रापयिता । [v]देवाना [22]यतताम्
१० [v]अग्नि [v]दूत अभवत् । [v]असुराणा कवे पुत्र [v]उशना शुक्रो दूतोऽभवत् । अवन्ती(?) छान्दसमन्तोदात्तत्वम् । "ऋदुशनस्पुरुदस °" (पा ७ १ ९४) इत्युशनसोऽनडादेश । अथ [v]तौ [v]प्रजापतिं [v]प्रश्नम् [v]ऐताम् आवयो को यागे दूत्यमर्हतीति प्रजापतिसकाशम् [23]अगच्छताम् । "यजयाच°" (पा ३ ३ ९० ) इति कर्मणि नङ्प्रत्यय । विभक्तिव्यत्ययो या प्रश्नार्थं प्रजापतिमैतामिति । अथ पृच्छ्यमान प्रजापति "अग्निं दूत वृणीमहे" (तैब्रा २ ५ २)
१५ [v]इति इमामृच ब्रुवन्, अग्निमेव [v]अभि [v]पर्यावर्तत अग्निमेवालक्ष्य पर्यावृत्तोऽभवत् । [v]तत अग्नेरेव [24]दूत्यार्हत्वात् [25]तद्दूतका [v][26]देवा [v]अभवन्, असुराश्च पराभूता ॥ यस्यैवमित्यादि ॥ गतम् ॥

अग्निरिति ॥ [58]"अथ "अग्निं दूतम्" (तैब्रा २ ५ २) इत्येतामृच विधोपस प्रशंसति- 'अग्निर्देवाना दूत आसीदुशना काव्योऽसुराणा तौ प्रजापतिं प्रश्नमैतार स प्रजापतिरग्निं दूत वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन् पराऽसुरा यस्यैव विदुषोऽग्निं दूत वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य
१० भ्रातृव्यो भवति' इति ॥ देवा स्वकार्येष्वग्निं दूतत्वेन प्रेषयन्ति, असुरास्तु स्वये पुत्रम् [59]उशनसम् । [v]तौ उभावपि [v]प्रजापतिम् उपेत्य पृष्टवन्तौ । आवयोर्मध्ये [60]"सन्धिविग्रहादिकार्येषु कस्य दौत्यमुचितमिति[60]" । तदानीं [v]प्रजापतिः "अग्निं दूत वृणीमहे" [v]इति अनेन मन्त्रेणोत्तरमुवाच । उक्त्या चौशनस सकाशात् परावृत्याग्नेरभिमुखोऽभूत् । [v]तत देवानां विजयोऽभूदसुराश्च पराभूता । [v]एव [v]विदुष यजमानस्याप्यनेन मन्त्रेण स्वविजय शत्रुपराजयश्च भवति ॥

१५ २० तै३ सं हवि° ग्र । २१ सं हो- प्रापयिता । २२ मै- 'यतताम्' नास्ति । २३ त्रि सं हो- आगच्छताम् । २४ त३ मै४ सं हो- दूतार्ह° । २५ हो-न दूतका । २६ मै-एव

५८ इ- 'अथ' नास्ति । ५९ इ श हो१- पुत्रम् । ६०-६० इ- °कार्येषु क समुचित इति, हो१- °विग्रहेषु क समुचित इति ।

भ्रातृव्यमेवैतया (५) ध्वरति शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया
पवयति समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परि दधात्यस्कन्दाय यदत
ऊर्ध्वमभ्यादध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्

भ्रातृव्यम्। एव। एतया (५) ध्वरति। शोचिष्केश इति शोचि–केश। तम्। ईमहे।
इति। आह। पवित्रम्। एव। एतत्। यजमानम्। एव। एतया। पवयति। समिद्ध इति ५
सम्–इद्ध। अग्ने। आहुतेत्या हुत। इति। आह। परिधिमिति परि धिम्। एव। एतम्।
परीति। दधाति। अस्कन्दाय। यत्। अत। ऊर्ध्वम्। अभ्यादध्यादित्यभि–आदध्यात्।
यथा। बहि परिधीति बहि–परिधि। स्कन्दति। तादृक्। एव। तत्।

अध्वरवतीमिति॥ "समिध्यमानो अध्वरे" (तैब्रा ३ ५ २) इत्येताम्। ध्वरति
हिनस्तीति। ध्वृ मूर्छने। पवित्रमिति। शोचि सम्बन्धेन शुचित्वात् पवित्रमियमृक्॥ १०

परिधिमिति॥ "समिद्धो अग्न आहुत" (तैब्रा ३ ५ २) इतीयमृक् परिधिस्थानीया।
परिधान निधानसमापनम्। 'समिद्ध' इति च समाप्तिलिङ्गम्। अत एवानूयाजे वेदितव्या।
[27]परिधेर्बहि बहि परिधि। "अपपरिबहिरञ्चव" (पा २ १ १२) इत्यव्ययीभाव॥

अध्वरवतीमिति॥ "समिध्यमानो अध्वरे" (तैब्रा ३ ५ २) इत्येतामृच विशेषत
प्रशसति–'अध्वरवतीमन्वाह भ्रातृव्यमेवैतया ध्वरति' [61]इति॥ हिनस्तीत्यर्थ॥ १५

शोचिष्केश इति॥ तस्यामृचि तृतीयपाद प्रशसति–'शोचिष्केशस्तमीमह इत्याह पवित्र
मेवैतद्यजमानमेवैतया पवयति' इति॥ [62]मध्यपादे 'अग्नि पावक ईड्य' इति पावकशब्देनैव पवित्रत्व
विस्पष्टम्। अत्र [63]तु शोचि शब्देन शुचिहेतुना रश्मीनामुक्तिमभिप्रेत्य 'पवित्रम्' एतद्वाक्यमित्यभिधीयते।
तस्मात् 'एतया ऋचा 'यजमानम् 'एव [64]शोधयति। "समिद्धो अग्न आहुत" (तैब्रा ३ ५ २) इत्येषा
काचिदध्वरवती। 'देवान् यक्षि स्वध्वर' [65]इत्युक्तत्वात्। "आजुहोत" (तैब्रा ३ ५ २) इत्यसावप्य २०
ध्वरवती। 'अग्नि प्रयत्यध्वरे' इत्युक्तत्वात्। तयोरप्युक्तप्रशसा योजनीया। तदेव सर्वासामृचा
सामान्यतो विशेषतश्च प्रशसा दर्शिता॥

समिद्ध इति॥ यदुक्त सूत्रकारेण– "समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य
[66]सर्वमिध्मशेषमभ्यादधाति" (आपश्रौ २ १२ ६) इति तदेतत् हृदि निधाय "समिद्धो अग्ने"
(तैब्रा ३ ५ २) इति मन्त्र पुन प्रशसति–'समिद्धो अग्न आहुतेत्याह परिधिमेवैत परिदधात्य २५
स्कन्दाय यदत ऊर्ध्वमभ्यादध्याद्यथा बहि परिधि स्कन्दति तादृगेव तत्' इति। 'समिद्धो अग्ने'
इत्यनेन भूतार्थवाचिना [67]क्तप्रत्ययेन सामिधेनीसाध्यस्याग्निसमिन्धनस्य समाप्ति सूच्यते। परिसमाप्तये
धीयमान प्रक्षिप्यमाण काष्ठविशेष परिधि। तथा सति 'समिद्ध' इति समाप्तिसूचनात् 'एत
मन्त्र [68]परिधित्वेन स्थापितवान् भवति। स च परिधि [69]प्रक्षिप्यमाणाना समिधाम् 'अस्कन्दाय ३०

२७ त३ ल हो–'बहि' नास्ति।

६१ ख–'इति' नास्ति। ६२ शृ–मध्यपादे तु। ६३ आ–'तु' नास्ति। ६४ ह
हो१–पवयति। ६५ ढ शृ–इति श्रुतत्वात्। ६६ क–°मिद्धशेष°। ६७ क हा हो१–उक्त°।
६८ अ इ उ जो पा हा हो१–परिधित्वे। ६९ आ–प्रक्षिप्यमाण।

त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाꣳ सहरक्षा असुराणां त एतर्हि शꣳसन्ते मां वरिष्यते मामि(६)ति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां

त्रयः। वै। अग्नयः। हव्यवाहन इति हव्य - वाहनः। देवानाम्। कव्यवाहन इति कव्य - वाहनः। पितॄणाम्। सहरक्षा इति सह - रक्षाः। असुराणाम्। ते। एतर्हि। एति। शꣳसन्ते। माम्।
५ वरिष्यते। माम् (६)। इति। वृणीध्वम्। हव्यवाहनमिति हव्य - वाहनम्। इति। आह। यः। एव। देवानाम्।

त्रयो वा इत्यादि। "हव्येऽनन्तःपादम्" (पा ३·२·६६) इत्युभयत्र ञ्युट्, "कव्यपुरीषपुरीष्येषु ञ्युट्" (पा ३·२·६५)। [७]त्रयः अग्नेते [V]अग्नयः अस्मिन् काले [V]आ [V]शासन्ते प्रार्थयन्ते [२८-V]माम् अय[२८] [V]वरिष्यते [V]इति। तत्र "वृणीध्वं हव्यवाहनम्" (तैब्रा ३·५·२)
१० [V]इति वचनेन कव्यवाहादिव्युदासेन [V]देवानाम् अग्निर्हव्यवाहन एव वृतो भवति॥

आर्षेयमिति॥ ऋषेरपत्यम् [V]आर्षेयम्। "इतश्चानिञः" (पा ४·१·१२२) इति ढक्। [२९]आत्मीयगोत्र ऋषिः। तद्धितप्रत्ययान्तानामामन्त्रितविभक्त्या यथाप्रवरं [३०V]वृणीते सामिधेन्यनन्तरम्। यथा भृगूणाम्—"अग्ने महाꣳ असि ब्राह्मण भारत[३१]भार्गव च्यावनाप्नुवानौर्व जामदग्न्य" इति पञ्चार्षेयः [३२]प्रवरः क्रियते। अत्र भृग्वादिभिरिष्टोऽग्निरेव तत्तदपत्यतयोपचर्यते। बन्धोरिति।
१५ बन्धुभ्यो भृग्वादिभ्य एवं वृणानः [V]न [V]एति न च्युतो भवति। [V]अथो अपि च इदमार्षेयवरणम्

अविनाशाय भवति। [७०-]यत् यतः अस्मात्[-७०] मन्त्रपाठात् [V]ऊर्ध्वम् 'आ जुहोत' इति मन्त्रे समिधः [V]अभ्यादधात्। [V]यथा आज्यपुरोडाशादिहविषः परिधेर्बहिः पतनं विनाशाय संपद्यते [V]तादृग् [V]एव [V]तत् द्रष्टव्यम्। एवं [७१-]च "प्रणवे प्रणवे"[-७१] समिधमादधाति" (आपश्रौ २·१२·४) इति सूत्रकारेण प्रतिमन्त्रमवसानकालीने प्रणवे समिदाधानस्योक्तत्वात् 'समिद्धः' इति मन्त्रावसाने समिदेका स्वतः
२० प्रक्षेपणीया प्राप्ता। 'आजुहोत' इत्यस्य त्रिरावृत्त्या तिस्रः समिधस्तत्र प्रक्षेपणीयाः प्राप्ताः। तदेतच्चतुष्टयं 'समिद्धो अग्ने' इत्येतस्य पादस्य पाठकाल एव प्रक्षिपेदिति विधिरवसेयः॥

त्रय इति॥ चरमायामृचि [७२]हव्यवाहनमित्यग्निविशेषणं प्रशंसति— 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाꣳ सहरक्षा असुराणां त एतर्हि शꣳसन्ते मां वरिष्यते मामिति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीते' इति॥ देवादीनां संबन्धिनो हव्यवाहनादयः [V]अग्नयः प्रत्येकं
२५ [७३-V]माम् एव [V]वरिष्यते[-७३], [V]माम् एव वरिष्यते [V]इति एवमपेक्षन्ते। अतो [७४]देवाग्नेरेव वरणसिद्ध्यर्थं[-७४] [V]हव्यवाहनं [V]वृणीध्वम् [V]इति उच्यते॥

आर्षेयमिति॥ यदुक्तमाश्वलायनेन— "सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाꣳ असि ब्राह्मण भारतेति निगदेदावाहनाय। [७५-]यजमानस्यार्षेयान् प्रवृणीते[-७५] यावन्तः स्युः। परं परं [७६]प्रथमम्" (आश्वश्रौ

[२८]. तै२,ल,हो– प्रमायम्। [२९]. लं–आत्नीयगोत्र। [३०]. म४– प्रवृणीते। [३१]. हो–
३० भार्गवच्यवन°। [३२]. लं,हो– 'प्रवरः' नास्ति।

[७०-७०]. आ– यथेतस्मात्। [७१-७१]. ट–प्रति प्रणवे। [७२]. अ,इ,उ,जो,पा,हा– °वाहनमित्यग्नि विशेषेण, ना–°वाहनमग्नि विशेषेण। [७३-७३]. आ–'मामेव वरिष्यते' नास्ति। [७४-७४]. आ,हा– देवा अग्नेरेव वरणसिद्ध्यर्थं°। [७५-७५]. ट– यजमान आर्षेयान् प्रवृणुते। [७६]. क–'प्रथमम्' नास्ति।

तं वृ॑णीत आर्षे॒यं वृ॑णी॒ते॒ बन्धो॑रे॒व नैत्यथो॒ संत॑त्यै प॒रस्ता॑द॒र्वाचो॑ वृणी॒ते॒
तस्मा॑त् प॒रस्ता॑द॒र्वाञ्चो॑ म॒नु॒ष्या॑न् पि॒तरोऽनु॒ प्र पि॑पते ॥ ८ ॥
[ अग्ने महाङ्गाह् पञ्चदशानवीदन्वाहेतर्या वरिष्यते मामेकान्निश्चत्वा ]

तम्। वृ॒णी॒ते॒। आ॒र्षे॒यम्। वृ॒णी॒ते॒। ब॒न्धोः। ए॒व। न। ए॒ति॒। अथो॒ इति॑।
सं॒त॑त्या॒ इति॑ सं॒ऽत॑त्यै। प॒रस्ता॑त्। अ॒र्वाचः॑। वृ॒णी॒ते॒। तस्मा॑त्। प॒रस्ता॑त्। अ॒र्वाञ्चः॑। ५
म॒नु॒ष्या॑न्। पि॒तरः॑। अनु॑। प्रेति॑। पि॒प॒ते॒ ॥ ८ ॥ [ मैत्र काम कपिल ]

अस्य पुत्रादिसंतानसमृद्ध्यै भवति। यद्वा–'ऋषिणा हि देवा पुरुषमनुबुध्यन्ते' इति भृग्वादिभि प्रसिद्धै मन्त्रकृद्भि बन्धुभि क्रीयमाणैरयं बन्धुमान् भवति। ततो देवैरनुबुद्धो भवति, सन्तानवृद्धिश्च भवति।

परस्तादिति ॥ [v]परस्तात् पुरुषादारभ्य [v]अर्वाच अधस्तादवस्थितानृषीन् [v]वृणीते १० यथा– भृग्वादयो [v]जमदग्न्यन्ता। परशब्दात् पञ्चम्यन्तात् "दिक्शब्देभ्य[०]" (पा ५ ३ २७) इत्यादिना अस्तातिप्रत्यय। तस्मादिति। [v]परस्तात् [v]अर्वाञ्च [v]पितर [v]मनुष्यान् [v]प्रपिपते प्रकर्षेण [v]पिण्डभागितया अनुक्रमेण रक्षति। अपरे परे पुरुषान् भजन्ते, अपरे परित्यजन्ति। छान्दस श्लु आत्मनेपदं च ॥

इति द्वितीये पञ्चमे अष्टमोऽनुवाक ॥ १५

१ २ २७ १ ३ २ ) इति, [77]तदेतद्विधत्ते– 'आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै' इति ॥ ऋषेरपत्यम् [v]आर्षेयम् [78]आत्मीयगोत्रर्षीन्तद्धितप्रत्ययान्तानामन्त्रितविभक्त्या यथाप्रवर [v]वृणीते। यथा– "*अग्ने महाँ असि ब्राह्मण भारत। †भार्गव च्यावनाप्नवानौर्व जामदग्न्येति भृगुगोत्राणां पञ्चार्षेयं प्रवर" इति। अनेन तत्तदपत्यत्वाऽग्नि [79]उपचर्यते। एवं वृणान पुरुष [v]बन्धो भृग्वादे सकाशात् [v]न [v]एति नापगच्छति। अपि चेदमार्षेयवरणमस्य [80]पुत्रादिसंतानाय भवति ॥ २०

**परस्तादिति** ॥ [81]अस्मिन् वरणे प्रकारविशेषं विधत्ते– 'परस्तादर्वाचो वृणीते तस्मात् परस्तादर्वाञ्चो मनुष्यान् पितरोऽनु प्र पिपते' इति ॥ वर्तमानं यजमानमपेक्ष्य पूर्वभावी यो गोत्रप्रवर्तकस्तमारभ्य तदपत्यपरम्परया [v]अर्वाच [82]नीचान् [v]वृणीते। तथैव पूर्वमुदाहृत– 'भृगोरपत्यं च्यवनस्तस्यापत्यमाप्नवान तस्यापत्यम् [83]और्व तस्यापत्यं जमदग्निस्तस्य [84]संततिं यजमान' इति। तदेतदर्वाक्त्वम्। यस्माद्धोता पूर्वभाविनमारभ्यार्वाचो वृणीते [v]तस्मात् एव कारणाल्लोकेऽपि पूर्वपूर्वभाविन [v]पितर उत्तरोत्तरभाविन २५ पुत्राननुक्रमेण पालयन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाक ॥

३३ त नि हो– जमदग्न्यन्तात्, रु– जमदग्न्यन्तान्। ३४ तर मै रु हो– क्रियाभागि[०]।

७७ हा–तदेतत् अभिधत्ते। ७८ ड–[०]गोत्रर्षि तद्धितप्रत्ययान्तानामतीतविभक्त्या। *(द्र तैब्रा ३० ३ ५ ३)। †(द्र आपश्रौ २४ ५ १२)। ७९ क हा–उपचर्येत। ८० अ इ उ को ना पा हा पुत्रसंतानाय। ८१ अ इ उ को ना पा हा–वंशिन्। ८२ ड–'नीचान्' नास्ति। ८३ भा ड–और्व। ८४ भा–संतति।

अग्ने॑ म॒हा२ऽ अ॒सीत्या॑ह म॒हान् ह्ये॑ष यद॒ग्निर्ब्रा॑ह्मणेत्या॑ह ब्राह्म॒णो ह्ये॑ष भार॒तेत्या॑ह्ये॒ष हि दे॒वेभ्यो॑ ह॒व्य भर॑ति दे॒वेद्ध॒ इत्या॑ह दे॒वा ह्ये॑तमैन्ध॑त

---

अग्ने॑। म॒हान्। अ॒सि॒। इति॑। आ॒ह॒। म॒हान्। हि। ए॒ष । यत्। अ॒ग्नि । ब्रा॒ह्म॒ण। इति॑। आ॒ह॒। ब्राह्मण । हि। ए॒ष । भा॒र॒त। इति॑। आ॒ह॒। ए॒ष । हि। दे॒वेभ्य॑ । ह॒व्यम्। भर॑ति। दे॒वेद्ध॒ इति॑ दे॒व इ॒द्ध॒ । इति॑। आ॒ह॒। दे॒वा । हि। ए॒तम्। ऐन्ध॑त। ५

---

'अग्ने महा२ऽ असि' इत्यादिना प्रवरमन्त्रपदानि व्याचष्टे॥ महान् ह्येष इति। स्वभावत एवेति भाव। ब्राह्मणो ह्येष इति। [१]यत् [२]अग्नि एव जात्या [३]ब्राह्मण, ब्रह्मणो मुखात् द्वयोरपि जातत्वात्। ब्रह्मणोऽपत्यत्वेन वा स्तुति। "ब्राह्मोऽजातौ" (पा ६ ४ १७१) इति व्यत्ययेन प्रवर्तते। एष हीति। [४]हविषा भरणात् भारत, भरतानामृत्विजामपत्यत्वात् भारत॥

१० अथ प्रवरमुक्त्वा निविदोऽन्वाह– 'देवेद्ध' इत्याद्या॥ ता व्याचष्टे–'देवा हि' इति। [५]देवा ऋत्विज इन्द्रादयो वा [३]एतम् [५]ऐन्धत दीपयन्ति, तस्मात् [५]देवेद्ध। "तृतीया कर्मणि"

---

द्वितीयाद्या सामिधेन्यो व्याख्याता अष्टमे स्फुटम्॥

अथ नवमे [१]प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च व्याख्यान प्रवर्तते। ते च [२]निगदादयो मन्त्रकाण्डे (तैब्रा ३ ५ ३ ४) समाम्नाता। कल्प – "अथ निवित्पदान्यन्वाह देवेद्धो मन्विद्ध इति सप्तमे

१५ स्वनिति अथ चतसृषु" (द्र आपश्रौ २४ ११ १७ २४ १२ १*) इति॥ पाठस्तु–"अग्ने महा२ऽ असि ब्राह्मण भारत। असावसौ। देवेद्धो मन्विद्ध। ऋषिष्टुतो विप्रानुमदित। कविशस्तो ब्रह्मसꣳशितो घृताहवन। प्रणीर्यज्ञानाम्। रथीरध्वराणाम्। अतूर्तो होता। तूर्णिर्हव्यवाट्। आस्पात्र जुहूर्देवानाम्। चमसो देवपान। अरा२ऽ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसि। आवह देवान् यजमानाय" (तैब्रा ३ ५ ३)॥ अत्र 'अग्ने महान्' इत्यारभ्य 'असावसौ' इत्यन्त प्रवरमन्त्र। अवशिष्टा निविन्मन्त्रा। तेषामर्थं [३]ब्राह्मणव्याख्यानमुखेनैव

२० स्पष्टीकरिष्याम॥

अग्न इति॥ [४]तत्र प्रवरमन्त्रार्थं दर्शयति–'अग्ने महा२ऽ असीत्याह महान् ह्येष यदग्निर्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्य भरति' इति॥ [५]अग्नि इति [५]यत् [५]एष यस्मात् सर्वाहुत्याधारत्वेन [५]महान् तस्मान्मन्त्रे [५]महान् [५]असि [५]इति उच्यते। यस्माद्ब्राह्मणवर्णाभिमानी तस्मात् [५]ब्राह्मण [५]इति स्तूयते। यस्मात् [५]एष [५]देवेभ्य [५]हव्य [५]भरति धारयति तस्मात् [५]भारत इति स्तूयते। मन्त्रे

२५ येयम् 'असावसौ' इति वीप्सा तेन (तया) भृग्वादीनामृषीणा नामनिर्देशोऽभिप्रेत। स च 'भार्गव च्यावन' इत्यादिना पूर्वानुवाक एवास्माभिरुदाहृत॥

देवेद्ध इति॥ निवित्पदेषु सप्तसु [१]प्रथमपदस्यार्थं दर्शयति– 'देवेद्ध इत्याह देवा ह्येतमैन्धत' इति॥ यस्मात् [१]देवा स्वकीयेषु यागेषु [१]एतम् अग्निम् [१]ऐन्धत प्रज्वालितवन्तस्तस्मात् [१]देवेद्ध [१]इति उच्यते॥

---

३० १ तैर ल– 'ब्राह्मण' इत्यस्यानन्तरम् 'अग्नि'। २ हो– हविषा। ३ तैर ल हो– एतम्।

१ ट गृ हो र– निवित्पदानाम् आवाहन°। २ ट गृ हो र– निविदादय। *[ अत्र कौषीतकिब्राह्मणम् (३ ३ १४ १७) अपि द्रष्टव्यम्।]। ३ ट– ब्राह्मणमुखेनैव। ४ क– अत्र। ५ आ– प्रथमपदस्यार्थं।

मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्द्धर्षिष्टुत इत्याहर्षयो ह्येतमस्तुवन् विप्रानुमदित इत्याह (१) विप्रा ह्येते यच्छुश्रुवांसः कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवांसो ब्रह्मसंशित इत्याह ब्रह्मसंशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा

मन्विद्ध इति मनु-इद्ध । इति । आह । मनुः । हि । एतम् । उत्तर इत्युत्-तरः । देवेभ्यः । ऐन्द्ध । ऋषिष्टुत इत्यृषि-स्तुत । इति । आह । ऋषयः । हि । एतम् । अस्तुवन् । विप्रानुमदित इति विप्र-अनुमदित । इति । आह (१)। विप्राः । हि । एते । यत् । शुश्रुवांसः । कविशस्त इति कवि-शस्त । इति । आह । कवयः । हि । एते । यत् । शुश्रुवांसः । ब्रह्मसंशित इति ब्रह्म-संशित । इति । आह । ब्रह्मसंशित इति ब्रह्म-संशितः । हि । एषः । घृताहवन इति घृत-आहवन । इति । आह । घृताहुतिरिति घृत-आहुतिः । हि । अस्य । प्रियतमेति प्रिय-तमा । १०

(पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । मनुर्ह्येतमिति । [४]मनुः [५]हि [५]एतम् [४]देवतार्थम् [४]ऐन्द्ध [६]देवेभ्यः । अपि वा मनुः [६-६]उत्तरः एतस्मात् [७]मन्विद्ध । पूर्ववत् स्वरः । एवं सर्वत्र । [७]ऋषयः [७]दर्शनवन्तोऽपि एनम् [७]अस्तुवन् । विप्रा हीति । [७]विप्रा मेधाविनः ये [७]शुश्रुवांसः श्रुतार्थाः [७]गृहीतवेदार्थाः तैरप्यनुमदित अनुमोदितः अनुक्रमेण वा स्तुतः । मद तृप्तियोगे, मन्वसेर्वा छान्दसो नुमभावः । १५

कवयो हीति ॥ [७]कवयः क्रान्तदर्शना सूक्ष्मदृशः तेऽपि श्रुतवन्त एव । तैरपि शस्तः स्तुतः । ब्रह्मसंशितो हीति ॥ ब्रह्मणा ऋगादिना मन्त्रेण परवस्तुनैव वा संशितः सम्यक् तीक्ष्णीकृतः । घृताहुतिर्हीति । [८]घृतमाहवनमाहुतिः [९]प्रीतिहेतुरस्येति [९]घृताहवनः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

मन्विद्ध इति ॥ [१]द्वितीयपदस्यार्थं दर्शयति— 'मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्द्ध' २० इति ॥ [२]देवेभ्यः [२]उत्तरः देवैरिन्धनादूर्ध्वं स्वकीययागे [२]मनुः [२]ऐन्द्ध ॥

ऋषिष्टुत इति ॥ उत्तरेष्वपि [७]"पञ्चसु पदेषु" प्रसिद्धार्थतां हिशब्दो द्योतयति— 'ऋषिष्टुत इत्याहर्षयो ह्येतमस्तुवन् विप्रानुमदित इत्याह विप्रा ह्येते यच्छुश्रुवांसः कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवांसो ब्रह्मसंशित इत्याह ब्रह्मसंशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा' इति ॥ [२]शुश्रुवांसः श्रुताध्ययनसंपन्ना जात्या [२]विप्रा विद्यया [८]विबुधाः [२]कवयः च भवन्ति तैरयमनुमदितस्तोषितः २५ शस्तः स्तुतश्च । ब्रह्मणा मन्त्रेण संशितस्तीक्ष्णीकृतः । घृतरूपमाहवनम् [२]आहुतिः यस्यासौ [२]घृताहवनः ॥

४ तउ ल हो– देवार्थम् । ५ मै– उत्तरो मनुः । ६–६ मै४– हि एनम् । ७ हो– गृहीतपदार्थाः । ८ तउ ल– घृताहवन° ९ हो– प्रीतिर्हेतु° ।

१ अ इ उ जो ना पा हा– °पदस्यार्थं । ७–७. क–पञ्चपदेषु हा–पञ्चसु पादेषु । ८ ह १/२ हो१– 'विबुधा' नास्ति । ९ ङ– वीर्यम् ।

प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वराणामित्याहैष हि देवरथोऽतूर्तो होतेत्याह न ह्येतं कश्चन ( २ ) तरति तूर्णिर्हव्यवाडित्याह सर्वꣳ ह्येष तरत्यास्पात्रं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां

प्रणीरिति प्र-नीः । यज्ञानाम् । इति । आह । प्रणीरिति प्र-नीः । हि । एषः । यज्ञानाम् । रथीः । अध्वराणाम् । इति । आह । एषः । हि । देवरथ इति देव-रथः । अतूर्तः । होता । इति । आह । न । हि । एतम् । कः । चन ( २ ) । तरति । तूर्णिः । हव्यवाडिति हव्य-वाट् । इति । आह । सर्वम् । हि । एषः । तरति । आस्पात्रम् । जुहूः । देवानाम् । इति । आह । जुहूः । हि । एषः । देवानाम् ।

प्रणीरिति । प्रकर्षेण यज्ञानां नेता उत्पादयिता ॥

१० देवरथ इति ॥ अध्वराणां देवान् प्रति रंहयिता देवरथः । रंहणात् रथीः । औणादिक इप्रत्ययो वर्णविकारः । न हीति । कश्चिदप्येनं न तरति नातिक्रमते । तरतेः कर्मणि निष्ठाया छान्दसो नत्वाभावः । नञ्समासे "परादिश्छन्दसि॰" ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । केनचिदप्यतिक्रमितुं न शक्त. । होता देवानामाह्वाता । सर्वं हीति । तरतेः कर्तरि औणादिको निप्रत्ययः ( द्र. उ ५०० ), क्तिन्येव वा "ऋकारल्वादिभ्यः

१५ क्तिन्निष्ठावद्भवति" ( पा ८·२·४४ वा १ ) इति निष्ठावद्भावः, "रदाभ्याम्॰" इति णत्वम् । सर्वं तरितुमतिक्रमितु समर्थः, हविषा वोढारम् । जुहूर्हीति । जुहूस्थानीयोऽयं देवानां, यथा जुह्वाऽसौ हविः प्राप्यते एवमग्निना देवेषु हविः प्राप्यते इति । [10]विशेषस्वरय आस्पात्रत्वम् । अयस्पात्रवत् दृढतरा अग्निलक्षणा जुहूरिति ॥

प्रणीरिति ॥ अनुच्छ्वासेन पठनीयानां सप्तपदानामर्थं दर्शयित्वोच्छ्वासादूर्ध्वं पठनीयानां

१० चतसृणां निविदामर्थं दर्शयति– 'प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वराणामित्याहैष हि देवरथोऽतूर्तो होतेत्याह न ह्येतं कश्चन तरति तूर्णिर्हव्यवाडित्याह सर्वꣳ ह्येष तरति' इति ॥ यज्ञानां [10]प्रणेतृत्वमग्नौ प्रसिद्धम् । रथीः देवानां हविर्वहनाय अध्वराणां [11]संबन्धी रथोऽयमग्निः । यस्मादाह्वातारम् एतम् अपि कोऽपि देवो न तरति नातिक्रामति तस्मादयम् अतूर्तः होता इति उच्यते । यस्मात् सर्वम् अपि देवमयं [12]हविर्वहनात् तरति आप्नोति तस्मात् तूर्णिः हव्यवाट् इति उच्यते ॥

१५ आस्पात्रमिति ॥ एताभ्यश्चतसृभ्यो निविद्भ्य ऊर्ध्वमुच्छ्वासं कृत्वा पश्चात् पठनीयानां चतसृणां [13]निविदामर्थं दर्शयति– 'आस्पात्रं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां चमसो देवपान इत्याह

१०. तै३.सं.हो– छान्दसे । ११–११. तै३.सं.हो–विशेषस्य ।

१०. ध्या.क.ना– नेतृत्व॰; अ.इ.उ.क.जो.पा.हा.हो१ –होतृत्व॰ । ११. अ.इ.उ.जो.पा.हा– धीत॰ । १२. क.३– ॰वहनेन । १३. अ.इ.उ.षो.ना.पा.हा– 'निविदाम्' नास्ति ।

चमसो देवपान इत्याह चमसो ह्येष देवपानोऽरान् इवाग्ने नेमिर्देवाः स्त्वं परिभूरसीत्याह देवान् ह्येष परिभूर्यद्ब्रूयादा वह देवान् देवयते यजमानायेति भ्रातृव्यमस्मै ( ३ ) जनयेदा वह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयत्य-

चमस । देवपान इति देव-पान । इति । आह । चमस । हि । एष । देवपान इति देव-पान । अरान् । इव । अग्ने । नेमि. । देवान् । त्वम् । परिभूरिति परि भू । असि । इति । ५ आह । देवान् । हि । एष । परिभूरिति परि भू । यत् । ब्रूयात् । एति । वह । देवान् । देवयत इति देव यते । यजमानाय । इति । भ्रातृव्यम् । अस्मै (३) । जनयेत् । एति । वह । देवान् । यजमानाय । इति । आह । यजमानम् । एव । एतेन । वर्धयति ।

चमसो हीति ॥ देवा येन सोम पिबन्ति स [v]देवपान [v]चमस । तत्स्थानीयोऽयमग्नि । देवान् हीति । [v]एष हि [v]देवान् परित सर्वतो भवति परिगृह्णाति व्याप्नोति [v]अरान् [v]इव [v]नेमि १० तस्मात् [v]देवान् [v]परिभू [v]असि [v]इति उच्यते । "अभित परित °" (द्र पामा २ ३ २ धा १) इति द्वितीया, छान्दसस्तसि लोप ॥

[१२]यद्ब्रूयादिति ॥ "आवह देवान् यजमानाय" ( तैभा ३ ५ ३ ) इत्यन्ता निवित् । शाखान्तरेषु तु 'आवह देवान् देवयते यजमानाय' इति पाठ । सोऽनेन निन्द्यते । यदि [v]ब्रूयात् [v]देवयते [v]यजमानाय [v]इति [v]भ्रातृव्यम् [v]अस्मै यजमानाय १५ [v]जनयेत् । तथा हि– [v]यजमानाय [v]देवान् [v]आवह [v]इति एव यावद्देवानामुपादाने सिद्धे पुन देवानात्मन इच्छते यजमानायेति विशेषणोपादान देवव्यतिरिक्तानामनिष्यमाणतया यजमानस्य [१३]भ्रातृव्यसत्त्व [१४]सूचयेत् । ततश्च भ्रातृव्यवान् [१५]यजमान स्यात् । तस्मात् 'देवयते' इति पद नोपादेयम् । ततश्च भ्रातृव्यशङ्काया अभावात् [v]यजमान [v]वर्धयति [v]एव ऐश्वर्येण ॥

चमसो ह्येष देवपानोऽरान् इवाग्ने नेमिर्देवास्त्वं परिभूरसीत्याह देवान् ह्येष परिभूर्यद्ब्रूयादा वह देवान् २० देवयते यजमानायेति भ्रातृव्यमस्मै जनयेदा वह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयति' इति ॥
[v]एष अग्नि [v]देवाना जुहूसदृशो जुह्वामिवास्मिन् हविःप्रक्षेपात् । न चास्य दारुमयजुहूवच्छैथिल्य किं तु [v]आस्पात्र लोहपात्रवत् [v]दार्ढ्यमित्यर्थ । यथा मनुष्याणा सोमपानहेतु [v]चमस [v]तथा देवाना पानसाधनचमसस्थानीयोऽयमग्नि । हे [v]अग्ने, त्व यथा शकटचक्रस्थितान् कुलालचक्रस्थितान् वा तिर्यक्कीलरूपान् [v]अरान् [v]नेमि परितो व्याप्नोति तथा देवाना [v]परिभू परितो व्यासवान् [v]असि । २५ तदत्र यदि [v]ब्रूयात् तदा होता यजमानस्य चतुर्थ्यां निविदि 'देवयते' इति पद शाखान्तरे पठ्यते ।

१२ ल– यदि ब्रूया° । १३ लहो – भ्रातृव्यत्वम् । १४ गे – सूचयति । १५ मे– 'यजमान' इत्यस्यानन्तर 'च' ।

१४ भा– दृढमि° । १५ अ इ उ जो पा– तया त्व, हा– तथा तथा त्व ।

-ग्निम॒ग्न आ व॑ह॒ सोम॑मा व॒हेत्या॑ह दे॒वता॑ ए॒व त॑द्यथापू॒र्वमुप॑ ह्वयत॒

अ॒ग्निम्। अग्ने॑। एति॑। व॒ह॒। सोम॑म्। एति॑। व॒ह॒। इति॑। आ॒ह॒। दे॒वताः॑। ए॒व। तत्। य॒था॒पू॒र्वमिति॑ यथा-पू॒र्वम्। उपेति॑। ह्व॒य॒ते॒।

अथ निविद उक्त्वा 'अग्निमग्न आवह' इत्यादिना देवता आवाहयति– यथापूर्वमिति ॥
५ अग्न्याद्या यागदेवता अनुक्रमेणाग्निनाऽऽवाहयति ॥

भ्रातृव्यं जनयेत्। देवानिच्छतीति देवयंस्तस्मै देवयते यजमानाय। एतत्पदप्रयोगेणान्यः कश्चिदेतदीयान् देवानिच्छतीति [१६]प्रतिभाति। तदेतद्भ्रातृव्यस्योत्पादनम्। तस्मात् तत्पदं परित्यज्यास्मै यजमानाय देवान् आ वह इति एतावदेव वाक्यक्षेपात् तेन [१७]एव एतेन[१७] यजमानं वर्धयति वृद्धिं प्रापयति ॥

अग्निमिति ॥ कल्पः– "देवतां देवतामावाह्य ब्यनिस्यग्निमग्न आवह सोममावहाग्निमावह
१० प्रजापतिमित्युपांश्वावहेत्युच्चैर्यदेवत्यो वा भवत्यग्नीषोमावावहेन्द्राग्नी आवहेन्द्रमावह महेन्द्रमावह देवां आज्यपां आवहाग्निं होत्रायाऽऽवह स्वं महिमानमावहेति न स्वं [१८]महिमानमावहेदा चाग्ने[१८] देवान् वह सुयजा च यज जातवेद इत्युक्त्वा" ( द्र. आश्वश्रौ १.३.७-२२ ) इति ॥ अत्राऽऽवाहननिगदो मन्त्रकाण्डे ( तैब्रा ३.५.३ ) समाम्नातः [१९]सर्वोऽपि सूत्रकारेण[१९] पठितः ॥

*[ तस्य सर्वस्य तात्पर्यं दर्शयति– 'अग्निमग्न आवह सोममावहेत्याह देवता एव तद्यथापूर्व-
१५ मुपह्वयते' इति ॥ तत् तेनाऽऽवाहननिगद आवहेति पाठेनाऽऽज्यभागादिसर्वयागदेवता अनुक्रमेण [२०]एव आह्वयति[२०]। ]*।

हे आहुत्याधारभूताग्ने, प्रथमाज्यभागदेवतामग्निमावह। द्वितीयाज्यभागदेवं सोममावह। पौर्णमास्याममावास्यायां च प्रथमपुरोडाशदेवमग्निमावह। [२१]पौर्णमास्यामुपांशुयागदेवं प्रजापतिमावह। प्रजापतिपदं शनैरुच्चार्याऽऽवहेतिपदमुच्चैः [२२]उच्चारयेत्। पौर्णमास्यां [२३]द्वितीयपुरोडाशदेवरूपावग्नीषोमावावह।
२० अमावास्यायामसांनाय्यिनो द्वितीयपुरोडाशदेवत्वेनेन्द्राग्नी आवह। अगतश्रियः सांनाय्यदेवमिन्द्रमावह। गतश्रियो महेन्द्रमावह। आज्यपान् प्रयाजानूयाजदेवानावह। [२४]अग्निं होत्राय होमस्य[२४] [२५]स्विष्टकृत्करणाय। आवाहनविषयाणामुक्तानां देवानां यो यस्य देवस्य स्वकीयो महिमा सामर्थ्यातिशयस्तं महिमानमावह। अत्र हविर्भुज एव देवानभिप्रेत्य स्वं महिमानमित्युच्यते, न त्वावाहनकर्तुरग्नेर्महिमानं तस्याऽऽवाहनविषयत्वाभावात्, इति कल्पसूत्रस्यार्थः ॥ जातानि वेदांसि ज्ञानानि यस्मादसौ जातवेदाः। सर्वज्ञोऽयं
२५ सर्वदेवमहिमाभिज्ञत्वादित्यर्थः। तादृश हेऽग्ने, त्वं देवानावह च सुयजा शोभनेन यज्ञेन यज च। न केवलमावाहनं कर्तव्यं, किं तु हविष्प्रापणलक्षणो यागोऽपि त्वयैव [२६]कर्तव्यः। अत्र सूत्रे प्रजापतिमित्युपांश्वावहेत्युच्चैर्यदेवत्यो वा भवतीत्युक्तं तच्चोपांशुयाजे प्रजापतिविष्ण्वग्नीषोमाणां विकल्पाभिप्रायेण द्रष्टव्यम्। एतस्याऽऽवाहननिगदस्य तात्पर्यं संक्षेपेण दर्शयति– 'अग्निमग्न आ वह सोममा वहेत्याह देवता एव

१६. आ हा– प्रीतिमा भवति। १७–१७. क हो१–एव, हा– एव तेन; ग्रे–एव एनम्; ख– एनम्।
३० १८–१८. क– °नमावहादावग्ने। १९–१९. क– सर्वोऽन्यत्र नास्ति। *–* [ग्रन्थोऽयमधिक इवाभाति।]। २०–२०. आ,क– ह्वयो। २१. हा– °यागे देवं, ग्रे– °याजदेवं। २२. ख– उच्चरेत्। २३. आ– °देवमग्नीषोमरूपमावह। २४–२४. हा–अग्निहोमस्य। २५. आ,हा–स्विष्टकरणाय। २६. ग्रे,हो१– कार्यः; ख– कार्यं इत्यर्थः।

आ चा॑ग्ने दे॒वान् वह॑ सु॒यजा॑ च यज जातवेद॒ इत्या॑हा॒ग्निमे॒व तत् सꣳ श्य॑ति॒ सो॑ऽस्य॒ सꣳशि॑तो दे॒वेभ्यो॑ ह॒व्यं व॑हत्य॒-

---

एति॑ । च॒ । अ॒ग्ने॒ । दे॒वान् । वह॑ । सु॒यजेति॑ सु॒ यजा॑ । च॒ । य॒ज । जा॒तवे॒द॒ इति॑ जात॒ वे॒द । इति॑ । आ॒ह॒ । अ॒ग्निम् । ए॒व । तत् । समिति॑ । श्य॒ति॒ । स॒ । अ॒स्य॒ । सꣳशि॑त॒ इति॑ स॒ शि॒त॒ । दे॒वेभ्य॑ । ह॒व्यम् । व॒ह॒ति॒ । ५

---

आ चाग्न इति । आ वह देवान् सुयजा त्वम् अभिनेन च शोभनेन च यागेन च देवान् यज हे जातवेद, त्व खलु जाताना वेदिता जातवेदा जातधनो वा इत्येवम् उपश्लोकनेन अग्नि सꣳश्यति सम्यक् तीक्ष्णीकरोतीयेन । स चाग्नि [16]तथोऽग्नीकृत तुष्टो देवस्थान प्रापयति ॥

---

यथापूर्वमुप ह्वयते' इति ॥ तत् तेनाऽऽवाहननिगदेनाऽऽज्यभागादिस्विष्टकृदन्तदेवता सर्वा [27]अपि क्रमेण हुतवान् भवति । [28]प्रथममाज्यभागदेवौ तथा प्रधानदेवता इत्यादिक्रम 'यथापूर्वम्' [29]इत्यनेन उच्यते ॥ १०

एति ॥ आवाहननिगदावसाने [30]यदेतन्निगमनवाक्य तस्य तात्पर्य दर्शयति– 'आ चाग्ने देवान् वह सुयजा च यज जातवेद इत्याहाग्निमेव तत् सꣳश्यति सोऽस्य सꣳशितो देवेभ्यो हव्य वहति' इति ॥ तत् तेन वाक्यपाठेन अग्निम् एव सꣳश्यति [31]तीक्ष्णीकरोति । स अग्निस्तीक्ष्णीकृतोऽप्रमत्त सन् [32]अस्य यजमानस्य हव्य देवेभ्य क्रमेण वहति ॥ १५

कल्प –"अथ स्रुगादापनेन स्रुचावादापयत्यग्निर्होता वेत्वित्यनुवाकेनाध्वर्युर्जुहूपभृतौ स्रुचावादत्ते" (द्र आपश्रौ १ ४ ९ १०) इति । "घृतवति शब्दे जुहूपभृतावादाय" (आपश्रौ २ १७ १) इत्याध्वर्यव सूत्रे [33]दर्शितवान् । होता तु– "घृतवतीमध्वर्यो स्रुचमास्यस्व" (तैब्रा ३ ५ ४) इत्यनेन शब्देन युक्तम् अनुवाक पठति । तदिद स्रुचोरादापनम् । सोऽयमनुवाको मन्त्रकाण्डे (तैब्रा ३ ५ ४) समाम्नात । तस्य पाठस्तु– "अग्निर्होता वेत्वग्नि । होत्र वेत्तु प्राविन्नम् । स्मो वयम् । साधु ते यजमानदेवता । घृतवती मध्वर्यो स्रुचमास्यस्व । देवायुव विश्ववाराम् । ईडामहै देवा° ईडेन्यान् । नमस्याम नमस्यान् । यजाम यज्ञियान्" (तैब्रा ३ ५ ४) इति । अयमग्निर्होता होमस्य कर्ता । तथा चान्यत्र मन्त्रब्राह्मण [34]आम्नायते– "अग्ने यष्टरिद नम इत्याह । अग्निर्वै देवाना यष्टा" (तैब्रा ३ ३ ७) इति । अतोऽयमग्निर्वेत्तु होमकर्म जानातु । २०
तदेव [35]वेदनमुत्तरवाक्ये स्पष्टीक्रियते । प्रकृष्टमविन्न फलदानरूपमस्माद्रक्षण यस्मिन् होमानुष्ठाने तदिद प्राविन्नम् । तादृश होत्र होमानुष्ठान वेत्तु होमकर्म जानातु । न केवल दैव्यस्य होतुरग्नेरुपरि भार प्रक्षिप्यते किं तु वय स्मो मनुष्यहोतारो [36]वयमप्यत्र वर्तामहे । अतो वयमपि [37]होमकर्मज्ञानवन्त [illegible] । हे यजमान, २५

---

१६ मै४– तथा स्थूलीकृत ।

---

२७ आ ङ– 'अपि' नास्ति । २८ आ क हा हो१– प्रथमाज्य° । २९ आ– इत्यादिना । ३०. अ ङ ठ पा हा– °वाक्य । ३१ ङ श हो१– °करोत्येव । ३२ आ– तस्य । ३३ ङ– अभिहितवान् ग्ट– अभिहितत्वात् । ३४ आ–आम्नातम् । ३५ आ– °वाक्येन (ग) । ३६ ङ– वय च । ३७ होमकर्म जानन्त । ३०

-ग्निर्होते(४)त्याहा॒ग्निर्वै दे॒वाना॒ꣳ होता॒ य ए॒व दे॒वाना॒ꣳ होता॒ तं वृ॑णी॒ते स्मो व॒यमित्या॑हा॒ऽऽत्मान॑मे॒व स॒त्त्वं ग॑मयति सा॒धु ते॑ यजमान दे॒वतेत्या॑हा॒ऽऽशिष॑मे॒वैतामा शा॑स्ते॒ यद्ब्रू॒याद्योऽग्निꣳ होता॑रमवृ॒था इत्य॒ग्निनो॑भ॒यतो॒ यज॑मान॒ं परि॑ गृह्णीयात्

अ॒ग्निः। होता॑ (४)। इति॑। आ॒ह॒। अ॒ग्निः। वै। दे॒वाना॑म्। होता॑। यः। ए॒व। दे॒वाना॑म्। ५ होता॑। तम्। वृ॒णी॒ते॒। स्मः। व॒यम्। इति॑। आ॒ह॒। आ॒त्मान॑म्। ए॒व। स॒त्त्वमिति॑ सत्-त्वम्। ग॒म॒य॒ति॒। सा॒धु। ते॒। य॒ज॒मा॒न॒। दे॒वता॑। इति॑। आ॒ह॒। आ॒शिष॒मित्या॑-शिष॑म्। ए॒व। ए॒ताम्। एति॑। शा॒स्ते॒। यत्। ब्रू॒यात्। यः। अ॒ग्निम्। होता॑रम्। अवृ॑थाः। इति॑। अ॒ग्निना॑। उ॒भ॒यतः॑। यज॑मानम्। परीति॑। गृ॒ह्णी॒या॒त्।

[17]"स्मः स्याम "वयं होतारः सर्वदा तव "इति मन्त्रार्थं दर्शयति। आशिषमिति॥ हे
१० "यजमान, इज्यमाना "देवता तव साधयित्री अभिमतानाम् इत्येताम् "आशिषम् अनेन "आ

ते तव हविःस्वीकर्त्री देवता साधु फलं ददात्विति शेषः। हेऽध्वर्यो, [38]"घृतपूर्णां स्रुचं"[38] जुहूमास्यस्वाऽऽक्षिप स्वीकुर्वित्यर्थः। कीदृशीं स्रुचम्? देवायुवं देवान् यौति मिश्रयतीति देवायुस्तादृशीम्। [39]"विश्ववारां विश्वान् सर्वान् राक्षसकृतान् विघ्नान् वारयतीति विश्ववारा तादृशीम्। ईडेन्यान् स्तुतिप्रियान् मनुष्यान् [40]"वयं स्तुमः। नमस्यान् नमस्कारप्रियान् पितॄन् [41]"नमस्कुर्वाम। यज्ञियान् यज्ञप्रियान् देवान् यजाम॥

१५ अग्निरिति॥ अग्नेर्होतृत्वं वेदेषु प्रसिद्धमित्येतत् दर्शयति–'अग्निर्होतेत्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते' इति॥

स्म इति॥ दैव्यस्य होतुः साहाय्यमाचरितुं मानुषस्य स्वस्य [42]"सद्भाव इत्येतत् दर्शयति–'स्मो वयमित्याहाऽऽत्मानमेव सत्त्वं गमयति' इति॥

साध्विति॥ ददात्वित्येतादृशेनाशीरर्थेन [43]"वाक्यपूरणम् इत्यभिप्रायं"[43] दर्शयति–'साधु ते २० यजमान देवतेत्याहाऽऽशिषमेवैतामा शास्ते' इति॥ शाखान्तरे 'साधु ते यजमान देवता' इत्यस्योपरि 'योऽग्निं होतारमवृथाः' (द्र. आपश्रौ १·४·१०) इति किंचिद्वाक्यमाम्नातम्। तस्यायमर्थः– हे यजमान, [44]"परत्वमग्निं होतारमवृथा"[44] होतृत्वेन वृतवानसि तस्य तव साधु ददात्विति॥

यदिति॥ तमिमं शाखान्तरपाठं दूषयति–'यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परि गृह्णीयात् प्रमायुकः स्यात्' इति॥ 'अग्निर्होता वेत्त्वग्निः' इत्युपक्रमे पठितम्, 'साधु ते २५ यजमान देवता' इत्यस्मादप्यूर्ध्वं यदि 'अग्निर होतारम्' इति "ब्रूयात् तदोभयोः पार्श्वयोर्यजमानः "अग्निना परिगृहीतो भवेत्। ततो दाहाभिनयेन म्रियेत। तस्माच्छाखान्तरपाठो नाऽऽदर्तव्यः॥

१७. तै३.लं– 'स्मः' नास्ति।

३८–३८. द– घृतपूर्णां। ३९. ग– 'विश्ववारां' नास्ति। ४० अ.इ.उ.जो.ना.पा.हा– 'वयं' नास्ति। ४१. आ– नमस्कुर्मः। ४२. गं– सद्भावकथनम्। ४३. आ– वाक्यपूरणाय ३० तात्पर्यं; द.दो१– वाक्यपूरणाय। ४४–४४. द– यस्त्वग्निं।

प्रमायुकः स्याद्यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृत् ( ५ ) यद्द्वे इव ब्रूयाद्-
भ्रातृव्यमस्मै जनयेद्घृतवतीमध्वर्यो स्रुचमाऽस्यस्वेत्याह यजमानमेवैतेन वर्धयति

प्रमायुक इति प्र-मायुकः। स्यात्। यजमानदेवत्येति यजमान-देवत्या। वै। जुहूः।
भ्रातृव्यदेवत्येति भ्रातृव्य-देवत्या। उपभृदित्युप भृत् ( ५ )। यत्। द्वे इति। इव। ब्रूयात्।
भ्रातृव्यम्। अस्मै। जनयेत्। घृतवतीमिति घृत-वताम्। अध्वर्यो इति। स्रुचम्।
एति। अस्यस्व। इति। आह। यजमानम्। एव। एतेन। वर्धयति।

[V]शास्ते। भवत्येव च तत्फलमिति। अत्र 'साधु ते यजमान देवता योऽग्निं होतारमवृथा'
(द्र. आश्वश्रौ १·४ १०) इत्यध्वर्युप्रवरानुवादेन शाखान्तरीयपाठः। सोऽनेन निन्द्यते। एवं
हि ब्रुवन् [V]अग्निना [V]यजमानम् [V]उभयतः [V]परि [V]गृह्णीयात्, 'अग्निर्होता वेत्वग्निं', 'अग्निं
होतारमवृथा' (द्र. आश्वश्रौ १ ४ १०) इत्येतयोर्मध्ये यजमानस्य श्रवणात्, ततोऽयं [V]प्रमायुकः १०
मरणशीलः [V]स्यात्। तस्मात् तथा न कर्तव्यमिति। मीयतेश्छान्दस उकञ्॥

यजमानदेवत्येत्यादि॥ अत्र "घृतवतीमध्वर्यो स्रुचम्" (तैब्रा ३ ५ ४) इत्येकवचनेन
स्रुक् निर्दिश्यते। 'द्वे' इति जुहूपभृतौ आदीयेते। तस्मात् द्वित्वादानस्याभिप्रायं ब्राह्मणमिदमिति
दर्शयति–, [V]यत् द्वे [V]इव [V]ब्रूयात् [18]सामान्यविवक्षां कृत्वा घृतवत्यौ स्रुचाविति, यदि द्वे एव
जुहूपभृतौ पृथङ्निर्दिशेत् तदा भ्रातृव्यदेवत्याया उपभृतोऽप्युद्भूतरूपत्वाद्यजमानाय [V]भ्रातृव्यं १५
[V]जनयेत्। एकवचनेन निर्देशात् [V]यजमानदेवत्या [V]वै [V]जुहूः एव [19]उद्भूतरूपा भवतीति भ्रातृव्या-
भावादैश्वर्येणैनं [V]वर्धयति इति। नन्वेकवचनेन सामान्यात् द्वयोरपि निर्देशात् पुनरप्युद्भूतैवोपभृत्

यजमानदेवत्या इति॥ यद्यपि जुहूपभृतौ द्वे अपि आदातव्ये तथाऽपि तयोः सम प्राधान्य
निवार्य जुह्वा एव प्राधान्य [45]द्योतयितुं स्रुचम् इत्येकवचनमेव [46]पठनीयमित्येतद्दर्शयति– 'यजमानदेवत्या
वै जुहूर्भ्रातृव्यदेवत्योपभृद्यद्द्वे इव ब्रूयाद्भ्रातृव्यमस्मै जनयेद्घृतवतीमध्वर्यो स्रुचमाऽस्यस्वेत्याह २०
यजमानमेवैतेन वर्धयति' इति॥ स्रुचावित्येव द्विवचनेन [V]द्वे [V]इव द्वे अपि समप्रधाने इव यदि [V]ब्रूयात्
तदा यजमानसमानं [V]भ्रातृव्यम् उत्पादयेत्। तस्मादुपभृतमुपेक्षितामिव तिरस्कर्तुं जुहूप्राधान्यायैकवचना-
भिधानेन [V]यजमानं वर्धितवान् भवति। न हि जुह्वा इवोपभृतः क्वचिदपि साक्षाद्धोमसाधनत्वमस्ति।
तस्मादुपसर्जनत्वं तस्या युक्तम्॥

१८. तै३ ल हो– °विवक्षिताम्। १९ त्रि■ हो– उद्भूता।　　१५

४५ श्रृ– दर्शयितु। ४६ हो१– वदनीयमि°।

देवायुवमित्याह देवान् ह्येषाऽवति विश्ववारामित्याह विश्वꣳ ह्येषाऽवतीडामहै देवाꣳ ईडेन्यान् नमस्याम नमस्यान्

देवायुवमिति देव युवम् । इति । आह । देवान् । हि । एषा । अवति ।
विश्ववारामिति विश्व वाराम् । इति । आह । विश्वम् । हि । एषा । अवति । ईडामहै ।
५ देवान् । ईडेन्यान् । नमस्याम । नमस्यान् ।

स्यात् । यद्यपि गुणभूतत्वादुपभृत स्वातन्त्र्येण ग्रहणं नास्ति तथाऽपि तुल्यप्रतिपत्ती स्याताम् । नैष दोष । द्वे इति द्विवचनान्तस्यैव प्रतिषेधो विवक्षित । इवशब्देन हि शब्दप्रतिपन्नयो द्वयो समत्व प्रतिबोध्यते । तस्माद्धोमसाधनभूता जुहूरेव उपभृता गृह्यते ॥

देवान् ह्येषेति ॥ देवानात्मन इच्छति रक्षितुमेवेति भाव । विश्व हीति । निश्वकाल
१० प्रतिपत्तित्वात् विश्वम् इय रक्षति । मनुष्या वा इत्यादि । मनुष्यादयोऽपि देवता । तत्र मनुष्यात्मिका ईडेन्या स्तुत्या । औणादिक एन्यप्रत्यय । पित्रात्मिका नमस्या । "नमो वरिवश्चित्रङ क्यच्" (पा ३ १ १९), तदन्तादचो यत् । देवतात्मिका यज्ञिया यज्ञार्हा

देवायुवमिति ॥ देवमिश्रणेन देवरक्षणं विघ्ननिवारणेन विश्वरक्षणमभिप्रेतमित्येतद्दर्शयति– 'देवायुवमित्याह देवान् ह्येषाऽवति विश्ववारामित्याह विश्वꣳ ह्येषाऽवति' इति ॥
१५ ईडामहा इति ॥ ईडेन्यादिशब्दै विवक्षितम् अर्थं दर्शयति– "ईडामहै देवाꣳ ईडेन्यान् नमस्याम नमस्यान् यजाम यज्ञियानित्याह मनुष्या वा ईडेन्या पितरो नमस्या देवा यज्ञिया देवता एव यथाभाग यजति' इति । 'देवता' 'यजति' इत्येतदुपलक्षणम् । मनुष्यान् स्तौति पितॄन्नमस्यती त्येतदपि द्रष्टव्यम् । एव च सति यस्य मनुष्यादेर्यो भाग स्तुत्यादिरूप उपचरितस्त भागमनतिक्रम्या नुष्ठितवान् भवति ॥

२० १० ख३ स्वतत्र, ल हो१–स्वातन्त्र्य° । ११-१२ त्रि इवशब्दे तत्त्वच्छाब्द प्रति°, प१ ल हो–इवशब्दे तम( ! ) शाब्द प्रति°, त३–इवशब्देन हि शाब्द प्रति । १२ मै४–उद्भृता । १३ त३ ल हो–देवात्मिका ।

४७ क हा– देवमिश्रेण ४८. गृ–विश्वविघ्न° । ४९ आ– 'अर्थं' नास्ति ।

यजा॑म य॒ज्ञिया॒नित्या॑ह मनु॒ष्या॑ वा ई॑डेन्याः पि॒तरो॑ नम॒स्या॑ दे॒वा य॒ज्ञिया॑ दे॒वता॑ ए॒व ( ६ ) तद्य॑थाभा॒गं य॑जति ॥ ९ ॥

[ निग्रा॑नुमदि॒तु इ॑त्याह॒ च॒नास्मै॒ होतो॑पभृ॒द्देवता॑ ए॒व त्रीणि॑ च । ]

यजा॑म । य॒ज्ञियान् । इति॑ । आ॒ह॒ । म॒नु॒ष्याः॑ । वै । ई॒डेन्याः॑ । पि॒तरः॑ । न॒म॒स्याः॑ । दे॒वाः । य॒ज्ञियाः॑ । दे॒वताः॑ । ए॒व । तत् । य॒था॒भा॒गमिति॑ यथा - भा॒गम् । य॒ज॒ति॒ ॥ ९ ॥ ५

[ शब्रा १ ४ २ २-१७, ५ २ १ १ ]

यष्टव्या । " यज्ञर्त्विग्भ्या घखञौ " (पा ५ १ ७१ ) यथाभागमिति । या देवता यस्या प्रतिपत्तौ तत्तदनतिक्रमेण ता [50]यजाति [51]पूजयति ॥

इति द्वितीये पञ्चमे नवमोऽनुवाक ॥

[52]अत्र मीमासा ॥ दशमाध्यायस्य चतुर्थपादे चिन्तितम्— १०

" चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति ।
विक्रियेत न वाऽऽद्योऽपि किं स्याद्[53]आज्यपानिति ॥
दधिपानिति वा यद्वेत्येव स्यात् पृषदाज्यपान् ।
द्रव्यद्वयोक्तेराद्य स्याद्दधिमात्रहविष्ट्वत ॥
द्वितीय स्यात् तृतीयोऽस्तु द्रव्यान्तरविधानत । १५
गुणो दध्ना चित्रताऽऽज्ये ततो विक्रियते नहि " ॥ (जैन्या १० ४ ४०-४२ ) ॥

चातुर्मास्येषु चोदकेनाऽऽवाहनस्वाहाकारयाज्यानुवाक्यासु ऽज्यपनिगमा अतिदिष्टा । तत्राऽऽज्यपशब्द प्रयुक्त — " देवा५ आज्यपा५ आवह " (तैब्रा ३ ५ ३ ), " स्वाहा देवा५ आज्यपान् ", " अयाड्देवाना माज्यपाना प्रिया धामानि " (तैब्रा ३ ५ ७), " देवा आज्यपा आज्यमजुषन्त " (तैब्रा ३ ५ १८) इति ॥ सोऽयमाज्यपशब्दो विक्रियते न वेति सशय । [54]तत्र विकार [55]अपि त्रिविध । तत्र ' दध्याज्यपान् ' इत्याद्य २० तावत् प्राप्नोति । कुत ? " अथ पृषदाज्य गृह्णाति । द्वय [56]वा इद [57]सर्पिश्चैव दधि च " (शब्रा २ ८ ४ ७) इति [58]द्रव्यद्वयस्योक्तत्वात् । [59]आज्यस्योपस्तरणाभिघारणार्थत्वेन हवि शेषत्वाद्धविष्ट्व नास्तीति दध्येव हवि । ततो ' दधिपान् ' इति द्वितीय पक्ष । दध्याज्यमेलनेन [60]पृषदाज्यनामक द्रव्यान्तरम् उत्पद्यते[61] तेन च अनूयाजा हूयन्ते, तत पृषदाज्यपानिति तृतीय पक्ष । पृषत्व नाम चित्रता, सा च आज्यगतो गुण । स च दधिमेलनेन[62] निष्पद्यते । तस्मादाज्यस्यैव [63]द्रव्यत्वात् आज्यशब्दोपेता एव निगमा २५ पठितव्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाक ॥

२४ त१ मै ल– पूरयति ।

५० आ– अथ । ५१ क शृ हो१– ' तत्र ' नास्ति, अ इ उ जो ना पा– तत्रापि । ५२. ३० ड– ' अपि ' नास्ति । ५३ अ इ उ जो ना पा हा– वाव । ५४. आ– ' एव ' नास्ति । ५५ क हो१– द्रव्य द्वय° । ५६ अ इ उ जो पा हा– °भिधारणेन, क शृ हो१– °भिघारणत्वेन । ५७-५७ आ क– निष्पद्यते पृषदाज्य द्रव्यान्तरम् । ५८-५८. आ क– तदेव हविरिति पृषदाज्यपानिति तृतीय पक्ष । दधिमेलनादाज्ये पृषत्ता गुणो । ५९. आ क– हविष्ट्वमिति ।

त्रीꣳस्तृचाननुं ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्ता-नेवास्मा अनुकान् करोति पञ्चदशानु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति त्रिष्टुभा परि दध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु

त्रीन्। तृचान्। अन्विति। ब्रूयात्। राजन्यस्य। त्रयः। वै। अन्ये। राजन्यात्। पुरुषाः।
५ ब्राह्मण। वैश्य। शूद्र। तान्। एव। अस्मै। अनुकानित्यनु-कान्। करोति। पञ्चदशेति पञ्च-दश। अन्विति। ब्रूयात्। राजन्यस्य। पञ्चदश इति पञ्च-दशः। वै। राजन्यः। स्वे। एव। एनम्। स्तोमे। प्रतीति। स्थापयति। त्रिष्टुभा। परीति। दध्यात्। इन्द्रियम्। वै। त्रिष्टुक्। इन्द्रियकाम इतीन्द्रिय-कामः। खलु।

पुनरपि सामिधेनीरेवाधिकृत्योच्यते— '[१]त्रींस्तृचानिति ॥ नवेत्यवचनादावृत्तौ नवर्चं[१]।
१० आवास्तिस्र तिसृभिरुक्ता इत्येके। त्रिलान्ययात् ब्राह्मणादीन् [२]अस्य [२]अनुकान्[३] कमितृन्[३] [२]करोति। "अनुकामिक°" (पा ५.२ ७४) इति निपात्यते ॥

पञ्चदशो वा इति ॥ प्रजापतेरुरोबाहुप्रभवत्वाद्द्वयोः। पूर्वेण सहास्य विकल्पः ॥

व्याख्याता नवमे स्पष्टं प्रवरा [१]निविदादयः ॥
अथ दशमे नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते ॥
१५ त्रीनिति ॥ तत्र राजन्यं निमित्तीकृत्य विधत्ते— 'त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति' इति ॥ "प्र वो वाजाः" (तैब्रा ३.५.२) [२]"इत्येषा त्रिरावृत्ता[२]। "अग्न आयाहि" (तैब्रा ३.५.२) [३]इत्येकस्तृचः। "त्वं वरुण" (तैब्रा ३.५.२) [४]इत्येका परिधानीया त्रिरावृत्ता। पूर्वं त्रयस्तृचाः। तेन तृचानां त्रित्वेन [५]राजन्यव्यति-रिक्तान् ब्राह्मणादींस्त्रीन् वर्णान् राजन्यस्यानुकूलान् [६]करोति ॥
२० पञ्चदशेति ॥ पक्षान्तरं विधत्ते— 'पञ्चदशानु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति' इति ॥ प्रजापतेरुरसो बाहुभ्यां च [६]"पञ्चदशस्तोमस्य राजन्यस्य च[६] उत्पन्नत्वादसौ स्तोमो राजन्यस्य स्वकीयः। यद्यपि "पञ्चदश सामिधेनीरन्वाह" (तैस २.५.८) इति वर्णत्रयसाधारण-वचनेनैवायं पक्षः प्राप्तस्थापि 'त्रींस्तृचान्' इत्यनेन विशेषवचनेन [८]नित्यबाधप्राप्तौ विकल्पार्थं 'पञ्चदश' इति प्रतिप्रसवो [९]विधीयते ॥

२५ १–१. तं२– ल.हो१– त्रींस्तृचानि न(ने)त्येकवचनादावृत्तौ एव नवत्यर्चः। २–२. लं.हो– अस्य, तं२– यस्यानुकान्। ३ तं२– 'कमितृन्' नास्ति।

१. आ– निगदादयः। २–२. आ क– इत्येका त्रिरावृत्तत्वात्। ३. ड.गं– इत्यादिक एक°। ४. ड– इत्येषा। ५. गं हो१– क्षयियव्यति°। ६. ड– राजन्यपञ्चदशस्तोमयोः। ७. अ.जो.ना. पा.हा – °स्याप्यनेनैवायं। ८. गं– नित्यवद्बाधप्राप्तौ; अ.ह.उ.जो.ना.पा.हा – नित्यवद्बाधकप्राप्तौ।
३० ९. गं– अभिधीयते।

**वै रा॒ज॒न्यो॑ यजते त्रि॒ष्टुभै॒वास्मा॑ इन्द्रि॒यं परि॑ गृह्णाति॒ यदि॑ का॒मये॑त (१) ब्रह्मवर्च॒समस्त्विति॑ गाय॒त्रिया॒ परि॑ दध्याद्ब्रह्मवर्च॒सं वै गा॑य॒त्री ब्र॑ह्मवर्च॒सामे॒व भ॑वति स॒प्त॒द॒शानु॑ ब्रू॒याद्वैश्य॑स्य सप्तद॒शो वै वैश्यः॒ स्व ए॒वैन॑ स्तोमे॒ प्रति॑ ष्ठापयति॒ जग॑त्या॒ परि॑ दध्या॒ज्जाग॑ता॒ वै प॒शवः॑**

वै। रा॒ज॒न्यः॑। य॒ज॒ते। त्रि॒ष्टुभा॑। ए॒व। अ॒स्मै॒। इ॒न्द्रि॒यम्। परीति॑। गृ॒ह्णा॒ति॒। यदि॑। का॒मये॑त ५ (१)। ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म व॒र्च॒सम्। अ॒स्तु॒। इति॑। गा॒य॒त्रिया॑। परीति॑। द॒ध्या॒त्। ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म व॒र्च॒सम्। वै। गा॒य॒त्री। ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म व॒र्च॒सम्। ए॒व। भ॒व॒ति॒। स॒प्त॒द॒शेति॑ स॒प्त द॒श। अन्विति॑। ब्रू॒या॒त्। वैश्य॑स्य। स॒प्त॒द॒श इति॑ स॒प्त द॒श। वै। वैश्यः॑। स्वे। ए॒व। ए॒न॒म्। स्तोमे॑। प्रतीति॑। स्था॒प॒य॒ति॒। जग॑त्या। परीति॑। द॒ध्या॒त्। जाग॑ताः। वै। प॒शवः॑।

त्रिष्टुभेति॥ "त्व वरुण उत" (तैब्रा ३ ५ २) इति॥ इन्द्रियं वा इति। १० तद्धेतुत्वात्ताच्छब्द्यम्॥

गायत्रियेति॥ "आजुहोत" (तैब्रा ३ ५ २) इत्येतया। "*पृथुपाजा", "तं सबाध" (तैब्रा ३ ६ १) इत्येते धाय्यास्थाने निधेये॥

सप्तदशेति॥ द्वयोरपि मध्यदेशप्रभवत्वात् प्रजापतेः।

त्रिष्टुभेति॥ 'त्वं वरुण' इत्येतां परिधानीयां विधत्ते- 'त्रिष्टुभा परि दध्यादिन्द्रियं वै १५ त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति' इति। त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वात् तत्सम्बन्धीन्द्रियरूपत्वम्। राजन्य च शुभुत्सुत्वादिन्द्रियसामर्थ्यकामः॥

यदीति॥ राजन्यस्य नित्यां परिधानीयां विधाय काम्यां विधत्ते-'यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परि दध्यात् ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति' इति॥ "आजुहोत दुवस्यत" (तैब्रा ३ ५ २) इत्येषा गायत्री। "तत् सवितुः" (तैस १ ५ ६) इत्यस्या गायत्र्या उपदेशेन ब्रह्म २० वर्चसनिष्पत्तेः तस्य गायत्रीरूपत्वम्॥

सप्तदशेति॥ वैश्यं निमित्तीकृत्य विधत्ते- 'सप्तदशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनं स्तोमे प्रति ष्ठापयति' इति॥ "समिध्यमानो अध्वरे", "समिद्धो अग्न आहुत" (तैब्रा ३ ५ २) इत्यनयोर्मध्ये "पृथुपाजा अमर्त्यः", "तं सबाधो यतस्रुच" (तैब्रा ३ ६ १, ऋस ३ २७ ५ ६) इत्येतयोर्धाय्ययोः प्रक्षेपेण सप्तदशसंख्यानिष्पत्तिः। प्रजापतेर्मध्यदेशात् वैश्यसप्तदशस्तोमयोः उत्पन्न २५ त्वात् सप्तदशस्तोमस्तदीयः॥

४ ल हो- इत्येकया त२- इत्येके। *-* ल- 'पृथुपाजा इत्येतया' इत्यय भागः नास्ति।

१० ड ग्र.हो१-काम्यां परिधानीयां। ११ आ क- सप्तदशस्तोमवैश्ययो। १२ ग्र- अतो स्तोम°।

त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्ता-नेवास्मा अनुकान् करोति पञ्चदशानु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति त्रिष्टुभा परि दध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु

त्रीन्। तृचान्। अन्विति। ब्रूयात्। राजन्यस्य। त्रयः। वै। अन्ये। राजन्यात्। पुरुषाः। ५ ब्राह्मणः। वैश्यः। शूद्रः। तान्। एव। अस्मै। अनुकानित्यनु-कान्। करोति। पञ्चदशेति पञ्च-दश। अन्विति। ब्रूयात्। राजन्यस्य। पञ्चदश इति पञ्च-दशः। वै। राजन्यः। स्वे। एव। एनम्। स्तोमे। प्रतीति। स्थापयति। त्रिष्टुभा। परीति। दध्यात्। इन्द्रियम्। वै। त्रिष्टुक्। इन्द्रियकाम इतीन्द्रिय-कामः। खलु।

पुनरपि सामिधेनीरेवाधिकृत्योच्यते– '[1]त्रीꣳस्तृचानिति॥ नवेत्यवचनादाद्यन्तौ नवर्चः[1]। १० आद्यास्तिस्रः तिसृभिरुक्ता इत्येके। त्रित्वान्वयात् ब्राह्मणादीन् [2]अस्य [2]अनुकान्[3] कमितॄन्[3] [3]करोति। "अनुकाभिक°" (पा ५·२·७४) इति निपात्यते॥

पञ्चदशो वा इति॥ प्रजापतेरुरोबाहुप्रभवत्वाद्द्वयोः। पूर्वेण सहास्य विकल्पः॥

व्याख्याता नवमे स्पष्टं प्रवरा [1]निविदादयः॥
अथ दशमे [2]नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते॥

१५ त्रीनिति॥ तत्र राजन्यं निमित्तीकृत्य विधत्ते– 'त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति' इति॥ "प्र वो वाजाः" (तैब्रा ३·५·२) [3]"इत्येषा त्रिरावृत्ता"[2]। "अग्न आयाहि" (तैब्रा ३·५·२) [4]इत्येकस्तृचः। "त्वं वरुण" (तैब्रा ३·५·२) [2]इत्येका परिधानीया त्रिरावृत्ता। एवं त्रयस्तृचाः। तेन तृचानां त्रित्वेन [5]राजन्यव्यति-रिक्तान् ब्राह्मणादींस्त्रीन् वर्णान् राजन्यस्यानुकूलान् [5]करोति॥

२० पञ्चदशेति॥ पक्षान्तरं विधत्ते– 'पञ्चदशानु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति' इति॥ प्रजापतेरुरसो बाहुभ्यां च [6]"पञ्चदशस्तोमस्य राजन्यस्य च[6] उत्पन्नत्वादसौ स्तोमो राजन्यस्य स्वकीयः। यद्यपि "पञ्चदश सामिधेनीरन्वाह" (तैसं २·५·८) इति वर्णत्रयसाधारण-वचनेनैवायं पक्षः प्राप्तस्तथापि 'त्रीꣳस्तृचान्' इत्यनेन विशेषवचनेन [7]नित्यबाधप्राप्तौ विकल्पार्थं 'पञ्चदश' इति प्रतिप्रसवो [8]विधीयते॥

२५ १–१. तै३– सं.हो१– त्रीꣳस्तृचानि न(नै)वेत्यवचनादाद्यन्तौ एव नवर्चः। २–२. सं.हो– अस्य, तै३– यस्यानुकान्। ३ तै३– 'कमितॄन्' नास्ति।

१. आ– निगदादयः। २–२. आ.क– इत्येका त्रिरावृत्ता। ३. द.गृ– इत्यादिक एक[3]। ४. क– इत्येषा। ५. गृ.हो१– धायिष्यति°। ६. क– राजन्यपञ्चदशस्तोमयोः। ७. अ.बो.ना. पा.हा – °स्तवचनेनैवायं। ८. गृ– नित्यतद्बाधप्राप्तौ; अ.इ.उ.बो.ना.पा.हा – नित्यतद्बाधप्राप्तौ। ३० ९. गृ– अभिधीयते।

यै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति यदि कामयेत (१) ब्रह्मवर्च-समस्त्विति गायत्रिया परि दध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति सप्तदशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनं स्तोमे प्रति ष्ठापयति जगत्या परि दध्याज्जागता वै पशवः

वै। राजन्यः। यजते। त्रिष्टुभा। एव। अस्मै। इन्द्रियम्। परीति। गृह्णाति। यदि। कामयेत ५ (१)। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। अस्तु। इति। गायत्रिया। परीति। दध्यात्। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। वै। गायत्री। ब्रह्मवर्चसमिति ब्रह्म वर्चसम्। एव। भवति। सप्तदशेति सप्त दश। अन्विति। ब्रूयात्। वैश्यस्य। सप्तदश इति सप्त दश। वै। वैश्यः। स्वे। एव। एनम्। स्तोमे। प्रतीति। स्थापयति। जगत्या। परीति। दध्यात्। जागताः। वै। पशवः।

त्रिष्टुभेति ॥ "त्वं वरुण उत" (तैब्रा ३ ५ २) इति ॥ इन्द्रियं वा इति। १० तद्धेतुत्वात्ताच्छब्द्यम् ॥

गायत्रियेति ॥ "आजुहोत" (तैब्रा ३ ५ २) इत्येतया। "*पृथुपाजा", "तं* सबाध" (तैब्रा ३ ६ १) इत्येते धाय्यास्थाने निधेये ॥

सप्तदशेति ॥ द्वयोरपि मध्यदेशप्रभवत्वात् प्रजापतेः।

त्रिष्टुभेति ॥ 'त्वं वरुण' इत्येता परिधानीया विधत्ते– 'त्रिष्टुभा परि दध्यादिन्द्रियं वै १५ त्रिष्टुगिन्द्रियकाम खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति' इति। त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वात् तस्यास्तथाविधेन्द्रियरूपत्वम्। राजन्य च युयुत्सुत्वादिन्द्रियसामर्थ्यकाम ॥

यदीति ॥ राजन्यस्य नित्या परिधानीया विधाय काम्या विधत्ते– 'यदि कामयेत ब्रह्मवर्चसम स्त्विति गायत्रिया परि दध्यात् ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति' इति ॥ "आजुहोत दुवस्यत" (तैब्रा ३ ५ २) इत्येषा गायत्री। "तत् सवितु" (तैस १ ५ ६) इत्यस्या गायत्र्या उपदेशेन ब्रह्म २० वर्चसनिष्पत्तेः तस्य गायत्रीरूपत्वम् ॥

सप्तदशेति ॥ वैश्य निमित्तीकृत्य विधत्ते– 'सप्तदशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्य स्व एवैनं स्तोमे प्रति ष्ठापयति' इति ॥ "समिध्यमानो अध्वरे", "समिद्धो अग्न आहुत" (तैब्रा ३ ५ २) इत्यनयोर्मध्ये "पृथुपाजा अमर्त्य", "तं सबाधो यतस्रुच" (तैब्रा ३ ६ १, ऋस ३ २७ ५ ६) इत्येतयोर्धाय्ययो प्रक्षेपेण सप्तदशसंख्यानिष्पत्ति। प्रजापतेर्मध्यदेशात् "वैश्यसप्तदशस्तोमयो उत्पन्न २५ त्वात् "सप्तदशस्तोमरूपत्वम् ॥

४ ल हो– इत्येकया त३– इत्येके। *–* ल– 'पृथुपाजा इत्येतया' इत्ययं भाग नास्ति।

१० ड गृ.हो १–काम्या परिधानीया। ११ आ क– सप्तदशस्तोमोत्पत्त्यो। १२ गृ– अतो स्तोम°।

पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून् परि गृह्णात्येकविꣳशतिमनु ब्रूयात् प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै(२) चतुर्विꣳशतिमनु

---

पशुकाम इति पशु-कामः । खलु । वै । वैश्यः । यजते । जगत्या । एव । अस्मै । पशून् । परीति । गृह्णाति । एकविꣳशतिमित्येक-विꣳशतिम् । अन्विति । ब्रूयात् । प्रतिष्ठाकामस्येति
५ प्रतिष्ठा-कामस्य । एकविꣳश इत्येक-विꣳशः । स्तोमानाम् । प्रतिष्ठेति प्रति-स्था । प्रतिष्ठित्या इति प्रति-स्थित्यै (२) । चतुर्विꣳशतिमिति चतुः-विꣳशतिम् । अन्विति ।

---

जगत्येति । " जनस्य गोपाः " ( तैसं ४·४·४ ) इत्येतया* । " जगतीशब्द उत्सादिः ( पा ४·१·८६ ) ॥

एकविꣳशतिमिति ॥ पञ्चदशत्वान्वयात् प्रथमोत्तमावृत्तिवत् एतासामेवावृत्त्या एकविंशत्याद्य-
१० भिमतसङ्ख्यापूरणमिति केचित् । " युक्ष्वा हि " ( तैसं २·६·११ ) [5]इत्यादि नव सामिधेनीति केचित्[5] । स्तोमानां प्रतिष्ठेति । त्रिवृत्पञ्चदशसप्तदशानां प्रधानस्तोमानां, तत्र अनुगतत्वात् ॥

चतुर्विंशतिमित्यादि ॥ गतम् ॥

---

जगत्येति ॥ वैश्यस्य " समिध्यमानो अमृतस्य राजसि " ( ऋ ५·२८·२ ) इत्येतां परिधानीयां विधत्ते— 'जगत्या परि दध्यात् जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै
१५ पशून् परि गृह्णाति ' इति ॥ जगत्यनुष्ठानलब्धत्वात् पशूनां जागतत्वम् । वैश्यस्य क्षीरदध्यादिविक्रयाय पशुकामत्वं प्रसिद्धम् ॥

एकविꣳशतिमिति ॥ [13]नैमित्तिकीः विधाय [14]काम्याः विधत्ते— 'एकविꣳशतिमनु ब्रूयात् प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै ' इति ॥ अत्र सङ्ख्यापूरणं संप्रदायविद्भिरेवमुक्तम्— 'एकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईळे अग्निमित्यादिके । अग्न आयाहीत्यादि । अथ त्वामग्ने पुष्करादधीति
२० त्र्यस्तृचाः । अग्निमग्निमित्येकादश । पृथुपाजा इत्यष्टौ । [15]अष्टाचत्वारिंशत्पक्षस्य दाशतय्याश्चिन्त्य आगमयितव्याः । एकविंशत्यादिषु कार्येषु एतासां [16]यथार्थमागमः ' इति । अस्यायमर्थः—यदा सामिधेनीवृद्धिरपेक्षिता [17]तदानीम् आम्नातायाः " प्र वो वाजाः " ( तैब्रा ३·५·२ ) इत्यस्या उपरि " ईळे अग्निम् "( तैब्रा २·४·२ ) इत्यादिकं द्वयं प्रक्षेपणीयम् । तत् ऊर्ध्वम् ' अग्न आ याहि ' इत्यादिकं यथाम्नातं पठितम् । तत्र [18]समिध्यमानसमिद्वत्योः* मध्ये " त्वामग्ने " ( ऋ ६·१६·१३ ) इत्यादिना[19] उदाहृताः प्रक्षेपणीयाः । यावतीनां प्रक्षेपेण

---

१५ ५-५. मै४–°धेनी केचिदित्यन्ये; तं३.लं.हो–°धेनी केचिदन्ये ।

---

१३. आ.क– नैमित्तिकी । १४. आ.क– काम्यां । १५. अ.आ– °रिंशत्पक्षस्य । १६. अ.इ.उ.जो.ना.पा.हा– यथार्थमागमयितव्याः । १७. आ.क– तदा । १८. अ.इ.उ.जो.पा.?.हा– समिध्यमानेद्धवत्योः । * [ 'समिध्यमानो अध्वरे' ( तैब्रा ३·५·२ ) इत्येषा समिध्यमानवती, 'समिद्धो अग्न आहुत' ( तैब्रा ३·५·२ ) इत्येषा च समिद्वती द्रष्टव्या । ] । १९. आ.क.ड– इत्यादिकाः ।

[ नैमित्तिकीनां काम्यानां च सामिधेनीनां विधानम् ]

ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्द्धे त्रिꣳशतमनु ब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्द्धे द्वात्रिꣳशतमनु ब्रूयात् प्रतिष्ठाकामस्य द्वात्रिꣳशदक्षराऽनुष्टुगनुष्टुप् छन्दसां प्रतिष्ठा प्रतिष्ठित्यै

ब्रूयात्। ब्रह्मवर्चसकामस्येति ब्रह्मवर्चस - कामस्य। चतुर्विंशत्यक्षरेति चतुर्विꣳशति - अक्षरा। ५
गायत्री। गायत्री। ब्रह्मवर्चसमिति ब्रह्म - वर्चसम्। गायत्रिया। एव। अस्मै। ब्रह्मवर्चसमिति ब्रह्म - वर्चसम्। अवेति। रुन्द्धे। त्रिꣳशतम्। अन्विति। ब्रूयात्। अन्नकामस्येत्यन्न - कामस्य। त्रिꣳशदक्षरेति त्रिꣳशत् - अक्षरा। विराडिति वि - राट्। अन्नम्। विराडिति वि - राट्। विराजेति वि - राजा। एव। अस्मै। अन्नाद्यमित्यन्न - अद्यम्। अवेति। रुन्द्धे। द्वात्रिꣳशतम्। अन्विति। ब्रूयात्। प्रतिष्ठाकामस्येति प्रतिष्ठा - कामस्य। द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत् - अक्षरा। १०
अनुष्टुगित्यनु - स्तुक्। अनुष्टुबित्यनु - स्तुप्। छन्दसाम्। प्रतिष्ठेति प्रति - स्था।
प्रतिष्ठित्या इति प्रति - स्थित्यै।

त्रिꣳशदक्षरा विराडिति ॥ त्रिभिः दशाक्षैः विराडिति ॥

छन्दसां प्रतिष्ठेति ॥ "वाग्वा अनुष्टुप्" (तैसं ५·१·३) इति तस्याः सर्ववाङ्मयत्वात् ॥

[20]अभीष्टसंख्या पूर्यते [21]"तत्र तावतीनां" [22]प्रक्षेप इति। मीमांसाशास्त्रं (मीसू ५·३·४·६) [23]धाय्यासंज्ञकानामेव [24]समिध्यमानसमिद्धवत्योर्मध्ये प्रक्षेपः, इतरासां त्वन्ते [25]प्रक्षेप इत्याहुः[26]। अत्रापि परिधानीयाया [27]उत्तमायाः प्रागेवेत्ययं विशेषो द्रष्टव्यः। त्रिवृत्पञ्चदशसप्तदशानां संख्या चतुर्थ एकविंशस्तोमेऽन्तर्भूतेति स्तोम इतरेषां स्तोमानां प्रतिष्ठा ॥ १५

चतुर्विंशतिमिति ॥ फलान्तराय विधत्ते– 'चतुर्विंशतिमनु ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्द्धे' इति ॥ २०

त्रिंशतमिति ॥ पुनरपि फलान्तराय विधत्ते– 'त्रिंशतमनु ब्रूयादन्नकामस्य त्रिंशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्द्धे' इति ॥ दशाक्षैस्त्रिभिः पादैर्विराजस्त्रिंशदक्षरत्वम्। तच्छन्दोनुष्ठानेनास्य [28]लभ्यमानत्वात् तस्य छन्दसोऽन्नत्वम् ॥

द्वात्रिंशतमिति ॥ पुनः फलान्तराय विधत्ते– "द्वात्रिंशतमनु ब्रूयात् प्रतिष्ठाकामस्य द्वात्रिंशदक्षराऽनुष्टुगनुष्टुप् छन्दसां प्रतिष्ठा प्रतिष्ठित्यै" इति ॥ अन्यत्र "वाग्वा अनुष्टुप्" (तैसं ५·१·३) इति २५
[29]अवगाद्वाङ्मूपत्वमनुष्टुभः। वाचि सर्वेषां छन्दसामन्तर्भावादनुष्टुबितरच्छन्दसां प्रतिष्ठा ॥

२०. आ.क– अभिना। २१. आ.क– तत्रसमानानां, ड हो१ तत्समानानाम्। २२. ड– प्रक्षेपण। २३. क.ड– धाय्यार्थं। २४. अ.इ.उ.ओ.प.गं.हा– समिध्यमानेत्यवयवेष्वेपि। २५. आ.क– प्रक्षेपमाहुः। २६. ड हो१– 'उत्तमायाः' नास्ति। २७. आ.क– [illegible]; हा– [illegible]। २८. ड,गं– अनुष्टुभो वाक्स्वभावात्। ३०

षट्त्रिꣳशतमनु ब्रूयात् पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यै-
वास्मै पशून्( ३ )वं रुन्द्धे चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतु-
श्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभैवास्मा इन्द्रियमवं रुन्द्धेऽष्टाचत्वारिꣳ-
शतमनु ब्रूयात् पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो
५ जगत्यैवास्मै पशूनवं रुन्द्धे

---

षट्त्रिꣳशतमिति षट्-त्रिꣳशतम्। अन्विति। ब्रूयात्। पशुकामस्येति पशु-कामस्य। षट्त्रिꣳशदक्षरेति षट्त्रिꣳशत्-अक्षरा। बृहती। बार्हताः। पशवः। बृहत्या। एव। अस्मै। पशून् ( ३ )। अवेति। रुन्द्धे। चतुश्चत्वारिꣳशतमिति चतुः–चत्वारिꣳशतम्। अन्विति। ब्रूयात्। इन्द्रियकामस्येतीन्द्रिय-कामस्य। चतुश्चत्वारिꣳशदक्षरेति चतुश्चत्वारिꣳशत्-अक्षरा। १० त्रिष्टुक्। इन्द्रियम्। त्रिष्टुप्। त्रिष्टुभा। एव। अस्मै। इन्द्रियम्। अवेति। रुन्द्धे। अष्टाचत्वारिꣳशतमित्यष्टा-चत्वारिꣳशतम्। अन्विति। ब्रूयात्। पशुकामस्येति पशु-कामस्य। अष्टाचत्वारिꣳशदक्षरेत्यष्टाचत्वारिꣳशत्-अक्षरा। जगती। जागताः। पशवः। जगत्या। एव। अस्मै। पशून्। अवेति। रुन्द्धे।

---

बृहतीशब्दोऽप्युत्सादिः ( पा ४·१·८६ )। बृहत्याः पशव्यत्वात् बार्हतत्वं पशूनाम्॥

१५ इन्द्रियं त्रिष्टुबिति॥ इन्द्रियत्रिष्टुभोः समानप्रभवत्वात्॥

जगत्या इति॥ जगत्याः पशव्यत्वात्॥

---

षट्त्रिꣳशतमिति॥ पुनः [२०]फलान्तराय विधत्ते–'षट्त्रिꣳशतमनु ब्रूयात् पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्द्धे' इति। पशूनां बृहतीछन्दसोऽनुष्ठानेन लब्धत्वात् बार्हतत्वम्॥

२० चतुश्चत्वारिꣳशतमिति॥ फलान्तराय विधत्ते–'चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभैवास्मा इन्द्रियमव रुन्द्धे' इति॥

अष्टाचत्वारिꣳशतमिति॥ पुनः फलान्तराय विधत्ते–'अष्टाचत्वारिꣳशतमनु ब्रूयात् पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्द्धे' इति॥

---

२०. क–फलान्तरं।

सर्वा॑णि॒ छन्दा॑ꣳस्य॒न्वि॑ ब्रूयाद्बहुया॒जिनः॒ सर्वा॑णि॒ वा ए॒तस्य॒ छन्दा॑ꣳस्यव॑रुद्धानि॒ यो ब॑हुया॒ज्यप॑रिमित॒मनु॑ ब्रूया॒दप॑रिमित॒स्याव॑रुद्ध्यै ॥ (१० ) ॥

[ का॒मये॑त प्रति॒ष्ठित्यै॑ प॒शून्स॒प्तच॑त्वारिꣳशच्च । ]

सर्वा॑णि । छन्दा॑ꣳसि । अ॒न्विति॑ । ब्रू॒यात् । ब॒हु॒या॒जि॒न इति॑ बहु-या॒जिनः॑ । सर्वा॑णि । वै । ए॒तस्य॑ । छन्दा॑ꣳसि । अव॑रुद्धा॒नीत्यव॑ - रु॒द्धा॒नि॒ । यः । ब॒हु॒या॒जीति॑ बहु - या॒जी । अप॑रिमित॒मित्यप॑रि - मि॒त॒म् । ५
अ॒न्विति॑ । ब्रू॒यात् । अप॑रिमित॒स्येत्यप॑रि - मि॒त॒स्य॒ । अव॑रुद्ध्या॒ इत्यव॑ - रु॒द्ध्यै॒ ॥ १० ॥

[ शाबा १·३·५·१० ]

बहुयाजिन इति ॥ सोमयाजी बहुयाजी, तस्य 'सर्वाणि गायत्र्यादीनि जगत्यन्तानि 'छन्दांसि 'अवरुद्धानि ।

अपरिमितमिति । नवाद्यष्टाचत्वारिंशदन्तोक्तसङ्ख्यापरिच्छेदरहितम् अपरिच्छिन्नस्य १०
फलस्याप्त्यै भवति ॥

इति द्वितीये पञ्चमे दशमोऽनुवाकः ॥

सर्वाणीति ॥ सोमयाजिनं [30]निमित्तीकृत्य विधत्ते– 'सर्वाणि छन्दांꣳस्यनु ब्रूयाद्बहुयाजिनः सर्वाणि वा एतस्य छन्दांꣳस्यवरुद्धानि यो बहुयाजी' इति ॥ [31]बहुभिर्दीक्षणीयादिभिरिष्टिभिरग्नीषोमीयादि-पशुभिरैन्द्रवायवादिभिर्ग्रहैश्च यजत इति बहुयाजी । एतस्य 'बहुयाजिनः सवनत्रये [32]गायत्रीत्रिष्टुब्जगतीरूपाणि १५
[33]सर्वाणि 'छन्दांꣳसि 'अवरुद्धानि भवन्ति । तस्मात् सोमयाजी यदा दर्शपूर्णमासावनुतिष्ठति तदा तस्य त्रीणि छन्दांस्यनुब्रूयात् । "समिध्यमानः प्रथमो नु धर्मः" (तैब्रा १·२·१ ) इत्येषा त्रिष्टुप् । "त्वामग्ने प्र दिव आहुतं घृतेन" (तैब्रा १·२·१ ) इत्येषा जगती । एतदुभयं समिद्धवत्याः पूर्वं पठनीयम् ॥

अपरिमितमिति ॥ [34]तस्य सोमयाजिनः "त्रीꣳस्तृचान्" (तैसं २·५·१० ) इत्यनुवाके 'अष्टाचत्वारिंशतमनुब्रूयात्' इत्यन्ते यः संख्याविशेषः तत्र स्वेच्छैव नियामिका, न तु वाचनिको २०
नियमोऽस्तीत्येतद्विधत्ते – 'अपरिमितमनु ब्रूयादपरिमितस्यावरुद्ध्यै' इति । 'अपरिमितस्य 'अधिकस्य फलस्येत्यर्थः ॥

अत्र मीमांसा ॥ तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—

"सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत् प्रकृतौ पाञ्चदश्येनैतत् [35]विकल्पते ॥ २५
विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रत्रियावलात् ।
पाञ्चदश्यावरुद्धत्वादाद्यपक्षस्य निवृत्तिः" ॥ (जैन्या ३·६·३·४ ) ॥

30. आ,हा– अधिकृत्य । 31. अ,उ,ओ,ना,पा– °रिष्टिभिरैन्द्रवायवादिग्रहैश्च, क– दीक्षणीया-दिभिरैन्द्रवायवादिग्रहैश्च । 32. आ,क– गायत्र्युष्णिगनुष्टुब्जगती° । 33. हा– 'सर्वाणि' नास्ति । 34. क– तस्मात् । 35. क,हा– विकल्प्यते । ३०

[ नैमित्तिकीनां काम्यानां च सामिधेनीनां विधानम्

अनारभ्य श्रूयते– "सप्तदश सामिधेनीरनु ब्रूयात्" (द्र. तैसं २·५·१०; ६·३·७) इति। "प्र वो वाजा अभिद्यवः" (तैब्रा ३·५·२) इत्याद्याः अग्निसमिन्धनार्था ऋचः सामिधेन्यः। तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम्। यदि प्रकृतौ "पञ्चदश सामिधेनीरन्वाह" (तैसं २·५·८) इति विधिः स्यात् तर्हि[36] [37]पाञ्चदश्यसाप्तदश्ये [38]विकल्पेयाताम् इति प्राप्ते ब्रूमः–विकृतावेव साप्तदश्यं निविशते। प्रकृतौ पाञ्चदश्ये-नावरुद्धानां सामिधेनीनां संख्याकाङ्क्षाया अभावात्। न च [39]पाञ्चदश्यसाप्तदश्ययोः समानबलत्वादव-रोधाभाव इति शङ्कनीयम्। पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात्। तस्मात् [40]मित्रविन्दाऽध्वरकल्पादिविकृतौ [41]साप्तदश्यमवतिष्ठते। न चात्र पूर्वन्यायोऽस्ति। साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधानदोषाभावात्॥

तत्रैवान्यच्चिन्तितम्—

"[42]साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत।
पूर्ववच्चेन्न सङ्कोचान्नित्ये नैमित्तिकोक्तितः॥
गोदोहनेन प्रणयेत् [43]कामीत्येतदुदाहरत्।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः"॥ (जैन्या ३·६·५-६)॥

"सप्तदशानु ब्रूयाद्वैश्यस्य" (तैसं २·५·१०) इति विहितं [44]वैश्यनिमित्तकं साप्तदश्यं पूर्वन्यायेन विकृतिगामीति चेत्। नैवम्। नैमित्तिकेनानेन [44-45]वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यति-रिक्तविषयतया[45] सङ्कोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलं, नैमित्तिकं तु विशेष-रूपत्वनिरवकाशत्वाभ्यां प्रबलम्। तस्मात् वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते। अत्र भाष्यकारोऽ-प्युदाजहार – "चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य" (द्र. आपश्रौ १·१६·२) इति। तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृतावेवेति पूर्वः पक्षः। कामनानिमित्तेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनमिति [46]सिद्धान्तः॥

दशमाध्यायस्याष्टमपादे चिन्तितम्—

"सामिधेनीसाप्तदश्यं वैमृधाद्यावपूर्वगीः।
संहतिर्वोपकारस्य क्लृप्त्याऽऽग्नेयोऽस्त्वाज्यभागवत्॥
सामिधेन्यश्चोदकाप्ताः साप्तदश्य तु वैमृधे।
पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम्"॥ (जैन्या १०·८·१७-१८)॥

अनारभ्य किंचिदाम्नायते– "सप्तदश सामिधेनीरनु ब्रूयात्" (तैसं २·५·१०, ३·१·७) इति। तथा वैमृधेऽध्वरकल्पायां पशौ [47]चातुर्मास्येषु मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः [48]साप्तदश्यं विहितम्। यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथापि [48]श्रुतेन पाञ्चदश्येनावरुद्धत्वाद्विकृतिष्वेतन्निविशते। तथा सति वैमृधादिविकृतिष्वनारभ्यवादप्राप्ता सप्तदश सामिधेन्यः प्रकरणस्थेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभागवत् क्लृप्तोपकारकत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वकर्मतां गमयन्ति। साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः– वैमृधादिषु सामिधेन्य आज्यभागवत्

---

३६. अ.इ.उ.ओ.ना.पा.हा– 'तर्हि' नास्ति। ३७ आ– पाञ्चदश्यं साप्तदश्यं च। ३८. क ड गृ–विकल्पेयाताम्। ३९. क ड.गृ हो१–°दश्यशाक्ययोः। ४०. अ इ.उ.ओ.ना.पा हा– अध्वर°। ४१. ड–साप्तदश्यमेव निविशते। ४२. गृ–°हरत्। ४३. आ.क–°निमित्तं। ४४-४४. ड–प्रकृतिगतस्य पाञ्चदश्यस्य वैश्यस्य वा अतिरिक्तविषयतया, अ इ.उ.ओ.ना.पा– °दश्यस्य वैश्यव्यतिरिक्ततया। ४५ ड– राद्धान्तः। ४६. आ.क– 'चातुर्मास्येषु' नास्ति। ४७. अ.इ उ.ओ.ना.पा.हा– 'साप्तदश्यं' नास्ति। ४८. अ.इ उ.ओ.पा हा– 'श्रुतेन' नास्ति।

नैमित्तिकीनां काम्यानां च सामिधेनीनां विधानम् ]

विधीयन्ते, किं तु चोदकप्राप्तस्तासामनूद्य साप्तदश्यं विधीयते । [49]तत्र साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम्, अनारभ्यवादेन [50]तु सर्वासु विकृतिषु । तत्रानारभ्यवादो विलम्बते । प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसंबन्धमवबोध्य तत्संबन्धान्यथानुपपत्त्या [51]क्रतुप्रवेशं परिकल्प्य प्रकृतौ [52]पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु [53]निवेशः क्रियत इति विलम्बः । प्राकरणिकैर्विधिभिः सामिधेनीसंबन्ध एव बोधनीयः । क्रतौ तद्विशेषे च [54]प्रवेशो न [55]कल्पनीयः । [56]प्रत्यक्षप्रकरणपाठेनैव तत्सिद्धेः । तत्र साप्तदश्यस्य [57]वैमृधादिविकृतिविशेषसंबन्धे सहसा प्रतिपन्ने सति [58]तद्विरोधात् सर्वविकृतिसंबन्धो[58] न कल्पयितुं शक्यः । अनारभ्यवादस्तु वैमृधादिषु प्राप्तस्य नित्यानुवादोऽस्तु । यद्वा– प्रकरणविधिर्वैमृधादिषु साप्तदश्यस्य प्रापकः । अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदश्यस्य बाधकः । सर्वथाऽपि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं धर्मः ॥

तत्रैव पञ्चमपादे चिन्तितम्—

" सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत ।
आगमः पूर्ववन्मैवमभ्यासप्रकृतिरवत् ॥
तत्राप्याद्यन्तयोर्यावत् [59]पूर्वेऽभ्यासो यथोक्ति वा ।
[60]अभ्यस्याऽऽगमतः पूर्तिं पूरणार्थत्वतोऽग्रिमः ॥
त्रिस्त्वं न पूरणायोक्तमन्यथाऽप्यत्र पूरणात् ।
विवक्षितमबाधित्वा भवेत् पूरणमागमात् ' ॥ ( जैन्या १० ५ १० १२ )॥

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय काम्या तद्वृद्धिर्विधीयते– " एकविंशतिमनु ब्रूयात् प्रतिष्ठाकामस्य " ( तैस २ ५ १० ) इत्यादिना । यथा बहिष्पवमाने ऋगागमस्तथा [61]अत्रापीति प्राप्ते ब्रूमः । पञ्चदशभिः पठिताभिः [62]ऋग्भिः [63]पञ्चदशसंख्याया अपूर्तावृगन्तरागमनेन तत्पूरणं [64]न कृतं, किं तु तत्पूरणायाभ्यासो विहितः – " त्रिः प्रथमामन्वाह त्रिरुत्तमाम् " ( तैस २ ५ ७ ) इति । अतः काम्यानामप्यभ्यासेन पूरणं युक्तम् । अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे सत्येकविंशतिसंख्या पूर्यते तावत्कृत्वः प्रथमोत्तमे अभ्यसनीये । कुतः ? विहितस्य त्रिरभ्यासस्य पूरणार्थत्वदर्शनात् । मैवम् । न हि त्रिस्त्वं पूरणार्थं विहितम् । प्रथमाया द्विरभ्यासेनोत्तमायाश्चतुरभ्यासेनापि[65] [66]पञ्चदशसंख्यायाः पूरणात् । अतो विवक्षितं त्रिस्त्वम् । तथा सति [67]तदुपाधाय [68]प्रथमोत्तमे [69]त्रिरेवाभ्यस्य षण्णामृचामागमेनैकविंशतिसंख्या पूरणीया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥

---

४९ ङ– अत्र । ५० अ इ उ ओ ना पा हा – 'तु' नास्ति । ५१ ङ – क्रमप्रवेश हा– क्रतुसंबंध । ५२ अ इ उ पा हा– पाञ्चदश्य परा° । ५३ आ हा– प्रवेश । ५४ हा– 'प्रवेश' नास्ति । ५५ आ क ङ – बोधनाय । ५६ आ हा – °प्रकरणैनैव । ५७ अ इ उ ओ पा हा– °विकृतिसंबंधे । ५८–५८ आ क ङ– तद्विरोधी विकृति° । ५९ ट हो१–पूर्वाभ्यासो, ग पूर्वाभ्यासो । ६० अ इ उ ओ पा हा– अन्यस्यागमत । ६१ हा– 'अत्र' नास्ति । ६२ आ क– 'ऋग्भि' नास्ति । ६३ ङ– °संख्या । ६४–६४ ङ– विकृताम्, ग– न विकृतम् । ६५ आ– 'अपि' नास्ति । ६६ आ क– °संख्या° । ६७ अ इ उ ओ पा हा– तदभ्यासाय, ग तदभ्यासाय (?) ६८ ङ– सप्रथमोत्तमे । ६९ आ क– त्रिरभ्यस्य ।

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुप व्ययते देवलक्ष्ममेव तत्

निवीतमिति नि - वीतम्। मनुष्याणाम्। प्राचीनावीतमिति प्राचीन आवीतम्। पितृणाम्। उपवीतमित्युप वीतम्। देवानाम्। उपेति। व्ययते। देवलक्ष्ममिति देव - लक्ष्मम्। एव। तत्।

निवीतमित्यादि ॥ स्वाध्यायविधौ (तैआ २ १) उपवीतादीना लक्षण भविष्यति। अत्र तु तत
५ एव प्राप्तत्वादर्थवाद । उक्त च–"निवीतमिति मनुष्यधर्मे शब्दस्य तत्प्रधानत्वात्" (मीसू ३ ४ १) इत्यत्र। उभावपि बाहू न्यग्भूतौ [1]धीयेते तत् [२]निवीत [३]मनुष्याणा [४]सर्वकार्येषु [५]प्रशस्तम्। प्राचीनो दक्षिणो [६]बाहुरावीयते अधस्तात् क्रियते यत्र तत् [७]प्राचीनावीत पितृकर्मणि प्रशस्तम्। यज्ञसाधन भूतो दक्षिणो बाहु [८]उपवीत * समन्ताच्छाद्यते यत्र तद्यज्ञोपवीतम्। यथोक्त– "दक्षिण बाहु मुद्धरतेऽवधत्ते सव्यमिति" (तैआ २ १) इति। तत्र 'सत्यभामा भामा' इतिवत् पदैकदेशो
१० लुप्यते। [९]गतार्थत्वादप्रयोगो लोप। एतद्देवकर्मणि प्रशस्तम्*। तस्माद्धोता सामिधेनीरनुब्रुवन् [६]उपव्ययते उपवीत [६]करोति। देवानाम् एव तेन लक्षण कृत भवति। "अनसन्तान्न पुसकात्" (पा ५ ४ १०३) इत्यच् समासान्त ।

[1]नैमित्तिक्य सामिधेन्य काम्याश्च दशमे श्रुता ॥
अथैकादशे सामिधेनीषु होतुर्नियमविशेषोऽध्वर्यो [२]आचारविधिश्चाभिधास्यते ॥

१५ निवीतमिति ॥ तत्राऽऽदौ तावद्यागकर्तॄणामुपवीत विधातुं प्रस्तौति– 'निवीत मनुष्याणा प्राचीनावीत पितृणामुपवीत देवानाम्' इति ॥ यत्रोभावपि बाहू न्यग्भूतौ सन्तौ यज्ञसूत्रेण वस्त्रेण वा [३]धीयते सवृतावाच्छादितौ क्रियेते तत् [४]निवीतम्। तच्च [५]मनुष्याणा कार्येषु प्रशस्तम्। तस्मात् ऋषितर्पणे निवीतयुक्तै [६]शिष्टैरनुष्ठीयते। प्राचीनो दक्षिणो बाहुरावीयतेऽधस्तात् क्रियते यत्र तत् [७]प्राचीनावीतम्। तच्च [८]पितृणा कर्मणि प्रशस्तम्। अत एव शिष्टा प्राचीनावीतयुक्ता [९]पिण्डदान [६]कुर्वन्ति। उपवीतस्य
२० लक्षण स्वाध्यायब्राह्मणे समाम्नातम्– "दक्षिण बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्" (तैआ २ १) इति। तच्च [७]देवाना कर्मणि प्रशस्तम्। अत एव शिष्टा स्वाध्यायादिक तथैवाऽऽचरन्ति ॥
उपेति ॥ इदानीं विधत्ते 'उप व्ययते देवलक्ष्ममेव तत् कुरुते' इति ॥ [८]तत् तेनोपवीतेन [९]देवलक्ष्मम् [१०]एव देवचिह्नमेव कृत भवति ॥

१ तै३ हो–धीयेते। २ त३ मै मै४ ल– स्व मनुष्यकार्येषु। ३ मै४– प्रसस्तम्। ४ त३–
२५ °रावीयते। *–* [ ल– 'समन्ताच्छाद्यते .. प्रशस्तम्' इत्ययं भागो नास्ति। ]। ५ हो– इत्यर्थ त्वादप्रयोगो (?)। ६–६. ८ हो– 'उपव्ययते उपवीत' नास्ति।

१ ट– नैमित्तिका। २. आ हा – °विशेषश्चाभिधीयते, क– आचारादिविशेषश्चाभिधीयते हो१– आचारादि विधिश्चाभिधास्यते। ३ हा– धीते। ४ आ क– पुरुषैर्°। ५. ट– पिण्डदानादिकं। ६ अ आ इ क चो पा हा– कुर्वन्तीति।

कुरुते तिष्ठन्नन्वाह तिष्ठन् ह्याश्रुततरं वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति यत् क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत् सदेवमन्तराऽनूच्यं सदेवत्वाय

कुरुते। तिष्ठन्। अन्विति। आह। तिष्ठन्। हि। आश्रुततरमित्याश्रुत-तरम्। वदति। तिष्ठन्। अन्विति। आह। सुवर्गस्येति सुव-गस्य। लोकस्य। अभिजित्या इत्यभि-जित्यै। आसीनः। ५ यजति। अस्मिन्। एव। लोके। प्रतीति। तिष्ठति। यत्। क्रौञ्चम्। अन्वाहेत्यनु आह। आसुरम्। तत्। यत्। मन्द्रम्। मानुषम्। तत्। यत्। अन्तरा। तत्। सदेवमिति स देवम्। अन्तरा। अनूच्यमित्यनु उच्यम्। सदेवत्वायेति सदेव त्वाय।

तिष्ठन्नित्यादि॥ लोके हि योऽतिशयेन [7]आश्रुत भवति प्रतिश्रुतमिच्छति स [7]तिष्ठन् वदन् दृश्यते। तस्मात् [7]तिष्ठन् अनुब्रूयात्। किं च– [7]सुवर्गस्य [7]लोकस्य अभिजयाय भवति, १० प्रयासत्त्या, आभिमुख्याद्वा। [8]आसित्वा यागे[8] [7]अस्मिन् [7]लोके प्रतिष्ठित्यै भवति, एतल्लोक प्रयासत्त्या अविचलत्वाच्च॥

[9]क्रौञ्चम्॥ [7]क्रौञ्चम् इव[9] स्वर शुष्क, मन्द्र गभीर, तदुभयो [7]अन्तरा मध्यमस्वरोऽभिधीयते। [7]सदथ देवसहित तस्मान्मन्द्रक्रौञ्चयो [7]अन्तरा मध्ये [7]अनूच्य मध्यमस्वरेणानुब्रूयात्। छान्दस क्यप्॥ १५

तिष्ठन्निति॥ यागकर्तृणामुपवीत विधाय होतु सामिधेन्याद्यनुवचनकाले स्थितिं विधत्ते– 'तिष्ठन्नन्वाह तिष्ठन् ह्याश्रुततर वदति' इति॥ आसीनो नानुब्रूयात् किं तु [7]तिष्ठन् एव ब्रूयात्। तस्मात् [7]तिष्ठन् [8]मनुष्य आ समन्तादतिशयेन श्रुत यथा भवति तथा वदितु प्रभवति। तस्मात् तिष्ठन्ननुब्रूयात्॥

तिष्ठन्निति॥ तदेवानूद्य प्रशसति–'तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्यै' इति॥ [9]आसना दुत्थितस्य प्रत्यासन्न स्वर्ग। तस्मात् तस्य [9]अभिजित्यै सम्पद्यते॥ २०

आसीन इति॥ याज्याकाल उपवेशन विधत्ते–'आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति' इति॥ [9]यजति याज्या पठेदित्यर्थः। आसीनस्य चलनाभावादत्र प्रतिष्ठा॥

यदिति॥ अत्युच्चध्वानिम् अतिनीचध्वनिं चापवदन् मध्यमध्वनि विधत्ते–'यत् क्रौञ्चमन्वाहाऽऽसुर तद्यन्मन्द्र मानुष तद्यदन्तरा तत् सदेवमन्तराऽनूच्य' सदेवत्वाय' इति॥ यथा क्रौञ्चाख्य [9]पक्षी पदय[9] [10]उच्चध्वानि करोति [11]तत्सदृशो सति [11]आसुर भवेत्। मनुष्यास्तूपविश्य मन्द्रस्वरेण २५ सभाषन्ते अत सोऽपि वर्ज्य। [12]मध्यमस्वनस्य देवप्रियत्वात् [13]तथैवानुवचन कार्यम्॥

७ ल हो– अश्रुतम्, मै– आश्रोतु। ८–८ नि अधीनत्वायोगे, मै४– आसीनेन यागे। ९ ९ हो–क्रौञ्च कुञ्चमिव।

७ भू– पुरुष। ८ भू– आसीनात्। ९–९ आ– पक्षिविशेष। १० ना–उच्चैर्ध्वनि। ११ क ड भू– तत्सादृश्ये। १२ आ क ड भू हो१-मध्यमध्वने, जो– मध्यस्वर, अ इ उ पा- मध्यस्वने। ३० १३ क–तदेवा°।

विद्वा॑ꣳसो॒ वै ( १ ) पु॒रा होता॑रोऽभूवन् तस्मा॒द्विधृ॑ता॒ अध्वा॒नोऽभू॑वन्न पन्था॑नः
सम॑रुक्षन्नन्त॒र्वे॒द्य॑न्यः पादो॑ भवति ब॒हिर्वे॒द्य॑न्योऽथान्वा॒हाध्व॑नां॒ विधृ॑त्यै
प॒थाम॑सꣳरोहा॒याथो॑ भू॒तं चै॒व

विद्वा॑ꣳस॒ । वै ( १ ) । पु॒रा । होता॑र । अ॒भू॒व॒न् । तस्मा॑त् । विधृ॑ता॒ इति॒ वि धृ॒ता॒ ।
५ अध्वा॑न । अभू॑वन् । न । पन्था॑न । समिति॑ । अ॒र॒क्ष॒न् । अ॒न्त॒र्वे॒दीत्य॑न्त – वे॒दि । अ॒न्य ।
पाद॑ । भव॑ति । ब॒हि॒र्वे॒दीति॑ ब॒हि – वे॒दि । अ॒न्य । अथ॑ । अन्विति॑ । आ॒ह॒ । अध्व॑नाम् ।
विधृ॑त्या॒ इति॒ वि - धृ॒त्यै॒ । प॒थाम् । अस॑ꣳरोहा॒येत्यस॑ꣳ रो॒हा॒य॒ । अथो॒ इति॑ । भू॒तम् । च॒ । ए॒व ।

विद्वास इत्यादि ॥ पूर्वं [v]विद्वास अध्वर्यवो [१०v]होतार [v]अभूवन् । [v]समरुक्षन् अन्योन्य समारूढा [११] [v]न [v]अभूवन् [११] । " शल इगुपधादनिट क्स " (पा ३ १ ४५) । तत्कथमिदानीं
१० तैर्होत्रादिभि कर्तव्यमित्याह– अन्तर्वेदीत्यादि । [v]अन्तर्वेदि [१२]दक्षिण [v]पाद अवस्थाप्य, इतर [१३v]बहिर्वेदि नातिदूरे [१४]अवस्थाप्य । [v]अथ अनन्तरमेवमवस्थापितपादद्वयोऽनुब्रूयात्, [v]अध्वनाम् असंकीर्णत्वाय [v]असंरोहाय च भवति । अन्य पन्था अन्यस्मिन् समारूढो न भवति । मार्गमोहश्च न भवतीत्यर्थ ॥

अथो इत्यादि ॥ अन्तर्वेदि [v]भूतम इष्टसाधनत्वेन परिनिष्पन्नत्वात्, बहिर्वेदि [v]भविष्यत्
१५ [१५]अतथाभावात् । अन्तर्वेदि [v]परिमितम् इतरत् [v]अपरिमितम् । अन्तर्वेदि ग्राम्या पशवो बह

विद्वाꣳस इति ॥ अपर कश्चिद्विशेष विधत्ते–' विद्वाꣳसो वै पुरा होतारोऽभूवन् तस्माद्विधृता अध्वानोऽभूवन्न पन्थान समरक्षन्नन्तर्वेद्यन्य पादो भवति बहिर्वेद्यन्योऽथान्वाहाध्वना विधृत्यै पथाम संरोहाय ' इति ॥ मूढ कश्चिद्धोता वेदेर्बहिरेव पादद्वयमवस्थाप्यानुब्रूते, तस्य पादद्वयस्थापनात् मार्ग सङ्कीर्णो भवति । अपरस्तु मूढ पादद्वय वेदिमध्य एव प्रक्षिप्यानुब्रूते । [१९] स तु मार्गं न [१९] जानाति । तदिद
२० दोषद्वय [v]विद्वाꣳस केचित् पुरातना [v]पुरा यज्ञेषु [v]होतार [v]अभूवन् । ते च दक्षिण पाद वहिर्न प्रक्षिपन्ति । तेन तेषाम् [v]अध्वान निस्तीर्णत्वेन धृता भवन्ति । वामपादमन्तर्न प्रक्षिपन्ति, किं [illegible] बहिरेव स्थापयन्ति । तेन बहि स्थापनेन [v]पन्थान तान् विदुष पुरुषान् [v]न एव [v]समरुक्षन् संरोढ न कृतवन्त । अन्यो मार्गोऽन्यत्र च गच्छन्तीत्यभावाद्यो मार्गभ्रशो मार्गकृत संरोह । सोऽप्येषा नाऽऽसीत् । तस्मात् पुरातनविद्वास इवायमपि दक्षिण पाद वेदेरन्त प्रक्षिपेत् । वामपाद बहि प्रक्षिपेत् । ततोऽनुब्रूयात् । एवं च सति [v]अध्वना विस्तीर्णत्वेन
२५ धारणं भवति । पथिविषये समोहश्च न भवति ॥

अथो इति ॥ परस्परविरुद्धाण पादविन्यास बहुधा प्रशसति–' अथो भूत चैव भविष्यच्चाव रुन्धेऽथो परिमित चैवापरिमित चाव रुन्धेऽथो ग्राम्याश्चैव पशूनारण्याश्चाव रुन्धे अथो देवलोक

१० पर– अध्वान । ११-११ त्रि– अभूवन्, तै३ ६– नाभवन् । १२ तै३ त्रि मै ९ हो– दक्षिणम् । १३ तै३ त्रि ९ हो–' बहिर्वेदि ' इत्यस्यानन्तरम् ' इति ' । १४ तै१ ९ हो– स्थाप्य ।
३० १५. हो– तथाभावात् ।

१४-१४ ८-७ ग बहिर्मार्गं च ।

भविष्यच्चाव रुन्द्धेऽथो परिमितं चैवापरिमितं चाव रुन्द्धेऽथो ग्राम्यांश्चैव पशूनारण्यांश्चाव रुन्द्धेऽथो ( २ ) देवलोकं चैव मनुष्यलोकं चाभि जयति देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाऽघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै

भविष्यत् । च । अवेति । रुन्द्धे । अथो इति । परिमितमिति परि-मितम् । च । एव । ५
अपरिमितमित्यपरि-मितम् । च । अवेति । रुन्द्धे । अथो इति । ग्राम्यान् । च । एव । पशून् ।
आरण्यान् । च । अवेति । रुन्द्धे । अथो इति ( २ ) । देवलोकमिति देव-लोकम् । च । एव ।
मनुष्यलोकमिति मनुष्य-लोकम् । च । अभीति । जयति । देवाः । वै । सामिधेनीरिति
सम्-इधेनीः । अनूच्येत्यनु-उच्य । यज्ञम् । न । अन्विति । अपश्यन् । सः । प्रजापतिरिति
प्रजा-पतिः । तूष्णीम् । आघारमित्या-घारम् । एति । अघारयत् । ततः । वै । देवाः । यज्ञम् । १०
अन्विति । अपश्यन् । यत् । तूष्णीम् । आघारमित्या-घारम् । आघारयतीत्या-घारयति ।
यज्ञस्य । अनुख्यात्या इत्यनु-ख्यात्यै ।

साधनत्वात् । बहिरारण्याः विपर्ययात्वात् । अत्र [16]"गोश्वाजाविपुरुषगर्दभोष्ट्रा ग्राम्याः पशवः । *"द्विखुर-श्वापदपक्षिसरीसृपहस्तिमर्कटनादेया आरण्याः । अन्तर्वेदि देवलोकः, बहिर्वेदि अन्यः ॥

देवा वै सामिधेनीरनूच्येत्यादि । समाप्तं हौत्रम् ॥ अतःपरं दार्शपौर्णमासिकमाध्वर्यवम्* । १५
प्राजापत्यमेव काण्डम् । [17]"सामिधेन्यनुवचनानन्तरं यज्ञप्रयोगं [v]देवाः [v]न [v]अनु [v]अपश्यन् अनन्तरं कर्तव्यं नाजानन् । स [18]"इत्यादि । [v]प्रजापतिः उत्तरं परिधिसन्धिम् अन्ववहृत्य दक्षिणा-प्राञ्चम् [v]आघारं [v]तूष्णीम् [v]आघारयत् आज्यमक्षारयत् । [v]यज्ञस्य अनुक्रमेण ख्यात्यै भवति ॥

चैव मनुष्यलोकं चाभि जयति ' इति ॥ चतुर्ष्वप्येतेषु पर्यायेषु प्रथमेनान्त-पादप्रशंसा द्वितीयेन बहिष्पाद-प्रशंसेति द्रष्टव्यम् ॥ तदेवं सामिधेनीषु विशेषनियमा हौत्राः समापिताः ॥ १०

देवा इति ॥ अथ [15]"आध्वर्यवं स्रौवमाघारं[15] विधत्ते- ' देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमा घारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै ' इति ॥ पूर्वं 'देवाः 'सामिधेनीः 'अनूच्य तत्रत्येषु नियमविशेषेषु व्यापृतमनस्काः सन्त उपरितनयज्ञगतं कर्तव्यविशेषं कंचिदपि 'न एव स्मृतवन्तः । ततः [16]"सः 'प्रजापतिः मन्त्रं प्रमप्यनुच्चार्य 'तूष्णीम् एव ऋजुम् 'आघारम् अनुष्ठितवान् । तावता कालेन 'देवाः सामिधेनीषु १५

१६. तै३.ले.ह्रो – गोऽजावि° । *-* [ ले-' °हस्तिमर्कटनादेया ... माध्वर्यवम् ' इत्ययं भागो नास्ति । ] १७-१७. लेह्रो– सामिधेन्यनुवाकसण्डद्वयानन्तरम् । १८. तै२– ' इत्यादि ' नास्ति ।

१५-१५. आ–आध्वर्यवस्रौवाघारं; कं–आध्वर्यवमाघारं । १६. आ,क– ' सः ' नास्ति ।

अथो सामिधेनीरेवाभ्यनक्त्यलूक्षो भवति य एवं वेदाथो तर्पयत्येवैनास्तृप्यति प्रजया पशुभि(३)र्य एवं वेद यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्द्वाभ्यां द्वे प्रीणीयाद्-

अथो इति । सामिधेनीरिति साम् इधेनीः । एव । अभीति । अनक्ति । अलूक्ष । भवति । य । एवम् । वेद । अथो इति । तर्पयति । एव । एनाः । तृप्यति । प्रजयेति प्र जया ।
५ पशुभिरिति पशु भिः (३) । य । एवम् । वेद । यत् । एकया । आघारयेदित्या-घारयेत् । एकाम् । प्रीणीयात् । यत् । द्वाभ्याम् । द्वे इति । प्रीणीयात् ।

अथो इत्यादि ॥ सामिधेनीभिर्हूताना समिधामियमभ्यक्तिः क्रियते [१०]अञ्जनस्थानीयत्वात् । यथोक्तम्– "अभ्यञ्जन वान लिया अजम्" (तस २ ५ १) इति । [v]एव विद्वान् [v]अलूक्ष [v]भवति । रूक्षो दुर्गत । लुब्ध इत्येके । अभ्यञ्जनादिसमृद्धो भवति । तर्पयत्येवेति । अग्नौ प्रक्षेप
१० निस्मृत्य यथा तृप्ता एव भवति तथा करोत्यनेन ॥

यदेकयेत्यादि ॥ यदि [v]एकया वाचा मन्त्राभिकया[११] [v]आघारयेत् [v]एकाम् एव सामिधेनीं [१२][v]प्रीणीयात् । [v]द्वाभ्याम् [v]द्वे । यदिति । [v]तिसृभि [v]तत् [v]अतिरेचयेत् । आघारमात्र

[१७]विक्षिप्त चित्त समाधायैकाग्रेण मनसा [१]यष्टव्य कर्तव्यविशेषमनुस्मृतवन्त । अतोऽत्रापि [१]तूष्णीम् अनुष्ठित प्रथमाघारोऽनन्तरभाविनो यष्टव्यस्यानुस्मरणाय भवति । यद्यपि पौरोडाशिककाण्डे– "यदे
१५ मोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति" (तेब्रा ३ ३ ७) इति प्रथमाघारो विहित, तथाऽपि तूष्णीं भावादयो गुणविशेषा न विहिता इति नास्ति [१८]पुनरुक्ति ॥

अथो इति ॥ तमेवाऽऽघार प्रशसति– 'अथो सामिधेनीरेवाभ्यनक्ति' इति ॥ न केवलमनन्तर भाविवयज्ञकर्मप्रतिभानमाघारस्य प्रयोजन, किं तु वह्नौ प्रक्षिप्ताना सामिधेनीकाष्ठानामभ्यञ्जनमप्येक प्रयोजनम् ॥

२० अलूक्ष इति ॥ एतद्वेदन प्रशसति– 'अलूक्षो भवति य एव वेद' इति ॥ उक्ताभ्यञ्जनाभिज्ञ स्वयम् अलूक्ष पारुष्यरहित स्नेहोपेत [१]भवति ॥

अथो इति ॥ आघारमेव पुन प्रशसति 'अथो तर्पयत्येवैना' इति ॥ किं चानेनाऽऽघारेण [१]एना सामिधेन्यभिमानिदेवता [१]तर्पयति ॥

तृप्यतीति ॥ एतदीयतृप्तिवेदन प्रशसति– 'तृप्यति प्रजया पशुभिर्य एव वेद' इति ॥
२५ यदिति ॥ यदुक्त सूत्रकारेण– "स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तर परिधिसन्धिमन्ववहृत्य प्रजापति मनसा ध्यायन् दक्षिणाप्राञ्चमृजु सतत ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्मकाष्ठानि सस्पर्शयति" (आपश्रौ २ १२ ७) इति वेदेनोपयम्य स्रुवस्याधस्ताद्द धारयित्वोत्तरं

१० तैत्र ग्रा–अत्राम्या° । २०–२० ग हो– मन्त्रा ाभिकया । २१ ग हो–द्रुणीयात् (?) ।

१७ ए–विक्षि° । १८ आ क–यष्टव्य° । १९ अ इ ट जो ग पा हा–पौनरुक्ति ।

यत् तिसृभिरति तद्रेचयेन्मनसाऽऽघारयति मनसा ह्यनाप्तमाप्यते तिर्यञ्चमा घारयत्यछम्बट्कारं वाक् च मनश्चाऽऽर्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य

यत्। तिसृभिरिति तिसृ-भिः। अतीति। तत्। रेचयेत्। मनसा। एति। घारयति। मनसा। हि। अनाप्तम्। आप्यते। तिर्यञ्चम्। एति। घारयति। अछम्बट्कारमित्यछम्बट्-कारम्। वाक्। च। मनः। च। आर्तीयेताम्। अहम्। देवेभ्यः। हव्यम्। वहामि। इति। वाक्। अब्रवीत्। अहम्। देवेभ्यः। इति।

तिसृभिः क्रियते इत्यतिरेकोऽयम्। तस्मात् गन्यभावात् मनसा तूर्णाम् आघारयति। एव हि अनाप्तम् आप्तुमयोग्यं ह्याप्तं भवति ॥

तिर्यञ्चमिति ॥ सर्वाग्निकोणदण्डवत् धारकत्वात् तिरश्चीन आघारोऽग्रेरनार्तत्वाय भवति ॥

वाक् चेत्यादि ॥ ऋतिः सौत्रो धातुः घृणाया वर्तते। तस्माल्लुङ्, "ऋतेरीयङ्" (पा ३·१·२९), "आडजादीनाम्" (पा ६·४·७२)। वाक् च मनः च देवेषु आर्तीयेताम् आदरातिशयमकुरुताम्। अहम् एव देवेभ्य. हव्यं वहानि इति वाक् अब्रवीत्। मनः च

परिभिसंधिमन्वचह्नस्य घाय्यीये संधौ सयुक्तहस्तमन्तः प्रसार्य ज्योतिष्मति वह्नौ घृतं क्षारयंस्तद्घृतं सर्वसामिधेनीव्याप्तरूपं कुर्यादित्यर्थः। तत्र मनसा प्रजापतेर्यत् ध्यानं तदेतद्विधत्ते– 'यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्द्वाभ्यां द्वे प्रीणीयाद्यत् तिसृभिरति तद्रेचयेन्मनसाऽऽघारयति मनसा ह्यनाप्तमाप्यते' इति ॥ यद्येकामृचं पठित्वा आघारयेत् तदानीमेकैव सामिधेनी तृप्ता भवेत्। द्वाभ्याम् ऋग्भ्यां द्वे एव तृप्ते भवेताम्। त्रिप्रभृतिभिर्ऋग्भिराघारं यदि कुर्यात् तेनायमाघारः सर्वाणि कर्माण्यतिरिक्तवान् भवति। एवस्य हि कर्मण एकैव ऋक् प्राप्ता। तथा सति बहुभिरनुष्ठानमतिरेकः। तस्य सर्वस्य दोषस्य परिहाराय मनसा एवाऽऽघारयेत् मनसोऽप्रतिहतगतित्वात्। यद्वाभ्यादिभिर्न प्राप्तं तत् सर्वं मनसा प्राप्तुं शक्यते ॥

तिर्यञ्चमिति ॥ 'दक्षिणाप्राञ्चम्' इत्युदाहृते सूत्रे वायव्यां दिशमारभ्याऽऽग्नेय्यां समापनमुक्तम्। स एव सूत्रकार आघारयोः पुनरपि द्वे पक्षान्तरे दर्शितवान्। "ऋजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा" (आपश्रौ २·१२·८) इति। तत्र तिर्यक्पक्षं विधत्ते– 'तिर्यञ्चमा घारयत्यछम्बट्कारम्' इति ॥ दक्षिणां दिशमारभ्योत्तरस्यां समापनं तिर्यक्त्वम्। "प्रतीचीमारभ्य प्राच्यां" समापने सत्येकस्या एव समिध उपरि घृतं पतेत्। तथा सति समिदन्तराणाम् अस्पर्शात् छम्बट्कारो वैयर्थ्यं भवेत्। तस्मात् अछम्बट्कारं यथा भवति तथा होतव्यम्। तिर्यक्त्वे सति सर्वसमित्संस्पर्शाद्वैयर्थ्यं न भवति ॥

वागिति ॥ 'मनसाऽऽघारयति' इति यद्विहितं तदेव पुनः प्रशंसति– 'वाक् च मनश्चाऽऽर्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैतां सोऽब्रवीत् प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत्खलु तुभ्यं न वाचा जुहवन्नित्यब्रवीत् तस्मात् मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै' इति ॥ आर्तिरादरातिशयः तामिच्छेताम्। सैवाऽऽर्तिः स्पष्टीक्रियते– 'अहं देवेभ्यो हव्यं वहामि' इति वाक्येन। ततो वाक् च

२२. मै.मै४–सर्वगतिके दण्डवत्।

२०–२०. अ.इ.उ.जो.ना.पा.हा–प्रतीच्यामारभ्य, क.हो१–प्रतीच्यामारभ्य प्राच्या। २१. मै–अस्पर्शात् आघारे। २२. आ.क–आर्तिरतिशयः।

इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत् ( ४ ) प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत् खलु तुभ्यं न वाचा जुहवन्नित्यब्रवीत् तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै

मनः । तौ । प्रजापतिमिति प्रजा-पतिम् । प्रश्नम् । ऐताम् । सः । अब्रवीत् ( ४ ) । प्रजापतिरिति प्रजा-पतिः । दूती । एव । त्वम् । मनसः । असि । यत् । हि । मनसा । ध्यायति । तत् । वाचा । वदति । इति । तत् । खलु । तुभ्यम् । न । वाचा । जुहवन् । इति । अब्रवीत् । तस्मात् । मनसा । प्रजापतय इति प्रजा-पतये । जुह्वति । मनः । इव । हि । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः । आप्त्यै ।

अहम् एव वहानि इति अब्रवीत् । अथ तौ तथा श्रद्धातिशयेन विप्रतिपद्यमानौ वाङ्मनसाख्यौ पदार्थौ पुत्रौ वा प्रजापते । लिङ्गव्यत्ययेन वा "नपुंसकमनपुंसकेन°" (पा १ २ ६९) इति बाध्यते । प्रजापतिं प्रश्नम् ऐताम् प्रष्टव्यत्वेनागच्छताम् ॥

सोऽब्रवीदित्यादि ॥ "सुपा सुलुक्°" (पा ७ १ ३९) इति हल्ङ्याद्दिलोपापवाद स्वादेश । वाचम् अब्रवीत् प्रजापति — मनसा ध्यातस्य बहिः ख्यापयित्रीति दूतस्थानीया एव त्वम् असि । तस्मान्मन एव हविर्वोढुमर्हतीति । अथ वाक् प्रजापतिम् अब्रवीत् तर्हि केचिदपि तुभ्य न वाचा मन्त्रेण जुहवन् जुहवु । तस्मात् वाच शापात् प्रजापतये मनसा एव जुह्वति इति । लेटि तस्यार्धधातुकत्वेन ङित्वाभावाद्गुण, अन्त्यादेशश्च, द्विनिकरणत्वेन शपि मध्येऽवतिष्ठते । मन इव हीति । व्यापकत्वेन प्रजापतितुल्यत्वेन मनसा होम प्रजापते आप्त्यै भवति ॥

मनश्चेत्येतौ हविर्वहननिर्णयाय प्रश्न कर्तुं प्रजापतिं प्राप्नुताम् । स प्रजापति वाचम् अब्रवीत्- हे वाक्, त्वं मनस दूती एव असि दासीभूतैवासि न तु स्वतन्त्रा । तत्कथमित्युच्यते- यस्माल्लोके पुरुष यत् पूर्वं मनसा ध्यायति तत् पश्चात् वाचा वदति तस्मात् वाचो दूतीत्वमेवेति । अनन्तरं क्रुद्धा वाक् अब्रवीत्- हे प्रजापते, यद्यहं दूती तर्हि तुभ्य कोऽपि वाचा मा जुहोत्विति । तस्मात् आधार प्रजापतये मनसा जुह्वति । यथा मन सङ्कल्पेन कार्यं साधयति तथा प्रजापति अपि । अत सादृश्यान्मनसा होम प्रजापते आप्त्यै भवति ॥

२३-२३ मै- मनव्याध्यातम्य, तै- वस्याध्यातस्य । २४ त्रि हो- ख्यापयतीति । २५ त्रि हो- तरस्थानीया । २६ ख हो- 'अब्रवीत्' इत्यस्यानन्तरम् 'इति' । २७ हो- लोटि । २८ हो-व्यापित्वेन । २९ ख- 'प्रजापतितुल्यत्वेन' नास्ति ।

२३ ह गं-तस्मात्कारणात् ।

परिधीन्त्सं मार्ष्टि पुनात्येवैनान् त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रयं(५)इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो

परिधीनिति परि-धीन्। समिति। मार्ष्टि। पुनाति। एव। एनान्। त्रिः। मध्यमम्। त्रयः। वै। ५
प्राणा इति प्र-अनाः। प्राणानिति प्र-अनान्। एव। अभीति। जयति। त्रिः। दक्षिणार्ध्यमिति दक्षिण-अर्ध्यम्। त्रयः (५)। इमे। लोकाः। इमान्। एव। लोकान्। अभीति। जयति। त्रिः। उत्तरार्ध्यमित्युत्तर-अर्ध्यम्। त्रयः। वै। देवयाना इति देव-यानाः। पन्थानः। तान्। एव। अभीति। जयति। त्रिः। उपेति। वाजयति। त्रयः। वै। देवलोका इति देव-लोकाः। देवलोकानिति देव-लोकान्। एव। अभीति। जयति। द्वादश। समिति। पद्यन्ते। द्वादश। १०
मासाः। संवत्सर इति सं-वत्सरः। संवत्सरमिति सं-वत्सरम्। एव। प्रीणाति। अथो इति।

परिधीनित्यादि ॥ गतम्। मध्यमादीनां प्राणादिजयहेतुत्वं यथाकथंचिदुत्प्रेक्ष्यम्। केचिदाहुः— देहमध्यस्थप्राणादिस्थानीया मध्यमा। दक्षिणभूगोलस्य प्रकाशत्वेन लोकत्वात् दक्षिणा लोकस्थानीया। उत्तरगोलस्याप्रकाशत्वात् देवपथतुल्या उत्तरा इति। "दिक्पूर्वपदाट्ठञ्च" (पा ४ ३·६) इति अर्धान्तात् यत्प्रत्ययः। १५

त्रिरुप वाजयतीति ॥ अग्निं त्रिः विधूनयति। देवलोकस्थानीयस्याग्नेः उपवाजनेन लोकत्रयावाप्तिः। सत्यलोकान्तास्त्रयो देवलोकाः। वातेर्णिजन्तस्य "वो विधूनने जुक्" (पा ७ ३ ३८) इति जुगागमः।

परिधीनिति ॥ यदुक्तं सूत्रकारेण— "इध्मसंनहनैः सह स्रुवैर्मार्ष्टि स्रुवैर्वाऽऽग्नीध्रोऽनुपरिक्राम परिधीन् यथापरिधितमव्यर्थं त्रिस्त्रिः संमृज्य" (आपश्री २ १२·१) इति, तदेतत् समार्गेण स्रुवेण २० सहितैरिध्मसंनहनदर्भैः कर्तव्यमिति विधत्ते— 'परिधीन्त्सं मार्ष्टि पुनात्येवैनान्' इति ॥

त्रिरिति ॥ क्रमेणैकैकस्य परिधेः समार्जनावृत्तिं विधत्ते— 'त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रय इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति' इति॥ प्राणापानव्याना इति त्रित्वम्, लोकत्रित्वं प्रसिद्धम्, स्वर्गलोक- २५ यमलोकब्रह्मलोकविषया त्रयः पन्थानः। तत्र यमलोकविषयस्य परिहारो जयः, इतरयोः प्राप्तिर्जयः। त्रित्वसाम्यात् तज्जय इति स्तूयते॥

त्रिरिति ॥ यदुक्तं सूत्रकारेण— "वेदेनाग्निं त्रिरुपवाज्य" (आपश्री २ १२·७) इति, तदेतद्विधत्ते— 'त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति' इति॥ देवलोकानां त्रित्व तदभिजयश्च "मार्गत्रित्वतज्जयवद्व्याख्येयम्॥

३०–३० ल हो — दिक्पूर्वपदाच्चेति अजान्तात् (?), त३ — दिक्पूर्वपदाच्चेति अर्धान्तात्। ३०
३१ त३–त्रिभिः। ३२ ल– °स्थानीयाग्ने।
३४ क ग, हो१– मार्गनयवद्व्याख्येयम्।

संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या आघारमा घारयति तिर इव (६) वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्र रोचयत्यृजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै

संवत्सरमिति सं वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुव – गस्य । लोकस्य । समष्ट्या इति सम् अष्ट्यै । आघारमित्या घारम् । एति । घारयति । तिरः । इव (६) । वै । सुवर्ग इति सुव – गः । लोकः । सुवर्गमिति सुव – गम् । एव । अस्मै । लोकम् । प्रेति । रोचयति । ऋजुम् । एति । घारयति । ऋजुः । इव । हि । प्राण इति प्र अनः । संततमिति सं-ततम् । एति । घारयति । प्राणानामिति प्र-अनानाम् । अन्नाद्यस्येत्यन्न अद्यस्य । संतत्या इति सं-तत्यै । अथो इति । रक्षसाम् । अपहत्या इत्यप हत्यै ।

१० द्वादशत्वान्वयात् द्वादशमासात्मकं [V]संवत्सरं [V]अत्र संपादितो भवति । स च स्वर्गावाप्तिहेतुरिति ॥

आघारमित्यादि ॥ [V]धारा तिरश्चीनत्वेन तिरोभूतत्वात् स्वर्गम् [V]अस्मै [V]प्र [V]रोचयति दीपयति वा । ऋजुरिति । अकुटिलधाराम् [V]आघारयति । [V]प्राणानाम् [V]अन्नाद्यस्य अविच्छेदाय भवति । [VV]रक्षसाम् [V]अपहत्यै भवति ॥

१५ द्वादशेति ॥ त्रिषु परिधिषु वह्नौ च [२५]येयं प्रत्येकं त्रिः क्रियावृत्तिस्तामेकीकृत्य प्रशंसति– ' द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः, संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै इति ॥ न केवलं संवत्सरदेवतायाः प्रीतिः किंतु तत् [V]संवत्सरं [२६]यजमानार्थं कर्मानुष्ठानकालत्वेन संपादयति । तच्च स्वर्गलोकप्राप्त्यै भवति ॥

आघारमिति ॥ पूर्वत्र विहितं तिर्यञ्चमाघारमनूद्य प्रशंसति– ' आघारमा घारयति तिर इव २० वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्र रोचयति ' इति ॥ प्राङ्मुखेन यजमानेन दृश्यमानः स्वर्गो [V]लोको दक्षिणोत्तरायामेन प्रतीयमानत्वात् [V]तिर [V]इव भवति । अतस्तिर्यगाघारेण यजमानाय [२७]स्वर्गमुत्पादितवान् भवति । अथवा स्रुच्याघारस्य द्वितीयस्यायं विधिर्द्रष्टव्यः ॥

ऋजुमिति ॥ आघारे गुणान्तरद्वयं विधत्ते– ' ऋजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै ' इति ॥ दक्षिणां दिशमारभ्योत्तरदिगवसानपर्यन्त २५ माघारधाराया वक्रत्वं यथा न भवति, यथा च विच्छेदो न भवति तथा कुर्यात् । प्राणवायुश्च हृदयमारभ्य मुखे निःसरन् वामदक्षिणपार्श्वयो [२८]अप्रवेशेन [V]ऋजु [V]एव भवति संततश्च भवति । अत प्राणस्यान्नस्य च [V]सातत्यं संपद्यते । किं च सातत्येन [V]रक्षसाम् अवकाशाभावादपहतिर्भवति ॥

२३ ळ हो– धारायाम् । २४ ळ– स च रक्षसाम् ।

२५ ट– या । २६. अ इ ठ पा हो१– यजमानार्थं° । २७ ग्र– स्वर्गं रुचिमुत्पादितवान्, ३० अ इ ग ओ ग पा हा– स्वर्गमुत्पादित° । २८ ग्र हो१– अप्रवेशात् ।

यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽघारयेत् प्राणमेवास्माज्जिह्मं नयति ताजक् प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा(७)ऽऽघारमाघार्य ध्रुवा८ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानां दूत आसीद्-

यम्। कामयेत। प्रमायुक इति प्र-मायुक। स्यात्। इति। जिह्मम्। तस्य। एति। घारयेत्। प्राणमिति प्र अनम्। एव। अस्मात्। जिह्मम्। नयति। ताजक्। प्रेति। मीयते। शिरः। वै। एतत्। यज्ञस्य। यत्। आघार इत्या घार। आत्मा। ध्रुवा (७)। आघारमित्या घारम्। आघार्येत्या घार्य। ध्रुवाम्। समिति। अनक्ति। आत्मन्। एव। यज्ञस्य। शिरः। प्रतीति। दधाति। अग्निः। देवानाम्। दूतः। आसीत्। ५

यमित्यादि ॥ गतम्। [२९]जिह्मं कुटिलम्।

शिरो वा इत्यादि ॥ आघारशेषेण ध्रुवादिसमञ्जनादात्मनि [३०]यज्ञस्य [३१]शिरः [३५]प्रतिहितं भवति ॥ १०

अग्निर्देवानामित्यादि ॥ अध्वर्युप्रवरविधिः। दैव्य इति वक्ष्यमाणत्वान्मानुषोऽग्निर्गृह्यते। स च ब्राह्मण एव [३२]देवानां यागे हविषो वोढा [३३]आसीत्, [३४]दैव्य [३५]अग्निः [३६]असुराणाम् आसीत्।

यमिति ॥ ऋजुत्वस्य नित्यप्रयोगाङ्गत्वात् काम्यत्वेन वक्रत्वं विधत्ते– 'यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽघारयेत् प्राणमेवास्माज्जिह्मं नयति ताजक् प्र मीयते' इति ॥ 'यं यजमानमुद्दिश्य मरणं 'कामयेत 'तस्य 'जिह्मं वक्रं यथा भवति तथा 'आघारयेत्। तेन वक्रत्वेन 'अस्माद् यजमानात् 'प्राणं धामादिपार्श्वनाडीषु प्रविश्य वक्रत्वं प्रापयति। तेन श्वासोपरोधेन तदानीमेवासौ म्रियते ॥ १५

शिर इति ॥ आघारशेषेण [२९]ध्रुवायामञ्जनं विधत्ते– 'शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवाऽऽघारमाघार्य ध्रुवा८ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधाति' इति ॥ स्वात्मस्थानीयायां ध्रुवायां यज्ञशिरःस्थानीयस्याऽऽघारस्य प्रक्षेपे सति स्वस्मिन्नेव यज्ञशिरः स्थापितवान् भवति। ननु परिधि- २० समार्जनादय पौरोडाशिककाण्डेऽपि (द्र तैस २ ६ ६) विहिता। बाढम्। [३०]तर्हि अनुक्रमेण मन्त्राणां व्याख्यायमानत्वात् '[३१]भुवनम्' (तैस १ १ १२) इत्यादिमन्त्रव्याख्यानावसरे (तैब्रा ३ ३ ७) युक्ता एतद्विधय। इह तु तदनुवादेन प्रत्यभिज्ञाप्य तेषु [३२]ऋजुत्वादयो [३३]गुणा विधीयन्ते। ततो नास्ति पुनरुक्त दोष। अत एवोक्तानुवादकत्वादनुब्राह्मणमेतद्भिति सम्प्रदायविद ॥

अग्निरिति ॥ यदुक्तं सूत्रकारेण– '[३४]ऊर्ध्वज्ञुमासीनं होतारं वृणातेऽग्निर्देवो होता देवान् यक्षद् विद्वाँश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमान" (आपश्रौ २ १६ ५) इति "इत ऊर्ध्वान् ध्वर्युर्वृणातेऽमुतोऽर्वाचो होता" (आपश्रौ २ १६ ९) इति च। अस्यायमर्थ –यजमानस्य यादृशान्यार्षेयाणि तादृशानि होतारं प्रत्यमुवदमुवदिति [३५]तत्तन्नामनिर्देशपुरःसरं प्रयोक्तव्यानि। तदिदमध्वर्युकर्तृकं होतृविषयं २५

३५ तत्र– 'प्रतिहितं' नास्ति।

२९ हा– ध्रुवाया अञ्जन। ३० आ क ग– तर्हि। ३१ क ड ग होर– भुवनमात्र। ३२ ड– ऋजुत्वादि। ३३ क ड ग होर– गुणविशेषा। ३४ आ क– ऊर्ध्वीतिष्ठन्। ३५ आ क– तत्तन्नामपुरःसर। ३०

दैव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताऽ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवा ( ८ ) अभवन् पराऽसुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना परोऽस्य भ्रातृव्यो भवति

५ दैव्यः । असुराणाम् । तौ । प्रजापतिमिति प्रजा पतिम् । प्रश्नम् । ऐताम् । सः । प्रजापतिरिति प्रजा-पतिः । ब्राह्मणम् । अब्रवीत् । एतत् । वीति । ब्रूहि । इति । एति । श्रावय । इति । इदम् । देवाः । शृणुत । इति । वाव । तत् । अब्रवीत् । अग्निः । देवः । होता । इति । यः । एव । देवानाम् । तम् । अवृणीत । ततः । देवाः ( ८ ) । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । प्रवरमिति प्र-वरम् । प्रवृणत इति प्र-वृणते ।
१० भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ।

"देवाश्चक्रौ" (द पा ४ १ ८५ वा ३) इति यञ्। [३६]तौ [३६]प्रजापतिं [३६]प्रश्नम् [३६]ऐता प्रष्टव्यत्वेना गच्छताम् कतरो नो [३६]हविषा यष्टुमर्हतीति । अथ [३६]स [३६]प्रजापतिः [३६]ब्राह्मणं मानुषमग्निं दूत्ये स्थाप यितुकाम [३६]अब्रवीत् [३६]आ [३६]श्रावय [३६]इति, यदिदमध्वर्युणा त्वा प्रत्युच्यते, [३६]एतत् [३६]वि [३६]ब्रूहि आच क्ष्वेति । स अपि [३६]इद [३७]देवा [३६]शृणुत [३६]इति, देवेभ्य आवेदनार्थं [३६]वाव इति, [३६]तत् [३६]अब्रवीत् ।
१५ तत '[३६]अग्नि [३६]देव [३६]होता' इत्यादिना वाक्येन [३६]य [३८][३६]एव दूतो ब्राह्मणामाऽग्नि [३६]तम् एव [३६]अवृणीत– अयम् अग्नि देव होता ब्राह्मणामा देवान् यष्टुमर्हति विद्वान् आश्रावणादितत्त्वज्ञ । [३९]चिकित्वा(न्) महाज्ञान, मनुरिव [४०]भरत इव जमदग्निरिवोर्व इव [४१]अप्नवान इव च्यवन इव भृगुरिवेति । [४२]एवमिति । ऊर्ध्वानृषीन् प्रवृणानो होतारं वृणीते ॥ ततो देवा इत्यादि ॥ गतम् ॥

वरणम् । सामिधेनीप्रस्तावे तु–"आर्षेयं वृणीते" (तैस २ ५ ८) इति होतृकर्तृकमग्निविषयं वरणमुक्तम् ।
१० तयोरयं विशेष । अर्वाञ्चमारभ्यैव ऊर्ध्वानुत्तरोत्तरानध्वर्युर्वृणीते । होता तूत्तममारभ्य [४३]अधस्तमान् वृणीते । तद्यथा–भार्गवच्यावनाप्नवानौर्वजामदग्न्य इत्येव होतृकर्तृकं पूर्वमुदाहृतम् । अध्वर्युकर्तृके तु–'मनु ष्वद्भरतवत्' इत्यन्त मन्त्र पठित्वा–'जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवत्' इति प्रयोक्तव्यम् इति । तदिदमध्वर्युकर्तृकं होतृविषयं वरणं विधत्ते–'अग्निर्देवाना दूत आसीद्दैव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताऽ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्विब्रूहीत्या श्रावयेतीदं देवा शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य
१५ एव देवानां तमवृणीत ततो देवा अभवन् पराऽसुरा यस्यैवं विदुष प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति । द्विविधो ह्यग्निर्मानुषो दैव्यश्चेति[४४] । भूलोके वर्तमानो होमसाधनभूतो मानुष [३६]अग्नि । स च [३६]देवाना हविर्वहनेन तदीय [३६]दूतः [३६]आसीत् । दिवि वर्तमानो [४५]दैव्य । स चान्यत्रापि

३६ तर त्रि मै ल हो– हवींषि । ३७ ल हो– देवानाम् । ३८–३८ मै४– एवंभूतो ।
३९. हो– विरवा (?) । ४०. मै– भारत । ४१. तैर त्रि ल हो– आप्नवान, मै– अप्नुवान ।
२० ४२ तर त्रि ल हो– पचमितर°, मै४ एवमित ।

३६ ह–अधमात्, गे–अधरान् । ३७ ह– 'इति' नास्ति । ३८ ह– दैव्योऽग्नि ।

यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मने-ऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्राह्मणो न परोच्यः ॥ ११ ॥

[ वा अरण्याश्चात्र रुद्रेऽथो पशुभि सोऽनर्वाद्दक्षिणार्ध्वी त्रय इव धुरा देवाश्च परिश्शाच्च । ]

यत् । ब्राह्मण । च । अब्राह्मण । च । प्रश्नम् । एयातामित्या इयाताम् । ब्राह्मणाय । अधीति । ब्रूयात् । यत् । ब्राह्मणाय । अध्याहेत्यधि आहे । आत्मने । अधीति । आह । यत् । ब्राह्मणम् । पराहेति परा आह । आत्मानम् । परेति । आह । तस्मात् । ब्राह्मण । न । परोच्य इति परा उच्य ॥ ११ ॥

[ शमा १ ४ २ १८, १९, १ ५ ८-११ ]

यद्ब्राह्मणश्चेत्यादि ॥ ब्राह्मणाब्राह्मणयो प्रश्नार्थमागतयो ब्राह्मणाय अधिक पक्षपातेन ब्रूयात् । गतम यत् । अनादरेण वचन परोच्य इति । छान्दस क्यच् ॥

इति द्वितीये पञ्चमे एकादशोऽनुवाक ।

श्रूयते – "[39]दिवि नाको नामाग्नि । तस्य विप्रुषो भागधेयम्" ( तैब्रा ३ २ ३ ) इति । स च असुराणा हितमाचरस्तदीयो दूत आसीत् । तौ उभावागतौ कस्य दौत्यमुचितमिति प्रश्नम् अभिलक्ष्य प्रजापतिं प्राप्नुताम् । तत्र योऽय मानुषोऽग्नि स ब्राह्मण । ब्रह्मणि वेदे विहित कर्म साधयितु प्रवृत्तत्वात् । दैव्यस्त्व सुराणा [40]कर्म साधयितु प्रवृत्तत्वादासुर इत्युच्यते न [41]तु ब्राह्मण इति । तयोर्मध्ये ब्राह्मणम् अग्निं [42]प्रति प्रजापति अब्रवीत् । हे मानुषाग्ने, त्वमेव दूत्यमर्हसि । तस्मात् त्वमेव यागे वक्तव्यम् एतत् सर्वं ब्रूहि इति । किं तत्सर्वमिति तदुच्यते । होतार प्रत्यध्वर्यु आ श्रावय इति प्रयुङ्क्ते । तस्य प्रयोगस्याभिप्राय कथ्यते–हे देवा इद यजमानसबन्धि हविर्दान शृणुत इति एतमर्थमेव 'होतर्ब्रूहि' इत्यभिप्रेत्य [43]तदा श्रवणवाक्य हे होत, त्वा प्रत्यध्वर्यु अब्रवीत् । तस्मात् त्वमेव याज्यापाठमुखेन देवाना श्रवण यथा भवति तथा हौत्रमेतत् सर्वं त्वमेव ब्रूहीति । आसुरं प्रत्यध्वर्युणा 'आ श्रावय' इत्यनुक्तत्वादसौ याज्यादिक मा प्रवोचदित्यभिप्राय । [44]यस्मात् प्रजापति ब्राह्मणरूपस्य अग्नेरेव दूत्य सपादितवान् तस्मात् तादृशाग्निप्रतिपादनेन 'अग्निर्दैवो होता' इति मन्त्रेण अध्वर्युर्होतार वृणीते इति शेष । एतन्मन्त्रपाठेन देवाना य दूत तम् एव वृतवान् भवति । प्रवर यथोक्त 'आदग्निवत्' इत्यादिक प्रवृत्त वरण प्रवृणते अनुतिष्ठति ॥

यदिति ॥ ब्राह्मणाभिवरण [45]प्रशसति–'यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयाता ब्राह्मणायाधि ब्रूयाद् यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह यद्ब्राह्मण पराहाऽऽत्मान पराऽऽह तस्मादब्राह्मणो न परोच्य' इति ॥ यदि लोके ब्राह्मणाब्राह्मणौ विवदमानावहमेवाधिक इति [46]अधिविषय प्रश्न कर्तुं कञ्चिदभिज्ञ प्रत्यागच्छेता तदानीं

४१-४१ मै४– ब्राह्मणपाक्षिक ।

३९ कहा– दिवा । ४० श्र– अपि कार्यं । ४१ आ– 'तु' नास्ति । ४२ ह– 'प्रति' नास्ति । ४३ हो१– तदाश्रवणवाच्य । ४४–४४ आ क– यस्मात्प्रजापतिर्ब्राह्मणाभिवरण कृतवांस्तस्माद्देवा उत्कृष्टा अभवन् । पराभूता असुरा । प्रशसति, ने– तस्मात् प्रजापति ब्रह्मयामेव वरण । ४५ अ इ उ पा– दिवियु य प्रति ।

सोऽभिज्ञो ब्राह्मणस्यैवाऽऽधिक्यं ब्रूयात्। तेन वस्तुः स्वस्यैवाऽऽधिक्यं संपादितं भवति। ब्राह्मणस्य पराभव-वचने स्वस्यैव पराभव उक्तो भवति। तस्मात् कदाचिदपि ब्राह्मणः पराभवविषयः न कर्तव्यः। सोऽयं प्रासङ्गिकः [46]पुरुषार्थो विधिर्द्रष्टव्यः ॥

अत्र मीमांसा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम् –

५　" निवीतं तु मनुष्याणां [47]विधिर्वैषोऽर्थवादकः।
अपूर्वत्वात् प्रकरणात् [48]नुः [49]क्रतोर्वा विधीयते ॥
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात्।
उपवीतविधायेकवाक्यत्वादर्थवादता " ॥ ( जैन्या ३·४·१·२ ) ॥

[50]दर्शपूर्णमासयोः श्रूयते – " निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुप
१० व्ययते देवलक्ष्ममेव तत् कुरुते " ( तैसं २·५·११ ) इति। तत्र निवीतस्य पूर्वं [51]मानान्तरेणाप्राप्तत्वात् विधेयत्वमभ्युपेतव्यम्। तच्च निवीतं 'मनुष्याणाम्' [52]इति षष्ठ्या[52] पुरुषार्थत्वेन विधीयत इत्येकः [53]पूर्वपक्षः। अस्मिन् पक्षे मनुष्यसम्बन्धो द्विविधः– सुवर्णधारणवत् सर्वपुरुषसंबन्धः इत्येकः प्रकारः। उपवीतप्राचीनावीतयोः क्रतुप्रवेशरहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात् तत्साहचर्येण स्वतन्त्र [54]आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतमित्यपरः प्रकारः। प्रकरणबलाद्यागधर्म इति द्वितीयः
१५ पूर्वपक्षः। [55]अस्मिन् पक्षे मनुष्यग्रहणं कर्तृसम्बन्धानुवादः। षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसम्बन्धिमनुष्यधर्म इति पक्षान्तरमुदेति। तच्च द्विविध, लोहितोष्णीषादिवद्दक्षिणाधर्म इत्येकः प्रकारः। क्रतावेव यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तद्धर्मत्वे सति [56]उपवीतप्राचीनावीतसाहचर्यमप्यनु-गृहीत इत्यपरः [57]प्रकारः। सर्वथा निवीतं नार्थवाद इत्येवं प्राप्ते ब्रूमः। अत्र प्रतीयमानं निवीतादिकं वासोविषयं न तु त्रिवृत्सूत्रविषयम्। " अजिनं वासो वा दक्षिणत उपवीय " ( तैआ २·१ )
२० इत्यनेन सहवाक्यत्वात्। वस्त्रस्य च निवीतं सौकर्याय प्राप्तम्। [58]अत्र [59]प्राचीनावीतोपवीतयोरप्यवयमेकस्मिन् पार्श्वे वस्त्रमधः पतेत्। अतः प्राप्तेऽर्थे 'मनुष्याणाम्' इति षष्ठीश्रुतिर्न विधायिका। न च प्रकरणात् क्रत्वङ्गत्वेन विधिः। वाक्यभेदप्रसङ्गात्। उपवीतं तावद्विधीयते। अन्यथा 'देवलक्ष्ममेव तत्कुरुते' इति प्रशंसार्थवत्त्वोपपत्तेः। तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेव वाक्यत्वसंभवे पृथग्-विधानमयुक्तम्। निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद्दैविके कर्मण्ययोग्ये, उपवीतं तु योग्यमिति
२५ व्यतिरेकमुखेन( ण ) ज्ञापकं निवीतम्। तस्मादर्थवादः। उपव्ययत इत्यस्य तु विधित्वं प्रथमकाण्डस्या-ऽऽद्यानुवाके चिन्तितम् ॥

---

४६. ग,होर– पुरुषार्थ°। ४७. अ.इ.उ.ओ.ना.पा हा– विधिर्वैषोऽनुवादकः। ४८. क– 'नु.' नास्ति। ४९. क– क्रतोर्वापि। ५०. ह– °मासप्रकरणे। ५१. होर– आम्नायमन्तरेण°। ५२–५२. ह– 'इति षष्ठ्या' नास्ति। ५३. क.ह– पूर्वः पक्षः। ५४. अ.इ.उ.ओ.ना.पा.हा– आचार्यादि°। ५५.
३० अ.इ.उ.ओ.ना.पा.हा– तस्मिन्। ५६. क.ओ.ना.हा– उपवीतमाह°; अ.इ.उ.पा– निवीतप्राचीना°। ५७. क.ह– 'प्रकारः' नास्ति। ५८. ह– 'अत्र' नास्ति। ५९. ना– उपवीतप्राचीना°; अ.इ.उ.ओ.पा.हा– प्राचीनावीतयो°।

सामिधेनीषु होतुर्नियमविशेषः ]

तृतीयाध्यायस्यैव प्रथमपादे चिन्तितम्–

" उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा ।
दर्शाङ्गता प्रक्रियैषाऽवान्तराऽतोऽस्त्विहाग्रिमः ॥
छिन्नादभेदङ्गमूलैर्निवित्संज्ञकमन्त्रकैः ।
विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः " ॥ ( जैन्या ३·१·२५·२६ ) ॥

दर्शपूर्णमासप्रकरणे " चित्ररूपो वै स्यादुः " ( तैसं २·५ ) इत्यस्मिन् प्रपाठके सप्तमाष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातम् । नवमे निवित्संज्ञकानाम् –' अग्ने महाँ असि ब्राह्मण भारत " [६०]इत्यादीनां मन्त्राणां[६०] ब्राह्मणम् । दशमे काम्याः सामिधेनीपक्षाः । एकादशे तूपवीतमेव विहितम्– " निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते " इति । तत्र पूर्वन्यायेन सामिधेनीप्रकरणस्यावान्तरस्य [६१]अङ्गीकारात् [६२]सामिधेन्यङ्गत्वमुपवीतस्येति चेत् । न । निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य [६३]विच्छेदितत्वात् । न च निविदामपि [६४]सामिधेन्यङ्गतया [६५]तत्प्रकरणपाठात् अविच्छेदकत्वमिति वाच्यम् । लिङ्गेन निविदामन्यङ्गत्वावगतत्वात् । आहुत्यधिकरणभूतमग्निं संबोध्य ' महाँ असि ' इत्यादिभिर्निविद्वाक्यैरग्नेस्साहजनमाय तद्गुणा [६६]आवेद्यन्ते । अत एव निर्वचनमेवं श्रूयते " निविद्भिर्न्यवेदयन् । तन्निविदां निवित्त्वम् " ( तैब्रा २·२·८ ) इति । ननु [६७]सम्यगिध्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्य इति व्युत्पत्त्या ता अप्यग्न्युज्ज्वलनद्वारेणाग्न्यर्था एवेति चेत् । [६८]सन्तु नाम । नैतावता परस्पराङ्गाङ्गिभावः । ननु विच्छिद्यतां सामिधेनीप्रकरणं, निवित्प्रकरणेनोपवीतस्य निविदङ्गत्वं स्यादिति चेत् । न । पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणाभावात् । संनिधिना तदङ्गत्वमिति चेत् । न । काम्यसामिधेनीभिः व्यवहितत्वात् । न च काम्यसामिधेन्यङ्गता शङ्कनीया, संनिधितः प्रकरणस्य प्रबलत्वात् । तस्मादिह प्रयाजन्यायाभावात् महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम् ॥

तत्रैव चतुर्थपादे चिन्तितम् –

" [६९]सर्वार्थमुत दर्शार्थमुपव्ययत[६९] इत्ययः ।
[७०]सर्वार्थमग्निहोत्रे स्यादुपवीतीति[७०] लिङ्गतः ॥

६०–६०. ह–इत्यादिकं । ६१. आ.क–स्वीकारात् । ६२. ह– सामिधेन्यङ्गमुपनीतमिति । ६३. आ,क– विछिन्नत्वात् । ६४. अ.इ.उ.पा– सामिधेन्यङ्गत्वेन । ६५. गं.हा.हो१–°प्रकरणपाठात् । ६६. ह– संज्ञोध्यन्ते । ६७. अ.इ.जो.पा.हा– °ऽग्निकार्याणि स ऋग्भिताः । ६८. आ.क– भवन्तु । ६९–६९. ह– सर्वार्थमुपवीतार्थमुप° । ७०–७०. गं– सर्वार्थमग्निहोत्रस्थाः उप° ।

[71]दर्शाद्यर्थं प्रकरणाल्लिङ्गे स्यात् सिद्धिरन्यथा ।
दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम् ” ॥ ( जैन्या ३·४·३·४ ) ॥

“ यज्ञोपवीती हि देवेभ्यो दोहयति ” इत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवदनुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतमिति चेत् । न । लिङ्गस्यान्यथोपपत्तेः । मृताग्निहोत्रं तस्मिन् दिनेऽन्येन हूयते । तत्र “ प्राचीनावीती दोहयेत् ” (आपश्रौ ९·११·८) इति विधाय तस्य स्तुतये ‘ यज्ञोपवीती ’ इत्याद्यनूदितम् । अतो [72]लिङ्गाभासेन बाधासंभवात् [73]प्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतम् ॥

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

“ ऋजुत्वादय आघारे विकल्पन्ते न वाऽग्रिमः ।
एकार्थत्वाददृष्टार्थभेदात् संभवतोऽन्तिमः ” ॥ ( जैन्या १२·३·४ ) ॥

दर्शपूर्णमासयोराम्नायते— “ ऋजुमा घारयति ” “ संततमा घारयति ” “ आघारमा घारयति ” ( तैसं २·५·११ ) इति । तेषामृजुत्वादीनामाघारोपकारद्वारा कार्यस्यैकत्वात् [74]विकल्प इति चेत् । न । दृष्टद्वारभेदाभावेऽप्यदृष्टद्वारभेदात् [75]सहानुष्ठातुं संभवाच्च न विकल्पः ॥

तत्रैवान्यच्चिन्तितम्—

“ आघारे मन्त्रसाहित्यं धारा वा [76]संततताऽग्रिमः ।
कर्मैकत्वान्नाऽऽज्यधारानैरन्तर्यस्य संभवात् ” ॥ ( जैन्या १२·३·१३ ) ॥

“ संततमा घारयति ” ( तैसं २·५·११ ) इत्यत्र पूर्ववदाहुतिनैरन्तर्यं न संभवति । आहुतेरेकत्वात् । अतो मन्त्रकर्मसाहित्यस्यैव संततशब्दार्थत्वात् मन्त्रादौ कर्मोपक्रम इति चेत् । नैवम् । [77]धार्यमाणाज्यबिन्दुनैरन्तर्यस्य संततशब्दार्थत्वसंभवात् । न च प्रयाजाद्याहुतिष्वपि [78]नैरन्तर्यमस्तीति शङ्कनीयम्[78] । तत्र [79]विच्छिद्य विच्छिद्य[79] बिन्दुपातेऽपि कर्मैकत्वाभावात् । अत्र तु न तथेति [80]वैषम्यम् । तथा सत्याघाराय [81]यावदाज्यं होतव्यं[81] [82]तत्सर्वं शनैरविच्छेदेनाऽऽहवनीये[82] पातयेदिति संततशब्दार्थः । यदि मन्त्रकर्मणोः सहोपक्रमः स्यात् तदानीमनेन मन्त्रेणेति तृतीयाश्रुत्युक्तं पूर्वकालवर्तित्वलक्षणं मन्त्रस्य [83]करणत्वं हीयेत । तस्मात् पूर्ववन्मन्त्रान्ते कर्मसंनिपातः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः ॥

---

७१. अ.इ.उ.पा– दर्शार्थत्व । ७२. अ.इ.उ.जो.पा– लिङ्गाभावेन । ७३. अ.इ.उ.जो.ना.पा.हा–दर्शपूर्णमासाङ्गमुपवीतं प्रकरणात् । ७४. हा– विकल्पते । ७५. आ.क–सहानुष्ठान° । ७६. अ.इ.उ.पा– सन्धितोऽग्रिमः । ७७. जो.ना.हा–धार्यमाणस्याज्यस्य बिन्दुनैरन्तर्यस्य, अ.इ.उ.क.पा.हा– धार्यमाणस्य आज्यस्य बिन्दुनैरन्तर्यस्य । ७८–७८. क.जो.ना.हा– नैरन्तर्यमस्तीति शङ्क्यं; इ–एतन्नियतमस्तीति शङ्कनीयम्; अ.उ.पा– एतन्नियतमस्त्विति शङ्कनीयम् । ७९–७९. अ.इ.ड.ना.पा.हो१– विच्छिद्य । ८०. क.जो.ना.हा– कर्मवैषम्यम् । ८१. आ.क.ड.जो.हा– यदाज्यं जुह्वा गृहीतं । ८२–८२. अ.इ.उ.पा– तत्संततैराहवनीयेऽविच्छेदेन । ८३. ड– कारणत्व ।

आयुष्टे॰ आयुर्दा अग्ने॰ आ प्यायस्व॰

आयुः । ते । आयुर्दा इत्यायु – दा । अग्ने । एति । प्यायस्व ।

अथ पौरोडाशिकमध्ये याज्याकाण्डं वैश्वदेवम् । "अग्निं वा एतस्य शरीरं गच्छति" (तैस २ ३ ११) इत्यादेः पञ्चहविषो यागस्याग्नेयस्य पुरोऽनुवाक्या– 'आयुष्टे विश्वतो दधत्' इत्यनुष्टुप् ॥ इत प्रभृति चतुर्दशानां मन्त्राणां प्रतीकग्रहणम् । इयं "त्वमग्ने रुद्र" (तैस १ ५ ३ १४) इत्यत्र व्याख्याता । अयं वरेण्यः अग्निः ते तुभ्यं नित्यम् आयुः दधातु । गतोऽपि प्राणः पुनः त्वामागच्छतु । त्वदीयं रोगमहं परासुवामि नाशयामीति ॥

तत्रैव याज्या– 'आयुर्दा अग्ने हविषः' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ३ १४) । हे अग्ने अन्नस्य हविषः जुषाणः सेवमानः घृतप्रतीकः घृतस्योदकस्य योनिः त्वमस्य आयुर्दाः भवेति । किं च– घृतं मधुरसं चारु गव्यं पीत्वा इमं यजमानं पिता पुत्रम् इव अभिरक्षत्विति ॥ १०

अथ सौम्यस्य पुरोऽनुवाक्या– 'आ प्यायस्व समेतु ते' इति गायत्री ॥ इयं चाग्निकाण्डे "मा नो हिंसीत्" (तैस ४ २ ७) इत्यत्र व्याख्यास्यते यत्राम्नायते । हे सोम, आप्यायस्व वर्धस्व, त्वत्प्रसादात् विश्वतः वृष्ण्यं शुक्रं समेतु समागच्छतु । भव च वाजस्य अन्नस्य सगथे सगमनायैवेति ॥ १५

होतुर्नियम आधारश्रोक्तसेकादशे द्वयम् ॥

अथ द्वादशे काम्येष्टियाज्यानुवाक्या उच्यन्ते ।

आयुरिति ॥ अतीते तृतीयप्रपाठके इदमाम्नातम् – "यो ज्योगामयावी स्यात् यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालं सौम्यं चरुं वारुणं दशकपालं सारस्वतं चरुं माम्नावैष्णवमेकादशकपालम्" (तैस २ ३ ११) इति ॥ तथा "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्" (तैस २ ३ १२) इति "यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेत्" २०
इति च । एतेषु सप्तसु हविःषु क्रमेण याज्यानुवाक्याप्रतीकानि दर्शयति– 'आयुष्टे' (तैस २ ३ १२) इति च । एतेषु सप्तसु हविःषु क्रमेण याज्यानुवाक्याप्रतीकानि दर्शयति– 'आयुष्टे आयुर्दा अग्न आ प्यायस्व स तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत्त्वा याम्युदु त्यं चित्रम्' इति ॥ तत्राऽऽग्नेयस्य 'आयुष्टे विश्वतोऽदधत्' इति पुरोनुवाक्या । २५
'आयुर्दा अग्ने हविषो जुषाणः' इति याज्या । तदुभयं "त्वमग्ने रुद्र" (तैस १ ३ १४) इत्यनुवाके व्याख्यातम् । सौम्यस्य तु 'आ प्यायस्व समेतु ते' इति पुरोनुवाक्या । 'सं ते पयांसि समु यन्तु वाजाः'

१ हो– पुरोडाशिक॰ (?) । २–२ तर ल– अस्मभ्यम् । ३–३ तर मै– त्वयि यक्ष्म रोगम् पर– त्वदीयमहं रोगं । ४ तरे– हविषो जुषाण । ५ तरे– 'अग्ने' नास्ति । ६ हो– हविषा । ७–७ हो– 'उदकस्य' नास्ति । ८–८ हो– 'च' नास्ति ।

१ अ इ उ ड पा भ– ॰याज्या । २ ड– एवमा॰ । ३ अ इ उ क जो पा गृ हा– इति च । ३०
४ अ इ उ क जो ना पा हा– 'च' नास्ति । ५ गृ– या याप्रतीकानि । ६ ना एतदुभयं ।

## सं ते॰ऽव ते हेड॰ उदुत्तमं॰प्र णो देव्या॰

समिति । ते । अवेति । ते । हेड । उदिति । उत्तममित्युत् तमम् । प्रेति । न । देवी ।

तत्रैव याज्या– 'स ते पयांसि' इति त्रिष्टुप् ॥ इयमपि तत्रैवाम्नायते ( तैस ४ २ ७ )। हे सोम, अभिमातीना पाप्मनामभिभवितुस्तव प्रसादात् पयांसि च वाजा च वृष्णियानि च
५ सयन्तु इम समाच्छन्तु । त्व च आप्यायमान दिवि द्युलोके अस्यामृतत्वाय उत्तमानि श्रवासि अन्नानि धिष्व स्थापयेति ॥

अथ वारणस्य पुरोऽनुवाक्या– 'अव ते हेड' इति त्रिष्टुप् ॥ इय "वैश्वानरो न" ( तैस १ ५ ११ ) इत्यत्र व्याख्याता । हे वरुण, नमोभि नमस्कारैरन्नैर्वा [9]यज्ञै च हविर्भि च हविष्मद्भिर्वा यज्ञै तव हेड क्रोधम् अवेमहे [10]अपनयाम । हे असुर प्राणप्रद [11]प्रवृद्धचेतस्क
१० राजन्, अस्मभ्यम् अस्मदर्थ क्षयन् निवसन् अस्माक कृतानि पापानि शिश्रथ क्षपयेति ॥

तत्रैव याज्या– 'उदुत्तमम्' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ५ ११)। हे वरुण, उत्तमम् उत्तमफलप्राप्तिहेतुम् [12]ऊर्ध्वकर्षण वा पाश कर्मपाशम् अस्मत्त [13]उच्छ्रथाय ऊर्ध्वमुत्क्षिप्य उद्धृष्य नाशय । [14]अधम [15]निकृष्टफलप्राप्तिहेतुम् [16]अध पतनहेतु वा कर्मपाशम् अव श्रथय अधस्तादपकृष्य नाशय । मध्यम पाश वि श्रथय विष्वङ् नाना विकृष्य नाशय ।
१५ अथ एव वया वृते वयम् अनागस [17]क्षालितसर्वकर्माण तव व्रते कर्मणि उपासनामनि स्याम अदितये अखण्डितैश्वर्याय, हे आदित्य, देवानामादिभूत अदितेर्वा[18] अपत्येति ॥

अथ सारस्वतस्य पुरोऽनुवाक्या–'प्र णो देवी' इति [19]गायत्री॥ "अग्नाविष्णू महि" ( तैस १ ८ २२ ) इत्यत्र व्याख्याता । सरस्वती देवी वाजवतीभि क्रियाभि तद्वती, धियाम् अवित्री अस्मान् वाजैरन्नै प्रावतु इति प्रकर्षेण रक्षत्विति ॥

२० इति याज्या । एतदुभय चतुर्थकाण्डे 'मा नो हिंसीत्' ( तैस ४ २ ७ ) इत्यनुवाके व्याख्यास्यते । वारुणचरुपात्रस्य 'अव ते हेड' इति पुरोनुवाक्या। 'उदुत्तमम्' इति याज्या। एतच्चोभय- "वैश्वानरो न" (तैस १ ५ ११ ) इत्यनुवाके व्याख्यातम्। सारस्वतस्य– 'प्र णो देवी' इत्यनुवाक्या।

९. हो– यज्ञ । १० तैसे मे मै४– अवायाम । ११. हो– प्राचेतस। १२. हो– ऊर्ध्व कर्षण। १३ तै३– उच्छ्रय (?)। १४ प७– अवमम्। १५ हो– °प्राप्तिहेतुत्वम्। १६ हो– °पतन
२५ हेतुत्वम्। १७ हो– क्षालित सर्वकर्मण । १८ हो– 'वा' नास्ति। १९. तै३ मे८ ल हो– 'गायत्री' इत्यस्यानन्तरं 'इयम्'। २० हो– प्रावन्त्विति (?)

७ क ग्र– इति पुरोनुवाक्या।

नो॑ दि॒वो ऽ॑ ऽग्नाविष्णू॒ ॐ अग्नाविष्णू ॐ इ॒मं मे॑ वरु॒ण ॐ तत् त्वा॑

एति॑। न॒ । दि॒व । अग्नाविष्णू इत्यग्नी वि॒ष्णू॑। अग्नाविष्णू इत्यग्नी वि॒ष्णू॑। इ॒मम्। मे॒। वरुण।
तत्। त्वा॒। या॒मि॒।

तत्रैव याज्या– 'आ नो दिव' इति त्रिष्टुप्॥ इयमपि तत्रैव (तैस १ ८ २२) व्याख्याता। यजमानस्य याजनीया देवी सरस्वती दिव विप्रकृष्टाद्वा देशात् बृहत वा पर्वतात् विषमादेशादागच्छतु। अस्माकमिम यज्ञम् अस्माकमाह्वान सेवमाना घृताची घृताञ्चना उदकाञ्चना वा उशती कामयमाना अस्मत्स्तोत्र हविर्वा शग्मा शक्ता वाच शृणोतु इति॥

अथाग्नावैष्णवस्य [21]याज्या – 'अग्नाविष्णू' इति त्रिष्टुप्॥ [22]इयमपि तत्रैव व्याख्याता (तैस १ ८ २२)। हे अग्नाविष्णू, युवयो तत् महित्व माहात्म्य, महान्तौ युवा घृतस्य गुह्यानि नामानि पुरोडाशादीनि वीत खादतम्। यज्ञगृहे शोभनानि स्तोत्राणि वर्धयन्ति। युवयो जिह्वा प्रत्येक घृतम् उच्छ्रित पिबति॥

*तत्रैव याज्या– 'अग्नाविष्णू' इति त्रिष्टुप्॥ तत्रैव व्याख्याता* (तैस १ ८ २२)॥

"यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाश्चतुष्कपालान्निर्वपेत्" (तैस २ ३ १२) इत्यस्या पुरोऽनुवाक्या– 'इम मे वरुण श्रुधी हवम्' इति गायत्री॥ "इन्द्र वो विश्वतस्परीन्द्र नर" इत्यत्र व्याख्याता (तैस २ १ ११)। हे वरुण, इम मे हवम् आह्वान श्रुधि शृणु। अद्या अस्मिन् कर्मणि मा मृडय। त्वाम् अहम् अवस्यु [23]रक्षणार्थी आचके आभिमुख्येन [24]भजे॥

तत्रैव याज्या– 'तत् त्वा यामि ब्रह्मणा वन्दमान' इति त्रिष्टुप्॥ इयमपि तत्रैव व्याख्याता (तैस २ १ ११)। हे वरुण, अह ब्रह्मणा मन्त्रेण हविषा त्वा वन्दमान स्तुवन् अह त्वामभियाचे, यजमान अपि तत् एव हविर्भि आशास्ते, त्वमपि तत् अहेडमान अक्रुध्यन् इह कर्मणि बुद्ध्यस्व। किं पुन तत्? हे वरुण, उरु [25]शसमान अस्माकम् आयु मा प्रमोषी इति॥

---

'आ नो दिवो बृहत' इति याज्या। आग्नावैष्णवस्य 'अग्नाविष्णू महि तद्वाम्' इति पुरोनुवाक्या। 'अग्नाविष्णू महि धाम' इति याज्या। चतुष्टयमप्येतत् प्रथमकाण्डस्य [8]अष्टमप्रपाठकस्य अन्त्यानुवाके (तैस १ ८ २२) व्याख्यातम्। वारुणचतुष्कपालस्य 'इम मे वरुण' इति पुरोनुवाक्या। 'तत् त्वा यामि' इति याज्या। एतदृचोभयमस्मिन्नेव काण्डे प्रथमप्रपाठकस्यान्त्यानुवाके (तैस २ १ ११) व्याख्यातम्।

---

२१ मै४ पुरोनुवाक्या। २२ मै 'इयमपि' नास्ति। *–* [ ल–तत्रैव याज्या व्याख्याता' अय भाग नास्ति।] २३ मै४– रक्षणाय। २४ द्वो– भजत। २५ पर– शस न।

---

८ क हा– 'अष्टमप्रपाठकस्य' नास्ति।

याम्यु॑दु त्यं॑ चि॒त्रम्॑ ॥
अपां नपा॒दा ह्यस्था॑दु॒पस्थं॑ जि॒ह्मानां॑मू॒र्ध्वो वि॒द्युतं॒ वसा॑नः ।
तस्य॒ ज्येष्ठं॑ महि॒मानं॒ वह॑न्ती॒र्हिर॑ण्यवर्णाः॒ परि॑ यन्ति य॒ह्वीः ॥

उदिति॑ । उ । त्यम् । चि॒त्रम् ॥
५ अ॒पाम् । नपा॑त् । एति॑ । हि । अस्था॑त् । उ॒पस्थ॒मि॑त्यु॒प - स्थ॒म् ।
जि॒ह्मानां॑म् । ऊ॒र्ध्वः । वि॒द्युत॒मिति॑ वि - द्युत॑म् । वसा॑नः ।
तस्य॑ । ज्येष्ठ॑म् । म॒हि॒मान॑म् । वह॑न्तीः ।
हिर॑ण्यवर्णा॒ इति॒ हिर॑ण्य - व॒र्णाः॒ । परीति॑ । य॒न्ति॒ । य॒ह्वीः ॥

" यद्यपर प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेत् " (तैस २ ३ १२) इत्यस्या
१० पुरोनुवाक्या--'उदु त्य जातवेदसम्' इति गायत्री ॥ इय महप्रश्ने व्याख्याता (तैस १ ४ ४३)।
[v]त्य तम् इम [v]जातवेदस जाताना वेदितार [v]सूर्य [v]देव [v]केतव रश्मय [v]उद्वहति,
सर्वस्य लोकस्य दर्शनार्थमिति ॥

तत्रैव याज्या– 'चित्र देवानाम्' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १
४ ४३)। [v]देवानाम् अनीकस्थानीय [v]मित्रादीना चक्षु स्थानीयम् उदेति। अथ [v]जगत
१५ [v]तस्थुष [v]च [v]आत्मा [v]सूर्य [v]द्यावापृथिवी [v]अन्तरिक्षम् आपूरयति तेजसेति ॥

" अपोनप्त्रीय चरु पुनरेत्य " (तैस २ ३ १२) इत्यस्य पुरोऽनुवाक्या–'अपा नपात्'
इति त्रिष्टुप् ॥ [v]अपा [v]नपात् चतुर्थोऽग्नि, [v]उपस्थम् अन्तरिक्षे मेघ वा अपामुपस्थानम्

सौर्यस्य 'उदु त्य जातवेदसम्' इति पुरोनुवाक्या। 'चित्र देवानाम्' इति याज्या। एतच्चोभय पूर्व काण्डस्य चतुर्थप्रपाठके (तैस १ ४ ४३) व्याख्यातम् ॥

२० अपामिति ॥ अथ "अपोनप्त्रीय चरु पुनरेत्य निर्वपेत्" (तैस २ ३ १२) इत्यस्य पुरोनुवाक्या माह–'अपा नपादा ह्यस्थादुपस्थ जिह्मानामूर्ध्वो विद्युत वसान । तस्य ज्येष्ठ महिमान वहन्तीर्हिरण्यवर्णा परि यन्ति यह्वी' इति। [v]अपाम् उदकाना [v]नपात् अविनाशयिता तथाविधनामक कश्चिद्देव [v]उपस्थ [v]मस्योपपेनानस्थानम् [v]आस्थात् आतिष्ठति प्राप्नोतीत्यर्थ । कीदृशो देव ? [v]जिह्मानाम् [v]ऊर्ध्व आवर्तरूपेण कुटिलगतीनामुदकानामुपरि स्थित । [v]विद्युत [v]वसान मेघमण्डलमध्य उपविष्टत्वाद्विद्युदेव तस्याऽऽच्छादक
२५ वस्त्रम् । आपश्च [v]दुव [11]परियन्ति परितो व्याप्य वर्तन्ते । कीदृश्य आप ? [v]तस्य देवस्य [v]ज्येष्ठ प्रशस्त [v]महिमान माहात्म्य [v]वहन्ती धारयन्त्य । बहुलरूपया न्वर्जायस्य स्वामिनस्तस्य देवस्य माहात्म्य मापयन्त्य इत्यर्थ । [v]हिरण्यवर्णा बहूना विद्युता मध्ये वर्तमानत्वात् हेमवर्णत्वम्। [v]यह्वी महत्य ॥

२६-२६ हो–सूर्यदेवम्। २७ हो–केतवे। २८-२८ हो–'मित्रादीनां चक्षु स्थानीयम्' नास्ति।

३० ९. अ–स्वस्योपयोगा, इ उ ओ पा हा–स्वस्योपयोगा। १०. आ क–वर्तमान। ११. इ हा–'परियन्ति' नास्ति।

सम्( १ )न्या यन्त्युप॑ यन्त्यन्याः स॑मानमू॒र्वं न॒द्यः॑ पृणन्ति ।
तमू॒ शुचि॒ꣳ शुच॑यो दीदि॒वाꣳस॑मपां नपा॑तं॒ परि॑ तस्थु॒रापः॑ ॥

समिति॑ (१) । अ॒न्याः । यन्ति॑ । उपेति॑ । य॒न्ति॒ । अ॒न्याः । स॒मा॒नम् । ऊ॒र्वम् । न॒द्यः॑ । पृ॒ण॒न्ति॒ ।
तम् । उ॒ । शुचि॑म् । शुच॑यः । दी॒दि॒वाꣳस॑म् । अ॒पाम् । नपा॑तम् । परीति॑ । त॒स्थुः॒ । आपः॑ ॥

"आस्थात् आतिष्ठति" हि । "हि च" (पा ८ १ ३४) इति निघाताभाव । जिह्मानां कुटिलगतीनाम् अपाम् ऊर्ध्व उपरिवर्ती । विद्युत वसान विद्युद्रूपेणात्मान छादयन् तासा मुपस्थमातिष्ठति । हि यस्मादेव तस्मात् ता आप तस्य अग्ने अपा नपात् ज्येष्ठ प्रशस्त महिमान माहात्म्य वहन्ती वहन्त्य एयापयन्त्य, अनेन हि मेघ भित्त्वा वय प्रवर्तिता इति कृतज्ञतामिव दर्शयन्त्य हिरण्यवर्णा तेजोरूपा एव भासमाना यह्वी यह्व्य महत्य समभि परि यन्ति परिगच्छन्ति परित इवासते ॥ १०

तत्रैव याज्या– 'समन्या यन्ति' इति त्रिष्टुप् ॥ अन्या आप संयन्ति सगच्छन्ते एकीभूता प्रवहन्ति, अन्या उपयन्ति परित सगता इव भूत्वा मध्येन प्रवहन्ति । तत सर्वा अपि समान नद्य भूत्वा ओर्वम् ओर्वस्याग्नेराधार महान्तम् आपगा पृणन्ति पूरयन्ति । पृण प्रीणने । अप त तत्रस्थम् ओर्वं शुचिं शुद्ध दीदिवास मध्ये दीप्यमानम् । दीदिति दीप्तिकर्मा छान्दस, क्वसौ "वस्वेकाजाद्घसाम्" (पा ७ २ ६७) इति नियमादिडभाव । ईदृशम् अपा १५

समिति ॥ तत्रैव याज्यामाह– 'समन्या यन्त्युप यन्त्यन्या समानमूर्वं नद्य पृणन्ति । तमू शुचिꣳ शुचयो दीदिवाꣳसमपा नपात परि तस्थुराप ' इति । अन्या काश्चिदाप स यन्ति परस्पर सगता प्रवाहरूपेण गच्छन्ति । ताभ्य अन्या काश्चित् उप यन्ति प्रवाहमध्ये प्रविष्टा इव तिष्ठन्ति । ऊर्वो वडवाग्नेराधार समुद्र । स च वहन्तीषु स्थिरासु वाप्सु समान । न तावदयं प्रवहन्तीनामपा प्रवेशेन वर्धते स्वयम् । नापि तासामभावे सति स्थिराभिरद्भि अपक्षीयते । तादृश समुद्र नद्य २० पृणन्ति स्वप्रवेशेन प्रीणयन्ति । तम् उ ऊर्वं शुचय आप परितो व्याप्य तस्थु स्थिता । कीदृशम् ? शुचिं शोधयितार दीदिवास वडवाग्निजनकत्वेन दीप्यमानम् अपा नपातम् अविनाश यितारम् ॥

२९–२९ हो–आस्थात् तिष्ठति । ३० मै–यदेवम् । ३१ मै–नपाद । ३२–३२ हो–माहात्म्य प्रवहन्ती । ३३–३३ हो–यह्वी वह्य । ३४ हो–समभि । ३५ हो–परिगच्छते । ३६ ३५ पर–उपासते । ३७ मै–न्या । ३८ मै४ स–देदिति (१) ।

१२ अ ३ नो पा हा–अद्भय । १३ क–उपरिष्टात् द भू–उपविष्टा । १४ व्या क द–परिक्षीयते । १५ आ–'ऊर्वम्' नास्ति ।

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।
स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु ॥

तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परीति । यन्ति । आपः ।
सः । शुक्रेण । शिक्वना । रेवत् । अग्निः ।
५ दीदाय । अनिध्मः । घृतनिर्णिगिति घृत - निर्णिक् । अप्स्वित्यप् - सु ॥

नपातं शुचयः आपः परितः सर्वतोऽप्युप तस्थुः तिष्ठन्ति । छान्दसो लिट् । "एकान्याभ्यां समर्थाभ्याम् " (पा ८·१·६५) इति प्रथमस्य आयन्तीत्यस्य आख्यातस्य निघाताभावः । उ इत्यवधारणे पादपूरणे वा । "अन्येषामपि दृश्यते " (पा ६·३·१३७) इति सांहितिको दीर्घः ॥

अथात्रैव याज्या विकल्प्यते – 'तमस्मेराः' इति त्रिष्टुप् ॥ तम् अग्निम् अपां नपातं
१० मर्मृज्यमानाः अत्यर्थमलंकुर्वाणाः । मृजू शौचालङ्कारयोः । अस्मेराः विदग्धाः युवतयः युवान युवराजमिव आपः परियन्ति परितः सेवन्ते । यद्वा– नित्यतरुणमग्निं नित्यतरुण्यः आपः परियन्ति । सः च अग्निः तासु अप्सु मध्ये शुक्रेण निर्मलेन शिक्वना रोचिषा इत्थंभूतः रेवत् रेवान् महाधनः राजेव । छान्दसो लिङ्गव्यत्ययः । सलिलव्यतिरिक्तेन काष्ठादीन्धनरहितः दीदाय दीप्यते । छान्दसो लिट् , छान्दसो द्विर्वचनाभावः, दीधिङो वा वर्णव्यत्ययः । तेन जक्षित्या-
१५ दिना अभ्यस्तत्वात् द्विर्वचनाभावः (पा ६·१·६) । घृतनिर्णिक्, घृतेनोदकेन "वा एवणीयः", घृतनिर्णेजनमस्येति बहुव्रीहिः । यद्वा– तेजोरूपमानः । एवं महानुभावोऽयम् अस्मान् प्रतिग्रहदोषापनयेन शोधयत्विति ॥

तमिति ॥ तत्रैव विकल्पितां याज्यामाह – ' तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु ' इति । तम् अपां नपातम् आपः
२० परि यन्ति । कीदृशं तम् ? युवानं सर्वदा यौवनोपेतम् । कीदृश्य आपः ? अस्मेराः विडम्बनारूपेण स्मयेन रहिता अनुकूला इत्यर्थः । युवतयः सर्वदा यौवनोपेताः । मर्मृज्यमानाः तत्संयोगेन शोध्यमानाः । सः अपां नपात् अग्निः अनिध्मः काष्ठरहितोऽपि अप्सु दीदाय दीप्यते । कीदृशः ? शुक्रेण शिक्वना युक्तः शुद्धेन प्रकाशेन युक्तः, रेवत् धनवान्, घृतनिर्णिक् विलापनेन घृतं निर्णेनेक्ति निःशेषेण शोधयतीति घृतनिर्णिक् ॥

२५ ३९. मे– आम्रेडितस्य । ४०–४०. मे.लं– 'इति' नास्ति । ४१. हो– स्यादकादिति (?) । ४२. हो– 'याज्या' इत्यस्यानन्तरम् 'इति' । ४३. हो– अन् (?) । ४४–४४. हो– नित्यमग्निमस्तमग्निं । ४५. हो– द्विवचना° । ४६–४६. हो– आ°णीयः । ४७. हो– अस्मिन् ।

१६. आ.क– रूप° ।

इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे। ता नो मृडात ईदृशे ॥
इन्द्रावरुणा युवमध्वराय नो (२) विशे जनाय महि शर्म यच्छतम्।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥

इन्द्रावरुणयोरितीन्द्रा वरुणयो । अहम् । सम्राजोरिति सम् राजोः । अवः । एति । वृणे ।
ता । नः । मृडात । ईदृशे ॥ ५
इन्द्रावरुणेतीन्द्रा वरुणा । युवम् । अध्वराय । नः (२)।
विशे । जनाय । महि । शर्म । यच्छतम् ।
दीर्घप्रयज्युमिति दीर्घ-प्रयज्युम् । अतीति । यः । वनुष्यति । वयम् । जयेम । पृतनासु । दूढ्यः ॥

"यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेत्" (तैस २ ३ १३) इत्यस्याः पुरोऽनुवाक्या– 'इन्द्रावरुणयोरहम्' इति गायत्री ॥ इन्द्रावरुणयोः सम्राजोः १० सम्यक् दीप्यमानयोः अवः रक्षणं यादृशं तदीयं रक्षणं तत् अहम् आ वृणे आभिमुख्येन याचे । ता तौ च नः अस्मान् मृडात सुखयेताम् । ईदृशे विशिष्टे रक्षणे स्थित्वा मृडयताम् । लेट्याडागमः ॥

तत्रैव याज्या – 'इन्द्रावरुणा युवम्' इति जगती ॥ हे इन्द्रावरुणा इन्द्रावरुणौ । "सुपां सुलुक्°" (पा ७·१ ३९) इत्यादिनाऽऽकारः । युवं युवाम् नः अस्मभ्यं महि १५ महत् शर्म सुखं पापयक्ष्माभावप्रभवं यच्छत दत्तम् । अध्वराय यज्ञाय दर्शपूर्णमासादि-

इन्द्रावरुणयोरिति ॥ "यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेत्" (तैस २ ३ १३) इत्यस्याः पुरोनुवाक्यामाह– 'इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे' इति ॥ सम्राजोः सम्यग्दीप्यमानयोः इन्द्रावरुणयोः अवः रक्षणम् अहम् आवृणे सर्वतः प्रार्थये । तौ चेन्द्रावरुणौ ईदृशे रक्षणे वृतौ नः अस्मान् मृडात सर्वदा सुखयताम् ॥ २०

इन्द्रावरुणा इति ॥ तत्रैव याज्यामाह– 'इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः' इति ॥ हे इन्द्रावरुणौ, युवं नः अस्मभ्यं महि शर्म महत्सुखम् पापनिवारणरूपं यच्छतम् । किमर्थम् ? अध्वराय यागानुष्ठानाय विशे प्रजासमृद्धये जनाय परिवारकजनसिद्ध्ये च । यः पाप्मा दीर्घप्रयज्युम् अति अस्मदीयं दीर्घकालभावियागप्रयोगमतिलङ्घ्य नः अस्मान् वनुष्यति पीडयति । वयं तु युवयोः अनुग्रहवशात् २५ पृतनासु पापकृतासु पीडासु दूढ्यः दृढतरा अपीडिताः सन्तः तं पाप्मानं जयेम ॥

४८ ल-सगत°। ४९ हो-अप। ५० मै-लेट्यागमः, हो-लोट् अडागमः। ५१ हो- °निर्वहण।

१७ ड हो१-वृतौ, क श्र हा-प्रवृत्तौ। १८ ड हो१-पापनिवा°। १९ ड हो१-यागानुष्ठानसिद्ध्ये। २०-२०, ड 'यः पाप्मा' नास्ति। २१ ड हो१-वेदयति। २२, ड-अनुग्रहात्। ३०

आ नौ मित्रावरुणा॰ प्र बाहवा॰ ॥

एति । नः । मित्रावरुणेति मित्रा - वरुणा । प्रेति । बाहवा ॥

यज्ञनिर्वहण "यथा भवेत्", "विशे च यथा पुत्रादिका प्रजा मा "न निवर्तते", "जनाय चा यस्मै सुहृदादये स "यथा मा" न त्यजेत् । यदुक्तमध्वरार्थमिति तदेव प्रकटीकरोति-
५ दीर्घप्रयज्यु, दीर्घकाल यावज्जीव प्रकर्षेणानतिपरया कर्तव्यो दर्शपूर्णमासादियज्ञो दीर्घप्रयज्यु । यजे औणादिको युप्रत्यय, दासीभारादि द्रष्टव्य (पा ६ २ ४२)। वचनव्यत्ययो वा। दीर्घकालकर्तव्या दर्शपूर्णमासादय प्रकृष्टा यागा येषा तानस्मानतिक्रम्य "य "वनुष्याति अभिभवति पापयक्ष्मा । वनेरुसिप्र यया तात् क्यचि पत्वम् । त तावत् "वय "जयेम न तेन वय "जीयेमहि । किं च "पृतनासु सग्रामेषु "दूढ्य दुर्धियश्च जयेमेत्येव । कश्चिद्दुर्बुद्धिभि न
१० नम "जयेमहि । पृषोदरादित्वादमीष्टस्वररूपसिद्धि (पा ६ ३ १०९) ॥

'आ नो मित्रावरुणा', 'प्र बाहवा सिसृतम्' इति द्वे गायत्रीत्रिष्टुभौ व्याख्याते- "अग्नाविष्णू महि" (तैस १ ८ २२) इत्यत्र । अनयोश्चात्र प्रतीकग्रहणम् । तयो क्वचित् मैत्रावरुणे (द्र तैस ५ ७ ६) विनियोग द्रष्टव्य, "प्रायश्चित्ततया वा। "तत्र प्रथमा"-हे मित्रावरुणौ, अस्माक "गव्यूतिं "घृतै "उक्षतम् । हे शोभनकर्माणौ, मधुरसेन लोकानुक्षतमिति ॥
१५ द्वितीया-"प्र बाहवा' इति ॥ बाहुबलवतौ युवाम् अस्मान् जीवयितुमागच्छतम् । आगत्य च अस्माक "गव्यूतिं "घृतेन सर्वत "उक्षतम् । हे युवानौ नित्यतरुणौ, अस्मान् जनेषु "श्रवयतम् आख्यापयतम् । इमानि च मद्वाह्वानानि "शृणुतमिति ॥

अथ 'त्व नो अग्ने', 'स त्व नो अग्ने' इति गायत्रीत्रिष्टुभौ ॥ क्वचिदाग्निवारुणे विनियोगो द्रष्टव्य, प्रायश्चित्ते वा । तत्र प्रथमा- हे "अग्ने, "विद्वान् सर्वार्थसाधनो "वा यत्ने
२० स "त्व" "देवस्य "वरुणस्य "हेड, क्रोध अनादरो वा "पाशग्रहणादिक, "न अस्माकम्

एति ॥ पञ्चमकाण्डे मैत्रावरुण्यामिक्षा विहिता - "यथा वै हवि स्कन्दत्येव वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत" (तैस ५ ७ ६) इति, तत्र याज्यानु वाक्ययो प्रतीके दर्शयति- 'आ नो मित्रावरुणा प्र बाहवा' इति । 'आ नो मित्रावरुणा' इति पुरोनुवाक्या । 'प्र बाहवा' इति याज्या । एतदुभयम् "अग्ना विष्णू महि तद्वाम् (तैस १ ८ २२)
२५ इत्यनुवाके व्याख्यातम् ॥

५२-५२ हो-चेत् मा। ५३ हो- निर्वर्तित॰। ५४-५४ हो- यथामन्यत् (?)। ५५ हो- जीयेमहि। ५६ हो- जीयेमहि मै- जीयेमहि। ५७ मै- प्रायश्चित्ते। ५८-५८ लहो- 'तत्र प्रथमा' नास्ति। ५९. तैउ मै४ल 'शृणुतमिति' इत्यस्यानन्तरं 'द्वितीया'। ६०-६० लहो- यत्नशत्यम्। ६१ मै४- पापग्रहणादिकम्।

१० २३ क- घृते इति, ट४- घृ इत्येव। २४ ट४- क्षियतमित्येव।

काम्येष्टियाज्यापुरोनुवाक्या. ]

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान् दे॒वस्य॒ हेडोऽव॑ यासिसीष्ठाः ।
यजि॑ष्ठो॒ वह्नि॑तमः शोशु॑चानो॒ विश्वा॒ द्वेषा॑ꣳसि॒ प्र मु॑मुग्ध्य॒स्मत् ॥
स त्वं नो॑ अग्नेऽव॒मो भ॑वो॒ती नेदि॑ष्ठो अ॒स्या उ॒षसो॒ व्यु॑ष्टौ ।
अव॑ यक्ष्व नो॒ वरु॑णꣳ ( ३ ) ररा॑णो वी॒हि मृ॑डी॒कꣳ सु॒हवो॑ न एधि ॥

त्वम् । नु॒ । अग्ने॒ । वरु॑णस्य । वि॒द्वान् । दे॒वस्य॑ । हेडः॑ । अवेति॑ । या॒सि॒सी॒ष्ठा॒ । ५
यजि॑ष्ठः । वह्नि॑तम॒ इति॒ वह्नि॑-त॒म॒ । शोशु॑चान । विश्वा॑ । द्वेषा॑ꣳसि । प्रेति॑ । मु॒मु॒ग्धि॒ । अ॒स्मत् ॥
सः । त्वम् । नः॒ । अ॒ग्ने॒ । अ॒व॒म । भ॒व॒ । ऊ॒ती । नेदि॑ष्ठः । अ॒स्याः । उ॒षसः॑ । व्यु॑ष्टा॒विति॒ वि-उ॒ष्टौ॒ ।
अवेति॑ । य॒क्ष्व॒ । नः॒ । वरु॑णम् ( ३ ) । ररा॑णः ।
वी॒हि । मृ॒डी॒कम् । सु॒हव॒ इति॑ सु॒ ह॒वः॑ । नः॒ । ए॒धि॒ ॥

अस्मत्सवन्धि ॱअव ॱयासिसीष्ठाः अपनय । अवपूर्वात् यासेर्ण्यन्तादाशीर्लिङि इडादावपि १० णिलोपश्छान्दस । "छन्दस्युभयथा" (पा ३ ४ ११७) इति लिङ्या, सार्वधातुकत्वा दिडभावो ङित्व च । किंच– ॱयजिष्ठ यष्टृतम । यष्टृशब्दात् "तुश्छन्दसि" (पा ५ ३ ५९) इतीष्ठन्प्रत्यय । "तुरिष्ठेमेय सु" (पा ६ ४ १५४) इति तृशब्दस्य लोप । ॱवह्नितम हविषा वोढृतम ॱशोशुचान. अतिशयेन दीप्यमान । "अभ्यस्तानामादि" (पा ६ १·१८९) इत्याद्युदात्तत्वम् । ईदृश. त्व विश्वानि वरुणव्यतिरिक्तान्यपि ॱद्वेषांसि वा रक्ष प्रभृतीनि ॱअस्मत् १५ अस्मत्तः ॱप्रमुमुग्धि प्रकर्षेण मोचय । "बहुल छन्दसि" (पा २ ४ ७६) इति शप श्लु ॥

अथ द्वितीया– हे ॱअग्ने, ॱसै ॱत्वम् ॱन अस्माकम् ॱअवम॰ अविता ॱभव ऊत्या गमनेन । यद्वा–ऊत्या रक्षणेन अवम अर्वाचीन प्रत्यासन्नो भव । ॱअस्या ॱउपस (ॱव्युष्टौ) रात्रे रवसाने प्रातरेव अस्माक ॱनेदिष्ठ अन्तिकतमः अस्मिन् दिवसे प्रातरेव अस्मत्पार्श्वमागत त्वमिदानीं

त्वमिति ॥ ॱॱपुनराधेयप्रकरण आम्नातम् – "वीरहा वा एष देवाना योऽग्निमुद्वासयते तस्य २० वरुण एवर्णयादाग्निवारुणमेकादशकपालमनुनिर्वपेत्" (तैस १ ५ २) इति । अत्र पुरोनुवाक्यामाह - 'त्व नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽव यासिसीष्ठा । यजिष्ठो वह्नितम शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्' इति ॥ हे ॱअग्ने, ॱत्व ॱन अस्माक भक्ति ॱविद्वान् सन् ॱवरुणस्य ॱदेवस्य ॱहेड अस्मद्विषय क्रोधम् ॱअव ॱयासिसीष्ठा अपनय । ॱयजिष्ठ यष्टृतमोऽतिशयेन यागनिष्पादक । ॱवह्नितम अतिशयेन देवहविर्वोढा । ॱशोशुचान अत्यन्त दीप्यमान । ॱविश्वा ॱद्वेषांसि सर्वान् विरोधिकृतान् द्वेषान् ॱअस्मत् १५ ॱप्रमुमुग्धि अस्मत्त प्रमोचय ॥

स इति ॥ तत्रैव याज्यामाह – 'स त्व नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि' इति ॥ हे ॱअग्ने, ॱस ॱत्व ॱन अस्माकम्

६२ मै४– द्वेषांसि ।

२५ ङ– पुनराधानप्रकरणे यत् ।

प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥

प्रेति प्र-प्र । अयम् । अग्निः । भरतस्य । शृण्वे । वीति । यत् । सूर्यः । न । रोचते । बृहत् । भाः । अभीति । यः । पूरुम् । पृतनासु । तस्थौ । दीदाय । दैव्यः । अतिथिः । शिवः । नः ॥

५ "रक्षणेनापि प्रत्यासन्नतरो भवेति । " अन्तिकबाढयोर्नेदसाधौ " ( पा ५ ३ ६३ ) । किं च– रराण अस्मदीये परिचरणे रममाण अस्माकं वरुण वारक वरुणप्रवर्तितं वा पापरोगादिकम् अवयक्ष्व नाशय । " बहुलं छन्दसि " ( पा २ ४ ७३ ) इति शपो लुक् । राते शानचि अन्त्यलोपः छान्दसः, पूर्वपदाद्युदात्तत्वम् । तदर्थं वीहि भुङ्क्ष्व मृडीकं सुखहेतुमिदं हविः । किं च– नः अस्माकं सुहवः शोभनाह्वानश्च एधि भव । आह्वानप्रयोजनस्य सद्यः संपत्तिः

१० शोभनत्वम् । " आद्युदात्तं द्व्यच्छन्दसि " ( पा ६ २ ११९ ) इत्युत्तरपदाद्युदात्तत्वम् ॥

" यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते " ( तस २ ४ १ ) इत्यस्यां त्रिहविष्कायाम् 'अग्नये प्रवते' इत्यस्य पुरोऽनुवाक्या– 'प्र प्र' इति त्रिष्टुप् ॥ " प्रसमुपोदः पादपूरणे " ( पा ८ १ ६ ) इति द्विर्वचनम् । अयम् अग्निः भरतस्य यजमानस्य भरणात् भरत ।

१५ ऊत्या रक्षणेन अवमः भव रक्षको भव । कीदृशस्त्वम् ? अस्या उषसः व्युष्टौ नेदिष्ठः अयतनस्योपकारस्योपरिसने प्रातःकालेऽत्यन्तं प्रत्यासन्नः नः अस्माकं वरुणं वरणेन कृत्स्नमभीष्टनिवारकं पापादिकम् अव यक्ष्व विनाशय । रराणः रममाणः सन् मृडीकं सुखसाधनमस्मदीयं हविः वीहि भक्षय । तत नः अस्माकं सुहवः एधि सुखेनाऽऽह्वातुं शक्यो भव ॥

प्रप्रेति ॥ " यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं

२० निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते " ( तैस २ ४ १ ) इत्यत्र प्रवतोऽग्नेर्हविषि पुरोनुवाक्यामाह– 'प्र प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भा । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः' इति ॥ अयम् अग्निः भरतस्य हविर्भरणवतो यजमानस्याऽऽह्वानं प्र प्र शृण्वे अतिप्रकर्षेण शृणोतु । यत् योऽग्निः सूर्यः न सूर्य इव आ भासमानः सन् बृहत् रोचते अत्यन्तं दीप्यते । यः अग्निः पृतनासु संग्रामेषु पूरुं जयपूर्तिम् अभि तस्थौ सर्वतः करोति सोऽग्निः नः

२५ अस्माकम् अतिथिः दीदाय भवतु अतिथिरिवेह समागच्छतु । कीदृशोऽग्निः ? दैव्यः देवेभ्यो हितः शिवः परममङ्गलरूपः ॥

६३ मै– तस्योतापि । ६४ हो– वारक° । ६५ मै४– °होतारं । ६६–६६ मै४ हा– इत्यस्यां त्रिहविष्कायां । ६७–६७ तै२ ए हो– प्रवतये । ६८ तै२– भरणत्वात् ।

६६ आ क– नाशय । ६७ आ क– °दीप्ति । ६८ अ इ उ ओ ग पा हा– जयपूर्तिम् ।

२० ६९. ट– 'दीदाय' नास्ति । ३० आ क ट– °मङ्गलभूत ।

प्र ते॑ यक्षि॒ प्र त॑ इयर्मि॒ मन्म॒ भुवो॒ यथा॒ वन्द्यो॒ नो॒ हवे॑षु ।
धन्व॑न्निव प्र॒पा अ॒सि त्वम॑ग्न इय॒क्षवे॑ पू॒रवे॑ प्रत्न राजन् ( ४ )॥

प्रेति॑ । ते॒ । य॒क्षि॒ । प्रेति॑ । ते॒ । इ॒य॒र्मि॒ । मन्म॑ । भुवः॑ । यथा॑ । वन्द्यः॑ । नः॒ । हवे॑षु ।
धन्व॑न् । इ॒व॒ । प्र॒पेति॑ प्र-पा । अ॒सि॒ । त्वम् । अ॒ग्ने॒ । इ॒य॒क्षवे॑ । पू॒रवे॑ । प्र॒त्न॒ । रा॒ज॒न् (४)॥

औणादिकोऽतच्प्रत्ययः । प्र शृण्वे प्रकर्षेण शृणोतु । आह्वानप्रयोजनं शीघ्रं करोत्वित्यर्थः । ५
लिटि " लोपस्त आत्मनेपदेषु " ( पा ७·१·४१ ) इति तलोपः । अग्निर्विशेष्यते– यत् यः
अग्निः सूर्यः इव बृहत् विरोचते अत्यर्थं दीप्यते । [69]भाः भासनशीलः । " भ्राजभास° "
( पा ३·२·१७७ ) इति क्विप् । यः च अग्निः पृतनासु संग्रामेषु पूरुम् आप्यायमानं
शत्रुम् । पूरी आप्यायने, औणादिक उप्रत्ययः । पूरुं महान्तमपि शत्रुम् अभि तस्थौ अभि-
तिष्ठति । अधितिष्ठति आक्रामति । किं च– योऽस्माकम् अतिथिः भूत्वा दीदाय दीप्यते । १०
छान्दसो लिट्, अतिथिः विशेष्यते– दैव्यः दिवि भवः । " देवाद्यञञौ " ( पा ४·१·८५
वा ३ )। शिवः कल्याणगमनः । यद्वा– सोऽस्माकमस्त्विति सामर्थ्याल्लभ्यते ॥

तत्रैव याज्या– ' प्र ते यक्षि ' इति त्रिष्टुप् ॥ ' इयक्षवे ' इति चतुर्थपादादिः । हे
अग्ने, त्वां प्र यक्षि प्रकर्षेण यजे । छान्दसो लिट् । ते तव मन्म मननमनुध्यानं प्र इयर्मि
प्रकर्षेण गच्छामि । [70]यद्वा–ते त्वदीयं मन्म मननीयं प्रकर्षेण सपादयामि । ऋ गतौ, शपः श्लुः । १५
" अर्तिपिपर्त्योश्च " ( पा ७·४·७७ ) इत्यभ्यासस्येत्वम्, " अभ्यासस्यासवर्णे " ( पा ६·
४·७८ ) इतीयङ् । मन्यतेरौणादिको मनिन् प्रत्ययः । यथा त्वम् अस्माक हवेषु यज्ञेषु पुनःपुनः
वन्द्यः स्तुत्यः भुवः भवेः, यथा ते [71]श्रद्धेव पुनःपुनरस्मान् पुनातु धनकामादिना, तथा वयं
मन्तव्याः इति । " ईडवन्द° " ( पा ६·१·२१४ ) इत्याद्युदात्तत्वम् । भवतेर्लेट्, शपो लुकि

प्रेति ॥ तत्रैव याज्यामाह–' प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु । धन्वन्निव २०
प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ' इति ॥ हे अग्ने, ते त्वदर्थं प्र यक्षि प्रकर्षेण [31]यजे, ते
त्वदीयं मन्म मननं मानसमनुग्रहविशेषं प्रकर्षेण इयर्मि [32]प्राप्नोमि । नः अस्माकं हवेषु यागेषु वन्द्यः
नमस्कार्यः [33]यथा भुवः येन प्रकारेण भवसि तेन प्रकारेणानुग्रहमियर्मीति पूर्वत्राऽन्वयः । हेऽग्ने, त्वम्
इयक्षवे यष्टुमिच्छते पूरवे हविः पूरयित्रे यजमानाय [34]श्रेयः दातुं धन्वन् प्रपा इव असि मरुभूमौ
शीतलपानीयपूर्णशालेवासि । हे प्रत्न पुरातन, हे राजन् दीप्यमान । एतदुभयं [35]वह्निविशेषणम् ॥　　२५

६९. लं.हो– ' भाः ' नास्ति । ७०. तं३.लं.हो– यदा । ७१. तं२.त्रि.मै.मै४.लंहो– श्रद्धयैव ।

३१. क.ड.हो१– यजेति; शृं– यजतेति; हा–यजति । ३२. आ– व्याप्नोमि । ३३. अ.इ.उ.
ओ.ना.पा.हा.हो१– ' यथा ' नास्ति । ३४. आ.क– प्रियम् । ३५. अ.उ.ओ.पा.हा– वायुवि° ।

## वि पाजसा* वि ज्योतिषा* ॥

वीति । पाजसा । वीति । ज्योतिषा ॥

अडागमे " भूसुवोस्तिङि " (पा ७·३·८८) इति गुणाभावः । पादादित्वान्न निहन्यते । कः पुन. तत्र विशेषः इति चेदिदमुच्यते– हे अग्ने, $^{v}$धन्वन् निर्जले प्रदेशे $^{v}$प्रपा $^{v}$इव शीतलपानीयपूर्ण ५ शालेव $^{v}$असि भक्ताना सकलक्लेशनिवृत्तिहेतुत्वात् । तस्य $^{v}$इयक्षवे इयक्षा यष्टुमिच्छा $^{v}$यजन कार्येच्छा । छान्दस आदिवर्णलोप । $^{v}$पूरवे महात्मने पूरयित्रे वा हविषा हे $^{v}$प्रत्न पुराण $^{v}$राजन् दीप्यमान सर्वदा राजनशील ॥

" अग्नये विबाधवते " (तैस २·४·१) इत्यस्य पुरोऽनुवाक्या–' वि पाजसा ' इति त्रिष्टुप् ॥ इयमग्निकाण्डे व्याख्यास्यते यत्राम्नायते ( तैस ४·१·५ )। प्रतीकग्रहण तस्या । $^{v}$पृथुना १० $^{v}$पाजसा बलेन $^{v}$शोशुचानः दीप्यमानस्त्व $^{v}$द्विषः $^{v}$बाधस्व रक्षासि च $^{v}$अमीवा. रोगाश्च । तव $^{v}$सुशर्मण शोभनशरणस्य शोभनसुखस्य वा $^{v}$बृहत. महात्मनः $^{v}$शर्मणि $^{v}$अह $^{v}$स्याम् । सदा वर्तेय (?) $^{v}$अग्ने $^{v}$अङ्गनादिगुणयुक्तस्य $^{v}$$^{v}$सुहवस्य शोभनाह्वानस्य $^{v}$प्रणीतौ परिचरणे वर्तमान इति ॥

तत्रैव याज्या–' वि ज्योतिषा ' इति त्रिष्टुप् ॥ इय तु " कृणुष्व पाज. " ( तैस १·२·१४) १५ इत्यत्र व्याख्याता । प्रतीक गृह्यते अस्याः । अयमेव $^{v}$अग्नि $^{v}$बृहता $^{v}$ज्योतिषा $^{v}$विभाति, $^{v}$विश्वानि च $^{v}$महित्वा माहात्म्यानि $^{v}$आविष्कृणुते आविष्कृणुता वा । किंच– $^{v}$अदेवीः अदेवनशीला $^{v}$दुरेवाः दु खेन एतव्या $^{v}$कामाया. $^{v}$प्रसहते प्रकर्षेण अभिभवति अभिभवतु वा । अपि च– रक्षसा च विनाशाय आलीये $^{v}$शृङ्गे शृङ्गस्थानीये ज्वाले $^{v}$शिशीते तीक्ष्णीकुरुते कुरुता वा । एव महानुभावोऽयमस्माक भ्रातृव्य विनाशयत्विति ॥

२० " अग्नये प्रतीकवते " (तैस २·४·१) इत्यस्य पुरोऽनुवाक्या–' स त्वम् ' इति गायत्री । हे $^{v}$अग्ने, $^{v}$स $^{v}$त्व $^{v}$प्रतीकेन ज्वालाया उपक्रमणमात्रेण $^{v}$प्रत्योष प्रतिमुख प्रत्येक वा $^{v}$यातुधान्य यातुधानी. यातुधानजाती. क्षयेषु यज्ञगृहेषु । " क्षयो निवासे " (पा ६·१·

यीति ॥ अथ विबाधवतोऽग्नेरिष्टिविधि याज्यापुरोनुवाक्ये प्रतीकेन दर्शयति – ' वि पाजसा वि ज्योतिषा ' इति ॥ ' वि पाजसा पृथुना शोशुचानः ' इत्येषा पुरोनुवाक्या । सेयं चतुर्थकाण्डस्य प्रथमप्रपाठके २५ (तैसं ४ १·५) व्याख्यास्यते । ' वि ज्योतिषा बृहता ' इति याज्या " कृणुष्व पाज " (तैसं १·२·१४) " इत्यनुवाके व्याख्याता ॥

७२. तै१ ल हो– यजमान° । ७३. मै–सुहवनस्य । ७४. तै१,ल– कामाया । ७५. मै– [illegible] । ७६. मै८– टजयमा° । ७७. तै१ ल हो– प्रत्योषम् । ७८–७८. ल हो– यातुधान्यजातीय° ।

३६. ङ– इन्द्रीयम्° ।

काम्येष्टियाज्यापुरोनुवाक्या ]

स त्वम॑ग्ने प्रती॑केन॒ प्रत्यो॑ष यातुधा॒न्यः॑ । उ॒रु॒क्षये॑षु॒ दीद्य॑त् ॥
तꣳ सु॒प्रती॑कꣳ सु॒दृश॒ꣳ स्वञ्च॒मवि॑द्वाꣳसो वि॒दुष्ट॑रꣳ सपेम ।
स य॑क्षद्विश्वा॑ व॒युना॑नि वि॒द्वान् प्र ह॒व्यम॒ग्निर॒मृते॑षु वोचत् ॥

स । त्वम् । अ॒ग्ने॒ । प्रती॑केन । प्रतीति॑ । ओ॒ष॒ । या॒तु॒धा॒न्य॑ इति॑ यातु धा॒न्यः॑ ।
उ॒रु॒क्षये॒ष्वित्यु॑रु क्षये॑षु । दीद्य॑त् ॥
तम् । सु॒प्रती॑कमिति॑ सु प्रती॑कम् । सु॒दृश॒मिति॑ सु दृश॑म् । स्वञ्च॑म् ।
अवि॑द्वाꣳसः । वि॒दुष्ट॑र॒मिति॑ वि॒दु - त॒र॒म् । स॒पे॒म॒ ।
स । य॒क्ष॒त् । विश्वा॑ । व॒युना॑नि । वि॒द्वान् । प्रेति॑ । ह॒व्यम् । अ॒ग्निः । अ॒मृते॑षु । वो॒च॒त् ॥

२०१) इत्याद्युदात्तत्वम् । * उरु महत् ⁷⁸दीद्यत् जाज्वल्यमान । ⁷⁹दीयति छान्दस । ⁸⁰अभ्यस्त सञ्ज्ञिकत्वान्नुमभाव । "अभ्यस्तानामादि" (पा ६ १ १८९) इत्याद्युदात्तत्वम् ॥ 

तत्रैव याज्या- ' त सुप्रतीकम् ' इति त्रिष्टुप् ॥ ⁷⁹तम् अग्निम् ⁷⁹सुप्रतीक ⁸¹शोभनज्वालम् शोभनोपक्रम वा । कृदुत्तरपदाद्युदात्तत्वम् * । ⁷⁹सुदृश सुष्ठु द्रष्टारम् अभिमतानाम् । क्विपि कृदुत्तर पदप्रकृतिस्वरत्वम् । शोभनदृष्टि वा । "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् । ⁸²⁻⁸²स्वञ्च शोभनगति⁸² ⁷⁹विदुष्टर निद्वत्तमम् । अयस्मयादित्वेन (पा १ ४ २०) भत्वात् 

स इति ॥ अथ प्रतीकवतोऽग्नेर्हविषि पुरोनुवाक्यामाह- ' स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्य । उरुक्षयेषु दीद्यत् ' इति ॥ हे ⁷अग्ने, ⁷स ⁷त्व ⁷प्रतीकेन कर्मप्रारम्भमात्रेण ⁷यातुधान्य राक्षसजाती सर्वा ⁷प्रत्योष प्रत्येक दह । कीदृशस्त्वम् ? ⁷उरुक्षयेषु विस्तीर्णेषु यागगृहेषु ⁷दीद्यत् दीप्यमान ॥

तमिति ॥ तत्रैव याज्यामाह- ' तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्टरꣳ सपेम । स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत् ' इति ॥ वय ⁷तम् अग्निं ⁷सपेम समवेता प्राप्ता भूयास्म । कीदृशमग्निम् ? ⁷सुप्रतीक शोभनोपक्रमम् अस्मास्वनुग्रहस्तीन ³⁷सुष्ठूपक्रान्त ⁷सुदृश ³⁸शोभनेन कटाक्षेणास्मान् पश्यन्त ⁷स्वञ्चम् अस्मदीये कर्मणि सुष्ठु ³⁹आगच्छन्त, ⁷विदुष्टर अतिशयेन भक्तचित्तवेदिनम् । यद्यपि वयम् ⁷अविद्वास त्वदीय महिमान न जानीमस्तथाऽपि ⁴⁰भक्त्या त प्राप्ता स्म । ⁷स अग्नि ⁷यक्षत् यष्टुमिच्छता पुरुषाणा ⁷विश्वा ⁷वयुनानि सर्वानभिप्रायविशेषान् ⁷विद्वान् जानन् सर्वानिहरति । अत स ⁷अग्नि अस्मदीय ⁷हव्य ⁷प्र ⁷वोचत् प्रकर्षेण ब्रवीतु ॥ 

*-* [ क्ष३ ठ ' उरुमहत् कृदुत्तरपदाद्युदात्तत्वम् ' इत्यय भाग नास्ति । ] । ७९ मै४- दीदेति । ८० मै४-°सञ्ज्ञक° । ८१ मै- शोभनावयवम् । ८२-८२ त३ ठ हो- स्व शोभनगत विदुष्टरगति ।

३७ ङ- सुष्ठु प्रक्रान्त । ३८ आ क ङ- शोभनं° । ३९ ङ- गच्छन्त । ४० आ क ङ- 'भक्त्या' नास्ति । 

[ विश्वरूपस्त्वष्टेन्द्रं वृत्र ब्रह्मवादिनः स त्वै नासोमयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोऽग्ने महान् त्रीन् निवीतमायुष्टे द्वादश । ] [ विश्वरूपो नैनं८ शीतरूरावद्य वसु पूर्वेद्युर्राजा इत्यग्ने महान्निवीतमन्या यन्ति चतु सप्तति । ] [ विश्वरूपोऽनु ते दायि । ]

[ मैसं ..., कासं ... ]

५ अथ याज्या—'अनु ते' इति ॥ हे ᵛइन्द्र, ᵛयजत्र यष्टव्य ᵛते तुभ्य ᵛदायि दीयते। देवेभिः ऋत्विग्भि सामर्थ्याद्धवि कृत्स्नमपि तुभ्यमेव दीयते त्वत्प्रधानत्वात् ᵛदेवानाम्। यद्वा– तुभ्यमेव दायि दीयता सत्रेषु सर्वेष्वपि यज्ञेषु सर्वैरपि। देवान्तरेभ्य इन्द्रस्य विशेषानाचष्टे– ᵛमहे महते ᵛइन्द्रियाय वीर्याय महता इन्द्रियेण तद्वानयमिति कृत्वा। ᵛअनु ᵛवृत्रहत्ये वृत्र हतवानयमिति कृत्वा। ᵛअनु ᵛक्षत्र धनवानयमिति कृत्वा। ᵛअनु ᵛसह बलवानयमिति कृत्वा। ᵛनृपह्ये सर्वेषा

१० नृणामभिभवितेति कृत्वा। सर्वत्र लक्षणे अनोः कर्मप्रवचनीयत्वम् (पा १·४·९०)॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये
द्वितीये काण्डे पञ्चमे प्रश्ने द्वादशोऽनुवाकः ॥ समाप्तश्च प्रपाठकः ॥

अत्र विनियोगसंग्रहः—

उग्रोगामथाविनो ह्यायुरायुर्दाऽऽग्नेयके तथा ।
१५ ⁴⁶आप्या सं ते च सौम्ये स्यादवोदुत्तेति⁴⁶ वारुणे ॥
⁴⁷सारस्वते प्र णो ह्या नोऽग्नाग्नावैष्णवे⁴⁷ भवेत् ।
इमं तत्त्वाऽश्वदानीष्टौ उदु चित्र ⁴⁸तु सौर्यके ॥
अपां ⁴⁹त्वयमपोनप्त्र इन्द्रावेत्यैन्द्रवारुणे ।
मैत्रावरुण आमिक्षायागे त्वा नः प्र वेति च ॥
२० पुनराधेयके त्वाग्निवारुणे त्वं न इत्युभे ।
प्रेति प्रवदाग्नेये विद्वयं बाधसंयुते ॥
स त्वं प्रनीत्संयुक्ते भरद्वविस्यैन्द्रयागके ।
वीन्द्रेति यमृधे हीन्द्रियाऽनु ते ⁵⁰त्विन्द्रियावते ॥
⁵¹पञ्चमाख्यानुवाकेऽस्मिन् ⁵¹पञ्चत्रिंशदुदीरिताः ॥

२५ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा- परिपाल्केन ⁵²माधवाचार्येण विरचिते⁵³ वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
३० द्वितीयकाण्डे पञ्चमः प्रपाठकः ।

९५. ल– देवतायाम्।

४६–४६. ङ–आप्याया सं ते चरौ सौम्ये स्यापोदुत्तेति वारुणे। ४७–४७. ङ. सारस्वते ॥ मत्त्वा नो हयनामावैष्णवे, ग२–सारस्वते प्रमस्त्वा नो हयनामावैष्णवे। ४८. ङ–च। ४९. आ.क–न समरो°। ५०. ग१– हीन्द्रिया°। ५१. आ.क– मन्त्रा इयरिमन्ननुवाके। ५२. हो१– मन्त्राभिरादु°। ५३–५३.
३५ क ग१– सायणाचार्यविरचिते माधवीये।

## ( अथ द्वितीयकाण्डे षष्ठः प्रपाठकः )

अथ [1]दार्शपूर्णमासिकमाध्वर्यव 'समिधो यजति' इत्यादय षडनुवाका। प्राजापत्य काण्डम्। तत्रादौ प्रयाजा विधीयन्ते। समिदादय प्रयाजदेवता अग्निविशेषा आग्निष्टलिङ्ग वचना। एषा च यागेन वसन्तादृतुधर्मैं प्रवृत्तिर्यथायथ भवति। [2]वसन्तादृतुधर्मप्रवर्तनेन

यस्य नि श्वसित वेदा यो वेदेभ्योऽखिल जगत्। ५
निर्ममे तमह वन्दे विद्यातीर्थमहेश्वरम्॥ १॥
हौत्रमाध्वर्यव चाऽऽधारान्त पञ्चम ईरितम्।
प्रयाजाद्यवशिष्ट तु वक्ष्ये षष्ठे प्रपाठके॥ २॥

तत्र प्रथमानुवाके प्रयाजा विधातव्या। तेषा मन्त्रास्तु मन्त्रकाण्डे पञ्चमानुवाक एवमाम्नाता – "समिधो अग्न आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य वेतु। इडो अग्न आज्यस्य वियन्तु। बर्हिरग्न १० आज्यस्य वेतु। स्वाहाऽग्निम्। स्वाहा सोमम्। स्वाहाऽग्निम्। स्वाहा प्रजापतिम्। स्वाहाऽग्नीषोमौ। स्वाहेन्द्राग्नी। स्वाहेन्द्रम्। स्वाहा महेन्द्रम्। स्वाहा देवा आज्यपान्। स्वाहाऽग्नि होत्राज्जुषाणा। अग्न आज्यस्य वियन्तु" (तैब्रा ३ ५ ५) इति॥ एतेषा मन्त्राणा विनियोग बौधायनो [1]'दर्शयति "समिधो अग्न आज्यस्य वियन्त्विति [2]प्रथम, तनूनपादग्न आज्यस्य वेत्विति द्वितीयम्" इत्यादि॥ हेऽग्ने, समिध्यमानास्तव मूर्तय आज्यस्य वियन्तु हूयमानमिदमाज्यमश्नन्तु। तनू [3]यत्नु शरीर न १५ पातयति न विनाशयति किंतु पालयतीति तनूनपात्। हेऽग्ने, [4]द्वितीया तनूनपात् [5]तव मूर्तिराज्य पिबतु। हेऽग्ने, इड ईड्या स्तुत्या [6]तव मूर्तय [6]आज्य पिबन्तु। बृहणार्हाहि। हेऽग्ने, फल बृहयन्ती [7]तव मूर्तिराज्य पिबतु। अग्निं [8]'प्रथमाज्यभागदेव प्रति [9]'स्वाहा हुत[9]' भविष्यति। एव द्वितीयाज्यभागदेव [10]"सोम प्रति स्वाहा [11]"हुतमस्त्विति भविष्यति [12]"इत्यादिक क्रमेण द्रष्टव्यम्। आवाहननिगदे या देवता क्रमेण निर्दिष्टास्ता एवास्मिन् स्वाहाकारनिगदेऽपि निर्दिष्टा [13]"इत्यवगन्तव्यम्। होत्रात्, होमनिमित्त २० [14]"स्विष्टकरणार्थमित्यर्थ। हेऽग्ने, [15]"एते सर्वे देवा [16]"जुषाणा प्रीयमाणा इदानीं त्वन्मुखेनाऽऽज्य पिबन्तु॥

---

१ तर ल– दर्श°। २ ल– वसन्तमृत°।

---

१ क ङ१ गृ–'दर्शयति' इत्यस्यानन्तरं–'अथ प्रयाजाना प्रथम यजति' इति। २ ङ१– 'प्रथम' नास्ति। ३ आ क–'यत्नु' नास्ति। ४ ङ१–त्वदीया। ५ ङ१–'तव' नास्ति। ६–६ ङ गृ– त्वन्मूर्तय। ७ क ङ१ गृ– त्वदीया। ८ अ इ उ वो ना पा–प्रथममाज्य°। ९ ९ ङ१– ङ५ स्वाहा स्वाहुतम्, ङ– स्वाहुतम्–। १० आ हा– 'सोम' नास्ति। ११ क ङ१ 'अस्त्विति' नास्ति। १२ आ क ङ– इति। १३ आ क– इत्यवधेयम्। १४ ङ१ गृ– स्विष्टकृत्°। १५ इ उ वो ना पा हा– तत्रे दत्त। १६ आ क– 'जुषाणा' नास्ति।

हरिः ॐ ॥

सुमिधो यजति वसन्तमेवर्तूनामव रुन्द्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्द्ध इडो यजति वर्षा एवाव रुन्द्धे बर्हिर्यजति शरदमेवाव रुन्द्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्द्धे तस्मात् स्वाहाकृता हेमन् पशवोऽव सीदन्ति

५ सुमिध इति सम्-इधः। यजति। वसन्तम्। एव। ऋतूनाम्। अवेति। रुन्द्धे। तनूनपातमिति तनू-नपातम्। यजति। ग्रीष्मम्। एव। अवेति। रुन्द्धे। इडः। यजति। वर्षाः। एव। अवेति। रुन्द्धे। बर्हिः। यजति। शरदम्। एव। अवेति। रुन्द्धे। स्वाहाकारमिति स्वाहा-कारम्। यजति। हेमन्तम्। एव। अवेति। रुन्द्धे। तस्मात्। स्वाहाकृता इति स्वाहा-कृताः। हेमन्। पशवः। अवेति। सीदन्ति।

१० लोकस्याधारा [3]एते। एताश्च एतैः प्रीणयति। भावाना [4]समिन्धयितारः समिध.। अग्नेरिव सञ्ज्ञा। वसन्ते हि भावाः समुज्ज्वला भवन्ति। तनूनामवयविना न पातयिता प्रायशोऽवयवाना पातयिता तनूनपात्, भावाना सकोचयिता। ग्रीष्मे हि सर्वे भावा. सकोच व्रजन्ति॥ [5]इड वृष्ट्या इषोऽन्नस्य उत्पादयित्र्य। अन्त्यविकारश्छान्दस। यद्वा- [6]इडन्नम्। "तत्करोति" (पा ३·१ २६ वा ५) इति णिचि इष्ठवद्भावे [7]टिलोपे क्विपि णिलोपः। वर्षासु हि सर्वसस्याभिवृद्धि। १५ बृहणाल्लोकस्य बर्हिः। [8]शरदि हि सर्वे सस्यै लोक समृद्धो भवति। स्वाहुतमिव दग्ध करोतीति स्वाहाकारो हिमाग्निः। हेमन्ते हि सर्वं जगत् हिमाग्निना दग्धमिव भवति। तदेवाह- [9]तस्मात्[8] स्वाहाकारेण हिमाग्निना दग्धा. हेमन्ते [9]पशवः द्विपादश्चतुष्पादश्च [9]अवसीदन्ति विनश्यन्ति। इयमपि स्तुत्यर्थमेव ऋतुधर्मप्रवृत्ति कीर्त्यते॥

समिध इति॥ तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः साध्यान् [17]प्रयाजान विधत्ते- 'समिधो यजति २० वसन्तमेवर्तूनामव रुन्द्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्द्ध इडो यजति वर्षा एवाव रुन्द्धे बर्हिर्यजति शरदमेवाव रुन्द्धे स्वाहाकार यजति हेमन्तमेवाव रुन्द्धे तस्मात् स्वाहाकृता हेमन् पशवोऽव सीदन्ति' इति॥ अत्र समिदादिशब्दैर्यागविशेषनामान्युच्यन्ते। "ऋतवो वै प्रयाजाः" (मैस १·४·१२) इत्येवम् ऋतुत्वेन [18]स्तुतत्वात् तैः प्रयाजैः क्रमेण वसन्ताद्यवरोध उच्यते। यस्मात् स्वाहाकारयागेन(ण) हेमन्तावरोधस्तस्मात् हेमन् हेमन्ते पशवः अवसीदन्ति, द्विपादश्चतुष्पादश्च हिमेन पीड्यन्ते, [19]तेन २५ तत्र दृष्टान्तः- 'स्वाहाकृताः' इति, स्वाहाकारेण प्रक्षिप्ताः समिधो यथा दाहेन पीड्यन्ते तद्वदित्यर्थः। तादृश उग्रोऽपि हेमन्तोऽस्माधीनो भवतीति यागस्तुतिः॥

३. हो- 'एते' नास्ति। ४. तं१.हो- समिन्धयन्तः। ५. तं१.हो- 'इड.' नास्ति। ६. तं१.हो- इड अन्नम्। ७. हो- 'टिलोपे' नास्ति। ८-८ [ तं१.लं.हो- 'शरदि हि सर्वैः... तस्मात्' इति नास्ति। ]।

३० १७. द- 'प्रयाजान' नास्ति। १८. आ.क- स्तूयमानत्वात्। १९. ड.द१- 'तेन' नास्ति।

समिधो यजत्युपर्स एव देवतानामवं रुन्द्धे तनूनपातं यजति यज्ञमेवाव रुन्द्धे (१) इडो यजति पशूनेवावं रुन्द्धे बर्हिर्यजति प्रजामेवावं रुन्द्धे समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारं यजति वाचमेवावं रुन्द्धे

समिध इति सम्-इधं । यजति । उपसं । एव । देवतानाम् । अवेति । रुन्द्धे । तनूनपातमिति तनू-नपातम् । यजति । यज्ञम् । एव । अवेति । रुन्द्धे (१) । इडः । यजति । पशून् । एव । अवेति । रुन्द्धे । बर्हिः । यजति । प्रजामिति प्र-जाम् । एव । अवेति । रुन्द्धे । समानयत इति सम्-आनयते । उपभृत इत्युप-भृतः । तेजः । वै । आज्यम् । प्रजा इति प्र-जा । बर्हिः । प्रजास्विति प्र-जासु । एव । तेजः । दधाति । स्वाहाकारमिति स्वाहा-कारम् । यजति । वाचम् । एव । अवेति । रुन्द्धे । ५

पुनरपि फलान्तरवत्तया प्रयाजाः स्तूयन्ते– उपस इति ॥ समिद्धत्वान्वयात् [८]देवतानां योग्या उपसः [९]उदयान् लभन्ते । तनुमतां मनुष्याणामन्नहतोरग्निविशेषात् यज्ञलाभः । इड पशव इति । पशुलाभहेतुरिडायागः । बर्हिरिति । प्रजालाभहेतुर्बर्हिर्यागः ॥ १०

समानयत इति ॥ त्रीन् प्रयाजानिष्ट्वा अर्धमौपभृतस्य जुह्वामानीय चतुर्थपञ्चमौ यजति । तेजो वा इति । [१०]पुनराज्याधानेन प्रजानां तेजःसमृद्धिः क्रियते ॥

"स्वेव ते वागित्यब्रवीत्" (तैब्रा २ १ २) इति स्वाहाकारेण वागवरोधः । १५

समिध इति ॥ पुनरपि [२०]विधीननूद्य प्रशंसति– 'समिधो यजत्युपस एव देवतानामव रुन्द्धे तनूनपातं यजति यज्ञमेवाव रुन्द्धे इडो यजति पशूनेवाव रुन्द्धे बर्हिर्यजति प्रजामेवाव रुन्द्धे' इति ॥ समिच्छब्देन [२१]दीप्तिसूचनादुपसोऽवरोधः । तनूनपाच्छब्देनाविनाशसूचनात् कृत्स्नयज्ञावरोधः । इट्शब्देन वक्ष्यमाणक्षीरादिसूचनात् [२२]पश्ववरोधः । "प्रजा बर्हिः" (तैस २ ६ ३, मैस ३ ८ ६) इति श्रुत्यन्तरात् बर्हिर्यागेन(ण) प्रजावरोधः ॥ २०

समानयतेति ॥ चतुर्थप्रयाजार्थमौपभृतस्याऽऽज्यस्य जुह्वामानयनं विधत्ते– 'समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति' इति ॥ [२३]उपभृतः सकाशाज्जुह्वामर्धमाज्यं सम्यगानयेत् । बर्हिर्यागस्य प्रजारूपत्वादाज्यस्य तेजस्त्वात् [२४]प्रजासु [२५]तेजः स्थापितं भवति ॥

स्वाहाकारमिति ॥ पञ्चमप्रयाजमवशिष्टं प्रशंसति– 'स्वाहाकारं यजति वाचमेवाव रुन्द्धे' इति ॥ अस्मिन् प्रयाजे स्वाहाशब्दानामग्न्यादिशब्दानां च बहूनामुच्यमानत्वात् तेन वागवरोधः ॥ २५

८ तर मै ल हो–देवानाम् । ९ तर ल प्रजालाभ इति हेतु° । १० पर मै४–पुनराज्यानयनेन ।

२० आ क– विधानान्तरेण । २१ अ आ इ उ जो पा– समित्स्तुतिसूच° । २२ अ इ उ जो ना पा– पश्वनुरोधः ।

दश॒ सं प॑द्यन्ते॒ दशा॑क्षरा वि॒राडन्नं॑ वि॒राड्वि॒राजै॒वान्नाद्य॒मव॑ रुन्द्धे स॒मिधो॑ यजत्य॒स्मिन्ने॒व लो॒के प्रति॑ तिष्ठ॒ति॒ तनू॒नपा॑तं यजति ( २ ) य॒ज्ञ ए॒वान्तरि॑क्षे॒ प्रति॑ तिष्ठती॒डो यं॑जति प॒शुष्वे॒व प्रति॑ तिष्ठति ब॒र्हिर्य॑जति॒ य ए॒व दे॑व॒याना॒ः पन्था॑न॒स्तेष्वे॒व प्रति॑ तिष्ठति स्वाहाका॒रं य॑जति सुव॒र्ग ए॒व लो॒के प्रति॑ तिष्ठत्ये॒ताव॑न्तो॒ वै दे॑वलो॒कास्तेष्वे॒व
५ यथापू॒र्वं प्रति॑ तिष्ठति

दशं॑। समिति॑। प॒द्य॒न्ते॒। द॒शाक्ष॒रेति॒ दश॑ - अ॒क्ष॒रा॒। वि॒राडिति॑ वि - राट्। अन्न॑म्। वि॒राडिति॑ वि - राट्। वि॒राजेति॑ वि - राजा॑। ए॒व। अ॒न्ना॒द्यमि॒त्य॑न्न - अद्य॑म्। अवेति॑। रु॒न्द्धे॒। स॒मिध॒ इति॑ सम् - इध॑ः। य॒ज॒ति॒। अ॒स्मिन्। ए॒व। लो॒के। प्रतीति॑। ति॒ष्ठ॒ति॒। त॒नू॒नपा॑त॒मिति॒ तनू॑ - नपा॑तम्। य॒ज॒ति॒ ( २ )। य॒ज्ञे। ए॒व। अ॒न्तरि॑क्षे। प्रतीति॑। ति॒ष्ठ॒ति॒। इ॒डः। य॒ज॒ति॒। प॒शुषु॑। ए॒व।
१० प्रतीति॑। ति॒ष्ठ॒ति॒। ब॒र्हिः। य॒ज॒ति॒। ये। ए॒व। दे॒व॒याना॒ इति॑ दे॒व - याना॑ः। पन्था॑नः। तेषु॑। ए॒व। प्रतीति॑। ति॒ष्ठ॒ति॒। स्वा॒हा॒का॒रमिति॑ स्वा॒हा - का॒रम्। य॒ज॒ति॒। सु॒व॒र्ग इति॑ सुव॑ः - गः। ए॒व। लो॒के। प्रतीति॑। ति॒ष्ठ॒ति॒। ए॒ताव॑न्तः। वै। दे॒व॒लो॒का इति॑ दे॒व - लो॒काः। तेषु॑। ए॒व। य॒था॒पू॒र्वमिति॑ यथा - पू॒र्वम्। प्रतीति॑। ति॒ष्ठ॒ति॒।

दशेति। एवं फलभेदेन प्रयाजानां द्विप्रकारत्वात् [11]दशत्वमुपचर्यते। यद्वा– जुह्वा
१५ पञ्चगृहीतेन औपभृतस्यार्धं पञ्चगृहीतमानीयत इति दशग्रहणं जुह्वाः संपद्यते इति। तत्र दशात्वान्वयात् विराड्लक्षणान्नलाभः ॥

इदानीं पञ्चविधायाः [12]प्रतिष्ठाया हेतुत्वं प्रयाजानामाह– अस्मिन्निति ॥ प्रथमत्वात् प्रकाशितत्वाच्च [V]अस्मिन् मनुष्यलोके प्रथमे प्रतिष्ठितो भवति। [13]यज्ञादिसर्वपरिस्पन्दाश्रये [V]अन्तरिक्षे द्वितीयेन [V]प्रतितिष्ठति। इड्यागेन [V]पशुषु [14]प्रतिष्ठां गन्ता[15]", बर्हिषः द्युहककत्वात्

२० दशेति ॥ [23]पूर्वोक्ताः धर्मस्तावयरोधाः पञ्च, इदानीमुक्ता उषःकालावयरोधाः पञ्च इति दशसंख्याद्वारा यागान् प्रशंसति– 'दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्द्धे' इति ॥

समिध इति ॥ पुनरपि [24]तत्तल्लोकप्रतिष्ठामुखेन प्रशंसति– 'समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातं यजति यज्ञ एवान्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजति य
२५ एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रति तिष्ठत्येतावन्तो वै

११. सं– दशत्वमु°। १०. तै३, ऌ– प्रतिष्ठा°। १३. तै३,ऌ– यज्ञगर्व°। १४.–१४. वैर– प्रतिष्ठा कृता; त्रि.ग.शो– प्रतिष्ठा गता; मै८– प्रतिष्ठा गत्वा; तै२– प्रतिष्ठां गतः।

२३. भा.प. पूर्वोक्त°। २४. मृ– तल्लोक°।

**देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त तत् प्रयाजानां ( ३ ) प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् नुदतेऽभिक्रामं जुहोत्यभिजित्यै**

देवासुरा इति देव असुरा । एषु । लोकेषु । अस्पर्धन्त । ते । देवा । प्रयाजैरिति प्र याजै । एभ्य । लोकेभ्य । असुरान् । प्रेति । अनुदन्त । तत् । प्रयाजानामिति प्र याजानाम् ( ३ ) । ५ प्रयाजत्वमिति प्रयाज त्वम् । यस्य । एवम् । विदुष । प्रयाजा इति प्र याजा । इज्यन्ते । प्रेति । एभ्य । लोकेभ्य । भ्रातृव्यान् । नुदते । अभिक्राममित्यभि क्रामम् । जुहोति । अभिजित्या इत्यभि जित्यै ।

सर्वदेवयानपथप्रतिष्ठाहेतुत्वम् । स्वाहुतत्वस्याग्न्यादितृप्तिहेतुत्वात् स्वाहाकारेण स्वर्गे प्रतितिष्ठति । देवलोका इति । सुखहेतुत्वात् [15]देवलोकत्वमेषाम् । यथापूर्वमिति । यथाक्रम [16]प्रयाजादीना क्रमात् । १०

देवासुरा इत्यादि ॥ प्रथमत इज्यन्ते इति प्रयाजा भ्रातृव्यप्रणोदनफला । यद्वा–प्रस्थानादिवत् धात्वर्थनिवृत्तौ प्रशब्द । [17]"प्रेज्यन्ते प्र वा बाध्यन्ते"[17] एभिरिति प्रयाजा । "प्रयाजानुयाजौ यज्ञाङ्गे" (पा ७ ३ ६२) इति कुत्वाभाव । थाथादिना उत्तरपदान्तोदात्तत्वम् (पा ६ २.१४४) । अभिक्राममिति । [18]अभिक्रम्याभिक्रम्य आभिमुख्येनाक्रम्य ॥

देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठति ' इति ॥ समिधामस्य प्राथम्यात् तेन 'अस्मिन् प्रथमलोके प्रतिष्ठा । १५ "प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोक [25]"यो दीक्षित"[25]" (तैस ६ १ १) इत्युक्तत्वात् दीक्षादिरूप 'यज्ञ [26]लोकद्वयमध्यवर्त्यन्तरिक्षरूपस्तस्मिन् 'अन्तरिक्षे द्वितीयत्वसाम्यात् तनूनपाद्यागेन प्रतिष्ठा । इडयागस्य पशुसम्बन्ध पूर्वमेवोक्त । बर्हिःशब्देन देवयानमार्गसाधनस्य यज्ञस्य सूचनात् तद्यागेन त्रिष्वपि पूर्वोक्तेषु [27]देवयानमार्गेषु प्रतिष्ठा । स्वाहाकारयागस्योत्तमत्वात् तेन स्वर्गप्रतिष्ठा । भूलोकमारभ्य [28]स्वर्गपर्यन्ता यथोक्ता 'एतावन्त एव देवाना पुण्यानामपेक्षिता लोका 'तेषु सर्वेषु यथाक्रममेभिरेतै २० प्रतिष्ठितो भवति ॥

देवासुरा इति ॥ इदानीं नामनिर्वचनेन प्रशंसति–' देवासुरा एषु लोकेष्वस्पर्धन्त ते देवा प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त तत् प्रयाजाना प्रयाजत्व यस्यैव विदुष प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान नुदते ' इति ॥ अस्माकमेवैते लोका भवेयुरित्युभयेषा परस्पर स्पर्धा । [29]प्राणुदन्त विरोधिनो [30]यैर्यागैस्ते यागा प्रयाजा ॥ २५

१५ त३ ल हो– देवलोकमेषाम् । १६ त३ नि ल हो– प्रयाजानाम् । १७–१७ नि– प्रयुज्यन्ते प्र वा बाध्यन्ते, प– प्रयुज्यते प्रबाध्यन्ते मै४– प्रेष्यन्ते प्रबाध्यन्ते हो– प्रयुज्यन्त प्रबाध्यन्ते । १८ तै३– अभिमतमिति अभिक्रम्याभिक्रम्य ल– अभिमतमतिक्रम्य आभिक्रम्य ।

२५–२५ आ हा–'यो दीक्षित ' नास्ति । २६ आ– लोकद्वयवर्त्य° । २७ अ इ उ जो ना पा हा– देवमार्गेषु । २८ आ क ड– स्वर्गान्ता । २९ आ क– प्राणुदन्त । ३० हो१– एभिर्या° । ३०

यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बहीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बहीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र (४) प्रजया पशुभिर्मिथुनैर्जायते देवाना वा अनिष्टा देवता

५ य । वै । प्रयाजानामिति प्र-याजानाम् । मिथुनम् । वेद । प्रेति । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । मिथुनैः । जायते । समिध इति सम्-इधः । बह्वीः । इव । यजति । तनूनपातमिति तनू-नपातम् । एकम् । इव । मिथुनम् । तत् । इडः । बह्वीः । इव । यजति । बर्हिः । एकम् । इव । मिथुनम् । तत् । एतत् । वै । प्रयाजानामिति प्र-याजानाम् । मिथुनम् । यः । एवम् । वेद । प्रेति (४) । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । मिथुनैः । जायते ।
१० देवानाम् । वै । अनिष्टा । देवता ।

मिथुनमिति ॥ [19]स्त्रीपुंसयोर्युगलम् । बह्वीरिति । स्त्रीत्वं बहुत्वं चाविवक्षितम्, 'एकमिव' इत्यत्रापि पुंस्त्वमेकत्वं च । लिङ्गवचनविशेषयोरत्रौ [20]अपारमार्थ्यमिवशब्देन चोत्यते । एवमिडा बर्हिषोर्वेदितव्यम् ॥

देवाना [21]वा इत्यादि ॥ पूर्वं [22]देवाना यागेन प्रयाजदेवता [23]अनिष्टा [24]आसन् । [25]अथ
१५ तादृशं [26]यज्ञम् [27]असुरा हन्तुमैच्छन् । अथ तत् ज्ञात्वा [28]देवा [29]गायत्रीम् अष्टाक्षरा [30]व्यौहन्

अभिक्राममिति ॥ यदुक्तं सूत्रकारेण– "य कामयेताभितरं वसीयान्त्स्यादित्यभिक्रामं तस्य जुहुयात्" (आपश्रौ २ १७ ५) इति । अभितरम् [31]अभिमुखतरम् उत्तरोत्तरवृद्ध्यर्थं, तदेतत् सूत्रोक्तम् [32]अभिक्रमणं विधत्ते– 'अभिक्रामं जुहोत्यभिजित्यै' इति ॥ [33]अभिक्रम्याभिक्रम्याद्दूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहुयात् । [34]एवमुत्तरत्र । तदेतदभिक्रमणम् ॥
२० य इति ॥ स्त्रीलिङ्गबहुवचननिर्देश लिङ्गान्तरैकवचननिर्देशं च सह प्रशंसति– 'यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते' इति ॥ एकस्य पुरुषस्य [35]बह्व्यः स्त्रियो [36]लोके भवन्ति, तत्साम्यादत्र [37]मिथुनत्वोपचारः । मूर्तिबहुत्वेऽपि देवतैक्यात् बर्हिरेकत्वमोक्तम् ॥

२५ १९ त्रि पर ऌं हो–स्त्रीपुंसो° । २०. प–अपरमार्थत्वमिव°, त्रि ए हो–अपरमार्थमिव°, मैः–अपरमार्थत्वादिव° । २१ हो–च । २२–२३. ऌं हो–व्युहन् ।

३१ आ– 'अभिमुखतरम्' नास्ति । ३२ ट– अभिक्रमम् । ३३ ट– 'अभिक्रम्याभिक्रम्याद्दूरे' नास्ति, ट१ गृ हो१– अभिक्रम्याभिक्रम्य दूरे, अ त घो ना पा रा– अभिक्रम्याद्दूरे । ३४ अ त के ना प रा– 'एवमुत्तरत्र' नास्ति । ३५–३५. अ ट उ आ ना पा रा– बहुस्त्रियो, ट–महास्त्रियो ।
३० ३६ उ हो१– मिथुनाधिकारात् ।

आस॒न्नथासु॑रा य॒ज्ञम॑जिघाꣳसन् ते दे॒वा गा॑यत्रीं॒ व्यौ॑हन् पञ्चा॒क्षरा॑णि प्रा॒चीना॑नि त्रीणि॑ प्र॒ती॒चीना॑नि तत॒ो वर्म॑ य॒ज्ञाया॑भव॒द्वर्म॑ यज॑मानाय॒ यत् प्र॑याजानू॒या॒जा इ॒ज्यन्ते॑ वर्मै॒व तद्य॒ज्ञाय॑ क्रियते॒ वर्म॒ यज॑मानाय॒ भ्रातृ॑व्याभिभूत्यै॒ तस्मा॑द्वरू॒थं पु॒रस्ता॒द्वर्षी॑यः प॒श्चाद्ध्रसी॑यो

आसन्। अथ। असु॑राः। य॒ज्ञम्। अ॒जि॒घा॒ꣳस॒न्। ते। दे॒वाः। गा॒य॒त्रीम्। वीति॑। औ॒ह॒न्। पञ्च॑। अ॒क्षरा॑णि। प्रा॒चीना॑नि। त्रीणि॑। प्र॒ती॒चीना॑नि। तत॑ः। वर्म॑। य॒ज्ञाय॑। अ॒भ॒व॒त्। वर्म॑। यज॑मानाय। यत्। प्र॒या॒जा॒नू॒या॒जा इति॑ प्रयाज-अ॒नू॒या॒जाः। इ॒ज्यन्ते॑। वर्म॑। एव। तत्। य॒ज्ञाय॑। क्रि॒य॒ते॒। वर्म॑। यज॑मानाय। भ्रातृ॑व्याभिभूत्या इति॑ भ्रातृ॑व्य-अ॒भि॒भू॒त्यै॒। तस्मा॑त्। व॒रू॒थम्। ५
पु॒रस्ता॑त्। वर्षी॑यः। प॒श्चात्। ह्रसी॑यः।

व्यूहद्वय कृतवन्तः। पञ्च अक्षराणि यज्ञस्य प्राचीनानि पुरस्तात् स्थितान्येको व्यूह। त्रीणि १०
अक्षराणि प्रतीचीनानि पश्चात् स्थितान्यन्यो व्यूहः। तत स तथा [23]व्यूढाष्टाक्षरा गायत्री
मध्यस्थस्य यज्ञस्य यजमानस्य च [24]रक्षाकवचत्वेन सपन्ना ॥

यदित्यादि ॥ गतम्। वरूथमिति। रक्षक सेनामण्डलादिक पुरस्तात् वर्षीयः वृद्धतर।
"प्रियस्थिर°" (पा ६·४·१५७) इत्यादिना वर्षादेशः। पश्चात् ह्रसीय ह्रस्वतर।
"स्थूलदूर°" (पा ६·४·१५६) इत्यादिना यणादिलोप ॥ १५

देवानामिति ॥ कवचरूपत्वं दैन्यलाङ्ग्ल्यं च सपाय प्रशंसति– 'देवाना वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघांसन् ते देवा गायत्रीं व्यौहन् पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयः' इति ॥ पुरा देवा यदा यज्ञ कुर्वन्ति तदानीमाज्यभागादिदेवताः अनिष्टाः आसन्। [37]तत्तदिज्यायाः प्रागेव तस्मिन्नवसरे समागत्य असुराः यज्ञ हनिष्याम २०
इत्यैच्छन्। [38]अतस्तदिज्याप्रतिबन्धाः तत्प्रतीकारत्वेन देवाः [39]अष्टाक्षरे गायत्रीपादे व्यूहद्वयं कृतवन्तः। तत्राक्षरपञ्चकस्य व्यूहो [40]यज्ञानुष्ठानात् प्राचीनो रक्षकः। अक्षरत्रयव्यूहः [41]तु प्रतीचीनो रक्षकः। ततो व्यूहद्वयं यज्ञस्य [42]कवचस्थानीयम् अभवत्, [43]तथा यजमानस्यापि। अतः पञ्चाक्षररूपत्वेन पञ्च प्रयाजाः पूर्वम् इज्यन्ते। [44]त्र्यक्षररूपत्वेन त्रयोऽनूयाजाः पश्चादिज्यन्ते। तदुभय [45]कवचवत् यज्ञयजमानयोरुभयतो [46]रक्षकम्। तेन रक्षणेन भ्रातृव्यस्य अभिभूतिर्भवति। यस्मादत्र प्राचीनान्यक्षराणि बहूनि प्रतीचीनान्यल्पानि २५

२३. तं२,ल– व्यूढाक्षरा। २४. ल–रक्षाकवचत्वेन

३७. ढ१,गं– कुतस्तदिज्यायाः। ३८. ड,ड१– °प्रतिबन्धात्। ३९. क–अष्टाक्षर°। ४०. मो,हा– यज्ञानुष्ठान°; ना– यज्ञानुष्ठाने। ४१ आ,क,हो१– 'तु' नास्ति। ४२. आ,क– कवचमाच्छादनाय। ४३. ड,ड१– तदा। ४४. ड१–अक्षरत्रयरूपत्वेन। ४५ आ,क– कवचम्। ४६. आ,क– रक्षणम्। ३०

देवा वै पुरा रक्षोभ्य (५) इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन् तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन् वि वा एतद्यज्ञं छिन्दन्ति यत् स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्वमुपैति

५ देवा । वै । पुरा । रक्षोभ्य इति रक्षः- भ्यः (५)। इति । स्वाहाकारेणेति स्वाहा-कारेण । प्रयाजेष्विति प्र-याजेषु । यज्ञम् । सꣳस्थाप्यमिति सं-स्थाप्यम् । अपश्यन् । तम् । स्वाहाकारेणेति स्वाहा-कारेण । प्रयाजेष्विति प्र-याजेषु । समिति । अस्थापयन् । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । स्वाहाकारेणेति स्वाहा-कारेण । प्रयाजेष्विति प्र-याजेषु । सꣳस्थापयन्तीति सं-स्थापयन्ति । प्रयाजानिति प्र-याजान् । इष्ट्वा । हवीꣳषि । अभीति । १० घारयति । यज्ञस्य । संतत्या इति सं-तत्यै । अथो इति । हविः । एव । अकः । अथो इति । यथापूर्वमिति यथा-पूर्वम् । उपेति । एति ।

देवा वा इत्यादि ॥ हविषोऽभिघारणविधिः । रक्षसा प्रवृत्ते [१]पुरा एव याग समाप्य इति मन्यमानाः [२]देवा [३]प्रयाजेषु कृतेषु तदन्ते [४]स्वाहाकारेण पञ्चमेन प्रयाजेन [५]सꣳस्थाप्यम् [६]अपश्यन् इत्थमेव इद कर्तव्यमिति निश्चितवन्त । [७]ततस्तदनुरूपमेव कृतवन्त । ननु किं [८]प्रयाजेभ्य १५ ऊर्ध्वमेव लुप्तो देवाना याग ? न ब्रूम प्रयाजान्तो याग इति, किं तु- स्वाहाकारेण सर्वो यज्ञो यथा सतिष्ठते तादृश प्रयोग कृतवन्तो देवा इत्युच्यते । स च प्रयाजानन्तर [९]स्वाहाकारेण विच्छिन्न हविषामभिघारणम् । [१०]तदेव प्रतिपादयति-'वि वा एतत्' इत्यादि । यदि प्रयाजान्तो यज्ञः सꣳस्थाप्यते विच्छेद एवाय यज्ञस्य क्रियते, न पुनः सर्वोऽयं यज्ञः सꣳस्थाप्यते । तस्मात् [११]प्रयाजान् [१२]इष्ट्वा अनुयं [१३]हवीꣳषि [१४]अभिघारयति [१५]यज्ञस्य अविच्छेदाय । देवा अपि तथा

२० [१]तस्मात् लोकेऽपि युद्धार्थं गच्छन्त्या सेनायां [२]परस्तात् [३]वरूथं जनसंघः परकीयशैर्भयस्य भयोत्पादनाय भूयान् [४]विनिष्पाद्यते, पृष्ठभागे स्वल्पीयान् ॥

देवा इति ॥ प्रयाजशेषेण हविरभिघारणं विधत्ते-'देवा वै पुरा रक्षोभ्य इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन् तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन् वि वा एतद्यज्ञं छिन्दन्ति यत् स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्व- २५ मुपैति' इति ॥ [१]देवा कदाचिद्यागं कुर्वन्तो [२]यज्ञोपघातिनां रक्षसामागमनात् [३]पुरा [४]स्वाहाकारनामधेयेन

२५-२५. तै१.पं२.ल- तस्मादनुरूपमेव, मै४- ततस्तदनुरूपमेवा । २६. ल हो- प्रयोगेण । २७, हो- तदेवम् ।

४७, क,ब हो१- अभिनिष्पाद्यते । ४८. द,ड१,र्१.हो१-यज्ञविघातिनाम् । ४९. ब-स्वाहाकारा-भिधानेन, ड१- स्वाहाकाराभिधान° ।

पिता वै प्रयाजाः प्रजाऽनूयाजा यत् प्रयाजानिष्ट्वा हवींष्यभिघारयति पितैव तत् पुत्रेण साधारणं ( ६ ) कुरुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं

पिता । वै । प्रयाजा इति प्र - याजाः । प्रजेति प्र - जा । अनूयाजा इत्यनु - याजा । यत् । प्रयाजानिति प्र - याजान् । इष्ट्वा । हवींषि । अभिघारयतीत्यभि - घारयति । पिता । एव । तत् । पुत्रेण । साधारणम् ( ६ ) । कुरुते । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । ५
न । कथा । पुत्रस्य । केवलम् ।

अकुर्वन्निति । अथो अपि च हविष्ट्वमेव हविषामनेनाभिघारणेन अकः करोति । छान्दसे लुङि " मन्त्रे घस° " ( पा २·४·८० ) इत्यादिना च्लेर्लुक् । अथो अपि च यथापूर्वम् अनुक्रमेण पदार्थान् उपैति । [28]इदं कृतमिदं कृतमिदानी[28] कर्तव्यमिति बुद्ध्या उपसंप्राप्नोति ॥

पिता वा इत्यादि ॥ पूर्वमुत्पन्नत्वात् प्राधान्याच्च पितृस्थानीयाः प्रयाजाः । विपर्ययात् १० प्रजास्थानीयाः अनूयाजाः । [29]तस्मात् प्रयाजशेषेण हविषामभिघारणेन पिता स्वयम् एव आत्मीयं धनं पुत्रेण साधारणं कुरुते । सह ध्रियत इति साधारणम् । " आग्नीध्रसाधारणादञ् वक्तव्यः " ( पा ५·४·३६ वा ५ ) इति अञ्प्रत्ययः ॥

तस्मादित्यादि ॥ यः च एवम् वेदार्थं वेद जानाति [30]यः च न जानाति[30], ते सर्वेऽपि कथा केन हेतुना पुत्रस्य स्व केवलं पुत्रस्यैव स्व, कथा च पितुः स्व १५

पञ्चमप्रयाजेन यज्ञः समापनीय इति विचार्य तथैव समापयन् । [50]तदेतदयुक्तं यज्ञविच्छेदप्रसङ्गात् । अतः प्रयाजान् इष्ट्वा तच्छेषेणाऽऽज्येन वेद्यामासादितानां हविषामभिघारणे सति यज्ञः संततो भवति । [51]अथो पुरोडाशादिद्रव्यस्य हविष्ट्वं कृतं भवति । [52]किं च[52] यथापूर्वम् उत्तरम् उपैति प्रयाजा यथा निर्विघ्नेनानुष्ठितास्तथैवाऽऽज्यभागाद्यनुष्ठानमपि निर्विघ्नेन प्राप्नोतीत्यर्थः ॥

पितेति ॥ प्रकारान्तरेणाभिघारणं प्रशंसति– ' पिता वै प्रयाजाः प्रजाऽनूयाजा यत् प्रयाजानिष्ट्वा २० हवींष्यभिघारयति पितैव तत्पुत्रेण साधारणं कुरुते ' इति ॥ प्रथमभावित्वात् प्रयाजानां पितृत्वं, पश्चाद्भावित्वादनूयाजानां पुत्रत्वम् । अनूयाजार्थं [53]च हविरुपभृति [54]संगृहीतमस्ति । पुरोडाशादिहविरभिघारणवेलायामौपभृतमपि हविः प्रयाजशेषेण अभिघारयति । तथा सति [55]पितृस्थानीयानां प्रयाजानां संबन्धि यदवशिष्टमाज्यद्रव्यं तत्पुत्रस्थानीयानामनूयाजानामपि साधारणं कृतं भवति ॥

तस्मादिति ॥ इममेवार्थं लौकिकोदाहरणेन विस्पष्टयति– ' तस्मादाहुर्यश्चैवं वेद यश्च न कथा २५ पुत्रस्य केवलं कथा साधारणं पितुरिति ' इति ॥ लोके हि बालेन पुत्रेण [56]यदुपार्जितं तद्द्रव्यं ■ पुत्र

२८.–२८. हो– इदं कृतकर्तव्यमिदानीं; ल–इदं कृतकर्तव्यकृत इदानीं ; तं१– इदं कृतं कर्तव्य कृतमिदानीं । २९. मे.मै४–अस्मात्; नि.लं.हो– अस्मान् । ३०–३०. तं३.मै–' यः च न जानाति ' नास्ति ।

५०. आ–तदयुक्तम् । ५१. क.ड.ध्रै.हो– किं च तस्य । ५२–५२. अ.इ.उ.ओ.पा.द्रा–कल्पः । ५३. क.ड.हो१– ' च ' नास्ति । ५४. आ.क–गृहीत° । ५५. आ– पितृस्थानीयम् । ५६. ३० ड– यद्द्रव्यमुपार्जित° ; ड१ यद्द्रव्यमुपार्ज्यते ।

कथा साधारणं पितुरित्यस्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय प्र जनयति ॥ १ ॥

[यजति यज्ञमेवावरुन्द्धे तनूनपातं यजति प्रयाजानामेव वेद प्र रक्षोघ्न्य साधारणं पञ्चत्रिंशच्च ।]

कथा । साधारणम् । पितुः । इति । अस्कन्नम् । एव । तत् । यत् । प्रयाजेष्विति प्र याजेषु ।
५ इष्टेषु । स्कन्दति । गायत्री । एव । तेन । गर्भम् । धत्ते । सा । प्रजामिति प्र जाम् । पशून् ।
यजमानाय । प्रेति । जनयति ॥ १ ॥

[मैस ४ १० ३, कास २० १५, शब्रा १ ५ ३ ४, २ २ ३]

[31]साधारण पुत्रस्यापि स्वम् इति जिज्ञासवो वक्तारो भवन्ति । एव विद्वांस्तु हेतुमत्र जानातीति भाव । "था हेतौ च°" (पा ५ ३ २६) इति थाप्रत्यय । श्लोकार्धमिदं
१० पुरातन ब्राह्मणदर्शितम् । अयार्थस्यानूयाजशेषस्याभावात् पुत्रधनस्यासाधारण्यम् ॥
किं [32]चेयाह– 'अस्कन्नम्' इत्यादि ॥ प्रथमत एव इष्टप्रायत्वात् । तस्मात् प्रयाजा कार्या इति । अपि चेयाह– गायत्र्येवेयादि । प्रयाजानूयाजात्मकेन यागाष्टकेनाष्टाक्षरा गायत्री [33]गर्भं धत्ते [33] सा कालेन यजमानाय प्रजा पुत्रादिका पशून् च गवादीन् यजमानाय प्रजनयति प्रसूते । तस्मात् प्रयाजा अनूयाजाश्च कर्तव्या इति ॥

१५ इति द्वितीये षष्ठे प्रथमोऽनुवाक ॥

उत्तरकाले स्वजीवनार्थमसाधारणत्वेन संगृह्य गुप्त करोति न तु पित्रे प्रयच्छति [57]नापि भ्रातृभ्य । पित्रा तु [58]यदुपार्जित तत्पितुर्बाल्यपुत्रस्य तद्भ्रातृणा च साधारण भवति । तेन हि द्रव्येण सर्वेऽपि जीवन्ति । तथा सति लौकिक कश्चित् पुरुषो वेदमधीत्य [59]प्रयाजानूयाजवृत्तान्त जानाति । अन्यस्त्वध्ययनरहित न जानाति । तादृशानामुभयविधाना सभायामुपविष्टा अनभिज्ञा पप्रच्छु केन हेतुना पुत्रस्य द्रव्य केवलम्
२० असाधारण सपन्नम् । पितृद्रव्य तु केन हेतुना साधारण सपन्नम् इति । तस्य च प्रश्नस्याभिज्ञ [60]प्रयाजानूयाजवृत्तान्तेनोत्तर [60] ददुरिति शेष [61] । प्रयाजानामाज्य साधारण, तच्छेषेणेज्यमानत्वात् [61] । अनूयाजानाम् [62]आज्य त्वसाधारणम् । तच्छेषस्यान्यत्र विनियोगाभावात् । एव लौकिकयो पितापुत्रयोरपि द्रष्टव्यम् ॥
अस्कन्नमिति ॥ पुन प्रकारान्तरेणाभिधारण प्रशसति– 'अस्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति' इति । यागार्थस्य द्रव्यस्य यागात् प्रागेवान्यत्र पतन विनाशो भवति । अत्र तु इष्टेषु प्रयाजेषु

२५ ३१ ह°– साधारणं किंचेत्यादि । ३२ हो–चेत्यादि । ३३–३३ ह हो–'गर्भं धत्ते' नास्ति ।

५७ आ क– न तु । ५८ आ क– यदुपार्ज्यते । ५९ अ इ उ जो पा हा–°नूयाजवृत्त तज्जानाति । ६०–६० [illegible] उ पा– प्रयाजानूयाजातेनोत्तरददुरितशेष प्रयाजानामाज्य साधारणम्, जो हा– प्रयाजानूयाजार्थमाज्य (सा) यदुर्वरितं तेन तत्प्रयाजानामाज्य साधारणं तच्छेषे(ण)इज्यमानात् । ६१–६१ हो१– ददुरित्याहाज्यम्, ह गे– ददुरित्यप्याहाज्यम् । ६२ आ क– 'आज्य' नास्ति ।

"पश्चादन्येषु हविःषु शेषः प्रक्षिप्यते"। तस्मादेतत् 'अस्कन्नम् अविनष्टम् 'एव। "शङ्कितस्कन्दनदोषस्य परिहार एवात्र "प्रशंसेति ॥

गायत्रीति ॥ पुनरपि प्रकारान्तरेण प्रशंसति– 'गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय ▪ जनयति ' इति ॥ "एकत गायत्र्या पञ्चाक्षररूपा प्रयाजा, अन्यतो गायत्र्याः पञ्चाक्षररूपा अनूयाजा । मध्ये यदभिघारणं 'तेन 'गायत्री 'एव स्वोदरे 'गर्भं धृतवती भवति। तेन च 'सा गायत्री यजमानार्थं 'प्रजां 'पशून् उत्पादयति ॥

अत्र मीमांसा ॥ द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्–

"समिधो यजतीत्यादावैकत्वमुत भिन्नता।
धातुमन्त्ययोरैक्यादेकत्व" "भिन्नता कुतः ॥
अभ्यासात् कर्मभेदोऽत्र नामत्वाच्च विधिर्गुणे।
विधित्व "श्रुतितो भाति सन्निधेरनुवादता " ॥ ( जैन्या २ २ ४ ५ ) ॥

दर्शपूर्णमासयोः श्रूयते – "समिधो यजति", "तनूनपातं यजति", "इडो यजति", "बर्हिर्यजति", "स्वाहाकारं यजति" ( तैस २ ६ १ ) इति। "तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु यजतिददातीत्यादिपदेष्विव धातुभेदो नास्ति, येन भावनाभेद आशङ्क्येत। तस्मात् "आख्यातैक्यप्रयुक्तं भावनैक्यम् "अनिवार्यमिति चेत्। नैवम्। "यजतिपदाभ्यासेन कर्मभेदावगमात्। "कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। यद्युच्येत– 'समिधो यजति ' इत्यनेन "प्रथमश्रुतेन वाक्येन" विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते। अतोऽनुवादार्थत्वादभ्यासस्यैवमर्थ्यमिति। तन्न। तनूनपादादिशब्दानां यागनामत्वेन "गुणविधित्वाभावात्। ""न तावदत्र" देवताविधिः, चतुर्थीतद्धितयोरश्रवणात्। नापि द्रव्यविधिः। तृतीयान्तत्वाभावात्। तत 'अग्निहोत्रं जुहोति ' इत्यादाविव "द्वितीयान्तानां युक्तं नामत्वम्। यत् तु "चतुर्णाम् उपरितनानां यजतिपदानामनुवादत्वमिति", तदसत् तेषां विधायकत्वात्। यथा 'समिधो यजति ' इत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते तथाऽन्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतम्। अनुवादत्वं तु पुरोवादरूपस्य 'समिधो यजति ' इत्यस्य सन्निधानादवगम्यते। सन्निधिश्च श्रुतेर्दुर्बलः । "विधित्वे च पूर्ववाक्यविहितस्य "समिन्नामकस्य यागस्य पुनर्विधानायोगात् तनूनपादादिनामकानि यागान्तराणि विधीयन्ते। नन्वेवं ▪ सति संज्ञाभेदात्" कर्मभेदः सम्पद्यते, न त्वभ्यासात्। तथा सति "वक्ष्यमाणाधिकरणेन सङ्कीर्येत। नैवम्।

६२–६३ अ उ ना पा हा– अन्येषु हविःषु पश्चाच्छेषं प्रक्षिपति इ ओ– हविःषु पश्चाच्छेषं प्रक्षिपति। ६४ अ उ ओ ना पा हा– °स्कन्दोषस्य, इ–स्कन्ददोषस्य। ६५ ड१ शृ– प्रशंसा। ६६ अ इ उ ओ पा हा–प्रकृतौ। ६७ आ क ओ ना– °दैकत्वे हो१–°दैकत्र। ६८ ड हो१– अभिन्नता। ६९ अ इ उ ओ पा हा– न श्रुतौ। ७० अ इ उ ड१ ओ ना पा शृ हा हो१– 'तत्र' नास्ति। ७१ अ पा–आवृत्तिप्रयुक्त, उ–आवृतिप्रयुक्त, हो१–आवृत्यैक्यप्रयुक्त। ७२ ड हो१–अनुपेयम्। ७३ यजतिपदाद्यभ्यासेन। ७४ ▪ ▪ उ पा–कर्मैकत्वादभ्यासो, ड हो१– कर्मैकत्वाभ्यासो। ७५–७५ अ इ उ पा–प्रथमवाक्येन। ७६ अ इ ▪ ड१ शृ हो– गुणविशेषत्वाभावात्। ७७–७७ ड– न तावत् हा–तावदत्र न। ७८–७८ अ इ उ पा– युक्तं द्वितीयान्तानामेवं भवतु। ७९ क ड ओ ना शृ हा– 'इति' नास्ति। ८० अ इ उ पा हा–विधित्व हो१–विधित्वेन। ८१ अ इ उ पा–सन्निधानकृतस्य। ८२–८२ अ इ उ पा–ध्वनिकृतसंज्ञाभेदात् हो१–संज्ञाभेदात्। ८३ अ इ पा–वक्ष्यमाणविधिकरणेन उ–'वक्ष्यमाणाधिकरणेन' नास्ति, ड– वक्ष्यमाणम् अधिकरणेन।

वैयर्थ्यात्। 'अथैष ज्योतिः' इत्यस्मिन् वक्ष्यमाणोदाहरणे यागावगमात् प्रागेव [८४]संज्ञात्वावगमात् संज्ञायाः कर्मभेदहेतुत्वम्। इह तु [८५]विधायकैर्यजतिपदैर्यागेष्ववगतेषु भेदे चाभ्यासादवगते भिन्नानां यागानां समित्संज्ञाया अन्याः संज्ञा अपेक्षिता इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते। तस्मादभ्यास एवात्र यागभेदहेतुः ॥

[८६]नवमाध्यायस्य द्वितीयपादे चिन्तितम्–

"देवता यजयो वा स्युः प्रयाजे समिदादयः।
विष्ण्वादिवद्देवतात्वं न [८७]चतुर्थ्याद्यभावतः" ॥ (जैन्या ९·२·२८) ॥

दर्शपूर्णमासयोः "[८८]प्रयाजपञ्चकमाम्नातम्– "समिधो यजति" (तैस २·६·१) इत्यादिना। तत्र यथा–'विष्णुं यजति' 'वरुणं यजति' इत्यादौ द्वितीयानिर्दिष्टा विष्ण्वादयो देवतास्तथा समिदादीनां देवतात्वम्। ततो यागैर्देवताः संस्क्रियन्त इति दृष्टार्थत्वलाभ इति चेत्। मैवम्। सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यते। "[८९]तद्यथा– "यदग्नये सायं जुहुयात्" (तैब्रा २·१·२), "आग्नेयोऽष्टाकपालः" (तैस ७·५·२१) इति। [९०]"न चात्र समिदादिषु" चतुर्थीतद्धितौ विद्येते। "[९१]तादर्थ्यप्रतीतौ देवता भवति। न च द्वितीयया तादर्थ्यं प्रतीयते। किं त्वीप्सिततमत्वम्। "[९२]तच्च कर्मनामत्वादुपपद्यते। "अग्निहोत्रं जुहोति" (मैस १·५·१२) इत्यादौ तद्दर्शनात्। यथा 'पाकं पचति' इत्युक्ते पचिक्रियायाः कर्तव्यता प्रतीयते, तथा 'समिधो यजति' इत्युक्ते समिद्यागः कर्तव्य इत्यर्थो भवति। 'विष्णुं यजति' इत्यादौ "[९३]तादर्थ्यमुपपद्यते। प्रयाजमन्त्रेषु "समिधो अग्न आज्यस्य वियन्तु" (तैब्रा ३·५·५) इत्यादिषु समिदादिशब्दैर्बहुवचनैकवचनान्तैर्देवता निर्दिष्टाः। तदेव निमित्तीकृत्य तादृशैरेव शब्दैरिह यागा अभिधीयन्ते। "समिधो यजति", तनूनपातं यजति", "इडो यजति", "बर्हिर्यजति", "स्वाहाकारं यजति" (तैस २·६·१) इति। तस्मान्नात्र देवतासंस्कारविधिः। किं तु यागाः केवला विधीयन्ते। तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनाऽऽरादुपकारकत्वम्। पञ्चमप्रयाजस्य तु "[९४]वक्ष्यमाणाज्यभागादिदेवतासंस्कारकत्वं दशमेऽभिधास्यते (जैन्या १०·१·१३-१४) ॥

"[९५]दशमाध्यायस्य प्रथमपादे चिन्तितम्–

"अन्त्यः प्रयाज आरात् किमुपकार्युत संस्कृतिः।
स्वाहाकारेति "[९६]देवोक्तेर्मान्त्रवत् मन्त्रवर्णनात् ॥
आद्यो मैवं चतुर्थ्यादेरभावाद्यागमात्रके।
विधित्सया च "[९७]सौर्यादावर्थोऽन्यादिनिवर्तनम्" ॥ (जैन्या १०·१·१३-१४) ॥

---

८४. ह१ – संज्ञावगमात्। ८५. हो१ – विधायकैर्यभिति पदार्थेष्ववगतेषु, अ.उ.ह१.पा– °यैर्जतिपदार्थे (ष्व) वगतेषु। ८६. गृ– नवमस्य। ८७. अ.इ.उ.पा–चतुर्थ्यां विधीयते। ८८. ह१– °कमाम्नातं। ८९. अ.इ.उ.पा– यथा। ९०–९०. अ.इ.उ.बो.ना.पा.हा– अत्र च न। ९१. अ.इ.उ.पा– °प्रतीता। ९२. ह१.गृ–तत्र। ९३. ह१– °मुपपद्यते। ९४. क.बो.ना.हा – वक्ष्यमाणा°; इ.उ.पा– वक्ष्यमाण देवतासंस्कारकत्वं, ह१ गृ.हो१– वक्ष्यमाणदेवतासंस्कारकत्वम्। ९५. गृ–दशमस्य। ९६. अ.इ.उ.बो.पा.हा–मन्त्रोक्तेर्°। ९७. अ.इ.उ.बो.ना.पा.गृ.हो– °न्यादेर्निवर्तनम्।

दर्शपूर्णमासेष्टौ पञ्चमप्रयाज एवमाम्नायते– " स्वाहाकारं यजति " ( तैस २·६·१ ) इति। स किमिष्टेरारादुपकारक उताऽऽज्यभागादिषु वक्ष्यमाणानामग्न्यादिदेवतानां संस्कार इति संशयः। तत्र स्वाहाकारशब्देन देवतोच्यते। यागस्य तदाकाङ्क्षणात्। न च प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णदेवताकल्पनमुचितम्। नन्वेवं सति विधिमन्त्रयोर्वैयधिकरण्यं प्रसज्येत। विधिना हि [98]स्वाहाकाराख्या देवता विहिता। [99]मन्त्रे तु[99] वक्ष्यमाणाज्यभागदेवता [100]अग्न्यादयः प्रतीयन्ते। " स्वाहाऽग्निम्। स्वाहा सोमम्। स्वाहाऽग्निम्। स्वाहा प्रजापतिम्। स्वाहाऽग्नीषोमौ " ( तैब्रा ३·५·५ ) इत्यादिको हि [101]तन्मन्त्रः पठितः[101]। नाय दोषः, मातृशब्दवन्मान्त्रवर्णिकाग्न्यादिशब्दानामनेकार्थत्वसंभवात्। यथा मातृशब्दः प्रस्थादिना धान्यस्य मातारं जननीं चाऽऽचष्टे तथाऽग्न्यादिशब्दः [102]स्वाहाकाराख्यदेवतामाचक्षताम्। न च स्वाहाकाराख्यदेवतैव संस्क्रियतामिति वाच्यम्। संस्कृतायास्तस्या अन्यत्रोपयोगाभावात्। तस्मादिष्टेरारादुपकारक इत्ययं पक्षोऽभ्युपगन्तव्यः। मैवम्। चतुर्थ्या तद्धितेन वा सर्वत्र देवता विधीयते। न चात्र तौ विद्येते। किं चायं विधिर्देवतायागावुभौ विधत्ते देवताविशिष्टं यागं वा देवतामात्रं वा यागमात्रं वा। [103]नाऽऽद्यः, वाक्यभेदापत्तेः[103]। न द्वितीयो [104]गौरवप्रसङ्गात्। न तृतीयः, अप्राप्तस्य यागस्यानुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात्। तस्माच्चतुर्थः पक्षः परिशिष्यते। तत्र हि द्वितीयान्तस्वाहाकारशब्दः 'पौर्णमासीं यजते' इत्यादाविव कर्मनामधेयं भविष्यति। तस्मादाज्यभागादिदेवतासंस्कार उत्तमः [105]प्रयाजः। एवं च सति सौर्यादिविकृतिषूत्तमप्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरित्यागो बाधविचारान्तर्गतस्याधिकरणस्य फलं भविष्यति। यत्तु पञ्चमाध्याये प्रयाजानामनुष्ठानक्रमे, पाठक्रमः प्रमाणमिति चिन्तितं तदस्माभिः " इषे त्वोर्जे त्वा " ( तैसं १·१·१ ), " यज्ञस्य घोषदसि " ( तैसं १·१·२ ) इत्यनयोरनुवाकयोः पौर्वापर्ये पाठ एव प्रमाणमित्यभिप्रेत्य तत्रैवोदाहृतम्॥

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

" न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा न चाङ्गता।
प्रक्रियाया [106]समानत्वान्नैराकाङ्क्ष्येण वाक्ययोः॥
प्रयाजादेः [107]फलेऽपेक्षा कथंभावेऽपि च क्रतोः।
तेन [108]प्रकरणाम्नानं [109]तस्मादङ्गाङ्गिता तयोः " ॥ ( जैन्या ३·३·९·१० )॥

सार्धपादद्वये [110]यानि विनियोजकत्वेनोक्तानि[110] श्रुतिलिङ्गवाक्यानि तेभ्योऽतिरिक्तं प्रकरणनामकं किंचित् प्रमाणं न वेदे पश्यामः। न [111]हि [112]पदतत्सामर्थ्यान्वयैरसंस्पृष्टः कश्चिद्वेदभागः क्वचित् केनचिदाम्नायते। एकार्थवाक्यतापन्नो वाक्यसमूहः प्रकरणम् इति चेत्। न। वाक्ययोः मनोः एकार्थत्व-

98. ब– स्वाहाकारस्य। 99–99. अ.उ.जो.ना.पा.हा.हो१–मन्त्रेषु, इ–'मन्त्रे तु' नास्ति। 100. क जो.ना.हा– अग्न्यादिदेवताः। 101–101 आ.ह१– मन्त्र पठिता, उ–तन्मन्त्रः। 102. ट– °देवतामन्त्राक्षरता°। 103–103. आ.इ.उ.पा–न वाक्यभेदप्रसङ्गात्, आ.हो१ नाद्यः वाक्यभेदप्रसङ्गात्। 104. अ,आ,इ.उ.पा– गौरवापत्तेः। 105. अ.इ.उ.जो.पा.हा– 'प्रयाजः' नास्ति। 106. अ.इ.उ. जो.पा. समानत्वा°। 107. आ.क–फलापेक्षा। 108. ट– प्रकरणाम्नानात्; ह१–प्रकरणाम्नातम्। 109. अ.इ.उ.पा–तस्मात् क्रत्वङ्गता। 110–110 आ.क–विनियोजकत्वेनोक्तानि यानि, अ.इ.उ.ह१ पा.पू.– विनियोजकत्वेनोक्तानि, ड– विनियोजकत्वेनोक्तानि श्रुतिलिङ्गवाक्यानि। 111 ड–च। 112. ह१–°सामर्थ्यान्वये न समृष्टः।

वाक्यताया अभावात्। न हि– "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "समिधो यजति" इत्यनयो वाक्ययो परस्पराकाङ्क्षाऽस्ति, [113] येन वाक्यैकता [113] कल्प्येत। तस्मात् प्रयाजादीना न दर्शपूर्णमासाङ्गत्वमिति प्राप्ते ब्रूम प्रयाजादय फलहेतव, [114]पुरुषप्रवृत्तिरूपत्वात् [115]सेवादिवत्। दर्शपूर्णमासौ [116]उपकरणैरुपकार्यौ, करणत्वात्, प्रदीपोपकृतचक्षुर्वत्। तथा सति किं प्रयाजाद फल, किं वा दर्शपूर्णमासयो
५ [117]उपकरणमित्याकाङ्क्षाया सपन्न [118]वाक्यैकवाक्यतारूप प्रकरण, तेन च प्रयाजादीनामङ्गत्व प्रतीयते॥

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्–

"अभिक्राम जुहोतीति युक्त कर्त्राऽखिलस्य तत्।
किं [119]वा प्रयाजमात्रस्य कृत्स्नकर्तृयुत भवेत्॥
' प्रयाजाभिक्रमणयो क्रियात्वादुभयोरपि।
१० मिथ सबन्धराहित्यान्मैव तेऽपि समत्वत॥
कर्तृयोगाददोषश्चेत् [120] समानेय समाहिति [121]॥
तत प्रयाणसान्निध्यात् तत्कर्त्रैवास्य सयुति"॥ (जैन्या ३ १ २० २२)॥

दर्शपूर्णमासयो प्रयाजसमीपे श्रूयते– "अभिक्राम जुहोति" (तैस २ ६ १) इति। तत्र होमकाले यदेतदाहवनीयस्याऽभिमुख्येन सचरण तत् कृत्स्नदर्शपूर्णमासकर्त्रा सबध्यते। न तु प्रयाज
१५ मात्रकर्त्रा। [122]कुत ? अभिक्रमणस्य क्रियारूपस्य [123]कारकत्वाभावेन प्रयाजक्रियया [123] सबन्धासभवादिति चेत्। [124]नैवम्। क्रियारूपत्वादेव दर्शपूर्णमासक्रियया सबन्धासभवात्। अथोच्येत, अभिक्रमण कर्तृकारकेण साक्षात् सबध्यत, तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा सबध्यत इति तदेतत् समाधान प्रयाजसबन्धेऽपि समानम्। अत सनिधिबलात् प्रयाजकर्त्रा सबध्यते॥

[125]चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्–

२० "अभिघार्यं प्रयाजाना शेषेण हविरत्र किम्।
शेषधारणतत्पात्र कार्ये नो वाऽभिघारणम्॥
नान्यथा तेन ते कार्ये न कार्ये प्रतिपत्तित।
प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात्"॥ (जैन्या ४ १ २८ २९)॥

प्रकृती श्रुतं– "प्रयाजशेषेण हवींष्यभिघारयति" (हिश्री २ २ ३२) इति। तदेतत् [126]विकृता वतिदिष्टम्। विकृतयश्च वाजपेयगता पशव। ते च द्विविधा– क्रतुपशव, [127]प्राजापत्या पशवश्चेति। "आग्नेय पशुमालभेत" (तैब्रा १ ३ ४) इत्यादिना विहिता क्रतुपशव। इतरे तु– "[illegible]

---

११३–११३ इ१ गं–येनैकवाक्यता। ११४ इहो१– °प्रवृत्तिहेतुरूपत्वात्। ११५ हो१– नीयारादिवत्। ११६ अ इ उ ना पा °करणोपकार्यौ। ११७ अ इ उ पा – उपकारं कर्तुमुपकरण मित्याकाङ्क्षाया। ११८ अ इ उ पा– °वाक्यत्वरूप, जो ना हा– °वाक्यस्वरूप। ११९ हो१– तु।
३० १२० अ इ उ पा– °क्रमे। १२०–१२१ अ इ उ पा समामपि समाहित, इ१– समानेऽपि समाहित, जो गं हा– समानेय समाहित। १२२ अ इ उ जा पा हा– 'कुत' नास्ति। १२३–१२३ इ उ पा– कारकत्वाभावेन प्रयाजे क्रिया इ– कारकत्वाभावेन प्रयाजक्रियया अ– 'कारकत्वाभावेन प्रयाजक्रियया' नास्ति। १२४ अ इ उ पा– 'नैवं' नास्ति। १२५ इ– चतुर्थस्य। १२६ गं– °वतिदिष्ट अ इ उ पा– 'वतिदिष्टो। १२७ इ इ१– प्राजापत्य°।

प्राजापत्यान् पशूनालभते" ( तैब्रा १.३.४ ) इति विहिताः। ते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते। ततः सर्वेषामर्थे सकृदेव प्रयाजा अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवाऽऽलब्धव्यत्वात् [128]तदा यत्तद्धविषां[128] प्रयाजशेषेणाभिघारणं [129]निर्विघ्नमेव [130]सिध्यति। प्राजापत्यपशूनां तु पर्यग्निकरणपर्यन्तमेव तदानीमनुष्ठानम्। आलम्भस्तु माध्यन्दिने सवने, तत्कालविशेषस्य "ब्रह्मसाम्न्यालभते" (द्र. आपश्रौ १८.६.७) इति विधानात्। तेषां च [131]प्राजापत्यानां हविषामभिघारणार्थं[131] प्रातःकालीनः प्रयाजशेषो धारयितव्यः। न चात्र जुह्वां तद्धारणं संभवति। क्रतुपश्वनुष्ठाने जुह्वा व्यापृतत्वात्। अतः पात्रान्तरं संपाद्य तस्मिन्नयं शेषो धारयितव्यः। अन्यथा प्राजापत्यहविषां [132]प्रयाजशेषेणाभिघारणासिद्धेः। तस्मात् शेषधारणतत्पात्रे संपादनीये इति प्राप्ते ब्रूमः— ते [133]उभे न कर्तव्ये। कुतः? अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविःसंस्कारकत्वाभावात्। [134]न हि दृष्टेऽर्थे संभवति[134] अदृष्टोऽर्थः संस्कारः [135]कल्पयितुं युक्तः। दृष्टं च जुह्वा रिक्तीकरणम्। अन्यथा प्रयाजशेषोपेतायां जुह्वामाज्यभागार्थतया गृह्यमाणं संकीर्येत। ततो रिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषेणाभिघारणम्। अस्तु वा [136]तत्र हविःसंस्कारोऽपि। [137]तथाऽपि प्राजापत्यवपायामभिघारणं व्यर्थम्। रूक्षत्वनिवारणाय ह्यभिघार्यते। न च प्राजापत्यवपायां रूक्षताऽस्ति। ब्रह्मसाम्नैव तद्रूक्षताया निवारितत्वात्[137]। अत एव श्रूयते– "शम्या वा एतर्हि वपा [138]यर्ह्यनभिघृता [139]ब्रह्म वै[139] ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते [140]तेनाशम्यास्तेनाभिघृताः" इति। शम्या रूक्षा इत्यर्थः। तस्माच्छेषधारणतत्पात्रे न कर्तव्ये॥

तत्रैवान्यच्चिन्तितम्–

"चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम्।
[141]जुह्वामानयनीत्यौपभृतं [142]नैषा प्रयोजयेत्॥
[143]प्रयोजयेद्वृताऽऽनीतिः प्रयाजाद्यखिलार्थता।
श्रुतौपभृत [144]आज्येऽतो जौहवेन विकल्पनात्॥
[145]न प्रयोजकता[145] नैवं त्रितयार्थं हि जौहवम्।
अतिहायेड इत्युक्तेश्चतुर्थे सा प्रयोजयेत्"॥ ( जैन्या ४.१.३०-३२ )॥

दर्शपूर्णमासयोः श्रूयते– "अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम्" इति। [146]अस्यायमर्थः– पञ्चानां प्रयाजानां मध्ये तृतीयः प्रयाज इड्शब्देन बहुवचनान्तेनाभिधीयते। तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामके चतुर्थे प्रयाजे होतुमुपभृत्संज्ञकायां स्रुचि स्थितं [147]घृतं जुह्वामानेतव्यमिति[146]। तदेतदानयनमुपभृत्याज्यग्रहणस्य[148] न प्रयोजकम्। तथा हि– जुहूपभृद्ध्रुवासु तिसृषु स्रुक्ष्वाज्यग्रहणप्रकारस्त्रिर्नियोगश्चैवमाम्नायते– "चतुर्जुह्वां गृह्णाति। अष्टावुपभृति। चतुर्ध्रुवायाम्।

१२८. आ.क.ड.ढ– तदीयहविषा। १२९. अ.इ.उ.बो.पा.हा– संस्कारार्थत्वं। १३०. ड– 'सिध्यति' नास्ति। १३१–१३१. अ.आ.उ.पा–प्राजापत्यपशूनाभि°; बो.ना.हा–प्राजापत्यपशूना हवि°; हो१– प्राजापत्यानामभि°; ड–प्राजापत्यानामभिघारणार्थः; इ–'प्राजा ... धारणार्थं' नास्ति। १३२. गं– प्रयाजशेषाभि°। १३३. अ.इ.उ.पा– इह। १३४–१३४. क.ड.ड१– दृष्टे प्रतिपादने सति, गं.हो१– दृष्टप्रतिपादने सति। १३५. क.ड.ड१.हो१– 'कल्पयितुं' नास्ति। १३६. अ.इ.उ.ढ.पा.हो१– अत्र। १३७–१३७. अ.इ.उ.पा– तथाऽपि...निवारितत्वात्' नास्ति, ड– प्राजापत्यवपाया अभिघारण रूक्षत्व°। १३८.अ.इ.उ.बो.पा.हा–यर्ह्यन(?)भिघृता। १३९–१३९. ड१– ब्रह्मैव। १४०. अ.इ.उ.बो.ना.पा– तेन शम्या°; ड– ते सा शम्या°। १४१. ड.हो१– °मानयत्यर्थोप°। १४२. बो.हा– नैन। १४३. हा– प्रयोजयेन् या नीतिः, ड.हो१–प्रयोजयेदुपानीतिः। १४४. क.बो.ना.हा– आज्येन। १४५–१४५. हा– नाप्रयो°। १४६–१४६. अ.इ.पा हो१– 'अस्यायमर्थः ... नेतव्यमिति' नास्ति। १४७. बो.ना. हा–'घृतं' नास्ति। १४८. अ इ उ बो.ना.पा.हा– °त्याज्यस्य ग्रहणस्य।

यज्जुह्वा गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति प्रयाजानूयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्" (तैब्रा ३ ३ ५) इति। तत्र जौहवं केवलं प्रयाजार्थम् [149]औपभृतं तु प्रयाजानूयाजार्थमिति प्रयाजेषु जौहवम् औपभृतं चोभयं [150]विकल्पते। तथा सति यदा जौहवेन प्रयाजा इज्यन्ते तदानीमौपभृतस्याऽऽनयनमेव नास्ति कुत आनयनस्य प्रयोजकत्वम्। यदा त्वौपभृतेन प्रयाजहोमस्तदानीम्

५ औपभृतस्यार्धं [151]प्रयाजार्थमितरदनूयाजार्थम्। तयोः [152]प्रयाजसाधनमर्धं प्रथमप्रयाजकाल एव जुह्वामानीतम् इति न तस्य चतुर्थप्रयाजं प्रति समानयनं विधीयते। [153]यत्त्वनूयाजार्थमितरदर्धमुपभृत्यवशिष्टं तन्मध्ये किंचिच्चतुर्थप्रयाजं प्रति समानेतव्यम्। तच्चानूयाजैरेव प्रयुक्तमिति न तस्याऽऽनयनं प्रयोजकमिति प्राप्ते ब्रूमः – यज्जौहवं तत् प्रयाजनियतार्थं यदौपभृतं तदेवावशिष्टप्रयाजद्वयार्थमनूयाजार्थं चेत्येव वाक्यद्वयस्य व्यवस्थायां [154]सम्भवन्त्यामष्टदोषग्रस्तो विकल्पो नाऽऽश्रयितुं शक्यः। यदा जौहवस्वीकारस्तदानीम्

१० [155]औपभृतवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वीक्रियेत पुनरपि कदाचिदौपभृतस्वीकारे त्यक्तं प्रामाण्यं स्वीक्रियेत, स्वीकृतमप्रामाण्यं [156]परित्यज्येतेत्यौपभृतवाक्ये चत्वारो दोषाः। जौहववाक्येऽप्येवं चत्वार इत्यष्टौ दोषाः। यथोक्तव्यवस्था [157]च "अतिहायेड" इति वाक्यादवसीयते। तथा सत्यौपभृतस्यानूयाजा यथा प्रयोजकास्तथैव [158]चतुर्थपञ्चमप्रयाजनिष्पादकम् आनयनमपि प्रयोजकमेव ॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्–

१५ "प्रयाजानूयाजसिद्ध्यै पात्रैक्यमुत भिन्नता।

एकोपभृद्द्वयोरर्थे [159]दृष्टान्तो विकृतौ तथा ॥

विकृतौ [160]पात्रभेदोऽस्तु [161]शुद्धाज्यपृषदाज्ययोः।

[162]एकपात्रे ग्रहाशक्तेर्द्रव्यैक्यं [162]प्रकृतौ द्वयोः" ॥ (जैन्या ५ २ १३ १४) ॥

अग्नीषोमीयपशौ प्रयाजानूयाजसाधनं द्रव्यं [163]धारयितुमेकमेव पात्रं कर्तव्यम्। कुतः? प्रकृतौ

२० युभयार्थस्याऽऽज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशादिति प्राप्ते ब्रूमः – प्रकृतिवत् [164]केवलेन आज्येन [164] प्रयाजा इज्यन्ते। अनूयाजास्तु पृषदाज्येन यष्टव्याः। "पृषदाज्येनानूयाजान् यजति" इति तद्विधानात्। पृषदाज्यं नाम दधिमिश्रमाज्यम्। नहि शुद्धमिश्रयोरेकेन पात्रेण धारणं सम्भवति। तस्मात् पृथक्पात्रम् ॥

यत् तु [165]चतुर्थस्य प्रथमपादे (जैन्या ४ १ ३३-३४) चिन्तितं–जुह्वामाज्यग्रहणं प्रयाजार्थम्

२५ उपभृत्याज्यग्रहणमनूयाजार्थं चेति, [166]यदप्यन्यत् तत्रैव[166] चिन्तितम्– उपभृति [167]चतुर्गृहीतद्वयादष्टसंख्येति (जैन्या ४ १ ३५ ३६) [168]तदुभयमस्माभिराज्यग्रहणविधायके "प्रत्युष्टं रक्षः" (तैसं १ १ १०) इत्यनुवाके प्रदर्शितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥

३० १४९ ड– उपभृति। १५० क ङ१ गृ हो१–विकल्प्यते। १५१ ङ१ – पञ्चमप्रया°। १५२ अ इ उ पा– °साधनत्वमर्थे, जो हा– °साधनत्वमर्थं। १५३ अ उ जो पा हा– °मितरदर्धं ॥ परिशिष्टं, ङ–°मितरदर्धे तु परिशिष्टं, ना– °मितरदर्धमुपभृतिपरिशिष्टं। १५४ अ आ उ ड जो ना पा– °दोषदुष्टो,। १५५ जो ना हा– °वाक्यं°। १५६ क जो ना हा– त्यजेतेत्यौ°। १५७, हा– वा। १५८ आ हा– चतुर्थोत्तम°। १५९ अ इ उ क ड पा– दृष्टान्तो, हो१–दृष्टान्तौ। १६० अ इ उ पा– °भेदस्तु, ङ ङ१–

३५ भेदास्तु। १६१ ड हो१–सिद्धाज्य°। १६२–१६२ इ उ जो पा हा – एकपात्रग्रहेऽशक्ते°, ङ१– एकपात्रग्रहाशक्ति° ड–एकपात्रे ग्रहेऽशक्ते°। १६३ अ उ पा–पूरयितुमेकमेव, ङ–पूरयितुमेव। १६४–१६४ आ– केवलाज्येन। १६५ ङ ङ१– चतुर्थाध्यायस्य। १६६–१६६ हो१–यदन्यत् तत्रैव, आ क– यदप्यत्रैव। अ इ उ जो पा हा – यदप्यन्यत्रैव, ना – यदप्यन्यत्रैवं, ङ१ – यत्त्वप्यन्यत्रैव। १६७ अ इ उ जो पा– चतुर्गृहीतद्वयादष्टसंख्येति, हो१–चतुर्गृहीतद्वयादष्टसंख्येति। १६८ ड– °ग्रहणप्रतिपादके।

आद्यानुवाके विस्पष्टं प्रयाजाः पञ्च वर्णिताः ।
अनुवाके द्वितीयेऽस्मिन् वक्तव्यावाज्यभागकौ ॥

[1]तन्मन्त्रास्तन्मन्त्रकाण्डे ( तैब्रा ३·५·६ ) समाम्नाताः ॥

कल्पः– "यदा जानात्यग्नयेऽनुब्रूहीति तदाऽऽग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्यामन्वाहाग्निर्वृत्राणि जङ्घनदिति पौर्णमास्यामग्निः प्रत्नेन जन्मनेत्यमावास्यायां यदा जानात्यग्निं यजेति तज्जुषाणेन यजति जुषाणो अग्निराज्यस्य वेत्विति यदा जानाति [2]सोमायानुब्रूहीति तत्सोमस्य पुरोनुवाक्यामन्वाह त्वꣳ सोमासि सत्पतिरिति पौर्णमास्यां सोम गीर्भिष्ट्वा वयमित्यमावास्यायां यदा जानाति सोमं यजेति [3]तज्जुषाणेनैव यजति जुषाणः सोम आज्यस्य हविषो वेत्विति" ( द्र. आपश्रौ १·५·२९ ) इति ॥

तत्र प्रथमस्याऽऽग्नेयस्य पाठस्तु– "अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु" ( तैब्रा ३·५·६ ) इति । अयमग्निरस्माननुगृह्णात्विति शेषः । कीदृशोऽग्निः ? वृत्राणि कर्मानुष्ठाननिवारकाणि पापानि जङ्घनदतिशयेन [4]हतवान् । विपन्यया विशिष्टया अस्मत्कृतया स्तुत्या द्रविणस्युरस्मदर्थं द्रविणेच्छुः समिद्धः सम्यक् [5]ज्वालितः शुक्रः शोचमान आहुतः समन्तादस्माभिराकारितोऽनेनाऽऽज्येनाऽऽहुतो वा । जुषाणः प्रीयमाणोऽयमग्निराज्यस्य वेतु [6]अस्माभिः दत्तमिदमाज्यमश्नातु ॥

प्रथमस्य सौम्यस्य पाठस्तु– "त्वꣳ सोमासि सत्पतिः । त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणः सोम आज्यस्य हविषो वेतु" ( तैब्रा ३·५·६ ) इति ॥ हे सोम, त्वं सतां [7]सम्यगनुष्ठितानां कर्मणां पतिरसि । किं च, त्वं राजासि दीप्तिमान्, अपि च [8]"त्वं वृत्रहा"[8] पापघाती । किं च, त्वं भद्रः फलप्रदत्वेन [9]मङ्गलः क्रतुरसि, तस्य क्रतोः निष्पादकत्वात् । तादृशः सोमः [10]प्रीयमाणः इदमाज्य हविरश्नातु ॥

द्वितीयस्याग्नेयस्य पाठस्तु– "अग्निः प्रत्नेन जन्मना । शुम्भानस्तनुवꣳ स्वाम् । कविर्विप्रेण वावृधे । जुषाणो अग्निराज्यस्य वेतु" ( तैब्रा ३·५·६ ) इति । अयमग्निः प्रत्नेन पुरातनेन स्वजन्मना स्वां तनुं स्वकीयां तनुं शुम्भानः [11]शोभयन् कविर्विपश्चित् पण्डितः पराभिप्रायज्ञः विप्रेण [12]ऋत्विजा कृतां[12] स्तुतिं ज्ञात्वा वावृधे वृद्धिं प्राप्तः । [13]सोऽयमग्निरिदमाज्यमश्नातु ॥

द्वितीयस्य सौम्यस्य पाठस्तु– "सोम गीर्भिष्ट्वा वयम् । वर्धयामो वचोविदः । सुमृडीको न आविश । जुषाणः सोम आज्यस्य हविषो वेतु" ( तैब्रा ३·५·६ ) इति । हे सोम, वचोविदो वाक्यतात्पर्याभिज्ञा वयं गीर्भिः स्तुतिरूपाभिर्वाग्भिः वर्धयामः । त्वं तु सुमृडीकः सम्यक् सुखयन् नः अस्माना-विश । तादृशः सोम आज्यं हविरश्नातु ॥

---

१. ड,ड१– तन्मन्त्रास्तु मन्त्र° । २. अ,इ,उ,पा– सोमस्यानु° । ३. अ,इ,उ,नो,पा,हा– जुषाणे° । ४. अ,इ,उ,नो,पा,ना,हा– हतवान् । ५. ड,ड१,हो१– प्रज्वालितः । ६. ड१,ग्रं,हो१– अस्मद्° । ७. आ,क–सन्दिरनु°; हो१– सम्यगनुष्ठानानाम् । ८–८. आ,क– 'त्वं वृत्रहा' नास्ति । ९. आ,क– मङ्गलरूपः । १०. आ,क– 'प्रीयमाणः' नास्ति । ११. आ,क– शोधयन् । १२–१२. हो१– द्विजकृता । १३. आ,क– जुषाण इत्यादि पूर्ववत्; ड१– सोऽयमाज्यमश्नातु ।

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी प्रबाहुग्जुहोति तस्मात् प्रबाहुक् चक्षुषी देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै

५ चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । आज्यभागावित्याज्य - भागौ । यत् । आज्यभागावित्याज्य - भागौ । यजति । चक्षुषी इति । एव । तत् । यज्ञस्य । प्रतीति । दधाति । पूर्वार्ध इति पूर्व - अर्धे । जुहोति । तस्मात् । पूर्वार्ध इति पूर्व - अर्धे । चक्षुषी इति । प्रबाहुगिति प्र - बाहुक् । जुहोति । तस्मात् । प्रबाहुगिति प्र - बाहुक् । चक्षुषी इति । देवलोकमिति देव - लोकम् । वै । अग्निना । यजमान । अन्विति । पश्यति । पितृलोकमिति पितृ - लोकम् । सोमेन ।
१० उत्तरार्ध इत्युत्तर - अर्धे । अग्नये । जुहोति । दक्षिणार्ध इति दक्षिण - अर्धे । सोमाय । एवम् । इव । हि । इमौ । लोकौ । अनयोः । लोकयोः । अनुख्यात्या इत्यनु - ख्यात्यै ।

---

चक्षुषी वा इत्यादि ॥ आज्यभागयोर्विधिः । [1]आज्य भागो[1] ययोः तौ [V]आज्यभागौ अग्नीषोमीयौ तयोश्चक्षु स्थानीययो यागेन [V]यज्ञस्य [V]चक्षुषी [V]प्रतिदधाति प्रतिमुखं स्थापयति ॥ प्रबाहुगिति ॥ देशत [2]प्रमाणतश्च सममित्यर्थ ॥

१५ देवलोक वा इत्यादि ॥ गतम् । अनुक्रमेण ख्यानमनुख्याति । "सादौ च" ( पा ६·२·५० ) इति गते प्रकृतिस्वरत्वम् ॥

---

चक्षुषी इति ॥ मन्त्रकाण्डोक्तैस्तैरेतैः साध्यावाज्यभागौ विधत्ते– 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति' इति ॥ याजमानब्राह्मणे "अग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान्" ( तर्स १·६·११ ) इति [14]श्रुतत्वात् आज्यभागयोर्यज्ञचक्षुष्ट्वम् ॥

१० पूर्वार्धे इति ॥ आहवनीयस्य [15]पूर्वार्धभागं होमदेशत्वेन विधत्ते– 'पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी' इति ॥ लोकेऽपि शिरसः पूर्वभागे चक्षुषी तिष्ठतो न तु पृष्ठभागे ॥

प्रबाहुगिति ॥ उभयोराहुत्योः [16]पङ्क्तिवक्रत्वं परिमाणवैषम्यं च वारयितुं साम्यं विधत्ते– 'प्रबाहुग् जुहोति तस्मात् प्रबाहुक् चक्षुषी' इति ॥ प्रबाहुक् समं यथा भवति तथा जुहुयात् इत्यर्थः ॥

देवलोकमिति ॥ एकस्यां पङ्क्तावुत्तरदक्षिणदेशं क्रमेण विधत्ते– 'देवलोकं वा अग्निना
१५ यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै' इति ॥ देवलोक उत्तरदेशस्थः, पितृलोको दक्षिणदेशस्थः । अतस्तथाविधेन होमेन तयोरनुख्यातिरभिज्ञानं भवति ॥

---

१–१. तै१.मै– आज्यं भागम् ; ले.हो– आज्यभागो । २. मै–प्रमाणतश्च ते ।

१४ आ.क– उपनाम् । १५. क.ख.ट१.शे.हो१– पूर्वभागम् । १६. आ.हो– पङ्क्तिरूपत्वम् ।

**राजा॑नौ॒ वा ए॒तौ दे॒वता॑नां॒ ( १ ) यद॒ग्नीषोमा॑वन्त॒रा दे॒वता॑ इज्ये॑ते दे॒वता॑नां॒ विधृ॑त्यै॒ तस्मा॒द्राज्ञा॑ मनु॒ष्या॑ विधृ॑ता ब्रह्मवा॒दिनो॑ वदन्ति॒ किं त॒द्यज्ञे यज॑मानः कुरु॒ते येना॒न्यतो॑दतश्च प॒शून् दा॒धारो॑भ॒यतो॑द॒तश्चेत्यृच॑मनू॒च्याऽऽज्य॑भागस्य जुषा॒णेन॑ यजति॒**

राजा॑नौ। वै। ए॒तौ। दे॒वता॑नाम् ( १ )। यत्। अ॒ग्नीषोमा॑वित्य॒ग्नी-सोमौ॑। अ॒न्त॒रा। दे॒वता॑। इ॒ज्येते॒ इति॑। दे॒वता॑नाम्। विधृ॑त्या॒ इति॒ वि धृ॒त्यै॒। तस्मा॑त्। राज्ञा॑। म॒नु॒ष्या॑। विधृ॑ता॒ इति॒ वि धृ॒ता॒। ब्र॒ह्म॒वा॒दिन॒ इति॑ ब्रह्म वा॒दिनः॑। व॒द॒न्ति॒। किम्। तत्। य॒ज्ञे। यज॑मानः। कु॒रु॒ते॒। येन॑। अ॒न्यतो॑दत॒ इत्य॒न्यतः॑ - द॒तः॒। च॒। प॒शून्। दा॒धार॑। उ॒भ॒यतो॑दत॒ इत्यु॑भ॒यतः॑ - द॒तः॒। च॒। इति॑। ऋच॑म्। अ॒नू॒च्येत्य॑नु - उ॒च्य॑। आज्य॑भाग॒स्येत्याज्य॑ - भा॒ग॒स्य॒। जु॒षा॒णेन॑। य॒ज॒ति॒।

राजानावित्यादि ॥ देवाना मध्ये राजनशीलौ। अन्तरेति। देवाना मध्ये [1]इज्येते। "अन्तरान्तरेण" (पा २ ३ ४) इति द्वितीया। प्रयाजप्रधानदेवतापेक्षमन्तरात्वमेतयो ॥

ब्रह्मवादिन इत्यादि ॥ अन्यतरपार्श्वस्थदन्ता अश्वादय । "छन्दसि च" (पा ७ ४ १४२) इति वर्तमाने। 'दाधार' इति छान्दसो लिट् तुजादित्वादभ्यासस्य दीर्घत्वम् (पा ६ १ ७)। ऋचमिति। "अग्निर्वृत्राणि" (तैब्रा ३ ५ ६) इत्यादिका पुरोनुवाक्याम्। जुषाणेनेति। "जुषाणो अग्निराज्यस्य" (तैब्रा ३ ५ ६) इत्यादियजुषा याज्यया। ऋचमिति। "अग्निर्मूर्धा" (तैब्रा ३ ५ ७) इत्यादिका पुरोनुवाक्याम्। ऋचेति। "भुवो यज्ञस्य" (तैब्रा ३ ५ ७) इत्यादिकया याज्यया ॥

राजानावित्येति ॥ उभयोराज्यभागयोर्मध्यदेश [17]प्रधानयागस्थानत्वेन विधत्ते– 'राजानौ वा एतौ देवताना यदग्नीषोमावन्तरा देवता इज्येते देवताना विधृत्यै तस्माद्राज्ञा मनुष्या विधृता' इति ॥ इज्येते इत्यत्र [18]बहुवचनस्य व्यत्ययो द्रष्टव्य । प्रधानदेवता हि तयोर्मध्य इज्यन्त। अत एवाऽऽथर्वणिका आमनन्ति– "यदा लेलायते [19]हविः समिद्धे हव्यवाहने। तदाज्यभागावन्तरेणाऽऽहुती प्रतिपादयेत्" (मुउ १ २ २) इति। एव च सत्युभयतोऽवस्थिताभ्या राजभ्या मध्येऽवस्थिता प्रधानदेवता [20]विशेषेण धृता भवन्ति [21]। अथवाऽत्र देवताशब्देन [21]अवान्तरदेवता विवक्षिता। ता अन्तरेण तासा मध्ये राजानावग्नीषोमाविज्येते। ताश्च देवता [22]परितोऽवस्थिता [23]भृत्यवदतौ राजानौ विशेषेण धारयन्ति। अथवा राजभ्या ताभ्यामन्या देवता जीवितप्रदानेनैव पोषिता भवन्ति। यस्मादेव तस्माल्लोकेऽपि मनुष्या सर्वे राज्ञा विधृता [24]वर्तन्ते ॥

ब्रह्मवादिन इति ॥ इत्थमाज्यभागौ निरूप्य तदीये याज्यानुवाक्ये उपरितनस्याऽऽग्नेयस्य प्रधानस्य हविषो याज्यानुवाक्ये च क्रमेण विधत्ते 'ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमान कुरुते

१ ल हो–प्रयाजदेवता°।

१७ अ इ उ जो ना पा हा – प्रधानस्थानत्वेन। १८ ड ह१ ग – बहुवचनत्वेन व्यत्ययो। १९ अ इ उ जो पा हा– हवि । २०–२० अ उ जो पा हा– विधृता भवन्ति विशेषेणेति भा– भवन्ति विशेषेणेति। २१ क ड १ ना हा१– अवान्तर°। २२ अ इ उ जो ना पा– परितो वर्तन्ते। २३ अ इ उ ड ह१ जो पा ग्र हा हो१–सत्यकभृत्य°, क सत्यभृत्य°। २४ ड१– वर्तन्ता।

तेनान्यतोदतो दाधारर्चमनूच्य हविषं ऋचा यजति तेनोभयतोदतो दाधार मूर्धन्वती पुरोऽनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति (२) नियुत्वत्या यजति भ्रातृव्यस्यैव पशून् नि युवते

तेन । अन्यतोदत इत्यन्यतः - दतः । दाधार । ऋचम् । अनूच्येत्यनु - उच्य । हविषं । ऋचा । ५ यजति । तेन । उभयतोदत इत्युभयतः - दतः । दाधार । मूर्धन्वतीति मूर्धन् - वती । पुरोनुवाक्येति पुरः– अनुवाक्या । भवति । मूर्धानम् । एव । एनम् । समानानाम् । करोति (२) । नियुत्वत्येति नि - युत्वत्या । यजति भ्रातृव्यस्य । एव । पशून् । नीति । युवते ।

मूर्धन्वतीति ॥ मूर्धशब्दयुक्ता पुरोऋक् । "ह्रस्वनुड्भ्याम्°" (पा ६.१.१७६) इति मतुप उदात्तत्वम् ॥

१० नियुत्वत्येति ॥ नियुच्छब्दवत्या । "तसौ मत्वर्थे" (पा १.४.१९) इति भत्वम् । नि युवत इति । भ्रातृव्य नितरां पृथक्करोति । यौते व्यत्ययेन श, आत्मनेपद च ॥

येनान्यतोदतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार' इति ॥ अन्यतोऽधोभाग एव दन्ता येषा [25]गवादीना तेऽन्यतोदतः, एतान् पशून् येन[25] यज्ञाङ्गेन यजमानो दाधार प्राप्नोति तद्यज्ञाङ्ग किं नाम १५ यजमानः कुरुते । उभयत [26]ऊर्ध्वाधोभागयोर्दन्ता येषामश्वादीनां त उभयतोदत(न्त)स्तान् येन प्राप्नोति तदपि किम् ? इत्येवं ब्रह्मवादिषु [27]कैश्चिदनभिज्ञैः पृष्टाः इतरेऽभिज्ञा.[27] उत्तरमवदन् । आज्यभागस्य होमकाले पुरोनुवाक्यारूपेण काचिदृचं पठित्वा याज्यारूपेण जुषाण इत्यादियजुषा यागं करोति । तेनाधोभागे सपूर्णाया ऋचः पाठेन अधोभागस्थदन्तयुक्तान् [28]पशूनाप्नोति । [29]प्रधानस्याऽऽग्नेयस्य हविषो होमे पुरोनुवाक्यामप्यृचमेव पठित्वा याज्ययाऽप्यृचैव [30]यजति । [31]तेनाधऊर्ध्वभाविन्योः [32]ऋचोः सपूर्णत्वेन २० भागद्वयेऽपि दन्तयुक्तानश्वादीन् प्राप्नोति तत्राऽऽज्यभागविषया पुरोनुवाक्या यजुश्चेत्युभयं [33]पूर्वमेवोदाहृतं व्याख्यातं च । आग्नेयविषये च याज्यानुवाक्ये वक्ष्येते । तस्मादीदृशमेवोभयत्र [34]कर्तव्यम् इति विधिः पर्यवस्यति ॥

मूर्धन्वतीति ॥ [35]आग्नेययागस्य याज्यानुवाक्ये सामान्येन [36]विधाय विशेषाकारेण[36] विधत्ते– 'मूर्धन्वती पुरोनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति । नियुत्वत्या यजति भ्रातृव्यस्यैव पशून्नि २५ युवते' इति ॥ मूर्धन्छब्दो यस्यामृच्यस्ति सा 'मूर्धन्वती, तया 'समानानां मध्ये यजमानं 'मूर्धानं मूर्धवद्दुत्कृष्टं 'करोति । नियुच्छब्दो यस्यामृच्यस्ति सा नियुत्वती, तया [37]वैरिणां 'पशून् नितरां वि योजयति ।

२५–२५. आ.क– ते गवादयोऽन्यतोदतस्तान् पशून् येन, ग– गवादीना तेऽन्यतोदत तान् पशूनेव, ड१– गवादीना तेऽन्यतोदन्ताः तान् पशून् । २६. आ.क–ऊर्ध्वाधरयोः । २७–२७. आ.क– एके विज्ञाः पृष्टाः । इतरे विज्ञाः । २८. ड१– पशून् प्राप्नोति । २९. ड१– प्रधानस्य त्वाग्ने°; ग– ३० प्रधानस्य त्वग्न्याग्ने° । ३०. अ ड.उ.जो.ना.पा.ग– यजते, हो१–यजेत । ३१. अ.आ.ड.उ.जो.पा हा– °ऽध्यंभागयोः, क ना– °ऊर्ध्वभागयो. । ३२. हा.– ऋचोः । ३३. आ.क–पूर्वमेवोक्तं । ३४. आ.क –कर्तव्यमिति । ३५. ड ड१–आग्नेयस्य यागस्य । ३६–३६. अ.ड.जो.पा.हा–विधिविशेषाकारेण । ३७ ड– वैरिण° ।

केशिनं ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शक्करीं श्वो यज्ञे प्रयोक्तासे

केशिनम्। ह। दार्भ्यम्। केशी। सात्यकामिरिति सात्यं कामि। उवाच।
सप्तपदामिति सप्त-पदाम्। ते। शाकरीम्। श्व। यज्ञे। प्रयोक्तास इति प्र यात्कासे।

केशिनमित्यादि॥ दर्भस्यापत्य केशिनामान सत्यकामस्यापत्य केशिनामा [1]उवाच। दर्भशब्दात गर्गादियत्र (पा ४ १ १०५) उदात्तनिवृत्तिस्वरेण उदात्तत्वम्। [2]सप्तपदामिति। त्रिपदा पुरोनुवाक्या चतुष्पदा [3]याज्या त्रिष्टुप। अनयो समष्टि सप्तपदा। [4]शक्वरी सर्वार्थसाधनभूता वक्ष्यमाणवीर्यवती तत्र [5]यज्ञे [6]श्व [47]प्रयोक्तासे। तया महावीर्या सा ज्ञातव्येति विशेषमभिधित्सु सात्यकामिरुवाचेति। "न लुट्" (पा ८ १ २९) इति ५

एते याज्यानुवाक्ये मन्त्रकाण्डे (तैब्रा ३ ५ ७) समाम्नाते। तयोर्विनियोग बौधायनो दर्शयति- "अथ हविषामग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयस्य पुरोडाशस्य" इति॥ १०

तत्र प्रथमाया पाठस्तु- "अग्निर्मूर्धा दिव ककुत्। पति पृथिव्या अयम्। अपां रेतांसि जिन्वति" (तैब्रा ३ ५ ७) इति। अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा द्युलोकस्य शिर स्थानीय, पृथिव्या [38]पतिर्वाहपाकादिकारित्वेन पालकोऽप्यय, किं चापां रेतांसि उदककार्याणि स्थावरजङ्गमात्मकानि शरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति॥

द्वितीयस्या पाठस्तु- "भुवो यज्ञस्य रजसश्च नेता। यत्रा नियुद्भि सचसे शिवाभि। दिवि मूर्धान दधिषे सुवर्षाम्। जिह्वामग्ने चकृषे हव्यवाहम्" (तैब्रा ३ ५ ७) इति। अयमग्निर्भूलोकस्य तत्रानुष्ठेयस्य यज्ञस्य तस्मिन् यज्ञे प्रवर्तकस्य रजोगुणस्य च नेता [39]निर्वाहक। तादृश हेऽग्ने, यत्र यस्या दिवि सूर्यरूपो भूत्वा [40-40]नियुद्भी रथे नितरा योज्यमानाभि [41]शिवाभिरुत्तमाभिरश्वजातिभि सचसे समवैषि [42]तस्या दिवि मूर्धान शिरोवदुन्नतस्थितिं दधिषे धारयसि। कीदृश मूर्धानम्? सुवर्षा सुव [43]स्वर्गलोके [44]स्यति सर्वदा तिष्ठतीति सुवर्षास्त सुवर्षां, [45]सोमपाशब्दवत् [46]पुल्लिङ्गोऽयम्। हेऽग्ने, त्वमस्मिन् यज्ञे हव्यवाह हविष प्रापिका जिह्वा ज्वाला चकृषे करोषि॥ २०

केशिनमिति॥ तदिद याज्यानुवाक्यायुगलमनेनप्रकारेण प्रशंसति- 'केशिनं ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शाक्करीं श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान् भ्रातृव्यान् नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति' इति॥ दर्भनामक पुत्र कश्चित् केशी, [47]सत्यकामस्य पुत्रोऽपर केशी, तयो 'दार्भ्यं प्रति २५

४ तरे ल ह्रो- 'सप्तपदामिति' इत्यस्यानन्तरं 'त्रिष्टुप्'। ५ ल ह्रो- इति। ६ ल- प्रवर्गे योक्ता।

३८ अ आ उ ह ओ पा हा- °दाहकारित्वेन। ३९ आ हा- प्रवर्तको निर्वाहक। ४०-४० अ इ उ ओ ना पा हा- नियुद्भिरश्वैर्नितरा ह हो१- नियुद्भिर्नितराम्। ४१ अ इ उ ओ पा हा- शिवाभिरश्वजातिभिरुत्तमाभि। ४२ क- तस्मात्। ४३ ह ह१- स्वर्गे। ४४ ह- अवस्यति। ४५. ३० आ क सोमपावत्। ४६ आ क ह१- पुल्लिङ्गोऽयं शब्द। ४७ अ आ इ उ ओ पा- सत्यकाम°।

यस्यै वीर्येण प्र जातान् भ्रातृव्यान् नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयो-र्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति जातानेव भ्रातृव्यान् प्र णुदत

---

यस्यै। वीर्येण। प्रेति। जातान्। भ्रातृव्यान्। नुदते। प्रतीति। जनिष्यमाणान्। यस्यै।
५ वीर्येण। उभयोः। लोकयोः। ज्योतिः। धत्ते। यस्यै। वीर्येण। पूर्वार्धेनेति पूर्व अर्धेन।
अनड्वान्। भुनक्ति। जघनार्धेनेति जघन अर्धेन। धेनुः। इति। पुरस्ताल्लक्ष्मेति पुरस्तात् लक्ष्मा।
पुरोनुवाक्येति पुरः – अनुवाक्या। भवति। जातान्। एव। भ्रातृव्यान्। प्रेति। नुदते।

---

निघाताभाव। वीर्यफलानि स्वयमेव इदानीं दर्शयति– 'यस्यै' इत्यादि। पुरोनुवाक्या प्राधान्याज्जातानां शत्रूणां प्रतिनोद उत्पत्तिनिरोध। उभयोरिति। अस्मिंश्चामुष्मिंश्च पूर्वोत्तर
१० भागादुभयो। पूर्वार्धेनेति। [v]अनड्वान् वाहनादिना पूर्वार्धेन प्रजा [v]भुनक्ति रक्षति। [v]धेनु क्षीरस्रवणादिना [v]जघनार्धेन प्रजा भुनक्ति। पूर्वोत्तरत्वात् अनयो ॥

अथेदानीं स्वयमेव वीर्यविशेषमनयोर्दर्शयितुमाह– 'पुरस्ताल्लक्ष्मा' इति॥ लक्षण षष्ठ्यदेवतानामधेयम्। पूर्वस्मिन्नर्धर्चे लक्ष्म यस्या सा तथोक्ता। यथा– "अग्निर्मूर्धा"

---

[१]सायणानि मूले–हे दार्भ्य, [२]प्र [३]प्रयोक्ष्यमाणे [४]ते स्वकीये [५]यज्ञे सप्तभि [६]पादैरुपेता शक्वरीछन्दस्का त्वं
१५ [४८]प्रयोक्ष्यस। सा च [४९]जगत्यन्तवीर्यवती। "अग्निर्मूर्धा" इत्यादयस्त्रय पादा। "भुवो यज्ञस्य" इत्यादय चत्वार पादा। तदुभयं मिलित्वा सप्तपदा शक्वरी भवति। शक्तिरस्या अस्तीति शक्वरी। [५०]सा च शक्तिरेव द्रष्टव्या[५१] यस्या शक्वर्या सामर्थ्येन पूर्वमुत्पन्नान् भ्रातृव्यान् [७]प्रणुदते निराकरोति। [८]जनिष्यमाणान् च यथा [५२]नोत्पत्स्यन्ते [५३]तथा [५४]प्रतिनुदते प्रतिबध्नातीत्यर्थ [५५]। किं च, तदीयेन [९]वीर्येण [५६]भूर्लोकस्वर्गलोकयो [५७]ज्योतिरत्वर्यं पुरुष [१०]धत्ते। किं च तदीयेन [११]वीर्येण बलीवर्दो शकटशकट
२० वाहिना स्कन्धरूपेण पूर्वभागेन स्वामिन पालयति। [१२]धेनु च क्षीरप्रदेणोधसाऽपरभागेन(ण) स्वामिन पालयति, तथाविधेयं शक्वरी॥

पुरस्ताल्लक्ष्मेति॥ याज्यानुवाक्ययोर्लक्षणं दर्शयति– 'पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जातानेव भ्रातृव्यान् प्र णुदत उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रति नुदते' इति॥ मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म, [५८]तद्यस्यामृचि पूर्वार्धे विद्यते सा [१३]पुरोनुवाक्या। तन्नाम [५९]यस्याम्
२५ उत्तरार्धे [६०]विद्यते सा [१४]याज्या। तद्यथा– 'अग्निर्मूर्धा' इति पूर्वार्धेऽग्निशब्द। "जिह्वामग्ने चकृषे हव्य

---

४८ आ क – प्रयोज्यमाने। ४९. आ क – पदैरु°। ५० अ इ उ ड जो पा हा हो र– प्रयोज्यसे (!)। ५१. ड ड१ ग्र–अत्यन्त°, अ इ उ जो ना पा हा–शक्त तवार्थवती। ५२–५° जो हा–शक्तिरेव वैरिणो, ड ड१ ग्र–शक्तिरेव द्रष्टव्या। ५३–५३ ड–नोत्पत्तिस्तथा प्रतिबध्नाति। ५४ आ हा–तथा करोति। ५५. ड१ हो र– 'प्रतिनुदते' नास्ति। ५६ ना – °स्वर्लोकयो, ड१ – भूर्लोकस्वयो।
३० ५७ अ इ ट ओ ना पा हा– ज्योतिरुत्कर्षता। ५८ ड– 'तत्' नास्ति। ५९. ड ड१– यस्यामृचि। ६०. ड– 'विद्यो' नास्ति।

उपरिष्टाल्लक्ष्मा (३) याज्या जनिष्यमाणानेव प्रति नुदते पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ ५

उपरिष्टाल्लक्ष्मेत्युपरिष्टात्-लक्ष्मा (३)। याज्या। जनिष्यमाणान्। एव। प्रतीति। नुदते। पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा। पुरोनुवाक्येति पुरः–अनुवाक्या। भवति। अस्मिन्। एव। लोके। ज्योतिः। धत्ते। उपरिष्टाल्लक्ष्मेत्युपरिष्टात् लक्ष्मा। याज्या। अमुष्मिन्। एव। लोके। ज्योतिः। धत्ते। ज्योतिष्मन्तौ। अस्मै। इमौ। लोकौ। भवतः। यः। एवम्। वेद। पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा। पुरोनुवाक्येति पुरः–अनुवाक्या। भवति। तस्मात्। पूर्वार्धेनेति पूर्व-अर्धेन। १० अनड्वान्। भुनक्ति। उपरिष्टाल्लक्ष्मेत्युपरिष्टात् लक्ष्मा। याज्या। तस्मात्। जघनार्धेनेति जघन–अर्धेन। धेनुः। यः। एवम्। वेद। भुङ्क्ते। एनम्। एतौ।

(तैब्रा ३·५·७) इत्यादि। उत्तरस्मिन् अर्धर्चे लक्ष्मवती उपरिष्टाल्लक्ष्मा, यथा– "जिह्वामग्ने चकृषे" (तैब्रा ३·५·७) इति। उभयत्रापि "मन" (पा ४·१·११) इति डीप्प्रतिषेधः। गतमन्यत्॥ १५

अस्मा इति॥ यजमानार्थं, य एवं वेद तस्मै च इमौ लोकौ ज्योतिष्मन्तौ भवतः। भुङ्क्त इति। एनवेदितारम् एतौ अनड्वान् धेनुश्च भुङ्क्त, यथायथ सरक्षत। एष च एषा च एतौ। "पुमान् स्त्रिया" (पा १·२·६७) इति पुंसः शेष.॥

वाहम्" इत्युत्तरार्धेऽग्निशब्द.। पूर्वार्धगतेन लक्षणेन "पूर्वोत्पन्नभ्रातृव्यान् निराकरोति"। उत्तरार्धगतेन लक्ष्मणा जनिष्यमाणवैरिप्रतिबन्ध.॥ २०

पुरस्ताल्लक्ष्मेति॥ तदेव पूर्वोत्तरार्धगतं लक्ष्मद्वयमनूद्य पुनरपि द्वेधा प्रशंसति– 'पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ' इति॥ अस्य लोकस्य पूर्वभावित्वात् पूर्वभाविना "लक्ष्मणा "ज्योतिः भवति। स्वर्गस्य उपरिवर्तित्वात् उपरिवर्तिना लक्ष्मणा ज्योतिः। २५

७–७. ल– 'उभयत्रापि मन इति' नास्ति। ८ लं हो– उक्त। ९–९ हो– एवंवेदितारौ।

६१–६१. क ड ड१.हो१– "भ्रातृव्यनिराकरणम्। ६२ आ हा– लक्षणेन।

वज्र आज्यं वज्र आज्यभागौ ( ४ ) वज्रो वषट्कारस्त्रिवृतमेव वज्रं५ संभृत्य भ्रातृव्याय प्र हरत्यछंम्बट्कारमपगूर्य वषट् करोति स्तृत्यै गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद

५ वज्रं । आज्यम् । वज्रं । आज्यभागावित्याज्य भागौ (४) । वज्रं । वषट्कार इति वषट् कार । त्रिवृतमिति त्रि वृतम् । एव । वज्रम् । सम्भृत्येति सं भृत्य । भ्रातृव्याय । प्रेति । हरति । अछंम्बट्कारमित्यछंम्बट् कारम् । अपगूर्येत्यप गूर्य । वषट् । करोति । स्तृत्यै । गायत्री । पुरोनुवाक्येति पुरः अनुवाक्या । भवति । त्रिष्टुक् । याज्या । ब्रह्मन् । एव । क्षत्रम् । अन्वारम्भयतीत्यनु-आरम्भयति । तस्मात् । ब्राह्मण । मुख्य । मुख्यं । भवति । य । एवम् । वेद ।

१० वज्र आज्यमित्यादि ॥ "त्रिगुणेनैव वज्रेण" भ्रातृव्यस्य रक्षःप्रभृते प्रहरण यज्ञस्य अछंम्बट्कारायानार्तत्वाय भवाति । "ये यजामहे" ( तैस १ ६ ११ ) इत्यपगूरणयुक्तो वषट् कारश्च भ्रातृव्याणा "स्तृत्यै छादनाय "विनाशाय भवति । हस्वात घात्वन्तर द्रष्टव्यम् ॥

ब्रह्मन्नेवेति ॥ गायत्र्या प्राथम्यात् त्रिष्टुभश्च चरमभावात् गायत्रत्रैष्टुभयोर्ब्रह्मक्षत्रयो प्राधान्य "गुणभावश्च भवति" । "एव वेदिता च "मुख्य "भवति ॥

१५ वेदितुरपि सदैव फलम् । एवमनडुहो "धेन्वाश्च पूर्वोत्तरार्धसाम्य योज्यम्" । एतत्योभयस्य वेदितारम् "एतो "धेन्वनड्वाहौ स्वस्वोपकारेण पालयत ॥

वज्रेति ॥ अथ याज्यान्ते "प्रयोज्यस्य "वषट्कारस्य विधिमर्थवादेनोन्नयति- 'वज्र आज्य वज्र आज्यभागौ वज्रो वषट्कारस्त्रिवृतमेव वज्रं५ सम्भृत्य भ्रातृव्याय ॥ हरत्यछम्बट्कारम्' इति ॥ तानूनप्त्र ब्राह्मणे - "घृत ( खलु ) वै देवा वज्र कृत्वा सोममघ्नन्' ( तैस ६ २ २ ) इत्युक्तत्वादाज्यस्य

२० वज्रत्वम् ॥ "वृत्राणि जङ्घनत्" ( तैमा ३ ५ ६ ) इति मन्त्राम्नानादाज्यभागयोर्वज्रत्वम् । "वषट् कारो वै गायत्रियै शिरोऽच्छिनत्" ( तैस २ १ ७ ) इत्युक्तत्वात् वषट्कारस्य वज्रत्वम् । तदेतत्त्रयम् आज्यभागाख्यकर्मणि मिलित्वा त्रिगुणो वज्र सपद्यते । तादृशेन भ्रातृव्यस्य प्रहरणे सति "छम्बटकार वैयर्थ्यं तस्य प्रहारस्य न भवति ॥

अपगूर्येति ॥ "तस्य वषट्कारस्योच्चध्वनिं विधत्ते- 'अपगूर्य वषट् करोति स्तृत्यै' इति ॥

२५ 'अपगूर्य उच्चैर्ध्वनिं कृत्वेत्यर्थः ॥ स च ध्वनिर्भ्रातृव्यस्य हिंसायै सपद्यते । अयं च वषट्कारविधिराप्रेयादि याज्यास्वपि समानो द्रष्टव्य । "वषट्कारोऽन्त्य सर्वत्र" ( आश्वश्रौ १ ५ ५ ) इत्याश्वलायनवचनात् ॥

१०-१० ल- त्रिगुणे(!)वज्र°, हो- त्रिगुणे वज्र° । ११ ल- 'विनाशाय' नास्ति ।
१२-१२. तं मे ले हो- गुणभाव च करोति ।

६३-६३ बो हा- धेन्वोश्च साम्य य , ना- धेन्वोश्च साम्य योज्य, अ उ-धेन्वोश्च य , इ पा-
३० धेन्वोश्च स्याम्यपो य , ड- एवं न तु ॥ धेन्वा च पूर्वोत्तरार्धसाम्य योज्यम् । ६४ आ क- धेन्वादुहो ।
६५. ट योक्तव्यस्य, टा -प्रयोक्तव्यस्य । ६६ आ ना पा हा-अर्धवषट्कारस्य, इ- अर्ध वषट्कारस्य ।
६७ आ क बो हा हो।- वषट्कारेण, अ न पा- वषट्कारे । ६८ क- 'तस्य' नास्ति ।

प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेणैवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति (५) वषट्कारेण स्थापयति

प्रेति । एव । एनम् । पुरोनुवाक्ययेति पुरः–अनुवाक्यया । आह । प्रेति । नयति । याज्यया । गमयति । वषट्कारेणेति वषट्–कारेण । एति । एव । एनम् । पुरोनुवाक्ययेति पुरः–अनुवाक्यया । दत्ते । प्रेति । यच्छति । याज्यया । प्रतीति (५) । ५
वषट्कारेणेति वषट्–कारेण । स्थापयति ।

प्रैवैनमित्यादि ॥ एनं यजमानं पुरोनुवाक्यया प्राह हविर्व्याजेन यजमानमेव प्रह्वं करोति प्रणीति, याज्यया एनं प्रणयति प्रकृष्टफलं प्रापयितुं नयति, वषट्कारेण तत्फलं गमयति प्रापयतीति ॥

अथान्यथा रूपयति – एवैनमिति ॥ पुरोनुवाक्यया एनम् आदत्ते देवेषु १० स्थापयितुं गृह्णाति । याज्यया देवेभ्यः प्र यच्छति । वषट्कारेण देवेषु स्थापयतीति ॥

गायत्रीति ॥ पुनरप्याग्नेयस्य याज्यानुवाक्ये छन्दोद्वारा प्रशंसति– 'गायत्री पुरोनुवाक्या भवति । त्रिष्टुब्याज्या ब्रह्मणैव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यः' इति ॥ "अग्निर्मूर्धा" इति गायत्री । सा च ब्राह्मणेन सहोत्पन्नत्वात् ब्रह्मस्वरूपा । "भुवो यज्ञस्य" इति त्रिष्टुप् । सा च क्षत्रेण सहोत्पन्नत्वात् क्षत्ररूपा । तथा सति गायत्रीत्रिष्टुभोः पौर्वापर्येण ब्राह्मणम् अनु पश्चात् क्षत्रिय १५ प्रवर्तितवान् भवति । यस्माद्ब्राह्मणः पूर्वं प्रवृत्तः तस्मात् मुख्यः भवति । मुखे भवतीति व्युत्पत्तेः ॥

मुख्य इति ॥ तद्वेदनं प्रशंसति– 'मुख्यो भवति य एवं वेद' इति ॥

प्रेति ॥ पुनरपि पुरोनुवाक्यादित्रयं प्रदेयदेवतासमीपप्रापणद्वारेण प्रशंसति– 'प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेण' इति ॥ पुरोनुवाक्यापाठेन हविषो दातारम् एनं यजमानं देवानामग्रे प्रकर्षेण कथितवान् भवति । याज्यया तं मार्गेण नयति । वषट्कारेण २० देवान् प्रापयति ॥

एति ॥ पुनरपि तस्य प्रापितस्य यजमानस्य प्रतिष्ठापनद्वारेण प्रशंसति– 'एवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति वषट्कारेण स्थापयति' इति ॥ एनं यजमानं त्रिभिर्मन्त्रैः क्रमात् हस्तेन गृहीत्वा देवेभ्यः प्रदाय तत्रोपवेशयति ॥

६२ मै४ ल हो–एवम् । २५

६९. ड१–पुनराग्नेयस्य । ७०. ड ड१– छन्दोद्वारेण । ७१ ड ड१– क्षत्रस्वरूपा । ७२–७२ ड– मुखे । ७३. आ क– क्षत्रिय । ७४–७४ ड१– मुखे भव इति व्युत्पत्या मुख्य । ७५–७५. आ क एव ।

त्रिपदा पुरोनुवाक्या भवति त्रयं इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनवं रुन्द्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रति तिष्ठति गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एवं वेद शक्नोत्येव ( ६ ) यच्छिक्षति ॥२॥

५ [ दुरुत्ताना करोत्युपरिष्टाल्लक्ष्माऽऽज्यभागो प्रति शक्नोत्येव द्वे च । ]

त्रिपदेति त्रि पदा । पुरोनुवाक्येति पुर –अनुवाक्या । भवति । त्रयं । इमे । लोका । एषु । एव । लोकेषु । प्रतीति । तिष्ठति । चतुष्पदेति चतु पदा । याज्या । चतुष्पद इति चतु पद । एव । पशून् । अवेति । रुन्द्धे । द्व्यक्षर इति द्वि अक्षर । वषट्कार इति वषट् कार । द्विपादिति द्वि - पात् । यजमान । पशुषु । एव । उपरिष्टात् । प्रतीति । तिष्ठति । गायत्री । पुरोनुवाक्येति
१० पुर – अनुवाक्या । भवति । त्रिष्टुक् । याज्या । एषा । वै । सप्तपदेति सप्त पदा । शक्वरी । यत् । वै । एतया । देवा । अशिक्षन् । तत् । अशक्नुवन् । य । एवम् । वेद । शक्नोति । एव । यत् । शिक्षति ॥ २ ॥

[ मैस ४ १० १,३, काम २० १५, शब्रा १ ६ ३, ७ २ ]

यथे[ त्रिपदे ]त्यादि ॥ गतम् ॥

१५ [77]एतयेति ॥ गायत्रीत्रिष्टुप्समष्टिरूपया यत् [78]कर्तुमच्छन् [79]तत् [79]अशक्नुवन् एव [79]देवा । [79]एव वेदिताऽपि [79]यत् च कार्यमिच्छति तत् [79]शक्नोति एव साधयितुम् । शके "सनि मीमा" ( पा ७ ४ ५४ ) इत्यादिना इस् अभ्यासलोपश्च ॥

इति द्वितीये षष्ठे द्वितीयोऽनुवाक ॥

त्रिपदेति ॥ पादसंख्यामक्षरसंख्या च प्रशंसति– 'त्रिपदा पुरोनुवाक्या भवति त्रय इमे लोका
२० एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमान पशुष्वेवोपरिष्टात् प्रति तिष्ठति' इति ॥ पशुषु प्राप्तेषु सत्सु पश्चादेव ब्राह्मणभोजनादौ क्षीरादिक दातु तत्पदद्वयो द्वाभ्या पादाभ्या [76] स्थिरस्तिष्ठति ॥

गायत्रीति ॥ पूर्वमुक्त 'सप्तपदा ते शक्वरीम्' इति, तत्र पादोदाहरणेन प्रशंसति– 'गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एव वेद
२५ शक्नोत्येव यच्छिक्षति' इति ॥ [77]देवा यत्कार्यमुद्दिश्य [78]अशिक्षन् शक्ता भवामेत्यैच्छन् । यद्वा–[79]परम्पराय कार्यं कर्तुमिच्छन् [illegible] एतया शक्वर्या [79] ते तत्कार्यं कर्तुं शक्ता अभवन् । एतद्वेदिताऽपि [80]यत्कार्यं कर्तुं [illegible] [80] [81]तस्मिन् कार्ये[80] [81]शक्तो भवत्येव[81] ॥

१४ [illegible] । १५ [illegible]

७६ ट – [illegible] । ७७ – आ क ट१ – परम्परामिद । ७८ ट ट१ – 'ते'
३० [illegible] । ७९–७९ हो१ – यत्कार्यंनिमिच्छत, ट१२ – यत्कार्यमुद्दिश्य [illegible], ट – यत्कार्यं [illegible] । ८०–८० आ क – यत्कार्ये । ८१–८१ ट – [illegible] ।

तदेवमाग्नेयस्य याज्यापुरोनुवाक्ययोर्विधानेन लक्षणेन प्रशंसया च प्राजापत्योपांशुयाजादीनां याज्यानुवाक्या सर्वा मन्त्रकाण्डाम्नाता [83]व्याख्याता द्रष्टव्या । [84]ता वयम् आम्नातक्रमेण [85] उदाहृत्याक्षरार्थं वर्णयाम ॥

कल्प – "प्रजापते स वेदेति यस्य प्राजापत्य उपांशुयाजो भवति" इति । पाठस्तु– "प्रजापते न त्वदेतान्यन्य । विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । वय॰ स्याम पतयो रयीणाम् । स वेद पुत्र पितरं स मातरम् । स सूनुर्भुवत् स भुवत् पुनर्मघ । स द्यामौर्णोदन्तरिक्ष॰ स सुव । स विश्वा भुवो अभवत् स आऽभवत्" (तैब्रा ३ ५ ७) इति । हे प्रजापते, त्वदन्य कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परि बभूव [86]परिभवितु [87]न समर्थोऽभूत् [88]। परिभव सृष्टेरप्युपलक्षणम् । सृष्टिसंहारयोरशक्त इत्यर्थ । अतस्ते वय यत्कामा जुहुमस्तत्फलम् [89]अस्माकमस्तु । वय [90]धनपतय स्याम । "द्यौ पिता । पृथिवी माता । प्रजापतिर्बन्धु" (तैब्रा ३ ७ ५) इति मन्त्रवर्णाद्ब्रह्माण्डमध्ये [91]सत्यलोके वर्तमानस्य प्रजापतेरण्डस्योपरितन [92]कपाल द्यौ पिता । अधस्तनकपालरूपा पृथिवी माता । स पुत्र प्रजापतिस्त पितर ता च मातर वेत्ति । अभिज्ञ स प्रजापति [93]सूनुर्भवति, [94]तयोर्मातापित्रो पुत्रो भवति । अत एव [95]तयोर्वेदन [96]एतस्योपपन्नमेव । मघशब्दो धनवाची । पुन पुनर्यजमानाय दातव्य धन यस्य [97]असौ पुनर्मघ । [98]तादृशोऽय प्रजापति भुवद्भवति । किं च स प्रजापति [99]सर्वव्यापि विराड्रूप सन् द्याम् उपरितनकपालमौर्णोदाच्छादितवान् । [100]तथाऽन्तरिक्ष स्वर्ग च स और्णोत् । किं च स [101]एव विश्वा भुव इम लोकमारभ्याधस्तना पूर्वा भूमीरभवत् [102]प्राप्तवान् आच्छादितवानित्यर्थ । किं च सत्यलोके समागत्य चतुर्मुखत्वेन रूपान्तरेण [103]परिमितोऽभवत् ॥

कल्प – "[104]तथाऽग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयस्य पुरोडाशस्य" इति । पाठस्तु– "अग्नीषोमा सवेदसा । सहूती वनत गिर । स देवत्रा बभूवथु । युवमेतानि दिवि रोचनानि । अग्निश्च सोम सक्रतू अधत्तम् । युव॰ सिन्धूरभिशस्तेरवद्यात् । अग्नीषोमावमुञ्चत गृभीतान्" (तैब्रा ३ ५ ७) इति । हेऽग्नीषोमौ, गिरोऽस्मदीया स्तुतीर्वनत भजतम् । कीदृशौ ? सवेदसा समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ, देवत्रा देवेषु मध्ये सबभूवथु । युवा सभूयैव स्थितौ न कदाचिदप्यन्योन्यवियुक्तावित्यर्थ । हे सोम, त्वमग्निश्चेत्येतौ युवा सक्रतू समानसङ्कल्पौ सन्तौ दिव्येतानि रोचनानि नक्षत्राण्यधत्तमस्थापयतम् । हऽग्नीषोमौ, युवा गृहीतान् सिन्धून् [105]वृत्रवधादिनिमित्तेन अपूतत्वापवादेन पङ्कादिरूपेणावद्येन दोषेण च गृहीता सर्वा नदीरभिशस्तेस्तस्मादपवादादवद्यात् [106]पङ्कादिदुष्टदोषाच्च अमुञ्चत मोचितवन्तौ । यद्यप्येतत् सर्वमीश्वरकृत तथाऽपि [107]तद्रूपत्वेनैतौ स्तूयेते ॥

---

८२ ड – तमाख्याता । ८३-८३ अ इ उ जो पा हा – अस्मदीयक्रमेण आ क हो१ – ता स्वयमाम्नातक्रमेण, गृ – तान् स्वय क्रमेण । ८४ अ इ उ जो ना पा हा – परिभावितु । ८५ ड ड१ – समर्थो नाऽभूत् । ८६ अ इ उ जो ना पा हा – अविकृतमस्तु । ८७ ड ड१ गृ – धनानां पतय । ८८ आ क – सत्यगेके । ८९ ड ड१ – कपालरूपा । ९० ड१ – सूनुर्भुवत् । ९१ अ इ उ पा – यो° । ९२ ड – तयोर्धन । ९३ आ क – तस्यो°, ड ड१ – °पपन्नम् । ९४ आ क – स । ९५ अ इ उ जो ना पा हा – तादृशो य । ९६ अ इ उ जो पा हा – सवव्यापि । ९७ ड१ – तदा । ९८ ड१ – प्राप्नोत् । ९९ क – आ परितो°, हा – आ परिमितो° । १०० गृ – अथा° । १०१ ड – 'एव' नास्ति । १०२ हो१ – नद्यादकादि° । १०३ हो१ – °दिदोषदुष्टाच्च°, ड ड१ गृ – °दिदृष्टदोषाच्च । १०४ गृ – °त्वेन तौ ।

कल्पः– " इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य " इति ॥ पाठस्तु– " इन्द्राग्नी रोचना दिवः। परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम्। श्नथद्वृत्रमुत सनोति वाजम्। इन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरेः। सहस्तमा सहसा वाजयन्ता " ( तैब्रा ३·५·७ ) इति। हे इन्द्राग्नी, दिवस्परि [105]स्वर्गस्योपरि रोचना दीप्यमानौ युवां वाजेषु यजमानसंबन्धिष्वन्नेषु
५ निमित्तभूतेषु भूषथो दातारौ भवितुमिच्छथः। तत् [106]भवदीयं [107]बुभूषत्वं वां युवयोर्वीर्यं सामर्थ्यं प्रचेति प्रचेतयति प्रकर्षेण ज्ञापयतीत्यर्थः। ' इन्द्रा यो अग्नी ' ( तैब्रा ३·५·७ ) इत्यत्र समस्तं पदं विच्छिद्य मध्ये ' यः ' इति [108]पदमाम्नातम्। तथा [109]सति हे इन्द्राग्नीति संबोधनं [110]द्रष्टव्यम्। यो यजमानो वृत्रं विरोधिनं [111]पाप्मानं श्नथितिरावरोति, उत [112]अपि च[113] वाजं हविर्लक्षणमन्नं सनोति ददाति, [113]हुरिः कौटिल्यं, तेन सह वर्तमानौ सहुरी[113], यजमानस्य श्रद्धाराहित्यादिच्छिद्रान्वेषणेन कुटिलावपि युवां
१० [114]सपर्यात् अप्रमत्तो[114] यो यजमानः परिचरति, तादृशं यजमानं [115]युवाम् अनुगृह्णीतमिति शेषः। कीदृशौ युवाम्? इरज्यन्ता अनुग्रहेण [116]भक्तचित्तं [117]रञ्जयन्तौ, भूरेर्बहुलस्य वसव्यस्य धनसमूहस्य, दाताराविति शेषः। सहस्तमा अतिशयेन सहिष्णू। सहसा बलवन्तौ। वाजयन्ता वाजं हविर्लक्षणमन्नं यन्तौ प्राप्नुवन्तौ।

कल्पः– " एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूत शत्रूनित्यैन्द्रस्य यद्यैन्द्रं सांनाय्यम् " इति ॥
१५ पाठस्तु– " एन्द्र सानसिं रयिम्। सजित्वानं सदासहम्। वर्षिष्ठमूतये भर। प्रससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राऽऽभर दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनाम् " ( तैब्रा ३·५·७ ) इति। हे इन्द्र, रयिं धनमूतये [118]अस्मद्रक्षणार्थम् [119]आभर आनय[119]। कीदृशं धनम्? सानसिं मनसो दानस्य संबन्धिनं बहुभ्यो दातुं पर्याप्तमित्यर्थः। सजित्वानं जित्वभिः [120]जयशीलैः पुत्रादिभिरुपेतम्। सदासहं सर्वदा विरोधिनां सोढारं [121]तत्तिरस्कारक्षममित्यर्थः। वर्षिष्ठमतिशयेन प्रवृद्धम्।
२० हे पुरुहूत, पुरुषु बहुषु यज्ञेष्वाहूयमान, शत्रून् प्रकर्षेण ससाहिषे सर्वदा सहसे [122]तिरस्कुरुषे इत्यर्थः। ते शुष्मो ज्येष्ठस्तव बलं [123]प्रशस्तमित्यर्थः। इहास्मिन् कर्मणि रातिरस्तु फलदानमस्तु। हे इन्द्र, दक्षिणेन हस्तेन वसूनि धनानि [124]आभर समानय। [125]सिन्धूनां समुद्रसमानानां रेवतीनां [126]धनवतीनां प्रजानां पतिरसि ॥

कल्पः–" यद्यु वै माहेन्द्रं महाँ इन्द्रो य ओजसा महाँ इन्द्रो नृवदा चर्षणिप्रा इति
२५ माहेन्द्रस्य " इति। पाठस्तु– " महाँ इन्द्रो य ओजसा। पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य

१०५. अ.इ.उ.पा– विश्वस्योपरि। १०६. आ.क.इ– तदीयं। १०७. अ.इ.उ.जो.ना.पा.हा– विभूषत्वं। १०८. इ–एतत्पद°; इ१– एवमा°। १०९. आ– च। ११०. आ.क– 'द्रष्टव्यम्' नास्ति। १११. इ१–पाप्मम्। ११२–११२. आ.क– 'अपि च' नास्ति। ११३. आ.हा– सहुरी कौटिल्येन सह विद्यमानौ हुरिः कौटिल्यं, क– हुरि...सह विद्यमानौ सहुरी। ११४–११४. हो१– सपर्यात्
३० समन्तात्; अ.इ.उ.जो.ना.पा.हा– सपर्यादपि च अप्रमत्तो। ११५. आ.क– युवामेव। ११६. इ.इ१– भक्तिचित्त। ११७. अ.इ.उ.जो.पा.हा.हो१– रक्षयन्तौ। ११८. इ.इ१– अस्मद्रक्षार्थम्। ११९–११९. आ.क– आभराऽऽहराऽऽनय। १२०. ना– जयनशीलैः। १२१. आ– तिरस्कार°। १२२. इ.इ१.पं हो१– तिरस्करोषि। १२३. इ.इ१.हो१ – 'इत्यर्थः' नास्ति। १२४. इ – आहर। १२५. आ.क – सिन्धूना धनवाहिनीनाम्। १२६. आ.क. धनवतीना।

वावृधे। महाꣳ इन्द्रो नृवदा चर्षणिप्राः। उत द्विबर्हा अमिनः सहोभिः। अस्मद्रियग्वावृधे वीर्याय। उरुः पृथुः सुकृतः कर्तृभिर्भूत्" (तैब्रा ३ ५ ७) इति। वृष्टिमान् पर्जन्य इव ■ इन्द्र ओजसा बलेन महान् सः इन्द्रो वत्सस्थानीयस्य यजमानस्य स्तोमैः [127]स्तोत्रैर्वावृधे वर्धताम्। अथ महानिन्द्रो नृवत् मनुष्यवत् आ चर्षणिप्राः, चर्षणीन् मनुष्यान् प्रति [128]तदभीष्टभोगैः पूरयतीति [129]चर्षणिप्राः। यथा राजामात्यादिमनुष्य सेवकानभीष्टभोगैरापूरयति तद्वत्। अपि च अयं द्वयोः प्रकृतिविकृतिरूपयोर्यागयोः [130]वर्हा [131]वृद्धिर्यस्येति द्विबर्हाः। अमिनः उपमारहितः [132]सहोभिर्युक्तो [133]बलवान्। अस्मद्रियगस्मत्सदृशो वावृधे वृद्धिं प्राप्तः। यथा वयमस्यानुग्रहाद्वृद्धिं प्राप्तास्तथाऽयमप्यस्मदीयैर्हविर्भिः [134]विवृद्धः। एवदेव प्रवक्ष्यत वीर्याय सामर्थ्यसिद्धये। कर्तृभिर्यजमानैरस्य सुकृतोऽभूत् सुष्ठु वर्धितोऽभूत्। कीदृशी तस्याभिवृद्धिः? उरुर्वंशसा विपुलः। पृथुर्वंशेन [135]विस्तीर्णः॥

कल्पः – "अथ स्विष्टकृत पिप्रीहि देवानिति पुरोनुवाक्यामनूच्य ये यजामहेऽग्निꣳ [136]स्विष्टकृतमयाडग्निरग्नेरित्युपरया [137]यथादेवत निगदमुक्त्वा जातवेदा जुषताꣳ हविरिति [138]यद्य विश्वो अध्वर स्येत्यृचमनूच्य [139]यजति" (आपश्रौ ३ १२ ५) इति। तत्र पुरोनुवाक्याया पाठस्तु– "पिप्रीहि देवाꣳ उशतो यविष्ठ। विद्वाꣳ ऋतूꣳरृतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने। त्वꣳ होतॄणामस्याऽऽयजिष्ठः" (तैब्रा ३ ५ ७) इति। [140]हे यविष्ठ युवतम [141]अग्ने, उशतः कामयमानान् देवान् पिप्रीहि अतिशयेन प्रीणय। हे ऋतुपते सूर्यात्मना कालपरिपालकाग्ने, त्वमृतून् यागकालविशेषान् विद्वान् जानन् वर्तसे। तस्मादिहोचिते काले यज। देवेषु भवा ये दैव्या ऋत्विजः सन्ति, "अग्निर्होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत्" (तैब्रा ३ ५) इत्यादिनाऽऽम्नातास्तेभिः दैव्यैः सह त्वमस्य यजमानस्य सम्बन्धिनां होतॄणामृत्विजां मध्ये आयजिष्ठः सर्वतो यष्टृतमोऽसि॥

निगदपाठस्तु– "अग्निꣳ स्विष्टकृतम्। अयाडग्निरग्ने प्रिया धामानि। अयाट् सोमस्य प्रिया धामानि। अयाडग्ने प्रिया धामानि। अयाट् प्रजापतेः प्रिया धामानि। अयाडग्नीषोमयोः प्रिया धामानि। अयाडिन्द्राग्नियोः प्रिया धामानि। अयाडिन्द्रस्य प्रिया धामानि। अयाण्महेन्द्रस्य प्रिया धामानि। अयाड्देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत् स्वं महिमानम्। आयजतामेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः" (तैब्रा ३ ५ ७) इति॥ स्विष्टकृतमग्निम्। 'ये यजामहे' इति शेषः पूरणीयः। ये वयं होतारः स्मस्ते वयं स्विष्टकृतमग्निं यजामहे। प्रथमाज्यभागदेवस्याग्नेर्यानि प्रियस्थानानि तेषु सर्वेषु तैस्महोतृरूपोऽग्निरयाट् इष्टवान्। एवम् 'अयाट् सोमस्य' इत्यादिषु।

---

१२७ ह१– 'स्तोत्रैः' नास्ति। १२८ आ– तदभीष्टदानैर्भोगैः। १२९ ह– 'चर्षणिप्राः' नास्ति। १३० ह– 'वर्हा' नास्ति। १३१ ह– विवृद्धिः। १३२– ड ड१ शृ हो१– सहोभिर्नैर्युक्तः। १३३ ■ ड१– 'बलवान्' नास्ति। १३४ ड– वृद्धः। १३५ ड ड१ हो१– वेस्तृतः। १३६ क ड शृ हो१– °ग्नेरिति, ड१– °मयाडग्निरिति। १३७ आ हा– यथादेवत। १३८–१३८ ड१ शृ–यद्वेत्यृच सप्ताय। १३९ आ– हेऽग्ने। १४० आ– 'अग्ने' नास्ति। १४१ ड ड१ शृ हो१– कालविशेषान्।

योज्यम्। देवानामानुपूर्वी चाऽऽवाहननिगदवद्व्याख्येया। होतुरग्नेर्होमस्य स्विष्टकृत्त्वसंपादकस्याग्ने [142]प्रिया धामानि यानि सन्ति तानि दैव्यो होता यक्षद्यजतु। उक्तानां सर्वेषां देवानां स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता [143]यक्षद्यजतु। आयजतामाभिमुख्येन यागं कुर्वतां यजमानानामेज्या आभिमुख्येन यष्टव्या इष अभीष्टा या देवताः सन्ति ताः सर्वा अध्वरा अस्मिन् यज्ञे स जातवेदाः स्विष्टकृत्
५ सोऽग्निः कृणोतु स्विष्टाः करोतु। तदर्थमयं स्विष्टकृदग्निरिदं हविः जुषताम्॥

याज्यायाः पाठस्तु–'अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य' (तैब्रा ३ ५ ७) इति। स्विष्टकृदग्ने विशः प्रविष्टस्यानुष्ठितस्याध्वरस्य संबन्धि यद्धविरस्ति तदद्य वे, [144]वेरित्यशनार्थं, अशानं भक्षय। होतर्होमकर्त पावक शोधक शोच दीप्यमान। तान्येतान्यग्निविशेषणानि। हि [145]यस्मात् त्वं यज्वा यागस्य कर्ता तस्मात्
१० ऋता ऋते असदीये यज्ञे महिना महिम्ना देवान् यजासि प्रीणयसि। यद्यस्मात् कारणाद्विभूर्विशिष्टो भवसि तस्मात् कारणात् हे यविष्ठ युवतम, अद्य ते तव या हव्या यानि हव्यान्यस्माभिर्दीयन्त तानि सर्वाणि वह स्वीकुरु॥

[146] ता एता [146] उदाहृता सर्वा याज्यानुवाक्या [147]आग्नेययाज्यालक्षणाद्विकथनादेव [148] अव गन्तुं शक्या [148] इति मत्वा ब्राह्मणेन न पृथग्व्याख्याताः॥

१५ अत्र मीमांसा॥ दशमाध्यायस्य प्रथमपादे चिन्तितम्

"[149] आज्यभागो य आग्नेय किं मुख्याग्ने स [149] संस्कृति।
आराद्दुतोपकारी स्यात् पूर्वन्यायेन संस्कृति॥
निगदेऽग्नेर्द्विरुक्तत्वात् [150] विधायैकपदोक्तितः।
उपकारी [151]तत्र सोऽग्नि सौर्यादौ न निवर्तते'॥ (जैन्या १० १ १५ १६)॥

२० दर्शपूर्णमासयो [152]आम्नायते–'आज्यभागावग्नीषोमाभ्यां यजति' इति। तयो प्रथम आग्नेयो द्वितीय सौम्य। तत्र सौम्यस्य नास्ति संदेह। प्रधानदेवतासु [153]केवलस्य सोमस्य अभावात्। अग्निस्तु केवल [154]आग्नेयपुरोडाशे विद्यते। तस्मादाग्नेय आज्यभाग पुरोडाशदेवताया अग्ने [155]किं संस्कार, उत इष्टेराराद्दुपकारक इति संदिह्यते। तत्र [156]प्रथोत्तमप्रयाजो मन्त्रोक्तानां वक्ष्यमाणदेवताना

---

१४२ आ–प्रिय°। १४३ हा–यष्टयजन्तु। १४४ अ आ इ ङ ह१ पा भ्ह हो१–'वेरित्य
२५ शनार्थे' नास्ति। १४५ क ना ओ हा–यस्मात् कारणात्। १४६–१४६ आ क–सन्ता। १४७ आ क ङ–°याज्यानुवाक्यादि°। १४८–१४८ आ क–अवगन्तव्या। १४९–१४९. [illegible] पा–आज्यभागो य आग्नेय किमु लक्षणस्याग्नेः उ–आज्यभागे य आग्नेय लक्षणस्याग्ने, अ–आज्यभागे य आग्नेय लक्षणस्याग्ने [illegible]। १५०. अ ङ उ पा–दृष्टावैक°। १५१ अ ङ उ पा हो१–तेन। १५२ आ क श्रूयते। १५३ हा–केवल°। १५४ अ ङ पा–आग्नेयेन पुरोडाशेन। १५५ अ ङ उ ओ ना
३० पा हा–'किं' नास्ति। १५६ अ उ पा–उत्तमप्रयाज° ङ–प्रथमोत्तमप्रयाज°।

संस्कारस्तथा प्रथमाज्यभागोऽपि 'अग्निमग्न आवह' इति [157] निगदोक्तस्य प्रधानयागदेवतारूपस्याग्ने-[157] संस्कार इति पूर्वः पक्षः। अत्रोच्यते – निगदस्त्वेवं पठ्यते – "अग्निमग्न आवह। सोममावह। अग्निमावह" (तैब्रा ३ ५ ३) इति। [158]अस्यायमर्थः – [159]इदम् आहुत्यधिकरणीभूत[159] [160]हविर्ग्राहिण [161]आज्यभागद्वयात्प्राक्प्राप्पुरोडाशदेवतारूपान् [162]अग्निं सोमोऽग्निं[162] इत्येतान्निर्देशावावहेति। तत्र [163]पुरोडाशदेवतारूपादग्ने प्रथमाज्यभागदेवतारूपोऽग्नि[164]र्भिन्न [165]इत्यवगम्यते। अन्यथाऽऽवाहस्याग्ने[166]रेकस्ये द्विरुक्तिर्व्यर्था स्यात्। अतः प्रथमाज्यभाग इज्यमानस्याग्नेः पुरोडाशदेवतात्वाभावात् तत्संस्कारत्वमयुक्तम्। किं चाऽऽज्यभागविधौ '[167]अग्नीषोमाभ्यां यजति' इति देवताद्वयं [168]समस्तेनैकेन पदेनोच्यते। तत्र यथा [169]सोमस्य यागं प्रति गुणत्वं भवताऽभ्युपगतं तथाऽग्नेरप्यभ्युपगन्तव्यम्। [170]तत्तु संस्कारपक्षे विरुद्धं, [171]संस्कार्यत्वेन प्राधान्यादङ्गत्वाभावात्। तस्मात् [172]संस्कारपक्षासंभवात् प्रथमाज्यभागो द्वितीयाज्यभागवदिष्टेरारादुपकारकः। एवं च सति सौर्ययागेऽपि[173] [174]प्रथमाज्यभागोऽग्निर्न निवर्तत इति बाधापवादो [175]निषादवद् भविष्यति॥

तत्रैव [176] चतुर्थपादे चिन्तितम्—

"अन्वाहेत्यर्थकर्म स्यात् संस्कारो [177]वाऽर्थकर्मता।
तत्कृत [178]कार्यताज्ञानात् दृष्टार्थत्वेन संस्कृतिः"॥ (जैन्या १० ४ ३२)॥

"तिष्ठन् याज्यामन्वाहाऽऽसीनः पुरोनुवाक्याम्" (द्र आपश्रौ २४ १३ १०) इति दर्शपूर्णमासयो [179]राम्नातम्। तदेतच्छ्रवणादिवदर्थकर्म स्यात्। यथा स्तौति शंसतीत्यत्र कर्तव्यताप्रतीते स्तोत्रशस्त्रयोरर्थकर्मत्वं तथाऽनुवचनस्यापि। मैवम्। [180]चोदितदेवतास्मरणसंस्कारस्य दृष्टप्रयोजनत्वात्॥ तस्मिन् सत्यदृष्टस्य कल्पयितुमशक्यत्वात्। ननु मन्त्रसामर्थ्येनैव [181]देवतास्मरणसिद्धेः 'अन्वाह' इति तद्विधानं व्यर्थम्। एवं तर्हि [182]प्राप्तमनुवचनमनूद्य 'तिष्ठन्नासीन' इति स्थानासनगुणौ [183]विधीयेयाताम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

१५७–१५७ अ इ उ पा– निगदस्य प्रधानयागत्याग्ने। १५८ ड१ तस्या°। १५९–१५९ इ ड१–आहुत्यधिकरणभूताग्ने। १६० अ इ उ पा– हविर्ग्रहणाय, जो ना हा– हविर्ग्राहिण। १६१ जो, हा– °देवतारूपिण, मृ– °देवरूपान्। १६२–१६२. हा– अग्निं सोममग्निं। १६३ अ इ उ पा– °देवताग्ने, जो ना हा– °देवतारूपाग्ने। १६४ ड१– अन्य। १६५ ड१– इति गम्यते। १६६ ड१– एकस्य। १६७. आ मृ हा– अग्नीषोमाभ्यामाज्यभागौ। १६८ ड१– "नैकैक°। १६९ अ इ उ जो पा हा– सौम्यस्य। १७० ड२– तच्च। १७१ आ क– संस्कारत्वे ड– संस्कार्यत्वे। १७२ अ इ उ पा– संस्कारत्वासंभवात्। १७३ अ जो ना पा हा– 'अपि' नास्ति। १७४ अ इ पा– °भागोऽग्निर्न, हो१– °भागे न। १७५ अ इ जो पा हा– विचारभाव। १७६ मृ– अन्यत्। १७७ इ हा हो१– नार्थ°। १७८ अ इ उ पा मृ, हो१– कार्यताभावात्, ड१– कार्यताभावात्। १७९ इ मृ– श्रुतम्। १८० अ इ उ पा– °देवतास्मरणस्य। १८१ इ– 'एव' नास्ति। १८२ आ क जो हा प्रागनु°। १८३ अ– विधीयेता इ उ जो ना पा हा– विधीयेता।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति

प्रजापतिरिति प्रजा पतिः। देवेभ्यः। यज्ञान्। व्यादिशदिति वि-आदिशत्। सः। ५ आत्मन्। आज्यम्। अधत्त। तम्। देवाः। अब्रुवन्। एषः। वाव। यज्ञः। यत्। आज्यम्। अपीति। एव। नः। अत्र। अस्तु। इति। सः। अब्रवीत्। यजान्। वः। आज्यभागाविति आज्य भागौ। उपेति। स्तृणान्। अभीति। घारयान्। इति। तस्मात्। यजन्ति। आज्यभागाविति आज्य भागौ। उपेति। स्तृणन्ति। अभीति। घारयन्ति।

प्रजापतिर्देवेभ्य इत्यादि ॥ [1]यजनसाधनानि हवींषि यज्ञा, तान् [v]देवेभ्य विभिधमादिश्य १० [v]आज्यम् आत्मन्येव [v]अधत्त, आज्यव्यतिरिक्तमेव देवेभ्यो ददौ। [1]त [v]देवा प्रजापतिम् [v]अब्रुवन् [v]आज्यम् एव यज्ञसाधनं, तस्मात् [v]अत्र आज्ये अस्माकमपि भागित्वमस्तु [v]एव। यद्वा-अत्रापि भागित्वमस्माकम् [v]अस्तु [1]इति। तत प्रजापति आज्यभागौ उपस्तरणाभिघारणे च देवेभ्यो दत्वा अन्यत् सर्वमात्मार्थं धृतवानिति। सनैव ल्ट्यथाडागम। तस्मादित्यादि। देवाना तृप्त्यर्थम् ॥

आज्यभागौ च याज्यानुवाक्या उक्ता द्वितीयके ॥

१५ तृतीयानुवाके प्रधानभूत आग्नेयपुरोडाशो [1]विधातव्य।

प्रजापतिरिति ॥ तत्राऽऽदौ तावदुपस्तरणाभिघारणे विधत्ते- 'प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन्नाज्यमधत्त त देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति' इति। तथेदं [2]तमेदमित्येव यज्ञसाधनद्रव्याणि [1]देवेभ्य विभज्य दत्वा आत्मनि आज्यद्रव्य [1]प्रजापति स्थापितवान्। २० [1]त प्रजापतिं [1]देवा [3]एवम् [1]अब्रुवन्-[1]आज्यम् इति य [4]एष [1]एव [1]यज्ञ नाम, [5]सर्वेषु [6]यज्ञियेषु द्रव्येषु घृतस्यैव[7] सारत्वात्। तस्मादस्माकम् [1]अपि अस्मिन्नाज्ये कियानपि भाग [1]अस्तु [1]इति। तत [8]प्रजापतिस्तान् देवानेवम् [1]अब्रवीत्-हे देवा, युष्मानुद्दिश्य यष्टार [1]आज्यभागौ यजन्तु। प्रधाने च हविषि [9]अधस्तादुपस्तरणमुपर्यभिघारण कुर्वन्त्विति[9]। [1]उप [1]स्तृणान् उपस्तृणन्तु। [1]अभि [1]घारयान् अभिघारयन्त्वित्यर्थ। यस्मादेवं [1]तस्मात् [1]आज्यभागौ आज्येन यजेयु। प्रधानहविषोऽधस्तादुपस्तृणीयुरुपरिष्टा- २५ च्चाभिघारयेयु ॥

१ ए हो- यजमान°। २ त्रि हो-ते।

१. आ क- अभिधातव्य। २ आ क- तमेदमिति। ३ क१- 'एवम्' नास्ति। ४ क. 'एष' नास्ति। ५. आ उ घो ना पा हा- 'एव' नास्ति। ६ क- स्वेषु। ७-७ क गं हो१- घृतस्यैवाज्यस्यैव। ८. क- 'त' नास्ति। ९-९ क गं हो१- अधस्तादुपस्तृणन्तु उपरि ३० अभिघारयन्त्विति।

ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयामान्यन्यानि हवींष्ययातयाममाज्यमिति प्राजापत्यमि( १ )ति ब्रूयादयातयामा हि देवानां प्रजापतिरिति छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन्

ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। कस्मात्। सत्यात्। यातयामानीति यात-यामानि। अन्यानि। हवीꣳषि। अयातयाममित्ययात-यामम्। आज्यम्। इति। प्राजापत्यमिति ५
प्राजा-पत्यम् (१)। इति। ब्रूयात्। अयातयामेत्ययात-यामा। हि। देवानाम्। प्रजापतिरिति प्रजा-पतिः। इति। छन्दाꣳसि। देवेभ्यः। अपेति। अक्रामन्। न। वः। अभागानि। हव्यम्। वक्ष्यामः। इति। तेभ्यः। एतत्। चतुरवत्तमिति चतुः-अवत्तम्। अधारयन्।

ब्रह्मवादिन इत्यादि ॥ [४]यातयामानि गच्छता कालेन गतसाराणि। [४]देवाना मध्ये [४]प्रजापतिः [४]अयातयामा, गतेऽपि महति काले अगतसारत्वात्। अन्येषा च मन्वन्तरावधि- १०
कालस्थत्वात् ॥

छन्दाꣳसीत्यादि ॥ पुरोनुवाक्यादिचतुष्टयार्थेन चतुर्गृहीतेन छन्दसां तृप्तिः। गायत्री-त्रिष्टुब्जगत्यनुष्टुभां प्रधानछन्दसा ग्रहणमित्येके ॥

ब्रह्मवादिन इति ॥ सर्वेतदुपस्तरणादिसाधनमाज्यं प्रशंसति– "ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्यमिति ब्रूयादयातयामा हि देवानां १५
प्रजापतिरिति" ॥ [१]अन्यानि पुरोडाशचर्वादीनि हवींषि [१०]द्वित्रैर्दिवसैः [१]यातयामानि गतसाराणि भवन्ति। [१]आज्यं तु ससारमेव तिष्ठति न तु स्वादिमानं परित्यजति, तत् [११]"कस्मात् [१]इति [१]ब्रह्मवादिनः परस्परं पप्रच्छुः। तत्र कश्चित् बुद्धिमान् ब्रह्मवादी [१]प्राजापत्यम् एतदाज्यम् [१]इति [१]ब्रूयात्। इन्द्राग्न्यादयो देवाः कल्पे कल्पे विनश्वरत्वात् गतसारास्तेषां मध्ये [१]प्रजापतिः तु [१२]जगदीश्वरत्वात् पुनः पुनस्तादृशान् [१३]कल्पान् सृजन्[१३] उपसंहरंश्च यथापूर्वमेव तिष्ठतीत्यगतसारस्तदीयत्वादाज्यमपि सर्वदा ससारम् [१]इति ॥ २०

छन्दाꣳसीति ॥ अत्र हविष उपस्तरणाभिघारणाभ्यां सह चतुरवदानं विधत्ते–"छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन् पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति" इति ॥ पुरोनुवाक्यादिमन्त्रगतानि यानि गायत्र्यादीनि [१]छन्दाꣳसि तानि हविर्भाग्भ्यः [१४]देवेभ्यः विमुखानि सन्ति [१]अपाक्रामन् वयं भागरहितानि भूत्वा युष्माकं हव्यानि [१]न [१]वक्ष्यामः [१]इति वदन्ति निर्गतानि। तत्र २५
छन्दःशब्देन तदभिमानिदेवता [१५]उच्यन्ते। ततो हविर्भाजो देवाः [१]तेभ्यः [१६]छन्दोभ्यो देवतामूर्तेभ्यो[१६]

१०. ड.शं– द्वित्रैर्दिनैर्यात°। ११. ड.ड१.शं– कस्मात् कारणादिति। १२. ड.ड१.शं– जगदीश्वरः। १३–१३. आ.क– उत्पादयन्; हो१– सृजन; शं– कालान् सृजन्। १४. क.ड.हा. हो१– देवताभ्यः। १५. ड.ड१.शं– विवक्ष्यन्ते। १६–१६. ड.ड१–शं– छन्दोदेवेभ्यः।

पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्त्यङ्गिरसो वा इत उत्तमाः सुवर्गं लोक-मायन् तदृषयो यज्ञवास्त्वभ्यवायन् ते( २ )ऽपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत

५ तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै

---

परोनवाक्याया इति पुर – अनुवाक्यायै। याज्यायै। देवतायै। वषट्कारायेति वषट् कारायं। यत्। चतुरवत्तमिति चतु – अवत्तम्। जुहोति। छन्दाꣳसि। एव। तत्। प्रीणाति। तानि। अस्य। प्रीतानि। देवेभ्यः। हव्यम्। वहन्ति। अङ्गिरसः। वै। इतः। उत्तमा इत्युत् तमा।

१० सुवर्गमिति सुव – गम्। लोकम्। आयन्। तत्। ऋषयः। यज्ञवास्त्विति यज्ञ - वास्तु। अभ्यवायन्नित्यभि अवायन्। ते (२)। अपश्यन्। पुरोडाशम्। कूर्मम्। भूतम्। सर्पन्तम्। तम्। अब्रुवन्। इन्द्राय। ध्रियस्व। बृहस्पतये। ध्रियस्व। विश्वेभ्यः। देवेभ्यः। ध्रियस्व। इति। स। न। अध्रियत। तम्। अब्रुवन्। अग्नये। ध्रियस्व। इति। स। अग्नये। अध्रियत। यत्। आग्नेयः। अष्टाकपाल इत्यष्टा कपालः। अमावास्यायामित्यमा वास्यायाम्। च।

१५ पौर्णमास्यामिति पौर्ण मास्याम्। च। अच्युतः। भवति। सुवर्गस्येति सुव – गस्य। लोकस्य। अभिजित्या इत्यभि जित्यै।

---

अङ्गिरसो वा इत्यादि॥ आग्नेयस्याष्टाकपालस्य विधिः। गतेष्वङ्गिरःसु तेषां [v]यज्ञवास्तु अभ्यागताः [v]ऋषयः कूर्मरूपिणं [v]सर्पन्तं च्यवमानं स्वर्गादवपतन्तं [v]पुरोडाशम् [v]अपश्यन्। तमित्यादि। [v]ध्रियस्व अवतिष्ठस्व। अच्युत इति। आग्नेयस्याच्युतत्वात् स्वर्गस्याभिजयः॥

---

२० भागत्वेन [v]चतुरवत्तं दत्तवन्तः। तत्र [१७]पुरोनुवाक्यादिशब्दाभिधेया [१८]छन्दोभिमानिन्यः। आहुत्याधारभूतोऽग्निर्देवताशब्देनोच्यते [१८]। यस्मादेवं [१९]तस्मादेतच्छन्दसां प्रीत्यै [v]चतुरवत्तं जुहुयात्। तेन [v]प्रीतानि छन्दांसि हविर्भागस्य [v]दातुः [v]हव्यं [v]वहन्ति॥

अङ्गिरस इति॥ अथाऽऽग्नेयं पुरोडाशं विधत्ते— 'अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तदृषयो यज्ञवास्त्वभ्यवायन् तेऽपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये

२५ ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै" इति॥ अङ्गिरो नामका ऋषयः

---

१७ ह- °वाक्यादाब्दा°। १८–१८ ह हर हो – छन्दोभिमानिन्याहुत्याधारभूताग्निर्देवता या इत्येताः शब्दैः, गृ- छन्दोभिमानिन्य आहुत्याधारभूताऽग्नि देवताया इत्येतेन शब्देन विवक्ष्यते। १९ अ इ न ओ पा हा- °च्छन्दसा।

तमब्रुवन् क्रथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तो( ३ )ऽवार्छ-
त्येवमवोऽऽरमित्युपरिष्टादभ्यज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै
सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिंल्लोकेऽभि जयति

तम्। अब्रुवन्। कथा। अहास्था। इति। अनुपाक्त इत्यनु-अक्त। अभूवम्। इति।
अब्रवीत्। यथा। अक्षः। अनुपाक्त इत्यनु-अक्त (३)। अवार्छतीत्यव ऋच्छति। ५
एवम्। अवेति। आरम्। इति। उपरिष्टात्। अभ्यज्येत्यभि-अज्य। अधस्तात्। उपेति।
अनक्ति। सुवर्गस्येति सुवः गस्य। लोकस्य। समष्ट्या इति सम्-अष्ट्यै। सर्वाणि।
कपालानि। अभीति। प्रथयति। तावतः। पुरोडाशान्। अमुष्मिन्। लोके। अभीति। जयति।

तमित्यादि ॥ अभ्यञ्जनमनोऽपाञ्जनहेतु। केन हेतुना त्वम् अहास्था यज्ञसकाशात्
प्रच्युतोऽसि। अवार्छतीति। अवपाति। अवार्च्छते पाघ्रादिना (पा ७ ३ ७८) ऋच्छा- १०
देश। "उपसर्गादृति धातौ" (पा ६ १ ९१) इति वृद्धि। अवारमिति। "सर्तिशास्त्य-
र्तिभ्यश्च" (पा ३ १ ५६) इत्यङ् ॥

अभि प्रथयतीति ॥ सर्वाणि कपालानि अभि व्याप्नोति तथा पृथूकरोति। तावत
इति। यावन्ति कपालानि अभिप्रथयति तावत्सङ्ख्यान् पुरोडाशान् अमुष्मिन् लोके इष्ट-
साधनत्वेन प्राप्नोति ॥ १५

इस भूर्लोकात् उत्तमा उत्ततमा त्वरया निर्गता स्वर्गं प्राप्ता। तत्र स्वर्गे ते ऋषय यज्ञवास्तु
यज्ञभूमिमभिलक्ष्य समागता। तस्या भूमौ पुरोडाशाभिमानी देव स्वशरीरमन्तर्धाय कूर्मशरीरी
भूत्वा प्रकर्षेण पलायते। स दृष्ट्वा ते ऋषय अब्रुवन्–इन्द्रादीना मध्येऽन्यतमस्मै( भाग ) त्वा
दास्यामस्त्व प्रियस्व त्वमवतिष्ठस्वेति। तत स पुरोडाश न अतिष्ठत्। अवस्थां तिष्ठेत्युक्ते स्थितवान्।
अतो द्विजद्वयेऽपि अष्टाकपाल पुरोडाश आग्नेय अच्युत कर्तव्य। तेन स्वर्गाभिजयो भवतीति ॥ २०

तमिति ॥ अथ कपालेभ्य उद्वासितस्य पुरोडाशस्याभ्यञ्जनोपाञ्जनरूपमलङ्करण विधत्ते–
'तमब्रुवन् कथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तोऽवार्छत्येवमवाऽऽरमित्युपरिष्टादभ्य-
ज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै' इति ॥ स पुरोडाश ते ऋषय अब्रुवन्। केन हेतुना त्वम्
अहास्था यज्ञदेश परित्यक्तवानसि। तत्र पुरोडाश अब्रवीत्– अनुपाक्त अभूवम् अञ्जन-
कृतालङ्करणरहित अभूवम्, तस्मात् त्यक्तवानस्मि। यथा लोके शकटस्य अक्ष अञ्जनरहित अवार्च्छति २५
विनश्यति, एवम् अहमप्यञ्जनरहित अवाऽऽर विनष्टोऽस्मि इति। तस्मात् पुरोडाशम् उपरिष्टात्
अधस्तात् चाज्येनालङ्कुर्यात्। तेन स्वर्गस्य सम्यक् अष्टि प्राप्ति भवति ॥

३ पर– यथा, हो–'अभि' नास्ति। ४ हो–'यावन्ति' इत्यस्यानन्तरम् 'इति'।

२०. ड१–'ते' नास्ति। २१ ड१– कर्मशरीर। २२ आ क– पलायत हा– पगयन्त
ड हो१– पगयन्त। २३ ड ड१– त्वाम्। २४ अ इ उ जो ना पा हा– अग०। २५ ड हो१– देश। ३०
२६ अ इ उ जो ना पा हा– परित्यज्यागतवानसि। २७ ड१– °कृताल्ङ्कारहित। २८–२८ आ
ड हो हो१– व्याप्ति, ड१– अवाप्ति, क– प्राप्ति।

यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय भस्मनाऽभि वासयति तस्मान्मा᳚ꣳसेनास्थि छन्नं वेदेनाभि वासयति तस्मात् ( ४ ) केशैः शिरश्छन्नं

यः । विदग्ध इति वि - दग्धः । सः । नैर्ऋत इति नैः - ऋतः । यः । अशृतः । सः । रौद्रः ।
५ यः । शृतः । सः । सदेव इति स देवः । तस्मात् । अविदहतेत्यवि - दहता । शृतंकृत्य इति शृतम् कृत्यः । सदेवत्वायेति सदेव त्वाय । भस्मना । अभीति । वासयति । तस्मात् । मा᳚ꣳसेन । अस्थि । छन्नम् । वेदेन । अभीति । वासयति । तस्मात् (४) । केशैः । शिरः । छन्नम् ।

[^1]विदग्धः विरूपो दग्धः, अतिदग्धो वा । [^2]अशृतः अपक्वः । [^3]शृतः सुष्ठु पक्वः [^4]सदेवः देवयोग्यः । शृतकृत्य इति । सुष्ठु पक्तव्यः । शृतमिति तु मकारान्तो निपातः ।
१० " विभाषा कृवृषोः " ( पा ३ १-१२० ) इति क्यप् ॥
अभितश्छादनमभिवासनम् ॥

सर्वाणीति ॥ अथोद्वासनात् पुरा कपालेषु स्थापितस्य हस्तेन [^29]प्रसारणं विधत्ते– 'सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिँल्लोकेऽभि जयति' इति । यावन्ति कपालानि स्थापितानि [^30]तावन्ति [^31]सर्वाणि यथा [^31]व्याप्नोति तथा प्रसारयेत् । तथा सति [^32]कपालसङ्ख्यया सङ्ख्यातान् बहून्
१५ [^33]पुरोडाशान् [^33]इष्टसाधनत्वेन स्वर्गे प्राप्नोति ॥

य इति ॥ पाके सौकर्यविशेषं विधत्ते– 'यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय' इति ॥ विपरीतत्वेन दग्धः [^1]विदग्धः, क्वचित् [^34]दग्धः क्वचिदपक्वः[^34] इति याऽसमभावेन विपरीतत्वम्, तादृशो राक्षसप्रियः । [^2]अशृतः अपक्वो रुद्रस्य प्रियः । सुष्ठु पक्वो देवप्रियः । तस्माद्विपरीतदाहमकुर्वता [^35]पुरुषेण पुरोडाशः[^35] [^5]शृतंकृत्यः सम्यक् पक्वो यथा भवति
२० तथा कर्तव्यः । तथा सति देवप्रियो भवति ॥

भस्मनेति ॥ यदुक्तं सूत्रकारेण– "स ब्रह्मण्य पृच्छस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति" ( आपश्रौ १ २५-१२ ) इति, तदेतद्विधत्ते– 'भस्मनाऽभि वासयति तस्मान्मा᳚ꣳसेनास्थि छन्नं वेदेनाभि वासयति तस्मात् केशैः शिरश्छन्नम्' इति । [^36]पक्वस्य कठिनस्य पुरोडाशस्योपरि [^7]भस्मना आच्छादनमस्थ्न उपरि मांसाच्छादनमिव भवति । [^37]आच्छादनकाले [^38]वेदगतदर्भनाडीसंस्पर्शेन [^39]केशाच्छादितं इव

२५ [^5] हो– 'तु' नास्ति ।

[^29]: हो– प्रथनम्, हा– प्रगरणं, अ.इ.उ.जो.पा– प्रत्यासरणं ।
[^30]: इ.द१– तानि ।
[^31]: आ.क.द१– गृ– अभिव्याप्नोति ।
[^32]: ३२–३२. आ.गृ– कपालसङ्ख्यान्, अ.इ.उ.जो.पा.हा– कपालसङ्ख्या बहून्; क.ड.ना.हो१–कपालसंख्याकान् बहून् ।
[^33]: ३३. आ.क.ना– निर्वृतिसाधं; अ.इ.उ.जो.पा.हा–निर्वृत्य गत्वा ।
[^34]: ३४–३४. इ.द१.गृ.हो१–पाक क्वचित्पाक ।
[^35]: ३५–३५. आ.हा– पुरोडाशः, इ.गृ– पुरोज ।
[^36]: ३० ३६. द१–'पक्वस्य' नास्ति ।
[^37]: ३७. इ.द१–छादन° ।
[^38]: ३८. अ.इ.उ.जो.ना.पा.हा– 'स्पर्शनं, °स्पर्शेन ।
[^39]: ३९. आ.इ.हो१– केशाच्छन्नं शिर ।

प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छ्रुतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र मीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्र मीयेत संख्यायोद्वासयति यजमानस्य (५) गोपीथाय

प्रच्युतमिति प्र-च्युतम्। वै। एतत्। अस्मात्। लोकात्। अगतम्। देवलोकमिति देव-लोकम्। यत्। शृतम्। हविः। अनभिघारितमित्यनभि-घारितम्। अभिघार्येत्यभि-घार्य। उदिति। वासयति। देवत्रेति देव-त्रा। एव। एनत्। गमयति। यदि। एकम्। कपालम्। नश्येत्। एकः। मासः। संवत्सरस्येति सं-वत्सरस्य। अनवेत इत्यनव-इतः। स्यात्। अथ। यजमानः। प्रेति। मीयेत। यत्। द्वे इति। नश्येताम्। द्वौ। मासौ। संवत्सरस्येति सं-वत्सरस्य। अनवेतावित्यनव-इतौ। स्याताम्। अथ। यजमानः। प्रेति। मीयेत। संख्यायेति सं-ख्याय। १० उदिति। वासयति। यजमानस्य (५)। गोपीथाय।

प्रच्युतमित्यादि॥ गतम्। देवत्रेति। "देवमनुष्य" (पा ५.४.५६) इत्यादिना द्वितीयान्तात् त्राप्रत्ययः॥

यद्येकमित्यादि॥ कपालानां [६]संख्ययोद्वासनविधिः। [७]अनवेतः अनवगतः अन्यून इति यावत्। [६]संख्यया उद्वासनं [७]यजमानस्य रक्षार्थम्॥ १२

भवति। पौरोडाशिककाण्डे निगमानस्यापि [४०]अस्य विधेरत्रोपन्यासः [४१]प्रत्यभिज्ञानार्थः। यद्वा– [४२]ब्राह्मणयोः उभयो.[४३] शाखाभेदमभिप्रेत्येयमीदृशी पुनरुक्तिः परिहर्तव्या॥

प्रच्युतमिति॥ पूर्वमवदानकालेऽभिघारणं विहितमिदानीमुद्वासनकालीनमभिघारणं विधत्ते– 'प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति' इति॥ हविषो मन्त्रेण पाके सति लौकिकत्वमपेतमिति [४]अस्मात् [४]लोकात् प्रच्युतिः। अभिघारणाभावे २० शास्त्रीयत्वमसंपूर्णमिति स्वर्गाप्राप्तिः। तस्माच्छास्त्रीयत्वसंपूर्त्यर्थमाज्येन [४]अभिघार्य पश्चादुद्वासयेत्। तथा सति देवेषु [४]एतत् हविः प्रापितं भवति॥

यदीति॥ कपालानामुद्वासनकाले गणनां विधत्ते– 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र मीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्र मीयेत संख्यायोद्वासयति यजमानस्य गोपीथाय' इति॥ एककपालनाशेन [४]मासः एको न्यूनो भवेत्। ततो २५ [४]यजमानः [४३]म्रियेत। तथा [४४]द्विकपालनाशेनापि। अतः [४]यजमानस्य रक्षणाय गणयेत्॥

६. तं३.त्रि.पं२,मै४.ल–सख्यायो°। ७. तं२.त्रि.पं२.ल हो– सख्यायो°।

४०. आ.क– 'अस्य' नास्ति। ४१. ड.ड१– °भिज्ञार्थः। ४२–४३. हो१– ब्राह्मणयोरिह; आ.क.ड– ब्राह्मणयो.। ४३. आ.ड.ड१.पा.ग.हो१– म्रियते। ४४. क.ड.ड१.ना.ग.हो१– °नाशेऽपि।

यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै ॥ ३ ॥

[ प्राजापत्यं तेऽक्षोऽनुपाक्तो वेदेनाभि वासयति तस्माद्यजमानस्य द्वात्रिंशच्च । ]

५ यदि । नश्येत् । आश्विनम् । द्विकपालमिति द्वि कपालम् । निरिति । वपेत् । द्यावापृथिव्यमिति द्यावा पृथिव्यम् । एककपालमित्येक कपालम् । अश्विनौ । वै । देवानाम् । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । द्यावापृथिव्य इति द्यावा-पृथिव्य । एककपाल इत्येक कपालः । भवति । अनयोः । वै । एतत् । नश्यति । यत् । नश्यति । अनयोः । एव । एनत् । विन्दति । प्रतिष्ठित्या इति प्रति स्थित्यै ॥ ३ ॥

१० [ काल ३१७, ग्रन्ना १६१२०-२३, २२१६ ]

प्रमादाद्विनाशे अश्विनादिविधिः । गतमन्यत् । इष्ट्यन्तभाविनोऽपि हविःश्रपणाते प्रासङ्गिकमुद्वासनस्यामननम् ॥

इति द्वितीये षष्ठे तृतीयोऽनुवाकः ॥

यदीति ॥ अथ [45]प्रमादाद्विनाशे[45] प्रायश्चित्तं विधत्ते– 'यदि नश्येदाश्विनं द्विकपालं
१५ निर्वपेद्द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै '' इति ॥ स्पष्टोऽर्थः ॥

अत्र मीमांसा । [46]प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा ।
नामाग्निहोत्रवन्नैव नामत्वे देवता न हि ॥
२० मन्त्रो हि नेह प्रत्यक्षस्तद्धिताद्देवताविधिः ।
देवद्रव्यविशिष्टस्य विधानादेकवाक्यता " ॥ (जैन्या १४१९२० ) ॥

दर्शपूर्णमासयोः श्रूयते– "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" (तैस २६३) इति । तत्र यथाऽग्निहोत्रशब्दः 'अग्नये होत्रमत्र' इत्यमुमर्थं निमित्तीकृत्य कर्मनामधेयं तथाऽऽग्नेयशब्दोऽप्यग्निसंबन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेत् । मैवम् । नामत्वे देवता
२५ राहित्यप्रसङ्गात् । अग्निहोत्रे तु– 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति इति सायं जुहोति ' ( तैब्रा १४१, शाखा २३१-३० ) इत्यनेन [47]वचनेन विहितो मन्त्रः [48]प्रत्यक्ष इति मान्त्रवर्णिकी देवता लभ्यते । इह तु न तादृशो मन्त्रोऽस्ति । आग्नेयशब्दस्तु देवतां विधातुं शक्नोति । अग्निर्देवताऽस्येत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात् । न च द्रव्यदेवतयोरुभयोर्गुणयोर्विधानाद्वाक्यभेद इति [49]वाच्यम् । कर्मणोऽप्राप्तत्वेन [50]द्रव्यदेवतारूप-
३० गुणद्वयविशिष्टस्य कर्मणो [51]एकेन वाक्येन विधानात्[51] । तस्मादाग्नेयशब्देन देवतागुणो विधीयते ॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"यागे हविर्यजेत् कृत्स्नं कोऽप्यशः शिष्यतेऽथवा ।
देवार्थत्यागजत्वं सर्वं शिष्यते द्विरयस्तः ॥ " ( जैन्या ३४२४ ) ॥

45-45. क ह ड१ शं-प्रमादात् विनाशे । 46 हा- प्रथमस्य । 47 हो १- 'वचनेन'
३५ नास्ति । 48 क ओ ना हा-मन्त्रविहितः । 49. आ हा- वाच्यम् । 50 क ह ड१ शं हो१- गुणद्वयविशिष्टस्य । 51-51 आ-विधानादेकवाक्यत्वोपपत्तेः ।

"आग्नेयोऽष्टाकपाल" (तैसं २ ६ ३) इत्यत्र कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः, तद्धितेन [52]कृत्स्नस्याग्निदेवतात्वस्यावगते[53]स्त्यागमन्तरेण तदनुपपत्तेरिति। चेत्, [54]न। 'द्विर्हविषोऽवद्यति' (तै ब्रा १ ६ १-२१) इत्यवदानद्वयं श्रूयते। अवदानं चाङ्गुष्ठपर्वमात्रम्। तथा च [55]कल्पसूत्रकारः – "आग्नेयस्य [56]पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीनमवद्यति" (आपश्रौ २ १८ १०) इति। [57]तत्र हविष[58]स्तस्मादङ्गुष्ठपर्वद्वयमात्रं [59]खण्डयित्वा त्यक्तव्यम्। इतरच्छेषणीयम्। देवतासम्बन्ध[60]श्च शब्दद्वाराऽप्युपपद्यते॥

[61]दशमाध्यायस्याष्टमपादे चिन्तितम्—

"चतुर्द्विर्वा [62] पुरोडाशेऽवदानं होम्यतोक्तितः [63]।
चतुष्ट्वं सहाऽऽज्येन सिद्धस्यात्रानुवादतः॥" (जैन्या १० ८ २३)॥

दर्शपूर्णमासयोराम्नायते– "चतुरवत्तं जुहोति" इति। तत्र किं [63]पुरोडाशाङ्गस्यावत्तस्यावदानस्य चतुःसंख्या। किं वा तत्र द्विसंख्या, चतुष्ट्वं [64]तूपस्तरणाभिघारणाभ्याम् [65]आज्यावदानाभ्यां सह सम्पद्यत इति संशयः। तत्र चतुरवत्तस्य द्वितीयाविभक्त्या होमकर्मत्वम् [66]उच्यते। न चोपस्तरणाद्यर्थस्य [67]आज्यस्य होमकर्मत्वमस्ति, तस्मात् [68]पुरोडाशावदानस्यैव चतुर्वारत्वमिति प्राप्ते ब्रूमः—न तावदत्र होमानुवादेन चतुरवत्तत्वं विधीयते। होमस्याप्राप्तत्वात्। नाऽपि विशिष्टविधिः, गौरवप्रसङ्गात्। होममात्रविधाने तु चतुरवत्तत्वम् अनुवाद्यम्। तच्चाज्येन सहितस्यैव युक्तम्। 'द्विर्हविषोऽवद्यति' इति विधिना पुरोडाशावदाने द्विरवदानस्यैव प्राप्तत्वात्। तस्मात् द्विरवदानम् [68]॥

पञ्चमाध्यायस्य चतुर्थपादे [69]चिन्तितम्—

"अवदानादि सान्नाय्ये पूर्वमाग्नेयकेऽथ वा।
धर्मप्रवृत्तिक्रमतः सान्नाय्ये पूर्वतोचिता॥
[70]प्रदानं [71]पूर्वमाग्नेयेऽवदानं [72]च [73]तयोचितम्।
अङ्गानां मुख्यतन्त्रत्वात् मुख्यक्रमबलत्वतः"॥ (जैन्या ५ ४ ३ ४)॥

दर्शपूर्णमासयोः सान्नाय्यधर्मा वत्सापाकरणदोहनादयः प्रथममाम्नाताः पुरोडाशधर्मा निर्वापादयः पश्चादाम्नाताः। [74]ततश्च [75]तत्रैव पाठक्रमेण धर्मानुष्ठानं प्रवृत्तम्। [76]ततः [77]प्रावृत्तिकक्रमेणावदानमपि सान्नाय्ये पूर्वमेव कर्तव्यमिति प्राप्ते ब्रूमः – याज्यानुवाक्याविसर्जनबलादाग्नेये पूर्वं प्रदानमित्युक्तम्। तच्च प्रदानं फलप्रत्यासत्त्या मुख्यम्, अवदानं तु तदङ्गम्। तथा सति मुख्यस्य क्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्तव्यम्। मुख्यक्रमो हि प्रावृत्तिकक्रमात् प्रबलः। प्रावृत्तिके हि क्रमे सान्नाय्ये पूर्वमेवावदानं

---

५२ ग्र– कृत्स्नाग्नि°। ५३ हो१– तत्र याग°। ५४ ड१– मैवम् ड ग्र– नैवम्। ५५ आ क– सूत्रकारः। ५६ अ आ इ क पा हा – पुरोडाश°। ५७ ड१ – तत। ५८ आ क– °पर्वमानद्वय। ५९ आ क– त्रोटयित्वा। ६० उ ड१ ग्र – °द्वारेणाऽप्युप°। ६१ हा – दशमस्या°। ६२–६३ ओ– °दाने होमतोक्तितः ना– °दानं हौम्यतोक्तितः क हा– °दानं होमतोक्तितः हो१– °दानं होष्यतोक्तितः। ६३ आ– °स्यावत्तस्य हा१ पुराडाशाङ्गस्य°। ६४ आ क– °धारणाभ्याम्। ६५ आ हा– °वत्ताभ्यां। ६६ ड१– अस्ति। ६७ आ क– 'आज्यस्य' नास्ति। ६८–६८ आ क– पुरोडाशावदाने चतुःसंख्येति प्राप्ते ब्रूमः उपस्तरणाभिघारणाभ्यामवदानाभ्यां प्रसिद्धं चतुरवत्तमनूद्य होमस्य विधानाद्धविषो मध्यात् पूर्वार्धादिति द्विरवदानस्यैव प्राप्तिः। तस्मात् द्विर्हविषोऽवदानम्। ६९ आ– 'चिन्तितम्' नास्ति। ७० हो१– प्रधानं। ७१ अ इ उ पा– °माग्नेयावदानं हो१– °माग्नेये त्ववदानं। ७२ अ इ उ क ड१ ओ ना पा ग्र हा– तु। ७३ अ इ उ ओ पा हा– यथोचितं। ७४ ड ड१ ग्र हो१– 'ततश्च' नास्ति। ७५ अ इ उ ओ पा हा – 'एव' नास्ति। ७६ अ इ उ ओ पा हा– धर्मतः। ७७ अ इ उ ओ पा हा– प्रवृत्त°।

मभिघारणमासादनं च कृत्वा प्रदानमकृत्वैवाऽऽग्नेयेऽवदानादीनि कर्तव्यानि । तथा सति सांनाय्ये अनुष्ठितानि अवदानादीन्यङ्गानि मुख्यप्रदानाद्विप्रकृष्यन्ते । मुख्यक्रमाश्रयणे तु आग्नेये प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात् सांनाय्ये तदनुष्ठीयते । तत्र नास्त्यङ्गाङ्गिविप्रकर्षः । नन्ववदानादिप्रदानान्त एकः पदार्थ इत्युक्तम् । तत्र कुतः क्रमविचारः । एवं तर्हि कृत्वाचिन्ताऽस्तु । अथवा स्विष्टकृदवदानादिविषयेयं चिन्ताऽस्तु ॥

द्वितीयपादे चिन्तितम्—

“ अवदानेऽनुसमयो होमान्ते वाऽवदानके ।
पदार्थत्वं विधेयत्वात् तेनानुसमयस्ततः ॥
अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थतः ।
अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात् ” ॥ ( जैन्या ५·२·६·७ )॥

दर्शपूर्णमासयो ‘ द्विर्हविषोऽवद्यति ’ ( द्र. शब्रा १·६·१·२१ ) इत्येकेन विधिना विहितत्वात् द्विसंख्या विशिष्टमवदानमेकः पदार्थः । ततस्तेनावदानमात्रेणानुसमयः कर्तव्यः । आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात् प्रागेवाग्नीषोमीयस्य द्विरवदानमिति प्राप्ते ब्रूमः—अवदानं तु होमपर्यन्तमेकः पदार्थः । होमस्यावदानमन्तरेण अनुपपत्तेर्होमविधिनैवाक्षिप्तं होमार्थमवदानम् । अत एव ‘ चतुरवत्तं जुहोति ’ ( तैस २·६·२ ) इत्येकेन विधिना सावदानक एको होमपदार्थो विहितः । उपस्तरणाभिघारणाभ्यां सह यच्चतुरवत्तं तस्मिन् हविर्विषयम् अवदानद्वित्वं विधातुं ‘ द्विर्हविषोऽवद्यति ’ इत्युच्यते । ततो होमान्तस्यावदानस्यैकपदार्थत्वादाग्नेयमवदाय हुत्वा पश्चादग्नीषोमीयावदानमित्यनुसमयः ॥

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

अवत्तनाशे तच्छेषात् पुरोडाशादवद्यति ।
यजेदाज्येन वाऽऽद्योऽत्र मध्यपूर्वार्धसंभवात् ॥
कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः ।
हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ” ॥ ( जैन्या ६·४·१-२ )॥

दर्शपूर्णमासयोः पुरोडाशावदाने श्रूयते–‘ मध्यादवद्यति पूर्वार्धादवद्यति ’ (द्र आपश्रौ २·१८· १०) इति । तत्र यद्यवत्तं नश्येत् तदानीमवशिष्टात् पुरोडाशात् पुनरप्यवदातव्यम् । कुतः ? अवदानापादानयोर्मध्यपूर्वार्धयोः शिष्टेऽपि संभवादिति चेत् । नैवम् । कृत्स्नपुरोडाशगते मध्यपूर्वार्धे अपादानत्वेन श्रूयेते । न त्ववशिष्टभागगते मध्यपूर्वार्धे । ततो मुख्यहविषो नाशादाज्यं प्रतिनिधाय यष्टव्यम् । अत एव श्रूयते– “ यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येनैता देवताः परिसंख्याय यजेत ” ( द्र. ऐब्रा ७·४ ) इति । तत्र सर्वशब्दस्य निमित्तविशेषणत्वेन अविवक्षितत्वाभावात् सर्वत्राऽऽज्यस्य विधिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत् सं श्यति भ्रातृव्याय प्रहरिष्यन्त्स्तम्बयजुर्हर-

देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । इति । स्फ्यम् । एति । दत्ते । प्रसूत्या इति प्र-सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । इति । आह । अश्विना । हि । ५
देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । शतभृष्टिरिति शत-भृष्टिः । असि । वानस्पत्यः । द्विषतः । वधः । इति । आह । वज्रम् । एव । तत् । समिति ।
श्यति । भ्रातृव्याय । प्रहरिष्यन्निति प्र-हरिष्यन् । स्तम्बयजुरिति स्तम्ब-यजुः । हरति ।

देवस्य त्वेत्यादि ॥ वेदिविधिः । प्रसूतिः सवितुरनुज्ञा । अपि च यतनाय प्रयत्य वा ॥

शतभृष्टिरसीति ॥ स्फ्याभिमन्त्रणम् । शतपरिपाको वनस्पतिविकारो द्विषतां वधहेतुरिति १०
वचनेन [V]वज्रम् [V]एव [V]भ्रातृव्याय प्रहर्तुं सम्यक् निशितं करोति ॥

स्तम्बयजुरिति मन्त्रेण तृणपुरीषहरणस्येयं संज्ञा । एतावतीत्यादि । वेदिव्यतिरिक्त पृथिव्यभावप्रतिपादनेन सर्वस्याः पृथिव्या वेदित्वं वेदिस्तुत्यर्थम् । दृष्टं च "सा वा इयं सर्वैव वेदिः" (तैसं ६ २ ४) इति । [V]तस्याः तादृश्या वेदेः [V]एतावत् सर्वपृथिवीप्रमाणात्

तृतीये प्रोक्त आग्नेयः पुरोडाशो दिनद्वये ॥ १५

अथ चतुर्थेऽनुवाके वेदिर्विधातव्या ।

देवस्येति ॥ तस्याश्च वेदेः साधनभूतस्य स्फ्यस्य मन्त्रेणाऽऽदानं विधत्ते—"देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै" इति ॥ [1]आध्वर्यवे मन्त्रकाण्डे 'आददे' (तैसं १ १ ९) इत्येकमेव पदं मन्त्रत्वेन आम्नातम् । तच्च मन्त्रस्वरूपं 'देवस्य त्वा' इत्यादिना शेषेण पूरितम्[1] ॥ २०

शतभृष्टिरिति ॥ यदुक्तं सूत्रकारेण—"शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात् प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन्" (आपश्रौ २ ३ १३) इति, [2]तत्रोक्तमेतं मन्त्रमुत्पाद्य तात्पर्यं दर्शयति—"शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत् सꣳश्यति भ्रातृव्याय प्रहरिष्यन्" इति ॥ हे स्फ्य, त्वं [3]शतभृष्टिः [3]असि । शतसङ्ख्याका भृष्टिः शत्रूणां सन्तापरूपं भर्जनं [3]यस्यासौ शतभृष्टिः । वनस्पतेर्विकारः [3]वानस्पत्यः । [3]द्विषतः द्वेषं कुर्वतो वैरिणो [3]वधः वधहेतुरसि । २५
अनेन [4]मन्त्रपाठेन भ्रातृव्याय [5]वज्रं प्रहर्तुमिच्छन् सम्यक् तीक्ष्णीकरोति । यद्यपि स्फ्यस्यानेन मन्त्रेणोत्करे प्रक्षेपो [6]वेदिनिर्माणादूर्ध्वभावी तथाऽप्यादानप्रसङ्गेन बुद्धिस्थत्वादिदानीमेवोक्तम् ॥

१-१. आ क आध्वर्यवशेषेण पाठतम् हो–आध्वर्यवशेषेण पूरितम्, ह१–आध्वर्यवे शेषेण पूरितम् ।
२ अ इ ओ पा हा–तन्नोक्तमेकं । ३ आ क–यस्य स । ४ आ क–मन्त्रेण । ५ अ इ उ ओ पा हा
–वज्रं च । ६ ह–वेदेर्नि° । ३०

त्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति (१) तस्मान्नाभागं निर्भजन्ति त्रिर्हरति त्रयं इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति तूष्णीं चतुर्थं हरत्यपरिमितादेवैनं निर्भजत्युद्धन्ति यदेवास्या अमेध्यं

एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निरिति ।
५ भजति (१) । तस्मात् । न । अभागम् । निरिति । भजन्ति । त्रिः । हरति । त्रयः । इमे । लोकाः । एभ्य. । एव । एनम् । लोकेभ्यः । निरिति । भजति । तूष्णीम् । चतुर्थम् । हरति । अपरिमितादित्यपरि-मितात् । एव । एनम् । निरिति । भजति । उदिति । घ्नन्ति । यत् । एव । अस्याः । अमेध्यम् ।

अवकाशात् [v]भ्रातृव्य भागवन्त शत्रु [v]निर्भजति [v]निर्भाग कृत्वा विप्रवासयति । [v]तस्मात्
१० अद्यत्वेऽपि [v]अभागम् एकार्थाभिलापरहितं [१-v]न अभाग[१] [v]निर्भजन्ति निर्वासयन्ति विषयस्य नियन्तारः ॥

त्रिर्हरति इत्यादि । गतम् । [v]अपरिमितात् लोकत्रयाग्यधिकादपि ॥

उद्घ्नन्तीत्यादि ॥ मेध नार्हतीति [v]अमेध्यम् । "दण्डादिभ्यो यः" (पा ५·१·६६) "ययतोश्चातदर्थे" (पा ६·२·१५६) इत्युत्तरपदान्तोदात्तत्वम् ।

१५ स्तम्ब्ययजुरिति ॥ [v]वेदिस्थानात् सतृणस्य पांसोर्मन्त्रेणान्यत्र हरणं विधत्ते– 'स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति तस्मान्नाभागं निर्भजन्ति' इति ॥ यजुषा मन्त्रेण हरणीयः पांसुसहितः स्तम्बः स्तम्बयजुः, तस्य हरणं कुर्यात् । "पृथिवि देवयजनि" (तैस १·१·९) [७-]इति त्रिभिः[-७] [v]आध्वर्यवोक्तैः वेदिस्थाने स्थापितं दर्भं छित्वा पांसुसहितम् [१०-]उत्करे निनयेत्[-१०] । तत्प्रकारः सर्वोऽपि पौरोडाशिककाण्डे [११-]एव स्पष्टमभिहितः[-११] । [v]वेदिः [v]यावती विद्यते
२० [१२-]एतावती एवोपयुक्ता[-१२] [v]पृथिवी । [v]तस्याः पृथिव्याः [v]एतावतः प्रदेशादनेन स्तम्बयजुर्हरणेन [v]भ्रातृव्यं निःसारितवानेव भवति । यस्मात् अत्र [१३-]भ्रातृव्यो भागार्थीति[-१३] कृत्वा निःसार्यते [v]तस्मात् [१४]लोके [v]अभागं भागाभिलापरहितम् अविरोधित्वात् [v]न निःसारयन्ति ॥

त्रिरिति ॥ उक्तस्य स्तम्बयजुर्हरणस्याऽऽवृत्तिं विधत्ते– 'त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति' इति ॥

२५ १. मे–निभागम् । २–२. त्रि.पं.२.मै४.ल.हो– भागाद्दिकम् ।

७. अ.ह.उ.ह.जो-पा.शं.दा–वेदिस्थाने । ८–८. क.ह.ह१.हो१–इत्यादिभिः । ९. ह.ह१.शं.हो१–अध्वर्युकाण्डोक्तैर्मन्त्रैः । १०–१०. क.ह.हो१–उत्करदेशं नयेत्; ह१.शं–उत्करदेशे नयेत् । ११–११. ह ह१–[स्पष्ट] । १२–१२. तावत्येवोपयुक्ता । १३–१३. अ.ह.जो.पा–भ्रातृव्यं यागादानि । १४. ह.ह१.शं.हो१–लोकेऽपि ।

तदपं हन्त्युद्घ्नन्ति तस्मादोषधयः परा भवन्ति मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति पितृदेवत्याऽतिखातेयती खनति प्रजापतिना (२) यज्ञमुखेन संमिताम् प्रतिष्ठायै खनति

तत्। अपेति। हन्ति। उदिति। घ्नन्ति। तस्मात्। ओषधयः। परेति। भवन्ति। मूलम्। छिनत्ति। भ्रातृव्यस्य। एव। मूलम्। छिनत्ति। पितृदेवत्येति पितृ देवत्या। ५
अतिखातेयतीति खाता। इयतीम्। खनति। प्रजापतिनेति प्रजा पतिना (२)।
यज्ञमुखेनेति यज्ञ-मुखेन। संमितामिति सं मिताम्। एति। प्रतिष्ठाया इति प्रति-स्थायै। खनति।

'परा भवन्ति पुनःपुनर्विनश्यन्ति स्थानस्योद्धननादल्पेनैव कालेन न्यग्भवन्ते। मूलमित्यादि। 'अतिखाता प्रतिष्ठामतीय खाता। इयती प्रादेशमात्री। 'यज्ञमुखं वै प्रजापतिः' इति प्राजापत्येन प्रादेशेन परिच्छिन्ना भवति। आ प्रतिष्ठाया इति। "चतुरङ्गुले ह्योषधयः प्रति १० तिष्ठन्ति" (तैब्रा ३ २ ९) इति यावच्चतुरङ्गुलं 'खनति॥

तूष्णीमिति॥ चतुर्थे पर्याये स्वमन्त्रक हरणं विधत्ते—'तूष्णीं चतुर्थं हरत्यपरिमितादेवैन निर्भजति' इति। मिराद्वस्यैव लोकत्रयादपि सारितत्वात् चतुर्थेन हरणेन लोकत्रयबहिर्भूतात् सर्वस्मादपि देशादपि सारितो भवति॥

उद्घ्नन्तीति॥ वेदिस्थाने स्थितस्योपरितनमृद्भागस्य [15]अपसारणं विधत्ते—'उद्घ्नन्ति यदेवास्या १५ अमेध्यं तदप हन्ति' इति॥ उपरिभागस्योच्छिष्टादिस्पर्शसंभवात् [16]मेध्यानर्हत्वम्॥

उद्घ्नन्तीति॥ विहितमुद्धननमनूद्य प्रशंसति—'उद्घ्नन्ति तस्मादोषधयः परा भवन्ति' इति॥ 'तस्मात् उद्धननात् [17]तत्रोत्पन्नास्तृणादयः पराकृता विनाशिता 'भवन्ति॥

मूलमिति॥ तत्रत्यानामोषधीनां यानि मूलानि पुनःप्ररोहाय भूमौ स्थितानि तेषां छेदनं विधत्ते—'मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति' इति॥ पुनःप्ररूढानाम् [18]अन्तस्तृणानां [19]दर्भा २० स्तरणहवि सादनविरोधित्वाद् भ्रातृव्यत्वम्॥

पितृदेवत्येति॥ चुबुकमारभ्य [20]केशपर्यन्तं यजमानस्य यन्मुखपरिमाणं तद्धस्तेन प्रदर्श्य तत्परिमितं खननं विधत्ते—'पितृदेवत्याऽतिखातेयती खनति प्रजापतिना यज्ञमुखेन संमिताम्' इति॥ प्रादेशपरिमाणमतिक्रम्य खनने पैतृकी वेदिः स्यात्। यज्ञस्य यज्ञानुष्ठातुर्यजमानस्य मुखं यज्ञमुखं, तच्च प्रजापतिस्वरूपं यागद्वारा प्रजापालकत्वात्। तेन मुखेन 'संमितां कृतवान् भवति॥ २५

एति॥ पक्षान्तरं विधत्ते—'आ प्रतिष्ठायै खनति यजमानमेव प्रतिष्ठां गमयति' इति॥ अनायासेनापनेतुं शक्या पांसवोऽप्रतिष्ठा। या त्वधस्ताद्दृढा भूमिः सा प्रतिष्ठा, [21]तत्पर्यन्तं खननेन यजमानः प्रतिष्ठां प्रापितो भवति॥

१५ ङ-अपहरणम्। १६ ङ मेध्यानर्हत्वम्। १७ क-अत्रोत्पन्ना°। १८ क-तृणाना। १९ क ङ ङ१ हो१-°हविरासादनादिविरो°। २० आ-'केशपर्यन्त' नास्ति। २१ ङ१-तत्पर्यन्तं तेन। ३०

यजमानमेव प्रतिष्ठां गमयति दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमकः पुरीषवतीं करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तं करोत्युत्तरं परिग्राहं परि गृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भज्याऽऽत्मन उत्तरं परिग्राहं परि गृह्णाति

५ यजमानम् । एव । प्रतिष्ठामिति प्रति स्थाम् । गमयति । दक्षिणत । वर्षीयसीम् । करोति । देवयजनस्येति देव - यजनस्य । एव । रूपम् । अक । पुरीषवतीमिति पुरीष वतीम् । करोति । प्रजेति प्र जा । वै । पशव । पुरीषम् । प्रजयेति प्र जया । एव । एनम् । पशुभिरिति पशु भि । पुरीषवन्तमिति पुरीष वन्तम् । करोति । उत्तरमित्युत् तरम् । परिग्राहमिति परि ग्राहम् । परीति । गृह्णाति । एतावती । वै । पृथिवी । यावती । वेदि । तस्या । एतावत । एव । भ्रातृव्यम् । निर्भज्येति नि भज्य । आत्मने । उत्तरमित्युत् तरम् ।
१० परिग्राहमिति परि ग्राहम् । परीति । गृह्णाति ।

वर्षीयसीमिति ॥ प्रवृद्धतराम् । प्रियस्थिरादिना (पा ६ ४ १५७) वर्षादेश । एव देवयजनस्य रूपम् अक करोति । छान्दसे लुङि "मन्त्रे घस" (पा २ ४ ८०) इति च्लेर्लुक् । पुरीषवतीमिति । पूरिका मृत् पुरीषम्, प्रजासाधनत्वात् ताच्छब्द्यम् ॥
१५ उत्तरमित्यादि ॥ वेद्या उत्तर परिग्राह करोतीत्यर्थ । "परौ यज्ञे" (पा ३ ३ ४७) इति घञ् । एतावतीत्यादि गतम् ॥

दक्षिणत इति ॥ दक्षिणभागस्यौन्नत्य विधत्ते– 'दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमक' इति । दक्षिणभागस्य निम्नत्वे पितृयजनस्य रूप स्यात् ।

पुरीषवतीमिति ॥ मार्दवकारिपांसुयुक्तत्व विधत्ते– 'पुरीषवतीं करोति प्रजा वै पशव पुरीष प्रजयैवैन पशुभि पुरीषवन्त करोति' इति ॥ यस्या भूमौ प्रजापशुसंचारबाहुल्य तस्या पांसुबाहुल्यात्
२० प्रजादीना पुरीषत्वम् । यजमानोऽपि प्रजादिभि पुरीषवान् भवति ॥

उत्तरमिति ॥ वेदिनिर्माणात् पूर्वं "वसवस्त्वा" (तैस १ १ ९) इत्यादिभिर्मन्त्रै वेदिसीमनिर्देश पूर्वपरिग्रह । निर्माणात् ऊर्ध्वम् "ऋतमसि" (तैस १ १ ९) इत्यादिभिर्मन्त्रैरुत्तरपरिग्रहमिमं विधत्ते–'उत्तर परिग्राह परि गृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव
२५ भ्रातृव्य निर्भज्याऽऽत्मन उत्तर परिग्राह परि गृह्णाति' इति ॥ पूर्वपरिग्रहेणैव वेदिमर्यादाया सिद्धायामपि पुनरुत्तरपरिग्रह आत्मने स्वकीयत्वाय भवति ॥

क्रूरमिति ॥ मन्त्रकाण्डोक्तेन मन्त्रेण समीकरण विधत्ते– "क्रूरमिव वा एतत् करोति यद्वेदिं करोति धा असि स्वधा असीति योयुप्यते शान्त्यै" इति ॥ खननेन निम्नोन्नतभावापादन क्रूर, समीकरणेन

३ ग–'अक' नास्ति ॥ ४ ङ–पुरीषका ।

३० २१ शे१–पुरीषवरम् । २२ ङ–स्वीयत्वाय ।

क्रूरमिव वा (३) एतत् करोति यद्वेदिं करोति धा असि स्वधा असीति योयुप्यते शान्त्यै प्रोक्षणीरा सादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतत्यै यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति ॥४॥

[भजति प्रजापतिर्न वै त्रयस्त्रिंशच्च ।]

क्रूरम् । इव । वै (३) । एतत् । करोति । यत् । वेदिम् । करोति । धा । असि । स्वधेति स्व धा । असि । इति । योयुप्यते । शान्त्यै । प्रोक्षणीरिति प्र उक्षणीः । एति । सादयति । आपः । वै । रक्षोघ्नीरिति रक्षः-घ्नीः । रक्षसाम् । अपहत्या इत्यप हत्यै । स्फ्यस्य । वर्त्मन् । सादयति । यज्ञस्य । संतत्या इति सं तत्यै । यम् । द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ॥ ४ ॥ ५

[मैस ८ १ १०, कास २५ ४, ३१ ८, कपिस ३९ १, ४७ ८, शब्रा १ २ ४४-५, द्र तैब्रा ३ २ ९] १०

क्रूरमिति । हिंसारूपमेतत् । ⁵योयुप्यते समीकरोति । ⁵युप विमोहने । शान्त्या इति समीकरणनाशात् तुल्यतापादनात्, 'धा असि' इत्यादिस्तुतेश्च ॥ प्रोक्षणीरा सादयतीति ⁵॥ गतम् । ⁶अर्पयति । "अर्तिह्री°" (पा ७ ३ ३६) इत्यादिना पुक् ॥

इति द्वितीये षष्ठे चतुर्थोऽनुवाकः ॥

तच्छान्तिर्भवति । हे वेदे, ²⁴धा ²⁵असि धारयिष्यसि । ²⁴सदेतद्विशेष्यते– ²⁵स्वधा इति । स्व स्वरूप १५ धर्हिरादिक ²⁵धारयन्तीत्यर्थः ॥

प्रोक्षणीरिति ॥ पञ्चम सूत्रकारेण–"प्रोक्षणीरभिपूर्योदञ्चन् स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन् सादयति" (आप श्रौ २ ३ १२) इति, तदेतद्विधत्ते–'प्रोक्षणीरा सादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतत्यै' इति ॥ ²⁶अर्थविधिप्रस्तावे– "तानि ह वा एतानि रक्षांसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति" (तैआ २ २ १) इति ²⁷श्रुतत्वादपां २० रक्षोघ्नत्वम् । स्फ्यरेखाया अविच्छिन्नत्वात् तत्र सादनं ²⁸यज्ञस्य अविच्छेदाय भवति ॥

यमिति ॥ सादनकाले द्वेष्यस्य पाप्मनोऽग्निर्विनाशध्यानं विधत्ते– 'यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति' इति ॥ ²⁸संयोजयतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥ २५

५-५ तड ख हो–'युप विमोहने ... णीरा सादयति' नास्ति। ६ मै४–'अर्पयति' इत्यस्यानन्तरं 'प्रापयति'।

२४ ड ड१–सदेव विशिष्यते । २५ ड–'धारयन्तीत्यर्थः' नास्ति, इ क ओ ना हा–धारयिष्यसीत्यर्थः । २६ ड१–अर्थविधानप्रसङ्गे, ड श होर–अन्य विधानप्रसङ्गे । २७ आ क ड–श्रुतत्वादेपा । २८ आ क–योज° । ३०

ब्रह्मवादिनो वदन्त्यद्भिर्हवी॑ᳪषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवी॑ᳪषि प्रोक्षति ब्रह्मणाऽप इध्माबर्हिः प्रोक्षति मेध्यमेवैनत् करोति वेदिं प्रोक्षत्यृक्षा वा एषाऽलोमकाऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति

---

ब्रह्मवादिन इति ब्रह्म वादिनः । वदन्ति । अद्भिरित्यत् भिः । हवीᳪषि । प्रेति ।
५ औक्षीः । केन । अपः । इति । ब्रह्मणा । इति । ब्रूयात् । अद्भिरित्यत् भिः । हि । एव ।
हवीᳪषि । प्रोक्षतीति प्र - उक्षति । ब्रह्मणा । अपः । इध्माबर्हिरितीध्मा - बर्हिः । प्रेति । उक्षति ।
मेध्यम् । एव । एनत् । करोति । वेदिम् । प्रेति । उक्षति । ऋक्षा । वै । एषा । अलोमका ।
अमेध्या । यत् । वेदिः । मेध्याम् । एव । एनाम् ।

---

ब्रह्मवादिन इत्यादि ॥ अध्वर्युः पर्यनुयुज्यते । ब्रह्मणेति । "प्रोक्षिताः स्थ" (तैस १ १ ५)
१० इति मन्त्रेण । कीदृशमिदं ब्रह्मणा अपां प्रोक्षणम्' अप्रोक्षणमेवेदमुक्तं भवति, मन्त्रोच्चारणमात्रमेव क्रियते इत्यत आह– अद्भिर्ह्येवेत्यादि । यस्मात् [v]अद्भिः हविषां प्रोक्षणद्वारेण मेध्यत्वं क्रियत [v]इति [v]ब्रह्मणा अपि तदपामिति । तस्मात् [v]ब्रह्मणा [v]इति उत्तरं [v]ब्रूयात् इति ॥

इध्माबर्हिरित्यादि ॥ छान्दसं पूर्वोत्तरयोर्युगपत् प्रकृतिस्वरत्वम् । ऋक्षा वा एषेति । [v]ऋक्षा तृणादिरहिता स्थली [v]एषा [v]वेदिः मूलादिच्छेदनेन ऋक्षा [v]अलोमका उत्सलोमा [v]अमेध्या, तस्मात्
१५ प्रोक्षणेन [v]मेध्याम् [v]एव [v]एनां [v]करोति । [v]पावकादित्वादित्वाभावः (द्र पाभा ७ ३ ४५ वार) ॥

---

चतुर्थे वेदिनिर्माणमशेषेण [1]प्रकीर्तितम् ॥

अथ [2]पञ्चमे तस्या वेद्या बर्हिर्विषयप्रयोगो [3]विधीयते ॥

ब्रह्मवादिन इति ॥ तत्र बर्हिषः प्रोक्षणं विधातुं प्रस्तौति– 'ब्रह्मवादिनो वदन्त्यद्भिर्हवीᳪषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवीᳪषि प्रोक्षति ब्रह्मणाऽप' इति ॥ हेऽध्वर्यो, युष्मदर्थं
२० [v]हवीᳪषि त्वम् [v]अद्भिः [v]प्रौक्षीः प्रोक्षितवानसि । [v]केन अन्येन द्रव्येण [v]द्रव्येणेमा [v]अपः प्रोक्षितवानसि [v]इति ब्रह्मवादिभिः पृष्टेऽध्वर्युः [v]ब्रह्मणा मन्त्रेण [v]इति उत्तरं [v]ब्रूयात्, यस्मादेतदुभयं प्रोक्षणं तथैव वर्तते । अत एव मन्त्रव्याख्याने श्रूयते– "प्रोक्षिताः स्थेत्याह । तेनाऽपः प्रोक्षिताः" (तैब्रा ३ २ ५) इति । तेन मन्त्रोच्चारणेनेत्यर्थः ॥

इध्माबर्हिरिति ॥ इदानीं विधत्ते– 'इध्माबर्हिः प्रोक्षति मेध्यमेवैनत् करोति' इति ॥
२५ [v]एनत् इध्मा (ध्म) बर्हिश्चत्युभयम् ॥

---

१. तैर है तम् । ० [संभावितोऽयं पाठः] तैत्रि–पावकादा (?) – त्वादित्वाभाव, तै–पावकाद [इत्यादि] त्वादित्वाभाव, मै८–पावकादित्वादुत्वाभाव, हो–पावकादित्वादित्वाभाव ते–पावकादित्वादित्वाभाव ।

---

१. आ क–प्रशंसितम् । २. अ इ उ ओ ना पा हा–'पञ्चमे' नास्ति । ३. आ क–अभिधीयते ।
३० ४. द–द्रव्येणेद ।

दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रो(१)क्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति क्रूरमिव वा एतत् करोति यत् खनत्यपो नि नयति शान्त्यै पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेवैनं करोतीयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन संमितं बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः

करोति । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । इति । बर्हिः । आसाद्येत्या सा॒द्य । प्रेति (१) । उक्षति । एभ्यः । एव । एनत् । लोकेभ्यः । प्रेति । उक्षति । क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अप । नीति । नयति । शान्त्यै । पुरस्तात् । प्रस्तरमिति प्र स्तरम् । गृह्णाति । मुख्यम् । एव । एनम् । करोति । इयन्तम् । गृह्णाति । प्रजापतिनेति प्रजा पतिना । यज्ञमुखेनेति यज्ञ-मुखेन । समितमिति सं मितम् । बर्हिः । स्तृणाति । प्रजा इति प्र-जा । वै । बर्हिः । पृथिवी । वेदिः । ५ १०

दिवे त्वेत्यप्रादारभ्य प्रोक्षणम् ॥ क्रूरमित्यादि । गतम् ॥

वेदिमिति ॥ [5]इध्माबर्हिवत् वेदेरप्यद्भि[5] प्रोक्षणं विधत्ते– 'वेदिं प्रोक्षत्यृक्षा वा एषाऽलोमकाऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति' इति ॥ लोमरहितत्वात् [6]ऋक्षा परुषा सती यागयोग्या न भवति । तस्माद्योग्यत्वाय प्रोक्षणम् ॥

दिव इति ॥ यदुक्तं सूत्रकारेण– "अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम्" (आपश्रौ २ ८ १) इति, तदेतद्विधत्ते– 'दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति' इति । 'दिवे त्वा' (तैसं १ १ ११) इत्यादिमन्त्रास्मत्काण्ड एव व्याख्याता ॥ १५

क्रूरमिति ॥ यदुक्तं सूत्रकारेण– "प्रोक्षणीशेषं स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संततं [7]निनीय" (आपश्रौ २ ८ ३) इति, तदेतद्विधत्ते– 'क्रूरमिव वा एतत् करोति यत् खनत्यपो नि नयति शान्त्यै' इति ॥ २०

पुरस्तादिति ॥ प्रस्तरस्य धारणं विधत्ते– 'पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेवैनं करोति' इति । [8]वेदेः पूर्वभागे ब्रह्मा यजमानो वा [9]प्रस्तरं धारयेत् । तच्च सूत्रे [9]अभिहितम्– "ब्रह्मा प्रस्तरं धारयति यजमानो वा" (आपश्रौ २ ८ ६) इति ॥

इयन्तमिति ॥ धारणाय [10]मुष्टिप्रमाणमौद्धत्य [11]हस्तेनाभिनीय विधत्ते– 'इयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन संमितम्' इति ॥ वेदिरुक्तवद्व्याख्येयम् ॥ २५

बर्हिरिति ॥ [12]वेद्याः स्तरणं विधत्ते– 'बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रति ष्ठापयति' इति ॥

५–५ अ इ जो पा हा–इध्माबर्हिर्वेदेश्चाद्भिः, आ क–इध्माबर्हिः प्रोक्षणवद्वेदेरद्भिः । ६ ङ–'बर्हिः' नास्ति । ७ आ क ङ हो१ निनयेत् । ८ आ क–वेदि° । ९ ङ१–निहितम् । १० ङ °प्रमाणमानत्वम् । ११ ङ१–°भिधीय, ङ–°भिनियमम् । १२–वेद्या° । ३०

प्रजा एव पृथिव्यां प्रतिष्ठापयत्यनतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोत्यु(२)त्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरोऽन्तर्दधाति व्यावृत्त्या अनक्ति हविष्कृतमेवैनꣳ सुवर्गं लोकं गमयति

५ प्रजा इति प्र-जाः। एव। पृथिव्याम्। प्रतीति। स्थापयति। अनतिदृश्नमित्यनति-दृश्नम्। स्तृणाति। प्रजयेति प्र-जया। एव। एनम्। पशुभिरिति पशु-भिः। अनतिदृश्नमित्यनति-दृश्नम्। करोति (२)। उत्तरमित्युत्-तरम्। बर्हिषः। प्रस्तरमिति प्र-स्तरम्। सादयति। प्रजा इति प्र-जा। वै। बर्हिः। यजमानः। प्रस्तर इति प्र-स्तरः। यजमानम्। एव। अयजमानात्। उत्तरमित्युत्-तरम्। करोति। तस्मात्। यजमानः। अयजमानात्।
१० उत्तर इत्युत्-तरः। अन्तः। दधाति। व्यावृत्त्या इति वि-आवृत्त्यै। अनक्ति। हविष्कृतमिति हविः-कृतम्। एव। एनम्। सुवर्गमिति सुवः-गम्। लोकम्। गमयति।

---

अनतिदृश्नमिति ॥ अनतिविरलम्।

उत्तरं बर्हिष इत्यादि ॥ गतम्।

---

अनतिदृश्नमिति ॥ स्तरणे नीरन्ध्रत्वं विधत्ते– 'अनतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनति-
१५ दृश्नं करोति' इति ॥ अतिशयेन भूमेर्दर्शनमतिदृश्नं तद्यथा न भवति तथा स्तृणीयात्। तेन [13]यजमानं प्रजया पशुभिः च सर्वतो वेष्टितत्वादनतिस्पष्टं [14]द्रष्टुमयोग्यं करोति[14] ॥

उत्तरमिति ॥ स्तीर्णस्य बर्हिष उपरि प्रस्तरसादनं विधत्ते – 'उत्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः' इति ॥ स्तरणार्थस्य बर्हिष उपसर्जनत्वात् प्रजात्वम्। प्रस्तरस्य [16]प्रधानत्वात् यजमानत्वम् ॥

२० अन्तरिति ॥ अधस्तादास्तीर्णस्य बर्हिष उपरिष्टात् साद्यमानस्य [17]च प्रस्तरस्य मध्ये [18]तिर्यक्तया द्वाभ्यां[18] दर्भाभ्यां व्यवधानं विधत्ते– 'अन्तर्दधाति व्यावृत्त्यै' इति। तदेतदन्तर्धानं मन्त्रकाण्डोक्तेन "विशो यन्त्रे स्थः" (तैसं १·१·११) [19]इत्यनेन मन्त्रेण क्रियते ॥

अनक्तीति ॥ प्रस्तरस्याऽऽसादनप्रसङ्गेन बुद्धिस्थान् प्रहरणकालीनान् विशेषान् विधित्सुरादौ प्रस्तरस्य घृतेनाञ्जनं विधत्ते– 'अनक्ति हविष्कृतमेवैनꣳ सुवर्गं लोकं गमयति' इति ॥ प्रस्तरस्य
२५ दर्भमुष्टेः [20]आसादनीयद्रव्यत्वेन स्वरूपतो हविष्ट्वाभावेऽप्यनेन हविष्ट्वं कृतं [21]भवतीति [22]तादृशम् एनं प्रस्तरं स्वर्गप्राप्तियोग्यं करोति ॥

---

१३. ट.शृ–यजमानः। १४–१४. ट,ट१.शृ–द्रष्टुमयोग्यो भवति। १५. आ.क–अपःस्थितत्वात्। १६. आ.क–प्रधानभूतत्वात्। १७. आ.क–'च' नास्ति। १८–१८. ट.ट१–तिर्यग्भ्याम्। १९. आ.क–इति। २०. आ.क–अनञ्जनीय"। २१. ट१–'इति' नास्ति। २२. ट१–तादृशमिमम्।

त्रेधाऽनक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति न प्रति शृणाति यत्
प्रतिशृणीयादनूर्ध्वंभावुकं यजमानस्य स्यादुपरीव प्र हरत्यु (३)परीव हि सुवर्गो
लोको नि यच्छति वृष्टिमेवास्मै नि यच्छति नात्यग्रं प्र हरेद्यदत्यग्रं
प्रहरेदत्यासारिण्यध्वर्योर्नाशुका स्यात्-

त्रेधा । अनक्ति । त्रयं । इमे । लोका । एभ्य । एव । एनम् ।    ५
लोकेभ्य । अनक्ति । न । प्रतीति । शृणाति । यत् । प्रतिशृणीयादिति प्रति शृणीयात् ।
अनूर्ध्वंभावुकमित्यनूर्ध्वं - भावुकम् । यजमानस्य । स्यात् । उपरि । इव । प्रेति । हरति (३) ।
उपरि । इव । हि । सुवर्ग इति सुव -ग । लोक । नीति । यच्छति । वृष्टिम् । एव । अस्मै ।
नीति । यच्छति । न । अत्यग्रमित्यति-अग्रम् । प्रेति । हरेत् । यत् । अत्यग्रमित्यति-अग्रम् ।
प्रहरेदिति प्र-हरेत् । अत्यासारिणीत्यति-आसारिणी । अध्वर्यो । नाशुका । स्यात् ।    १०

अनक्ति– प्रहरणकाले स्रुक्षु ॥

न प्रति शृणातीति– नाकृष्य पुन प्रक्षिपति । अनूर्ध्वंभावुकम् अनूर्ध्वलोके प्रभवम् ।
छान्दस उकञ् ॥

उपरीयादि ॥ गतम् । नियच्छति न्यग्भूत पातयति । अत्यग्रमिति । अग्रायणेन न
प्रहरेत् । अत्यासारिणीति । अत्यासारशीला अध्वर्यो नाशहेतु वृष्टि स्यात् ।    १५

त्रेधेति ॥ यदुक्तं सूत्रकारेण "स्रुक्षु प्रस्तरमनक्त्यक्तं रिहाणा इति जुह्वामग्रं प्रजां योनि मिति उपभृति मध्यमाप्यायन्तामाप ओषधय इति ध्रुवायां मूलमेव त्रि" ( आपश्रौ॰ ३.१३.१–२ ) इति, तदेतद्विधत्ते – 'त्रेधाऽनक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति' इति ॥

नेति ॥ प्रस्तरस्य प्रहरणे हेयोपादेयौ प्रकारौ विधत्ते– 'न प्रतिशृणाति यत् प्रतिशृणीयादनूर्ध्वंभावुकं यजमानस्य स्यादुपरीव प्र हरत्युपरीव हि सुवर्गो लोक' इति ॥ अङ्गारेषु [२२] आकर्षणेन    २०
प्रक्षेप [२३] प्रतिशरणं, तं न कुर्यात् । यदि कुर्यात् यजमानस्य अनूर्ध्वंभावुकं स्यात्, स्वर्गप्राप्तिसाधनं न भवेदित्यर्थ । तस्माद्धस्तमुत्तानं कृत्वा प्रस्तरमग्ने उपरि एव प्रहरेत् स्वर्गलोकस्य उपरि एव वर्तमानत्वात् तत्प्राप्तिसाधनं भवति ॥

नीतीति ॥ प्रस्तरयुक्तस्य हस्तस्याधोमुखत्वं विधत्ते– 'नि यच्छति वृष्टिमेवास्मै नि यच्छति' इति ॥ हस्तो न्यग्भूतो यथा भवति तथा कुर्यात् । तेन यजमानार्थं वृष्टिम् एव न्यग्भूतां करोति ॥    २५

नेति ॥ प्रस्तराग्रस्य [२४]आहवनीयातिक्रमं निषेधति– 'नात्यग्रं प्र हरेद्यदत्यग्रं प्रहरेदत्यासारिण्यध्वर्योर्नाशुका स्यात्' इति ॥ अतिक्रान्तमग्रं यस्य [२५]तत् अत्यग्रम् । तद्यथा भवति तथा न प्रहरेत्, किं तु प्रस्तराग्रम् [२६] आहवनीयाभ्यन्तर एव अन्तर्भावयेत् [२६] । अत्यग्रप्रहरणे हि वृष्टि अत्यासारिणी [२७]भर्ता

२२–२३ आ क–स्रुक्षु प्रतिक्षेप । २४ ड ह१–°यातिक्रमणम् । २५ ड–एतत् ।
२६–२६ आ क–आहवनीयस्योत्तरत एव नयेत् हो१–आहवनीयान्तर एवान्तर्धापयेत् ड–आहवनीयान्तरत    ३०
एवान्तर्धापयेत् । २७ आ–भवति ।

न पुरस्तात् प्रत्यस्येद्यत् पुरस्तात् प्रत्यस्येत् सुवर्गाल्लोकाद्यजमानं प्रति नुदेत् प्राञ्चं प्र हरति यजमानमेव सुवर्गं लोकं गमयति न विष्वञ्चं वि युयाद्यद्विष्वञ्चं वियुयात् (४) स्त्र्यस्य जायेतोर्ध्वमुद्यौत्यूर्ध्वमिव हि पुंसः पुमानेवास्य जायते

न । पुरस्तात् । प्रतीति । अस्येत् । यत् । पुरस्तात् । प्रत्यस्येदिति प्रति अस्येत् । सुवर्गादिति सुवः गात् । लोकात् । यजमानम् । प्रतीति । नुदेत् । प्राञ्चम् । प्रेति । हरति । यजमानम् । एव । सुवर्गमिति सुवः गम् । लोकम् । गमयति । न । विष्वञ्चम् । वीति । युयात् । यत् । विष्वञ्चम् । वियुयादिति वि - युयात् (४) । स्त्री । अस्य । जायेत । ऊर्ध्वम् । उदिति । यौति । ऊर्ध्वम् । इव । हि । पुंसः । पुमान् । एव । अस्य । जायते ।

न पुरस्तादिति । पुरस्तात् प्रतीचीन न प्रक्षिपेत् । "पराङिव हि सुवर्गः" (तैब्रा १ ६ ३ ४) इति पुरस्तात् प्रत्यसनेन यजमान स्वर्गात् प्रतिनिवर्तितो भवति । प्राञ्चमित्यादि । गतम् । न विष्वञ्चमिति । विषूचीनाग्र न निक्षेपयेत् । स्त्र्यस्येति । विषूचीनत्वात् स्त्रीव्यञ्जनस्य । ऊर्ध्वमिवेति । पुंव्यञ्जनस्योर्ध्वत्वात् ॥

तस्य अध्वर्यो विनाशनशीला स्यात् । अत्याधिक्येन वर्षणमतिसारिणीव तेन सस्यानि फलितुमयोग्यानि भवन्ति, सोऽयमध्वर्योर्नाश । अथवा व्याधिविशेषेणाध्वर्युर्नश्येत ॥

१५ नेति ॥ पूर्वस्यां दिशि प्रस्तरस्य मूल पश्चिमायामग्रम् इत्येवविध प्रहरण निषेधति – 'न पुरस्तात् प्रत्यस्येद्यत् पुरस्तात् प्रत्यस्येत् सुवर्गाल्लोकाद्यजमान प्रतिनुदेत्' इति ॥

प्राञ्चमिति ॥ पश्चिमायामेव निषिध्य प्रागग्रस्य विधत्ते – 'प्राञ्च प्रहरति यजमानमेव सुवर्गं लोकं गमयति' इति ॥

नेति ॥ प्रस्तरगताना दर्भाग्राणा सर्वतो विक्षेपण निषेधति 'न विष्वञ्च वि युयाद्यद् २० विष्वञ्च वियुयात् स्त्र्यस्य जायेत' इति ॥ विष्वञ्च नानादिग्गताग्र यथा भवति तथा न वियुयात् न विक्षेपयेत् । तद्विक्षेपणे यजमानस्य स्त्र्यपत्यमेव जायेत । स्त्रीव्यञ्जनस्य विश्लिष्टरूपत्वात् ॥

ऊर्ध्वमिति ॥ दर्भाग्राणा समूहरूपेणैकीभाव विधत्ते – 'ऊर्ध्वमुद्यौत्यूर्ध्वमिव हि पुंसः पुमानेवास्य जायत' इति ॥ ऊर्ध्वं दण्डाकारेणैकाग्र यथा भवति तथा उद्यौति उत्कर्षेण मिश्रयेत् । पुंसः व्यञ्जनमूर्ध्वाकार भवति, अतोऽस्य पुमान् एव जायते । सोऽयमाग्रीध्रस्य व्यापार । तथा च २५ सूत्रकार आह – "शिरःप्रभृतिनाऽऽग्नीध्रोऽविष्वञ्च प्रस्तरमूर्ध्वमुद्यौति" (आपश्रौ ३ ७ ३) इति ॥

3 हो-प्रथमेन ।

१८ ... हा१-पश्चिमाया दिश्यग्र, क ना-पश्चिमस्यामग्र, अ इ जो पा हा-पश्चिमस्याम°, उ-पश्चिमस्याम°(?) । २० इ१-'प्रहरण' नास्ति । ३१ अ इ उ जो ना पा हा-अग्राणा, हो१-दर्भाणा । ३२ अ इ उ जो ना पा हा-विश्लेषमिश्रण । ३३ इ१ ह-नानादिग्गताग्र ट-नानादिग्गताग्रम् । ३३ हो१-तद्विक्षेपणा । ३० ३४ इ१-'एव' नास्ति । ३५ इ१-°रेणैकाग्र्यम् । ३६ आ क-पुमा । ३७ आ क-तोऽस्य ।

वि वा एतद्यजमानो लिशते यत् प्रस्तरं योयुप्यन्ते बर्हिरनु प्र हरति शान्त्यै
अनारम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवाऽसीतीमामभि
मृशतीयं वै ध्रुवाऽस्यामेव प्रति तिष्ठति

वीति । वै । एतत् । यजमानः । लिशते । यत् । प्रस्तरमिति प्र - स्तरम् । योयुप्यन्ते । बर्हिः ।
५ अनु । प्रेति । हरति । शान्त्यै । अनारम्भण इत्यना - रम्भणः । इव । वै । एतर्हि । अध्वर्युः ।
सः । ईश्वरः । वेपनः । भवितोः । ध्रुवा । असि । इति । इमाम् । अभीति ।
मृशति । इयम् । वै । ध्रुवा । अस्याम् । एव । प्रतीति । तिष्ठति ।

वि वा एतदिति ॥ प्रस्तरस्य यजमानत्वात् तस्य विश्लथनेन [6]यजमानः [6,7]विलिशते
विनाश्यते । लिश अल्पीभावे, तौदादिकः । तत्र [7]बर्हिरनुप्रहरणेन स्वस्य परिह्वतत्वात् तच्छान्ति
१० हुख यजमानस्य ॥

अनारम्भण इत्येत्यादि ॥ अध्वरस्य नेतृत्वाच्चलितत्वादप्रतिष्ठितत्व वेपनत्वम् ॥

वीति ॥ सुश्रु प्रस्तरस्याञ्जनं कृत्वा तन्नैकं तृणं [44]पृथक्कृत्य [45]प्रज्ञातमवस्थापयेत् । तस्येदानीम्
अग्नौ प्रहरणं विधत्ते– 'वि वा एतद्यजमानो लिशते यत् प्रस्तर योयुप्यन्ते बर्हिरनु प्र हरति शान्त्यै ' इति ।
प्रस्तरमूलमुत्क्षिपन्तीति [46]यत् एतेन [46]यजमानः [46]विलिशते विशेषेणाल्पीभवति रोगेण कृशो भवतीत्यर्थः ॥
१५ प्रज्ञातत्वेन स्थापितस्य बर्हिषोऽनुप्रहरणे तस्याल्पीभावस्य [47]शान्तिर्भवति ॥ तदेतद्बर्हिष्प्रहरणं सूत्रकारेण
स्पष्टीकृतम्– " आयुषे त्वेत्यन्तस्य तृणमपादाय प्रज्ञातं निधाय " ( आपश्रौ ३·६·५ ) इति, " [47]अथैन-
माहाऽग्नीधोऽनुप्रहरेति । यत् प्रस्तरात् तृणमपात्तं तदनुप्रहरति " ( आपश्रौ ३·७·४–११ ) इति [48]च ॥

अनारम्भण इति ॥ मन्त्रकाण्डे पठितेन मन्त्रेण भूमिस्पर्शनं विधत्ते – ' अनारम्भण इव वा
एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवाऽसीतीमामभि मृशतीयं वै ध्रुवाऽस्यामेव प्रति तिष्ठति न वेपनो
२० भवति ' इति ॥ [49]एतर्हि प्रस्तरप्रहरणादूर्ध्वं प्रस्तररूपस्य यजमानस्य [49]स्वर्गेऽवस्थितत्वात् [50]अध्वर्युः
[50]अनारम्भणः [50]इव निरालम्बन इव भवति । [50]सः च [50]वेपनः [50]भवितोः [50]ईश्वरः [51]पालकस्वामिराहित्यभयेन
सर्वदा कम्पनशीलो भवितुं समर्थो भवति, निरन्तरं [51]भीतः कम्पनः[52] इत्यर्थः । ' ध्रुवाऽसीति ' मन्त्रेण
[53]भूमिस्पर्शे सति[53] लब्धप्रतिष्ठो न कम्पते ॥

६ तं.रे.मै.मै–८ लिशते, नि लिशते । ७. ग.हो–अनुप्रहरणेन ।

२५ ४४ ङ–प्रस्त्र । ४५. आ.क–प्रज्ञातं स्थापयेत् । ४६. ङ–°भवन्तीति । ४७. उ.जो.ना.पा.
दा–अथैनमाग्नीधो° । ४८. ङ–'च' । ४९. ङ–स्वर्गगतत्वात्; ङ१–स्वर्गे गतत्वात् । ५०. आ.क
–[illegible] । ५१–५२. आ.क–भवति कम्पमानः । ५३. आ.क–भूमिस्पर्शनेन ।

न वेपनो भवत्यगाऽ३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्य(६)ग्नावग्निं गमयेन्निर्यजमान-सुवर्गाल्लोकाद्भजेदगन्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति ॥ ५ ॥

[ आसाद्य प्राऽस्नतिदश्च करोति हरति विपयाधजमानमेनाग्निरिति सप्तदश च ]

न । वेपनः । भवति । अगाऽ३न् । अग्नीदित्यग्नि इत् । इति । आह । यत् । ब्रूयात् । अगन् । अग्निः । इति । अग्नौ । अग्निम् । गमयेत् । निरिति । यजमानम् । सुवर्गादिति सुवः -गात् । लोकात् । भजेत् । अगन् । इति । एव । ब्रूयात् । यजमानम् । एव । सवर्गमिति सुवः गम् । लोकम् । गमयति ॥ ५ ॥ ५

[ मैस ३ ८ ५, ६, काम २५ ५, कपिस ३ २, शब्रा १ ३ ३ २-१०, ८ ३ ११-२० ]

अगानग्नीदिति ॥ हे अग्नीत् किम् अगात् अगमत् प्रस्तरम् इति पृच्छ यध्वर्युराग्नीध्रम् । गमेर्लुङि " मन्त्रे घस° " (पा २ ४ ८०) इति च्लेर्लुक् । " मो नो धातो " (पा ८ २ ६४) । प्रश्ने उदात्तप्लुतः । तस्यासिद्धत्वादट उदात्तत्वेन समावेशः । अग्नीदिति आमन्त्रितानुदात्तत्वम् (पा ८ १ १९) । अथाऽऽग्नीध्रो यदि प्रतिब्रूयात् अगन् अग्नि प्रस्तरजन्मा । यद्वा– अग्निः प्रस्तरं परिगतवान् इति । तदा प्रस्तराग्निम् अग्नौ प्रवेशयेत् । ततश्च यजमानं स्वर्गात् लोकात् निर्भजेत्, तस्मात् अगन् इति एव ब्रूयात् विनैवाग्निशब्दम् । यजमानं स्वर्गं गमयति ॥ १०

इति द्वितीये षष्ठे पञ्चमोऽनुवाकः ॥ १५

अगानिति ॥ यदुक्तं सूत्रकारेण– " अथैनमाहाऽऽग्नीध्र सवदस्वेति । अगान्नग्नीदित्यध्वर्युः । अगन्नित्याग्नीध्रः " (आपश्रौ ३ ७ ८-९) इति अनयोः प्रश्नोत्तरमन्त्रयोः उत्तरमन्त्रस्य शाखान्तरपाठनिराकरणपूर्वकं मन्त्रद्वयोच्चारणं विधत्ते – ' अगाऽ३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानः सुवर्गाल्लोकाद्भजेदगन्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति ' इति ॥ हे अग्नीत्, अगात् हे आग्नीध्र, किं यजमानः स्वर्गं लोकं गतवान् ? प्रश्नद्योतनार्थेयं प्लुतिः । ' अगन्नग्निः ' इत्येष शाखान्तरगतो मन्त्रपाठस्तस्मिन् पाठे वह्निः स्वर्गंगत इत्यर्थो भवति, तदयुक्तम् । आहवनीयः स्वर्गत्वेन विवक्षितः । तस्मिन् स्वर्गरूपे अग्नौ तम् अग्निम् एव प्रापितवान् भवति । यजमानं च स्वर्गात् लोकात् निःसारितवान् भवति । तस्मात् ' अग्निः ' इत्येतत्पदं मन्त्रे परित्यज्य ' अगन् ' इत्येवमेव ब्रूयात् । तेन यजमानः स्वर्गं लोकं गतवानित्यर्थो लभ्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥

८–८ तइ–अगानग्नीदिति अगाहाग्नीतीति (१) हे अग्ने वत्किमाहान्य । अग्ने त्व किमाहान्यत् । ९–९ ल हो–अयाग्नि ।

५३ अ इ उ ड१ ओ पा हा–अथैनमाग्नीध्र । ५४ ... ५५ आ क–' अगान् ' नास्ति । ५६ आ क– ' लोक ' नास्ति । ... इ–तन्न युक्तम् । ५८ अ इ उ ओ ना ना पा हा–तत् । ५९

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो (१) हि

५ अग्ने । त्रयः । ज्यायाꣳस । भ्रातर । आसन् । ते । देवेभ्य । हव्यम् । वहन्त । प्रेति । अमीयन्त । सः । अग्नि । अबिभेत् । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । स । अपः । प्रेति । अविशत । तम् । देवता. । प्रैषमिति प्र एषम् । ऐच्छन् । तम् । मत्स्य । प्रेति । अब्रवीत् । तम् । अशपत् । धियाधियेति धिया - धिया । त्वा । वध्यासु । य । मा । प्रेति । अवोच । इति । तस्मात् । मत्स्यम् ।
१० धियाधियेति धिया - धिया । घ्नन्ति । शप्त (१) । हि ।

अग्नेस्त्रय इत्यादि ॥ गतम् । इत्थ वाव स्य इति । आत्मानमेव स एष इति निर्दिशति । [v]सः [v]निलायत निरगच्छत् । "उपसर्गस्यायतौ" (पा ८·२·१९) इति लत्वम् । सोऽप प्राविशदित्यादि । [1]गतम । अप्सु प्रविष्टमदृश्यतां गतम् । [v]प्रैषम् इष्टविषये प्रेषितुम् [v]ऐच्छन् [v]देवता, तदर्थं तम् अन्विच्छन्ति स्मेति यावत् । छान्दसो णमुल् । अथाप्सु स्थितः कश्चित् [v]मत्स्यः
१५ [v]तम् अग्निं [v]प्राब्रवीत् – इह [2]वसतीति । अथाग्निर्मत्स्यम् [v]अशपत् [v]य. त्वम् मामदृश्य देवताभ्य [v]प्रावोच. [v]त त्वा सर्वेऽपि [v]धियाधिया कर्मणा जालग्रहणादिना व्यापारेण [3v]वध्यासु पुरुष व्यापारेणैव तव प्राणवियोगोऽस्त्विति । बुद्धियोगो वा धीरित्युच्यते । [v]तस्मात् शप्तत्वादद्यापि तथैव [4v]म्रियते मत्स्यः ॥

प्रयोगो बर्हिषः स्पष्टं पञ्चमे प्रतिपादितः ॥

२० अथ षष्ठेऽनुवाक उपांशुयाजस्विष्टकृतौ वक्तव्यौ ।

अग्नेरिति ॥ तत्राऽऽदौ तावत् परिधीनां परिधानं विधातु प्रस्तौति – ‘अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो हि तमन्वविन्दन् तमब्रुवन्नुप न आ वर्तस्व हव्यं नो
२५ वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातॄणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति’ इति ॥ यथा [v]भ्रातरः [v]त्रय [1]हविः [v]वहन्तः [1]मृता [v]इत्थम् एव [2v]स्यः [v]आर्तिम् [v]आऽरिष्यति [v]इति यो [1]हविर्वहति स मरणं [4]प्राप्नोतीति

१. मे–‘गतम्’ नास्ति । २. लं–वसन्तीति । ३. ल हो–‘वध्यासुः’ नास्ति । ४ तं१. त्रि.मे.ल.हो–म्रियते ।

३० १–१. क.ख.ट१.ग्र.हो१–हविर्वहनेन । २. ट.हा.हो१–सः । ३ ट.ग्रं.हो१–‘हविः’ नास्ति । ४. ट.ट१.ग्रं–प्राप्स्यतीति ।

तमन्वविन्दन् तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति परिधीन् परि दधाति रक्षसामपहत्यै

तम्। अन्विति। अविन्दन्। तम्। अब्रुवन्। उपेति। नः। एति। वर्तस्व। हव्यम्। ५
नः। वह। इति। सः। अब्रवीत्। वरम्। वृणै। यत्। एव। गृहीतस्य। अहुतस्य।
बहिःपरिधीति बहिः-परिधि। स्कन्दात्। तत्। मे। भ्रातृणाम्। भागधेयमिति भाग-धेयम्।
असत्। इति। तस्मात्। यत्। गृहीतस्य। अहुतस्य। बहिःपरिधीति बहिः-परिधि।
स्कन्दति। तेषाम्। तत्। भागधेयमिति भाग-धेयम्। तान्। एव। तेन। प्रीणाति।
परिधीनिति परि-धीन्। परीति। दधाति। रक्षसाम्। अपहत्या इत्यप-हत्यै। १०

तमन्वविन्दन्नित्यादि॥ गतम्। स्कन्दादिति। लेटयाडागमः। असदित्यडागमः। तस्मात् परिधानं कर्तव्यं, रक्षसां च अपहत्यै भवति॥

भीतः अग्निः निलायत यथा देवैर्न ज्ञायते तथा निलीनोऽभूत्। निलीय चोदकमध्ये प्राविशत्। तम् उद्दिश्य देवता प्रकर्षेणान्वेषणं कर्तुम् ऐच्छन्। तदा जलस्थितः मत्स्यः तत्र स्थितमग्निं देवानामग्रे अब्रवीत्। ततोऽग्निः तं मत्स्यमेवम् अशपत् – हे मत्स्य, यः त्वं देवानामग्रे मामेव ज्ञापितवानसि पिशुनो भूत्वा १५
अभवो, तादृशं त्वां जालधारिणः कैवर्ताः धियाधिया वध्यासुः, तेन तेन जालादिना साधनेन, यद्वा- यदा यदा हन्तुं धीर्भवति तदा तदा रात्रावहनि वा वधं कुर्वन्त्विति। यस्मादेवं शप्तः तस्मात् मत्स्यं तदा तदा घ्नन्ति। मत्स्यमुखात् विज्ञातवन्तो देवाः तम् अग्निं प्रति अस्मत्समीपं समागच्छ, हव्यं चास्मदीयं वह इति अब्रुवन्। तदा सः अग्निः वरम् अवृणीत। स्रुचि गृहीतस्य हविषः सम्बन्धि यत् एव द्रव्यं होमात् पुरा परिधिभ्यो बहिः प्रच्यवेत तत् अस्मदीयानां भ्रातॄणां भागधेयम् २०
अस्तु इति। ततस्तथैव देवैर्वरो दत्तः। तेन स्कन्नेन तान् अग्निभ्रातॄन् यजमानः प्रीणाति॥

परिधीनिति॥ इदानीं विधत्ते– 'परिधीन् परिदधाति रक्षसामपहत्यै' इति॥ यस्मात् परिधिभ्यो बहिर्देशोऽग्नेर्भ्रातॄणामुपयुक्तस्तस्मात् परिधीन् अग्नेः परितः स्थापयेत्। तत् तु रक्षसाम् अपघाताय भवति॥

५ श्र.देवा, आ ड–'देवता' नास्ति। ६ हो१–जलचारिण, अ इ उ जो पा हा–जले २५
धारणार्थां, ना–जाले धारिण। ७ ड१–धिया बुद्ध्या। ८ अ इ उ जो ना पा हा कालादिना
९ हो१–'यद्वा' नास्ति। १० अ इ उ जो ना पा हा–'इति' नास्ति। ११ आ क ना–मत्स्यमुखेन,
अ इ उ जो पा हा–अन्यमुखेन। १२ आ क–विज्ञाते वह्नौ। १३ हा–'प्रति' नास्ति। १४ आ क–
असत्समीपे। १५ आ–ब्रुवे। १६ आ–'तदा' नास्ति, क–तथा। १७ क–वरमवृणोत्।
१८–१८ क–विगृहीतस्य। १९ अ इ उ पा–स्कन्नेन, जो हा–स्कन्देनेन, ना–अत स्कन्नेन। २० आ क– ३०
प्रीणयति। २१ ड श्र हो–'इदानीं' नास्ति। २२ ड ड१ हो१–वह्ने। २३ ड१–च।

सं॒ स्प॑र्शयति (२) रक्ष॑सा॒मन॑न्ववचाराय॒ न पु॒रस्ता॒त् परि॑ दधात्यादि॒त्यो ह्ये॑वोद्यन् पु॒रस्ता॑द्रक्षा॒ꣳस्यप॒हन्त्यू॒र्ध्वे स॒मिधा॒वा द॑धात्यु॒परि॑ष्टादे॒व रक्षा॒ꣳस्यप॑ हन्ति॒ यजु॑षा॒ऽन्यां तू॒ष्णीम॒न्यां मि॑थुन॒त्वाय॒ द्वे आ द॑धाति द्वि॒पाद्यज॑मानः॒ प्रति॑ष्ठित्यै

---

सम् इति॑ । स्प॒र्श॒य॒ति॒ (२) । रक्ष॑साम् । अन॑न्ववचारा॒येत्यन॑नु - अ॒व॒चा॒रा॒य॒ । न । पु॒रस्ता॑त् ।
५ परीति॑ । द॒धा॒ति॒ । आ॒दि॒त्य । हि । ए॒व । उ॒द्यन्नित्यु॑त् - यन् । पु॒रस्ता॑त् । रक्षा॑ꣳसि । अ॒प॒हन्तीत्य॑प - ह॒न्ति । ऊ॒र्ध्वे इति॑ । स॒मिधा॒विति॑ स॒म - इधौ॑ । एति॑ । द॒धा॒ति॒ । उ॒परि॑ष्टात् । ए॒व । रक्षा॑ꣳसि । अपेति॑ । ह॒न्ति॒ । यजु॑षा । अ॒न्याम् । तू॒ष्णीम् । अ॒न्याम् । मि॒थु॒न॒त्वायेति॑ मिथुन - त्वाय॑ । द्वे इति॑ । एति॑ । द॒धा॒ति॒ । द्वि॒पादिति॑ द्वि - पात् । यज॑मानः । प्रति॑ष्ठित्या॒ इति॒ प्रति॑ - स्थि॒त्यै॒ ।

---

संस्पर्शयतीत्यादि ॥ गतम् ॥

१० ऊर्ध्वे इत्यादि ॥ आधारविधिः । यजुषेति । " वीतिहोत्रं त्वा कवे " ( तैसं १·१·११) इति [५]दक्षिणाम् । यजुर्वेदाम्नानात् गायत्र्येव यजुरित्युच्यते । तेन विभिन्नलिङ्गद्वयसंयोगान्मिथुनत्वम्[६] ॥

---

समिति ॥ पश्चिमदिशि स्थापितस्य मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां संस्पर्शनं विधत्ते – 'सꣳ स्पर्शयति रक्षसामनन्ववचाराय' इति ॥ [२४]परिधीनां [२५]समीचीने स्पर्शे सति रक्षसां प्रवेष्टुं छिद्राभावादग्निसमीपे संचारो न भवति ॥

१५ नेति ॥ दिक्त्रयदृष्टान्तेन पूर्वस्यामपि दिशि प्रसक्तं परिधिं वारयति – 'न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यपहन्ति' इति ॥ रक्षसामपघातः परिधेः प्रयोजनं, तच्चाऽऽदित्योदयेनैव सिद्ध्यति ॥

ऊर्ध्वे इति ॥ आग्नेय्यामैशान्यां चाऽऽघारसमिधोः स्थापनं विधत्ते – 'ऊर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति' इति ॥ दक्षिणोत्तरपरिध्योरग्रदेशे [२६]स्थापनीये ते[११] ऊर्ध्वे । तेन
२० स्थापनेन दिक्चतुष्टय इवोर्ध्वदेशेऽपि रक्षसामपघातो भवति ॥

यजुषेति ॥ तयोर्दक्षिणसमिधः स्थापने मन्त्रकाण्डाम्नातं 'वीतिहोत्रं त्वा कवे' ( तैसं १·१·११ ) इति मन्त्रं विधत्ते – 'यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय' इति ॥ स्त्रीपुरुषयोरिव समन्त्रकामन्त्रकयोः परस्परं वैलक्षण्यात् मिथुनत्वम् ॥

द्वे इति ॥ समिधो द्वित्वं प्रशंसति – 'द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै' इति ॥

---

२५ ५. लं.हो–दक्षिणा । ६. मै४–'मिथुनत्वम्' इत्यस्यानन्तरं 'द्वे इत्यादि गतम्' ।

---

२४ क.द१.ग्रं.हो१–'परिधीनां' नास्ति । २५. अ.इ.उ.चो.ना.पा.हा–'समीचीने' नास्ति । २६. द१.ग्रं–स्थापनीयत्वात्; क–स्थापनीये इति ।

ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां (२) पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वायाथो

---

ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । स । तु । वै । यजेत । यः । यज्ञस्य । ५ आर्त्या । वसीयान् । स्यात् । इति । भूपतय इति भू पतये । स्वाहा । भुवनपतय इति भुवन पतये । स्वाहा । भूतानाम् (२) । पतये । स्वाहा । इति । स्कन्नम् । अन्विति । मन्त्रयेत । यज्ञस्य । एव । तत् । आर्त्या । यजमानः । वसीयान् । भवति । भूयसीः । हि । देवताः । प्रीणाति । जामि । वै । एतत् । यज्ञस्य । क्रियते । यत् । अन्वञ्चौ । पुरोडाशौ । उपांशुयाजमित्युपांशु याजम् । अन्तरा ।

---

ब्रह्मवादिन इत्यादि ॥ अनार्तावस्थाया वसुमत्तरोऽस्त्विति [v]यः कामयेत । गतमन्यत् । १० भूयसीरिति । अनार्तावस्थाया बहुतरा इति तेनार्तत्वमेव वरमिति ॥

[v]जामि आलस्यजनकम् । [v]अन्वञ्चौ अनुपूर्वौ अन्येनाव्यवहितौ यद्वत [v]पुरोडाशौ तस्मादाज्यहविरपांशुयाजः पौर्णमास्या मध्ये भवति पुरोडाशयोः प्रधानमेव । पुरोडाशाज्यहविषो द्वयस्य विभिन्नरूपत्वात् मिथुनत्वम् ॥

---

ब्रह्मवादिन इति ॥ प्रायश्चित्तरूपेण स्कन्नानुमन्त्रणं विधत्ते – 'ब्रह्मवादिनो वदन्ति स त्वै १५ यजेत यो यज्ञस्याऽऽर्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति' इति ॥ हविषः स्कन्दने सति [v]यज्ञस्य विनाशेन [v]यः यजमानो विनाशाभिमुखो [v]भवति [v]स कथं तत्परिहारेण वसुमत्तरो भवेत् [v]इति [v]ब्रह्मवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूते – त्रिभिरेतैर्मन्त्रैः [v]स्कन्नम् [v]अनुमन्त्रयेत २० इति । भूपत्यादयो देवताविशेषा अग्निभ्रातरो वा, तेभ्यः '[v]स्वाहा' इति यदनुमन्त्रणं तेन [v]यज्ञस्य [v]अपि [v]आर्त्या [v]विनाशं [v]प्राप्य [v]यजमानः वसुमत्तरः [v]भवति । यस्मादत्र भूपत्यादिकाः [v]भूयसीः [v]देवताः प्रीणयति तस्मादुक्तं तस्य वसुमत्तरत्वम् ॥

जामीति । अथोपांशुयाजं विधत्ते – 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वाय' इति ॥ [v]यत् [v]अन्वञ्चौ [v]अनुक्रमगतावाग्नेयाग्नीषोमीय- २५ पुरोडाशौ स्यातामेतेन [v]यज्ञस्य [v]जामि [v]आलस्यं [v]क्रियते । अत आलस्यपरिहाराय तयोः पुरोडाशयोर्मध्ये [v]उपांशुयाजं यजेत् । किं च पुरोडाशद्रव्यकः [v]यागः एकः आज्यद्रव्यकः यागः [v] अपरः इति मिथुनत्वम् ॥

---

२७ अ इ उ पा हो१– 'भवति' नास्ति । २८ आ–प्रभवा° । २९–२९ ड ड१ शृं– स्वाहुतमिति । ३०–३० ड ड१ शृ–अनार्त्या । ३१ क ड१ शृं हो१–अप्राप्य । ३२ ड१–अनुक्रमगता° । ३३ आ–आलस्याय । ३४–३४ आ–एको यागः आज्यद्रव्यकः ।

मिथुनत्वायाग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ वि पर्यूँहामेत्यन्नाद्येन देवा अग्निमु (४)पामन्त्रयन्त राज्येन पितरो यमं तस्मादग्नि-र्देवानामन्नादो यमः पितॄणाᳪ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति

५ भागधेयेनैव तद्रुद्रᳪ समर्धयति

यजति । अजामित्वायेत्यजामि त्वाय । अथो इति । मिथुनत्वायेति मिथुन-त्वाय । अग्निः । अमुष्मिन् । लोके । आसीत् । यमः । अस्मिन् । ते । देवाः । अब्रुवन् । एति । इतः । इमौ । वि । परीति । ऊहाम । इति । अन्नाद्येनेत्यन्न अद्येन । देवाः । अग्निम् (४) । उपामन्त्रयन्तेत्युप-अमन्त्रयन्त । राज्येन । पितरः । यमम् । तस्मात् । अग्निः । देवानाम् । अन्नाद इत्यन्न अदः ।

१० यमः । पितॄणाम् । राजा । यः । एवम् । वेद । प्रेति । राज्यम् । अन्नाद्यमित्यन्न-अद्यम् । आप्नोति । तस्मै । एतत् । भागधेयमिति भाग धेयम् । प्रेति । अयच्छन् । यत् । अग्नये । स्विष्टकृत इति स्विष्ट कृते । अवद्यन्तीत्यव द्यन्ति । यत् । अग्नये । स्विष्टकृत इति स्विष्ट-कृते । अवद्यतीत्यव-द्यति । भागधेयेनेति भाग धेयेन । एव । तत् । रुद्रम् । समिति । अर्धयति ।

अग्निरमुष्मिन् लोके इत्यादि ॥ [५]अमुष्मिन् पितृलोके । व्याख्यातमन्यत् । अन्नाद्येनेति ।

१५ [६]गतम् । एवंवेदिता [७]राज्यम् [८]अन्नाद्य च [९]प्राप्नोति ॥

तस्मा एतदित्यादि ॥ शोभनमिष्ट करोतीति स्विष्टकृन्नामा [२]प्रकृतादग्नेः प्रशस्तो योऽन्योऽग्निः तस्मात् तदीयेनैवावदानेन [३]रुद्रम् [४]एव भागसमृद्ध करोति, तस्य रुद्रात्मकत्वात् ॥

अग्निरिति ॥ अथ स्विष्टकृत विधत्ते- अग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त राज्येन पितरो यम तस्मादग्निर्देवानामन्नादो यम पितृणाᳪ

२० राजा य एव वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेय प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रᳪ समर्धयति ' इति । पुरा कदाचित् 'अग्नि स्वर्गे स्थित, 'यम तु भूलोके तदा मनुष्याणां पाकादिनिष्पादनाभावात् पितृणा राजाभावाच्चाग्नियमयोर्विपरिवर्तनं [१०]कर्तुमिच्छन्त 'देवा आगच्छतेति परस्परमाहूय 'अन्नाद्येन उत्कोचेन [११]तम् 'अग्निं[१२] भूलोके [१३]समागन्तुमुपच्छन्दित-वन्त । 'पितर तु 'राज्येन उत्कोचेन 'यम स्वर्गलोके [१४]गन्तु प्रलोभितवन्त । यस्मादेवं 'तस्मात् 'देवाना

२५ मध्ये [१५]अग्नि 'अन्नाद [१६] बहुधनभक्षकोऽभूत् । 'यम च 'पितृणां 'राजा अभूत् । 'य एतदुभय 'वेद [१७]प्रकृष्टराज्यम् 'अन्नाद्य च 'प्राप्नोति । तत देवा 'तस्मै अग्नये भागं दत्तवन्त । कोऽसौ भाग ? यजमाना 'अग्नये 'स्विष्टकृते 'यत् हवि 'अवद्यन्ति सोऽस्य भाग । तस्मादग्नये स्विष्टकृतेऽवद्येत् । तथा सति [१८]तत् 'अग्नये दत्तेन[१९] भागेन 'रुद्र क्रूरमग्निं समृद्ध करोति ॥

७ हो-गादितम् । ८ हो-'प्रकृतादग्ने ' नास्ति ।

३० ३५ आ-कर्तुमिच्छावन्त । ३६-३६ यहिम् । ३७ अ इ उ जो ना पा हा-समानेतु-मिच्छन्त । ३८ ना हा-नेतु । ३९-३९ ड१ हो१-यदि । ४० ड१ ४.हो१-प्रभूतराज्यम् । ४१-४१. क-तदग्नय दौर्देवेन, ड१ ४.हो१-देवैर्दत्तेन ।

सुकृत्सकृदवं द्यति सकृदिव हि रुद्र उत्तरार्धादवं द्यत्येषा वै रुद्रस्य (५) दिक् स्वायामेव दिशि रुद्रं निरवदयते द्विरभि घारयति चतुरवत्तस्याऽऽप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥(६)॥

[ शान्तः स्पर्शयति भूतानामग्नि॰ रुद्रस्य सप्तत्रिंशच्च । ]

सकृत्सकृदिति सकृत्-सकृत् । अवेति । द्यति । सकृत् । इव । हि । रुद्र । उत्तरार्धादित्युत्तर अर्धात् । अवेति । द्यति । एषा । वै । रुद्रस्य (५) । दिक् । स्वायाम् । एव । दिशि । रुद्रम् । निरवदयत इति निः-अवदयते । द्विः । अभीति । घारयति । चतुरवत्तस्येति चतुः-अवत्तस्य । आप्त्यै । पशवः । वै । पूर्वाः । आहुतय इत्या-हुतयः । एषः । रुद्रः । यत् । अग्निः । यत् । पूर्वाः । आहुतीरित्या-हुतीः । अभीति । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । १० अपशुः । यजमानः । स्यात् । अतिहायेत्यति-हाय । पूर्वाः । आहुतीरित्या-हुतीः । जुहोति । पशूनाम् । गोपीथाय ॥ (६) ॥

[ मैत्र ३ ८ ६; काठ २५ ७, कपिष्ठ ३९ ५, शत ११ २ ३ १, ३ ३ १३–१७, ६ ३ २७, २८ ७ ३ २० ]

सकृत्सकृदिति ॥ एकवारमेकवार सर्वेषु । "एकस्य सकृच्च" (५ ४ १९) इति निपात्यते । सकृदिवेति । [9]अनावृत्त्यादिसामान्यत्वात् तुल्योत्कर्षरहिते पद स्थितत्वात् । एषेति । १५ उत्ततरा उत्तरा, [10]अण्डाकरणैरप्यनावृतत्वात् । निरवदयते इति निष्कृष्य देवतान्तरेभ्यो व्यावृत्त भागेन तर्पयति । द्विरित्यादि । गतम् ॥

पशवो वा इत्यादि ॥ अभिहोम उपरि होम । अतिहाय होम अतिलङ्घ्य होम ॥

इति द्वितीये षष्ठे षष्ठोऽनुवाकः ॥

सकृत्सकृदिति ॥ मनुक्त सूत्रकारेण – "सर्वेषां [42]हविषा उत्तरार्धात् [43]सकृत्सकृत् २० [44]स्विष्टकृतेऽवद्यति" (आपश्रौ २ २० ३) इति, तदेतद्विधत्ते – 'सकृत्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्र निरवदयते' इति । 'एक एव रुद्र' (तैस १ ८ ६) इति श्रुत्यन्तरात् सकृदवदानसदृश [45]रुद्र । येयमैशानी [46]सैव [47]एषा [48]रुद्रस्य [49]दिक् । सा चोत्तरभागवर्तिनी । [50]तस्मात् [51]उत्तरार्धात् अवदानेन स्वकीयायामेव [52]दिशि [53]रुद्र नि शेषेण तोपयति ॥

द्विरिति ॥ इतरहविषामिव सकृदभिघारण प्राप्तमपवदति– 'द्विरभिघारयति चतुरवत्तस्याऽऽप्त्यै' ॰। इति ॥ उपस्तरणमेक हविरवदान द्वितीय [54] 'द्वि अभिघारण चान्यत इति चतुरवत्त सपद्यते [55]' ॥

९ भि–अनावृत्ति॰, ल–अनावृत्त्यादि॰ मै४–अनावृत्त्यात्मादि॰, प२–॰सामान्यात् । १० मै४–साण्डाचरणै ।

४२ इ ना–'हविषा' नास्ति । ४३ हा–सकृत् । ४४ आ–अवद्यति स्विष्टकृते । ४५ डा१ हो१–सा । ४६ इ क ओ ना हा–॰दुत्तरार्धावदानेन । ४७–४७ क ख हा१ श होर–ततो द्विरभिघारणेन चतुरवत्तसपत्ति । ३०

'यत्किंचित् प्राजापत्यं यज्ञे [८७]क्रियते, उपांश्वेव[८७] तत् क्रियते' इति [८८]वचनादुपांशुत्वधर्मसाम्येन प्रजापतिर्देवतेति चेन्न। "प्रजापतिं मनसा ध्यायेत्" (द्र तैसं २ ५ ११) इति विधेस्तूष्णींभावस्यैव प्रजापतिधर्मत्वात्। प्रथमयागदेवत्वेन मुख्यत्वादग्निर्देवतेति चेत्। न। [८९]तदुपांशुयाजक्रमेऽग्निविषययाज्याद्य पाठात्। 'तावनूताम्' इत्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति चेन्न। तस्य वाक्यस्य [९०]पौर्णमासी
५ कालविधायकत्वात्। कस्यांचिच्छाखायामुपांशुयाजक्रमे वैष्णवयाज्यापुरोनुवाक्ययोः पाठाद्विष्णुर्देवतेति चेन्न। तथा सति [९१]शाखान्तरप्रोक्तयोः [९२]प्राजापत्ययाज्यापुरोनुवाक्ययोर्बाधः [९३]प्रसज्येत। [९४]तस्मान्नानाशाखासु [९५]पठिताभ्यां [९६]विष्णुप्रजापत्यग्नीषोमविषयाभ्यां याज्यापुरोनुवाक्याभ्यां प्राप्तास्तिस्रो देवता [९७]विकल्प्यन्ते। अत [९८]एवोपांशुयाजविधिशेषेऽर्थवादेऽप्येतदेव प्रास देवतात्रयमनूद्यते— 'विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। तस्मात् [९९]देवताविकल्प
१० सिद्धान्त ॥

तत्रैवान्यच्चिन्तितम् —

"[१००]दर्शादर्शोऽस्य कालो वा पूर्णिमान्य एव वा।
द्विपुरोडाशसांनिध्यादाद्यो [१०१]दर्शं प्रकृत्य तु [१०१]॥
[१०]विष्णुयाज्योक्तितः [१०३]पक्षो मध्यमः पूर्णिमाविधेः।
१५ स एव कालो याज्याया उत्कर्षे पूर्णिमादिने' ॥ (जैन्या १० ८ ३६ ३७)॥

[१०]जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय (तैसं २ ६ ६) इति पुरोडाशयोर्मध्ये [१]असौ यागो विहितः। पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ। अमावास्यायामाग्नेयैन्द्राग्नौ। ततो द्विपुरोडाशसंनिधेः समानत्वाद्दर्शः पूर्णिमा चेत्युभयमपि तस्योपांशुयाजस्य काल इत्याद्यः पक्षः। अमावास्यां प्रकृत्य याज्याकाण्डे आग्नेययाज्याया ऊर्ध्वमैन्द्राग्नयाज्याया अधस्तात्
२० वैष्णवयाज्याया पाठात् प्रकरणस्य संनिधितः प्रबलत्वाद्दर्श एव काल इति मध्यमः पक्षः। "तावब्रूतामग्नीषोमावाज्यस्यैव[१०५] तावुपांशु पौर्णमास्यां यजन्' इति पौर्णमास्यास्तत्कालत्वेन विधानाद्वाचनिकस्य[१०६] च विधेः प्रबलत्वात् पौर्णमास्येव कालः। तथा सति वैष्णवयाज्या प्रकरणादुत्कृष्यताम् ॥

तत्रैवान्यच्चिन्तितम् —

'पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं न हि।
२५ स्याद्वा नास्त्यन्तरेत्युक्ते [१०७]स्यैव कालेऽस्ति [१०७]शङ्खवत् ॥' ॥ (जैन्या १० ८ ३८)॥

सोमयाजिनः प्रागग्नीषोमीयपुरोडाशरहिता, केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति। 'स

८७-८७ अ इ उ पा श्रूयते उपांशु च, हो१— क्रियत उपांश्वेव। ८८ इ—°पांशुत्व साम्येन अ उ क ख१ पा ग होर१—°पांशुत्वसाम्येन। ८९ ना—उपांशु°। ९० अ इ पा—पौर्णमासकाल°। ९१ हा—°शाखान्तरे प्रोक्त। ९२ ड१—प्राजापत्ययोः याज्या°, अ इ ना पा हा—°याज्यानु°, श्रो-
३० °याज्यावाक्य°। ९३ ड—प्रसज्यते। ९४ ड१—तस्मिन्नानाशाखासु°। ९५ अ इ पा—पाठात् ताभ्यां। ९६ अ इ इ श्रो ना पा हा—विष्णुप्रजा°, इ हो१ भृ—विष्णुप्राजापत्याग्नीषोमविषय°। ९७ ड१—विकल्प्यन्ते। ९८ हा—°शेषेऽप्यर्थ°। ९९ अ इ श्रो ना पा हा—देवताविषय। १०० अ इ दर्शादिर्वा तस्य। १०१-१०१ आ क खा ना—दर्शोऽग्नितोऽमत, अ इ पा—दर्शौ प्रकृत्य तु हा—दर्शोऽग्नितो ऽमत। १०२ अ इ श्रो पा हा—°याज्योक्तितः। १०३ अ क श्रो ना हा—युक्तो। १०४ ड१—स।
३५ १०५ अ खा ना पा—°याज्यस्य हो१—°याज्यस्यान्येव। १०६ ड१—'च' नास्ति। १०७-१०७ हा१—स्यैवकालोऽस्ति, भृ—स्यैव कालेऽस्ति।

उपांशुयाजस्विष्टकृतौ]

मेतेनेष्ट्वाऽग्नीषोमीयो भवति' इति वाक्येनाग्नीषोमयो [१०८]सोमयागोत्तरकालीनत्वावगमात् [१०९]तस्यामय-मुपांशुयाजो [११०]यागो नास्ति। कुतः ? 'उपांशुयाजमन्तरा यजति' इति [१११]पुरोडाशद्वयान्तरालवर्तिन उपांशुयाजस्य गुणत्वेन विधानादिति प्राप्ते ब्रूम – किं [११२]यागे पुरोडाशद्वयान्तरालकालस्य विशेषणभूतावुतोपलक्षणीभूतौ ? नाद्य, [११३]अन्तरालकालवत् तद्विशेषणयो [११४]पुरोडाशयोरपि उपांशुयाजगुणत्वप्रसङ्गात्। न चैतद्युक्तम्। उपांशुयाजवत् तयोरपि स्थानक्रमेणैव[११५] कर्मान्वयात्। द्वितीये तु शङ्खध्वन्यायेन [११६]उपलक्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्षिते काले यागोऽस्ति। यथा शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यमित्युक्ते कस्मिंश्चिद्दिने त[११७] शङ्खस्य धमने पुरुषस्याभावेनोपलक्षकस्य ध्वनेरभावेऽप्युपलक्षिते तस्मिन् काले [११८]सेवका समागच्छन्ति [११९]। तथाऽत्रापि द्रष्टव्यम्। यदि तत्र [१२०]कालोपलक्षकमन्यदेव [१२१]व्यापारान्तरं सूर्योदयादिकं सम्भाव्येत [१२२]तर्ह्यत्रापि समवत्तेनाऽऽग्नेयपुरोडाश उपलक्षकः। तस्मादेक पुरोडाशायामपि पौर्णमास्याम् [१२३]अस्ति [१२४]उपांशुयाजः॥

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्–

"उपांशुयाजद्रव्येण शेषकार्यं भवेन्न [१२५]वा।
[१२६]भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः॥
उपस्तार्यद्रव्यशेषस्तु [१२७]आज्योपस्तरणादिवत्।
अतो न [१२८]प्रतिपत्त्यर्हं शेषकार्यं ततः कथम्"॥ (जैन्या ३ ५ १–२)॥

ध्रौवाद्दाज्यादुपांशुयाजार्थमवदाने कृते तच्छेषेण ध्रौवेण स्विष्टकृदादिकं शेषकार्यं कर्तव्यम्। कुतः ? [१२९] तथा सर्वेभ्यो हविर्भ्यः [१३०]समवद्यति" (द्र.आपश्री २ २० ३) इति वाक्येन प्रापितत्वादिति चेत्। मैवम्। कृतार्थद्रव्यशेषो ह्युपयोगापेक्षः प्रतिपत्तिमर्हति[१३०], ध्रौवं त्वाज्यं न कृतार्थम्। तेन कर्तव्यानामभिघारणादीनामुपस्तरणादीनां सद्भावात्। तस्मान्न तेन शेषकार्यं भवति॥

[१३१]चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्–

"स्विष्टकृत् संस्कृतौ क्षीणं उतापूर्वोपयोग्यपि।
प्रयोजनैक्यमेकस्मिन् युक्तं [१३२]कर्मण्यत क्षयं[१३३]॥
मन्त्रेण देवसंस्कारः [१३४]प्रक्षेपाद्द्रव्यसंस्कृतिः।
[१३५]यागादपूर्वमुक्तं प्रधानापूर्वगं च तत्"॥ (जैन्या ४ १ ३५ १६)॥

योऽयं स्विष्टकृद्यागः सोऽयमुपयुक्तहविःशेषसंस्कार इत्यविवादम्। तत्र संस्कारस्य दृष्टप्रयोजनत्वेनादृष्टाभावे सति तावतैवोपक्षीणः स्विष्टकृद्यागो नापूर्वस्योपकरोति। न ह्येकस्मिन् कर्मणि प्रयोजनद्वय

---

१०८ आ क–सोमोत्तर°, शृ हो१–कालत्वावगमात्। १०९ क हो१–तस्मादुपांशुयाजो। ११० क इ शृ हो१– यागो', नास्ति। १११ अ इ ड१ पा हो१–°रालवर्तिन शृ–रालस्य। ११२ ड१ शृ–'यागे' नास्ति। ११३ आ क–अन्तरालवत्। ११४ आ क–'पुरोडाशयो' नास्ति। ११५ अ इ जो ना पा हा–'एव' नास्ति। ११६ अ इ जो ना पा हा–उपलक्षणस्याग्नी°। ११७ आ क–'त' नास्ति। ११८ ११८ आ क–सेवकः समागच्छति, हो१–'सेवका' नास्ति। ११९ अ इ क ड१ जो पा शृ हा हो१–°लक्षकमन्यदेव। १२० आ जो हा व्यापार°। १२१ अ इ ड पा हो१–तथात्रापि। १२२ हा–अस्तु, अ इ ड पा हो१– अस्ति' नास्ति। १२३ ड हो१–उपांशुयाज कर्तव्य। १२४ ड– च। १२५ अ इ पा–भवेत् धुवार्थं। १२६ ना–°स्तरणादिवत्। १२७ ड.हो१–प्रतिपत्त्यर्थम्। १२८ अ इ पा–तद्य। १२९ अ इ जो पा हा–समवर्ति। १३० ड१ शृ–°मर्हतीति। १३१ ड–चतुर्थस्या ध्यायस्य। १३१–१३२ आ–कर्मण्यत क्षयी, ड–कर्मण्युपाश्रय, हो१–कर्मण्युपाश्रय, क–कर्मण्यत क्षय। १३३ अ इ उ पा जो हा–प्रक्षेपो द्रव्यसंस्कृति। १३४ अ इ उ पा–यागाद°।

युक्तमिति प्राप्ते ब्रूमः– कर्मण एकत्वेऽप्यंशभेदात् प्रयोजनभेदो न विरुध्यते। मन्त्रपाठो द्रव्यप्रक्षेपो देवतोद्देशेन त्यागश्चेति त्रयोंऽशाः। तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते। तस्मात् स्विष्टकृत उभयार्थः। [१३५]एवमन्त्यप्रयाजपशुपुरोडाशावप्युदाहार्यौ।

[१३६]तत्रैवान्यच्चिन्तितम्–

५ " प्रयोजकः स्विष्टकृत् किं पुरोडाशोत्तरार्धयोः।
यद्वा [१३७]प्रयुक्तोपजीवी स्यादाद्यः [१३७] स्वस्य सिद्धये॥
उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति।
[१३८]अग्न्याद्यर्थं पुरोडाशमुपजीव्यैष [१३९]वर्तताम्" ॥ (जैम्या ४·१·२६-२७)॥

दर्शपूर्णमासयोः श्रूयते– " उत्तरार्धात् स्विष्टकृते समवद्यति " (द्र.आपश्रौ २·२०·२)इति। सोऽयं
१० स्विष्टकृद्यागः कस्यचित् [१४०]नूतनस्य पुरोडाशस्य तदुत्तरार्धस्य [१४१]च प्रयोजकः। तदुभयाभावे [१४२]स्वसिद्ध्यभावादिति चेत्। मैवम्। उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वाद्भागवाचित्वाच्च प्रकृतं कंचिद्भागिनमाकाङ्क्षतः। [१४३]अग्न्यादिदेवतार्थः पुरोडाशः प्रकृतो भागवांश्च। तस्मात् तमेवोपजीव्य स्विष्टकृद्यागः प्रवर्तते न त्वन्यस्य प्रयोजकः॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्–

१५ " [१४४]शेषात् स्विष्टकृदेकस्मान् सर्वेभ्यो वैकतः [१४५]कृतौ।
[१४६]शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः [१४७]संस्कारसाम्यतः " ॥ (जैम्या ३·४·२५)॥

दर्शपूर्णमासयोः श्रूयते[१४४]– " शेषात् स्विष्टकृते समवद्यति " इति। तत्राऽऽग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यं, तावतैव [१४८]शास्त्रानुष्ठानसिद्धेरिति चेत्। मैवम्। उपयुक्तं हविः संस्कर्तुम् [१४९]इदम् अवदीयते। संस्कारश्च सर्वेष्वपि हविःषु समानः। तस्मात् सर्वेभ्यो
२० हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः॥

---

१३५. अ,इ,उ,पा–एवमस्य प्रयोजने। पशुपुरोडाशावप्युदाहरणं। १३६. क–अत्रै°। १३७–१३७. अ,पा–प्रयुक्तो यजतिः स्यादाद्यस्तस्य; इ–प्रयुक्तौ यजतिः स्यादाद्यस्तस्य (?), ड–प्रयुक्तोपजीवि
२५ स्यादा°; क–प्रकृतोपजीवी°। १३८. अ–अर्धायर्थ°। १३९. अ–वर्तनम्; ड–वर्तते। १४०. अ,इ,उ,पा–'नूतनस्य' नास्ति। १४१. ड–'च' नास्ति। १४२. शं,हो१–सिध्यभा°। १४३. अ,इ,उ,पा–°देवताकः। १४४–१४४. 'शेषात्......श्रूयते' नास्ति। १४५. अ क जो.ड,ना–कृते। १४६. ड१–°सिद्धेः। १४७. ड१–संस्कार्यसाम्यतः। १४८. आ क ड१.शं.हो१–शास्त्रार्थानु°। १४९. अ,इ उ, जो.ना.पा.हा–'इदम्' नास्ति।

मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत्
कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रुताम्

मनुः । पृथिव्याः । यज्ञियम् । ऐच्छत् । सः । घृतम् । निषिक्तमिति नि सिक्तम् । अविन्दत् । सः । अब्रवीत् । कः । अस्य । ईश्वरः । यज्ञे । अपि । कर्तोः । इति । तौ । अब्रुताम् ।

अत परं चत्वारोऽनुवाका इष्टिहोत्रब्राह्मणम् । मनु पृथिव्या इत्यादि ॥ इडोपाह्वानविधि । यज्ञार्हमन्विच्छत् । [4]पृथिव्या [4]निषिक्त [5]घृत लब्धवान् उपलब्धवान् । [1]वृष्टिरूपाया इडाया कार्यं

उपांशुयाज यष्टेऽस्मिन् स्विष्टकृच्च समीरित ।
आत्वर्यं समाप्याथ होत्रदोषो निरूप्यते ॥

तत्रास्मिन् [1]सप्तमानुवाक इडोपाह्वानविधिस्तन्मन्त्रव्याख्यान च प्रस्तूयते । मन्त्रास्तु मन्त्रकाण्ड [2]एव समाम्नाता – " उपहूत२ रथन्तर२ सह पृथिव्या । उप मा रथन्तर२ सह पृथिव्या ह्वयताम् । उपहूत वामदेव्य२ सहान्तरिक्षेण । उप मा वामदेव्य२ सहान्तरिक्षेण ह्वयताम् । उपहूत बृहत्सह दिवा । उप मा बृहत्सह दिवा ह्वयताम् । उपहूता सप्त होत्रा । उप मा सप्त होत्रा ह्वयन्ताम् । उपहूता धेनु सहर्षभा । उप मा धेनु सहर्षभा ह्वयताम् । उपहूतो भक्ष सखा । उप मा भक्ष सखा ह्वयताम् । उपहूता३२ हो । इडोपहूता । उपहूतेडा । उपो अस्मा२ इडा ह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्म देवकृतमुपहूतम् । दैव्या अध्वर्यव उपहूता । उपहूता मनुष्या । य इम यज्ञमवान् । ये यज्ञपतिं वर्धान् । उपहूते द्यावापृथिवी । पूर्वजे ऋतावरी । देवी देवपुत्रे । उपहूतोऽय यजमान । उत्तरस्या देवयज्यायामुपहूत । भूयसि हविष्करण उपहूत । दिव्ये धामन्नुपहूत । इद मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत । विश्वमस्य प्रियमुपहूतम् । विश्वस्य प्रियस्योपहूतस्योपहूत " (तैब्रा ३ ५ ८) इति ॥

[3]एतद्विनियोग बौधायनो दर्शयति– ' उक्ता इडाया जपास्तानुपांश्वक्त्वोच्चैरपह्वयत उपहूतेडेति प्रतीचीमिडोपहूतेति पराचीम् " इति । अस्यायमर्थ – गोशरीररूपाया इडाया देव्या जपा वेदे स्पष्ट प्रोक्ता –' उपहूत२ रथन्तरम् ' (तैब्रा ३ ५ ८)[4]इत्येवमारभ्य ' उ[5]पहूता३२ हो ' (तैब्रा ३ ५ ८) इत्येवमन्ता । तान् मन्त्रानुपांशु जपेत् । तत ऊर्ध्वम् ' इडोपहूता ' (तैब्रा ३ ५ ८) इत्यादिकमुच्चै पठेत् । उपहूतशब्दस्य [6]प्रथमप्रयोगेणेडा प्रतीची सम्मुखा भवति । पश्चात्प्रयोगेण पराची विमुखा [5] इत्युच्यत इति ॥

मनुरिति ॥ [6]तानेतान् मन्त्रान् व्याचिख्यासुरादाविडाजन्मप्रकार दर्शयति ' मनु पृथिव्या यज्ञियमैच्छत् स घृत निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूता मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तौ स्व इति तौ ततो गा२ समैरयता२ सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्म ' इति ॥ पुरा कदाचित् [7]मनु [8]पृथिव्या उपरि [9]यज्ञार्ह किं द्रव्यमस्तीति

१ तर ल हो–इष्टिरूपाया ।

१ अ इ उ क ड जो ना पा ह्रा हो१–सप्तमेऽनु° । २ ड–एतत् । ३ ङ१–एव विनि° । ४, ३० क–°मादय , ड ड१ श्र्.हो१–इत्यादय । ५–२ आ क–प्रथमप्रयोगेऽपीडा प्रतीचीनमुखा भवति, चरमप्रयोगे पराचीनमुखा । ६ ड–' एतान् ' नास्ति । ७ आ क जो ना हा–यज्ञार्यं ।

मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते

मित्रावरुणाविति मित्रा वरुणौ । गो । एव । आवम् । ईश्वरौ । कर्तोः । स्व । इति । तौ । ततः । गाम् । समिति । ऐरयताम् । सा । यत्रयत्रेति यत्र यत्र । न्यक्रामदिति नि अक्रामत् । ततः । घृतम् । अपीड्यत । तस्मात् । घृतपदीति घृत पदी । उच्यते ।

दृष्टवान् । उक्तं च 'पृथिवी इडा' (तैस १ ७ २) इति । अथ [v]अब्रवीत् प्रजापतिः [v]कः [।]अस्य घृतस्य [v]यज्ञे [v]अपि साधनभावं कर्तुम् [v]ईश्वरः स्यात् । "ईश्वरे तोसुन्कसुनौ" (पा ३ ४ १३) । अथ [v]मित्रावरुणौ [v]अब्रूताम् [।]गोः [v]एव यज्ञे साधनभावं कर्तुम् [१४]आवम् [v]ईश्वरौ [११]स्व न कार्यभूतस्य घृतस्य [v]इति । [५]अत्रापीडाया गोः[६] शरीरत्वादिडैव गौरुच्यते । यथोक्तं– "शरीरं वा [६]अस्यैतदुपाह्वया" (तैस १ ७ २) इति । अथैवमुक्तवन्तौ मित्रावरुणौ [v]गाम् [७]गोशरीरां वृष्टयात्मिकामिडाम्[७] [v]समैरयतां यज्ञसाधनत्वेनागमयताम् । [v]सा च [v]यत्रयत्र [v]न्यक्रामत् [८]निर्गत्यापतत्, गोपक्षे निमित्त (?) क्रामति स्म, [v]ततः [v]घृतम् [v]अपीड्यत उत्पद्यते । यस्मादुदकं [v]तस्मात् [९]घृतपदी इति [९]उच्यते [९] [१०]वृष्टिद्वारेण घृतहेतुत्वात्, गोरूपेण वा [११]घृतस्यैव हेतुत्वात् । [v]तत् अस्या इडाया [।]जन्म यदिहोपहूयते । घृतं पादेषु यस्याः सा घृतपदी । "कुम्भपदीषु च" (पा ५ ४ १३९) इति पादस्य लोपः, "पादोऽन्यतरस्याम्" (पा ४ १ ८) इति ङीप्, "पादः पत्" (पा ६ ४ १३०) इति पद्भावः । एवं मनुना प्रथममुपलब्धत्वात् इडा मानवी । पश्चात् घृतपीडनात् घृतपदी । मित्रावरुणाभ्यां समीरितत्वान्मैत्रावरुणी ॥

सर्वत्रान्वेषणमकरोत् । अन्विष्य च तत्र गोः पादाङ्कितेषु भूप्रदेशेषु [९]निषिक्तं [v]घृतं दृष्टवान् । दृष्ट्वा च दयानामग्ने [v]स एवम् [v]अब्रवीत्– [११]अस्य गोपदेषु[११] स्थितस्य घृतस्य स्वरूपं यथा [१२]लौकिकभोजनादौ उपयुक्तं तथा [v]यज्ञे [v]अपि उपयुक्तं कर्तुं [v]कः समर्थः [v]इति । तच्छ्रुत्वा तत्र स्थितौ [v]मित्रावरुणौ मनुं प्रति [v]अब्रूताम्– [१३]किमनेन कार्यभूतेन घृतेन? तत्कारणभूताया [v]गोः [v]एव [१३]यज्ञाङ्गभावं कर्तुमावां समर्थौ [v]स्व [v]इति । एवमुक्त्वा [v]तौ [v]ततः ऊर्ध्वं [१४]स्वर्गस्थामिडारूपां [v]गां भूमौ [v]समैरयतां समानयताम् । [v]सा च गौर्भूमौ [v]यत्रयत्र नितरां पादं प्रक्षिप्तवती तत्रतत्र गोपदाङ्किते [१५]भूप्रदेशे [v]घृतं निष्पीडितमासीत् । [१५]यस्मादस्या

[२] त° ल हो–अत्म् । [३] तै३ ल हो–'स्व' नास्ति । ४–४ तै३ –इडायागे । ५ तै३–गौरित्युच्यते । ६–६ तै३–अस्यैव तामुपाह्वया । ७–७ मै४–गोशरीरात्मिकाम् । ८ त्रि–न्यागमयत्, मै२–न्यगमत्, मै–न्यगमपतत् (?) त३–न्यगत्रपतत् (?) । ९–९ तै३–घृतवत्युच्यते । १०. हो–वृष्टिद्वारेण । ११ मै–'एव' नास्ति ।

८–८ आ–अन्या गो पदेषु । ९ आ–°भोजनादिषु । १०. ब द१ ग्र हो–यज्ञेषु° । [११] आ हा–किं गो । [१२] ब द१ ग्र हो–यज्ञाङ्गभावं । १३ आ–तामिडारूपां । १४ ब द१–भूमौ । १५. हा–भवति गो यस्मादस्या , भ ३ ज गो पा दा–भविष्यतायस्मादस्या ।

तदस्यै जन्मोपहूतꣳ रथंतरꣳ सह पृथिव्येत्याहे(१)यं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयत उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयत उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयत

तत् । अस्यै । जन्म । उपहूतमित्युप - हूतम् । रथंतरमिति रथ - तरम् । सह । पृथिव्या । इति । आह (१) । इयम् । वै । रथंतरमिति रथ - तरम् । इमाम् । एव । सह । अन्नाद्येनेत्यन्न - अद्येन । उपेति । ह्वयते । उपहूतमित्युप - हूतम् । वामदेव्यमिति वाम - देव्यम् । सह । अन्तरिक्षेण । इति । आह । पशवः । वै । वामदेव्यमिति वाम - देव्यम् । पशून् । एव । सह । अन्तरिक्षेण । उपेति । ह्वयते । उपहूतमित्युप - हूतम् । बृहत् । सह । दिवा । इति । आह । ऐरम् । वै । बृहत् । इराम् । एव । सह । दिवा । उपेति । ह्वयते । ५

'उपहूत रथन्तरम्' इत्यादिना इडोपाह्वानमन्त्रं व्याचष्टे । इयं वा इति ॥ रथ-तरं साम । १० दुःखतरणहेतुत्वात् ।इयं पृथिवी ।रथन्तरम् । अन्नाद्येनेति ॥ पृथिवीशब्देन पृथिवीविकारोऽन्नमुच्यते । तस्मात् ।अन्नाद्येन पृथिवीम् ।उपह्वयते । आत्मसमीपे करोति ।विधेया करोति । "निसमुपविभ्यो ह्वः" (पा १.३.३० ) इत्यात्मनेपदम् ॥

पशवो वा इति ॥ वननीयस्वभावत्वात् ॥

ऐरमिति ॥ इरा वृष्टिः तत्र भवं सारम् ।ऐरं तेन वृष्टिर्लक्ष्यते । दिवो वृष्टिं प्रवर्तयति ॥ १५

पादेभ्यो घृतं निर्गतमासीत् ।तस्मात् इयं ।घृतपदी ।इति प्रसिद्धाऽभूत् । [16]तत् एवमस्या इडाया यज्ञभूमौ ।जन्म संपन्नम् ॥

उपहूतमिति ॥ अथ मन्त्रं व्याचष्टे– 'उपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याहेयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयते' इति ॥ यत् ।रथंतरं साम, तत् ।पृथिव्या. ।सह मया ।उपहूतं समीपे यथा तिष्ठति तथाऽऽह्वानं कृतमित्यर्थः । [17]एतस्मिन् मन्त्रवाक्ये[17] रथंतरशब्देन भूमिरुपलक्ष्यते । यथा पट्सु २० [18]पृष्ठस्तोत्रसामसु रथन्तरम् [19]आद्यं तथा त्रिषु लोकेषु भूमिराद्या । मन्त्रगतेन पृथिवीशब्देन तत्कार्यमन्नाद्यमुपलक्ष्यते । तथा सति ।अन्नाद्येन ।सह [20]भूमिरुपहूतेत्येष मन्त्रवाक्यस्यार्थः । एवमुत्तरेऽपि मन्त्रा अनूद्य व्याख्यायन्ते ॥

उपहूतमिति ॥ तत्र सामविशेषवाचिना वामदेव्यशब्देन तत्साममसाध्याः पशव उपलक्ष्यन्ते, [21]तदेतद्दर्शयति – 'उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयते' इति ॥ २५

उपहूतमिति ॥ इराशब्दवाच्या [22]वृष्टिस्तत्संबन्धि बृहत्सामैरं [23]वृष्टेः [24]बृहत्साममाध्यत्वादित्येतमर्थं दर्शयति – 'उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयते' इति ॥

१६. आ–'तत्' नास्ति । १७–१७ आ–एतन्मन्त्रगत° । १८ आ ह्रा–पृष्ठस्तोत्रेषु । १९. आ–सामाऽऽद्य । २०. आ ह्रा–°तेत्येवं । २१. ह,ह१–इत्येतत् । २२. क–पुष्टिस्त° । २३. क– ३० पुष्टे । २४. ह१–°ाध्यता इत्येत° ।

उप॑हूताः स॒प्त होत्रा॒ इत्या॑ह॒ होत्रा॑ ए॒वोप॑ ह्वयत॒ उप॑हूता धे॒नुः (२) स॒हर्ष॒भेत्या॑ह मिथु॒नमे॒वोप॑ ह्वयत॒ उप॑हूतो भ॒क्षः सखेत्या॑ह सोमपी॒थमे॒वोप॑ ह्वयत॒ उप॑हूता३ँ हो इत्या॑ह्वा॒ऽऽत्मान॑मे॒वोप॑ ह्वयत

उप॑हूता॒ इत्युप॑-हू॒ता॒ । स॒प्त । होत्राः॑ । इति॑ । आ॒ह॒ । होत्राः॑ । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । उप॑हू॒तेत्युप॑-हू॒ता॒ । धे॒नुः (२) । स॒हर्ष॒भेति॑ स॒ह-ऋ॒ष॒भा॒ । इति॑ । आ॒ह॒ । मि॒थु॒नम् । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । उप॑हूत॒ इत्युप॑-हू॒तः॒ । भ॒क्षः । सखा॑ । इति॑ । आ॒ह॒ । सो॒म॒पी॒थमिति॑ सोम-पी॒थम् । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । उप॑हूता३म् इत्युप॑-हू॒ता३म् । हो इति॑ । इति॑ । आ॒ह॒ । आ॒त्मान॑म् । ए॒व । उपेति॑ । ह्व॒य॒ते॒ ।

[१०]-होतृकान् पुनर्यागेषु प्रवर्तयन्ति[११] ॥

१० मिथुनमिति ॥ उपलक्षणत्वात् सर्वमिथुनानां प्रजनयितारमात्मानं करोति* ॥

सोमपीथमिति ॥ भक्ष्यत इति [२५]भक्षः सोमः [२६]सखा समानख्यानः तस्य पानं पुनः पुनः प्रवर्तयति ॥

आत्मानमिति ॥ [२७]हो इत्यात्मोच्यते, हे आत्मन्, उपहूत त्वमत्रोपहूत इति भावः । मम आत्मेतिवत् भेद उपचर्यते । आह्वाने प्लुतः । "अणोऽप्रगृह्यस्य" (पा ८-४-५७) इत्यनुनासिकः ।

१५ न त्वात्मनोऽभिरक्षिताऽग्न्यादिरुपहूयते ॥

आश्वलायनेन ये होत्रका दर्शिताः—"होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्च[२५]" (द्र. आश्वश्रौ ५-१-६) इति, तदुपाह्वानपरत्वं दर्शयति — 'उपहूता सप्त होत्रा इत्याह होत्रा एवोप ह्वयते' इति ॥

उपहूतेति ॥ 'सहर्षभा' इति पदेन सूचितमर्थं दर्शयति - 'उपहूता धेनुः सहर्षभेत्याह २० मिथुनमेवोप ह्वयते' इति ॥

उपहूत इति ॥ 'भक्ष्यः सखा' इत्यनेन [२६]स्वोपकारकसोमपानमुपलक्ष्यत इति दर्शयति — 'उपहूतो भक्ष्यः सखेत्याह सोमपीथमेवोप ह्वयते' इति ॥

उपहूतामिति ॥ 'हो' शब्दः [२७]प्रयोक्तृस्वरूपवाचीत्येतद्दर्शयति— 'उपहूता३ हो इत्याहाऽऽत्मानमेवोप ह्वयते' इति ॥ [२८]-उपहूतशब्दे रङ्गप्लुतिर्दूरादाह्वानस्य घटनेनाऽऽदरार्था-[२८] ॥

२५ *-* लं-'चिपेया करोति ......... आत्मानं करोति' नास्ति । [१०]-[११]. मै४-होतृकाः पुनःपुनर्यागेषु प्रवर्तयति ।

[२५]. आ-'च' नास्ति । [२६]. क.ख.ह१.गं.हो१-सोपकारकं सोम° । [२७] आ-प्रयुक्तःस्वरूप° । २८-२८ ग-उपहूतशब्दाद्रङ्गप्लुति. दूरा°, अ.इ.उ.लो.प-°शब्दे रङ्गप्लुति दूरादाह्वानयोरादरार्था, ना-°शब्दे रङ्गप्लुतिः दूरादाह्वानयोरादरार्थो, हा-°शब्दे रङ्गप्लुति दूरादाह्वानयोरादरार्था ।

आत्मा ह्युपहूतानां वसिष्ठ इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येतामग्रेऽपश्यद् घृतपदीत्याह यदेवास्यै पदाद् घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाᳪ समैरयताम्

आत्मा । हि । उपहूतानामित्युप-हूतानाम् । वसिष्ठ । इडाम् । उपेति । ह्वयते । पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते । चतुः । उपेति । ह्वयते । चतुष्पाद इति चतुः - पादः । हि । पशवः । मानवी । इति । आह । मनुः । हि । एताम् (३) । अग्रे । अपश्यत् । घृतपदीति घृत - पदी । इति । आह । यत् । एव । अस्यै । पदात् । घृतम् । अपीड्यत । तस्मात् । एवम् । आह । मैत्रावरुणीति मैत्रा वरुणी । इति । आह । मित्रावरुणाविति मित्रा वरुणौ । हि । एनाम् । समैरयतामिति सम् - ऐरयताम् । ५

तत्र आत्मन आह्वानेन कोऽर्थ आत्मनस्तत्राह— 'आत्मा हि' इति ॥ अन्नादिषु मध्ये [30]आत्मा वासयितृतम तस्मादात्माऽप्युपहूयते इति ॥ यद्वा— तस्मादिति । उच्चै उपहूत इति । "दूराद्धूते च" (पा ८ २ ८४) इति प्लुतस्यैव व्याख्या 'इडामुप ह्वयते' इति । वृष्टिरन्न [31]पशव देवता [32]वा इडाद्रव्याभिमानिनी, ताम् [33]उपाह्वयते । 'इडोपहूता' इत्यस्यार्थोऽनेन व्याख्यात, 'उपहूतेडा' इति च, स एवार्थ । बहुकृत्वो वचनमादरार्थम् । यथोक्तम्— 'अभ्यासेन १०

आत्मेति ॥ आत्मन उपह्वाने प्रयोजन दर्शयति— 'आत्मा ह्युपहूताना वसिष्ठ' इति ॥ यस्मादिह [31]उपहूताना रथन्तरपृथिव्यादीना 'भक्ष. सखा' [32]इत्येवमन्तानामुपवासयितृतम [33]आत्मा, [34]तदधीनत्वादितरोपह्वानस्य, [35]तस्मादात्मनोऽप्युपह्वानं कर्तव्यम् ॥ १५

इडामिति ॥ 'इडोपहूता' इत्यारभ्य 'मानवी' इत्येतस्मात् प्राचीनस्य वाक्यसमूहस्य तात्पर्यं दर्शयति— 'इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशव' इति ॥ इडाशब्देन गोशरीरधारिणी देवतोच्यते । तस्या उपह्वानम् 'इडोपहूता' [34]इत्यादिवाक्यै कुर्यात् । इडाया पशुरूपत्वात् तदुपह्वानेन पशुप्राप्तिर्भवति । आरोहावरोहरूपयोर्वाक्ययोर्द्विरावृत्तत्वाच्चतुर्वारमुपह्वान सपद्यते । पशूना [35]चतुष्पदत्वादेतदुपपन्नम् । [36]तयोरावृत्त्यो मध्ये सेयमिडाऽस्मानुपह्वयताम् इत्येतदिडादेवताया प्रार्थना स्वस्मिन् देवतानुग्रहार्थम् ॥ २०

मानवीति ॥ 'मनु पृथिव्या' (तैस २ ६ ७) इत्यस्मिन्नुपाख्याने [36]मानव्यादिशब्दार्थ प्रसिद्ध इत्येतद्दर्शयति— 'मानवीत्याह मनुर्ह्येतामग्रेऽपश्यन् घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाᳪ समैरयताम्' इति ॥ २५

२९. आ हा—°आहूताना । ३० आ—इत्यन्ताना° । ३१ क ड १ भ्र हा हो १—°रोपाह्वानस्य । ३२ क हा—°प्युपाह्वान । ३३ आ ड—°वाक्येन । ३४ ड द १.भ्र—चतुष्पात्त्वा° । ३५ आ—°रावृत्त्या । ३६ आ क—मानवीत्यादि°, अ इ उ ओ ना पा हा १—मानवीति° ।

ब्रह्म॑ दे॒वकृ॑तु॒मुप॑हूत॒मित्या॑ह॒ ब्रह्मै॒वोप॑ ह्वयते॒ दैव्या॑ अध्व॒र्यव॒ उप॑हूता॒ उप॑हूता मनु॒ष्या॑ इत्या॑ह देवमनु॒ष्याने॒वोप॑ ह्वयते॒ य इ॒मं य॒ज्ञमवा॒न् ये य॒ज्ञप॑तिं॒ वर्धा॒नित्या॑ह (४) य॒ज्ञाये॒ चै॒व यज॑मानाय॒ चाऽऽशिष॑मा॒ शा॑स्ते

ब्रह्म॑ । दे॒वकृ॑त॒मिति॑ दे॒व कृ॒तम् । उप॑हूत॒मित्युप॑ हू॒तम् । इति॑ । आ॒ह॒ । ब्रह्म॑ । ए॒व । ५ उ॒पेति॑ । ह्व॒य॒ते॒ । दैव्याः॑ । अ॒ध्व॒र्यवः॑ । उप॑हूता॒ इत्युप॑-हू॒ता॒ । उप॑हूता॒ इत्युप॑ हू॒ता॒ । म॒नु॒ष्याः॑ । इति॑ । आ॒ह॒ । दे॒व॒म॒नु॒ष्यानिति॑ दे॒व-म॒नु॒ष्यान् । ए॒व । उ॒पेति॑ । ह्व॒य॒ते॒ । ये । इ॒मम् । य॒ज्ञम् । अवा॑न् । ये । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ प॒ति॒म् । वर्धा॑न् । इति॑ । आ॒ह (४) । य॒ज्ञाय॑ । च॒ । ए॒व । यज॑मानाय । च॒ । आ॒शिष॒मित्या॒ शिष॑म् । एति॑ । शा॒स्ते॒ ।

भूयासमर्थमधिगच्छति ' इति । तत्रातिप्रसङ्गनिवृत्त्यर्थं 'चतुरुप ह्वयते' इत्युक्तम् । चतुष्पदा १० छाभश्चतुष्ट्वेन '[36]इडोपहूता' इत्यस्याभ्यासाच्च । इत्थ मानवीयादि[36] । गतम् । घृतपदीयादि । गतम् ॥

[37]ब्रह्म परिवृढ यज्ञाख्य कर्म, [38]देवेन ब्रह्मणा[38] ऋत्विग्भिर्वा कृतम् । देवमनुष्यानिति । [39] [39]देवमनुष्यान् चाध्वरस्य नेतृत्वेन [39]उपह्वयते[39] ॥

यज्ञाय चैवेत्यादि ॥ गतम् ॥

१५ ब्रह्मेति ॥ पुरा देवैर्निष्पादितम् [37]इडोपह्वानरूप यत् [38]परिवृढ कर्म [39]तस्योपह्वान दर्शयति- 'ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते ' इति ॥

दैव्या इति ॥ "अश्विनौ हि देवानामध्वर्यू आस्ताम्" (तैस २ ६ ४) इत्यादिश्रुतिषु श्रुता ये दैव्या अध्वर्यवो ये च दृश्यमाना मानुषास्तेषाम् [40]उभयेषाम् [41]उपह्वान दर्शयति – 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते ' इति ॥

२० य इति ॥ पूर्वोक्ता दैव्या मानुषाश्च येऽध्वर्यवस्ते सर्वेऽपीम यज्ञमवन्तु यज्ञपतिं च वर्धय न्त्वित्येवमाशी परता दर्शयति – 'य इम यज्ञमवान् ये यज्ञपतिं वर्धानित्याह यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्ते ' इति ॥

१३-१३ पर ८-°पहूतोपहूतेडेत्यस्याह्वानाच्च, मै४-°पहूतोपहूतेडेत्याख्यानाच्च, त्रि-°पहूते त्यभ्याह्वानाच्च, त३ हो-°पहूतोपहूतेत्यस्याभ्यासाच्च । १४-१४ त३ त्रि पर मै४ हो-वृद्धो देवेद्र म णो २५ (!) । १५-१५ त्रि-देवाश्च मनुष्याश्चाध्वरस्य नेतृनुपह्वयते, पर-दवा मनुष्याश्चाध्वरस्य नेतृत्वेनोपह्वयते, मै-देवमनुष्याश्चाध्वरस्य नेतृनुपह्वयते, मै८-देवा मनुष्याश्चाध्वरस्य नेतृत्वमुपह्वयते ।

३७ अ इ उ ओ ना पा हा हो१-इडोपाह्वानरूपं । ३८ अ आ इ उ ओ पा हा हो१-परिवृत्तं, क ना-'परिवृढ' नास्ति । ३९ अ उ ओ ना पा हा हो१-तस्योपाह्वानं । ४० आ-'उभयेषाम्' नास्ति । ४१ अ आ इ उ क ओ ना पा हा -उपाह्वान ।

उप॑हूते द्यावा॑पृथि॒वी इत्या॑ह द्यावा॑पृथि॒वी ए॒वोप॑ ह्वयते पूर्व॒जे ऋ॒ताव॑री इत्या॑ह पूर्व॒जे ह्ये॑ते ऋ॒ताव॑री दे॒वी दे॒वपु॑त्रे इत्या॑ह दे॒वी ह्ये॑ते दे॒वपु॑त्रे उप॑हूतो॒ऽयं यज॑मान॒ इत्या॑ह॒ यज॑मानमे॒वोप॑ ह्वयत॒ उत्त॑रस्यां देवय॒ज्याया॒मुप॑हूतो

उप॑हूते॒ इत्युप॑-हू॒ते॒ । द्यावा॑पृथि॒वी इति॒ द्यावा॑-पृ॒थि॒वी । इति॑ । आ॒ह॒ । द्यावा॑पृथि॒वी इति॒ द्यावा॑-पृ॒थि॒वी । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । पू॒र्व॒जे इति॑ पू॒र्व-जे । ऋ॒ताव॑री इत्यृ॒त-व॒री॒ । इति॑ । आ॒ह॒ । पू॒र्व॒जे इति॑ पू॒र्व-जे । हि । ए॒ते इति॑ । ऋ॒ताव॑री इत्यृ॒त व॒री॒ । दे॒वी इति॑ । दे॒वपु॑त्रे इति॑ दे॒व-पु॒त्रे॒ । इति॑ । आ॒ह॒ । दे॒वी इति॑ । हि । ए॒ते इति॑ । दे॒वपु॑त्रे इति॑ दे॒व-पु॒त्रे॒ । उप॑हूत॒ इत्युप॑-हू॒तः॒ । अ॒यम् । यज॑मानः । इति॑ । आ॒ह॒ । यज॑मानम् । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । उत्त॑रस्या॒मित्युत्-त॒र॒स्या॒म् । दे॒व॒य॒ज्याया॒मिति॑ दे॒व-य॒ज्याया॑म् । उप॑हूत॒ इत्युप॑-हू॒तः॒ ।

पूर्वजे इति ॥ सर्वविकारेभ्यः पूर्वमुत्पन्ने । ऋतावरी सत्यवत्यौ [16]यज्ञवत्यौ वा तत्साधनत्वेन । मत्वर्थीये मतुपि " वनो र च " ( पा ४·१·७ ) इति, " वा छन्दसि " ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । देवनशीले देव्यौ, देवाः पुत्राः ययोस्तौ तादृश्यौ ॥

उपहूते इति ॥ 'उपहूतꣳ रथन्तरꣳ सह पृथिव्याः' इत्यत्र यथा पृथिवीशब्दोऽश्वलक्षको नात्र तथा [42]द्यावापृथिवीशब्दौ लक्षकौ[42] किन्तु स्वार्थपरावित्येतद्दर्शयति– 'उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोपह्वयते' इति ॥

पूर्वजे इति ॥ ते च द्यावापृथिव्यौ देवतिर्यङ्मनुष्याद्युत्पत्तेः पूर्वमेवोत्पन्ने, ऋतशब्दवाच्यो यज्ञोऽनयोर्वर्तत इति ऋतावर्यौ, नैते [43]केवलमृत्तिकादिरूपे किं तु देव्यौ, [44]देवाः पुत्राः[44] ययोस्ते [45]देवपुत्रे इत्येतां [46]विशेषणार्थसिद्धिं दर्शयति– 'पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे' इति ॥

उपहूत इति ॥ 'यजमानः प्रस्तरः' इत्यादिवत् [47]अत्र यजमानशब्दो नार्थान्तरलक्षक इत्येतत् दर्शयति – 'उपहूतोऽयं यजमान इत्याह यजमानमेवोप ह्वयते' इति ॥

उत्तरस्यामिति ॥ येषां [48]देवयज्यादीनामर्थे यजमानोपह्वानं तानेतान् [49]विस्पष्टं दर्शयति[49] –'उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत इत्याह प्रजा वा उत्तरा

१६. मै.ल.हो–'यज्ञवत्यौ' नास्ति ।

४२. आ.क–°शब्दार्थौ; ड–°शब्दार्थकौ; अ.इ.ओ.प.हा–°पृथिवीवाचकौ; ना–°शब्दावन्य-वाचकौ; हो१–°शब्दावनर्थकौ । ४३. क.ड..हो१–°मृगादि° । ४४–४४. अ.इ.ऊ ओ.प.हा–देवोत्पन्नौ । ४५ हा–एव पुने । ४६. हो१–विशेषेणा° । ४७. अ.इ.ओ प.हा–तत्र । ४८ आ.क.ना–°नामर्थं । ४९–४९. ड.हो१–विस्पष्टयति ।

भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत (५) इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामेदमसीदमसीत्येव यज्ञस्य प्रियं धामोप ह्वयते

भूयसि । हविष्करण इति हविः-करणे । उपहूत इत्युप-हूतः । दिव्ये । धामन् ।
५ उपहूत इत्युप-हूत (५)। इति । आह । प्रजेति प्र-जा । वै । उत्तरेत्युत्-तरा । देवयज्येति देव-यज्या । पशवः । भूयः । हविष्करणमिति हविः-करणम् । सुवर्ग इति सुव.-गः । लोकः । दिव्यम् । धाम । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । उपेति । ह्वयते ।

प्रजा वा इत्यादि ॥ दर्शपूर्णमासाद्यविच्छेदः प्रजाहेतुः । इदमसीदमसीत्यादि । [V]प्रजा वा
१० [V]पशवः स्वर्गो वा यद्यज्ञस्य प्रिय [V]धाम, तादात्म्येन यज्ञे यजमान उपहूतो भवति ॥

देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धाम' इति ॥ सोमयागादिरूपाया उत्तरदेवयज्यायाः प्रजाहेतुत्वेन प्रजात्वम् । अस्यामेवेष्टौ "[50]बहुहविःसंपादकस्य पशुहेतुत्वेन पशुत्वम्"[50] ॥

इदमिति ॥ 'इदं मे देवा हविर्जुषन्ताम्' इति तस्मिन्नुपहूत इत्यस्य स्पष्टार्थस्य मन्त्रवाक्यस्य विवक्षित तात्पर्यं दर्शयति – 'इदमसीदमसीत्येव यज्ञस्य प्रिय धामोपह्वयते' इति । इदं प्रवर्तमानं मदीय
१५ हविर्देवा [51]जुषन्तामिति भवतु तस्मिन् दर्शपूर्णमासकर्मणि यजमान उपहूत इत्येतावदेव न भवति किं तु 'इदं निरूढपशुबन्धरूपं कर्म चिकीर्षुः 'असि, सोमयागरूपम् 'इदं कर्म चिकीर्षुः 'असि 'इति एवं सर्वकर्मानुष्ठानविवक्षया 'यज्ञस्य 'प्रियम् इदं 'धाम स्थानं प्रति यजमानः 'उपह्वयते । सर्वकर्मविवक्षाद्योतनार्था वीप्सा ॥

दिव्यमिति ॥ [52]अस्य यजमानस्य यत् प्रियं तत् सर्वमुपहूतं, तस्य चोपहूतस्य [53]सर्वस्य [54]स्वामी
२० यजमान उपहूत इत्यनेनोपाह्वानस्य [55]न्यूनतां [56]विचार्य संपूर्णता संपद्यत इत्येतद्दर्शयति– 'दिव्यमस्य

५०–५०–अ.पा–व्रतहविःसंपादकस्य पशुहेतुत्वं, इ.उ.ओ.हा–बहुहविःसंपादकस्य पशुहेतुत्वं, ना–बहुहविःसंपादनस्य पशुहेतुत्वम्; ड.ड१.ग्रं.हो१–प्रभूतहविःसंपादनस्य पशुहेतुत्वेन पशुत्वम् । ५१. ड१. ग्रं.हो१–रेनन्तामिति । ५२. आ.क–अन्यत्; ड१–यस्य । ५३. ड–पूर्वस्य; ड१–'सर्वस्य' नास्ति । ५४. आ.क.–प्रियस्य स्वामी । ५५. ड–हारुकता (?) । ५६. ड१–निवार्य ।

विर्धमस्य प्रियमुपंहूतमित्याहाछंम्बट्कारमेवोप ह्वयते ॥ ७ ॥
[ आह धेनुरेता वर्धानित्याह धामन्नुपहूतश्चतुस्त्रिंशश्च । ]

त्रिर्धम् । अस्य । प्रियम् । उपंहूतमित्युपं हूतम् । इति । आह ।
अछंम्बट्कारमित्यछंम्बट कारम् । एव । उपेति । ह्वयते ॥७॥
[ मैत्र ४ १३ ८, शत्रा १ ८ १ ७, १९-२३ ] ५

अछम्बट्कारमेवेति । वडिनि सत्यनाम । तस्य छादन [57]छम्बट्कार किंचिदप्यपरिच्छाद्य सर्वमपि [V]अस्य यजमानस्य [V]प्रियम् उपह्वयते ॥

इति द्वितीये षष्ठे सप्तमोऽनुवाकः ॥

प्रियमुपहूतमित्याहाछम्बट्कारमेवोप ह्वयते' इति ॥ अपेक्षितस्यार्थस्य प्रच्छादनेनानुष्ठानवैयर्थ्यं[57] छम्बट्कारस्तद्यथा न भवति तथैवैन यजमानमुपहूतवान् भवति ॥ १०

अत्र मीमांसा ॥ नवमाध्यायस्य प्रथमपादे चिन्तितम्–

"ऊह्यो यज्ञपतिर्नो वा [58]वृद्धयर्थोत्साहतोऽग्रिम ।
[59]प्रत्यक्षोक्तया कृत्स्नमन्त्र [60]इडार्थोऽनूहन तत्र " ॥ ( जैन्या ९ १ २० ) ॥

दर्शपूर्णमासयो [61]इडोपाह्वानमन्त्रे वाक्यमेतत्[61] आम्नायते– "दैव्या अध्वर्यव उपहूता । उपहूता मनुष्या । य इम यज्ञमवान् । ये यज्ञपतिं वर्धान्" (तैबा ३ ५ ८ ) इति । ये दैव्या अध्वर्यवो १५ यज्ञमवन्ति ये च मनुष्या यज्ञपतिं वर्धयन्ति ते सर्वेऽप्यत्रोपहूता इत्यर्थ । अस्मिन् वाक्ये यज्ञपतेरपि वृद्धिकथनेनोत्साहजननेन[62] समवेतोऽर्थ प्रतीयते । तत इडोपह्वानमन्त्रात् [63]पृथक्कृत्यापि वृद्धयर्थे जपे मन्त्रवाक्यमिद लिङ्गेन विनियुज्यताम् । तथा सति [64]सत्रे [65]यज्ञपतीना बहुत्वात् [66]बहुवचनान्ततया यज्ञपतिशब्द[66] [67]ऊहनीय इति प्राप्ते ब्रूम – प्रत्यक्षश्रुत्या [68]कृत्स्नो मन्त्र इडोपह्वाने विनियुक्त । एकवाक्यत्व [69]च कृत्स्नमन्त्र [70]उपलभ्यते । प्रकरण चेदमिडाया । अत श्रुतिवाक्यप्रकरणैर्विरोधाद् २० लिङ्गविनियोग सभवति । तदभावे [71]च यज्ञपतिवृद्धिप्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन [72]सहैकवाक्यतामापन्नमिडा प्रशसति । प्रशसा चैकवचनान्तेनापि[73] यज्ञपतिशब्देन सिद्धयतीति नास्ति सत्रे सदूह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाक ॥ २५

१७ त्रि ल हो–छम्बट्कारम् ।

५७ ड हो१–°वैपरीत्यम् । ५८ अ उ पा–वृत्यर्थोत्साहतो हि स । ५९ अ इ उ पा–प्रत्यभोक्ता । ६० आ क ओ ना हा–इडार्थो नूहन, इडा नास्त्यूहन । ६१–६१ ड–इडोपाह्वानमन्त्रवाक्ये एतत् । ६२ अ इ उ क ओ ड१ ना पा हा हो१–°जनने, ड–°जनन° । ६३ अ इ उ पा–°वृत्यर्थे । ६४ ड१–तन । ६५ अ इ उ पा–यज्ञपतीना विवृद्धया । ६६–६६ ग्र हो१–बहुवचनतया शब्द । ३० ६७ ड हो१–ऊह्य । ६८ क ड१ ग्र हा हो१–कृत्न° । ६९ ड 'च' नास्ति । ७० ड१–उपलभ्यते । ७१ ड१–चापि । ७२ आ–°वाक्यतापन्न° । ७३ ड ड१–'अपि' नास्ति ।

पशवो वा इडां स्वयमा दत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं

पशवः । वै । इडाम् । स्वयम् । एति । दत्ते । कामम् । एव । आत्मना । पशूनाम् । एति ।
५ दत्ते । न । हि । अन्यः । कामम् । पशूनाम् । प्रयच्छतीति प्र यच्छति । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । वाचम् । एव । भागधेयेनेति भाग - धेयेन । प्रीणाति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा कृत्यै । चतुरवत्तमिति चतुः अवत्तम् । भवति । हविः । वै । चतुरवत्तमिति चतुः अवत्तम् ।

पशवो वा इत्यादि ॥ इडाया [1]स्वयम् आदानव्याजेन [2]पशूनाम् एव [3]काम स्वयमादत्ते
१० पशुभ्य प्रदातु हस्ते गृह्णाति । [4]न [5]हि [6]अन्य [7]पशूना [8]काम प्रदातुमर्हतीति ॥

स्वगाकृति यथा [1]स्वभागकरणम् । "ऊर्यादिच्विडाचश्च" ( पा १ ४ ६१ ) इति गतित्वात् "तादौ च°" ( पा ६ २ ५० ) इति गते प्रकृतिस्वरत्वम् । चतुरवत्तमित्यादि ॥ गतम् ( तैस २ ६ ३ ) ॥

इडोपाह्वानमुदितमनुवाके हि सप्तमे ।
१५ इडाप्राशित्रभक्षौ द्वावुच्येते अष्टमे पुन ॥

पशव इति ॥ यदुक्त सूत्रकारेण— पुरस्तात् प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति । अध्वर्यु प्रथममवदानमवद्यति[1] स्वयम्[2] होतोत्तरम्" ( आपश्रौ ३ २ ५ ६ ) इति, [3]तदिद होतुरवदान विधत्ते— 'पशवो वा इडा स्वयमादत्ते काममेवाऽऽत्मना पशूनामा दत्त न ह्यन्य काम पशूना प्रयच्छति ' इति ॥ गोरूपाया इडाया पशुधन तामिडामाददानो होता[4] [5]पशूनाम् अभिलषितार्थं [6]स्वीकृतवान् भवति ।
२० होतु [7]अन्य [8]न कश्चिदपि [9]पशूनाम् इडारूपाणा [10]काम दातु समर्थ ॥

वाचस्पतय इति ॥ इडाभागप्राशनमन्त्रावुपाद्य व्याचष्टे— ' वाचस्पतये त्वा हुत प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुत प्राश्नामीत्याह स्वगाकृत्यै ' इति ॥ [1]इडोपह्वानरूपा वा वाक् तस्या पतिर्होतुर्जीवात्मा तस्मै [2]हुत हे पुरोडाश, त्वा भक्षयामि ॥ अनेन मन्त्रोच्चारणेन भाग दत्वा [3]वाच देवता प्रीणयतीत्यर्थ [4] । सदसो [5]यज्ञसभाया पतिर्होतुर्जीवात्मा तस्मै [6]हुत त्वा भक्षयामि । अनेन
२५ तस्य पुरोडाशस्य [7]स्वोदरकृताय भवति ॥

चतुरवत्तमिति ॥ होतुर्हस्ते [8]अध्वर्युणा क्रियमाणस्यावदानस्य सत्या विधत्ते— 'चतुरवत्त भवति हविर्वै चतुरवत्त चतुरवत्तम्' इति ॥ प्रधानस्य हविषश्चतुरवत्तत्व पूर्वमेव दर्शित ( द्र तैस २ ६ ३ ), [9]तत्साम्यादिदमपि [10]हवि एव भवति । चतुष्पात्रमन्त्राभ्याम् तस्य पशुरूपत्वम् ॥

१ ग–°कारान् ।

१० १, आ क–°दामवद्यति, ख ग–°दामादधाति । २ ख ग–तनेदं । ३–३, अ ख उ यो पा दा–पत्न्युत्तमभिलषिता, ना–'पशूनां' नास्ति । ४ आ–इडोपाह्वान° । ५ ख ड । ग दो १–यागं° । ६ ख–'स्वयोः' नास्ति । ७ ख ग यो पा दा–स मनाया । ८ क ना–स्वोदरगतत्वं, दो १–स्वोदर-स्थं, ख दो १ ग–स्वोदरगतत्वं कृतम् । ९ आ क–'अध्वर्युण' नास्ति । १० ख दो–तस्मात् ।

पुशर्वश्चतुरवत्तं यद्धोता प्राश्नीयाद्धोता(१)ऽऽर्तिमार्च्छेद्यदुग्नौ जुहुयाद्रुद्राय पुशूनपि दध्यादपुशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुत प्राश्नामीत्याह स्वगाकृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणा ददाति तीर्थ एव दक्षिणा ददाति

पुशवे । चतुरवत्तमिति चतु अवत्तम् । यत् । होता । प्राश्नीयादिति प्र-अश्नीयात् । ५
होता (१) । आर्तिम् । एति । ऋच्छेत् । यत् । अग्नौ । जुहुयात् । रुद्राय । पशून् । अपीति ।
दध्यात् । अपुशु । यजमान । स्यात् । वाच । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति ।
आह । परोक्षमिति पर - अक्षम् । एव । एनत् । जुहोति । सदस । पतये । त्वा । हुतम् । प्रेति ।
अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा कृत्यै । प्रेति । अश्नन्ति । तीर्थे । एव । प्रेति ।
अश्नन्ति । दक्षिणाम् । ददाति । तीर्थे । एव । दक्षिणाम् । ददाति । १०

परोक्षमिति ॥ कोऽत्र प्राश्नाति प्रहूयत एवेद [v]वाचस्पतये इति प्रच्छादन परोक्षवम् । तेन होतु प्राशननिमित्ताया आर्तेरप्रसङ्ग ॥

[a]प्राश्नन्तीति । सर्वेऽपि यजमानपञ्चमा सह [v]प्राश्नन्तीति । [v]तीर्थे तु खोत्तरणावसरे प्राशन दक्षिणादान च कृत भवतीति । ऋत्विग्भ्य पुरोडाशप्रदान दक्षिणा ।

यदिति ॥ प्रकारान्तरेण [11]भक्षणमन्त्रप्रशसा दर्शयति–[11] 'यद्धोता प्राश्नीयाद्धोताऽऽर्तिमा १५ र्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमान स्याद्वाचस्पतये त्वा हुत प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुत प्राश्नामीत्याह स्वगाकृत्यै' इति ॥ देवतारूपाया इडाया भक्षणेन [v]होता मरण [12]प्राप्नुयात् । प्राशन परित्यज्य [13]अग्नौ तत्प्रागहोमे [14]सत्रीडारूपगवादिपशूनपि रुद्राय क्रूराय [v]रुद्राय समर्पितवान् भवति । तत [v]यजमान पशुरहित [v]स्यात् । तस्मात् '[v]वाचस्पतये [15]त्वा [v]हुतम्' इति प्रथममुक्त्वा पश्चाद्भक्षणे सति साक्षादग्नौ हुत न भवतीति रुद्राय पशुसमर्पण न [16]भवति, २० वाचस्पतिव्यवधानेन [v]परोक्षम् [v]एव हुतत्वात् । [17]स्वयमपि साक्षादिडा न प्राश्नाति किं त्वन्यस्मै [v]हुतम् एव प्राश्नातीतीडाप्राशनप्रयुक्तो मरणदोषो न [18]भवतीति । ईदृशस्य भक्षितस्य स्वात्मगतत्वेन स्थापनाय '[v]सदसस्पतये' इत्यादिक पठनीयम् ॥

प्राश्नन्तीति ॥ यदुक्त सूत्रकारेण–" यजमानपञ्चमा इडा [19]प्राश्य " ( आपश्रौ ३ २ ११ ) इति, तदिद विधत्ते– 'प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणा ददाति तीर्थ एव दक्षिणा ददाति' इति ॥ [v]तीर्थे २५ तु खोत्तरणावसरे प्राशनेन हि [20]क्षुद्र्य खमुत्तीर्यते । ऋत्विग्भ [21]प्राशिते सति दक्षिणाऽपि दत्ता भवति । [22]तद्दानमेनस्मिन् [23]प्रधानयागोत्तरणावसरे ॥

■ प२–प्राश्नन्ति, मै–प्राश्नातीति ल–प्राश्नवेति ।

११–११ आ क–भक्षण प्रशसति । १२ अ इ उ °आ पा हा–प्राप्तवान् । १३ अ इ उ जो पा हा– अन्यत्र । १४ ड हो१–°रूपानगवादि°, ड१ – °रूपान् गवादि° । १५ अ उ जो ड ना पा शृ हा– ३० 'त्वा' नास्ति । १६ ड१– भविष्यति । १७ आ हा तथाऽप्यमपि । १८ ड ड१ शृ हो१–भविष्यति । १९ आ क ड शृ–प्राश्नन्ति । २० आ – 'क्षुद्' नास्ति । २१ आ क– प्राशने । २२ ड१–तत्र दान° । २३ ड ड१–°यागकरणावसरे ।

वि वा एतद्यज्ञं (२) छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं तस्याऽऽविद्धं

५ वीति । वै । एतत् । यज्ञम् (२)। छिन्दन्ति । यत् । मध्यत । प्राश्नन्तीति प्र-अश्नन्ति । अद्भिरित्यत्-भि । मार्जयन्ते । आप । वै । सर्वा । देवता । देवताभि । एव । यज्ञम् । समिति । तन्वन्ति । देवा । वै । यज्ञात् । रुद्रम् । अन्त । आयन् । स । यज्ञम् । अविध्यत् । तम् । देवा । अभि । समिति । अगच्छन्त । कल्पताम् । न । इदम् । इति । ते । अब्रुवन् । स्विष्टमिति सु इष्टम् । वै । न । इदम् । भविष्यति । यत् । इमम् । राधयिष्याम । इति । तत् ।
१० स्विष्टकृत इति स्विष्ट कृत । स्विष्टकृत्त्वमिति स्विष्टकृत् त्वम् । तस्य । आविद्धमित्या-विद्धम् ।

वि वा एतदित्यादि । गतम् ॥

मार्जयन्त इति ॥ "मनो ज्योति" (तेस १ ५ ३) इत्यन्तर्वेदिमार्जनम् ॥

देवा वै यज्ञादिति ॥ अन्तरण निरसरणाद्यज्ञे [3]अननुप्रवेशनम् । कल्पन [4]कर्मणोऽविकल सपत्ति । अथ देवा [5]अब्रुवन्—[6]इम [7]राधयिष्याम, तेन चैव [8]यज्ञ स्विष्टकृत भवति [9]इति ।
१५ तत स्विष्टकृतमाराधयित्वा (?) यज्ञस्य तत् [10]आविद्ध यन्मात्र निष्कृष्य तेन प्राशित्रमकुर्वन्, [11]तस्माद्

यीति ॥ यदुक्त सूत्रकारेण— "मनो [12]ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वा" (आपश्रौ ३ ३ २) इति, तदिद विधत्ते— 'वि वा एतद्यज्ञ छिन्दन्ति यन्मध्यत प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ स तन्वन्ति' इति ॥ "सत्यमाप सर्वा देवता [13]आप" (तैआ १० २२) [14]इति श्रुत्यन्तरादपा सर्वदेवतारूपत्वम् ॥

२० देवा इति ॥ अथ प्राशित्रावदानपरिमाण विधत्ते— 'देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् त देवा अभि समगच्छन्त कल्पता न इदमिति तेऽब्रुवन्त्स्विष्ट वै न इद भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृत स्विष्टकृत्त्व तस्याऽऽविद्ध निरकृन्तन् यवेन समित तस्माद्यवमात्रमव द्येत्' इति ॥ [1]देवा पुरा [2]यदा यज्ञमकुर्वन् [3]तदा स्विष्टकृदभिरूप [4]रुद्रम् अन्तरितवन्त, तेनान्तरायेण कुपित [5]स रुद्रस्तदीय [6]यज्ञम् [7]अविध्यत् विकलमकरोत् । [8]त रुद्र [9]देवा अभिमुख्येन गत्वा तत् [1]इद यज्ञानुष्ठानम्
२५ [2]अस्मदर्थं [3]कल्पता सपूर्ण भवतु [4]इति प्रार्थितवन्त । तदानीं केचिद्बुद्धिमन्तो देवा इतरान् प्रत्येवम् [5]अब्रुवन्— [6]यदि वय स [7] रुद्र हविष्प्रदानेनाऽऽराधयिष्यामस्तर्ह्यस्माकम् [8]इद कर्म [9]स्विष्ट [10]भविष्यति [11]इति । ततो हविराराधनेन स्विष्टकरणाद्रुद्ररूपस्याग्नेः [12]स्विष्टकृत्त्व सपन्नम् ॥ ततो [13]देवास्तमाराध्य [14]तस्य

३ प२-दाप्रवेशनम् । ४ पर-कर्मणो भ०, भि-कर्मणो विकल्प° । ५-५ हो-पद्य वै यज्ञ ।

[24] आ क-ज्योतिरित्यद्भि° हा-ज्योतिरित्यन्त° । २५ दा१-'आप' नास्ति । २६ दा१-
३० इत्यादि । [27]-[27] आ क-यज्ञ प्रथममकुर्वन्, दा१-यज्ञमकुर्वन् । २८ आ क-रुद्रम् । २९ आ-अस्माकम् ।
३०-३० दा२,हो१-यज्ञम्, दा१- यथेतम् । ३१ आ इ उ को पा हा-देवास्तमाराध्य ।

नि (३)रकृन्तन् यवेन संमितं तस्माद्यवमात्रमव द्येद्यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य यदुप च स्तृणीयादभि च धारयेदुभयतःसꣳश्रायि कुर्यादवदायाभि घारयति द्विः सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत् तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण

निरिति (३)। अकृन्तन्। यवेन। संमितमिति सम्ऽमितम्। तस्मात्। यवमात्रमिति यव मात्रम्। अवेति। द्येत्। यत्। ज्याय। अवद्येदित्यव-द्येत्। रोपयेत्। तत्। यज्ञस्य। यत्। उपेति। च। स्तृणीयात्। अभीति। च। धारयेत्। उभयत सꣳश्रायीत्युभयत-सꣳश्रायि। कुर्यात्। अवदायेत्यव-दाय। अभीति। घारयति। द्वि। समिति। पद्यते। द्विपादिति द्वि पात्। यजमान। प्रतिष्ठित्या इति प्रति स्थित्यै। यत्। तिरश्चीनम्। अतिहरेदित्यति हरेत्। अनभिविद्धमित्यनभि-विद्धम्। यज्ञस्य। अभीति। विध्येत्। अग्रेण। ५

यदि यवमात्रात् ज्याय प्रवृद्धम् अवद्येत् यज्ञस्य रोपयेत् विमोहयेत्। रुप विमोहने। १० लिङ्ग च— "मा रूरुपाम यज्ञस्य" (तैब्रा ३ ७.५) इति ॥

यदित्यादि ॥ उभयपार्श्वरुग्णम् उभयत सꣳश्रायि ॥ यत् तिरश्चीनमित्यादि। गतम् ॥

सवन्धि यद्यवमात्र पुरोडाशाशरूपम् आविद्धम् आसीत् तदाविद्धमुपहत निरकृन्तन् निष्कृत्य छिन्नवन्त। यस्मादेव तस्मात् प्राशित्रभाग यवमात्रम् अवद्येत् ॥

यदिति ॥ अधिकावदान प्रतिषेधति— 'यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य' इति ॥ ''अविच्छ १५ भागावदाने यज्ञस्य तत् अङ्ग रोपयेत् मोहयेद्यज्ञप्रयोगे भ्रान्ति जनयेदित्यर्थ। छेदेन कृतो योऽस्य पुरोडाशस्य ''वेध तस्मादेव वेधदेशादिद ''प्राशित्रभागावदानमित्यर्थ ''शाखान्तराम्नाते तन्मन्त्रे विस्पष्ट प्रतीयते — "अज्यायो यवमात्रात्। आव्याधात् कृत्यतामिदम्। मा रूरुपाम यज्ञस्य। शुद्धꣳ स्विष्टमिद" हवि" (तैब्रा ३ ७ ५) इति ॥

यदिति ॥ ''उपस्तरणादिचतुरवदाननिन्दापुर सर ''सकृदवदानाभिघारणे विधत्ते — 'यदुप च २० स्तृणीयादभि च धारयेदुभयत सꣳश्रायि कुर्यादवदायाभि घारयति द्वि ■ पद्यते द्विपाद्यजमान प्रतिष्ठित्यै' इति ॥ ''यद्यवदानात् पूर्वमुपस्तरण पश्चाच्चाभिघारण कुर्यात् तदानीम् ''अवत्तस्य पुरोडाशस्योभयो ''पार्श्वयो सꣳश्रायि कुर्यात्। सम्यकृश्राय उच्छूनत्वरूपो रोगविशेषो यस्याङ्गस्य तदङ्ग सꣳश्रायि। सकृदवदानाभिघारणाभ्या ''द्विपदो यजमानस्य प्रतिष्ठा भवति ॥

यदिति ॥ यदुक्त सूत्रकारेण— "अग्रेणाऽऽहवनीय ''ब्रह्मणे प्राशित्र परिहरति" (आपश्रौ ३ २ ९) २५ इति, तदेतद्विधत्त— 'यत् तिरश्चीनमतिहरेदनभिविद्ध यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव परि

३२ आ क—अधिकावदाने। ३३ हो१—भेद। ३४ आ क—अत्र प्राशित्रभागावदान प्रतीयते च, ड१— प्राशित्रभागावधा(?)नमित्ययमर्थं। ३५–३५ आ क—विस्पष्टमयमर्थं शाखान्तर आम्नायते। ३६ ड—°चतुरवदानादिनिन्दा°। ३७ इ जो ना हा—°भिघारण। ३८ ड१—यद्यवदान°। ३९ आ क— उपात्तस्य। ४० ड१—'पार्श्वयो' नास्ति। ४१ हा द्विपदे, ड१— द्विपदा। ४२ क—ब्राह्मणे, अ इ ३० उ जो ना पा हा— 'ब्रह्मणे' नास्ति।

परिं हरति तीर्थेनैव परिं हरति तत् पूष्णे पर्यंहरन् तत् (४) पूषा प्राश्यं दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यंहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमा-

---

परीति । हरति । तीर्थेन । एव । परीति । हरति । तत् । पूष्णे । परीति । अहरन् । तत् (४) ।
५ पूषा । प्राश्येति प्र - अश्य । दतः । अरुणत् । तस्मात् । पूषा । प्रपिष्टभाग इति प्रपिष्ट - भागः । अदन्तकः । हि । तम् । देवाः । अब्रुवन् । वीति । वै । अयम् । आर्धि । अप्राशित्रिय इत्यप्र - अशित्रियः । वै । अयम् । अभूत् । इति । तत् । बृहस्पतये । परीति । अहरन् । सः । अबिभेत् । बृहस्पतिः । इत्थम् । वाव । स्यः । आर्तिम् । एति ।

---

तदित्यादि ॥ तत् देवतानिष्टं प्राशित्रं देवाः पूष्णे प्रथमं पर्यहरन्, तत् प्राश्य पूषा
१० आत्मीयान् दन्तान् अरुणत् अभञ्जयत् । तस्मात् अद्यत्वेऽपि पूषा प्रपिष्टभागः भवति, दन्तहीनत्वात् । एवमय वृद्धाङ्गोऽप्राशित्रार्ह इति देवाः तं हित्वा तत् बृहस्पतये पर्यहरन् । अथ बृहस्पतिः एषोऽहमपि एतत्प्राशनेनास्तं गमिष्यामि इति बिभ्यत् ' सूर्यस्य त्वा ' इतीमं मन्त्रं दृष्ट्वा तेन प्राशित्रम् अपश्यत् । न हीति । सूर्यस्य संबन्धि सर्वलोकस्य

---

हरति ' इति ॥ वेदेरुत्तरतः स्थितोऽध्वर्युर्वेदिमध्यस्थिते पुरोडाशे प्राशित्रभागमवदायाऽऽहवनीयस्य
१५ [43]दक्षिणभागे स्थिताय ब्रह्मणे वेदेरुपरि हस्तं प्रसार्य तिरश्चीनं यथा भवति तथा यदि दद्यात् तदानीं यज्ञस्य यदङ्गं रुद्रेण अनभिविद्धं [44]तदप्यभिविद्धं भवेत् । तस्मादुत्तरस्यां दिश्यवस्थितोऽध्वर्युः प्राङ्मुखो गत्वाऽऽहवनीयस्य अग्रेण देशेन [45]ब्रह्मसमीपं [46]प्राप्य तस्मै भागं परिहरति परितो भवति सम्यक् दद्यादित्यर्थः । तथा सति तीर्थेन एव [47]नद्याद्यवतरणसदृशेनैव मार्गेणैवाऽऽनीतवान् भवति ॥

तदिति ॥ अत्र सूत्रकारेण–" प्राशित्रमवदीयमानं प्रेक्षते " (आपश्रौ ३·१९·५) इत्युपक्रम्यैतदुक्तं–
२० " सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् । सावित्रेण [48]"प्रतिगृह्य ...... अङ्गुष्ठेनोपमध्यमया [49]चाङ्गुल्याऽऽदायाग्नेस्त्वा [50]आस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे [51]सादयामी-त्यसंश्लेत्यापिगिरति " (आपश्रौ ३·१९·६-७) इति । असंश्लेत्य [52]दन्तैरचूर्णीकृत्य । तत्र दर्शनमन्त्रमुत्पाद्य विनियोक्तुं प्रस्तौति– ' तत् पूष्णे पर्यहरन् तत् पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्-
२५ बृहस्पतिरित्थं वाव स्य आर्तिमाऽऽरिष्यतीति ' इति । पुरा कदाचिद्देवाः तत् प्राशित्रं पूष्णे समर्पयन् । स

---

६. मै४–अरुधत्; मै–रुद्रात् अभात् ।

---

४३. आ–दक्षिणे भागे; अ.इ.उ.ओ.ना.पा.हा–दक्षिणे मार्गे । ४४. ह१–तदभि° । ४५. अ.इ. उ.ओ.ना.पा.हा–ब्रह्मणे परिहरति समीपम् । ४६. ह–'प्राप्य' नास्ति । ४७. आ.क.ह–नद्यवतरण° । ४८. ह१.ह२.हा–प्रतिगृह्णाति । ४९. ह–'चाङ्गुल्या आदाय' नास्ति, ह१–चाऽङ्गुल्यादायाग्नेस्त्वा । ५०.
३० अ.इ.उ.पा–'आस्येन' नास्ति । ५१. आ.क–°त्यभिगिरति । ५२. हा.हो१–दन्तेनाचूर्णीकृत्य ।

ऽऽर्ति॑ष्यतीति॑ स ए॒तं मन्त्र॑मपश्यत् सूर्य॑स्य त्वा॒ चक्षु॑षा॒ प्रति॑ पश्यामी॒त्य॑ब्रवी॒न्न हि सूर्य॑स्य चक्षुः (५) किं च॒न हि॒नस्ति॒ सोऽबिभेत् प्रति॒गृह्ण॑न्तं मा हिꣳसिष्यतीति॑ दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्यां॒ प्रति॑ गृह्णामी॒त्य॑ब्रवीत् सवि॒तृप्र॑सूत ए॒वैन॑द्ब्रह्म॑णा दे॒वता॑भिः॒ प्रत्य॑गृह्णात् सोऽबिभेत् प्रा॒श्नन्तं॑ मा

अ॒र्ति॒ष्य॒ति॒। इति॑। सः। ए॒तम्। मन्त्र॑म्। अ॒प॒श्य॒त्। सूर्य॑स्य। त्वा॒। चक्षु॑षा। प्रतीति॑। प॒श्या॒मि॒। इति॑। अ॒ब्र॒वी॒त्। न। हि। सूर्य॑स्य। चक्षुः॑ (५)। किम्। च॒न। हि॒नस्ति॑। सः। अ॒बि॒भे॒त्। प्र॒ति॒गृ॒ह्ण॒न्त॒मिति॑ प्रति गृ॒ह्ण॑न्त॒म्। मा॒। हि॒ꣳसि॒ष्य॒ति॒। इति॑। दे॒वस्य॑। त्वा॒। स॒वि॒तुः। प्र॒स॒व इति॑ प्र स॒वे। अ॒श्विनोः॑। बा॒हुभ्या॒मिति॑ बा॒हु-भ्या॒म्। पू॒ष्णः। हस्ता॑भ्याम्। प्रतीति॑। गृ॒ह्णा॒मि॒। इति॑। अ॒ब्र॒वी॒त्। स॒वि॒तृप्र॑सूत॒ इति॑ स॒वि॒तृ-प्र॒सू॒त॒। ए॒व। ए॒न॒त्। ब्रह्म॑णा। दे॒वता॑भिः। प्रतीति॑। अ॒गृ॒ह्णा॒त्। सः। अ॒बि॒भे॒त्। प्रा॒श्न॒न्त॒मिति॑ प्र-अ॒श्न॑न्तम्। मा॒। ५ १०

चक्षुःस्थानीय मण्डल सर्वलोकोपजीवि [56]न [57]हि कस्यचित् हिंस्य भवति। तस्मात् सूर्य पश्यति नाहमिति। त दृष्ट्वा पश्यन्न पश्यतीति न हिंस्य। अथ 'देवस्य त्वा' (इति) मन्त्रेण सवित्राऽनुज्ञातो देवताभावेन [7]प्रतिगृह्णन् प्रतिगृह्णातीति न बाध्य। 'अग्नेस्त्वाऽऽस्येन'

च [1]पूषा मन्त्रमन्तरेण [53]तस्य प्राशित्रस्य [54]दन्तैर्बलात् [55]दशन कृत्वा [1]प्राश्य [56]तदक्षदशनोपघातेन स्वकीयान् दन्तान् पातितवान्। यस्मादेव [1]तस्मात् [57]पूष्णे सर्वत्र [58]चरौ पिष्टमेव भाग कुर्यात्। तत १५ [1]देवा [1]त दन्तहीन पूषणमुद्दिश्य परस्परम् [1]अब्रुवन्–[1]अय पूषा [1]व्याधि सम्पद्रहितोऽभूत् [59]यस्मात् तस्मादय प्राशित्रानर्ह [1]अभूत् [1]इति विचार्य [1]तत् प्राशित्र [1]बृहस्पतये समर्पयन्। [1]स [1]बृहस्पति मनस्येवम् [1]अबिभेत्। यथा पूषा प्राशित्र प्राश्याऽऽर्तिमगमत् [1][1]इत्थम् अन्योऽपि य प्राश्नाति स [1]आर्तिम् [61][1]आऽरिष्यति गमिष्यति [1]इति [1]॥

स इति॥ अथ दर्शनमन्त्रमुत्पादयति–'स एत मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रति २० पश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षु किं च न हिनस्ति' इति॥ [1]मनुष्यचक्षु केनापि रोगेण हिंसित भवति। आरोग्यप्रदस्य [1]सूर्यस्य [1]चक्षु [1]न केनापि हिंस्यते। तस्मादनेन मन्त्रेण [63]पश्यामीत्यर्थ॥

स इति॥ [64]अथ [65]प्रतिग्रहमन्त्रमुत्पादयति–'सोऽबिभेत् प्रतिगृह्णन्त मा हिꣳसिष्यतीति देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्या प्रति गृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा

७ त३ ट–'प्रतिगृह्णन्' नास्ति। २५

५३ अ इ उ पा हा–आस्तस्य भृ–'तस्य' नास्ति। ५४ हा–दन्तेन। ५५ आ दशनम्। ५६ आ क–तदक्ष दशनेनोपघात तेन ड१ हो१–तेन दशनोपघातेन। ५७ आ क पूष्ण। ५८ आ क–चरौ। ५९ अ इ उ पा हो१–'यस्मात्' नास्ति। ६० ड१ भृ–इत्यमेव। ६१–६१ ड–गमिष्यतीति, अ इ उ जो ना पा भृ हा आरिष्यतीति। ६२ ड१–मनुष्यस्य चक्षु। ६३ ड१–पश्येदित्यर्थ। ६४ अ, इ उ जो ना पा हा–'अथ' नास्ति। ६५ ड–प्रतिग्रहणमन्त्र°। ३०

हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् (६) प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते ॥८॥

[ प्राश्नीयाद्धोता यज्ञं निरहरन् तच्चक्षुरास्यं किं चन हिनस्ति सोऽबिभेच्चतुश्चत्वारिꣳशच्च ।]

हिꣳसिष्यति । इति । अग्ने । त्वा । आस्येन । प्रेति । अश्नामि । इति । अब्रवीत् । न । हि । अग्नेः । आस्यम् । किम् । चन । हिनस्ति । सः । अबिभेत् (६) । प्राशितमिति प्र-अशितम् । मा । हिꣳसिष्यति । इति । ब्राह्मणस्य । उदरेण । इति । अब्रवीत् । न । हि । ब्राह्मणस्य । उदरम् । किम् । १० चन । हिनस्ति । बृहस्पतेः । ब्रह्मणा । इति । सः । हि । ब्रह्मिष्ठः । अपेति । वै । एतस्मात् । प्राणा इति प्र-अनाः । क्रामन्ति । यः । प्राशित्रमिति प्र-अशित्रम् । प्राश्नातीति प्र-अश्नाति । अद्भिरित्यत्-भिः । मार्जयित्वा । प्राणानिति प्र-अनान् । समिति । मृशते । अमृतम् । वै । प्राणा इति प्र-अनाः । अमृतम् । आपः । प्राणानिति प्र-अनान् । एव । यथास्थानमिति यथा-स्थानम् । उपेति । ह्वयते ॥८॥

१५ [ द्रष्टव्य १.८.१.१४,१५; ७.३.२ ]

[६]इत्यग्न्यास्यबुद्ध्या प्राश्नन् प्राश्नातीति, न बाध्यः । ब्राह्मणस्योदरेणेति । ब्राह्मणोदरधिया प्राशित्रं स्थापयन् प्राशितवानिति न हिंसितव्यः । स हीति । बृहस्पतिर्हि ब्राह्मणतरः तस्मादेवमुच्यते इति ॥

अप वा इत्यादि । गतम् ॥

इति द्वितीये षष्ठेऽष्टमोऽनुवाकः ॥

२० देवताभिः प्रत्यगृह्णात्' इति ॥ [७]ब्रह्मणा मन्त्रेण, [८]देवताभिः [११]अश्व्यादिभिः । तादृशः प्रतिग्रहो न हिनस्ति, तस्मात् तेन मन्त्रेण प्रतिगृह्णीयात् ।

स इति ॥ अथ प्राशनमन्त्रस्य भागत्रयं क्रमेणोत्पादयति- 'सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्य उदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः' इति । २५ प्रौढमरण्यं दहतोऽपि [६६]दावाग्नेर्मुखम् [७]आस्यं शुष्ककाष्ठकण्टकादिना केनापि [७]न हिंस्यते । श्राद्धादौ परान्नं भुञ्जानस्यापि [७]ब्राह्मणस्य [७]उदरं केनापि प्रत्यवायेन हिंसितं [७]न भवति । यस्माद्बृहस्पतिः [७]ब्रह्मिष्ठः मन्त्रवित्तमः तस्मात् ' [७]बृहस्पतेः [७]ब्रह्मणा ' [६८]इत्येवमपि मन्त्रभागं पठेत् ॥

८. त्रि-इति मुद्रया ।

६६. अ.ए.उ.पा.हा.हो१-अश्विन्यादिभिः । ६७. हा-दावाग्नेर्मुखम्, ह.ह१-'मुखम्' नास्ति ।
३० ६८. आ.क-इत्येतदपि ।

अपेति ॥ प्रस्तुत सूत्रकारेण– "इन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति । वाङ्म आसन्निति यथालिङ्गमङ्गानि" (आपश्रौ ३ २० १ २) इति, तदेतदभिमर्शनं शिरोमार्जनपूर्वकं विधत्ते– 'अप वा एतस्मात् प्राणाः क्रामन्ति य आर्त्विज प्राशित्रमश्नाति तं व्यपमार्जयित्वा प्राणान्त्स मृतं प्राणा अमृतमेव प्राणानेव यथास्थानमुप ह्वयते' इति ॥

अत्र मीमांसा ॥ षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्— ५

"इडायर्थस्य नाशेऽन्य "शेषाद्ग्राह्यो न वाऽग्रिम "।
शेषस्याश "शेषेऽन्यप्रतिपत्त्यवरोधनात्" ॥ (जैन्या ६ ४ ३) ॥

इडाभक्षणार्थं "प्राशित्रभक्षणार्थं चाऽवत्त' यदि नश्येत् तदा शेषस्य सद्भावात् तस्माच्छेषात् पुनरवदेयमिति चेत् । "न । तस्य शेषस्य "अन्यथाप्रतिपत्त्या "शंयुवाकाद्यनिमित्तरूपयाऽवरुद्धत्वात् । तस्माद्यत्तनाशे द्रव्याभावादिडादिकं लुप्यते । १०

तत्रैवान्यच्चिन्तितम्–

"शेषभक्षाः किमन्येषामृत्विजां वाऽन्यभक्षणम् ।
"ऋत्विजां परिसंख्यानात् स्वाम्यप्राप्तो "ततोऽन्तिम" ॥ (जैन्या ६ ४ ४) ॥

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षास्तेषां भक्षणमृत्विग्भ्योऽन्यैः "कार्यम् । कुतः ? ऋत्विजां "परिसंख्यातत्वात् । ऋत्विजां कर्मकरत्वादेव "भक्षप्राप्तौ सत्यां 'पुनरप्येवमाम्नायते–" यजमानपञ्चमा १५ इडां "भक्षयन्ति" (आपश्रौ ३ २ ११) इति । तदेतत् पुनराम्नानं "परिसंख्यार्थम् 'यजमानसहिता ऋत्विज प्राशित्रादिकं न भक्षयेयुः' इत्यर्थः । तस्मादृत्विग्भ्योऽन्येषां प्राशित्रादिभक्षणमिति चेत् । मैवम् । यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते । तस्मादपरिसंख्यातत्वात् "ऋत्विजामेवैतत् प्राशित्रादिभक्षणम् ॥

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्– २०

"अपिष्टभाग पूषेति प्रकृतौ विकृतावुत ।
"दृष्टिप्रकरणादेव प्रकृताविति युज्यते ॥
सतद्देवादिपद्वाक्याद्विकृतौ "पूषसंभवात् ।
सिद्धस्य "पुनरप्युक्तिरधिकस्य विवक्षया' ॥ (जैन्या ३ ३ ४३ ४४) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' (तैस २ ६ ८) इति । २५ तत्र दन्तरहितस्य पूष्णः पिष्टभागत्वं सतद्देवाद्यधिकरणन्यायेन "प्रकरणादुत्कृष्यतया विकृतिगामीत्यवगम्यते । "तथाऽप्युत्तराधिकरणेषु तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते ॥

---

६९–६९ अ इ उ पा–शेषा वाऽन्यो न चाग्रिम । ७० अ इ उ पा–°प्रतिपत्त्यन्तरोधनात् । ७१–७१ अ इ उ पा–°भक्षण चाऽवत्त ड हो१–°भक्षणार्थं चाऽवत्तम् । ७२ ड–मैवम् । ७३ अ इ उ पा–°प्रतिपत्तौ । ७४ अ इ उ पा–°काले भक्ष° । ७५ अ आ इ उ क खो ड द१ श्र हा हो१–इडायाः । ३० ७६ अ इ उ पा–कुताऽन्तिम । ७७ ड द१–कर्तव्यम् । ७८ [illegible] पारिसंख्यानात् अ इ उ पा–परिसंख्या कर्तुं हो१–परिसंख्यानार्थम् । ७९ ड भक्षणप्राप्तौ । ८० अ इ उ जो पा हा तत्रैव एवमा° । ८१ अ इ उ जो ना पा हा– प्राश्नन्ति । ८२ अ इ उ पा–परिसंख्या कर्तुं ड१ श्र परिसंख्याकार्थम् । ८३ आ क– ऋत्विजामव । ८४ ड–°दंष । ८५ श्र–पूर्वंगमवात् । ८६ हो१ पुनरप्युक्तेर° । ८७ क ड द१ हो१–°दुत्कृष्टतया । ८८ द१ –तथाऽप्यन्तराधि° । ३५

तत्रैवान्यच्चिन्तितम्—

"चरौ पशौ पुरोडाशे चरावेवोत पेषणम्।
विशेषादर्शनादेतत् सर्वेष्वपि विधीयते॥
[89]प्राप्तत्वान्न पुरोडाशे [90]हृदाद्याकारनाशनात्।
[91]-न पशौ पारिशेष्येण-[91] चरावेव हि पेषणम्" ॥ (जैन्या ३·३·४५-४६) ॥

"पौष्णं चरुं निर्वपेत्" (द्र.मैसं २·१·१; तैसं २·२·१) इति चरुर्विहितः। "पौष्णं श्याममालभेतान्नकामः" (तैसं २·१·६) इति पशुविधिः। 'पशुमालभ्य पुरोडाशं निर्वपति' इत्येतच्चोदकेन पौष्णपशौ प्राप्तम्। [92]तत्र 'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इति न्यायेन पुरोडाशस्य पूषा देवता। तत्र [93]पूर्वोक्तपेषणं विषयीकृत्योच्यमानाः [94]संशयपूर्वोत्तरपक्षाः [95]स्पष्टाः॥

तत्रैवान्यच्चिन्तितम्—

"[96]-द्विदेवकेऽपि किं पिंष्यादुत पूषैकदेवके-[96]।
द्विदेवकेऽपि तत्पूष्णः सत्त्वात् पेषणभागिनः॥
देवताविफलत्वेन पेषणं न प्रयोजयेत्।
यागस्य [97]सत्त्वे [98]भागोक्तेर्न यागान्तरगामि तत्" ॥ (जैन्या ३·३·४७-४८) ॥

[99]राजसूये श्रूयते— "सोमापौष्णं चरुं निर्वपेदैन्द्रापौष्णं चरुम्" (द्र.तैसं १·८·८) इति। तत्र द्विदेवके चरौ पिष्टभाजः पूष्णः सत्त्वात् पेषणं पूषार्थं कर्तव्यमिति [100]चेत्। तत्रेदं वक्तव्यम्— किं पेषणस्य देवता प्रयोजिका किं वा [101]यागः? नाऽऽद्यः। यागमन्तरेण [102]केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति। पौष्णस्य यागस्य पेषणप्रयोजकत्वे [103]तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नार्हति। '[104]-पूषा प्रपिष्टभागः' इत्यत्र-[104] यागो न श्रुत इति चेत्। नैवम्। [105]भागशब्दान्यथानुपपत्त्या यागस्य [106]कल्प्यत्वात्। न हि देवतात्वमन्तरेण [107]पिष्टद्रव्यभाक्त्वं सिध्यति। सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः [108]कल्प्यते। [109]तस्मादेकदेवकयागस्य पेषणप्रयोजकत्वान्न द्विदेवके यागे पेषणमस्ति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः॥

---

८९. अ.इ.उ.पा–पृथक्त्वात्। ९०. अ.इ.उ.पा– विश्रुतिनाशनात्। ९१–९१. अ.इ.उ.पा– पशौ न परि°; जो.ना.हा–पशौ न पारि°। ९२. अ.इ.उ.पा–'तत्र' नास्ति। ९३. ड.ड१–पूर्वोक्तं पेषणम्। ९४. अ.इ.उ.पा–'संशय°' नास्ति। ९५. ड.ड१–विस्पष्टाः। ९६–९६. अ.इ.उ.ड.पा– द्विदेवत्येऽपि किं न स्यादुत पूषैकदेवते; जो.ना.हा.–द्विदेवत्येऽपि किं पिंष्यात् पूषैकदेवते। ९७. अ.इ.उ.जो.पा.हा–सत्त्वे। ९८. अ.इ.उ.ड१.पा.गं.हो१–भेदोक्तेर्न। ९९. ड–राजसूयप्रकरणे। १००. अ.उ.पा–'चेत्' नास्ति। १०१. ड.हो१–यागस्य। १०२. उ.–°देवतायाः। १०३. अ.इ.उ.ड.जो.ना.पा.हा.हो१–'तु' नास्ति। १०४–१०४. अ.इ.उ.पा–'पूषा प्रपिष्ट भाग इति' नास्ति। १०५. अ.इ.उ.पा–द्रव्यस्यान्यथा°; जो.हा–भागशब्दस्य भागशब्दा°। १०६. ड–कल्प्यस्य देवता स्यात्। १०७. अ.इ.उ.पा– पिष्टभाक्त्वं, जो.ना.हा–पिष्टद्रव्यभाक्त्वम्। १०८. हो१–कर्तव्यः। १०९. हा–°देवदेवतायागस्य।

अ॒ग्नीध॒ आ द॑धात्य॒ग्निमु॑खाने॒वर्तून् प्री॑णाति स॒मिध॑मा द॑धात्यु॒त्तरा॑सा॒माहु॑तीनां॒ प्रति॑ष्ठित्या॒ अथो॑ स॒मिद्व॑त्ये॒व जु॑होति परि॒धीन्त्सं मा॑र्ष्टि पु॒नात्ये॒वैना॒न्त्सकृ॑त्सकृ॒त् सं मा॑र्ष्टि॒ परा॑ङिव॒ ह्येत॒र्हि य॒ज्ञश्च॒तुः

अ॒ग्नीध॒ इत्य॑ग्नि-इ॒धे । एति॑ । द॒धा॒ति॒ । अ॒ग्निमु॑खानित्य॒ग्नि-मु॒खा॒न् । ए॒व । ऋ॒तून् । प्री॒णा॒ति॒ । स॒मिध॒मिति॑ सम्-इध॑म् । एति॑ । द॒धा॒ति॒ । उ॒त्तरा॑सा॒मित्यु॑त्-त॒रा॒सा॒म् । आहु॑तीना॒मित्या-हु॒ती॒ना॒म् । प्रति॑ष्ठित्या॒ इति॒ प्रति॑-स्थि॒त्यै॒ । अथो॒ इति॑ । स॒मिद्व॒तीति॑ स॒मित्-व॒ति॒ । ए॒व । जु॒हो॒ति॒ । प॒रि॒धीनिति॑ परि-धीन् । समिति॑ । मा॒र्ष्टि॒ । पु॒नाति॑ । ए॒व । ए॒ना॒न् । स॒कृ॒त्स॒कृ॒दिति॑ स॒कृ॒त्-स॒कृ॒त् । समिति॑ । मा॒र्ष्टि॒ । परा॑ङ् । इ॒व॒ । हि । ए॒त॒र्हि । य॒ज्ञः । च॒तुः ।

अग्नीध इति ॥ आग्नीध्रभागविधिः । [1]ऋतून् कालस्य प्रवर्तकान् अग्निसहितान् प्रीणयति । [2]फिडन्तोदात्तत्वम् ( फि १ ) । [2]समिधमिति ॥ आनूयाजिकीन् [1]परिधीन् १० [1]संमार्ष्टि इत्यादि । गतम् । पराङिवेति । अपुनरावृत्तः [1]इव इदानीं [1]यज्ञः, तस्मात् समार्जनस्य

अष्टमे स्पष्टमुदितमिडाप्राशित्रभक्षणम्[1] ।
अनूयाजाः [2]सूक्तवाको नवमे हृयमीर्यते ॥

[3]अग्नीध इति ॥ तत्राऽऽदौ तावदाग्नीध्रभागस्य प्रदानं विधत्ते– 'अग्नीध आ दधात्यग्निमुखानेव-र्तून् प्रीणाति' इति ॥ पौरोडाशिके [4]तु काण्डे "अग्नीधे प्रथमायाऽऽदधाति" (तैब्रा ३·३·८) इति १५ [4]भागप्रदानस्य प्राथम्यमुक्तम्[4] । तस्मादाग्नीध्रेणेध्यमानस्याग्नेर्मुखत्वम् । तस्मिन्नेव काण्डे – "सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति" (तैब्रा ३·३·८) [5]इत्युक्तपञ्चवत्तविधानेन तत्सङ्ख्यासामान्यादृतु-संबन्धः[5] । तस्मादग्निमुखानामृतूनां प्रीतिः ॥

समिधमिति ॥ यदुक्तं सूत्रकारेण– "अनुज्ञातो ब्रह्मणाऽऽग्नीध्रः समिधमादधात्येषा ते अग्ने समित्" (आपश्रौ ३·४·६) इति, तदेतद्विधत्ते– 'समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो २० समिद्वत्येव जुहोति' इति ॥ अनूयाजा उत्तरा आहुतयस्ताश्चास्यां समिधि प्रतितिष्ठन्ति । किं च, समिद्युक्त एवाग्नावनूयाजान् [6]जुहोति ॥

परिधीनिति ॥ [6]पुनःशोधनं विधत्ते– 'परिधीन्त्सं मार्ष्टि पुनात्येवैनान्' इति ॥

सकृत्सकृदिति ॥ पूर्ववदावृत्तिं प्रसक्तां वारयति– 'सकृत्सकृत् सं मार्ष्टि पराङिव ह्येतर्हि यज्ञः' इति ॥ योऽयमाघारयोर्मध्ये पूर्वोक्तः [7]संमार्गस्तस्य काले[7] यज्ञः पराङ्मुखो न भवति किंतु प्रत्यङ्मुखः । तत २५

१. मै४–पञ्चवत्तान् । २–२. तं२.मै.लं.हो–'समिधमिति.......फिडन्तोदात्तत्वम्' नास्ति ।

१. ङ–°प्राशित्रलक्षणम् । २. आ.क–सूक्तवाकः । ३. ङ१–'॥' नास्ति । ४–४. अ.आ.इ.उ.चो.पा.हा–भागप्रदानं प्रथमस्य युक्तम् । ५–५. आ.हा–°पञ्चवत्तसंख्या°; इ–इति पञ्चव°। ६. क.ङ.ङ१.शं.हो१–'पुनः' नास्ति । ७–७. अ.इ.चो.ना.पा.हा–'संमार्गः स्वकाले', उ–'संमार्गस्तस्य काले' नास्ति ।

मं पद्यते चतुष्पादः पशवः पशूनेवाव रुन्द्धे ब्रह्मन् प्र स्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितो (१) यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमा रभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत् तूष्णीमासीतासंप्रत्तो

समिति । पद्यते । चतुष्पाद इति चतुः -पादः । पशवः । पशून् । एव । अवेति । रुन्द्धे । ब्रह्मन् ।

५ प्रेति । स्थास्यामः । इति । आह । अत्र । वै । एतर्हि । यज्ञः । श्रितः (१) । यत्र । ब्रह्मा ।

यत्र । एव । यज्ञः । श्रितः । ततः । एव । एनम् । एति । रभते । यत् । हस्तेन ।

प्रमीवेदिति प्र मीवेत् । वेपनः । स्यात् । यत् । शीर्ष्णा । शीर्षक्तिमानिति शीर्षक्ति मान् ।

स्यात् । यत् । तूष्णीम् । आसीत । असंप्रत्त इत्यसं प्रत्तः ।

आवृतिर्न युज्यते इति । चतुरिति सकृदग्निमित्यनेन सह । 'ब्रह्मन् प्रस्थास्यामः' इति संप्रैषः ।

१० एतर्हीति । अस्मिन् काले । "इदमो हिल्" (पा ५ ३ १६), "एतेतौ रथोः" (पा ५ ३ ४) इत्येतादेशः । प्राशित्रपरिहरणप्रभृतिब्रह्मसकाशे यज्ञस्य स्थितत्वात् [v]ब्रह्मन् [v]प्रस्थास्याम [v]इति । [v]तत [v]एव आरभ्य यज्ञशेषं परिसमाप्यत इति । यद्धस्तेनेत्यादि । अथ ब्रह्मा प्रस्थानं प्रसुवन् यदि हस्तलिङ्गेन [v]प्रमीवेत् प्रस्थापयेत् वेपनशीलः [v]स्यात् चलनशीलः स्यात् । चलन शब्दार्थादिति युच् । मीङ् गतौ । भौवादिकोऽन्तर्भावितण्यर्थः । यथा—' पश्चाद्धास प्रति मीवति '

१५ (तैस २ ४ ९) इति । यदि शिरःकम्पनादिना लिङ्गेन प्रमीवेत् [v]शीर्षक्तिमान् शिरोरोगवान् [v]स्यात् । अथ यदि [v]तूष्णीं किंचिदप्यप्रतिपद्यमानः [v]आसीत यज्ञस्य अप्रवृत्तिरेव [v]स्यात् ।

ऊर्ध्वं प्रधानयागाना [8]प्रवर्तिष्यमाणत्वात् । [9]अनूयाजसमिध ऊर्ध्वे [1] समार्गकाले तु [v]यज्ञः पराग्भूतस्तत ऊर्ध्वं [10]प्रधानयागस्य कस्याप्यभावात् ॥

चतुरिति ॥ अग्नेरपि सकृत्समार्गमध्याहृत्यानेन सह परिधित्रयगतां समार्गसख्यां प्रशंसति–

२० 'चतु ॥ पद्यते चतुष्पाद पशव पशूनेवाव रुन्द्धे' इति ॥

ब्रह्मन्निति ॥ [11]अथानूयाजान् यक्ष्य[12] न्नमिष्यतोऽध्वर्योर्ब्रह्माणं प्रत्यनुज्ञापनमनूद्य तस्य तात्पर्यं दर्शयति– 'ब्रह्मन् प्र स्थास्याम इत्याहात्र वा एतर्हि यज्ञ श्रितो यत्र ब्रह्मा यत्रैव यज्ञ श्रितस्तत एवैनमा रभते' इति ॥ तस्मिन्नाहवनीयस्य दक्षिणे देशे [v]ब्रह्मा वर्तते [v]अत्र एव एतस्मिन् काले [v]यज्ञ आश्रितस्तत्समीपे स्थित्वा होतव्यत्वात् । अतो ब्रह्मानुज्ञापनेन [v]यज्ञ यस्मिन् देश आश्रित [13] [v]तत

२५ [v]एव देशात् [13] यज्ञम् [14]उपक्रान्तवान् भवति ॥

यदिति ॥ ब्रह्मणो [14]वाचैवानुज्ञापदाना विधत्ते– 'यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत् तूष्णीमासीतासंप्रत्ता यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत

८ ग.ह्रो१–प्रवर्त्यमाणत्वात् । ९ ङ ट१ ग ह्रो१–अनूयाजसमीपम्य° । १० अ इ उ ओ ग पा हा–प्रधानस्य । ११ ट१–अनूयाजार्थम् । १२ ङ–तत्रतद्देशात् । १३ अ इ उ क ओ पा ना

३० हा–उपाकृतवान् । १४ अ इ उ ओ ग पा हा–वाचैवाज्ञा° ।

यज्ञः स्यात् प्र तिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्ततं एवैन॒ꣳ सं प्र यच्छति देव सवितरेतत् ते प्रा(२)ऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्यै

यज्ञः । स्यात् । प्रेति । तिष्ठ । इति । एव । ब्रूयात् । वाचि । वै । यज्ञः । श्रितः । यत्र । एव । ५
यज्ञः । श्रितः । ततः । एव । एनम् । सम् । प्रेति । यच्छति । देव । सवितः । एतत् । ते । प्रेति
(२) । आह । इति । आह । प्रसूत्या इति प्र-सूत्यै । बृहस्पतिः । ब्रह्मा । इति । आह । सः । हि ।
ब्रह्मिष्ठः । सः । यज्ञम् । पाहि । सः । यज्ञपतिमिति यज्ञ-पतिम् । पाहि । सः । माम् । पाहि ।
इति । आह । यज्ञाय । यजमानाय । आत्मने । तेभ्यः । एव ।
आशिषमित्या-शिषम् । एति । शास्ते । अनार्त्यै । १०

तस्मात् 'प्रतिष्ठ' इति ब्रूयात् एव । वाचि स्थितं यज्ञं तत आदाय सम्प्रयच्छति ।
"समवप्रविभ्यः" (पा १·३·२२) इत्यात्मनेपदाभावश्छान्दसः ॥

देव सवितः इत्यादि । गतम् ॥

स यज्ञमित्यादि । यज्ञादिभ्यः त्रिभ्यः रक्षणम् अनेन आशिषम् आशास्ते । तेभ्य
एव अनेन सर्वामपि आशिषम् आशास्ते ॥ अनार्त्यायेति ॥ १५

एवैनꣳ सं प्र यच्छति' इति ॥ किमयं ब्रह्मा [15]हस्ताग्रसंचालनेन [16]अनुजानीते किं वा शिरश्चालनेनाथवा तूष्णीम् एवाऽऽस्त आहोस्वित् 'प्रतिष्ठ' [17]इत्यनया वाचा ? नाऽऽद्यः । कम्पप्रसङ्गात् । यदि हस्तचालनेन प्रसीवेत् प्रेरयेत् तदा [18]शरीरे वातादिजन्यः कश्चित् [19]कम्परूपो रोग[19] उत्पद्येत ॥ [20]शिरसाऽभ्यनुज्ञानेन शीर्षक्तिमान् शिरोरोगवान् भवेत् । तूष्णीम् [21]अवस्थाने यज्ञः असम्प्रत्तः सम्यक् [22]प्रवर्तितो न भवेत् ।
तस्मात् 'प्रतिष्ठ' इति अनया वाचैवाभ्यनुज्ञानं परिशिष्यते । तथा सति यज्ञस्य मन्त्ररूपायां वाचि २०
[24]आश्रितत्वात् [25]तद्योग्यादाश्रयाद्यज्ञं प्रयच्छति ॥

देव इति ॥ यदुक्तं सूत्रकारेण – "ब्रह्मन् प्रस्थास्याम इत्युच्यमाने देव सवितरेतत् ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति" (आपश्रौ ३·२०·८) इति, सोऽयं शाखान्तर आम्नातो मन्त्रः, तस्यायमर्थः – हे सवितर्देव, यदेतत् प्रस्थास्याम [26]इत्यनुज्ञापनं तदेतत् [27]ते तवाग्रे[27] अध्वर्युः प्राह तस्मात् त्वं प्रसुव च प्रयज च । बृहस्पतिः २५

१५ ङ–हस्ताग्रे चालनेन, ङ१–हस्ताग्रचालनेन । १६. ङ–अनुजानाति । १७ आ–इत्येतया । १८ ङ हो१–'शरीरे' नास्ति । १९–१९ आ.हा–कम्परोग । २० आ–°नुज्ञाने । २१. ङ ङ१–आस्थाने । २२ आ ङ–प्रवृत्त । २३. ङ ङ१– भवति यज्ञम् । २४ आ–श्रितत्वात् । २५. ङ ङ१–°श्रयादेव यज्ञम् । २६ श्र–इत्युच्यमानानुज्ञापनम् । २७–२७. आ–तव ।

आश्राव्याऽऽह देवान् यजेति ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभं (३) जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति

---

आश्राव्येत्या॒ श्राव्य॑ । आ॒ह॒ । दे॒वान् । य॒ज॒ । इति॑ । ब्र॒ह्म॒वा॒दिन॒ इति॑ ब्रह्म-वा॒दिनः॑ । व॒द॒न्ति॒ ।
५ इ॒ष्टा । दे॒वता॑ । अथ॑ । क॒त॒मे । ए॒ते । दे॒वाः । इति॑ । छन्दाꣳ॑सि । इति॑ । ब्रू॒या॒त् । गा॒य॒त्रीम् ।
त्रि॒ष्टुभ॑म् (३) । जग॑तीम् । इति॑ । अथो॒ इति॑ । खलु॑ । आ॒हुः॒ । ब्रा॒ह्म॒णाः । वै । छन्दाꣳ॑सि । इति॑ ।
तान् । ए॒व । तत् । य॒ज॒ति॒ ।

---

'आश्राव्य' इत्यादिरनूयाजविधिः । 'ब्रह्मवादिनः' इत्यादिभिः पर्यनुयोगः ।
'छन्दाꣳसि' इत्युत्तरम् । गायत्रीमित्यादि । 'देवान् यज' इत्यनेन एकवाक्यत्वात् द्वितीया ।
१० अथो अपि खलु आहुः पुरानिदं ब्राह्मणाः छन्दाꣳसि इति, तद्दर्शनसिद्धित्वात् तेषाम् ।
तस्मात् ब्राह्मणान् एव अनूयाजैः यजति इति ।

---

एवात्र ब्रह्मा । हे बृहस्पते, स त्वं यज्ञं पाहि [28]यज्ञपतिं मनुष्यब्रह्मरूप[29] मामपि पाहि । हेऽध्वर्यो, यत् त्वयोक्तं तत् [30]तथाऽस्तु अनूयाजान् यष्टुं प्रस्थानं कुर्विति । तदेतत्तस्य [31]शाखान्तरोक्तस्य [32]मन्त्रस्य भागान् व्याचष्टे – 'देव सवितरेतत् ते प्राऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स
१५ यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्यै' इति ॥

आश्राव्येति ॥ यदुक्तं सूत्रकारेण– "औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सङ्क्रम्याऽतिक्रान्तोऽग्रेणाऽऽघारसंभेदं प्रतीचीनाननूयाजान् यजत्याश्राव्यमाश्राव्य प्रत्याश्राविते देवान् यजेति प्रथमं सम्प्रेष्यति यजयजेतीतरौ" (आपश्रौ ३ ५ १) इति, तत्राऽऽश्रावणपूर्वकं प्रथमयागमेव विधत्ते— 'आश्राव्याऽऽह देवान् यजेति' इति ॥

२० ब्रह्मवादिन इति ॥ अथ पूर्वोत्तरपक्षाभ्यामनूयाजार्थं देवतास्वरूपं [33]साधयति— 'ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दाꣳसीति ब्रूयाद् गायत्रीं त्रिष्टुभं जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति' इति ॥ या देवता अग्निप्रजापत्यादयो प्रधानभूताः सर्वाः पुरोडाशादिभिरिष्टा । अथ यान् देवान् यष्टुमयमध्वर्युः प्रयतते [34]ते देवाः कतमे ? न व्यवस्थिताः [35]कथं देवाः सन्तीति पूर्वः पक्षः । अत्र [36]सिद्धान्तः – छन्दांसि अनूयाजदेवता इति
२५ उत्तरं ब्रूयात्, गायत्रीं त्रिष्टुभं जगतीं च यष्टुमध्वर्युः [37]प्रयत इति । अपि [38]चान्ये तत्र विशेषम् आहुः– छन्दसां ब्राह्मणैरभेदत्वात् ब्राह्मणाः एव छन्दोरूपा इति । [39]तस्मात् ब्राह्मणान् एव अध्वर्युः यजति इत्युत्तरम् । ब्राह्मणजात्यभिमानी [40]योऽसि स एवानूयाजदेवतेति[41] तात्पर्यम् ॥

---

२८. ब हो१–यजमानं मनुष्य तं ब्रह्मरूपम् । २९. गे.हो१–मात्मन्तर° । ३०. ब्रा ई उ घो ना पा हा–'म त्रम्य' नास्ति । ३१. आ–दर्शयति । ३२. ट–'ते' नास्ति । ३३. ट–देवता देवा ।
३० ३४. हो१–सिद्धान्ते, गे.–सिद्धान्तो । ३५. ट गे.हो१ प्रयतते । ३६. हो१–यान्ते । ३७. ट१ गे. हो१–र्दे । ३८–३९. ब–वे छन्दांसि एवात्र देवतेति, ट१–योऽस्मासि न एवात्र देवतेति ।

देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तत् समिन्द्धे

---

देवानाम् । वै । इष्टा । देवता । आसन् । अथ । अग्नि । न । उदिति । अज्वलत् । तम् । देवा । आहुतीभिरित्याहुति-भि । अनूयाजेष्वित्यनु-याजेषु । अन्विति । अविन्दन् । यत् । अनूयाजानित्यनु याजान् । यजति । अग्निम् । एव । तत् । समिति । इन्द्धे ।

---

देवाना वा इत्यादि । गतम् ।

---

देवानामिति ॥ अथानूयाजान् विधत्ते–'देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् त देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तत् समिन्द्धे' इति ॥ पुरा कदाचिद्देवा याग कृतवन्तस्तत्राग्निप्रमापयादयो यदा देवै इष्टा तदा तद्यागादूर्ध्वमाहुत्याधारभूत अग्नि प्रज्वलित[39] न अभूत् । तत देवा अनूयाजेषु प्रविश्य निलीन[40] तम्[41] अग्निमन्विष्याऽऽहुतिभिर्लब्धवन्त । तस्मात् अनूयाजान् यजेत्, तेन अग्निम् एव प्रज्वालितवान् भवति ॥

एषा[42] चानूयाजाना मन्त्रास्तदीये मन्त्रकाण्ड एवाऽऽम्नाता –"देव बर्हि । वसुवने वसुधेयस्य वेतु । देवो नराशꣳस । वसुवने वसुधेयस्य वेतु । देवो अग्नि स्विष्टकृत् । सुद्रविणा मन्द्र कवि । सत्यमन्माऽऽयजी होता । होतुर्होतुरायजीयान् । अग्ने यान् देवानयाट् । याꣳ अपिप्रे । ये ते होत्रे अमत्सत । ताꣳ ससनुषीꣳ होत्रा देवगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभू । वसुवने वसुधेयस्य नमोवाके वीहि" (तैब्रा ३ ५ ९) इति ॥ देवं द्योतनशील बर्हिर्नामक यदग्निस्वरूप तदेतद्वसुधेयस्य वेतु । आज्यं[43] वसुरूप यदेतदग्नावाधेयं तदेतत् भक्षयतु[44] । किमर्थम् ? वसुवने[45] वसुनो[46] धनस्य वनन भजनं वसुवनस्तस्मै, यजमानस्य धनप्राप्त्यर्थमित्यर्थ[47] । एव नराशसनामकेऽप्यग्नौ योजयितव्यम् । यस्तु[48] स्विष्टकृन्नामकोऽग्नि सोऽयं सुद्रविणा शोभनधन मन्द्रो हर्षणशील, कविर्विद्वान्, सत्यमन्मा सत्यमनन, आयजी शास्त्रीयया मर्यादया यष्टा, होता देवानामाह्वाता । होतुर्होतुरायजीयाँल्लोके यो यो होता अस्ति[49] तस्मात् सर्वस्मादतिशयेन शास्त्रीयमर्यादामनुल्लङ्घ्य[50] यष्टा । हेऽग्ने, ईदृशस्त्व यान् देवानयाट् इष्टवानसि, याश्च देवानपिप्रे प्रीणितवानसि, ये च देवास्ते तव होत्रे होतृकृत्ये अमत्सत[51] यजने अमाद्यन् हृष्टवन्त, दिवि स्थितेषु देवेषु ससनुषी हविर्दत्तवती देवगमा देवानेव गच्छन्ती ता होत्रा होतृक्रियामिममस्मदीय यज्ञ प्रेरय[52] आभिमुख्येन[53] प्रापय, अस्मदीये यज्ञे सर्वदेवतुष्टिकरीं होतृक्रिया त्वमनुतिष्ठेत्यर्थ । हेऽग्ने, त्व स्विष्टकृद्धोता चाभूर्यदस्माभिरिष्ट तच्छोभन त्वया कृत तादृशो होमस्य कर्ताऽभू । अतो नमोवाके यज-

---

३९–अ इ उ जो ना पा हा–प्रज्वालित , ड–'प्रज्वलित' नास्ति । ४० ड–लीनम् । ४१. आ–'तम्' नास्ति । ४२ आ उ–एतेषाम् । ४३–४३ अ इ उ जो ना हा–आहूय यदेत°, ग्र. हो१–आज्यवस्तुरूप यदेत°, ■१–आज्य वस्तुरूप यदेत° । ४४ क ड हो१–भजताम् । ४५ अ इ उ जो ना पा हा–'वसुवने' नास्ति । ४६ ड–'वसुन' नास्ति । ४७ ड ड१ ग्र हो१–धनप्राप्तये । ४८ आ क ड–'यस्तु' नास्ति, अ इ उ जो ना पा हा–अग्नि । ४९ आ–तस्मात्, ड–'अस्ति' नास्ति । ५०. आ–°मर्यादानुल्लङ्घनेन । ५१–५१. हो१–यजमाने अमत्सत, ग्र–यज्ञे अमत्सत । ५२ आ क–एरय, हा–प्रेरय । ५३. अ इ.उ पा–आभिमुख्ये ।

मानस्य नमस्कारोक्तौ सत्यां वसुवने धनस्य संभजनाय वसुधेयस्य "वीहि अग्नावाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय ॥

तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः "साध्याः अनूयाजाः प्रपञ्चिताः ॥

अथ प्रस्तरप्रहरणाङ्गभूतः सूक्तवाको व्याख्यातव्यः । सूक्तवाकस्यानूयाजानन्तरभावित्वं बौधायनेन

५ दर्शितम्– 'अनूयाजानां प्रथमं यजति देवं बर्हिर्वसुवने वसुधेयस्य वेत्विति देवो नराशꣳसो वसुवने वसुधेयस्य वेत्विति द्वितीयं देवो अग्निः स्विष्टकृदिति तृतीयमनवानमनूयाजान् यजतीति ब्राह्मणमुत्तमे वाऽमत्सतेति ध्वनिति यदा जानाति "सूक्तवाकाय सूक्ता ब्रूहीति" तदा सूक्तवाकमन्वाहेदं द्यावापृथिवी इति प्रतिपद्य" इति । सोऽयं सूक्तवाकस्य प्रथमो भागो मन्त्रकाण्डे "एवमाम्नातः–

"इदं द्यावापृथिवी भद्रमभूत् । आर्ध्म सूक्तवाकम् । उत नमोवाकम् । ऋध्यास्म सूक्तोच्यमग्ने ।

१० त्वꣳ सूक्तवागसि । उपश्रितो दिवः पृथिव्योः । ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगये जीरदानू । अत्रस्नू अप्रवेदे । उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा । शंभुवौ मयोभुवौ । ऊर्जस्वती च पयस्वती । च सूपचरणा च स्वधिचरणा च । तयोराविदि" (तैब्रा ३.५.१०) इति ॥ हे द्यावापृथिवी, इदमीदृशं भद्रं "कल्याणमभूत् । कीदृशमिति तदुच्यते । ते वयं सूक्तवाकमार्ध्म, श्रद्धालुरयं यजमानः सम्यगनेन हविर्दत्तम् "इत्यादीनि वाक्यानि सूक्तानि तेषां सूक्तानां देवैर्मनुष्यैः "वा वचनं

१५ वाकस्तद्यथा भवति तथा समृद्धिं गताः "स्मः । अथवा "अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत" (तैब्रा ३.५.१०) इत्यादीनि सूक्तानि तेषां वचनमत्र यथा भवति तथा वयमृद्धिं "गताः । अपि च 'नमो देवेभ्यः' इति 'उचितर्नमोवाकः, स यथा भवति तथा वयमृद्धिं प्राप्ताः । हेऽग्ने, त्वया सूक्तोऽयं यजमानः "सम्यक् हविर्दत्तवानित्येतादृशं सूक्तं वक्तव्यं, तेन वयमृध्यास्म समृद्धिं प्राप्ता भूयास्म । "यथा त्वं द्यावापृथिव्योरपश्रितोऽवस्थितो "भूत्वा सूक्तवागसि सूक्तं वक्तुं क्षमोऽसि । हे यजमान, तव

२० संबन्धिन्यस्मिन् यज्ञे द्यावापृथिव्यावोमन्वती रक्षणवत्यौ स्ताम् । "कीदृश्यौ द्यावापृथिव्यौ" ? शंगये "सुखस्य प्रापयित्र्यौ" । जीरदानू "वृष्ट्यादिद्वारेण जीवनप्रदात्र्यौ" । अत्रस्नू भयरहिते । अप्रवेदे शत्रुमर्दानां दोषाणाम् "अप्रापयित्र्यौ । उरुगव्यूती प्रभूततृणोदकयुक्तत्वेन विस्तीर्णगोप्रचारेण, अभयंकृता– वस्मान्भयस्य कर्त्र्यौ, वृष्टिद्यावा वृष्टेः प्रकाशयित्र्यौ । रीत्यापा रीतेः सन्मार्गवृत्तिप्रकारस्य प्रापयित्र्यौ, शंभुवौ रोगादिनिवृत्तान्तेः प्रापयित्र्यौ । मयोभुवावन्नपानादिसुखस्य प्रापयित्र्यौ । युवयोर्मध्ये द्यौरियमूर्जस्वती

२५ वृष्टिरूपरसवती, पृथिवीयं पयस्वती तृणोदकद्वारा "बहुलगोक्षीरादियुक्ता । तथेयं द्यौः सूपचरणा "देवताधियावस्थानत्वेन सुष्ठुपचरितव्या । इयं पृथिवी "स्वधिचरणा "अस्माभिः सुखेनाधिश्रित्य चरितुं शक्या । तयोर्द्यावापृथिव्योराविदि आज्ञायां सत्याम्, अग्निरिदं हविरजुषतेत्यनेन वक्ष्यमाणेनान्वयः ॥

---

५४. ह१–वेत्विति । ५५. अ.आ इ उ.ओ.पा हा–प्रसिद्धा । ५६–५६. आ.हा–सूक्तवाकानूच्या इति, क.ह हो१–सूक्तवाकानन्वाऽनुब्रूहीति । ५७. ह१–एवं समाम्नातः । ५८. क.ह.ह१ गे हो१–कल्याणमध्यापमभूत् । ५९. आ ह–इत्यादि° । ६० गे–याचनम् । ६१. ह–स । ६२. ह– प्राप्ताः । ६३. ह१–उक्तैर्नमो° । ६४ आ–गमूदम् । ६५ क ह ह१ गे हो१–वयम् । ६६ क–अभुः; ह.हो१–अभूः स्यन् । ६७–६७. आ–कीदृशे (शौ), हो१–कीदृश्यौ । ६८–६८ –अ,इ.उ.प. हा–सुखस्य प्रापयित्री । ६९. ह.ह१.गे.हो१–चिरंजीवयित्र्यौ । ७०. हो१–अभिनाशिन्यौ । ७१. आ–बहुक्षीरा° । ७२. ह.ह१–देवाधि° । ७३. अ.इ उ.ओ.गा.पा.हा–स्वधिचरणा भूः । ७४–७४ अ– सुखेनाधिश्रित्य, ह–सुखेनाधिभिनम् (?) ।

एतदु॒र्वै नामाऽऽसु॒र आ॑सी॒त् स ए॒तर्हि॑ य॒ज्ञस्या॒ऽऽशिष॑मवृङ्क्त॒ यद्ब्रू॒यादे॒त(४) दु॑ द्यावापृथिवी भ॒द्रम॑भू॒दित्ये॒तदु॑मे॒वाऽऽसु॒रं य॒ज्ञस्या॒ऽऽशिष॑ गमयेदि॒दं द्या॑वापृथिवी भ॒द्रम॑भू॒दित्ये॒व ब्रू॑याद्यज॑मानमे॒व य॒ज्ञस्या॒ऽऽशिषं॑ गमयत्या॒र्ध्मं सू॑क्तवा॒कमु॒त नमोवा॒कमित्या॑हे॒दम॑रा॒त्स्मेति॒ वा॒वैतदा॒होप॑श्रितो

एत॒दुः । वै । नाम॑ । आ॒सु॒र॒ । आ॒सी॒त् । सः । ए॒तर्हि॑ । य॒ज्ञस्य॑ । आ॒शिष॒मित्या॑ - शिष॑म् । अ॒वृ॒ङ्क्त॒ । ५
यत् । ब्रू॒यात् । ए॒तत् (४) । उ॒ । द्या॒वा॒पृ॒थि॒वी॒ इति॑ द्यावा - पृ॒थि॒वी॒ । भ॒द्रम् । अ॒भू॒त् । इति॑ ।
ए॒तदु॑म् । ए॒व । आ॒सु॒रम् । य॒ज्ञस्य॑ । आ॒शिष॒मित्या॑ शिष॑म् । ग॒म॒ये॒त् । इ॒दम् । द्या॒वा॒पृ॒थि॒वी॒
इति॑ द्यावा - पृ॒थि॒वी॒ । भ॒द्रम् । अ॒भू॒त् । इति॑ । ए॒व । ब्रू॒या॒त् । यज॑मानम् । ए॒व । य॒ज्ञस्य॑ ।
आ॒शिष॒मित्या॑ शिष॑म् । ग॒म॒य॒ति॒ । आ॒र्ध्मं । सू॒क्त॒वा॒कमिति॑ सू॒क्त - वा॒कम् । उ॒त । न॒मो॒वा॒कमिति॑
नमः - वा॒कम् । इति॑ । आ॒ह॒ । इ॒दम् । अ॒रा॒त्स्म॒ । इति॑ । वाव । ए॒तत् । आ॒ह॒ । उप॑श्रित॒ इत्यु॑प - श्रि॒त॒ । १०

'एतदुर्वै' इत्यादि सूक्तवाकविधि । 'एतदु द्यावापृथिवी भद्रमभूत' इति शाखान्तरीय पाठो निन्द्यते । अस्मिन् [V]एतदु [V]नाम [V]आसुर यज्ञफलमात्मीयमकरोत् । तस्मादेतदुशब्दम् उच्चारयन् गतमेव यज्ञफल [V]गमयेत् । तस्मात् 'इद द्यावापृथिवी' [V]इति ब्रुवन् अस्य कर्मण पति [V]यजमानम् [V]एव यज्ञफल प्रापयति ।

इदमरात्स्मेत्यादि । सूक्तवाकनमोवाकयो श्रद्धया नयमिदानीं ससिद्धा [V]इति अयमस्याभिप्राय १५ इति दर्शयति । द्यावापृथिव्योर्हीति । तदधीनसिद्धित्वात् । आशिषमेवेति । [V]ओमवन्ती अस्मद्रक्षण

एतद्विति ॥ अस्य सूक्तवाक्यस्य प्रथमवाक्य शाखान्तरेऽन्यथा पठितम् – "एतदु द्यावापृथिवी भद्रमभूत्" इति, तदिद दूषयित्वा स्वशाखापाठ प्रशसति — 'एतदुर्वै नामाऽसुर आसीत् ॥ एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुर यज्ञस्याऽऽशिष गमयेदिद द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिष गमयति' इति ॥ [V]एतदुनामा कश्चिद् २० [V]आसुर [V]आसीत् । [V]स कस्यचिद्यज्ञे[V] एतस्मिन् सूक्तवाककाले समागत्य 'आयुरा शास्ते । सुप्रजास्त्वमा शास्ते' (तैब्रा ३ ५ १०) इत्यादिकाम् [V]आशिष यजमानसबन्धिनीं विनाश्य [V]स्वसबन्धिनीमकरोत् । तस्मात् 'एतदु द्यावापृथिवी' [V]इति यदि होता पठेत् तदाऽऽसुरस्यैवाऽऽशी प्राप्ति स्यात् । तत शाखान्तरपाठ परित्यज्य 'इद द्यावापृथिवी भद्रम्' [V]इति [V]एव पठेत् । तथा सति यजमानस्यैवाऽऽशी - प्राप्तिर्भवति ॥ २५

आर्ध्मेति ॥ सूक्तवाकनमोवाकशब्दयो क्रियाविशेषणत्व दर्शयति – 'आर्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमरात्स्मेति वावैतदाह' इति । [V]इद इय यथा भवति तथा समृद्धिं प्राप्ता [V]इति एव [V]एतत् मन्त्रवाक्य ब्रूते ॥

७५–७१ इ१–एतदुनामक कश्चिदासुर कस्यचिद्यज्ञे, इ२–एतदुनामक कश्चिदसुर कस्यचित् राज, ध्र–एतदुनामक कश्चिदसुर कस्यचिद्यज्ञस्य । ७६ अ[illegible]उपा–स्वय सर्बन्धिनीम् । ३०

दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी (५) स्तामित्याहाऽऽशिषमेवैतामा शास्ते यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमा शास्ते न प्रमायुको भवति

५ दिवः । पृथिव्योः । इति । आह । द्यावापृथिव्योरिति द्यावा-पृथिव्योः । हि । यज्ञः । उपश्रित इत्युप श्रितः । ओमन्वती इत्योमन्-वती । ते । अस्मिन् । यज्ञे । यजमान । द्यावापृथिवी इति द्यावा-पृथिवी (५) । स्ताम् । इति । आह । आशिषमित्या शिषम् । एव । एताम् । एति । शास्ते । यत् । ब्रूयात् । सूपावसानेति सु उपावसाना । च । स्वध्यवसानेति सु अध्यवसाना । च । इति । प्रमायुक इति प्र-मायुकः । यजमानः । स्यात् । यदा । हि । प्रमीयत इति

१० प्र-मीयते । अथ । इमाम् । उपावस्यतीत्युप अवस्यति । सूपचरणेति सु उपचरणा । च । स्वधिचरणेति सु अधिचरणा । च । इति । एव । ब्रूयात् । वरीयसीम् । एव । अस्मै । गव्यूतिम् । एति । शास्ते । न । प्रमायुक इति प्र मायुकः । भवति ।

यथौ द्यावापृथिव्यौ "स्ताम्" इति "एताम्। यद्ब्रूयात् इत्यादि। सुष्ठु इमामुपेयावस्य निलीयन्ते प्रजा इति "सूपावसाना पृथिवी, सुष्ठु इमामधिरुह्यावसन्तीति "स्वध्यवसाना द्यौः ।

१५ व्यत्ययेनाधिकरणे "आतो युच" (पा ३ ३ १२८)। "चित" (पा ६ १ १६३) इत्यन्तोदात्तत्वम्। यद्वा भावे ल्युटि तदन्ते प्रजा इति सूपावसाना पृथिवी। अनो बहुव्रीहौ "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम्॥

यद्वा हीत्यादि॥ "मृयुर्हि पृथिवीमुपेत्यावस्यतीति। "एवमिम शाखान्तरीय पाठ निन्दित्वा पाठान्तर दर्शयति 'सूपचरणा च' इत्यादि। सुष्ठु इमामुपेत्य चरन्ति जन्तव इति

२० उपश्रित इति॥ यज्ञस्याग्निरूपेण "पृथिव्या फलरूपेण दिवि चाऽऽश्रितत्व प्रसिद्धमित्येतद्दर्शयति 'उपश्रितो दिव पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित' इति॥

ओमन्वतीति॥ रक्षणवत्यौ स्ताम्' "इत्येतादृगाशीरत्र विवक्षितेति दर्शयति– 'ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तामित्याहाऽऽशिषमेवैतामा शास्ते' इति॥

यदिति॥ शाखान्तरपठितम् "अवसानशब्द दूषयित्वा स्वपाठ प्रशसति— 'यद्ब्रूयात्

२५ सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमान स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमा शास्ते न प्रमायुको भवति' इति॥ "यदा पुरुषो

३ तै३ शि ब हो–मृत्युभि, मै४–मृता हि। ४ मै हो–एवमिदम्।

७७ अ इ उ पा हो१–पृथिव्या। ७८ हो–इत्येतादृश्येवात्र। ७९ हो–उपाय°।

तयोँरा॒विदि॒ग्निरि॒दꣳ ह॒विर॑जुष॒तेत्या॑ह॒ या अयाक्ष्म (६)
दे॒वता॑स्ता अ॑रीरधा॒मेति॒ वावै॒तदा॑ह

तयोः । आविदीयां विदि॑ । अग्नि । इदम् । हवि । अजुषत । इति॑ । आह । या ।
अयाक्ष्म (६) । देवता॑ । ता । अरीरधाम । इति॑ । वाव । एतत् । आह ।

ᵛसुपचरणा पृथिवी । सुष्ठु इमामधिरुह्य चरन्तीति ᵛस्वधिचरणा द्यौ । "छन्दसि गत्यर्थेभ्य" ५
(पा ३ ३ १२९) इति युच्, बहुव्रीहिर्वा । ᵛवरीयसीम् उरुतरा ᵛगव्यूति गवा सुखसचार
स्थान द्यावापृथिव्यात्मक यजमानाय ᵛआशास्ते। "गोर्यूतौ छन्दसि°" (पा ६ १ ७९ वा २)
इत्यवादेश । "ऊतियूति°" (पा ३ ३ ९७) इति क्तिनि यूतिशब्दो निपातित । विहृत
व्याख्यानगृह्यते ॥

तयोरानिदीत्यादि ॥ ᵛतयो द्यावापृथिव्यो ᵛआविदि आभिमुख्येन लाभे सति ᵛअग्नि १०
ᵛइद ᵛहवि ᵛअजुषत असेवत, आमीय च ᵛमहत् तेज [85] अवीवृधत अवर्धयत्, ज्याय प्रशस्त

क्रियते सर्वानी पर्यङ्कशयनादिपरित्यागेन ᵛइमा भूमिमुपेत्यावसाव गच्छति, तस्मात् [80] ताद्दशस्यार्थस्य
सूचके [81] सुगारसानशब्दे प्रयुक्ते सति मरणशीलो ᵛभवेत्। [82] भूमिविषयकेण स्वधिचरणेतिशब्देन
ᵛवरीयसीम् अतिबहुलां [83][84] गव्यूर्ति गोप्रचारभूमिं कामितवान् भवति ॥

सूक्तवाकस्य द्वितीयभागपाठस्तु– 'अग्निरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। १५
सोम इदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। अग्निरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत।
प्रजापतिरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदꣳ हविरजुषेताम्। अवीवृधेता महो
ज्यायोऽक्राताम्। इन्द्राग्नी इदꣳ हविरजुषेताम्। अवीवृधता महो ज्यायोऽक्राताम्। इन्द्र इदꣳ
हविरजुषत। अवीवृधत महो ज्यायोऽकृत। महेन्द्र इदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। देवा
आज्यपा आज्यमजुषन्त। अवीवृधन्त महो ज्यायोऽक्रत। अग्निर्होत्रेणेदꣳ हविरजुषत। अवीवृधत महो २०
ज्यायोऽकृत (तैब्रा ३ ५ १०) इति। आज्यभागदेवोऽयमग्निरिदमिद [86] हविरसेवत। सेवित्वा च यजमान
वर्धितवान्। तस्य च यजमानस्य [86]आत्यधिक तेज कृतवान्। एव सोमादिषु स्विष्टकृदग्निपर्यन्तेषु योज्यम्।
[87]देवताक्रमश्चात्राऽऽवाहननिगदवत् [88]अवगन्तव्य। होत्रेण होमनिमित्तेन होमस्य [89]स्विष्टकृत्त्व
कर्तुमित्यर्थ ॥

तयोरिति ॥ तस्यैतस्य मन्त्रकाण्डाम्नातस्य [90]सूक्तवाकमध्यभागस्य तात्पर्यं दर्शयति – २५
'तयोराविदाग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह' इति। पूर्वम्

५–५ मै४–महस्तेज ।

८० ड१–तादृशार्थस्य। ८१ हो१–उपाव°। ८२ आ–भवति। ८३ अ–भूमिविशेषेण,
इ उ ड पा–भूमिविषयेण ग्र–भूमिविषयत्वेन। ८४ ड ड१ ग्र –'गव्यूर्ति' नास्ति। ८५ आ–'इद'
नास्ति। ८६ आ–अधिकम्। ८७ ड हो१–देवताश्चात्रा°, अ इ उ जो ना पा–देवताक्रम स चात्रा°, ३०
हा–योऽत्र देवताक्रम स चात्रा°। ८८ आ हा–तत्र, क–अवगन्तव्य तत्र। ८९ ड१–स्विष्टत्वम्।
९० ड१–सूक्तमध्यम°।

चाकृत कृतवान् । यस्मादेवमग्न्यादिका [ देवता [v]अयाक्ष्म इष्टवन्तो वय [v]ता [v]अरीरधाम, तेज प्रभृतिभिश्च समृद्धा वयमकार्ष्मेति एतदस्य [ मन्त्रभागप्रतिपाद्यमिति दर्शयति ॥

---

'आध्मं सूक्तवाकम्' इत्यनेन वय वृद्धि प्राप्ता इति स्वकीयैवाभिवृद्धिरुक्ता । इदानीम् 'अग्निरिद हविरजुषत' इत्यादिभिर्देवताविषया [१]समृद्धिरुच्यते । [ या [ देवता [११]अयाक्ष्म वयमिष्टवन्त [ ता
५ देवता [ अरीरधाम यथा [१]राद्धा [१]भवन्ति [१] तथा [ अकार्ष्म [११] [ इति एतमेवार्थम् अग्निरिदम्' इत्यादिमन्त्रवाक्य ब्रूते ॥

सूक्तवाकस्य चरमभाग एवमाम्नात – "अस्यामृधद्धोत्राया देवगमायाम् । आशास्तेऽय यजमानोऽसौ । आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरा देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्य धामाऽऽशास्ते । विश्व प्रियमाशास्ते । यदनेन हविषाऽऽशास्ते । तदश्यात्
१० तदृध्यात् । तदस्मै देवा रासन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषा । इष्ट च वीत च । उभे च नो द्यावापृथिवी अꣳहसस्पाताम् । इह गतिर्वामस्येद च । नमो देवेभ्य " ( तैब्रा ३ ५ १० ) इति । अस्या सूक्तवाक्पाठपूर्विकाया होत्राया [१]प्रस्तरप्रहरणरूपाया होमक्रियाया [१]देवगमाया देवान् प्राप्नुवत्या सत्यामृधदध्नोतु । यजमान समृद्धि प्राप्नोतु । असौ विष्णुदत्तादिनामा यजमान स्वस्याऽऽयु प्रार्थयते, सुप्रजास्त्व शोभनाप पत्युक्तत्व सजातवनस्या [१]समानजातीयैर्वनन सेव्यत्वमात्मन इच्छतीति व्युत्पत्तिम्
१५ अभिप्रेत्य [११] तदीयेच्छा सजातवनस्या [११] इत्युच्यते । [१] उत्तरा देवयज्या कालान्तरभाविनी सेयमिष्टि । भूयो हविष्करण [१] [१]प्रभूतसोमयागादिरूपम् । दिव्य धाम स्वर्गस्थानम् । किं बहुना, विश्व प्रिय [१] [१]यद्य दात्मन प्रिय तत् सर्वमनेन प्रस्तरारयेण हविषा यत् फलमाशास्ते [१०] तदश्यात् तत्फल भुङ्क्ताम् । तच्च फलमृध्यात् समृद्धमस्य [१०]भवतात् । तत् सर्वमस्मै यजमानायाग्न्यादयो [१] [१]देवा रासन्ता [१] साधयन्ताम् । [१] [१]तत्फलमयमग्निर्देवो देवेभ्य सर्वेभ्य आनीय वनते यजमान तद्भागिन करोति । वय च होत्रादयो
२० [१] [१]मानुषा सन्तोऽग्ने प्रसादात् [१] [१]समाचितफल मनुष्येभ्य आनयाम इति शेष । कि तदेव मानुष च फलमिति [१] [१]तदुच्यते – [ इष्ट च वीत चेति । इष्ट यागनिमित्त स्वर्गसाधन पुण्य यदस्ति तद्दैव [१] [१]वीतम् अन्नखाद्यादिरूप यदस्ति [११]तदेतन्मानुषम् । किं [११]च एते द्यावापृथिवी उभे अपि [११]नोऽस्मानहस [११] पापात् फलप्रतिबन्धकात् [११] पाता रक्षताम् । इहास्मिन् कर्मणि वामस्य [११]वननीयस्य धनस्य गति प्राप्तिरस्तु । इद च हविर्देवै स्वीक्रियतामिति शेष । नमस्कार सर्वेभ्यो देवेभ्योऽस्तु ॥

---

२५ ६ त३–°प्रतिपाद्यत्वमिति ।

---

९१ आ–समृद्धिरुच्यते । ९२ आ–वयमयाक्ष्म । ९३ आ क–राध्नुवन्ति समृद्धा, अ इ उ जो ना पा हा–राध्नोति समृद्धा, ड हो१–राद्धान्त समृद्धा । ९४ अ इ उ जो ना पा हा–भवति । ९५–९५ उ–तदेतायस्म । ९६ ड१–°रूप° । ९७ ड–'देवगमाया' नास्ति । ९८ ड–°वननीयत्वम् । ९९–९९ आ–एतत्सजातवनस्या, ड हो१ तदीये वा सजात° । १०० अ इ उ जो ना
३० पा हा–उत्तर° । १०१ ड१–प्रभूत सोम° । १०२–१०२ आ क–यद्यत्सर्वमात्मनाऽनेन हविषा प्रस्तरारयेण यजमान ( यत् ) फलमाशास्ते । १०३ आ इ ड१–भवतु । १०४ आ–'देवा ' नास्ति । १०५ ड–साधयन्ता' नास्ति, हो१–साधयन्ताम् । १०६ आ–तत्फलमग्नि° । १०७ ड१–मनुष्या । १०८ अ इ उ पा–समाचितयशो, ड ड१ हो१–समाचित फल जो हा–समाचितयशम् । १०९ ड१–'तदुच्यते' नास्ति । ११० हो१–वीत च खाद्या°, ड१–वीतमन्नखाद्यादि° । १११ ड ड१–
३५ मानुषम् । ११२ आ–च । ११३ ड–नोऽस्माकमहस । ११४–११४ अ इ उ जो पा हा–पापफलप्रतिबन्धकात्, ड ड१–फलप्रतिबन्धकात् पापात् । ११५ आ–वननीयस्य ।

यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽयं यजमानोऽसावित्याह
निर्दिश्यैवैनꣳ सुवर्गं लोकं गमयत्यायुरा शास्ते सुप्रजास्त्वमा शास्त
इत्याहाऽऽशिषमेवैतामा शास्ते सजातवनस्यामा शास्त इत्याह

यत् । न । निर्दिशेदिति नि दिशेत् । प्रतिवेशमिति प्रति वेशम् । यज्ञस्य । आशीरित्या शीः । गच्छेत् । एति । शास्ते । अयम् । यजमान । असौ । इति । आह । निर्दिश्येति नि दिश्य । ५ एव । एनम् । सुवर्गमिति सुव गम् । लोकम् । गमयति । आयुः । एति । शास्ते । सुप्रजास्त्वमिति सुप्रजा -त्वम् । एति । शास्ते । इति । आह । आशिषमित्या शिषम् । एव । एताम् । एति । शास्ते । सजातवनस्यामिति सजात वनस्याम् । एति । शास्ते । इति । आह ।

यन्नेति । एतन्नामा अय यजमान [7]आशास्ते इति यदि विशिष्ट [7]न निर्दिश्येत तदा [7]यज्ञस्य [7]आशी आशासनीयमायुरादिक यज्ञफल [7]प्रतिवेश पार्श्वस्थ य कश्चित् [7]गच्छेत्, तस्मात् १० [8]'अय भवद्दत्तशर्मा' [8]यजमान [7]इति [7]निर्दिश्य [7]एनम् [7]एव स्वर्ग [7]गमयति इति आयुरादि दिव्यधामपर्यन्त विश्व प्रिय प्रापयतीति यावत् ॥

आशिषमेवैतामिति ॥ प्रसिद्धपदार्थक पदे इत्यर्थ । प्राणा वै सजाता इति । समान जन्मान प्राणा [9]सजाता, तेषा [9]वननस्याशासनात् । प्राणा अनन्तरिता [9]अविनष्टा भवन्ति ।

यदिति ॥ मन्त्रगतेन 'असौ' इति पदेन [116]यजमानस्य नामनिर्देशो विवक्षित [117]इत्येतद्दर्शयति १५ –'यन्न निर्दिशेत् प्रतिवेश यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽय यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्ग लोक गमयति' इति ॥ यद्यत्र [118]न यजमानस्य नाम [118]निर्दिशेत्, यज्ञसबन्धिन्यायुरादिरूपा येयम् [118]आशी सा [119]प्रतिवेश [119]गच्छेत् यजमानप्रतिरूपक [118]यज्ञशाला प्रविष्ट पार्श्वस्थ य कश्चित् पुरुष प्राप्नुयात् । [119]असौ [119]इति [120]नामनिर्देशे तु [120] यजमानमेव स्वर्ग [121]प्रापयति । एतमेव नामनिर्देशमभिप्रेत्याम्नाऽऽम्नातम्– "यर्हि होता यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयादेमा [122]अगमन्नाशिषो दोहकामा [122]" २० (तैस १ ७-४) इति ॥

आयुरिति ॥ 'आशास्तेऽय यजमान' [123]इत्यस्मिन् वाक्ये यदाशासनीय सग्रहरूपेण [124]विवक्षित तदेवाऽऽयुरादिवाक्यै प्रपञ्चितमित्येतद्दर्शयति– 'आयुरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽशिषमेवैतामा शास्ते' इति ॥

सजातवनस्यामिति ॥ जीवात्मना सहोत्पन्नत्वात् प्राणा सजातशब्देन विवक्षिता इत्येतत् २५ दर्शयति– 'सजातवनस्यामा शास्त इत्याह प्राणा वै सजाता प्राणानेव नान्वेरति' इति ॥ सजातशब्दाभिधेये

७–७ त्रि–अयमसौ देवदत्त° । ८ तरु ख–इत्यर्थ । ९. मै हो–वनस्याशासनात् । १० र–अनेष्टा , हो–अनिष्टा ।

११६ आ–यजमान° । ११७ आ–इत्याह । ११८ ड ड१–यज्ञशालायाम् । ११९. ड–अत असौ । १२०–१२० आ ड१–नाम निर्दिशेत् । १२१ हो१–प्रापयेत् । १२२–१२२ आ ड– ३० अगमन् । १२३ ड१–इति । १२४ ड–विवरणीयम् ।

प्राणा वै सजाताः प्राणानेव (७) नान्तरेति तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाहेह गतिर्वामस्येदं च नमो देवेभ्य इत्याह

---

प्राणा इति प्र - अनाः । वै । सजाता इति स - जाताः । प्राणानिति प्र - अनान् । एव (७) । न ।
५ अन्तः । एति । तत् । अग्निः । देवः । देवेभ्यः । वनते । वयम् । अग्नेः । मानुषाः । इति । आह ।
अग्निः । देवेभ्यः । वनुते । वयम् । मनुष्येभ्यः । इति । वाव । एतत् । आह । इह । गतिः ।
वामस्य । इदम् । च । नमः । देवेभ्यः । इति । आह ।

---

तदग्निर्देव इत्यादि । तदाशासनीयम् [v]अग्निः स्वय [v]देवः सन् [v]देवेभ्यः देवसकाशात् वा [v]वनते अस्मै यजमानाय दातुमुपादत्ते दिव्यान् भोगान् अस्मादुत्पादयति । [v]वय तु मनुष्या सन्त
१० [v]मनुष्येभ्य मानुषान् भोगान् यजमानार्थं वनुम अग्नेरस्यैव प्रसादादित्येषोऽर्थः प्रतिपादयितुम् अत्राभिप्रेत इति दर्शयितु [v]मनुष्येभ्य इति पदोपस्कारेण व्याचष्टे । अथ यदि विज्ञायते - 'अग्निर्देवेभ्यो वनुते वयमग्ने सकाशात् इति' तदा एतावति [11]प्रतिपिपादयिषिते 'देवो मनुष्यान्' इति [12]पदद्वयोपपादनम् [13]अकिंचित्कर स्यात् ॥

---

प्राणैर्वननस्य सभजनस्य प्रार्थ्यमानत्वात् प्राणानामन्तरायं न करोति । एतैश्च प्राणैरितरेऽपि[125] सेवका
१५ उपलक्षिताः । अतः पूर्वोक्तं मन्त्रव्याख्यानमविरुद्धम् ॥

तदिति ॥ देवसकाशान्मनुष्यसकाशाच्च [126]फलसंपादनम् अग्नौ होतरि [127]च व्यवस्थितमित्येतादृश [128]मन्त्राभिप्रायं दर्शयति – 'तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाह' इति ॥ [129]दिव्या मानुषाश्च [130]भोगाः अत्र[130] विवक्षिता इत्यर्थः ॥

इहेति ॥ इह कर्मणि हविर्भिरसत्कृता अपि देवा नमस्कारेण सत्कृता भवन्तीत्येतद् दर्शयति-
२० 'इह गतिर्वामस्येदं च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै' इति ॥ [131]उभयविधदेवप्रसादात् स्वस्याऽऽर्तिर्न भवति[131] ॥

---

११. तं२.ल–प्रतिपिपादयिषतो ; हो–प्रतिपादयिष्यतः । १२. तं२.हो–°द्वयोपादानम् । १३. हो–किञ्चिन्° ।

---

१२५. अ ई ड.जो.ना.पा.हा–'अपि' नास्ति । १२६ आ–फलम् । १२७ आ–'च'
२५ नास्ति । १२८ आ–अभिप्रायम् । १२९ हो१–देव्याः । १३०–१३० आ हो१–भोगाः ; ॰ ना– भागाः ; ड.हो१–भागा अत्र । १३१–१३१ आ–उभयविधदेवताप्रसादात् स्वस्यार्तिर्न भवेदिति, अ.जो– उभयविधदेवाः प्राप्तभागाः स्वस्यार्तिर्न भवेदिति, ना–उभयविधदेवाः प्राप्ता प्राप्तभागाः स्वस्यार्तिर्न भवेदिति, ई.ड.पा–उभया विधदेवाः प्राप्तभागाः आदारस्यार्तिर्न भवेदिति ।

याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै ॥९॥

[ श्रितस्ते प्र त्रिष्टुभमेतद्द्यावापृथिवी या अयाक्षम प्राणानेव षट्चत्वारिंशच्च । ]

या । च । एव । देवताः । यजति । या । च । न । ताभ्यः । एव । उभयीभ्यः । नमः । करोति । आत्मनः । अनार्त्यै ॥ ९ ॥

[ शब्रा १ ७ ४, १ ८ २-३ ] ५

याश्चैवेत्यादि । गतम् । प्रस्ताराख्यमन्त्रः "सर्वेभ्यः देवेभ्यः" क्रियते इति । अनिष्टा देवता आर्तिमस्य नोत्पादयन्ति ॥

इति द्वितीये षष्ठे नवमोऽनुवाकः ॥

अत्र मीमांसा ॥ [132] दशमाध्यायस्य चतुर्थपादे चिन्तितम्–

" अनूयाजोऽन्तिमो योऽग्नौ किमाराादुपकारकः । १०
स्विष्टकृत् संस्कृतिर्वाऽऽद्योऽनूयाजास्तरसाम्यतः ॥
[133]स्विष्टकृद्रूपगुणस्यात्र प्रत्यभिज्ञार्थवत्त्वतः ।
दृष्टार्थत्वाच्च संस्कारो भवेदन्यप्रयाजवत् " ॥ ( जैम्या १० ४ ३१ ३२ ) ॥

दर्शपूर्णमासयोस्त्रयोऽनूयाजाः [134]समाम्नाताः । तत्र प्रथमद्वितीयानूयाजवत् तृतीयोऽप्याराादुपकारक इति पूर्वपक्षः । अस्ति प्रधानहोमानन्तरभावी प्राशित्रादिभक्षणात् प्राचीनः पुरोडाशादि- १५ द्रव्यकः स्विष्टकृद्धोमः । 'सर्वेषां हविषाम् उत्तरार्धात् सकृत्सकृत् स्विष्टकृते ऽवद्यति' इत्यादिना तदभिधानात्। प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनूयाजेषु तृतीये [135]स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञाऽस्ति, "देवो अग्निः स्विष्टकृत्" ( तैब्रा ३ ५ ९ ) इति [136]तन्मन्त्रपाठात् । सा च पूर्वस्विष्टकृद्देवतास्मरणसंस्कारे सत्यर्थवती स्यात् । प्रथमद्वितीययोस्तु नास्ति सेति वैषम्यम् । किंच, संस्कारपक्षे दृष्टार्थस्तृतीयः स्यात्–[137] तस्मादन्यप्रयाजवदन्त्योऽनूयाजः [138]संस्कारः [138] ॥ २०

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्–

' प्रस्तरं सूक्तवाकेन प्रहरेदिति [139]कालधीः ।
अङ्गाङ्गिता वा स्यात् कालोऽनुपत्त्याद्यसम्भवात् ॥
" प्रहृतेरिष्टदेवार्थसंस्कारत्वात् तदन्वयः ।
सपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ' ॥ ( जैम्या ३ २ १२-१३ )॥ २५

१४–१४ तउ त्रि प र मै४ ल हो–सर्वाभ्यो देवताभ्यः ।

१३२–१३२ अ इ उ जो ना पा हा–'दशमाध्यायस्य संस्कार ' नास्ति । १३३ ड द१ श्र हो१– °गुणस्यात्र । १३४ ड– आम्नाता । १३५ ड–स्विष्टकृत एव गुण° । १३६ आ ड– मन्त्रपाठात् । १३७ क–'तस्मात्' नास्ति । १३८ आ–स्यात् । १३९. जो ना हा–कालधी , ड१– कालविधि । १४० हो१–प्रहृत परिदेवार्थ°, ड–प्रहृते परिदेवार्थ° । ३०

दर्शपूर्णमासयोराम्नायते– " सूक्तवाकेन प्रस्तरं प्रहरति " ( द्र आपश्रौ ३·६·६ ) इति ॥ " इदं [141-]द्यावापृथिवी " ( तैब्रा ३·५·१० ) इत्यादिर्मन्त्रः[-141] सूक्तवाकः । तस्मिन् [142-]मन्त्रेऽग्निः संबोध्यः[-142]; " त्वं सूक्तवागसि " ( तैब्रा ३·५·१० ) इत्याम्नात् । प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र 'सूक्तवाकेन' इत्येतत्पदं कालं लक्षयति । होत्राऽस्मिन् मन्त्रे पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत् ।
५ न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः, पूर्वोक्तप्रैषमन्त्रवदत्रान्वयाभावात् । " अग्निरिदं हविरजुषत । अवीवृधत महो ज्यायोऽकृत " ( तैब्रा ३·५·१० ) इत्यादिकं मन्त्रे पठ्यते । पुरोडाशसेवया [143]अभिवृद्धो अग्निः [144]अस्मिन् [145]यजमाने तेजोबाहुल्यं कृतवानिति तस्यार्थः । न चाप्सौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते ब्रूमः – 'सूक्तवाकेन' इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते । न [146-]चात्यन्तमन्वयाभावः । मन्त्रो ह्ययं[-146] पूर्वसिद्धान् अग्न्यादिदेवान् [147]अनुस्मारयति । प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः । [148]अतो
१० देवताद्वारा मन्त्रप्रहरणयोरन्वयात् मन्त्रो विनियुज्यते । ननु प्रहरणं नाम प्रक्षेपमात्रं, न तु देवतोद्देशेन प्रक्षेपः, यजिधातोरश्रवणात् । तथा सति [149]देवतानामत्राभावात् [150-]तद्द्वाराऽपि नान्वय इति चेत् । मैवम् । देवतानां सद्भावात्[-150] । अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या [151]प्रस्तरप्रहरणाङ्गत्वं [152]बोध्यते । यदि [153]प्रहरणेऽग्न्यादयो देवता भवेयुस्तदा [154]तत्प्रकाशनेन दृष्टोऽर्थो मन्त्रस्य लभ्येत । ततो देवताप्रकल्पने तदुद्देशपूर्वकस्य [155]प्रक्षेपस्य यागत्वं सिध्यति । तस्माद्देवताद्वाराऽस्त्येवान्वयः ॥

१५ [156]तत्रैवान्यच्चिन्तितम्–

" प्रहृतेरखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ।
समाख्या कृत्स्नगा तेन विभक्तास्याङ्गता न हि ॥
[157-]दर्शपूर्णिमयोर्देवाननुसृत्य विभज्यताम् ।
आख्यां लिङ्गेन बाधित्वा भागे [158-]नाम निरुच्यते[-158] " ॥ (जैन्या ३·२·१४-१५) ॥

२० पूर्वोदाहृते [159-]मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया[-159], याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात् । ततः सर्वोऽपि प्रहरणाङ्गमिति चेत् । न । लिङ्गेन समाख्याया बाधितत्वात् । तस्मिन्मन्त्रे पूर्णमासदेवताऽऽम्नातं कस्मिंश्चिद्भागे दृश्यते–" अग्नीषोमाविदꣳ हविरजुषेताम् " इति । भागान्तरे तु दर्शदेवताऽऽम्नानम्– " इन्द्राग्नी इदꣳ [160]हविरजुषेताम् " इति, " इन्द्र इदꣳ हविरजुषत " इति, " महेन्द्र इदꣳ हविरजुषत "

---

१४१. ह१–द्यावापृथिवी भद्रमभूत् इत्यादिको मन्त्रः । १४२–१४२. आ.गृ–अग्निं संबोध्य ।
२५ १४३. क–अतिवृद्धः । १४४. अ.इ.उ.क.ड.ओ.पा.ना.हा.हो१–स्वस्मिन्; आ.ड–तस्मिन् । १४५. क हा–यजमाने वा । १४६–१४६ अ.इ.उ.पा–°भावस्तन्मन्त्रोऽप्ययं; ओ.हा–भावस्तन्मन्त्रो ह्ययं; ना–°भावः मन्त्रो ह्ययम् । १४७ अ.इ.उ पा–स्मारयति । १४८. अ इ.उ.ड.पा.गृ.हो१–ततः । १४९ अ.उ पा–देवानामभावात्; इ–देवतानामभावात्; ओ.ना हा–देवताना मन्त्राभावात्; क.हो–देवतानां मन्त्रे अभावात् ।
१५०–१५० अ उ पा–तद्द्वारा अस्तामन्त्रस्यान्वयो नेति चेन्मैवं देवताना सत्वात् विधिना; ना–तद्द्वाराऽपि
३० नान्वय इति चेन्मैवं देवताना सत्वात्; ओ.हा–तद्द्वाराऽपि नान्वय इति चेन्मैवं देवताना सत्वात् विधिना । १५१. ड.गृ–'प्रस्तर°' नास्ति । १५२. ड.हो१–सिध्यति । १५३. ना–प्रहरणमन्त्रेऽग्न्यादयो । १५४. आ–तत्प्रकाशने । १५५. अ.इ.ना पा–प्रहरणस्य प्रक्षेपात्मना; ओ.हा–प्रक्षेपात्मना; उ–'प्रक्षेपस्य' नास्ति । १५६ ड–'तत्रैवान्यच्चिन्तितम्' नास्ति । १५७. क–दर्शपूर्णमयोर्दे°; हा–दर्शपूर्णभागे देवा°; इ ह१.गृ. हो१–दर्शपूर्णमयोर्दे° । १५८–१५८. हा–नामभिधानं । १५९–१५९. अ.इ उ.पा–अत्र सूक्तवाके
३५ समाख्या कृत्स्नविषया । १६०. क.हा हो१–हविरजुषेताम् अवीवृधेतां महो ज्यायोऽक्राताम् ।

(तैब्रा ३ ५ १०) इति च । इन्द्राग्नीन्द्रमहेन्द्रा पुरुषभेदेन दर्शे व्यवस्थिता । तथा सति मन्त्रलिङ्गेन [161]तत्तद्भाग एव तत्काले[161] व्यवतिष्ठते । सूक्तवाकशब्दश्च भागे यौगिक, सूक्त [162]वदतीति तद् व्युत्पत्ते । यागकाले तत्तन्मन्त्रेण सम्यगुक्त देव [163]वदतीत्यर्थ । अत एव ब्राह्मणेन व्याख्यातम् – " अग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह " (तैब्रा २ ६ १०) इति । [164]शरीरधामाऽऽराधितास्तुष्टानकुर्मेत्यर्थ । [165]तस्मादुभय विभज्य विनियुज्यते । 　५

[166]तत्रैव तृतीये चिन्तितम्–[166]

" [167]अग्नीषोमाविद [168]हव्यमजुषेतामितीरितात् ।
अपच्छिद्येदमित्यादि सर्वशेषो भवेन्न वा ॥
प्रक्रियातो भवेन्नैव प्रक्रियाऽन्तरिता त्रिभि ।
वाक्य [169]ह्यन्तरित तेन भवेत् प्रकरणादपि " ॥ (जैन्या ३ ३ २३ २४) ॥ 　१०

सूक्तवाके श्रूयते– " अग्नीषोमाविदꣳ हविरजुषेताम् । अवीवृधेता महो ज्यायोऽक्राताम् । इन्द्राग्नी इदꣳ [170]हविरजुषेताम् " (तैब्रा ३ ५ १०) इत्यादि । तत्र देवतावाचकमग्नीषोमादिपद [171]पौर्णमास्यादिकाले यथादैवत विभज्य [172]प्रयोज्यमिति पूर्वपादे निर्णीतम् । यत् तु 'इद हवि' इत्यादिकमवशिष्ट पदजात तदग्नीषोममन्त्रगतमप्यमावास्यायाम् [173]अग्नीषोमपदपरित्यागेन पठनीयम् । [174]एवमिन्द्राग्निमन्त्रगतमपि पौर्णमास्याम् [175]इन्द्राग्निपदपरित्यागेन पठनीयम् । तथा [176]सत्येवा 　१५
मन्त्रभागाणा [177]सर्वशेषत्वबोधकौ [178]दर्शपूर्णमासप्रकरणपाठोऽनुगृह्यत इति प्राप्ते ब्रूम – [179]अग्नीषोम मन्त्रशेषस्येन्द्राग्निपदान्वयाश्रवणात् प्रकरणेन [180]प्रथम तदन्वयरूप वाक्य कल्पनीयम् । तेन च [181]वाक्येन [182]इन्द्रादिप्रकाशनसामर्थ्यरूप लिङ्ग कल्प्यते । तच्च लिङ्गम् अनेन मन्त्रभागेनेन्द्राग्निविषया क्रियाऽनुष्ठेयेति विनियोजिका तृतीयाश्रुतिं कल्पयति । तत [183]प्रकरणविनियोगयोर्मध्ये [184]त्रिभिर्व्यवधान भवति । अग्नीषोमपदान्वयरूप तु वाक्य श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते । तस्माद्वाक्येन [185]प्रकरणस्य 　२०
बाधितत्वात् तत्तच्छेष–[185] तत्र [186]तत्र व्यवतिष्ठते[167] ॥

---

१६१ ओ ह्रा–तत्तद्भागवत् तत्काले ना–तत्तद्भागवान् तत्काले क–तत्तद्भागवान् तत्तत्काले, ड१–तद्भाग एव तत्काले । १६२ अ इ उ पा–वदतीति । १६३ ओ ना ह्रा–वदतीत्यर्थ । १६४ अ इ पा–अराराधाम आराधिता सेत्यर्थ । १६५ अ इ पा–तस्मादुभय, उ–'तस्मादय' नास्ति । १६६–१६६ क ओ ना ह्रा 'तत्रैव तृतीये चिन्तितम्' नास्ति, ड१–तत्रैव तृतीयपादे चिन्तितम्, ड ड१ 　२५
श्र–तत्रैव तृतीयपादे । १६७–१६७ क ओ ना ह्रा–'अग्नीषोमाविद व्यवतिष्ठते' नास्ति । १६८ ड–हविरजु°, ड१ श्र–द्रव्यम° । १६९ अ इ उ पा–अन्तरितम् । १७० ड१–हविरजुषेताम् अवीवृधेता महो ज्यायोऽक्राताम् । १७१ अ इ उ पा–°मासादिकाले । १७२ ड१–प्रयोक्तव्यम् । १७३ अ इ उ पा–°षोमपदत्यागेन श्र–°षोमीयपदपरित्यागेन । १७४ ड१–°मन्त्रमपि । १७५ श्र–इन्द्रादिपद° । १७६ ड१–अप्येषाम् । १७७ अ इ उ पा–°शेषत्वबाधकौ । १७८ अ इ उ पा–°प्रकरणयागे तु गृह्यते, 　३०
श्र–प्रकरणपाठो गृह्यते ड१–प्रकरणपाठोऽनुगृहीत । १७९ [illegible] इ उ पा–°मन्त्रशेषपि इन्द्राग्निपदा° । १८० अ इ उ ड ड१ पा श्र ह्रो१–'प्रथम' नास्ति । १८१ अ इ उ पा श्र ह्रो–'वाक्येन' नास्ति । १८२ ड ड१ श्र ह्रो–इन्द्राग्निप्रका° । १८३ आ–°विनियोजकयो° । १८४ अ इ उ पा–प्रधानम् । १८५–१८५ अ उ इ पा ह्रो१–प्रकरण बाधित्वा तत°, ड१–प्रकरण बाधित्वा तच्छेष । १८६ ड१ श्र–तत्रैव ।

[187] नवमाध्यायस्य प्रथमपादे [187] चिन्तितम्—

"यजमानो नोहितव्य ऊह्यो वा न हि पूर्ववत्।
मन्त्र [188] फलप्रधानोऽत ऊह्य [189]सर्वफलित्ववत् " ॥ (जैन्या ९ १ २१) ॥

दर्शपूर्णमासयो 'सूक्तवाकेन प्रस्तर प्रहरति' इति प्रहरणकरणत्वेन विनियुक्ते [190]सूक्तवाक
५ मन्त्रे [191]वाक्यमेतदाम्नायत– 'अथ यजमान आयुराशास्ते' (तै ब्रा ३ ५ १०) इति। तत्र पूर्वोक्त यज्ञ
पतिशब्दवत् सत्रेषु यजमानशब्दो नोहितव्य इति चेत्। [192]न। वैषम्यात्। तथा हि– [193] सर्वत्र प्रकरणे [193]
मन्त्रो द्विविध –क्रियाप्रकाशक फलप्रकाशकश्चेति। पूर्वोदाहृतो मन्त्र इडोपाह्वानक्रियाप्रकाशक।
"उपहूतꣳ रथन्तरꣳ सह पृथिव्या" (तैब्रा ३ ५ ८) [194]इत्यनुवाक [195]तदुपाह्वानमन्त्ररूपे सर्वस्मि
न्नपि तदवभासात्। "इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयताम्। इडोपहूता। उपहूतेडा।
१० दैव्या अध्वर्यव उपहूता" (तैब्रा ३ ५ ८) इत्यादिभिरवान्तरवाक्यैरुपाह्वानक्रियाया एव प्राधान्याव
भासात् [196]तन्मध्यपतितस्यैकस्यैव यज्ञपतिवाक्य [197]वृद्धिरूप फल[197] [198]गमयतीति न तस्य स्वार्थो
विवक्षित। सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति न तु प्रहरणक्रियाम्। "इद द्यावापृथिवी भद्रमभूत्"
(तैब्रा ३ ५ १०) [199]इत्येतस्मिन्ननुवाके सूक्तवाकमन्त्रे [200]सर्वस्मिन्नपि फलावभासात्[200]। "अथ
यजमानोऽसौ। आयुराशास्त सुप्रजास्त्वमाशास्ते सजातवनस्यामाशास्त उत्तरा देवयज्यामाशास्ते [201] भूयो
१५ हविष्करणमाशास्ते[201]" (तैब्रा ३ ५ १०) इत्यादिभि सर्वैरप्यवान्तरवाक्यै [202]फलस्यैवावभासनात्।
तस्माद्विवक्षित फल, फलिनश्च सर्वे यजमाना। तत सर्वेषा फलसिद्ध्ये यजमानशब्दो [203]बहुवचनान्त
त्वेन [204]सत्रेऽप्यूहनीय ॥

[205] दशमाध्यायस्य द्वितीयपादे[205] चिन्तितम्–

"सूक्तवाकाशासन स्यान्न वा [206]नित्यप्रवृत्तित।
२० स्यान्मैव फलनिर्देशात् फलेच्छाऽध्वना न युज्यते"॥ (जैन्या १० २ २५) ॥

"इद द्यावापृथिवी [207]भद्रमभूत्" (तैब्रा ३ ५ १०) इत्यादि सूक्तवाको होत्रा पठ्यते। तत्रैव
[208]श्रूयत–" आशास्तेऽय यजमानोऽसौ। आयुराशास्ते [209]सुप्रजास्त्वमाशास्त" (तैब्रा ३ ५ १०) इत्यादि।
तत्र सूक्तवाकगतो योऽय यजमानाशासनप्रतिपादको [210]मन्त्रभागस्तमस्थियज्ञे होता पठेन्न वेति सशय।

१८७–१८७ जो ना गं हा–नवमस्य प्रथमे, अ इ उ पा द्वितीयस्य तृतीये। १८८–अ इ उ पा–फलप्रधानो
२५ या, ड हा–फल प्रधानोत°, ड१–फल प्रदाय नोत। १८९ अ इ उ जो पा हा हो–°फलत्ववत। १९०
ड–सूक्तवाक्ये, हो१–सूक्तवाके। १९१ ड हो१–'वाक्यम्' नास्ति। १९२ ड ड१ गं–नैतत्।
१९३–१९३ ड–सर्वप्रकरण°, सर्वत्र करण°। १९४ ड–इत्यस्मिन्ननुवाके। १९५ अ इ पा–उपाह्वानरूपे।
१९६ क हा–तन्मध्ये पतितम्। १९७–१९७ इ उ–'वृद्धिरूप फल' नास्ति, क ड१ जो ना गं हा–
वृद्धिफलम्। १९८ ड–गमयतीति। १९९ ड१–इत्यस्मिन्°। २००–२०० ड–सर्वस्मिन्
३० फलावभासात्। २०१–२०१ आ क–'भूयो हविष्करणमाशास्ते' नास्ति। २०२ ड–°वभासात्। २०३
आ–°नान्तेन सर्वेषु। २०४ आ क ड१ गं–सत्रेषूहनीय। २०५–२०५ अ इ उ जो ना पा हा गं–
दशमस्य द्वितीये। २०६ अ–स्यान्मप्रवर्तित, इ उ पा–स्यान्मप्रवृत्तित। २०७ आ हो१–'भद्रमभूत्'
नास्ति। २०८ ड१–पठ्यते। २०९ आ–'सुप्रजास्त्वमाशास्ते' नास्ति। २१० हा–मन्त्र
भागस्तमस्थिर् यज्ञे, ड जो–मन्त्रभागस्तमस्थिर् यज्ञे, अ इ पा–मन्त्र मोऽस्थिरयज्ञे, ज–'मन्त्रभाग
३५ स्तमस्थियज्ञे' नास्ति।

अनूयाजा सूक्तवाकश्च ]

अस्मिन्यज्ञगततया प्रयणीयादिविशिष्टे प्रस्तरप्रहरणमङ्ग, तस्य नित्यत्वात् [211]तस्मिन् विनियुक्तस्य सूक्तवाक-मन्त्रस्य [212]नित्यप्रयुक्ततया तद्भागपाठोऽपि स्यादिति पूर्वः पक्षः। यथा 'स्वर्गकाम' इत्यत्र [13]कर्मियोगेन स्वर्गस्य साध्यताप्रतीतेः स्वर्गशब्देन फलनिर्देशः। एवमाशासनयोगादायुरादिशब्दैः फलं निर्दिश्यते फलेच्छा चादना न युक्ता। तस्मात् तद्भागपाठो [14]बाध्यते॥

५

तत्प्रथान्यश्चिन्तितम्–

"[215]मृते प्राणायुराशीर्नो स्वाहा नो मृतिकामनात्[215]।
प्राणार्भप्रार्थनार्थमायुराशासनं भवेत्"॥ (जैन्या १० २ २९)॥

होत्रा पठितव्ये सूक्तवाके [216]योऽयम् 'आयुराशास्ते'[216] इति भागो यजमानविषयः स किं सर्वस्मिन् यजमानमरणात् पूर्वं वर्जनीयः पठितव्यो वेति संशयः। मुमूर्षोर्यजमानस्याऽऽयुर्निरपेक्षत्वेनार्थ-लोपात् [17]वर्जनीय इति पूर्वः पक्षः। [18]आर्भवार्थस्य पवमानस्य स्तूयमानत्व यजमानस्य मरणकाले। [19]अतः पूर्वं जिजीविषुत्वात् [19]पठनीयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥

---

२११ अइउपा– अस्मिन्। २१२ इ– प्रवृत्तया, ड१–प्रवृत्ततया। २१३ इउपाहो१– कर्मियोगे, अड१ गृ– कामियोगे। २१४ हो१– विरुध्यते ड–निरुध्यते। २१५–२१५ अ– मृते १५ प्राणायुराशीति स्याहातो मृति°, पा– मृते प्राणायुराशीति स्याहा°, उ–प्राणायुराशीति स्याहा°, इ– 'मृते कामनात्' नास्ति। २१६–२१६ अइउइड१पागृहो१– योऽयमाशास्ते। २१७ अइउ पा बाध। २१८ इ–आर्भव°। २१९ ड१ गृ–पठितव्य।

देवा वै य॒ज्ञस्य॑ स्वगाक॒र्तारं॒ नावि॑न्द॒न् ते श॒ंयुं बार्हस्पत्यम॑ब्रुवन्नि॒मं नो॑ य॒ज्ञꣳ स्व॒गा कु॒र्विति॒ सो॑ऽब्रवी॒द्वरं॑ वृ॒णै यदे॒वाब्रा॑ह्मणो॒क्तोऽश्र॑द्दधा॒नो॒ यजा॑तै॒ सा मे॑ य॒ज्ञस्या॒ऽऽशीर॑स॒दिति॒ तस्मा॒द्यदब्रा॑ह्मणो॒क्तोऽश्र॑द्दधा॒नो॒ यज॑ते श॒ंयुमे॒व तस्य॑

दे॒वाः । वै । य॒ज्ञस्य॑ । स्व॒गा॒क॒र्तार॒मिति॑ स्व॒गा - क॒र्तार॑म् । न । अ॒वि॒न्द॒न् । ते । शं॒युमिति॑ ५ श - युम् । बा॒र्ह॒स्प॒त्यम् । अ॒ब्रु॒व॒न् । इ॒मम् । न॒ । य॒ज्ञम् । स्व॒गेति॑ स्व - गा । कु॒रु॒ । इति॑ । सः । अ॒ब्र॒वी॒त् । वर॑म् । वृ॒णै । यत् । ए॒व । अब्रा॑ह्मणोक्त॒ इत्यब्रा॑ह्मण - उ॒क्तः । अश्र॑द्दधा॒न इत्यश्र॑त् - द॒धा॒न॒ । यजा॑तै । सा । मे॒ । य॒ज्ञस्य॑ । आ॒शीरित्या॒ - शीः । अ॒स॒त् । इति॑ । तस्मा॑त् । यत् । अब्रा॑ह्मणोक्त॒ इत्यब्रा॑ह्मण - उ॒क्तः । अश्र॑द्दधान॒ इत्यश्र॑त् - द॒धा॒न॒ । यज॑ते । शं॒युमिति॑ श - युम् । ए॒व । तस्य॑ ।

देवा वै यज्ञस्येत्यादि ॥ [1]अमंकरेण हवींषि [2]स्वस्वदेवतायै यो गमयिता स स्वगाकर्ता १० शयुनामा बृहस्पतिपुत्रोऽभवत् । स [3]देवानाम् । यदेवेत्यादि । 'यजस्व' इति [4]ब्राह्मणेन नोक्तो यो [4]भवति यश्च श्रद्दधानो न भवति तदीयस्य [5]यज्ञस्य या [5]आशीः फल सा ममास्तु [5]इति

अनूयाजा॰ सूक्तवाकव्याख्या नवम ईरिताः ॥

अथ दशमे शंयुवाकमन्त्रव्याख्या पत्नीसंयाजाश्च [1]वर्ण्यन्ते ।

देवा इति ॥ तत्र [2]शंयुवाकमन्त्रान् व्याख्यातुम् [3]आदौ प्रस्तौति,– 'देवा वै यज्ञस्य स्वगाकर्तार १५ नाविन्दन् ते शयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्धानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्धानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममेत्यब्रवीत् किं मे प्रजाया इति योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पांसून्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्र जानादिति तस्माद्ब्राह्मणाय नापगुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति' इति ॥ यस्मै देवाय यत् २० हविः विहितं तस्य हविषः सांकर्यमन्तरेण [4]तद्देवताप्रापणं स्वगाकरणम् । स्वस्मिन् गतिः प्राप्तिः स्वगा । तस्याः कर्तारं बुद्धिमन्तं कमपि पुरुषं [5]देवाः [5]यज्ञस्य अनुष्ठानवेलायां [5]न अपश्यन् । तदा [6]बृहस्पतिपुत्रः यः शंयुनामकः तं बुद्धिमन्तम् अवेक्ष्य प्रार्थयामासुः – अस्मदीयम् [4]इमं [4]यज्ञम् असांकर्येण तस्य तस्य देवस्य स्वगतं [4]कुरु [4]इति । तदाऽसौ [6]शंयुरत्कोचं याचितवान्[6]– '[7]पुत्रस्काम एतेन यज्ञेन यजेत' इत्येतादृशेन [8]विधायकेन [9]ब्राह्मणेनानुक्तः यः कश्चित् [10]स्वेच्छयैव यजते[10] यश्चान्यः श्रद्धारहितो यजते

२५ १. तं३.त्रि.पं२.मै४.लं.हो–असंकरणेन । २. त्रि.पं२.मै४.ल.हो–स्वं स्वं देव॰; तं३–स्वम्यं देव॰ । ३ तं३.मै४–देवतानाम् । ४–४. मै४–ब्राह्मणेनोक्तो न; लं–ब्राह्मणेनोक्तो यो; तं३–ब्राह्मणेनोक्तो यो न ।

१. आ–वर्ण्यन्ते । २. ह१–मन्त्रम् । ३ आ–'आदौ' नास्ति । ४–४. आ–तस्य तस्य देवस्य स्वगतं कुर्विति बृहस्पतिपुत्रं शयुनामानं प्रति देवा अब्रुवन् । तदासौ शयुरप्येवं चिन्तितवान्; ह–तस्य तस्य देवस्य स्वगतं कुर्विति । तथाऽसौ शयुरप्येवं याचितवान् । ५. ह१–बृहस्पतेः पुत्रः । ६. ह१–शंयुर्वियुक्तो ३० ऽर्थं । ७ ह–एवं कामः । ८. अ आ,ह उ.को ना पा हा–'विधायकेन' नास्ति । ९. अ ह.उ.को ना पा हा–॰नानुमतः, ह.ह१–॰नानुयुक्तः । १०–१०. आ–यजेत स्वेच्छयैव, हा–यजते स्वेच्छयैव ।

बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्वेतन्ममेत्यब्रवीत् किं मे प्रजाया(१) इति योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्र जानादिति

बार्हस्पत्यम् । यज्ञस्य । आशीरित्या-शीः । गच्छतु । एतत् । मम । इति । अब्रवीत् । किम् । मे । प्रजाया इति प्र-जायाः (१) । इति । यः । अपगुराता इत्यप-गुरातै । शतेन । यातयात् । यः । निहनदिति नि-हनत् । सहस्रेण । यातयात् । यः । लोहितम् । करवत् । यावतः । प्रस्कद्येति प्र-स्कद्य । पाꣳसून् । संगृह्णादिति सं-गृह्णात् । तावतः । संवत्सरानिति सं-वत्सरान् । पितृलोकमिति पितृ-लोकम् । न । प्रेति । जानात् । इति ।

शंयुना वृतम् । अथ देवैस्तथाऽस्त्वित्यनुज्ञाते पुनश्च शयुः [5]अब्रवीत् [5]एतत् मे [5]मम युष्मत्प्रसादात् संपत्स्यते, अथ [5]किं [5]मे [5]प्रजायाः युष्मत्प्रसादेन संपत्स्यते [5]इति ॥ योऽपगुराता [5]इत्यादि ॥ १० अपगोरणं [6]ताडनोद्योगः । वाक्पारुष्यमित्येके । ब्राह्मणाय तदपत्याय तत्कर्तारं शतनिष्कदण्डेन दुःखयेत् । गुरी उद्यमने तौदादिकः, लेटि [7]आडागमः, "वैतोऽन्यत्र" (पा ३·४·९६) इत्यैकारः । [8]यः [8]निहनत् निहन्यात् ताडयेत् । लेट्यडागमः । गतमन्यत् । [8]करवत् कुर्यात् । पूर्ववदडागमः । [8]लोहितं शरीरात् [8]प्रस्कद्य निपात्य [9]यावतः [9]पांसून् संगृह्णीयात् [10]तावतः संवत्सरान् [8]पितृलोकं [8]न प्रजानीयात् मदपत्ये [10]लोहितस्योत्पादयिता । उभयत्र लेटि "इतश्च लोपः" १५ (पा ३·४·९७) इति लोपः ॥

तयोरुभयोः [11]यज्ञफलं ममास्त्विति वरः । तत आरभ्य [12]सर्वफलद्वयं शंयुमेव [13]प्राप्नोति । पुनरपि शंयुरेवमुवाच – तत् [1]एतत् उभयं [1]मम संपन्नं, मदीयायाः पुत्रपौत्रादिरूपायाः [1]प्रजायाः [1]किं [14]दास्यथ [1]इति । ततो देवा अपगोरणादिकर्तृणां [15]त्वत्पुत्राधीना भवत्विति वरं दत्तवन्तः । [16]अपगोरणं ताडनोद्योगः । तमुद्योगं ब्राह्मणविषये यः करोति तं पुरुषं शतनिष्कदण्डेन [1]यातयात् क्लेशयेत् । [1]यः २० [1]निहनत् ताडयेत् तं सहस्रनिष्कदण्डेन क्लेशयेत् । [1]यः तु ब्राह्मणशरीरे [1]लोहितं ताडनेन [17]उद्गमयति तत्[17] लोहितं भूमौ पतित्वा [1]यावतः [18]परमाणून् व्याप्नोति [1]तावतः [1]संवत्सरान् [19]अयं [1]पितृलोकं [1]न प्राप्नोति, किं [illegible] यमयातना [20]अनुभवति, तत्सर्वं [21]त्वत्प्रजाधीनमिति वरः । यस्मादुक्तरीत्या ब्राह्मणाधि-

५. तं३-इति । ६. पं.२-हननोद्योगः । ७. मै.हो-अडागमः । ८. त्रि.पं२-प्रस्कन्द्य । ९. मै-यावत् । १०. मै४-लोहितं तस्य । २५

११. ड,ड१- यज्ञस्य फलं । १२. अ.इ.उ.जो.ना.पा.हा- तु फलं° । १३ जो.ना- प्राप्नोतीति देवैरुक्ते । १४. आ-दास्यत । १५. आ- त्वत्पुत्राधीना; अ.इ.उ.पा जो.ना.हा-भवत्पुत्राधीना । १६. जो.ना.हा-अपगुरणं । १७-१७. आ-गमयति । १८. ड१-परमाणून् गृह्णाति; श्रे-परमाणून् संगृह्णाति । १९. ड-'अयम्' नास्ति । २०. अ.इ.उ.जो.ना.पा.हा-अनुभवेत् । २१. अ.इ.उ.जो.ना.पा.हा-प्रजाधीन° ।

तस्माद्ब्राह्मणाय नापं गुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत् स्वगा करोति त(२)च्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति

तस्मात् । ब्राह्मणाय । न । अपेति । गुरेत । न । नीति । हन्यात् । न । लोहितम् । कुर्यात् ।
५ एतावता । ह । एनसा । भवति । तत् । शंयोरिति शं-योः । एति । वृणीमहे । इति । आह । यज्ञम् ।
एव । तत् । स्वगेति स्व-गा । करोति । तत् (२) । शंयोरिति शं-योः । एति । वृणीमहे । इति ।
आह । शंयुमिति शं-युम् । एव । बार्हस्पत्यम् । भागधेयेनेति भाग-धेयेन । समिति । अर्धयति ।

तस्मादित्यादि । गतम् । एतावतेति [२२]एतावता अनर्थस्य हेतुना पापेन इत्थंभूतः [२३]भवति ॥

' तच्छंयोरा वृणीमहे ' इत्यादि [२४]शंयुवाकमन्त्रव्याख्यानं [२५]सुबोधम् ॥

१० क्षेपादौ प्रत्यवायोऽस्ति तस्मात् तत् [२]न [२]कुर्यात् । करणे [२२]च [२]एतावता[२२] [२३]पूर्वोक्तेन पापेन युक्तो भवति ॥

यस्य शंयुवाकस्य [२४]व्याख्यानार्थायं प्रस्तावः कृतस्तस्य[२४] शंयुवाकमन्त्रस्य विनियोगं बोधायन आह– "यदा [२५]जानाति [२६]शंयोर्ब्रूहीति तच्छंयुवाकमन्वाह तच्छंयोरावृणीमह [२७]इत्याऽन्तादनुवाकस्य" इति । स चानुवाको मन्त्रकाण्डे समाम्नातः– " तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी
१५ स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे" (तैब्रा ३·५·११) इति । तत्तादृशं प्रशस्तं फलं शंयोर्बार्हस्पत्यादावृणीमहे प्रार्थयामहे । किं तत्फलमिति क्रमेणोच्यते– यज्ञाय गातुं यज्ञस्य देवान् प्रति गमनमावृणीमहे । यज्ञपतये यजमानस्य गातुं देवान् प्रति गमनमावृणीमहे । नोऽस्माकं दैवी स्वस्तिर्देवनिमित्तं विघ्नोपशमनं मानुषेभ्यः [२८]च स्वस्तिर्विघ्नोपशमनमस्तु । भेषजं सर्वपापानामौषधमिदं कर्मोर्ध्वं जिगातु [२९]अविघ्नेन समाप्तिं प्राप्नोतु । अस्मदीयाय
२० द्विपदे मनुष्याय चतुष्पदे पशवे च शं सुखमस्तु ॥

तदिति ॥ तमेतस्य मन्त्रस्य पाठं प्रशंसति– ' तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत्स्वगा करोति ' इति ॥ [३०]तत् तेन[३०] मन्त्रपाठेनेमं [३१]यज्ञं तत्तद्देवतानामसांकर्येण [३१]स्वगतं [३२]करोति ॥

तदिति ॥ प्रकारान्तरेण पुनः प्रशंसति– ' तच्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति ' इति ॥ [३२]मन्त्रवाक्यपाठ एवास्य दातव्यो [३३]भागस्तुष्टिहेतुत्वात् ॥

२५ ० [ संशोधितोऽयं पाठः । लिखितपुस्तकेषु, मै–मुद्रित पुस्तके–'सुकृतवाक°' इति । ] । ११. तै. तै.हो–सुबोधनम् ।

२२. हा–चैतावत्°; ह.च–तावता । २३. आ–पूर्वोक्त° । २४–२४. ■ह.उ.को.ना.पा.हा–व्याख्याने पापस्तावा प्रस्तावस्य । २५. आ–अनुजानाति । २६. क.हा–शंयोऽनुब्रूहि; ह–ट१–२.हो१–शंयोर्ब्रूहीति । २७. आ.ह–इत्येतदनुवाकस्य । २८. आ–'च' नास्ति । २९. ट.ट१–निर्विघ्नेन ।
३० ३०–३०. आ–तत्तेन; ह.'तत् तेन' नास्ति । ३१. अ.ना–स्वगतं; ह–'स्वगतं' नास्ति । ३२. क.ह. ह१.ट२.हो१–मन्त्रपाठे । ३३ ट१–भागस्तुष्टेः हेतुत्वात् ।

गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते(३) यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय ५

---

गातुम् । यज्ञाय । गातुम् । यज्ञपतय इति यज्ञ - पतये । इति । आह । आशिषमित्या - शिषम् । एव । एताम् । एति । शास्ते । सोमम् । यजति । रेतः । एव । तत् । दधाति । त्वष्टारम् । यजति । रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीति । करोति । देवानाम् । पत्नीः । यजति । मिथुनत्वायेति मिथुन - त्वाय । अग्निम् । गृहपतिमिति गृह - पतिम् । यजति । प्रतिष्ठित्या इति प्रति - स्थित्यै । जामि । वै । एतत् । यज्ञस्य । क्रियते (३) । यत् । आज्येन । प्रयाजा इति १० प्र - याजाः । इज्यन्ते । आज्येन । पत्नीसंयाजा इति पत्नी - संयाजाः । ऋचम् । अनूच्येत्यनु - उच्य । पत्नीसंयाजानामिति पत्नी - संयाजानाम् । ऋचा । यजति । अजामित्वायेत्यजामि - त्वाय । अथो इति । मिथुनत्वायेति मिथुन - त्वाय ।

---

आशिषमिति । प्रतीकग्रहणत्वादस्त्वित्यादि सर्वाऽप्याशीर्गृह्यते ॥

सोमं यजतीत्यादि । पत्नीसंयाजविधिः ॥ १५

जामि वा इत्यादि । याज्यानुवाक्ययोः ऋक्त्वेन वैलक्षण्येन जामित्वाभावः । " आप्यायस्व, सं ते " ( तैब्रा ३·५·१२ ) इत्यादयो याज्यानुवाक्या वेदितव्याः ॥

---

गातुमिति ॥ आशीःपरत्वं मन्त्रभागस्य [34]दर्शयति– ' गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते ' इति ॥ २०

सोममिति ॥ अथ चतुरः पत्नीसंयाजान् विधत्ते– ' सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै ' इति ॥

जामीति ॥ [35]एतेषां चतुर्णां पत्नीसंयाजानां प्रत्येकं याज्यानुवाक्ये विधत्ते– ' जामि वा एतद्यज्ञस्य क्रियते यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय ' इति ॥ [36]प्रयाजानां पत्नीसंयाजानां च-[36] [37]तावद्द्रव्यकृतं वैषम्यं २५ नास्ति,-[37] [38]मन्त्रकृतमपि यदि न स्यात् तदानीमालस्यं भवति, तत्परिहाराय प्रयाजेषु यजुर्भिरिष्टेषु पत्नीसंयाजा ऋग्भ्यां याज्यानुवाक्याभ्यां यष्टव्याः ॥

---

३४. क–प्रशंसति । ३५. ङ–तेषाम् । ३६–३६. अ.इ.उ.ओ.ना.पा.हा–प्रयाजानूयाजाना । ३७–३७. ङ–द्रव्यकृतं वैषम्यं तावन्नास्ति, ङ१–द्रव्यकृतं वैषम्यं तावन्नास्ते । ३८. अ.इ.उ.ओ.पा.हा–इति अत्रापि । ३०

ते च याज्यानुवाक्ये क्रमेण मन्त्रकाण्डे ( तैब्रा ३ ५ १२ ) समाम्नाते। तद्विनियोग बौधायनो दर्शयति– 'अथ पत्नीसयाजानामा प्यायस्व स त इति सौम्यस्येह त्वष्टारमग्रिय तन्नस्तुरीपमिति त्वष्टुर्देवाना पत्नीरुत ग्ना वियन्तु देवपत्नीरिति देवपत्नीनामग्निर्होता गृहपति स राजा वयमु त्वा गृहपते जनानामिति गृहपते ' इति॥

५ तत्र सोमस्य त्वष्टुश्चान्यत्राऽऽम्नातानां मन्त्राणा प्रतीकान्याम्नायन्ते "आ प्यायस्व स ते। इह त्वष्टारमग्रिय तन्नस्तुरीपम्" (तैब्रा ३ ५ १२) इति॥ "आ प्यायस्व समेतु ते" इत्येषा सोमस्य पुरोनुवाक्या। "स ते पयाꣳसि" इति सोमस्य याज्या। एतदुभय चतुर्थकाण्डस्य द्वितीयप्रपाठके (तैस ४ २ ७) व्याख्यास्यते॥ "इह [39]त्वष्टारमग्रियम्" इत्येषा [40]त्वष्टु पुरोनुवाक्या। "[40]तन्नस्तु रीपमध पोषयित्नु" इत्येषा [40] याज्या। एतच्चोभय तृतीयकाण्डस्य प्रथमप्रपाठके (तैस ३ १ ११)
१० व्याख्यास्यते॥

[41]देवपत्नीना पुरोनुवाक्या दर्शयति– "देवाना पत्नीरुशतीरवन्तु न। प्रावन्तु नस्तुजये वाजसातये। या पार्थिवासो या अपामपि व्रते। ता नो देवी सुहवा शर्म यच्छत" (तैब्रा ३ ५ १२) इति। इन्द्राण्यादयो [42]देवपत्न्यो या सन्ति ता उशतीरस्मद्धित कामयमाना अस्मानवन्तु रक्षन्तु परैरापादितमरिष्ट [43]वारयन्त्वित्यर्थ। किं च, तुजयेऽपत्याय वाजसातये द्रव्यलाभाय नोऽस्मान् प्रकर्षेण
१५ रक्षन्तु। न केवल दिवि स्थिता इन्द्राण्याद्या किं तु या पार्थिवास पृथिव्या स्थिता देवपत्न्यो या अप्यन्या अपा व्रते वृष्ट्युदकस्थानत्वेनोपलक्षितेऽन्तरिक्षे वर्तन्ते ता देव्य सर्वा सुहवा सुखेनाऽऽह्वातु शक्या यूय [44]नोऽस्मभ्य शर्म सुख प्रयच्छत॥

तत्रैव याज्यामाह– "उत ग्ना वियन्तु देवपत्नी। इन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु। वियन्तु देवीर्य ऋतुर्जनीनाम्" (तैब्रा ३ ५ १२) इति। अपि च, ग्नाश्छन्दोदेवता
२० गायत्र्यादयो देवपत्न्यो [45]वियन्त्विद हविरश्नन्तु। ग्नाशब्दस्य छन्दोवाचित्व पञ्चमकाण्डे समाम्नातम्– "ग्नास्पेत्याह छन्दाꣳसि वै ग्ना" (तैस ५ १ ७) इति। इन्द्रस्य पत्नीन्द्राणी। अग्ने पत्न्यग्नायी। अश्विनो पत्न्यश्विनी। राजा सोमस्य पत्नी राट्। रुद्रस्य पत्नी रोदसी। वरुणस्य पत्नी वरुणानी। एतासामेकैका विज्ञापनामस्मदीयामाशृणोतु। जनीनामिन्द्राण्यादीना य ऋतु कालविशेषो भोजनायोचित तस्मिन् काले वियन्त्वश्नन्तु। सोमत्वष्ट्रो पुरुषयोर्भुक्तवतो [46]सतो पश्चाद्भुञ्जतामित्यर्थ॥

---

२५ ३९–३९ आ–त्वष्टारमिति। ४०–४०. आ–तन्नस्तुरीपमिति। ४१ अ आ इ उ ओ ना पा हा –देवपत्नी°। ४२ इ इ१–देवाना पत्न्यो। ४३. इ हो१–निवार°। ४४ आ–नोऽस्माक। ४५ हा– वियन्त्विद। ४६ ओ ना–'सतो' नास्ति।

अग्नेर्गृहपते पुरोनुवाक्यामाह– "अग्निर्होता गृहपतिः स राजा। विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानाम्। यजिष्ठः स प्रयजतामृतावा" (तैब्रा ३ ५ १२) इति। अयमग्निर्देवानामाह्वाता गृहाणां पालकः। स च राजा दीप्यमानस्तादृशो जातवेदा देवानां विश्वा जनिमा सर्वाणि जन्मानि वेद। अपि च, यो जातवेदा मर्त्यानां जन्मानि वेद स जातवेदाः प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये यजिष्ठोऽतिशयेन यष्टृतमः। ऋतावा [47]सत्यवान्॥ ५

तत्रैव याज्यामाह– "वयमु त्वा गृहपते जनानाम्। अग्ने अकर्म समिधा बृहन्तम्। अस्थूरि णो गार्हपत्यानि सन्तु। तिग्मेन नस्तेजसा सꣳशिशाधि" (तैब्रा ३ ५ १२) इति। हे गृहपतेऽग्ने, जनानां मध्ये वयमेव त्वा समिधा [48]संदीपनेन बृहन्तमकर्म प्रौढं कृतवन्तः। तस्माद्गार्हपत्यानि गृहपतिना त्वया युक्तानि कर्माणि [49]नोऽस्माकमस्थूरि सन्तु [50]अक्लिष्टानि भवन्तु। तिग्मेन तीक्ष्णेन वैरिभिरधृष्येण तेजसा त्वमस्मान् संशिशाधि तीक्ष्णीकुरु निर्भयान् कुर्वित्यर्थः॥ १०

मन्त्रकाण्डे [51]पत्नीसंयाजयाज्यानुवाक्याभ्याम् उपरिष्टाद् इडोपाह्वानम् [52]आज्यप्राशन[53]चाऽऽम्नातम्। तस्य विनियोगं बौधायनो दर्शयति– 'अथोत्तरामिडामुपह्वयते यथासमाम्नातम्" इति। पाठस्तु– "उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उप मा रथन्तरꣳ सह पृथिव्या ह्वयताम्। उपहूतं वामदेव्यꣳ सहान्तरिक्षेण। उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम्। उपहूतं बृहत् सह दिवा। उप मा बृहत् सह दिवा ह्वयताम्। उपहूताः सप्त होत्राः। उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुः सहर्षभा। १५ उप मा धेनुः सहर्षभा ह्वयताम्। उपहूतो भक्षः सखा। उप मा भक्षः सखा ह्वयताम्। उपहूताꣳ हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयताम्। इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी। ब्रह्म देवकृतमुपहूतम्। दैव्या अध्वर्यव उपहूताः। उपहूता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपत्नीं वर्धान्। उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतेयं यजमाना। इन्द्राणीवाविधवा। अदितिरिव सुपुत्रा। उत्तरस्यां देवयज्यायामुपहूता। भूयसि हविष्करण उपहूता। दिव्ये २० धामन्नुपहूता। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता। विश्वमस्याः प्रियमुपहूतम्। विश्वस्य प्रियस्योपहूतस्योपहूता।" (तैब्रा ३ ५ १३) इति। पूर्वोक्तमिडोपाह्वानं यजमानार्थम्। इदं तु पत्न्यर्थम्। अत एव तत्र तत्र स्त्रीलिङ्गप्रयोगः। ब्राह्मणे पत्नीसंयाजयाज्यानुवाक्ये विधायेडोपाह्वानमन्त्रस्य पूर्ववद् व्याख्येयत्वात्तदत्रोपेक्षितम्॥

---

४७ आ गृ हा–सत्यवाक्। ४८ क ड होर–समिन्धनेन। ४९ डर–'नोऽस्माकम्' नास्ति। ५० क ना–अक्षीणानि हा–अक्लिष्टानि अ आ इ उ पा–आश्लिष्टानि। ५१ क–°याज्यापुरानुवाक्यानाम्, ड ह१ गृ हो१–°याज्यानुवाक्यानाम्। ५२ क ड मू–°प्राशनाय। ५३ क ड ह१ गृ हो१–'च' नास्ति। १५

पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति ॥१०॥

[ प्रजायां करोति तत् क्रियते त्रयस्त्रिंशच्च ]

---

पङ्क्तिप्रायण इति पङ्क्ति प्रायण । वै । यज्ञ । पङ्क्त्युदयन इति पङ्क्ति उदयन । पञ्च ।
५ प्रयाजा इति प्र याजा । इज्यते । चत्वारं । पत्नीसयाजा इति पत्नी सयाजा ।
समिष्टयजुरिति समिष्ट यजु । पञ्चमम् । पङ्क्तिम् । एव । अन्विति । प्रयन्तीति प्र यन्ति ।
पङ्क्तिम् । अनु । उदिति । यन्ति ॥ १० ॥

[ यथा १९१२४-२२५ ]

---

पङ्क्तिप्रायण इत्यादि ॥ समिष्टयजुषो विधि । प्रायण प्रारम्भ । उदयन समाप्ति ।
१० पङ्क्तिपञ्चक प्रायणीय उदयनीयश्च द्वय यस्येति बहुव्रीहि । प्रायणोदयनहेतुत्व [१२] पङ्क्तेरनुशब्देन द्योत्यते। पङ्क्त्या हेतुना सर्वे [१३]ऋत्विग्यजमाना समीचीन यज्ञ प्रारभन्ते, समीचीन समापयन्ति, [१४]उभयभाजो भवन्तीति । "चादिलोपे विभाषा" (पा८ १ ६३) इति प्रथमा तिङ्विभक्ति न निहन्यते। समासगतिनिघातावुक्तौ ॥

इति द्वितीये षष्ठे दशमोऽनुवाक ॥

---

१५ पङ्क्तिप्रायण इति ॥ अथ समिष्टयजुर्विधिमर्थवादेनोन्नयति– 'पङ्क्तिप्रायणो वै यज्ञ पङ्क्त्युदयन पञ्च प्रयाजा इज्यन्ते चत्वार पत्नीसयाजा समिष्टयजु पञ्चम पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति'। इति ॥ "पञ्चाक्षरा पङ्क्ति" (तैस ६ १ २) इत्यन्यत्र श्रुतत्वादत्र पङ्क्तिशब्देन [५४]पञ्चसख्या लक्ष्यते। सव पङ्क्ति प्रायणे प्रारम्भे यस्य सोऽय [५५]पङ्क्तिप्रायण । [५६]तथा पङ्क्तिरुदयने समाप्तौ यस्य सोऽय पङ्क्त्युदयन । अत्र दर्शपूर्णमासेष्टौ प्रारम्भे पञ्च प्रयाजा इज्यन्ते, समाप्तौ पत्नीसयाजा चत्वार,
२० समिष्टयजु पञ्चमम्। तथा सति पङ्क्तिम् एव प्रारभन्ते पङ्क्तिम् एव समापयन्ति। तस्मात् 'समिष्टयजुर्जुहुयात्' इति तात्पर्यार्थ । "देवा गातुविद" (तैस १ १ १३) इत्यय मन्त्र इष्टिसपूर्ति कारित्वात् समिष्टयजुरित्युच्यते। स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च ॥

---

१२. तै३–पूर्वोक्तेरनुशब्देन। १३ ल–ऋत्विग्य यज०। १४ त्रि ल–'उभयभाज इत्यस्यानन्तर 'शिवा', मै४–उदयनीयभाज ।

---

२५ ५४ गै–पञ्चशब्दोप', ह ड,१–पञ्चमस्तोप'। ५५ आ–याग । ५६ अ आ इ क जो पा रा– र्गसन्दर्यन्ति।

अत्र मीमांसा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्–

" निग्राथावगुरेच्चेति [57]क्रत्वर्थो वा[57] पुमर्थता।
फलवत् क्रतुसांनिध्यात् क्रत्वर्थः पूर्वमन्त्रवत् ॥
यातना परिहारस्य निषेधफलतोचिता ॥
निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यताम् " ॥ ( जैन्या ३·४·१८–१९ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "यो ब्राह्मणायापगुरेत् तं शतेन यातयात् तस्माद्ब्राह्मणाय [58]नापगुरेत " ( द्र. तैसं २·६·१० ) इति। तत्र यथा पूर्वाधिकरणे ( मीस् ३·४·२०–२२ जैन्या ३·४·१७ ) मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते, एवमत्रापि ब्राह्मणवधनिषेधस्य [59]क्रत्वङ्गत्वमिति चेत्। [60]नैवम्। वैषम्यात्। पूर्वत्र [61]आत्मनि प्राणापानधारणं मन्त्रोच्चारणफलं [62]न संभवति[62] [63]तस्य प्रागेव सिद्धत्वात्[63]। इह [64]स्वपगोरणे शतसंवत्सरयातनामुपन्यस्य [65]अपगोरण-निषेधस्य करणात्[65] यातनापरिहारस्य निषेधफलत्वमुचितम्। तस्मान्निषेधस्य [66]केवलपुरुषार्थतया प्रकरणात् [67]अपकर्षः युक्तः ॥

तत्रैव [68]तृतीयपादे चिन्ततम्—

" संयाजयन्ति जाघन्या पत्नीरित्यत्पशावुत।
दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः ॥
जाघनी मम भागोऽसौ दर्शादौ समवैति हि।
नोत्कर्ष्यं न [69]संस्कारः साधनत्वात् तृतीयया ॥" ( जैन्या ३·३·१७·१८ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "जाघन्या पत्नीः संयाजयन्ति" ( आपश्रौ ३·८·१० ) इति। जाघनी पशोः पुच्छम्। [70]पत्नीशब्दोऽयाऽऽहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः। अत एव श्रूयते " षड् प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः" ( तैसं २·६·१० ) [71]इति। तत्र तृतीयाहुतौ देवपत्नीनां[71] देवतात्वात् तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः। तत्र जाघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते। जाघनी च पशौ समवेता न तु दर्शपूर्णमासयोः। अतः प्रकरणादुत्कृष्य पशौ [72]निवेश्यतामिति प्राप्ते ब्रूमः– जाघनीशब्देन पशोर्भागोऽभिधीयते। स च दर्शपूर्णमासयोः पशुयागत्वाभावेऽपि प्रत्याविभा संपादयितुं शक्यते। न चात्र पशौ [73]विद्यमानाया जाघन्याः पत्नीसंयाजैः[73] संस्कार्यत्वं, तृतीयया साधनत्वावगमात्। तस्मान्न प्रकरणादुत्कर्षः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥

---

५७–५७. अ.इ.उ.पा–क्रत्वर्थोऽयं; ट.ट१.गृ.–क्रत्वर्थोत। ५८. आ–नापगुरेत्। ५९. अ. आ.इ.उ.क.बो.ना.पा.हा–क्रतावङ्गत्वादिति। ६०. ट.ट१–न। ६१. आ.क–आत्म°। ६२–६२. अ.इ.उ. पा–अविदितस्य; ट.ट१–गृ.हो१–न भवति। ६३–६३. अ.इ.उ.पा–प्रागेव सिद्धत्वात्; क.बो.ना.हा– 'तस्य प्रागेव सिद्धत्वात्' नास्ति। ६४. आ.ट.ट१.गृ.हो१–स्वगोरणे। ६५–६५. आ.ट.बो.ट.ट१. ना.गृ.हो१–अवगोरणनिषेधात्। ६६. अ.इ.उ.पा–°पुरुषार्थत्वेन। ६७. ट.ट१.गृ.हो१–उत्कर्षः। ६८. इ.उ.बो.ना.पा.हा–तृतीये। ६९. आ.ट.ट१.गृ.–संस्कार्य°। ७०. अ.उ.पा–°शब्दश्चाहुति°। ७१–७१. क–देवपत्नीनामिति तृतीयाहुतौ; हा–इति [illegible] तृतीयाहुतौ; अ.इ.उ.प–इति तत्र तृतीयाहुता देवतानां। ७२. क.बो.ट.ट१.बो.ना.गृ–निवेशनमिति। ७३. अ.इ.उ.प–विद्यमानकल्पनः।

युक्ष्वा हि दे॑वहू॒तमा॒ꣳ अश्वा॒ꣳ अग्ने॑ र॒थीरि॑व । नि होता॑ पू॒र्व्यः॑ स॑दः ॥

युक्ष्व । हि । देवहूतमानिति देव-हूतमान् । अश्वान् । अग्ने । रथीः । इव ।
नीति । होता । पूर्व्यः । सदः ॥

अथ [1]सर्वगैष्टेः सप्तदशसामिधेन्योऽनभ्यस्ताः । 'युक्ष्वा हि' इत्याद्याः सर्वा गायत्र्यः ॥
५ [2]तत्र प्रथमा[3]– [ 'युक्ष्वा हि' इति ]; हे [V]अग्ने, [V]युक्ष्व योजय । छान्दसो लुक् शपः, "द्व्यचोऽतस्तिङः" (पा ६·३·१३५) इति संहितायां दीर्घत्वम् । [V]देवहूतमान् देवानामाह्वातृतमान् [V]अश्वान् व्यापनान् ज्वालासमूहान् । उभयत्रापि "दीर्घादटि समानपादे" (पा ८·३·९) इति रुत्वम् । [V]रथी. [V]इव यथा रथी रथवान् रथे अश्वान् युङ्क्ते । "छन्दसीवनिपौ" ( पा ५·२·१०९ वा २ ) इति मत्वर्थीय ईकारः । ततस्तथायुक्ताज्ज्वालस्त्वं [V]पूर्व्यः पुराणः [V]होता
१० देवानां यष्टा [V]निषदः निषीद । लेटि व्यत्ययेन शपो लुकि अडागमः ॥

दशमे शंयुवाकश्च पत्नीसंयाजकाः [1]श्रुताः ।
या दर्शपूर्णमासाख्या सेष्टिरत्र समापिता ॥

अथैकादशे [2]सर्वगैष्टिहौत्रमन्त्रा अभिधीयन्ते[2] । ननु "सत्यं प्रपद्ये" (तैब्रा ३·५·१) इत्यादिक एको हौत्रकाण्डः । "उभा वामिन्द्राग्नी" (तैसं १·१·१४) इत्यादिरन्यानुवाकात्मकोऽपरः । [3]तयोर्मध्ये
१५ "युक्ष्वा हि" [4]इत्यनुवाको [5]न समाम्नातः । तत् कथमस्य हौत्रत्वम् । समाप्स्येयेति ब्रूमः । यथा तयोः काण्डयोः [6]याज्ञिकानां समाख्यया हौत्रत्वं एवमस्याप्यनुवाकस्येति द्रष्टव्यम् । अत एवाऽऽपस्तम्ब आह – "अग्नये संवर्गाय पुरोडाशमष्टाकपालम्" इत्युक्ते (मत्या) "युक्ष्वा हि देवहूतमानिति पञ्चदश सामिधेनीरन्वाह । नित्यया परिदधाति । कुविदङ्ग नो गविष्टय इति याज्यानुवाक्ये । यस्यानुपद्विघ्ना हि त इति संयाज्ये" (आपश्रौ १९·२५·९–१३) इति । नित्यया 'आ जुहोत दुवस्यत' (तैब्रा ३·५·२)
२० इत्यनयेत्यर्थः ॥

युक्ष्वा इति ॥ तत्र प्रथमायाः सामिधेन्याः पाठस्तु– 'युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यं सदः' इति ॥ हे [V]अग्ने, त्वं [V]देवहूतमान् [V]देवानामतिशयेनाह्वातॄन् [V][7]युङ्क्ष्व योजय । हिशब्दः [V]प्रसिद्धवाची । प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः । योजने दृष्टान्तः– [V]रथी [V]अश्वान् [V]इव इति । रथस्वामी यथा अश्वान् योजयति तद्वत् । किं च त्वं [V]पूर्व्यः पुरातनः [V]होता होमोत्पादको भूत्वा
२५ [V]निषदः अस्मिन् यागस्थाने निषीद ॥

१. तं२.मै.हो–संवर्गेष्टेः । २–२. तं.३.सं.हो–'तत्र प्रथमा' नास्ति ।

१. आ.फ–भिताः । २–२. गं.हो१– संवर्गेष्टिहौत्रमभिधीयते । ३. द१.गं–न तयोरुभयोः द–तत्र तयोरुभयोः । ४. द.द१.गं–इत्याद्यनुवाकः । ५. द१.गं–'न' नास्ति । ६. द,द१,गं–याज्ञिक' । ७. आ.फ–देवानामाह्वातृतमान् देवान् । ८. आ.फ–'युक्ष्व' नास्ति । ९. द.फ.मो.
१० ना,दा–'प्रसिद्धवाची' नास्ति, हो१–प्रसिद्धार्थवाची ।

उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥
त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥

उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतर इति विदुःऽतरः ।
श्रत् । विश्वा । वार्या । कृधि ॥
त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो । आहुतेत्याऽहुत ।
ऋतावेत्यृतऽवा । यज्ञियः । भुवः ॥ ५

अथ द्वितीया– 'उत न ' इति ॥ हे देव दीप्तिमन्, अग्ने, अस्माक कर्माणि देवान् अच्छ वोच आभिमुख्येन ब्रूहि भ्रातृव्यानभिभवितुम् । एते सम्यग्यजन्त इति । छान्दसो लिङ्, "निपातस्य च " (पा ६ ३ १३६) इत्यच्छेत्यस्य संहितायां दीर्घत्वम् । विदुष्टर विद्वत्तर । अयस्मयादित्वेन (पा १ ४ २०) भत्वात् सम्प्रसारणम् । किं च विश्वानि वार्याणि १० वरणीयानि अभिप्रेतानि भ्रातृव्यमरणादीनि श्रत् कृधि सत्यानि कुरु । यथाभिमतसंपत्ति सत्यम् । करोतेर्लेटि छान्दसः शपो लुक् । "श्रुशृणुपृकृवृभ्य " (पा ६ ४ १०२) इति हिभावः ॥

तृतीया– 'त्वम् ' इति ॥ हे यविष्ठ्य युवतम । छान्दसः स्वार्थिको यत् । सहसः बलस्य सूनो मथनप्रभवत्वात् । हे आहुत नियमाभिमुख्येनाहूत । "सुबामन्त्रिते " (पा २ १ २) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पदादित्वात् षाष्ठिकमामन्त्रिताद्यु- १५ दात्तत्व (पा ६ १ १९८), परस्य त्वाष्टमिकमामन्त्रितानुदात्तत्वम् (पा ८ १ १९) । यत् यस्मात् । ऋतावा सत्यवान् यज्ञवान् वा । तस्मादस्माकमपि यज्ञियः यज्ञसंपादनार्ह भुव भव । त्वमेव तथा भवितुमर्हसीति । भवतेर्लेटि शपो लुकि अडागमे "भूसुवोस्तिङि " (पा ७ ३ ८८)

उतेति ॥ अथ द्वितीया– 'उत नो देव देवाँ अच्छा वोचो विदुष्टर । श्रद्विश्वा वार्या कृधि ' इति ॥ अपि च हे देव अग्ने, त्वं विदुष्टर अतिशयेनास्मदभिप्रायं विद्वान् देवान् प्रति अच्छा २० आभिमुख्येन गत्वा यजमानो हविर्दास्यतीति वोच ब्रूहि । विश्वा वार्या सर्वाणि वरणीयान्यस्मदभि प्रेतानि श्रत् कृधि श्रद्धेयानि विश्वसनीयानि यथा भवन्ति तथा कुरु ॥

त्वामिति ॥ अथ तृतीया– 'त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुव ' इति ॥ हे आहुत हे यविष्ठ युवतम, हे सहसः सूनो बलस्य पुत्र, मथनलक्षणेन बलेनोत्पन्नत्वात्त्वं बलपुत्र इत्युच्यसे । हे आहुत आभिमुख्येन हूयमान, त्वं ह त्वमेव यत् यस्मात् ऋतावा सत्यवानस्मात् यज्ञियः भुवः यज्ञस्य साधको भव ॥ २५

३ ल–'अग्ने' नास्ति । ४ तै३ त्रि मे४ हो–अच्छा । ५ तै३–'विद्वत्तर' नास्ति । ६ तै३ ल हो–कुरुत । ७ मे–°लेटि निपातस्य (?) । ८ तै३ हो–°प्रभवत्वात् ।

१० आ क–°साधको ।

अयम॒ग्निः स॑हस्रि॒णो वाज॑स्य श॒तिन॒स्पतिः॑ । मू॒र्धा क॒वी र॑यी॒णाम् ॥
तं ने॒मिमृ॒भवो॑ य॒थाऽऽ न॑मस्व॒ सहू॑तिभिः । नेदी॑यो य॒ज्ञम॑(१)ङ्गिरः ॥

अ॒यम् । अ॒ग्नि । स॒ह॒स्रिण॑ । वाज॑स्य । श॒तिन॑ । पति॑ ॥
मू॒र्धा । क॒वि । र॒यी॒णाम् ।
५ तम् । ने॒मिम् । ऋ॒भव॑ । य॒था । एति॑ । न॒म॒स्व॒ । सहू॑तिभि॒रिति॒ सहू॑ति - भि॒ ।
नेदी॑य॰ । य॒ज्ञम् (१) । अ॒ङ्गि॒रः ॥

इति गुणाभाव । "हि च" (पा ८ १ ३४) इति निघाताभाव । ऋतशब्दान्मत्वर्थीयो वनिप्रत्यय । यज्ञशब्दात् "यज्ञर्त्विग्भ्याम्°" (पा ५ १·७१) इति घ ॥

चतुर्थी– 'अयम् इति' ॥ अय खलु अग्नि पति स्वामी रयीणा सर्वधनाना, १० तस्मादिहैव समिन्धयाम इति । अग्निरिदानीं विशेष्यते– सहस्रिण शतिन च शतप्रमाण वत सहस्रप्रमाणवतश्च वाजस्य अन्नस्य पति स्वामी, अत एव मूर्धा प्रधानभूत कवि क्रान्तदर्शन.। तस्मादय रयीणा दाताऽस्त्विति भाव । रयीणामित्यत्र "नामन्यतरस्याम्" (पा ६ १ १७७) इति विभक्तेरुदात्तत्वम् ॥

पञ्चमी– '[11]त नेमिम्' इति[11] ॥ हे अग्ने, नेदीय अन्तिकतम सदा अस्माक १५ प्रत्यासन्न अङ्गिर [12]अङ्गनादिगुणयुक्त तम् इमम् यज्ञम् आनमस्व अस्मान् प्रति प्रह्वीभूत[12] कुरु । अस्मदभिमतसंपादनोन्मुख कुरु । सहूतिभि समानाह्वानै सहायै सह । यद्वा – नेदीय अन्तिकतममानमस्व । यथा ऋभव देवतक्षाण नेमि नीयमानम् आवर्तयन्ति

अयमिति ॥ अथ चतुर्थी–' अयमग्नि सहस्रिणो वाजस्य शतिनस्पति । मूर्धा कवी रयीणाम्' इति ॥ अय [11]समिध्यमान अग्नि [11]सहस्रसंख्याकस्य शतसंख्याकस्य[11] च [11]वाजस्य अन्नस्य[11] २० पति अत एव मूर्धा [11]शिरोवदुत्तम कवि विद्वान् रयीणा धनाना दाता भवतु ॥

तमिति ॥ अथ पञ्चमी– 'त नेमिमृभवो यथाऽऽ नमस्व सहूतिभि । नेदीयो यज्ञमङ्गिर' इति ॥ हे अङ्गिर अङ्गसौष्ठवयुक्ताग्ने, समाना हूतिर्देवानामाह्वान येषामृत्विजा [11]ते सहूतयस्तै सहूतिभि [11]युक्तस्त्व त यज्ञम् अस्माकं नेदीय [12]अत्यन्तसमीप प्रति आनमस्व आनीय वश कुरु । तत्र दृष्टान्त – ऋभव [13]नेमिं यथा इति । यथा देवतक्षाणो रथचक्रस्य नेमिमानीय स्ववशत्वेन २५ परिभ्राम्यमाणा कुर्वन्ति [20]तद्वत् ॥

९ हो–सर्वधातूनाम् । १० तै३ ल हो–विमन्त्यु° । ११–११. त३ मै मै४ ल हो–तमिति । १२–१२ हो–°युक्तमिदं यजमानः स्यात्मात् प्रतिविम्बित ।

११ आ क हो–इध्यमानः । १२–१२. क द१–शतसंख्यावत सहस्रसंख्यावत । १३–१३ क–यामिनोऽस्य । १४ आ क–शिरोवदुद्यत । १५ क द१ गं.हो१–विद्वान् दाता । १६ अ १ ३० ओ पा हो–व्याप्योऽग्ने । १७ क युक्त तादृश त्वं । १८ आ क–समीपं । १९. आ.क–'नेमि नास्ति । २० क हो१–'तद्वत्' नास्ति ।

तस्मै॑ नू॒नम॒भिद्य॑वे वा॒चा वि॑रूप॒ नित्य॑या । वृष्णे॑ चोदस्व सुष्टु॒तिम् ॥
कमु॒ ष्वि॑दस्य॒ सेन॑या॒ऽग्नेरपा॑कचक्षसः । प॒णिं गोषु॑ स्तरामहे ॥

तस्मै॑ । नू॒नम् । अ॒भिद्य॑व॒ इत्य॒भि - द्य॒वे । वा॒चा । वि॒रूपेति॑ वि - रू॒प । नित्य॑या ।
वृष्णे॑ । चो॒द॒स्व॒ । सु॒ष्टु॒तिमिति॑ सु - स्तु॒तिम् ॥
कम् । उ॒ । स्वि॒त् । अ॒स्य॒ । सेन॑या । अ॒ग्नेः । अपा॑कचक्षस॒ इत्यपा॑क - च॒क्ष॒सः ।        ५
प॒णिम् । गोषु॑ । स्त॒रा॒म॒हे॒ ॥

तद्बुध्यमानयेति । [१३]अन्तर्भावितण्यर्थस्य व्यत्ययेनात्मनेपदम् । " यथेति [१४]"पादान्ते "
( फि ८५ ) इति यथेत्यस्य निघातः ॥

षष्ठी– ' तस्मै ' इति । नूनम् इति पादपूरणे । हे अग्ने विरूप नानारूप, तस्मै
यज्ञैराराधनीयाय अभिद्यवे अभिगतदीप्तये वृष्णे वर्षित्रे इन्द्राय इन्द्रार्थं वाचा नित्यया वैदिक्या १०
ऋगादिरूपया सुष्टुतिं शोभनां स्तुतिं शोभनस्तुतिकं वा यज्ञं चोदस्व प्रेरय पुनः पुनः प्रवर्तय ।
यद्वा–आभीक्ष्ण्य नित्यत्वं, यथा नित्यप्रहसित इति; पुनः पुनः प्रवर्तमानया वाचा सुष्टुतिं प्रवर्तयेति ।
यथा पुनः पुनः स्तुवीत यजमान. तथा धनादिना समृद्धं कुर्विति । [१५]सुष्टुतिशब्देन गतिसमासे
" मन्क्तिन्व्याख्यान° " ( पा ६.२.१५१ ) इत्यादिना उत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ छान्दसं
पत्वम् । कश्चिदाह– तस्मै यजमानाय हविषां वर्षित्रे पुनः पुनः यज्ञं [१६]प्रवर्तयेति ॥        १५

सप्तमी– ' कमु ष्वित् ' इति ॥ कम् इति प्रश्ने, उ इत्यवधारणे, स्वित् इति
वितर्के । [१७]अस्य अग्नेः अपाकचक्षसः अनल्पदर्शनस्य प्रवृद्धज्ञानस्य सेनया बलसपत्न्या कमेव

तस्मा इति ॥ अथ षष्ठी– ' तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् '
इति ॥ हे विरूप विविधरूपयुक्ताग्ने, अभिद्यवे सर्वतो द्योतमानाय वृष्णे [२१]कामानां वर्षयित्रे तस्मै
यष्टव्याय देवाय नित्यया वैदिकमन्त्ररूपया वाचा अस्माभिः क्रियमाणां सुष्टुतिं शोभनां स्तुतिं नूनं २०
चोदस्व सर्वथा प्रेरय तदग्रे कथयेत्यर्थः ॥

कमिति ॥ अथ सप्तमी– ' कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ' इति ॥
पाकोऽल्पः । चक्षो ज्ञानम् । अपाकं [२२]चक्षो [२३]यस्यासावपाकचक्षाः [२४]सर्वज्ञ इत्यर्थः । स्वयं जानतः अस्य
अग्नेः सेनया परिचारकजनेन सह गोषु गवादिद्रव्यविषये कम् उ पणिं स्तरामहे स्वित् कं नाम
व्यवहारमाच्छादयामः । [२५]एतदीयं परिचारकजनं[२५] वञ्चयित्वा न कोऽपि व्यवहारोऽस्माभिः कर्तुं शक्यते । २५
तस्मात् सर्वमपि व्यवहारमस्यानुग्रहेणैव कुर्म इत्यर्थः ॥

१३ तै३.मै.ल हो–अन्तर्भावितस्य । १४ मै.तै२.हो–पदान्ते । १५. तै.३ल–सुष्टुशब्देन । १६.
ल–प्रवर्तयति । १७. हो–' अस्य ' नास्ति ।

२१. अ,आ,इ जो.ड.पा–कामानां । २२. हो१–' चक्षो ' नास्ति । २३. ड.हो१–°चक्षाः ।
२४. ड–सर्वज्ञस्य । २५–२५. ड–एतदीयपरिचारकमात्रम् ।        ३०

मा नो॑ दे॒वानां॒ विशः॑ प्रस्ना॒तीरि॑वो॒स्राः । कृ॒शं न हा॑सु॒रघ्नि॑याः ॥
मा नः॑ स॒मस्य॑ दू॒ढ्यः॑ परि॑द्वेषसो अꣳहु॒तिः । ऊ॒र्मिर्न नाव॒मा व॑धीत् ॥

मा । न॒ । दे॒वाना॑म् । विशः॑ । प्र॒स्ना॒तीरिति॑ प्र॒ । स्ना॒ती । इ॒व॒ । उ॒स्राः ।
कृ॒शम् । न । हा॒सु॒ । अघ्नि॑याः ॥
५ मा । न॒ । स॒मस्य॑ । दू॒ढ्य॑ । परि॑द्वेषस॒ इति॒ परि॑ द्वे॒षस॒ । अꣳहु॒तिः ।
ऊ॒र्मि॑ । न । नाव॑म् । एति॑ । व॒धी॒त् ॥

उ खलु [v]पणि [१८]साव्यवहारिक क्रयविक्रयादानभोगादिलक्षण [१९] गोषु गवादिधनविषयेषु [१९] [v]स्तरामहे छादयाम । न किञ्चिदपि, सर्वमपि व्यवहार कुर्म [२०]एव । पण व्यवहारे, औणादिक इप्रयय, [२१]स्तृणातेर्विकरणव्यत्ययेन शप्, खिदित्यस्य छान्दस पत्वम् ॥

१० अष्टमी 'मा न' इति ॥ [v]देवाना हविर्व्यवहारिणा यजमानाना सबन्धिय [v]विश प्रजा ऋत्विजो वा [v]न अस्मान् [v]मा [v]हासु मा त्याक्षु, [v२४]प्रस्नाती [२५]प्रस्नाय प्रस्नुता [v]उस्रा गा [२६v]इव अहन्तव्या [v]अघ्निया । यद्वा अघ्निया इति गवा नाम । उस्रा क्षीरादिदानेन जगता वासयित्र्य । [२६]कमिव ? [v]कृश [v]न वत्समिव, [२७]प्रस्नुतस्तन्य हि गावो वत्सक विशेषेण न जहति । एवम् [२८]अस्मान् मा [२९]हासिषुरिति । उभयोपमार्थायाऽपि वाक्यार्थो

१५ पमा भवतीयुपमेतत् ॥

नवमी– 'मा न' इति ॥ [v]समस्य सर्वस्यापि [v]दूढ्य द्रढीय । पृषोदरादि । [v]परिद्वेषस सर्वतो द्वेषणशीलस्य भ्रातृव्यस्य [v]अꣳहुति अभिभव [v३०]न अस्मान् [v]मा [v]वधीत्

मेति ॥ अथाष्टमी–'मा नो देवाना विश प्रस्नातीरिवोस्रा । कृश न हासुरघ्निया' इति ॥ [१]देवाना [२६]सबन्धिन्य [२]विश वाणिज्यकारिण्य प्रजा [२]न अस्मान् [२]मा [२]हासु [२७]नैव परित्यक्तवत्य । का इव ? [२]प्रस्नाती [२८]प्रस्नुतस्य [२]उस्रा क्षीरादिप्रदानेन [२]वासहेतव [२]अघ्निया [२]इव गाव इव । [२]यमिव ? [२]कृश [२]न अल्पवयस्क वत्समिव । यथा क्षीरपूर्णस्तनयुक्ता गाव शिशु वत्स न त्यजन्ति तद्वदित्यर्थ ॥

२०

मेति ॥ अथ नवमी– 'मा न समस्य दूढ्य परिद्वेषसो अꣳहुति । ऊर्मिर्न नावमा वधीत्' इति ॥ [३१]समस्य अस्माभि समानस्य [२]दूढ्य दुर्धिय [२]परिद्वेषस सर्वतो द्वेष कुर्वत शत्रो [२]अꣳहुति अस्मासु कृतो द्रोह [२]न अस्मान् [२]आ समन्तात् [२]मा [२]वधीत् । का केव ? [२]नावम् [२]ऊर्मि [२]न । यथा नदीं

२५ गच्छन्तीं नावमूर्मिर्न [३२]विनाशयति तद्वद्वैरिकृतो द्रोहोऽस्मान् मा विनाशयतु । सर्वशब्दपर्यायो वाऽय समशब्द, सर्वस्य [३३]वैरिणो द्रोहो मा विनाशयतु ॥

१८ त३ मि प२ ल हो-सव्यवहारकम् । १९-१९ तै३-गोष्वश्वादिधनविषयम् । २० मै४ -सत् । २१ हो-एवम् । २२ मै हो-तृणाते मै४ ल-स्तृणोते । २३-२३ ए-प्रस्नाति प्रस्नुता । २४ मै४-प्रस्नाता । २५ तै३-इति । २६ त३ मै-विमिव । २७ तै३ मि मै४ ल हो-स्तन्या ।

३० २८ मै ३-माम् । २९ मै ए हो-हासु । ३० तै३ मै ए हो- 'न' नास्ति ।

२६ आ क-संबन्धिन । २७ उ हो१-मैव । २८ आ-प्रस्नुता । २९ ट१-व्यवहारहेतव । ३० आ-किमिव । ३१ क, बो दा-'समस्य' नास्ति । ३२ आ क-नाशयति । ३३ ट१ द्वा१-वैरिण ।

नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैर(२)मित्रमर्दय ॥
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥

नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः । अमैः । (२)। अमित्रम् । अर्दय ॥
कुवित् । सु । नः । गविष्टय इति गो - इष्टये । अग्ने । संवेषिष इति सम् - वेषिषः । रयिम् ।
उरुकृदित्युरु - कृत् । उरु । नः । कृधि ॥ ५

[v]माऽस्मानवधिषुः । [v]नात्र दुर्बला [v]ऊर्मिः इव । कश्चिदाह– समस्य समानस्य दूढ्यः मत्सरिणः ।
समानमन्यत् ॥

दशमी– 'नमस्ते' इति ॥ हे [v]अग्ने, [v]नमः, [v]ते तव खलु [v]ओजसे बलाय [v]कृष्टयः
मनुष्याः [v]गृणन्ति शब्दयन्ति । तवैव बलं स्तुवन्ति यजमानादयः । अत त्वम् [v]अमित्रम्
अस्माकमपकारिणं शत्रुम् [v]अमैः अमनैः रोगादिभिः [v]अर्दय मारय । अमेरित्रप्रत्ययः (उ ६२३) । १०
अन्यत्र पचाद्यचि ( पा ३·१·१३४ ) वृषादिः ( पा ६·१·२०३ ) द्रष्टव्यः ॥

एकादशी– 'कुवित् सु' इति ॥ हे [v]अग्ने, [v]नः अस्माकं [v]रयिं धनं [v]सु [v]संवेषिषः
सुष्ठु समन्तात् । प्रापय । [v]कुवित् इति निपातो भूयिष्ठमित्यस्यार्थे वर्तते । विष्लृ व्याप्तौ । लेटि
"सिब्बहुलं लेटि" ( पा ३·१·३४ ) इति सिप् प्रत्ययः । "लेटोऽडाटौ" ( पा ३·४·९४ )
इत्यडागमः । [v]गविष्टये गावश्च इष्टयश्च गविष्टि, तदर्थं तत्साधनानि कर्माणि मे स्युरिति । १५
लिङ्गव्यत्ययः छान्दसः, नुमभावो वा छान्दसः । उत्तमबहुलधनं प्रापयेति । इदानीं तत्प्रापित
बहुतरं कुर्वित्याशास्ते– [v]उरुकृत् उरुणो बहुनो धनस्य कर्तुः, न हि त्वमस्य कर्तुं जानासि ।

नम इति ॥ अथ दशमी– 'नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय' इति ॥
हे देव अग्ने, कृष्टयः मनुष्याः ते तव ओजसे बलाय नमः गृणन्ति नमस्कारवाचिनं शब्दं
प्रयुञ्जते यजमानादयस्त्वदीयं बलं नमस्कुर्वन्तीत्यर्थः । अतस्त्वम् अमित्रम् अस्माकमपकारिणम् अर्दय २०
मारय, अमैः रोगादिभिः ॥

कुविदिति ॥ एवं दश सामिधेनीरुक्त्वा पुरोनुवाक्यामाह– 'कुवित्सु नो गविष्टयेऽग्ने संवेषिषो
रयिम् । उरुकृदुरु णस्कृधि' इति ॥ हे अग्ने, त्वं नः अस्माकं रयिं धनं कुवित् बाहुल्यं यथा भवति
तथा सुष्ठु संवेषिषः सम्यक्प्रापयितुमकरोः । किमर्थम् ? गविष्टये गोभिः सहितेष्टिर्गविष्टिस्तदर्थम् उरुकृत् २५
प्रभूतकारी त्वं नः अस्मदीयं कर्मफलम् उरु कृधि प्रभूतं कुरु ॥

३१. मै४.हो–अस्मान् मा बधिष्ट । ३२. तं३.मै४.ल.हो–दुर्धियः । ३३. तं३–तथैव । ३४.
तं३.लं–'अर्दय' नास्ति । ३५. त्रि–पृषोदरादिः । ३६. तं३.मै–'हे' नास्ति । ३७. तं३.मै.ल.हो–
'सिप् प्रत्ययः' नास्ति । ३८–३८. तं३.मै.ल.हो–'सिप् प्रत्ययः' नास्ति । ३९. मै–'वा' नास्ति । ४०. मै४–उत्तं बहु
धनं । ४१. तं३.मै.ल.हो–तत्प्राप्तिम् । ४२. मै४–बहु° ।

३४. द–°वाचकं । ३५. द१.–स्तुवन्ती° । ३६. हा–मर्दय । ३७. द–सम्यक्प्राप्तिमकरोः । ३०
३८ द.द१.गृ.हो१–'त्वं' नास्ति । ३९. आ.क–अस्माकं । ४०. गृ–फलम् ।

मा नो॑ अ॒स्मिन् म॑हाध॒ने परा॑ वर्ग्भार॒भृद्य॑था । सं॒वर्ग॒ꣳ सꣳ र॒यिं ज॑य ॥
अ॒न्यम॒स्मद्भि॒या इ॒यम॑ग्ने॒ सिष॑क्तु दु॒च्छुना॑ । वर्धा॑ नो॒ अम॑वच्छवः॑ ॥

मा । न॒ । अ॒स्मिन् । म॒हा॒ध॒न इति॑ महा - ध॒ने । परेति॑ । व॒र्क् । भा॒र॒भृदिति॑ भार - भृत् । य॒था ।
सं॒वर्ग॒मिति॑ स - वर्ग॑म् । समिति॑ । र॒यिम् । ज॒य ॥

५ अ॒न्यम् । अ॒स्मत् । भि॒यै । इ॒यम् । अग्ने॑ । सिष॑क्तु । दु॒च्छुना॑ । वर्धं॑ । न॒ । अम॑व॒दित्यम॑ - व॒त् । शव॑ ॥

पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। ᵛनः अस्माकं धनम् ᵛउरु ᵛकृधि बहुतरं कुरु । सामर्थ्यातिशयो गम्यते। “ नश्च धातुस्थोरुषुभ्य ” ( पा ८·४·२७ ) इति नसो णत्वम्, “ क करत्करति° ” ( पा ८·३·५० ) इति सत्वम्। करोतेर्लेट्, पूर्ववच्छपो लुक्, धिभावश्च ॥

१० द्वादशी– ‘ मा न ’ इति ॥ ⁴³उक्तं महत्तरं⁴³ धनं देहीति तत्र ᵛमहाधने त्वया ⁴⁴ᵛअस्मिन् दीयमाने इत्थं कर्तव्यम् । भारभृदिति । ᵛमा ᵛपरावर्क् मा ⁴⁵परानैषीः । ᵛयथा महान्तं भारं वोढुं समर्थो भारं न इति न किंचित् ⁴⁶परावर्जयति महान्तमपि भारमानयति । एवं त्वयाऽपि कर्तव्यम्। ⁴⁷छजेर्लेटि “ मन्त्रे घस° ” ( पा २·४·८० ) इति च्लेर्लुक् । किं च– ᵛसंवर्गम् ⁴⁸‘संवृज्य संवृज्य’⁴⁸ देये धनराशौ पुनः पुनः समानीय महान्तं धनराशिं ᵛसंजय

१५ सम्यक् जित्वा आनय। वर्जेराभीक्ष्ण्ये णमुल् ( पा ३ ४·२२ ) । छान्दसो वा घमुल् ॥

त्रयोदशी– ‘ अन्यम् ’ इति ॥ हे ᵛअग्ने, ᵛअस्मत् अस्मत्तः ᵛअन्यं शत्रुम् इयं ᵛदुच्छुना दौर्गत्यं दुर्भिक्षं नरकादिरूपा या पीडा ᵛसिषक्तु सेवताम्। सचेर्लोटि “ बहुलं छन्दसि ”

मेति ॥ अथ ⁴¹याज्यामाह- ‘ मा नो अस्मिन् महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय ’ इति ॥ ᵛनः अस्मभ्यं त्वया दत्ते ᵛअस्मिन् ᵛमहाधने ᵛमा ᵛपरावर्क् पराभवकारणं वर्जनं विनाशनं

२० मा कुरु। तत्र दृष्टान्तः – ᵛभारभृत् ᵛयथा इति। लोके यथा भारवाही बलीवर्दादिर्द्रव्यादिकं न नाशयति तद्वत्। किं च, ᵛसंवर्गं ⁴²‘संवृज्य संवृज्य’⁴² देये धनराशौ पुनः पुनः समानीय ᵛरयिं ᵛसंजय प्रभूतं धनं सम्यक् प्रापय ॥

अन्यमिति ॥ तत्रैव विकल्पितां याज्यामाह- ‘ अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः ’ इति ॥ हे ᵛअग्ने ᵛइयं ᵛदुच्छुना ⁴³रोगरूपा दारिद्र्यरूपाऽनेकरूपा या पीडा ᵛअस्मत्

२५ ४३–४३. मै–उत्तमं महत्तमम् । ४४. मै४–अस्मभ्यम् । ४५. मै४.ऍ–पराजैषीः । ४६. हो–परानयति । ४७. [ शुद्धीकृतोऽयं पाठः । मै–पुस्तके ‘ मजेर्लेटि ’ इति पाठः । स चानुपयोगादाकरग्रन्थविरोधाच्च परिहरणीयः । ] । ४८–४८. मै हो–सवृज्य ।

४१. आ–याज्या। ४२–४२. आ–संपृज्य सपृज्य, हो१–संवृत्य संवृत्य, इ१–‘ संवृज्य संवृज्य ’ नास्ति। ४३. गृ.हो१–रोगदारिद्र्यरूपा ।

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा ।
तं घेदग्निर्वृधाऽवति ॥

यस्य । अजुषत् । नमस्विनः । शमीम् । अदुर्मखस्येत्यदुः-मखस्य । वा ।
तम् । घ । इत् । अग्निः । वृधा । अवति ॥

(पा २·४·७६) इति शपः श्लुः ; श्लौ चाभ्यासस्य । [v]भियै भयार्थं यथाऽसौ भीतः पलायेत । ५
[v]नः अस्माकं तु [v]शव बलं वर्धय । [v]अमवत् [v]अमसाधनः भ्रातृव्यक्षयो यैस्तद्वत् बलं वर्धय ।
"अणावकर्मकात्°" इति (पा १·३·८८) परस्मैपदम् । "छन्दस्युभयथा" (पा ३·४·११७)
इति शप आर्धधातुकत्वाण्णिलोपः, "द्व्यचोऽतस्तिङः" (पा ६·३·१३५) इति संहितायां
दीर्घत्वम् ॥

चतुर्दशी— 'यस्य' इति ॥ [v]यस्य [v]नमस्विनः अन्नवतः पुरोडाशादिहविःसंपादिनो १०
यजमानस्य [v]शमीं कर्म [v]अजुषत् सेवते प्रीतो भजते । कीदृशस्य [v]अदुर्मखस्य अविगुणयज्ञस्य,
तमेवाग्निः [v]वृधा वर्धनेन [v]अवति तर्पयति । प्रवृद्ध वा रक्षति । घेदिति पादपूरणे । केचिदाहुः—
नमस्विनो नमस्कारशीलस्य वा अविगुणयज्ञस्य वा कर्मेति विकल्पार्थो वाशब्द इति । घेति
पादपूरणे, इदित्यवधारणे ॥

[v]अन्यं [४४]क्षिपन्तु अस्मत्तो व्यतिरिक्तं वैरिणं संकल्पात् । किमर्थम् ? [v]भियै भीत्यर्थम् । यथा पीडया वैरी १५
भीतः पलायते [४५]तथा पीडां[४५] प्राप्नोतु । [v]नः अस्माकं [v]शवः [v]बलं बलं वर्धय । [४६]कीदृशम् ? [v]अमवत्,
[४७]यथा वैरिणः अमः रोगो वर्धेत[४७] तद्वत् ॥

यस्येति ॥ अथ [४८]स्विष्टकृतः [४९]पुरोनुवाक्यामाह— 'यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं
घेदग्निर्वृधाऽवति' इति ॥ दुष्टोऽविकलो मखो यज्ञो दुर्मखः । न विद्यते दुर्मखो यस्य यजमानस्य सोऽदु- २०
र्मखः, सम्यगनुष्ठितयज्ञ इत्यर्थः, [५०]तस्य, [v]नमस्विनः भक्त्या नमस्कुर्वतः [v]यस्य यजमानस्य [v]शमीं
सुखकरीमाहुतिम् [v]अजुषत् अग्निः असेवत । [v]अदुर्मखस्य सम्यगनुष्ठायिनः [v]वा यस्य यजमानस्य शमीम-
जुषत् [v]तं [v]घेत् [५१]तमेवोभयं नमस्कुर्वन्तं [५२]सम्यगनुतिष्ठन्तं वाऽयम् [v]अग्निः [v]वृधा धनादिवर्धनेन [v]अवति
रक्षति ॥

४९. तै३.मै-आमसाधनम्; हो-अमसाधनम् ।

४४. आ.क-'क्षिपन्तु' नास्ति । ४५-४५. क.दा१.शृं.हो१-सा पीडा तं । ४६. अ.आ.इ. ७५
उ.क.को.पा.हा-कि तत् । ४७-४७ आ-यस्य वैरिणाममो रोगो वर्धितः । ४८. आ-स्विष्टकृ° ।
४९. आ-°वाक्या । ५०. क.दा१-'तस्य' नास्ति । ५१. क-°मयविधम् । ५२. दा१- 'सम्यगनु-
तिष्ठन्तं' नास्ति ।

परस्या अधि (२) संवतोऽवराꣳ अभ्या तर । यत्राहमस्मि ताꣳ अव ॥
विद्म हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे ॥

परस्याः । अधीति (३) । संवत इति सं वतः । अवरान् । अभि । एति । तर ।
यत्र । अहम् । अस्मि । तान् । अव ॥
५ विद्म । हि । ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ।
अध । ते । सुम्नम् । ईमहे ॥

पञ्चदशी– 'परस्या' इति ॥ [ परस्याः ] सवतः सगते अधि उपरि परमे सङ्घे तिष्ठन् । "उपसर्गाच्छन्दसि" ( पा ५ १ ११८ ) इति वतिः । अवरान् अपकृष्टानप्यस्मान् अभ्यातर आभिमुख्येन, मर्यादया च तर तारय दुःखात् । वनोतेः सपदादित्वात् १० ( पा ३ ३ १०८ वा ९ ) क्विप् । परस्मात् सम्भजनीयात् लोकादुपरि वर्तमान त्वं अवरानस्मान् अभ्यातर आभिमुख्येनागच्छ । तथा कृत्वा यत्र अहम् अस्मि कुले ग्रामे जनपदे वा काले वा तान् तत्स्थानपि सर्वान् अव रक्ष तर्पय वा । रुवानुनासिकौ ( पा ८ ३ १,९ ) उक्तौ ॥

षोडशी– 'विद्म' इति ॥ हे अग्ने यस्मात् ते तव पुरा पूर्वमेव वयं जानीम । कथमिव ? अवसः अभिगन्तव्य पितरमिव त्वा वयं जानीम, क्रमागतो रक्षक १५ त्वमस्माकं पितुरेव ते वयं जानीम । पुत्रहेपितव्याख्यार्थमिदम् । अध अत एव कारणात् ते त्वामेव सुम्नं सुखम् ईमहे याचामहे । "द्व्यचोऽतस्तिङः" ( पा ६ ३ १३५ ) इति, "निपातस्य च" ( पा ६ ३ १३६ ) इति उभयत्रापि दीर्घत्वम् ॥

परस्या इति ॥ तत्रैव विकल्पिता पुरोनुवाक्यामाह– 'परस्या अधि संवतोऽवराꣳ अभ्या तर । यत्राहमस्मि ताꣳ अव' इति ॥ सम्यग्वनुते "देवान् भजते यस्यां क्रियायां" सा क्रिया संवत्, परस्याः २० उत्तम अधि उत्कृष्टाया अस्या इष्टेरधिष्ठानम् अवरान् निकृष्टानप्यस्मान् अभ्यातर आभिमुख्येनाऽऽगत्य दुःखानि तारय । "यत्र येषु बन्धुषु अहम् अस्मि तान् बन्धूनपि "अव रक्ष" ॥

विद्मेति ॥ अथ स्विष्टकृतो याज्यामाह– 'विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे' इति ॥ हे अग्ने, "हि यस्मात् पुरा वयं ते तव अवसः रक्षणं विद्म जानीम । कस्येव ? पितुः यथा, "लोके पुत्रा यथा पितुः पालनं जानन्ति" तद्वत् । अध तस्मात् कारणात् ते २५ सुम्नम् ईमहे त्वया संपादितं सुखं प्राप्तुम् ॥

५०-५० मै४-अग्नेर पितुरिव अवस पितव्य पुत्र । ५१ ल हा-अयगत ।

५२-५३ आ क-भजते यस्यां । ५४ ड द १ गृ.हो१-तारय । ५५ आ क-'यत्र' नास्ति । ५६-५६ क हा-मारद्य । ५७ आ क-'हि' नास्ति । ५८ आ-शातवन्त ; ड-जानीम । ५९-५९ आ-ऽगारे पुत्रा यथा पितुः पालनं जानन्ति, ड१-पितुः पालनं जानाति । ६० अ ड उ को ना पा हा गृ- ३० अध ।

परस्या अधि (३) संवतोऽवराँ अभ्या तर । यत्राहमस्मि ताँ अव ॥
विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे ॥

परस्याः । अधीति (३) । सवत इति स ऽवतः । अवरान् । अभि । एति । तर ।
यत्र । अहम् । अस्मि । तान् । अव ॥
५ विद्म । हि । ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ।
अध । ते । सुम्नम् । ईमहे ॥

पञ्चदशी 'परस्या' इति ॥ [ परस्याः ] सवतः सगते अधि उपरि परमे सक्षेपे तिष्ठन् । "उपसर्गाच्छन्दसि" (पा ५ १ ११८) इति वति । अवरान् अपकृष्टानस्मान् अभ्यातर आभिमुख्येन, मर्यादया च तर तारय दुःखात् । वनोतेः सपदादित्वात् १० (पा ३ ३ १०८ वा ९) क्विप् । परस्मात् सभजनीयात् लोकादुपरि वर्तमानः त्व अवरानस्मान् अभ्यातर आभिमुख्येनागच्छ । तथा कृत्वा यत्र अहम् अस्मि कुले ग्रामे जनपदे वा काले वा तान् तत्स्थानपि सर्वान् अव रक्ष तर्पय वा । रुचानुनासिकौ (पा ८ ३ १,९) उक्तौ ॥

षोडशी– 'विद्म' इति ॥ हे अग्ने तस्मात् ते तव पुरा पूर्वमेव वय जानीम । कथमिव? अवसः अभिगन्तव्य पितरमिव त्वा वय जानीम, क्रमागतो रक्षक १५ त्वमस्माकं पितुरेव ते वय जानीम । पुत्रदेपितव्यावृत्त्यर्थमिदम् । अध अत एव कारणात् ते वामेन सुम्नं सुखम् ईमहे याचामहे । "द्व्यचोऽतस्तिङ" (पा ६ ३ १३५) इति, "निपातस्य च" (पा ६ ३ १३६) इति उभयत्रापि दीर्घत्वम् ॥

परस्या इति ॥ तत्रैव विकल्पिता पुरोनुवाक्यामाह– 'परस्या अधि सवतोऽवरान् अभ्या तर । यत्राहमस्मि तान् अव' इति ॥ सम्यग्वनुते "देवान् भजते यस्या क्रियायां" सा क्रिया सवत्, परस्या २० संवतः अधि उत्कृष्टाया अस्या इष्टेरधिष्ठानम् अवरान् निकृष्टानप्यस्मान् अभ्यातर आभिमुख्येनऽऽगत्य दुःखानि नाशय । "यत्र येषु बन्धुषु अहम् अस्मि तान् बन्धूनपि" अव रक्ष" ॥

विद्मेति ॥ अथ स्विष्टकृतो याज्यामाह– 'विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे' इति ॥ हे अग्ने, "हि यस्मात् पुरा वयं ते तव अवसः रक्षणं विद्म जानीम । कस्येव? पितुः यथा, "लोके पुत्रः यथा पितुः पालनं जानाति" तद्वत् । अध तस्मात् कारणात् ते २५ सुम्नम् ईमहे त्वया संपादितं सुखं प्राप्तुम् ॥

५०–५० मै४–कस्येव पितुरिव अवसः पितव्य पुन । ५१ ल हा–अवगा ।

५३–५३ आ क–भजते यस्यां । ५४ क ट१ ग्रं हो१–तारय । ५५ आ क–'यत्र' नास्ति । ५६–५६ क हा–आरभ्य । ५७ आ क–'हि' नास्ति । ५८ आ–जानन्त ; ट–जानीम । ५९–५९ आ–लोके पुत्र यथा पितु पालन जानाति ट१–पितु पालन जानाति । ६० अ इ उ को ना पा हा ग्रं– ३० अथ ।

प्रजापते॒ऽ स वे॑द॒ऽ सोमा॑पूषणे॒ऽमौ दे॒वौऽ ॥११॥

[ य॒ज्ञस॒मर्धि॑ष्ट॒पते॒का॒त्रिं॑श॒ति॒श्च । ]

प्र॒जा॑पत॒ इति॑ प्र॒जा॑ प॒ते । स । वे॒द ।
सोमा॑पू॒षणे॒ति॒ सोमा॑ पू॒षणा । इ॒मौ । दे॒वौ ॥११॥

[ काम ७ १७ ] ५

" य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत् " ( तैस २ ४ ४ ) इत्यस्या पुरोऽनुवाक्या– ' प्रजापते न त्वत् ' इति त्रिष्टुप् ॥ व्याख्यातेय– " सोमस्य त्विषिरसि " ( तैस १ ८ १४ ) इत्यत्र । इह त्वस्या प्रतीक गृह्यते । हे [v]प्रजापते, [v]त्वदन्य [v]एतानि विश्वानि [v]जातानि भुवनानि [v]परिबभूव सर्वतो व्याप्नोति । तस्माद्यद् कामयमाना [v]ते [v]जुहुम नय [v]तद् तथैवास्माकम् [v]अस्तु । [v]वय [v]रयीणा [v]पतय [v]स्याम इति ॥ १०

तत्रैव याज्या– ' स वेद पुत्र ' इति जगती ॥ इयमपि– " हिरण्यगर्भ " ( तैस २ २ १२ ) इत्यत्र व्याख्याता । प्रतीकग्रहणमिदमस्या । [v]स एव प्रजापति [v]पुत्र भूत्वा [v]पितर [v]मातर च [v]वेद [v]पुत्रभावेन वर्तते । [v]स एव [v]सूनु सोता यजमानश्च भवति । [v]स एव [v]पुनर्भव पुन पुन [v]क्रियमाणो यागश्च भवति । [v]स एव [v]द्या स्वर्गं च [v]और्णोत् स्वतेजसा आच्छादयति, [v]स एव विश्वानि [v]भूतजातानि [v]अभवत्, [v]आऽभवत् व्याप्नोति [v]स १५ एवेति ॥

" य पशुकाम स्यात् तस्मा एत सोमापौष्ण गार्मुत चरु निर्वपेत् " ( तैस २ ४ ४ ) इत्यस्य पुरोऽनुवाक्या– ' सोमापूषणा जनना रयीणाम् ' इति त्रिष्टुप् ॥ इय च व्याख्याता " अग्नाविष्णू महि " ( तैस १ ८ २२ ) इत्यत्र । प्रतीकग्रहणमस्या अप्यत्र । सोमापूषणौ [v]रयीणा धनाना [v]जनना जनयितारौ द्यावापृथिव्योश्च [v]जनयितारौ । [v]विश्वस्य [v]भूतस्य जातस्य [v] २०

प्रजापत इति ॥ " य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत् ", " य पशुकाम स्यात् तस्मा एत सोमापौष्ण गार्मुत चरु निर्वपेत् " ( तैस २ ४ ४ ) इत्यनयोर्याज्यानुवाक्या प्रतीकानि दर्शयति– ' प्रजापते स वेद सोमापूषणेमौ देवौ ' इति ॥ ' प्रजापते न त्वदेतान्यन्य ' इति प्रजार्थस्य हविष पुरोऽनुवाक्या । सा च ' सोमस्य त्विषिरसि ' ( तैस १ ८ १४ ) इत्यनुवाके व्याख्याता । ' स वेद पुत्र पितरम् ' इत्येषा याज्या । सा च " हिरण्यगर्भ आपो ह यत् " ( तैस २ २ १२ ) २५ इत्यस्मिन्ननुवाके व्याख्याता । पश्वर्थस्य हविष " सोमापूषणा जनना ' इति पुरोऽनुवाक्या । " इमौ देवौ जायमानौ ' इति याज्या । एतदुभयम् " अग्नाविष्णू महि " ( तैस १ ८ २२ ) इत्यस्मिन्ननुवाके व्याख्यातम् ॥

६१ मै४ ८ हो–पुत्रभावेन । ६२ मै४–मीयमान । ६३ ल–भूतानि जातानि । ६४ तै२ –भवन्ति । ६५ तै२ हो–जननौ । ६६–६६ मै मै४–जनयतारश्च ।

७३ ड द१–इत्युभयोर्याज्यापुरोनु" । ७४ ड द१–जनना रयीणाम् । ३०

जातमात्रावेव गोपौ [६७]पालकौ । एव महानुभावाविमौ देवाः [६८]अकृण्वन् कृतवन्तः अमृतत्वस्य नाभिं नहनभूतौ देवाः कृतवन्तः ॥

अथ तत्रैव याज्या– 'इमौ देवौ जायमानौ' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १·८·२२) । प्रतीकमेव गृह्यते । इमौ देवौ सोमापूषणौ जायमानौ एव जुषन्त, ५ सर्वे देवाः इमौ देवौ तमांसि अजुष्टानि अप्रियाणि गूहतां जातमात्रावेव छादितवन्तौ । आम्या पक्वम् उदकं संवत्सरव्रतम् आमासु उस्रियासु रश्मिषु इन्द्रः वृष्ट्यर्थं [६९]जनत् जनयति पक्वं करोति ॥

इति द्वितीये षष्ठे एकादशोऽनुवाकः ॥

अत्र विनियोगसंग्रहः –

१० संवर्गेष्टौ सामिधेन्यो दश तिस्रस्तु याज्यकाः ।
संयाज्यास्तिस्र उदिता उपहोमास्त्रयो मताः ॥
प्रजास्ये द्वय योज्यं गार्मुते प्रथमे भवेत् ।
सोमेमौ तद्द्वितीये स्युस्त्रयोविंशतिरीरिताः ॥ इति ॥

अत्र मीमांसा ॥ तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—
१५ "वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः ।
अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥
[७५]होत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः ।
निर्बाधं चान्यवत् [७६]तत्र तेनात्र विनियोजकम्" ॥ (जैन्या ३·३·१५-१६)॥

[७७]याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहननिर्वापादयो यजुर्वेदे । [७८]आज्य-२० स्तोत्रपृष्ठस्तोत्रादयः सामवेदे । [७९]एतस्यैते धर्मा इति नियामकस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्मं इच्छया संगच्छत इति चेत् । नैवम् । हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यानेन नियतिर्बोध्यते । न च समाख्यानस्य बाधकं किंचित् पश्यामः । तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावात् [८०]श्रुतिलिङ्गादिप्रमाणवत् प्रमाणेन[८०] समाख्यानेन धर्मा व्यवस्थाप्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
२५ द्वितीयकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः ॥

---

६७. तं३.मे४.लं.हो–गोपत्नौ; मे–'पालकौ' नास्ति । ६८. मे–'अकृण्वन्' नास्ति । ६९. तं३.लं.हो–'जनत्' नास्ति ।

---

७५. स आ.इ उ.पा–हौत्रकादि; गं–होतृत्वादि, ह१–होत्रादित्यादि । ७६. ह–तत्र । ७७. अ.इ.उ पा–°पाठे ये; क.हा–°पाठादयो ये; हो–°पादयोः; ह–पाठ्योः; ह१–°वाक्यायागादयो । ७८. ३० अ–आज्यस्तोत्रादयः; ओ.ना.हा–आज्यस्तोत्रपृष्ठादयः । ७९. ह–अस्यैते, ह१–तस्यैवेते । ८०–८०. ह१–°प्रत्यक्षप्रमाणव्यानेन ।

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥
त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥

उशन्तः । त्वा । हवामहे । उशन्तः । समिति । इधामहि ।
उशन् । उशतः । एति । वह । पितॄन् । हविषे । अत्तवे ॥
त्वम् । सोम । प्रचिकित इति प्र चिकितः । मनीषा । त्वम् । रजिष्ठम् । अन्विति । नेषि । पन्थाम् ।
तव । प्रणीतीति प्र-नीती । पितरः । न । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ॥

महापितृयज्ञे सामिधेनी एकैव त्रिरुच्यते- 'उशन्त' इत्यनुष्टुप् ॥ उशन्तः कामयमाना पितॄन् त्वा हवामहे आह्वयामः । तानेव कामयमानास्त्वा समिधीमहि सम्यग्दीपयामः । १० त्वमपि तान् पितॄन् उशन् आ वह । कीदृशान्? उशतः हविरत्तुं कामयमानान्, हविषे अत्तवे हविर्भोक्तुम् । तुमर्थे 'तवेन्' (पा ३ ४ ९) प्रत्ययः । कर्मणि सम्प्रदानत्वाच्चतुर्थी ॥

सोमबर्हिषदग्निष्वात्तकव्यवाहनानां क्रमेण द्वे द्वे एव पुरोऽनुवाक्ये एकैकस्य तूत्तरा याज्या सर्वास्त्रिष्टुभः । विशेषो वक्ष्यते- 'त्वꣳ सोम' इति ॥ हे सोम त्वं प्रचिकितः प्रकर्षेण ज्ञातः । निगमा

एकादशे तु कथितं सवनीयादि हौत्रकम् ।　　　　　१५
द्वादशे पितृयज्ञस्य हविषां हौत्रमुच्यते ॥१॥

उशन्त इति ॥ कल्पः - "एका सामिधेनीं त्रिरन्वाहोशन्तस्त्वा हवामह इत्येताम्" (आपश्रौ ८ १५ १८) इति । पाठस्तु- 'उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन् हविषे अत्तवे' इति ॥ हेऽग्ने, वयम् उशन्तः पितॄन् कामयमानास्त्वामाह्वयामः । पुनरपि पितॄन् उशन्तः त्वा समिधीमहि । त्वमपि कामयमानः कामयमानस्य यजमानस्य पितॄन् आवह । किमर्थम्? २० हविषे अत्तवे हविर्भोक्तुम् ॥

त्वमिति ॥ कल्पः - "द्वे पुरोनुवाक्ये अन्वाहार्यमुक्त्वा प्रणीतपरामुक्त्वा प्रणीति । त्वꣳ सोम प्रचिकित इत्येता आम्नाता भवन्त्येका याज्या" (आपश्रौ ८ १५ १३-१६) इति । तत्र प्रथमां पुरोनुवाक्यामाह- 'त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः' इति ॥ हे सोम, त्वं मनीषा मनीषया अस्मदीयया बुद्ध्या प्रचिकितः २५ प्रकर्षेण ज्ञातः । किं च, त्वं रजिष्ठं पन्थाम् अत्यन्तमृजुं रमणीयं मार्गम् अनुनेषि अनुक्रमेण

१ मे-तवे । २ तै१ ल-'ताइष्य' । ३ मे मे४ हो-'एव' नास्ति ।

१ क-°यज्ञस्य° । २ आ-त्वा । ३ ह१-त्वमसि । ४ क-कामयमान । ५ न-'यजमानस्य' नास्ति । ६ क हा आवह वह । ७ आ क-त्वदीयया । ८ ह१-चित्त । ९-९ अ आ ह३ प-रजिष्ठ यमता क आ हा-रजिष्ठ यमत कपूर्णी ना-रजिष्ठमनोदर° । १० आ-अनुक्रमेर । ३०

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः।
वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा (१) नः ॥

त्वया। हि। न। पितरं। सोम। पूर्वे। कर्माणि। चक्रु। पवमान। धीरा।
धन्वन्। अवात। परिधीनिति परि धीन्। अपेति। ऊर्णु।
५ वीरेभिं। अश्वैं। मघवेति मघ-वा। भव (१)। न ॥

छान्दस द्विर्वचनम्, यङ्लुकि वा अभ्यासविकाराभाव, "गतिरनन्तर" (पा ६ २ ४९) इति गते प्रकृतिस्वरत्वम्। 'चिक' इति वा धात्वन्तर द्रष्टव्यम्। [v]मनीषा मनीषावद्भि। यद्वा–विशिष्टया मनीषया व्यभिचाराभावात्। "सुपा सुलुक्°" (पा ७ १ ३९) इति विभक्तेराकार। किं च [v]त्व [v]रजिष्ठम् ऋजुतर [v]पथा पन्थानम्। ऋजुशब्दादिष्ठनि "विभाषर्जो
१० श्छन्दसि" (पा ६ ४ १६२) इति रेफ। यद्वा– [v]रज उदकम् अतिशयेन तद्वान् रजिष्ठ। रज शब्दात् इष्ठन्। "विन्मतोर्लुक्" (पा ५ ३ ६५), "टे" (पा ६ ४ १४३) इति टिलोप। ईदृश पन्थानम् [v]अनुनेषि अनुक्रमेण प्रापयसि। नयतेर्लेटि शपो लुक्। किं च [v]इन्दो सोम, [v]तव [v]प्रणीती प्रणीत्या परिचरणेन पुरस्कारेण वा। "सुपा सुलुक्°" (पा ७ १ ३९) इति तृतीयाया पूर्वसवर्णदीर्घत्वम्। अस्माक [v]पितर पूर्वेषु [v]देवेषु [v]रत्न
१५ रमणीय हविरन्नम् [v]अभजन्त [v]धीरा धीमन्त। मत्वर्थीयो रप्रत्यय ॥

त्वया हीति॥ हे [v]सोम, [v]न अस्माक [v]पूर्वे [v]पितर [v]त्वया खलु हेतुना त्वत्प्रसादेन [v]कर्माणि ज्योतिष्टोमादीनि पितृयज्ञादीनि वा [v]चक्रु कृतवन्त। [v]धीरा। गतम्। हे [v]पवमान शोधक, तस्मात् कारणात् अस्माकमपि त्व [v]वन्वन् [v]अस्मान् सभजन् [v]अवात

२० प्रापयसि। हे [v]इन्दो, [v]तव [11]प्रणीती प्रणीत्या परिचरणेन [v]न अस्माक [v]पितर [v]देवेषु मध्ये स्थित्वा [v]धीरा सन्तो [v]रत्न रमणीय हवि [v]अभजन्त॥

त्वयेति॥ द्वितीया पुरोनुवाक्यामाह– 'त्वया हि न पितर सोम पूर्वे कर्माणि चक्रु पवमान धीरा। वन्वन्नवात परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा न' इति॥ हे [v]पवमान शोधक [v]सोम, [v]हि यस्मात् [v]न अस्माक [v]पूर्वे [v]पितर [v]त्वया अनुगृहीता कर्माणि [v]चक्रु, [12]तस्मादिदानीं [v]धीरा तिष्ठन्ति। त्वमपि [v]अवात वायुमनपेक्ष्य [13]ज्वलनेन [14]अस्मदीयहवि [v]वन्वन् [15]सभक्षयन् [v]परिधीन् परिधिवत्
२५ सर्वतोऽवस्थितान् प्रतिबन्धकान् [v]अपोर्णु निराकुरु। के साधने, [v]वीरेभि युद्धकुशले [v]अश्वै। तथा [v]न अस्मदर्थं [v]मघवा धनवान् [v]भव॥

४. ल–रत्नम्(?)। ५ मै–°र्लेटि (?)। ६ ल–सोमे। ७ मै–मैः–अस्माकम्।

११ क ङ–'प्रणीती' नास्ति। १२ आ क–परिसमन्तो समाप्ति। १३ ङ–ज्वलन्। १४ अस्मदीयं हवि। १५ ङ–सेवजन्।

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥

त्वम् । सोम । पितृभिरिति पितृ भि । संविदान इति सं-विदान ।
अन्विति । द्यावापृथिवी इति द्यावा-पृथिवी । एति । ततन्थ ।
तस्मै । ते । इन्दो इति । हविषा । विधेम । वयम् । स्याम । पतय । रयीणाम् ॥ ५

आतरहित स्वयमेव ज्वलन् । यद्वा अकार [8]उपमायाम्, अथ वायुसदृश, दीर्घकारित्व सादृश्यम्। [9]परिधीन् परित: धारयितॄन् आत्मन प्रतिबन्धॄन् [9]अपोर्णु अपानुद प्रतिबन्धकापनोदेन शीघ्र मागच्छ। रुत्वानुनासिकावुक्तौ (पा ८ ३ १ ९)। वीरेभि विक्रान्तै [9]अश्वै शीघ्रमागच्छेति। ततश्चागत्य [9]न अस्माक [9]मघवा धनवान् [10]भव। अस्मभ्य [11]धन दातु हस्ते गृहाण। यद्वा—हविषा [12]धनेन तद्वान् भव। "छन्दसीवनिपौ" (पा ५ २ १०९ वा २) इति मत्वर्थीयो १० [13]वनिप्प्रत्यय । "द्व्यचोऽतस्तिङ" (पा ६ ३ १३५) इति भवशब्दस्य संहितायां [14]दीर्घत्वम् ॥

त्व सोमेति ॥ हे [9]सोम, [9]त्व [9]पितृभि पूर्वैरस्माकीनै [9]सविदान ऐकमत्य गत इत्य वयमस्मै कुर्म इति [15]द्यावापृथिवी [9]अनु [9]आततन्थ अनुक्रमेण दीप्त्या। अतते "बभूथाततन्थ°" (पा ७ २ ६४) इति निपात्यते। हे [9]इन्दो, [9]तस्मै [9]तादृशाय ते तुभ्य [9]हविषा [9]विधेम १५ परिचरेम तदर्थम् आततदीप्तिर्भव। प्रयोजन च ब्रूम [9]वय [9]रयीणा धनाना [9]पतय [9]स्याम भूयास्मेति हविषा विधेम त्वाम्, त्व च द्यावापृथिवी दीप्त्या आततन्थ पितृभिश्च सविदानो भव इति। "समो गम्यृच्छि°" (पा १ ३ २९) इति त्विदात्मनेपदम् ॥

त्वमिति ॥ अथ याज्यामाह— 'त्वꣳ सोम पितृभि सविदानोऽनु द्यावापृथिवी आ ततन्थ। तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम्' इति ॥ हे सोम, त्व पितृभि सविदान २० [16]ऐकमत्य गत [17]अनु क्रमेण द्यावापृथिवी आततन्थ आतते व्याप्ते कृतवानसि। हे इन्दो [17]हे सोम [17], तस्मै ते तादृशाय तुभ्य हविषा विधेम परिचरेम। त्वत्प्रसादात् वय धनाना पतय स्याम ॥

इत्थ "सोमाय पितृमते पुरोडाशꣳ षट्कपाल "निर्वपति" (तैस १ ८ ५) इत्यस्यानुवाक्या-द्वय याज्या चेति मन्त्रत्रयमुक्तम् ॥ २५

८ तर-उपमानम्। ९ ल-प्रच्छान। १० तर ल-'भव' नास्ति। ११ ल-ज्वलनम्। १२ तर ल-°वतेन। १३ तर हो-विनिप्रत्यय। १४ मै-दीर्घ। १५ मै मैर-द्यावापृथिव्यौ।

१६ आ क-साविद प्राप्त। १७ क भू-'हे सोम' नास्ति। १८ आ क-'निर्वपति' नास्ति।

अ॒ग्निष्वा॒त्ताः पित॒र॒ एह ग॑च्छत॒ सदः॑सदः सदत सुप्रणीतयः ।
अ॒त्ता ह॒वीꣳषि॒ प्रय॑तानि ब॒र्हिष्यथा॑ र॒यिꣳ सर्व॑वीरं दधातन ॥

अ॒ग्नि॒ष्वा॒त्ता इत्य॒ग्नि स्वा॒त्ता । पित॒र॒ । एति॑ । इ॒ह । ग॑च्छत॒ ।
सद॑ सद॒ इति॒ सद॑ सद॒ । स॒दत॒ । सु॒प्र॒णी॒त॒य॒ इति॑ सु – प्र॒णी॒त॒य ॥
५ अ॒त्त । ह॒वीꣳषि॑ । प्रय॑तानी॒ति॒ प्र य॒ता॒नि॒ । ब॒र्हिषि॑ ।
अथ॑ । र॒यिम् । सर्व॑वीर॒मि॒ति॒ सर्व॑ - वी॒र॒म् । द॒धा॒त॒न ॥

अग्निष्वात्ता इति जगती ॥ हे [v]अग्निष्वात्ता, [v]अग्निष्वेन हयन्ते [16]ये हविषा भोक्तार [17]आस्वादनिबद्धभावा । आमन्त्रिताद्युदात्तत्वम् ( पा ६ १ १९८)। हे [v]पितर, [v]इह कर्मणि [v]आगच्छत, हे [v]सुप्रणीतय सुष्ठुपरिचरणा, [v]सद सद आत्मीयमात्मीय सदन [v]सदत सीदत ।
१० सीदति प्रातिकर्माऽयमिदानीम् । यद्वा– 'सुपा सुलुक्°'' (पा ७ १ ३९) [18]इति सप्तम्या लुक् । सद सद [18] सदसिसदसि सीदत । विकरणव्यत्ययेन श । ततश्च [v]अत्त अश्नीत [v]हवींषि पितरो बर्हिषद । ब्राह्मण च ये न यज्वान । ते पितरो बर्हिषद '' (तैब्रा १ ६ ९) इति ॥
आमन्त्र्यन्ते – हे [v]बर्हिषद [v]पितर, [v]ऊती ऊत्या गमनेन [v]अर्वाक् [19]अस्मान् प्रत्यभिमुखा भूत्वा । "ऊतियूति°'' (पा ३ ३ ९७) इत्यादिना उदात्त क्तिन्निपातित, "सुपा
१५ सुलुक्°'' (पा ७ १ ३९) इति तृतीयाया पूर्वसवर्ण, "उदात्तस्वरितयोर्यण °'' (पा ८ २ ४)

अग्निष्वात्ता इति ॥ अथ "पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्'' (तैस १ ८ ५) इत्येतस्य प्रथमा पुरोनुवाक्योच्यत । यद्यपि पाठक्रमेण तृतीयमिद हविस्तथाऽपि लिङ्गस्य बलवत्त्वात् तत्र विनियोगो द्रष्टव्य ॥ पाठस्तु–'अग्निष्वात्ता पितर एह गच्छत सद सद सदत सुप्रणीतय । अत्ता हवींꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीर दधातन ' इति ॥ [19]अन्यत्र "ये वा अयज्वानो गृहमेधिन ते 'पितरो
२० ऽग्निष्वात्ता '' (तैब्रा १ ६ ९) इति श्रुतत्वाद्यागमकृत्वैव प्रेत्य पितृलोक [20]प्राप्ता अग्निष्वात्ता, शोभना प्रणीतिरलङ्कृता परिचर्या येषा ते सुप्रणीतयस्तथाविधा हे [v]पितर [v]इह [v]कर्मणि [v]आ [v]गच्छत । [v]सद सद तत्तदात्मीय स्थान [v]सदत प्राप्नुत । [21]अस्मिन् [v]बर्हिषि यज्ञे [v]प्रयतानि प्रयत्नेन सपादितानि [v]हवींꣳषि [v]अत्त भक्षयत । [v]अथ अनन्तर [v]रयिं [22]धनं सर्वेषु वैदिककर्मसु धीर कुशलो य पुत्रस्तादृश पुत्र च [v]दधातन संपादयत ॥ [23]अथ द्वितीया पुरोनुवाक्या याज्या [24]चेत्युभय "ये अग्निष्वात्ता '' (तैब्रा
२५ २ ६ १६) इत्यादिक कौकिल्या सौत्रामण्यामाम्नातमतस्तत्रैव व्याख्यास्यते ॥ •

१६ त्रि पर २ ख हो–हे । १७ त३ ख–आश्वासनि° । १८–१८ त३–'इति सद सद ' नास्ति । १९ ख अस्मान् ।

१९ आ क–अत्र । २० ट–'पितर ' नास्ति । २१ आ–गता । २२ गृ–तस्मिन् । २३ आ–'धाम्' नास्ति । २४ ट१–अत्र । २५ अ आ इ उ क खो ट१ पा गृ दा–चेत्युभयमाम्नातं
३० तच्च ।

बर्हिषदः पितर ऊत्यर्वागिमा
वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा-
स्मभ्य॒(२)शं योररपो दधात ॥

बर्हिषद इति बर्हि - सदः । पितरः । ऊती । अर्वाक् ।
इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । एति । गत । अवसा । शंतमेनेति शं-तमेन ।
अथ । अस्मभ्यमित्यस्म - भ्यम् (२) । शम् । योः । अरपः । दधात ॥ ५

इति ततः परस्याकारस्य संहितायां स्वरितत्वम् । इमानि हव्यानि हवींषि । उभयत्र "शेश्छन्दसि°" (पा ६·१·७०) इति लोपः । युष्मदर्थं [v]चकृम कुर्मो वयम् । "अन्येषामपि दृश्यते" १० (पा ६·३·१३७) इति संहितायां दीर्घत्वम् । तानि यूयं [v]जुषध्वं सेवध्वम् । तिङः परत्वात् न निहन्यते (द्र. पा ८·१·२८) । तदर्थं [v]ते च यूयम् [v]आगत आगच्छत । लोटि "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । [v]अवसा प्रीत्या [v]शंतमेन सुखतमेन मनुष्यादिप्रीति [v]अथ [v]अनन्तरमागत्य हवींषि च सेवित्वा [v]अस्मभ्यं [v]शं [v]योः च [v]अरपः अपापं उभय लोकाविरुद्धं [v]दधात दत्त आपत्तापशमनं रोगाणां नाशनं यावनं भयानां पृथक्करणमागामिनो १५ निरोधः । धीतेरसुनि गुणे अधादेशाभावश्छान्दसः ॥

बर्हिषद इति ॥ अथ "पितृभ्यो बर्हिषद्भ्यो धानाः" (तैब्रा १·८·५) इत्यस्य प्रथमां पुरोनुवाक्यामाह— 'बर्हिषदः पितरः ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आ गतावसा शंतमेनाथास्मभ्यं शं योररपो दधात' इति ॥ बर्हिषि यज्ञे सीदन्तीति [26]बर्हिषदः । "ये वै यज्वानः । ते पितरो बर्हिषदः" (तैब्रा १·६·९) इति [27]"अन्यत्र श्रुतत्वात्[28]" यागं कृत्वा प्रेत्य पितृलोके प्राप्ता बर्हिषदः । १० तादृशा हे [v]पितरः, [v]अर्वाक् अर्वाचीनानामस्माकम् [v]ऊती रक्षा भवद्भिः कर्तव्येति शेषः । [v]वः युष्मदर्थम् [v]इमा [v]हव्या एतानि हवींषि [v]चकृम अतस्तानि [29]"जुषध्वम् । [v]ते हविर्जुषमाणाः [30]"यूयं [v]शंतमेन सुखतमेन [v]अवसा [30]"रक्षणेन [v]आगत आभिमुख्येनास्मान् [31]प्राप्नुत । [v]अथ [32]"अनन्तरं अस्मभ्यं [v]शं सुखं [v]योः दुःखवियोगम् [v]अरपः पापराहित्यं च [v]दधात दत्त[33] ।

[26]. आ.क–बर्हिषदः । अपापि । [27]–[27]. आ.क–उक्तत्वात् । [28]. अ.आ.इ.उ.क.खो ना.प. [28]–प्राप्यामिति । [29]–[29]. आ.क–यूयमवसा रक्षणेन शंतमेन सुखतमेनास्माकमागत तदभिमिलनमत्स्मरणीयम् । अथास्मभ्यं प्रयमनन्ते च शं सुखं दुःखवियोगं चापापं पापराहित्यं च दधात दत्त । [30]. अ.हो१–रक्षणनिमित्तेन । [31]. अ.हा१–प्राप्नुवत । [30]. इ.ह१–अ.हो१–अनन्तरं नः ।

आऽहं पि॒तॄन्त्सु॑वि॒दत्रा॑ँ२ अवित्सि नपा॑तं च वि॒क्रम॑णं च॒ विष्णोः॑ ।
ब॒र्हि॒षदो॒ ये स्वधया॑ सु॒तस्य॒ भज॑न्त पि॒त्वस्त इ॒हाऽऽग॑मिष्ठाः ॥

एति॑ । अ॒हम् । पि॒तॄन् । सु॒वि॒दत्रा॒निति॑ सु - वि॒दत्रा॑न् । अ॒वि॒त्सि॒ ।
नपा॑तम् । च॒ । वि॒क्रम॑ण॒मिति॑ वि - क्रम॑णम् । च॒ । विष्णोः॑ ।
५ ब॒र्हि॒षद॒ इति॑ ब॒र्हि॒ - सदः॑ । ये । स्व॒धयेति॑ स्व - धया॑ । सु॒तस्य॑ ।
भज॑न्त । पि॒त्वः । ते । इ॒ह । आग॑मिष्ठा॒ इत्या - ग॒मि॒ष्ठाः॒ ॥

आऽहमिति ॥ [V]सुविदत्रान् शोभनवेदनान् सुष्ठु य(वि?)न्दन्तीति सुविदत्राः । विदेः कर्तृप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । [V]अहं तान् [V]आऽवित्सि आभिमुख्येन लब्धवानस्मि । विन्दतेर्लुङि "लिङ्सिचावात्मनेपदेषु" (पा १·२·११) इति कित्त्वम् । किं च— [V]विष्णोः यज्ञात्मनः [V]नपात
१० [V]च [V]विक्रमण [V]च आवित्सीत्येव, तेषामेव प्रसादात्तत्पातनमभ्रेषः कर्माङ्गानाम् । ण्यन्तात् क्विपि नञ्समासे "नभ्राण्नपात्°" [पा ६·३·७५] इति नलोपाभावो निपात्यते । विविधं संक्रमणं [V]विक्रमणं विशिष्टकर्मनिष्पत्तिः । विशिष्टफलप्राप्तिहेतुत्वं वा कर्मणः । कस्मादेवमुच्यते इत्याह— [V]ये [V]बर्हिषदः पितरः [V]स्वधया अन्नेन सह [V]सुतस्य सोमस्यात्र सोम च [V]भजन्त अभजन्त यज्वान इति यावत् । "बहुलं छन्दस्यमाङ्योगेऽपि" (पा ६·४·७५) इत्यडभावः । [V]ते पितरः
१५ [V]इह अस्मिन् कर्मणि [V]पित्वः पिन्वन्ति [V]आगमिष्ठाः । "सुपां सुलुक्°" (पा ७·१·३९) इति सप्तम्याः स्वादेशः । अतिशयेन गन्तारः । "तुश्छन्दसि" (पा ५·३·५९) इत्यागन्तृशब्दादिष्ठन्प्रत्ययः, "तुरिष्ठेमेयःसु" (पा ६·४·१५४) इति लोपः ॥

एति ॥ अथ तत्रैव द्वितीया पुरोनुवाक्या—'आऽहं पितॄन्त्सुविदत्राँ२ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः' इति ॥ [V]अहं यजमानः
२० [V]सुविदत्रान् मदीयां भक्तिं [33] जानतः [V]पितॄन् अपि [V]आऽवित्सि आभिमुख्येन [34]लब्धवानस्मि । [V]विष्णोः व्यापिनोऽस्य यज्ञस्य [V]नपातं विनाशाभावं [V]विक्रमणं विशेषेण प्रवृत्तिं [V]च लब्धवानस्मि । ये पितरः [V]बर्हिषदः [34]सन्ति [V]ते-[35] [V]इह [35]अत्र कर्मणि [V]आगमिष्ठाः अतिशयेनाऽऽगताः । [36]आदरपूर्वकमागत्य [V]पित्वः प्रीतिं [V]भजन्तः [37]प्राप्नुवन्तः । [38]केन साधनेन? [V]सुतस्य [V]स्वधया सोमसमानस्य हविषः स्वादुत्वेन[38] ॥

२५ [30]. तं३–'विक्रमण' नास्ति ।

३३. हो१–आवेदिनम्, ढ–अवेधि । ३४–३४ आ.क.तं.ढ हो१–सन्तः । ३५. ढ.हो१–'अत्र' नास्ति । ३६ क ढ१.ग४–पूर्वं समागत्य । ३७ आ क–प्राप्नुवन्तु । ३८–३८. ढ.हो२–तेन साधनेन सोमस्य स्वधया सोमसमानस्य । हविषः स्वादुत्वेन । अथ पितरः बर्हिष्येषु यागाः ।

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान् ॥
उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं (३) य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

उपहूता इत्युप हूता । पितरं । सोम्यास । बर्हिष्येषु । निधिष्विति नि धिषु । प्रियेषु । ५
त । पति । गमन्तु । ते । इह । श्रुवन्तु । अधीति । ब्रुवन्तु । ते । अवन्तु । अस्मान् ।
उदिति । ईरताम् । अवरे । उदिति । परास । उदिति । मध्यमा । पितरं । सोम्यास ।
असुम्(३) । ये । ईयु । अवृका । ऋतज्ञा इत्यृत - ज्ञा । ते । न । अवन्तु । पितरं । हवेषु ॥

[२१]उपहूता ये [२२]पितर अस्मिन् कर्मणि अस्माभिरुपहूता [२३]सोम्यास सोमार्हा । "सोम मर्हति॰" (पा ४ ४ १३७) इति यप्रत्यय । [२४]बर्हिष्येषु यागसबन्धिषु । भवे, साधौ (पा ४ ३ ५३, १० ४ ४ ९८) वा य । सनिधिषु निधायन्ते इति निधय हवींषि । "उपसर्गे घो कि" (पा ३ ३ ९२), तेषु निमित्तेषु सप्तमी । [२५]प्रियेषु इष्टतमेषु ये [२६]आहूता [२७]आगमन्तु आगच्छन्तु । "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (परि ३५) इति छान्दसमाग । अत [२८]इह कर्मणि अस्मप्रयुक्ता स्तुती [२९]श्रुवन्तु शृण्वन्तु । "बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक् । [३०]अधिब्रुवन्तु [३१]त [३२]अस्मान् [३३]पक्षपातेन वा अस्मान् आधिक्येन ब्रुवन्तु साधुरुत्तमैभिरिति । १५ [३४]अवन्तु चास्मान् पितरस्ते ॥

उदीरतामिति ॥ [३५]उदीरताम् उदीर्णा भवन्तु उद्गच्छन्तु । ईर गतौ, आदादिक । "आत्मनेपदेष्वनत" (पा ७ १ ५) इत्यदादेश । [३६]अवरे [३७]अपरे अधस्तात् स्थिता पृथिवा

उपहूता इति ॥ [२१]अथ तत्रैव याज्यामाह– 'उपहूता पितर सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान्' इति ॥ 'सोम्यास' सोम्या अस्मदनु- २० ग्रहपरा 'पितर 'बर्हिष्येषु ' 'प्रियेषु यागार्हेषु प्रीतिकरेषु [२२]निधिषु निधिमदृशेषु हविःषु निमित्तभूतेषु स्तु 'उपहूता अस्माभिराहूता 'ते पितर 'आगमन्तु आगच्छन्तु । आगत्य च [२३]ते 'इह अस्मिन् कर्मण्यस्माभि प्रयुक्ता स्तुती 'श्रुवन्तु [२४]शृण्वन्तु । श्रुत्वा च 'अधिब्रुवन्तु [२५]साधुरत्रे यजमान इत्यादरेण कथयन्तु । [२६]तत ईदृशा [२७] पितर 'अस्मान् 'अवन्तु ॥

उदीरतामिति ॥ 'अत्रैवोपहोमार्थामिष्ट ऋचमाह प्रथमामाह– 'उदीरतामवर उत्परास २५ उन्मध्यमा पितर सोम्यास । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु' इति ॥ त्रिविधा

२१ त्रि ल–पितर आहूता, तः–पितर उपहूता । २२ मे॰–आहूता । २३ तं–दर्तेन । २४ मे–'अपरे' नास्ति ।

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥

इदम् । पितृभ्य इति पितृ भ्य । नमं । अस्तु । अद्य । ये । पूर्वास । ये । उपरास । ईयु ।
ये । पार्थिवे । रजंसि । एति । निषत्ता इति नि सत्ता ।
५ ये । वा । नूनम् । सुवृजनास्विति सु वृजनासु । विक्षु ॥

स्थिता वा निकृष्टा वा ᵛपरास परा उत्कृष्टा ᶜउच्छ्रितस्थानस्थिता वा ते च ᵛपितर उदीरता, ᵛमध्यमा च पितर उदीरता, ᵛसोम्यास ᶜसोमार्हा । "सोममर्हति°" (पा ४ ४ १३७) इति य । ᵛये ᵛअसु प्राण हेतुत्वेन वारकत्वेन ᵛईयु प्राविष्टा ᵛअवृका बाधक स्वभावरहिता । कुक वृक आदाने, इगुपधलक्षण क (पा ३ १ १३५) । ᵛऋतज्ञा ऋतस्य
१० सत्यस्य यज्ञस्य वा ज्ञातार, ᵛते तथा महानुभावा ᵛन ᵛअवन्तु रक्षन्तु प्रीणयन्तु वा ᵛहवेषु आह्वानेषु अस्मान् तृप्यन्तु वा अस्मद्यज्ञेषु ॥

इदमिति ॥ ᵛइद ᵛनम ²⁶अन्न प्रणामो वा ᵛपितृभ्य अस्तु ²⁷ᵛअद्य अस्मिन् कर्मणि । केभ्य ? ᵛये ²⁸ᵛपूर्वास ᵛइयु ²⁸ पूर्वमेव स्वर्गं गता ᵛये च ᵛउपरास ईयु उपरिभूतास्तेषा समीपभूता अन्तरिक्षस्था तेषा वा कुले ³⁰अन्तरिक्षे स्थिता ³⁰ ᵛये च ᵛपार्थिवे ᵛरजसि
१५ लोके ᵛआनिषत्ता आनिषण्णा सन्त । "पृथिव्या ञाञौ" (पा ४ १ ८५ वा २) इति स्वार्थिको ञ । यद्वा— पृथिवीसम्बन्धिनि लोके स्थिता । ᵛनूनम इति पादपूरणे । ᵛये ᵛवा ᵛसुवृजनासु

पितर उत्तमा मध्यमा अधमाश्चेति । ⁴⁸यथाविधि श्रौत ⁴⁸ ⁴⁹कर्मानुष्ठाय पितृत्व ⁴⁹ प्राप्ता उत्तमा । ⁵⁰स्मार्तकर्ममात्रपरा मध्यमा ⁵⁰ । तत्रापि ⁵¹कैश्चित् ⁵²संस्कारैर्विकला अधमा । एतदेवाभिप्रेत्य "ये अग्निदग्धा येऽनग्निदग्धा" (तैब्रा ३ १ १) इत्यादिर्मन्त्र आम्नात । तेषु ᵛअवरे निकृष्टा ᵛउदीरताम्
२० उत्तम हवि प्राप्नुवन्तु, ᵛपरास उत्तमा पितर उदीरताम् । ᵛमध्यमा पितरश्च उदीरताम् । ते ⁵³सर्वेऽप्यस्मद्विषये ᵛसोम्यास सोम्या अनुग्रहपरा सन्तु । ᵛये पितर ᵛअवृका वृकवदरण्यश्ववदस्मासु हिंसाम् कुर्वन्त ᵛऋतज्ञा अस्मदनुष्ठित यज्ञ जानन्त ᵛअसुम् अस्मत्प्राणम् ᵛईयु रक्षितु प्राप्ता ᵛते ᵛपितर ᵛहवेषु अस्मदीयाह्वानेषु ᵛन अस्मान् ᵛअवन्तु ।

इदमिति ॥ अथ द्वितीया— 'इद पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयु । ये
२५ पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु' इति ॥ ᵛपूर्वास यजमानोत्पत्ते पूर्वमुत्पन्ना

२५, मैल–°स्थानस्था । २६ पर–सोम्या । २७ हो–'अद्य' नास्ति । २८ हो– याद । २९–२९ ल–पूर्ववत् । ३०–३० ल–अन्तरिक्षस्था ।

४८–४८ आ द्दा यथाविध श्रौत, उ–यथा विविधश्रौत, अ इ क ग पा–यथा विधिर्धं श्रौत ड–यथाविधि श्रुत, ड१–तथाविधश्रौत । ४९–४९ ड–कर्मानुष्ठातृत्वम्, ड१–कर्मानुष्ठाय पितृत्वम् ।
३० ५०–५० ड१– 'स्मार्तकर्ममात्रपरा मध्यमा' नास्ति । ५१ आ क–कैचित् । ५२ ड हो१–°विहीना । ५३ आ क °ऽनिम्मद् विषये ।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥

अर्ध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः ।
शुचि । इत् । अयन् । दीधितिम् । उक्थशासः इत्युक्थ शासः ।
क्षामा । भिन्दन्तः । अरुणीः । अपेति । व्रन् ॥

शोभनधनासु विक्षु प्रजासु कर्मशीलासु निषण्णा । यद्वा–उपरासः उपरणशीला निवृत्तिप्रधाना पार्थिवे पृथिव्या भवे रजसि कर्मणि पुण्यापुण्यात्मके व्यामिश्रे निषण्णा सुवृजनासु शोभनधनासु कर्मशेषधनासु धार्मिकेषु अपापासु प्रजासु निषण्णा तेभ्यः सर्वेभ्यो नमोऽस्त्विति ॥

अधेति ॥ अध अत एव कर्मसामर्थ्यात् अस्माकं परासः पूर्वे पितरः प्रत्नासः ततोऽपि पूर्वे पितरः, हे अग्ने, ऋतं सत्यं यज्ञं वा आशुषाणा अश्नुवाना । अश्नोतेः छान्दसे लिटि रूपम्, तत्र क्वसुकानचोश्छान्दसः समावेशः । अयस्मयादित्वेन भत्वात् ( पा १ ४ २० ) ह्रयोः सम्प्रसारणम् ( पा ६ ४ १३१ ) । यद्वा–द्विविकरणत्वं लिटि व्यत्ययेन भवति, उप्रत्ययः । तं च शुचि शुद्धं स्थानम् । इत् इति अवधारणे । शुच्येव स्थानं यथा अयन् आगच्छन् दीधितिं स्थानं तद्योगात् तच्छब्दम् । उक्थशासः उक्थे स्तोत्रे । यप्रत्ययः ॥

ज्येष्ठभ्रातृपितृपितामहादय ये ईयुः पितृलोकं प्राप्ता । ये चान्ये उपरासः यजमानजननादुपर्युपरि कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ता । ये अप्यन्ये पार्थिवे पृथिवीसम्बन्धिनि रजसि रजोगुण कार्येऽस्मिन् कर्मणि आनिषत्ता हविः स्वीकर्तुमागत्योपविष्टा । ये वा केचिदन्ये बन्धुपरोक्षा पितरो बहुबन्धुरूपासु विक्षु प्रजासु आनिषत्ता श्राद्धादिस्वीकारायाऽऽगत्योपविष्टा । कीदृशीषु विक्षु ? सुवृजनासु वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं, शोभनं वृजनं यासां ता सुवृजनास्तादृशीषु धनसमृद्ध्या श्राद्धादिकर्मपरास्वित्यर्थः । तेभ्यः सर्वेभ्यः पितृभ्यः अद्य अस्मिन् कर्मणि इदं नमः अस्तु अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥

अधेति ॥ अथ तृतीया– 'अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुची दयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन्' इति ॥ हे अग्ने, अध अधस्मादनीते काले नः अस्माकं पितरः ऋतम् आशुषाणाः यज्ञमश्नुवाना शुचि इत् शुद्धमेव स्थानं यथा येन प्रकारेण अयन्

*–* त्रि ल हो–'शुच्येव स्थानम् ... ' नास्ति । ३१. मै०–आयन् ।

५४ ... हो०–'अमन उप' । ५५ आ–अर्चीता । ५६ आ–ये चान्ये । ५७ आ–सर्वेभ्य उक्तेभ्य ।

यद॑ग्ने (४) कव्यवाहन पि॒तॄन् यक्ष्यृ॑ता॒वृधः॑ ।
प्र च॑ ह॒व्यानि॑ वक्ष्यसि दे॒वेभ्य॑श्च पि॒तृभ्य॒ आ ॥

यत् । अ॒ग्ने॒ (४) । क॒व्य॒वा॒ह॒नेति॑ कव्य - वा॒ह॒न॒ । पि॒तॄन् । यक्षि॑ । ऋ॒ता॒वृध॒ इत्यृ॑त - वृधः॑ ।
प्रेति॑ । च॒ । ह॒व्यानि॑ । व॒क्ष्य॒सि॒ । दे॒वेभ्य॑ । च॒ । पि॒तृभ्य॒ इति॑ पि॒तृ - भ्य॒ । आ ॥

५ यदिति अनुष्टुप् ॥ हे अग्ने कव्यवाहन हविषो वाहक, यत् यस्मात् पितॄन् ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितॄन् यक्षि यजसि। "बहुलं छन्दसि" ( पा २·४·७३ ) इति शपो लुक्। तस्मात् त्वमेव हव्यानि प्रवक्ष्यसि प्रवहसि देवेभ्य च पितृभ्यः च। आकारः समुच्चये। तस्मादेवं महानुभाव त्वामेव वय यजाम इति ॥

त्वमिति ॥ हे अग्ने जातवेदः जाताना वेदित प्रजावेदित, त्वम् ईडित
१० स्तुत, अवाट् हव्यानि। वहेश्छान्दसो लुङ्। ततश्च तानि सुरभीणि कृत्वा पितृभ्यः प्रादाः प्रदेहि स्वधया अन्नेन सहैव। तत ते पितरः तानि प्रयतानि शुद्धानि हवींषि अक्षन् अदन्तु।

प्रासयन्तः दीधितिं दीप्यमानां पितृरूपां देवताम् उक्थशासः शस्त्रैः शंसन्तो वयमपि [58]तथैव [59]ऋद्धमेव स्थानं प्राप्ताः स्म इति [60]शेषः। कीदृशाः पितरः ? परासः अस्मत्त उत्कृष्टाः [61]पितृपितामहप्रपितामहादयः प्रत्नासः पुरातनाः पित्रादिभ्योऽपि पूर्वभाविनः। किं च [62-]ते पितरः[-62] क्षाम क्षयहेतुं स्वकीयं क्षुदुपद्रवं
१५ भिन्दन्तः [63]अन्नेन हविषा [64]नाशयन्तः अरुणीः तेजोरूपा [65]दीप्ताः प्राप्य अपव्रन् फलप्रतिबन्धकं [66]प्रावरणमपावृण्वन् ॥

यद्ग्निति ॥ अस्मिन् [67]महापितृयज्ञकर्मणि शाखान्तरेऽन्यदपि हविर्द्वयं विहितम्– 'अग्नये कव्यवाहनायैकं यमायाङ्गिरस्वते पितृमते द्वितीयम्' [68]इति। अत एव सूत्रकार आह— "अथैषाम्। सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपाल पितृभ्योऽग्निष्वात्तेभ्यो धाना अग्नये
२० कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते" ( आपश्रौ ८·१३·१६ ) इति। तत्र कव्यवाहनस्य प्रथमां पुरोनुवाक्यामाह– 'यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ' इति ॥ कव्यं वहतीति कव्यवाहनः [69]पितृभ्योऽग्निः। अत एवाऽन्यत्र श्रुतम्– "त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम्" (तैस २·५·८) इति ॥ कव्यस्य [70]पित्र्यस्य हविषो वाहक हे अग्ने, यत् यस्मात् कारणात् ऋतावृधः यज्ञवर्धकान् पितॄन् यक्षि यजसि
२५ तस्मादेव कारणात् त्वं देवेभ्यः पितृभ्यः च हव्यानि [71-]प्र च वक्ष्यसि[-71] पुनः पुनः प्रकर्षेण परमपि हविर्वहनं करिष्यसि ॥

५८. ङ.हो१–'तथैव' नास्ति। ५९. आ–ऋद्धमेव। ६०. आ.क–'शेषः' नास्ति। ६१. आ.क.ङ.द१.गे–पितृपितामहादयः। ६२–६२. आ.क–'ते पितरः' नास्ति। ६३. ङ.द१–अनेन। ६४ द१–विनाशयन्तः। ६५. अ.आ.इ.उ.क.चो.ना.पा हा–'ताः' ङ.गे–दीप्तीः। ६६. आ.क–
३० पपमरावृण्वन्। ६७. आ–हह (महा) पि°; द१–महापयोपि°। ६८. ङ.द१–'इति' नास्ति। ६९. आ.क–पितृभ्योऽग्निः। ७०. हो१–पित्रियस्य, आ.–भग्य। ७१–७१. आ.क–आपस्तीय।

त्वम॑ग्न ईडि॒तो जा॑तवेदोऽवा॑ड्ढ॒व्यानि॑ सुर॒भीणि॑ कृ॒त्वा ।
प्रादाः॑ पि॒तृभ्यः॑ स्व॒धया॑ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वीꣳषि॑ ।
मात॑ली क॒व्यैर्य॒मो अङ्गि॑रोभि॒र्बृह॒स्पति॒र्ऋक्व॑भिर्वावृधा॒नः ।
याꣳश्च॑ दे॒वा वा॑वृ॒धुर्ये च॑ दे॒वान्त्स्वाहा॒ऽन्ये स्व॒धयाऽन्ये॑ मदन्ति (५) ॥

त्वम् । अग्ने॑ । ई॒डि॒त । जात॑वेद॒ इति॒ जात॑ वे॒द॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒र॒भीणि॑ । कृ॒त्वा ।
प्रेति॑ । अ॒दाः॒ । पि॒तृभ्य॒ इति॑ पि॒तृ॒ भ्यः॒ । स्व॒धयेति॑ स्व - धया॑ । ते॒ । अ॒क्ष॒न् ।
अ॒द्धि । त्वम् । दे॒व॒ । प्रय॒तेति॑ प्र य॒ता॒ । ह॒वीꣳषि॑ । ५
मात॑ली । क॒व्यैः । य॒मः । अङ्गि॑रोभि॒रित्यङ्गि॑रः - भिः॒ । बृह॒स्पतिः॑ । ऋक्व॑भि॒रित्यृक्व॑ भिः॒ । वा॒वृ॒धा॒नः ।
यान् । च॒ । दे॒वाः । वा॒वृ॒धुः । ये । च॒ । दे॒वान् ।
स्वाहा॑ । अ॒न्ये । स्व॒धयेति॑ स्व - धया॑ । अ॒न्ये । म॒द॒न्ति॒ (५) ॥ १०

अदेश्छान्दसो "लुङ्सनोर्घस्लृ" (पा २ ४ ३७) इति घस्लादेश, "मन्त्रे घस°" (पा २ ४ ८०) इति च्लेर्लुक्, "घसिभसोर्हलि च" (पा ६ ४ १००) इत्युपधालोप । देव, त्वम् अपि तानि हवींषि अद्धि भक्षय सततमस्मानुपकारिण कुर्विति भाव ॥

वावृधान इति ॥ प्रत्येक कव्यादिभि सपद्यते । मातलिना सद्वानिन्द्रो मातलि (ली) । छान्दस इनिर्व्रीह्यादिवद्द्रष्टव्य (पा ५ २ ११६) । स कव्यै कव्यवाहिभि पितृभि सह वावृधान १५ वर्धमान । शप श्लु, ताच्छील्किश्चानश् । यम पितृराज, स अङ्गिरोभि पितृविशेष सह वावृधान । बृहस्पति ऋक्वभि मन्त्रवद्भि स्तुतिमद्भिर्वा पितृविशेषै सह वावृधान ।

त्वमिति ॥ द्वितीया पुरोनुवाक्यामाह–'त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादा पितृभ्य स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि' इति ॥ जात सर्वं वेत्तीति जातवेदास्तथाविध हे अग्ने, त्वम् ईडित यजमानेन स्तुत सन्तदीयानि हव्यानि सुरभीणि सुगन्धीनि २० कृत्वा अवाट् वहन कृतवानसि । कृत्वा च पितृभ्य प्रादा । ते च पितर स्वधया स्वधाकारेण प्रत्त हव्यम् अक्षन् अदन्तु । हे देव, त्वम् अपि प्रयता प्रयत्नसंपादितानि हवींषि अद्धि भक्षय ॥

मातलीति ॥ अथ याज्या–'मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधान । यांश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति' इति ॥ मातलिरिन्द्रस्य सूतस्तद्वानिन्द्रो मातली । स च कव्यै कव्यभागिभि पितृभि सह वावृधानो वर्धमानो भवति । यमश्च अङ्गिरोभि २५ पितृविशेषै सह वर्धमानो भवति । बृहस्पतिश्च ऋक्वभिः ऋक्प्रतिपाद्यै पितृविशेषै सह वर्धमानो भवति । तत्र देवा इन्द्रादय यान् कव्यभागादीन् पितॄन् वावृधु वर्धयन्ति, ये च कव्यभागादय पितर इन्द्रादीन् देवान् वर्धयन्ति, तेषां मध्ये अन्ये इन्द्रादय स्वाहा मदन्ति स्वाहाकारेण तृप्यन्ति । अन्ये पितर स्वधया स्वधाकारेण तृप्यन्ति ॥

७२ आ-अगदेदेति । ७३ आ क-'इन्द्राद्य'नास्ति । ७४ आ क ख-'अन्ये' नास्ति । ३० ७५ आ-तृप्यन्ति ।

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥
अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥

५ इमम् । यम । प्रस्तरमिति प्र-स्तरम् । एति । हि । सीद ।
अङ्गिरोभिरित्यङ्गिरः भिः । पितृभिरिति पितृ-भिः । संविदान इति सं विदान ॥
एति । त्वा । मन्त्राः । कविशस्ता इति कवि शस्ताः । वहन्तु । एना । राजन् । हविषा । मादयस्व ।
अङ्गिरोभिरित्यङ्गिरः भिः । एति । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व ।
विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । एति । निषद्येति नि-सद्य ॥

१० "छन्दसीवनिपौ" ( पा ५·२·१०९ वा २ ) इति वनिप्प्रत्ययः, अयस्मयादित्वेन पदत्वात्कुत्व, भत्वाज्जश्त्वाभाव । यान् च पितृन् देवाः वावृधुः वर्धयन्ति । व्यत्ययेन परस्मैपदम्, तुजादित्वादभ्यासस्य दीर्घत्वम् ( पा ६ १ ७ ) । ये च पितरः देवान् वावृधुरिति । ये च तत्र अन्ये एके देवा पितृणा वर्धयितार स्वाहाकारेण मदन्ति मोदन्ताम् । अथ अन्ये एके पितर स्वधया स्वधाकारेण मदन्तीत्येव । माद्यतेर्व्यत्ययेन शः ॥

१५ इममिति ॥ हे पितृराज, इमम् प्रस्तर प्रस्तीर्णमाश्रमम् आसीद अङ्गिरोभि. पितृविशेषै संविदानः ऐकमत्य गच्छन् । तत आसीदन्त त्वा कविशस्ताः कविभिर्मेधाविभि. आस्माकीनै ऋत्विग्भि. शस्ता मन्त्रा आवहन्तु प्राप्नुवन्तु । तत एना अनेन हविषा राजन् राजनशील, मादयस्व । मद तृप्तियोगे, चौरादिकः ॥

अङ्गिरोभिरिति ॥ हे यम, अङ्गिरोभि सह आगहि आगच्छ । पूर्ववत् शपो लुक् ।
२० यज्ञियेभिः यज्ञार्हैः. वैरूपैः विविधकर्मरूपसम्बन्धिभि , वैरूपसामप्रियैर्वा । यद्वा-स्वार्थिकोऽण् ।

इममिति ॥ अथाङ्गिरस्वतो यमस्य प्रथमां पुरोनुवाक्यामाह–'इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व' इति ॥ हे यम, अङ्गिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमत्यं [76]प्राप्तः इमं प्रस्तर प्रस्तीर्णं यज्ञविशेषम् आसीद आगत्योपविश । हि यस्मादुपविशसि तस्मात् कविशस्ताः विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता. मन्त्राः
१५ त्वाम् आवहन्तु । हे राजन्, एना अनेन हविषा तुष्टः मादयस्व यजमान [77]हर्षयस्व ॥

अङ्गिरोभिरिति ॥ अथ द्वितीयां पुरोनुवाक्यामाह–'अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य' इति ॥ हे यम, वैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आ गहि आगच्छ । आगत्य च इह मादयस्व यजमानं हर्षय । यः ते तव पिता विवस्वानभि त विवस्वन्तम् अस्मिन् यज्ञे हुवे
२० आह्वयामि । स च बर्हिषि अस्मिन् यज्ञे आनिषद्य आगत्योपविश्य यजमानं हर्षयतु ॥

७६ क.ख.ग.घ.ङ.छ.–प्रात । ७७. ड–हर्षय ।

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे (६) स्याम ॥१२॥
[ भवास्मभ्यमसुं यदग्ने मदन्ति सौमनस एकं च ]
[ समिधश्चक्षुषी प्रजापतिराज्यं देवस्य स्फ्यं ब्रह्मवादिनोऽङ्गिरसोऽग्नये मनुः पृथिव्या
पशवोऽग्नीधे देवा वै यज्ञस्य युक्ष्वोशन्तस्त्वा द्व॰ ॥ ]
[ समिधो याज्या तस्मान्नाभागꣳ हितमन्वित्याह प्रजा वा आहेत्याह युक्ष्वा हि संततिः ]
[ समिधं सौमनसे स्याम । ]
[ वायव्यं प्रजापतिरादित्येभ्यो देवा विश्वरूपं समिधः षट् । ]
[ मैस ४·१०·६; १४·१६ ]

अङ्गिरसः । नः । पितरः । नवग्वा । अथर्वाणः । भृगवः । सोम्यासः ।
तेषाम् । वयम् । सुमताविति सु-मतौ । यज्ञियानाम् । अपीति । भद्रे । सौमनसे (६) । स्याम ॥१२॥

विरूपैः विविधरूपैः सह इह कर्मणि [३२]मादयस्व । अथ य तव पिता त निविस्वन्तं हुवे आह्वयामि । स अपि अस्मिन् यज्ञे आगत्य बर्हिषि निषद्य मादताम् ॥

अङ्गिरस इति ॥ अङ्गिरस पितृविशेषा अस्माक च पितरः नवग्वा अभिनवा गमनाः आगमने अभिनवा इव प्रिया । क्विपि "ऊड् च गमादीनाम्" (पाभा ६ ४·४० ) इत्यूकार.। आगमनमायातु उपसर्गयो स्वस्थानविनिमय. वा बहुव्रीहौ। नवग्वा अथर्वाण च भृगवः च पितृविशेषाः प्रख्याताः सोम्यास. सोमार्हा. येऽप्येवविधा महानुभावा पितर । तेषां यज्ञियाना यज्ञार्हाणा सुमतौ शोभनाया मतौ सानुग्रहायां वय स्याम भूयास्म । अपि च भद्रे भजनीये कल्याणे सौमनसे सौमनस्यहेतुके तत्प्रदानहेतुके सर्वाभिमतसिद्धिरूपे

अङ्गिरस इति ॥ अथ याज्यामाह– 'अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम' इति ॥ २०

अङ्गिरोनामका अथर्वनामका भृगुनामकाश्च नः अस्माकं पितरः नवग्वाः [७८]अभिनवागमनयुक्ताः [७९]"तदा तदा"[७९] नूतनवत् प्रीतिजनका इत्यर्थः। ते च 'सोम्यासः, सोममर्हन्तीति'[८०] सोम्याः। यज्ञियानां तेषां सुमतौ अनुग्रहयुक्तायां [८१]बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपि च सौमनसे सौमनस्यकारणे भद्रे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥ २५

३२. मै४–'मादयस्व' इत्यस्यानन्तरं 'मोदयस्व'।

७८. द्र.हो१–नवागमन°; द१–अभिनवगमन°। ७९–७९. द्र.हो१–तथा। ८०. आ,फ– 'इति' नास्ति। ८१. द१–प्रबुद्धा।

कल्याणे च [v]स्याम इति। येऽत्र अविनियुक्ता मन्त्राः ते लिङ्गेन क्वाप्यनुरूपे कर्मणि विनियोक्तव्याः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे षष्ठे प्रश्ने द्वादशोऽनुवाकः ॥

५ समाप्तः षष्ठः प्रपाठकः द्वितीयकाण्डश्च ॥

[v]एष निष्पाप(व)के शाके कुशिकान्वयजन्मना।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः[v]॥

अत्र विनियोगसंग्रहः —

"उशन्तः सामिधेन्येका पितृयज्ञे महत्यसौ।
१० त्वं सोमेत्यनुवाक्ये [८२]द्वे पितृमन्नामके तथा[८२]॥
त्वं याज्याऽग्निष्वात्तेति मन्थेऽनुवाक्या प्रथमा भवेत्।
बर्हिषद्द्वे अनुवाक्ये [८३]तु याज्यैका बर्हिषद्यजौ॥
उपहूतमा उदीरेति [८४]त्रयस्तत्रैव यागके।
कव्यवाहनयागे तु यदग्ने तिस्र ईरिताः॥
१५ पुरोनुवाक्ये द्वे तत्र याज्यैका याम्ययागके।
इमं पुरोनुवाक्ये द्वे याज्यैका पूर्ववन्मता॥
अन्तिमे ह्यनुवाकेऽस्मिन मन्त्राः सप्तदशेरिताः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः॥

२० वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठः प्रपाठकः॥

२५ इति [८५]श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन[८५] माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयः काण्डः समाप्तः॥

---

३२–३३. मै मै४–'एष निष्पाप(व)के शाके कुशिकान्वयजन्मना॥ भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः॥' नास्ति।

---

३० ८२. ड–तत्र याज्यैकाया तथा। ८३. ड–हि। ८४. आ,ड–त्रयस्त्र्यययागके। ८५. ड–श्रीमद्-विद्यायोगीन्द्रराजाधिराजवीरबुक्कमहीपस्य आज्ञाधुरंधरेण।

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ८ | भ्रना | भ्रुना |
| ४० | ४ | इदर्मभवद्वय९ | इदर्मभूयद्वय९ |
| ८२ | ३ | परिंज्मेति | परिज्मेति |
| १३३ | २ | स्यु(३)रिती° | स्यु(३)रिती° |
| १३५ | १२ | इतिं द्वे-द्वे | इति द्वे-द्वे |
| २०९ | १ | पुरोडार्श° | पुरोडाश° |
| २६९ | ४ | °न्द्रियार्वती° | °न्द्रियावती° |
| ४४९ | ३ | °दक्षिणार्ध्यं | °दक्षिणार्ध्यं |

## टिप्पणी

१२९ तमे पृष्ठे चतुर्थपङ्क्तौ संमीयुरिन्द्रमेव इति संहिता पाठ, एकादश्या पङ्क्तौ च समीयुरितिं सम्-ईयु इति पदपाठश्च मैसूरावृत्तिमाश्रित्य स्वीकृतौ। आनन्दाश्रम मुद्रित पुस्तके सातवळेकर संपादित संहितापुस्तके अन्येषु लिखितपुस्तकेषु च संमियुरिन्द्रमेव इति संहितापाठोऽस्ति वेबरमुद्रित पुस्तकेऽपि sam-iyur इत्येव पाठोऽस्ति। कुम्भकोणम्-आवृत्तौ च समियुरितिं सम् इयु इति पदपाठ स्वीकृतो दृश्यते।

कल्याणे च [?]स्याम इति । येऽत्र अविनियुक्ता मन्त्राः ते लिङ्गेन क्वाप्यनुरूपे कर्मणि विनियोक्तव्याः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे षष्ठे प्रश्ने द्वादशोऽनुवाकः ॥

समाप्तः षष्ठः प्रपाठकः द्वितीयकाण्डश्च ॥

[32]एष निष्पाप(व)के शाके कुशिकान्वयजन्मना ।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः[33] ॥

अत्र विनियोगसंग्रहः –

" उशन्तः सामिधेन्येका पितृयज्ञे मह्यसौ ।
त्वं सोमेत्यनुवाक्ये [82]द्वे पितृमन्नामके तथा[82] ॥
त्वं याज्याऽग्निष्वेति मन्येऽनुवाक्या प्रथमा भवेत् ।
बर्हिद्वे अनुवाक्ये [83]तु याज्यैका बर्हिषद्यजौ ॥
उपहोमा उदीरेति [84]त्रयस्तत्रैव यागके ।
कव्यवाहनयागे तु यदग्ने तिस्र ईरिताः ॥
पुरोनुवाक्ये द्वे तत्र याज्यैका यास्ययागके ।
इमं पुरोनुवाक्ये द्वे याज्यैका पूर्ववन्मता ॥
अन्तिमे ह्यनुवाकेऽस्मिन् मन्त्राः सप्तदशेरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठः प्रपाठकः ॥

इति [85]श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन[85] माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयः काण्डः समाप्तः ॥

---

३२–३३. मै.मै४–' एष निष्पाप(व)के शाके कुशिकान्वयजन्मना ॥ भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः ॥' नास्ति ।

---

८२. ङ–तत्र याज्यैकाया तथा । ८३. ङ–हि । ८४. आ,क–त्रयस्तत्रैवयागके । ८५. ङ–श्रीमद्विद्यादेवेन्द्रराजाधिवीरबुक्कमहीपालस्य आज्ञाधुरंधरेण ।

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ८ | ध्रुवा | ध्रुवा |
| ४० | ४ | इदमंभद्यद्वयद | इदमंभूद्यद्वयद |
| ८२ | ३ | परिङ्मेति | परिङ्मेति |
| १३३ | २ | स्यु(३)रिती° | स्यु(३)रिती° |
| १३५ | १३ | इति द्वे - द्वे | इति द्वे - द्वे |
| २०९ | १ | पुरोडाशं° | पुरोडाश° |
| २६९ | ४ | °न्द्रियावर्ती° | °न्द्रियावती° |
| ४४९ | ३ | °दक्षिणार्ध्यं | °दक्षिणार्ध्यं |

## टिप्पणी

१२९ तमे पृष्ठे चतुर्थपङ्क्तौ संमीयुरिन्द्रमेव इति संहिता - पाठ ; एकादश्या पङ्क्तौ च समीयुरिति सम् - ईयु इति पदपाठश्च मैसूरावृत्तिमाश्रित्य स्वीकृतौ । आनन्दाश्रम - मुद्रित पुस्तके सातवळेकर संपादित संहितापुस्तके अन्येषु लिखितपुस्तकेषु च संमियुरिन्द्रमेव इति संहितापाठोऽस्ति वेबरमुद्रित पुस्तकेऽपि sam-iyúr इत्येव पाठोऽस्ति । कुम्भकोणम् - आवृत्तौ च समियुरिति सम् इयु इति पदपाठ स्वीकृतो दृश्यते ।